THE ACADE... MELKOTE-571431.
(KARNATAKA STATE)
Acc No 457
MANAGER.
27 JUN 1978

शास्त्रमुक्तावळी — ५

# ॥ शतदूषणी ॥

श्री कवितार्किक सिंहेन सर्वतन्त्रस्वतन्त्रेण

श्रीमद्वेदान्ताचार्येण विरचिता

वाधूलकुलतिलक श्रीमहाचार्यविरचितया

चण्डमारुताख्यया व्याख्ययासह

श्री काञ्ची प्रतिवादिभयंकर अनन्ताचार्येण परिशोधिता

LIBRARY
ACADEMY OF SANSKRIT RESEARCH
MELKOTE-571 438

श्री सुदर्शनमुद्राक्षरशालायां

॥ अमुद्र्यत ॥

प्रथमसंपुटः—पंचदशस्कन्धान्तः ।

॥ श्रीकांची ॥

इदानीमेतन्मूल्यम् — [illegible] २ - ८ - ०

१९०६

Acc 451

श्रीः ।

**श्रीम त्प्रणतार्ति हर वरद परब्रह्मणे नमः ।**

**श्रीमते हयग्रीवाय नमः ।**

श्रीमते निगमान्त महादेशिकाय नमः ।

**श्रीम द्वेदान्तदेशिक विरचिता**

# शतदूषणी ।

---

श्रीमा न्वेंकटनाथार्यः कवितार्किक केसरी ।
वेदान्ताचार्यवर्योमे सन्निधत्तां सदाहृदि ॥

---

श्रीः ।

**श्रीमते रामानुजाय नमः ।**

## महाचार्यविरचितः - चण्डमारुतः ।

---

विश्वंविभ्रति वीर्यखण्डितमहादैत्ये समस्तात्मनि
ज्योतिर्मण्डलभासितत्रिभुवने सर्वं स्वतोद्रष्टरि ।
अस्तुश्रीनृहरौ स्वभीतिविहितस्वाज्ञानिलार्कानले
श्रीम त्याश्रित मृत्युभंगचतुरे धीर्मे सदा ब्रह्मणि ॥ १

प्रायश्छादयितुं विनम्रजनता नानापराधव्रजं
वात्सल्यैक वशंवदेन कुहना निद्रां दध द्धर्मिणा ।
[illegible] तान्तिराढ पुलिनं रंगेशयं काशयत्
धः-धर्म भूतज्ञानं, सषेव्यमाणचरणं त[illegible] मन्महे ॥ २ ॥

णा[illegible]भूतिविषयकज्ञा[illegible]श्रय स्स्तवाकित स्स्रग्भूषणाम्बरै-
श[illegible] ( कथेति ) क[illegible]धरांघ्रिपल्लवधरो दोस्स्कन्धविभ्राजितः ।
राम[illegible]र्शनिप[illegible]धन [illegible]लेतोर्थितै मंरतकश्यामत्विषापत्रलो-
ल्लु[illegible]टयः , तेषां मुकुन्दकल्पविटपी शेषाद्रिसंगी स नः ॥ ३ ॥

तापत्राय तटिद्वितेकमळया नित्यानपायर्धये
भक्ताना मभिलाषपूर मखिला न्स्वंवर्धुकायार्थितान् ।
वेतंडाचलशृंगसंगिवपुषे भव्याय कृष्णात्मने
जीमूताय चतुर्मुखाध्वर फलीभूताय तस्मै नमः ॥ ४ ॥

चरणयुगळमेव यस्यलब्ध्वा धनमनपायि सुनिर्वृतामहान्तः ।
तृणमिवविजहुः पुरान्यदर्थी नवतु समां घटिकाधराध रेंद्र ॥ ५॥

सीदन्तीनां श्रुति परिषदां साधुतत्वावबोधे
पीडांलुंप न्कुमतिकलितां भाष्यपीयूषवर्षैः ।
धिषनाणेहरि मभिमुख सत्यकामं वितन्वन्
प.श्चादस्मा न्यतिपरिवृढ श्रेयसामेकसूतिः ॥ ६ ॥

तुरगवदनतेजो वृंहिताश्चर्यशक्तिः
कविकथकमृगेन्द्र स्सर्वतन्त्रस्वतन्त्रः ।
जयतिगुरु रबाधां वेदचूडार्यसंज्ञा
मनितरजनलभ्यां लम्भितो रंगभर्त्रा ॥ ७ ॥

अव्याजसौहृद मशेष जनेषुसाक्षा न्नारायणो नरवपुर्गुरुरित्यृषीणाम् ।
वाचस्समर्थयितुमच्युतमेवजातं श्रीश्रीनिवास गुरुवर्यमहंभजामि ॥८ ॥

वेदान्तार्योक्तिभावं भवदुदितचरं कृत्स्नशोनेश्वरोहं
वक्तुंबोद्धुंच भेको नहिजलधिगतोप्यस्यपारंक्रमेत ।
आज्ञा न्तद्व्याक्रियायां तदपिशिरसिमे बिभ्रतोऽध्यास्वमेध ।
सूक्ष्मार्थे ष्वावधान स्समुपकरणैः श्रीनिवासार्य ! चेत. ॥ ९॥

क्ववेदान्ताचार्यः क्वच [illegible]
परिच्छेदातीता क्व [illegible] मतिरेषा [illegible]
क्वगंभीर [illegible] ः क्वममपृथुकान् [illegible]
परन्तद्भक्तिर्मा त्वरयतिगिरांतस्य [illegible]

चिकीर्षितस्य ग्रन्थस्य कुदृष्टिजनो [illegible]
नार्थत्वा त्तस्य च तत्वज्ञानद्वारकत्वा त्तत्वज्ञा [illegible]

समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कलिकथककोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ १ ॥

---

तथा तेन विना स्वग्रन्थेनाप्युत्पादयितुमशक्यत्वाच्च छात्रानुजिघृक्ष-या तेषु तत्त्वज्ञानोत्पादनद्वारा कुदृष्टिजनसन्धुक्षितान्धतमसविध्वंसनं भगवन्तं प्रार्थयते ( समाहार इति ) जगदुज्जीवनाय भगवता स्वयमेव वेदस्य प्रवर्तितत्वात्तत्साध्यतत्त्वज्ञानहेतुभूतः प्रसादस्स्वप्रार्थनया भगवतो युज्यत एवेत्यभिप्रायेण समाहार इत्यादिविशेषणानि । हयवदनोदीरिताः सर्वे शब्दा हलहलत्वेन विवक्षिताः । तदेकदेशास्सामादय इति भावः । सामशब्दो गीतिविशेषवचनः –" गीतिषु सामाख्या " इति जैमिनिना सूत्रितत्वात् । अतस्सामाधिकरणभूतो वेदस्सामवेद इति व्यवह्रियते । एवंच सामवेदस्य सामनिरूपणीयत्वात्तन्निर्वाहकत्वं निरूपकमुखेनाह ( साम्नांसमाहार इति ) " तेषामृग्यत्रार्थवशेन पादव्यवस्थे " ति ऋग्लक्षणाभिधानेनार्थस्य ऋग्वेदनिरूपकत्वात्तत्प्रवचनमुखेन तन्निर्वाहकत्वमाह ( प्रतिपदमृचामिति ) " शेषे यजुश्शब्दः " इति यजुर्लक्षणे निरूपकान्तराप्रतीतेर्यजुषां धामेत्युक्तम् । समुदायस्यैकदेशाधारता विवक्षिता । एभिर्विशेषणैः कृत्स्नस्यापि वेदस्य स्वरूपतो धर्मतः फलतश्च भगवदधीनत्वे तात्पर्यं । ऋगादौ धर्माश्चातुर्मास्यादयः , फलं ज्ञानं, तत्प्रतिपदमित्यत्र विवक्षितं । ज्ञानोत्पत्तिप्रतिबन्धकनिरासोऽपि तत एवेत्यभिप्रायेणाह ( लयः प्रत्यूहानामिति) फलितमाह(लहरिविततिरिति)बोधः-धर्मभूतज्ञानं, स एव जलधिः, तस्य लहरिविततिः–भगवत्स्वरूपरूपगुणविभूतिविषयकज्ञानावस्थाः । तद्धेतुरिति यावत् । आयुर्घृतमितिवद्व्यपदेशः ( कथेति ) कथायां प्रवृत्तायां, निरर्थकदर्पेण, क्षुभ्यन्तः– न्यायापरामर्शनिबन्धनमिथ्यादर्शनवन्तः , कलिकथकाः – पापस्वरूपाः कुदृष्टयः , तेषां , कोलाहलः – निरर्थकशब्दसमुदायः , तेहि

तापघ्नाय तदित्वतेकमलया नित्यानपायर्धये
भक्ताना मभिलाषपूर मखिला न्संवर्धुकायार्थिताम् ।
वेतंडाचलशृंगसंगिवपुषे भव्याय कृष्णात्मने
जीमूताय चतुर्मुखाध्वर फलीभूताय तस्मै नमः ॥ ४ ।

चरणयुगळमेव यस्यलब्ध्वा धनमनपायि सुनिर्वृतामहान्त
तृणमिवविजहुः पुरान्यदर्था नवतु समां घटिकाधराध रेंद्रः ॥ ५॥

सीदन्तीनां श्रुति परिषदां साधुतत्वावबोधे
पीडांलुंप न्कुमतिकलितां भाष्यपीयूषवर्षैः ।
चिन्वन्नाणेहरि मभिमुखं सत्यकामं वितन्वन्
पश्यादस्मा न्यतिपरिवृढ श्श्रेयसामेकसूतिः ॥ ६ ॥

तुरगवदनतेजो बृंहिताश्चर्यशक्तिः
कविकथकमृगेन्द्र स्सर्वतन्त्रस्वतन्त्रः ।
जयतिगुरु रबाधां वेदचूडार्यसंज्ञा
मानितरजनलभ्यां लम्भितो रंगभर्त्रा ॥ ७ ॥

अव्याजसौहृद मशेष जनेषुसाक्षा न्नारायणो नरवपुर्गुरुरित्यृषीणाः
वाचस्समर्थयितुमच्युतमेवजातं श्रीश्रीनिवास गुरुवर्यमहंभजामि ॥८

वेदान्तार्योक्तिभावं भवदुदितचरं कृत्स्नशोनेश्वरोहं
वक्तुंवोढुंच भेको नहिजलधिगतोप्यस्यपारंक्रमेत ।
आज्ञा न्तद्व्याक्रियायां तदपिशिरसिमे बिभ्रतोऽस्थास्दमेध
सूक्ष्मार्थे ष्वादधान स्समनुपकरणैः श्रीनिवासार्य! चेतः ॥

क्ववेदान्ताचार्यः क्वचपरम ... धारयाधिषणा
परिच्छेदातीता क्व ... मतिरेषाल्पविषया ।
क्वगंभीरा ... गिरः क्वममपृथुकानामिववचः
परन्तद्भक्तिर्मा त्वरयतिगिरांतस्यविवृतौ ॥ १० ॥

चिकीर्षितस्य ग्रन्थस्य कुदृष्टिजनोद्भावित चित्तान्धतम
(ध्वं)सत्वा त्तस्य च तत्वज्ञानद्वारकत्वा त्तत्वज्ञानस्य च भगवत्

समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कलिकथककोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ १ ॥

---

तथा तेन विना स्वग्रन्थेनाप्युत्पादयितुमशक्यत्वाच्च छात्रानुजिघृक्ष· या तेषु तत्त्वज्ञानोत्पादनद्वारा कुदृष्टिजनसन्धुक्षितान्धतमसविध्वंसनं भगवन्तं प्रार्थयते ( समाहार इति )जगदुज्जीवनाय भगवता स्वयमेव वेदस्य प्रवर्तितत्वात्तत्साध्यतत्त्वज्ञानहेतुभूतः प्रसादस्स्वप्रार्थनया भगवतो युज्यतएवेत्यभिप्रायेण समाहार इत्यादिविशेषणानि । हयवदनोदीरिताः सर्वे शब्दा हलहलत्वेन विवक्षिताः । तदेकदेशास्सामाद्य इतिभावः । सामशब्दो गीतिविशेषवचनः –“ गीतिषुसामाख्या ” इति जैमिनिना सूत्रितत्वात् । अत स्सामाधिकरणभूतो वेदस्सामवेद इति व्यवह्रियते । एवंच सामवेदस्य सामनिरूपणीयत्वात्तन्निर्वाहकत्वं निरूपकमुखेनाह ( साम्नांसमाहार इति ) “ तेषामृग्यत्रार्थवशेन पादव्यवस्था ” ति ऋग्लक्षणाभिधानेनार्थस्य ऋग्वेदनिरूपकत्वात्तत्प्रवचनमुखेन तन्निर्वाहकत्वमाह ( प्रतिपदमृचामिति ) “ शेषेयजुश्शब्द ” इति यजुर्लक्षणे निरूपकान्तराप्रतीतेर्यजुषां- [illegible]मित्युक्तम् । समुदायस्यैकदेशाधारता विवक्षिता । एतद्वि- [illegible]णानां कृत्स्नस्यापि वेदस्य स्वरूपतो धर्मतः फलतश्च भगवदधीनत्वे तात्पर्यं । ऋगादौ धर्माश्चातुर्मास्यादयः, फलं ज्ञानं, तत्प्रतिपादमित्यत्र विवक्षितं । ज्ञानोत्पत्तिप्रतिबन्धकनिरासोपि ततएवेत्यभिप्रायेणाह ( लयः प्रत्यूहानामिति) फलितमाह(लहरिविततिरिति)बो- [illegible]धर्मभूतज्ञानं, सएव जलधिः, तस्य लहरिविततिः–भगवत्स्वरूपरूपगु· [illegible]तिविषयकज्ञानावस्थाः । तद्धेतुरितियावत् । भागुर्धृतमितिवद्वयपदे [illegible]( कथेति ) कथायां प्रवृत्तायां, निरर्थकदर्पेण, क्षुभ्यन्तः– न्यायापरामर्शनिबन्धनमिथ्यादर्शनवन्तः , कलिकथकाः – पापस्वरूपाः कुदृष्टयः , तेषां , कोलाहलः – निरर्थकशब्दसमुदायः , तेहि

इदंप्रथम सम्भव कुमति जाल कूलंकषा-
मृषामतविषानल ज्वलितजीव जीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तय-
श्चिरन्तनसरस्वती चिकुरबन्ध सैरन्ध्रिकाः ॥ २ ॥

प्राचीमुपेत्य पदवी यतिराजदृष्टां तत्सन्निकृष्ट मपि वा मतमाश्रयन्तः ।
प्राज्ञा यथोदितमिदं शुकवत्पठन्त प्रच्छन्नबौद्धविजये परितोयतध्वं ॥३॥

---

प्रतिज्ञां स्पष्टमुद्घोषयन्त स्तत्साधकाना मपन्यायतया स्पष्टमुदीर यितुमशक्नुवन्तः "वशिकतटिनी वर्षारम्भ प्रवाह विडम्बकै रल-पुभि रपभ्रंश दुम्भोपलम्भित डम्बरैः । उपकरणयन्त्येते बाला नुद-ग्रकुतूहला नुपल निकर ग्रास प्रायै रुपन्यसनक्रमैः " इतिन्याये ऽहो पुरुषिकया डिम्भान्प्रलोभ्य तेषां स्वान्ते ध्वान्तमुत्पादयन्ति । अनेन परदेवता स्तुत्यात्मकं प्रार्थनात्मकंच मंगळं कृतं भवति ॥ १॥

वक्ष्यमाणार्थानां भगवद्भाष्यकाराभिमतत्वा दुपादेयत्वंच विषयंच दर्शयन् गुरुस्तुत्यात्मकं मंगळ माचरति (इद मिति) अमृतशब्देन स्वप्रतिपिपादयिषिता अर्था उच्यन्ते । चिरन्तनसरस्वती- वेदः, चिकुराः - वेदान्ताः । चिकुराहि मालिन्येन जटीभूता अविविक्ता स्ति-न्ति, वेदान्ताअपि परापादितमालिन्या अविविक्ताः स्थिताः, चि-कुरा स्सैरन्ध्रिकाभि र्विविच्यन्ते, वेदान्ताअपि भगवदुक्तिभि र्भेदाभे-दघटकरूपेण तत्वहितपुरुषार्थ प्रतिपादनरूपेण स्वरूप गुणवि-ति प्रतिपादनरूपेण तत्तदर्थ प्रतिपादनरूपेणच विविच्यन्ते । य-द्वा - सैरन्ध्रिका विप्रकीर्णा न्केशा नेकीकृत्य बध्नन्ति, भगवदु-यो प्यापाततो विरुद्धतया प्रतीयमानानि वेदान्तवाक्या न्येकी-कृत्य ब्रह्मणि बध्नन्ति । अनेन कुदृष्टि निरसनार्थ भाष्यतात्पर्य वि-अर्था स्स्वग्रन्थस्य विषय इत्युक्तं भवति ॥ २ ॥

चिकीर्षितस्य प्रयोजनं दर्शयति (प्राचीमिति) परमतनिग

वादाहवेषु निर्भेत्तुं वेदमार्गविदूषकान् ।
प्रयुज्यतां शरश्रेणी निशिता शतदूषणी ॥ ४ ॥

तत्र तावच्छास्त्रारम्भे—

विचारविषयत्वेन सूत्रकृद्यदसूत्रयत् ।
परोक्ता ब्रह्मशब्दस्य वृत्ति रत्र निरस्यते ॥

---

प्रयोजनं । मतान्तरनिरसनस्य तुल्यन्यायसाध्यतया ऽर्थज्ञानाधीनत्वेऽपि योगाचारच्छात्र निरसने ना र्थज्ञानापेक्षेत्यर्थः ॥ ३ ॥

ज्ञानवद्भिस्तु मतान्तरनिरसनमपि सुकरमेवे त्यभिप्रायेणाह ( वादाहवेष्विति ) बाह्या वेदवाक्यानि दूषयन्ति नविशिष्य, कुदृष्टयस्तु प्रतिवाक्यं दुरर्थकथनेन विशिष्य दूषयन्ती त्यभिप्रायेण वि शब्दप्रयोगः । यद्यप्येकैकस्मिन् वादे बहूनि दूषणा नि प्रतिपाद्यन्ते, तथापि निरसनीयैक्येन दूषणाना मैक्यं विवक्षितम् । तेन शतदूषणीत्युपपद्यते ॥ ४ ॥

( तत्रेति ) तत्र – ग्रन्थे, तावत् - प्रथमवादे, इदं निरस्यत इत्यनेन सम्बध्यते । शास्त्रारम्भइत्येत दसूत्रय दित्यनेन । अयं प्राथम्ये हेतुः । ( विचारविषयत्वेनेति ) विचारो विषयो यस्य तद्विचारविषयं । यदिति सूत्रं परामृश्यते । (असूत्रयदिति) सूत्रशब्दात्प्रातिपदिकात तत्करोतीत्यस्मिन्नर्थे " प्रातिपदिकाद्धात्वर्थे " इति णिचि यदसूत्रयदिति प्रयोगः पाकं पचतीतिवत द्रष्टव्यः । यद्वा– य दसूत्रयत् । असूत्रयदितियत् - यत्सूत्रणमस्तीत्यर्थः । अत्र सूत्रणे । ए[illegible]द्वा – यदसूत्रयदिति माणवकम्मुण्डयतीति वत् । यदिति पदजातं प[illegible]ामृश्यते । यत्पदजातं सूत्रत्वेनाकरोदित्यर्थः । अत्र –पदजाते । अथवा-विचारविषयत्वेनेति षष्ठीतत्पुरुषः, यदिति ब्रह्म , असूत्रय [illegible]ति - सूत्रेण प्रत्यपदाय दित्यर्थः , पर्यायेणातिक्रामति पर्याययति राम[illegible]त्रेण लुनाति दात्रयतीतिवत् प्रातिपदिका द्धात्वर्थे णिज्विधानात । कु[illegible]द्वा–" सूत्रविमोचन " इति धातोर्वा चुरादि णि च्येतद्रूपं । अत्र प्र-

निर्विशेषब्रह्मवादे ब्रह्मशब्दस्य क्वचि न्मुख्यवृत्तित्वमस्तिनवा ।
न चेत् ; असाधुत्वापत्तिः ।

---

काशनं विवक्षितम् । अत्र - ब्रह्मणि । विचारविषयत्वेन यद्सूत्र यदित्यनेन निर्विशेषब्रह्मणो जिज्ञास्यत्वस्य निरसिष्यमाणत्वा ज्जिज्ञासाविषयोपस्थापनपरत्वात् ब्रह्मपदस्य न निर्विशेषब्रह्मलक्षणात्र युज्यत इति सूच्यते । परोक्तवृत्तिप्रद्वेषे निमित्तान्तरमाह (सूत्र-कृदिति ) परोक्तवृत्त्यंगीकारे "अथातो ब्रह्मजिज्ञासे" त्यारभ्य - "अनावृत्तिश्शब्दा दनावृत्तिश्शब्दात्" इत्यन्तं सूत्र मसंगतं स्यादि-ति भावः । निर्विशेषब्रह्मण स्स्वप्रकाशत्वेना भ्युपगमा दजिज्ञास्यत्वाद्यं सत्रमनुपपन्नं । अनवधारणत्वापरोक्षवृत्तिकल्पनादीनिच डिम्भप्रलोभनानि निरसिष्यन्ते । जिज्ञासाभावा न्निर्विशेषब्रह्मस्वरूपविरुद्ध स-विशेष प्रतिपादना च्चोत्तरसूत्राणि व्यर्था न्यनुपपन्नानिच । "परं जैमिनिर्मुख्यत्वात्" इति सूत्रासांगत्यंच । तस्मादेवं सूत्रं कुर्वतः परोक्तवृत्ति र्नेष्टेति भावः । "शास्त्रारम्भ" इत्यनेन "प्रणवएव विस्वर" इति न्याय स्सूचितः ॥

(ब्रह्मशब्दस्य क्वचिदिति ) ब्रह्मपदेन निर्वचनविरोध स्सूच्यते । शब्दपदेन प्रसंजनीयस्या साधुत्वस्यानिष्टत्वं द्योत्यते । "योहि शब्दान् जानाति अपशब्दानप्यसौ जानाति" "यथैवहि शब्दज्ञाने धर्मः, एव मपशब्दज्ञाने ऽधर्मः" "एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः" "किंशब्दोपदेशः कर्तव्यः, अत्होस्वि दपशब्दोपदेशः" इत्यादौ शब्दशब्दस्य साधुशब्दे प्रयोगात् । ( असाधुत्वाप-त्तिरिति ) साधुत्वंहि शक्तिमूलकप्रयोगविषयत्वं, वृत्तिमत्वं वा अन्यस्यानिर्वचनात् । न ताव दनादि प्रयोगविषयत्वं साधुत्वं, "तेसुहेलयोहेलयइति कुर्वन्तः पराबभूवुः" इत्यत्रा नुकार्ये अरिशब्दापभ्रंशे अलिशब्दे गतत्वा त्तस्य सादित्वे वेदस्यानित्य संयोगप्रसंगात् । न पि यज्ञप्रयोगार्हत्वं, "साधुभिर्भाषितव्य" मिति साधुत्वस्यं तन्निमित्तत्वात् । अतएव न धर्मजनकत्वम्, साधुत्वस्यैव त

मित्तत्वात । अतएव न धर्मजनकतावच्छेदकरूपत्वं साधुत्वं , तद- वच्छेदकश्च घटविषयघटशब्दत्वादिकं , तदवगम श्चानुशासनादिति निरस्तं , घटशब्दः प्रयोक्तव्य इत्यादिरूपेण विधानस्या नन्येना स म्भवेन साधुत्वपुरस्कारेणैव विधानस्य वाच्यत्वात् । नापि व्याक रणव्युत्पाद्यत्वं , तत् किंविधेयत्वम्? साधुत्वेन प्रतिपाद्यमानत्वंवा? ना द्यः , प्रातिपदिकाना मसाधुत्वप्रसङ्गात् । नद्वितीयः , आत्माश्र- यात् । तस्मा च्छक्त्यभावे तन्मूलकप्रयोगाभावा त्तन्मूलकवृत्त्यन्त- राभावाच्च ब्रह्मशब्दस्य न साधुत्वम् । अनादिप्रयोगविषयत्वं य- ज्ञप्रयोगार्हत्वम् , अनाद्यनपभ्रष्टत्वं , व्याकरणव्युत्पाद्यत्वं वा साधुत्व मित्यभ्युपगमेपि शक्त्यभावे वृत्त्यन्तरस्या प्यभावेन प्रयोगस्यैवा सं- भवा त्तदसम्भवेन व्युत्पाद्यत्वासम्भवाच्च शक्तिशून्यस्या साधुत्वमे- व । किंच - मुख्यवृत्त्यभावे न साधुत्वसिद्धिः , अनुशासनापरिगृही- तत्वात् । तथाहि । " सिद्धे शब्दार्थसम्बन्ध " इत्यर्थसम्बन्धिनएव शब्दस्या नुशासनीयतया प्रतिज्ञानात् लक्षणायाश्च शब्दार्थसम्बन्ध त्वस्य तवा संप्रतिपत्तेः । अन्यथा " अप्राप्यमनसा सह " तित्व- न्मते लक्षणाया अपि निषेधे वेदान्तानां मूकत्वप्रसंगात् , श- ब्दस्यार्थेन सह शक्ते रेव प्राप्तित्वादिति त्वया भिधानाच्च । लक्ष णाया स्सम्बन्धत्वेपि मुख्यवृत्त्यभावे न साधुत्वसिद्धिः । तथाहि " सि द्धे शब्दार्थसम्बन्ध " इत्यादिना शब्दार्थसम्बन्धानां नित्यत्वएवा नु शासनं प्रतिज्ञातम् । " सिद्धे शब्दे र्थे सम्बन्धे चेति , अथ सिद्धश- ब्दस्य कः पदार्थः? नित्यपर्यायवाची सिद्धशब्दः, ... तद्यथा " सि- द्धाद्यौः ... ' इति । ... अथवा - सन्त्येकपदा न्यप्यवधारणानि । तद्य था ' अब्भक्षो वायुभक्ष ' इत्यपएव भक्षयति वायुमेव भक्षयतीति... एवमिहापि सिद्धएव नसाध्य इति । अथवा पूर्वपदलोपोत्र द्रष्ट- व्यः । अत्यन्तसिद्ध स्सिद्धइति । तद्यथा ' देवदत्तोदत्तः ' ' स त्यभामाभामे ' ति " इति शब्दार्थतत्सम्बन्धविशेषणीभूतस्य सिद्धपद- स्य नित्यवाचित्वप्रतिपादनात् । तत्र किम् मुख्यस्सम्बन्धो मुख्यश्चा र्थो विवक्षितः , उता मुख्योपीति विमर्शे , सर्वत्र मुख्यार्थस्य तत्स- म्बन्धस्यच स्वरूपेण प्रवाहरूपेण वा नित्यत्वात , मंचाः क्रोशन्ती

त्यादौ मंचविशेषस्थपुरुषाणां तत्सम्बन्धस्यचा नित्यत्वदर्शनेन लाक्ष- णिकार्थं तत्सम्बन्धयो रतथात्वा न्मुख्य एवेति निश्चिन्वन्ति विपश्चि तः । ननु स्यादेवं यदि प्रकरणादिना मुख्यार्थ विशेषोपस्थित्यन- न्तरं तत्सम्बन्धिनि लक्षणा स्यात , नचैवम् , किन्तु शक्यता- वच्छेदकावच्छिन्नमात्रोपस्थितौ सत्यां तत्सम्बन्धि नरसामान्येच लक्ष णयोपस्थिते प्रकरणादिना लक्ष्यव्यक्तिविशेषलाभः , तस्मा ल्लाक्ष- णिकस्यापि प्रवाहरूपेण नित्यत्वमिति चेत् । न । अनन्तव्यक्तिषु ल- क्षणाकल्पनापेक्षया प्रकृतव्यक्तिविशेषएव लक्षणाकल्पने लाघवात् । किंच - अपूर्वव्यक्तिलाभानुरोधेन शक्ते स्सामान्यतः कल्पनायामपि तात्पर्यानुसारेण कल्पनीयाया लक्षणाया स्तात्पर्यविषयीभूत व्यक्तिवि शेषातिरिक्तविषयत्वकल्पने मानाभावात् । किंच मुख्ये ऽमुख्ये वा शब्दप्रत्याद्याकारेण प्रवाहानादिता वाच्या , अन्यथा प्रमेयत्वरूपेण प्रवाहनित्यताया स्सर्वत्र वक्तुं शक्यत्वात् । एवंच व्यक्तिविशेषमात्र नियताकारविशिष्ट लक्ष्यार्थविवक्षायां तत्पुरस्कारेण प्रवाहानादित्वं वक्तु मशक्यम् । किंच सामान्यत स्सर्वशक्तस्यापि यदृच्छाशब्द- स्य पुरुषेच्छया व्यक्तिविशेषे संकुचितशक्ते स्तद्व्यक्तिमात्रो पस्था पकस्य तत्सम्बन्धिनि लक्षणया प्रवृत्तौ तद्व्यक्तिमात्रस्यैव लक्ष्यत- या तत्रानित्यत्वं सिद्धमेव । ननु - अपभ्रंशानुकरणस्या साधुत्वं स्यात , तदर्थस्या पभ्रंशस्य सादित्वात , नचेष्टापत्तिः - कुमा- र्य्लृतकइत्यादेत्यादा वपभ्रंशानुकरणे साधुत्वसमर्थना दिति चेत ; न, कु मार्य्लृतकइत्याहेत्यत्र पदानुकरणाभावात । वर्णा एवहि तत्र क्रमेणा नुक्रियन्ते । एवंच भाष्ये प्रकृतिव दनुकरणं भवतीत्यपशब्दानुकर णस्यापशब्दत्व माशंक्या पशब्दत्वस्या ननुशिष्यत्वा न्नातिदेशइति पदानुकरणांगीकारेण परिहारः प्रौढवादेनेति बोध्यम् । नचैवं स- ति सर्वत्र वर्णानुकरणप्रसंगः, बाधकबलेन क्वचि त्पदानुकरणत्या गमात्रेण तदभावेपि तत्यागस्यनिर्मूलत्वात् । यद्वा - अत्रानुक्रियमा णानुकरणयो रनादित्वमेव, भाष्यकारवचनप्रामाण्यात । शब्दार्थ- संबन्धनित्यत्वस्या नुशासननिमित्ततां वदन्नेवहि भाष्यकारो ऌतत- कशब्दानुकरणस्य साधुत्व माह । अतएवोक्तं कैयटे "

जानुकरणस्य जातिशब्दत्व मिच्छन्ति, यस्मा दनुक्रियमाणे श-ब्दे या जाति स्समवेता, तत्संबद्ध मनुकार्य मनुकरणं प्रत्याययती " ति । ननु " द्रव्यंहि नित्य " मित्यारभ्य " हिरण्यं कयाचि दाकृत्या युक्तं पिण्डो भवति, पिण्डाकृति मुपमृद्य रुचकाः क्रियन्ते, रु-चकाकृति मुपमृद्य कटकाः क्रियन्ते, कटकाकृति मुपमृद्य स्वस्तिकाः क्रियन्ते, पुनरावृत्त स्सुवर्णपिण्डः खदिरांगारसवर्णे कुण्डले भवतः, आकृति रन्या चान्याच भवति, द्रव्यं पुनस्तदेव, आकृत्युपमर्देन द्र-व्यमेवा वशिष्यत " इत्यादिना संस्थानस्या नित्यत्वेपि द्रव्यस्य स्व-रूपतो नित्यत्वप्रतिपादना न्मतभेदेन तदपि नित्यत्व मनुशासन नि-मित्तं प्रतीयते, तथाच लाक्षणिकेपीदं नित्यत्वं नास्तीति कथं ना-नुशिष्यत इतिचे न्न; शब्दप्रयोगस्य तत्प्रयोगविषयस्यचा नादित्वे प्र-करणतात्पर्यात । उदाहृतभाष्येच गुणादा वुक्तनित्यत्वाभावा दुक्त युक्तेश्च नैत न्नित्यत्व मनुशिष्यत्वनिमित्ततयोक्तम्, किन्तु प्रवृत्तिनि मित्तविशिष्ट तत्तद्व्यक्त्यविनाशित्वमेव नित्यत्वमितिन – किन्त्वन्यद-पीति नित्यत्वप्रकारभेदमात्रनिदर्शनतयै त न्नित्यत्व मुक्तम् । अतः प्रवृ त्तिनिमित्तविशिष्टस्य स्वरूपेण प्रवाहरूपेण वा नित्यत्व मनुशिष्यत्व निमित्तमिति । किंच " कंपुनः पदार्थं मत्वैषविग्रहः क्रियते, सिद्धे शब्देर्थे सम्बन्धेचेती " ति प्रश्नो मुख्यार्थस्यैवा नुशासननिमित्ततां साधयति । " सिद्धे शब्दार्थसम्बन्ध " इत्यत्रा नुशासननिमित्ततयो क्तोऽर्थो यदि मुख्योऽमुख्यश्च, तदा कंपदार्थ मितिव्यक्त्याकृत्यो रन्यत-रव्यवस्थाविषयः प्रश्नो नोपपद्यते । अन्यतरस्य मुख्यार्थत्वे इतरस्य लक्ष्या र्थत्वेना क्षेप्यत्वेनवा उभयोर प्यर्थत्वात्। एवं व्यवस्थानुपपत्तेरेव "आकृति मित्याहे"त्युत्तरवाक्यं मतान्तरावष्टंभेन। "द्रव्यएवपदार्थएषविग्रहोन्याय्य" इति वाक्यंच मुख्यार्थस्यैवानुशासननिमित्ततां साधयति । किंच " कंप-दार्थ " मित्यत्र द्रव्यस्यैव पदार्थत्वा त्तस्यचा नित्यत्वा दर्थनित्यत्व न्नोप-पद्यत इतिहि प्रष्टुरभिप्रायः । यदिचा मुख्यार्थो प्यनुशासननिमित्तस्स्या त्त दा द्रव्यार्थत्वे प्याकृतिलक्षणाया स्सम्भवेनार्थ नित्यत्वोपपत्तेः प्रश्नो नोप पन्नः । अतएव द्रव्यपदार्थकत्वे ऽर्थानित्यत्वासम्भवं मत्वा आकृत्यर्था

साधुत्वस्य मिथ्यात्व मभ्युपगच्छता मसाधुत्व मिष्टमितिचेत् ; हन्त तर्हि

---

वलम्बनेन " आकृतिमित्याह " इति परिहारश्चनोपपद्यते । एतेन मं-
चाः क्रोशन्तीत्यादौ लाक्षणिकार्थसम्बन्धस्या नित्यत्वेपि ब्रह्मणो नित्य-
त्वा त्तत्सम्बन्धस्यापि नित्यत्वात ब्रह्मशब्दस्य केवल लाक्षणिकत्वे-
प्यनुशासन मुपपद्यत एवेतिनिरस्तम् ; शब्दार्थसम्बन्धविभाजको-
पाध्यवच्छेदेन सम्बन्धावच्छिन्नार्थे नित्यत्वस्य विवक्षितत्वात । अन्यथा
अर्थनित्यत्वमात्रविवक्षायां द्रव्यानित्यत्वेना र्थानित्यत्वशंकानुपपत्तेः ,
द्रव्यार्थत्वे प्याकृति लक्षणाया स्सम्भवात् । भवतिच शक्यत्वावच्छेदनै-
व तत्तद्बोध्याकारेण नित्यत्वं, लक्ष्यार्थेतु नैवं, सम्बन्धविभाजकोपाधिभूत-
लक्षणात्वेन नित्यत्वानवच्छेदकत्वात्, मंचविशेषसम्बन्धि पुरुष विशे-
षस्या नित्यत्वेन तत्रापि लक्षणाया विद्यमानतया ऽतिप्रसक्तत्वात ।
नच-प्रश्नस्य कथं व्यवस्थाविषयता , अर्थमात्रस्य नित्यत्वाक्षेपसं-
भवा दितिवाच्यम् । " अथवा-किं न एतेन इदं नित्य मिदमनित्यमि
ति, यन्नित्यं, तंपदार्थं म्मत्वैष विग्रहः क्रियत" इत्युत्तरभाष्यस्वारस्या-
नुरोधेन प्रश्नस्य व्यवस्थाविषयत्वा वगमात् । किंच-त्रयी शब्दानां प्र-
वृत्तिः , जातिशब्दाः-गुणशब्दाः-क्रियाशब्दाः - न सन्ति यदृच्छा
शब्दा इति पक्षे, चतुष्टयी शब्दानां प्रवृत्तिः, जातिशब्दाः-गुणशब्दाः क्रि
याशब्दाः-यदृच्छाशब्दा श्चतुर्था इति पक्षेपि, ब्रह्मशब्दस्य कुत्रा प्यनं-
तर्भावा न्नानुशिष्यतासम्भवः । अपिच-" बृहेर्नच " त्यत्रोणादित्वेन सं-
ज्ञाधिकारात् ब्रह्मशब्दस्य संज्ञायामेवा नुशिष्टत्वात् केवल लाक्षणि-
कत्वेच संज्ञात्वाभावा दनुशासनं नस्यादिति । ( साधुत्वस्येति ) कृ-
त्स्नमिथ्यात्वादितिभावः । व्यावहारिकमर्यादया कृत्स्नव्यवस्था मभ्यु
पगच्छत स्तव व्याहत मिदं वचनमित्याह ( हन्तेति ) शक्त्यभावात् ब्रह्म
शब्दे साधुत्वस्य तुच्छत्वमेवा स्माभिरापादितं,ः मिथ्यात्वांगीकारमात्रेण
ब्रह्मपदे साधुत्वस्य तुच्छत्वम प्यंगीकृत मिति यदिमन्यसे, तदा शब्दा-
न्तरेपि तथैव स्यादिति व्यावहारिकव्यवस्थाभंग इतिभावः । यद्वा-

सर्वशब्दासाधुत्वम् । साध्वसाधुविवेकाभावेच कृतं साङ्गोपाङ्गैर्वेदैः । मुख्यार्थशून्यस्य तन्मूलवृत्त्यन्तरे लिगत्वेचासम्भवति कथं क्वचि द्बोधकत्वमपि ।

---

किमयं मिथ्याशब्दो ऽनिर्वचनीयवचन उत तुच्छत्तावचन इति विकल्पमभिप्रेत्य आद्ये दोषमाह ( हन्तेति ) इदं सर्वेषामपि शब्दानां साधारणं, नचैत दस्माभि रापाद्यते, किन्तु शब्दान्तरेषु क्लृप्तप्रयोजकस्याभावा त्तुच्छत्वमेव ब्रह्मशब्दे साधुत्वस्या पाद्यते, नचात्रेष्टापत्त्या परिहारसंभव इत्यर्थः । द्वितीय न्दूषयति ( साध्वसाध्विति ) यद्वा-प्रथमशिरसो दूषणं बहिरेवोक्त प्रकारेणानुसन्धेयं, द्वितीये दोषमाह ( हन्तेत्यारभ्य वेदैरित्यन्तेन ) ( सर्वशब्दासाधुत्वमिति ) साध्वसाधुविवेको नस्यादित्यर्थः । नचात्रेष्टापत्ति रित्याह ( साध्वसाध्विति ) साधुत्वप्रतिपादनार्थत्वात् व्याकरणस्य तत्तावत् व्यर्थंस्यात् , दृष्टप्रयोजनद्वारां गत्वेन संप्रतिपन्नस्य व्याकरणस्य तत्प्रयोजनानंगीकारे तुल्यन्यायतयां गान्तर प्रयोजनानाम प्यसिद्धौ तेषामपि व्यर्थता , तुल्यन्यायेनैव साध्वसाधु विवेकव त्प्रमाणाप्रमाणविवेकाभावा द्वेदस्यापि प्रमितिजनन लक्षणप्रयोजनाभावा द्वैयर्थ्यमेवेतिभावः । यद्वा-साध्वसाधुविवेकाभावे "एकश्शब्द...स्सुष्टुप्रयुक्त स्स्वर्गेलोकेकामधुग्भवति" "आहिताग्नि रपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वती मिष्टि न्निर्वपेत्" " तेसुरा हेळयो हळयइतिकुर्वन्तः पराबभूवुः तस्मात् ब्राह्मणेन नम्लेच्छितवै नापभाषित वैम्लेच्छोहवा एष यदपशब्द" इति साधुशब्दविधिः प्रायश्चित्तविधिरपशब्द प्रयोगनिषेधो निन्दार्थवादाश्चा प्रमाणमिति वेदप्रामाण्यो पपादकापौरुषेयत्वादे स्तंदशे प्रामाण्यानुपपादकत्वे अन्यत्रापि तथेतिकृत्स्नवेदाप्रामाण्ये वेदस्य व्यर्थता, प्रमितिजनन लक्षणप्रयोजनाभावादिति तदंगानामपि वैयर्थ्यमेवेति भावः । 'हेळयोहेळय' इतिच "हैहेप्रयोगेहैहयो" रितिविहितप्लुतस्य प्रकृतिभावस्य चाकरणा त्पदद्विर्वचनेकर्तव्ये वाक्यद्विर्वचनात रस्थाने ळकाराच्चा पशब्दः । दूषणान्तरमाह ( मुख्यार्थेति ) तर्हि धूमादिव लिङ्गविधया बोधकत्वं स्यात् - कथ मबोधकत्व मित्यत्राह ( लिगत्वइति ) व्याप्ति बृहकसम्भवादिति·

नच सांकेतिकोऽय मपभ्रंशोवा, येन वाचकत्वाभिमाना द्बोधकत्वं स्यात् । यस्यायमपभ्रंश श्शंक्येत, सोपि तथा वृत्ति विकल्पेन निर्वूयेत ।

ननु ब्रह्मशब्दस्याय म्महिमा - यन्मुख्यार्थ विरहेपि नित्यं लक्षणया ब्रह्म बोधयतीति, तदिदं वन्ध्यायाः पौत्रदर्शनम् । मुख्यार्थ सम्बन्धि न्यमुख्यवृत्तिर्हि लक्षणा, तदभावेपि तद्वृत्ति भावानेवभाषेत ।

किंचैव म्मुख्यार्थ शून्या स्सर्वेशब्दा स्तं तमर्थं लक्षयन्तीति स्वीक्रियेत महामीमांसकेन । कोहि त्वदुक्तन्यायवि त्कुत्रापि शक्ति-क्लृप्तिगौरवं मृष्येत् , मुख्यार्थशून्येन ब्रह्मलक्ष्यमितिवदता तदपि

---

भावः । यद्वा- एतानिपदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकांक्षादिमत्पदकदम्बकत्वा दिति वैशेषिकाद्युक्तरीत्या लिंगविधया बोधकत्वं स्यादित्यत्राह ( लिंगत्वइति ) अयंभावः - वाक्यार्थरूपसंसर्गस्य तथा नुमाना त्सिद्धावपि न पदार्थभूत ब्रह्मण स्तथानुमानसम्भवः, सिद्धसाधनात् , ब्रह्मपदस्य वृत्त्यभावेन स्मारकत्वासिद्धे स्तत्रबाधः, अर्था भावे तन्निबन्धनाकांक्षादे रभावा द्धेत्वसिद्धिश्चेति । ( नचेति ) अपौरुषेयत्वादितिभावः । ( वाचकत्वाभिमानादिति ) वाचकत्वभ्रमादित्यर्थः ! यस्तु सांकेतिकत्व मपभ्रंशत्वं वा जानाति, तस्या क्षिनिकोचादिव त्सूचकस्सांकेतिकः, अपभ्रंशाच्चस्मृत स्साधुशब्दो बोधकइति भावः । ( वृत्ति विकल्पेनेति ) किम्मूलभूलश्शब्दो मुख्यः उतापभ्रंशः ? आद्ये ब्रह्मशब्देन किं मपराद्धम् । अवाच्यत्व वचन विरोधश्चोभयत्रतुल्यः । मूलमूलित्वयोर्वैपरीत्यापत्तिश्च । द्वितीये अनवस्थेतिभावः । ( नन्विति ) ब्रह्मशब्दस्या न्यत्रा मुख्यत्व स्मरणात् ब्रह्मणश्चा वाच्यत्व समर्थनाच्चेतिभावः । ( भवानेवेति ) प्रमाणपथविभ्रष्ट इतिभावः ( किंचैवमिति ) एवंसति-मुख्यवृत्तिंविनापि क्वचि ल्लक्षणांगीकार इत्यर्थः । अविशेषादितिभावः । महामीमांसकेनेति ) त्वत्तो प्युत्कट मीमांसकाभिमानेन केनाचिदित्यर्थः । तदेवोपपादयति ( कोहीति ) ब्रह्मणो मुख्यार्थत्वं सिद्ध नक्लृप्त गौरवं स्यादित्यभावे ( मुख्यार्थेति ) मुख्यार्थस्य शून्यत्वोक्तेः

मुखान्तरेण संवृतिमुखे निक्षिप्तं । अवाच्यवादाश्च वाच्यवादेन निर-
सिष्यन्ते । अस्तित्वे किं मन्यस्मिन् विचारविषयेवा, नाद्यः ;
निर्निमित्तत्वे पुन रसाधुत्वापातात । यदृच्छाशब्दोपिहि स्वरूपनिमित्त-
क श्शास्त्रज्ञै शिशिक्षितः । नचायं सः ; मानाभावात् , निरुक्तिविरो
धाच्च । सनिमित्तत्वेच यः प्रकृत्यादि ष्वस्य प्रयोगः, स ब्रह्मगुणलेश
योगा दौपचारिक इत्यभाषि, अनुवृत्तस्या कृति रूपस्य निमित्तस्यासिद्धेः,
बृहत्वब्रंहणत्वमात्रस्य बृहदादिशब्दव दति प्रसञ्जित्वात् , अनेकशाक्ति

---

प्रतीतिविषयत्वोक्तेश्चेतिभावः । यद्वा-मुख्यार्थाभावे तन्मूलवृत्त्यंतर-
स्या प्यभावेन बोधकत्वानुपपत्तेः ब्रह्मणो मुख्यत्वा भावोक्तौ प्रमा
णाभावस्यैव पर्यवसानात् ब्रह्मण स्तुच्छत्वमेव समर्थितंस्या दित्याह
( मुख्यार्थेति ) ( मुखान्तरेणेति ) शब्दान्तरेणेत्यर्थः । महिम-
कल्पनंनिरस्यति ( अवाच्येति ) " अवाच्यवादांश्च बहून्वदिष्यन्ति
तवाहिताः" इति वचनं स्मार्यते । अत्रचा वाच्य वादाः-गर्हावाक्यानि,
तेन परब्रह्मणि द्वेषादेवा वाच्यमित्यादि गर्हारूपाः प्रलापाः कृता इति
ध्वनितं । ( निर्निमित्तत्वइति) निमित्तंविना मुख्यवृत्त्ययोगादिति भावः ।
यदृच्छाशब्दस्य निर्निमित्तत्वाभ्युपगमे प्यस्य तद्बहिर्भावा त्र निर्निमि
त्तत्वसंभवइत्याह ( नचायमिति ) ( मानाभावादिति ) तथा
व्यवहाराभावादित्यर्थः । ( निरुक्तिविरोधाच्चेति ) अपौरुषेयत्व वि
रोधादिति चकारस्यभावः , पुरुषसंकेताधीन शक्त्यवच्छेदाभावात् ।
( ब्रह्मगुणलेशयोगादिति ) तथाच निमित्ततयोक्त बृहत्व बृंहणत्वे त-
त्र नस्त इतिभावः ( अभाषीति ) अतो ऽसंभवो दोषइति शेषः ।
प्रकृत्यादौ ब्रह्मशब्दस्य गौणत्वस्य भाषितत्वात ब्रह्मणो न्यत्र सनिमि-
त्तत्वपक्षे असंभव एव दोषइत्यर्थः । गौणत्वेहेतुमाह ( अनुवृत्तस्ये
त्यादि ) ( बृहदादिशब्दवदिति ) सप्तम्यन्तात् " तत्र तस्येव "
तिवतिः । बृहत्वबृंहणत्वे बृहदादिशब्देष्विव ब्रह्मशब्देपि ब्रह्मव्य-
तिरिक्तेपि प्रयोग मापादयतइत्यर्थः जात्यादिशब्देन बृहकादिशब्दपारि-

कल्पने गौरवात , लोकोत्तरबृहत्वादिमात्रस्यतु भगवच्छब्दनया दुपचार द्वारत्वात । अन्यथा गौणवृत्तिर्लुप्येत । "यत्साक्षादपरोक्षाद्ब्रह्मे" ति विशेषणंचान्यत्रामुख्यतां व्यनक्ति । "तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तोमहामुने" इतिचस्मर्यते । "द्वेब्रह्मणी वेदितव्ये" इत्यादिकमपि "त्रीणि-

---

ब्रह्मः । यद्वा-तृतीयान्तात "तेन तुल्यं क्रियाचेद्वति" रिति वतिः । बृहदादिशब्दो यथा तिप्रसक्तः- एवं बृहत्वब्रह्मणत्वयोर प्यतिप्रसक्तत्वा दित्यर्थः । अतिप्रसंगविषयनिर्देशार्थं बृहदादिशब्दवदि त्युक्तम् । बृहदादिशब्दो येषु प्रयुज्यते- तेषु बृहत्त्वादिक मतिप्रसक्त मित्यर्थः । ( भगवच्छब्दनयादिति ) आचार्यै र्हि "उत्पत्तिं प्रळयंचैव भूताना मागतिं गतिम् । वेत्ति विद्या मविद्यांच स वाच्यो भगवानिती" त्यादिना अलौकिकार्थसाक्षात्कर्तृत्वमेव भगवच्छब्दप्रवृत्तिनिमित्तमित्याशंक्य समाधिपर्यन्तयोगकाष्ठानिष्ठ केशिध्वज खाण्डिक्यादिभ्यः प्रयोगाविषयेभ्यो व्यावृत्तत्वाभावा त्तदुपचार द्वारमात्र न्न प्रवृत्तिनिमित्त मित्यङ्गीकृतम् । तन्न्यायेनात्रापि ब्रह्मशब्दप्रयोग विषयाकाशादिष्वपि लोकोत्तरबृहत्वस्य सत्वेन न प्रवृत्तिनिमित्तत्वं, किन्तूपचारद्वारत्वमेवेतिभावः । अनुवृत्तस्येत्यादिहेतूना मभाषीत्यनेनान्वयः । एतत्सर्वमभिप्रेत्याभाषीतिभावः ( अन्यथेति ) न्यायमतिलंघ्यापि शक्तिकल्पने । ( यत्साक्षादिति ) "ब्रह्मशब्दस्य परमात्मासाधारणत्वेपि प्रत्यगात्मन्यपि कदाचि दुपचरित प्रयोगदर्शना त्तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं 'यत्साक्षात् ब्रह्मे' ति विशेषणंक्रियत" इतिभाष्येण साक्षात्पदस्य मुख्यार्थतावगमादितिभावः । ननु "द्वेब्रह्मणी" इति परमात्मा त्मनो र्ब्रह्मशब्दप्रयोगा द्युगपत् वृत्तिद्वयासम्भवा त्सर्वत्रैकप्रवृत्तिनिमित्तपुरस्कारेण मुख्यवृत्ति रेष्टव्येत्यत्राह ( द्वेब्रह्मणी इति ) "गामग्निंब्राह्मणंचैवे" ति त्रीणी त्यादेः पूर्वःखण्डः । आत्मत्वब्रह्मशब्दप्रयोगविषयत्वादिना गौणवृत्त्यैवोभयमुपस्थाप्यत इति भावः । ननु कथं वृत्तिद्वयविरोधः "सरूपाणामेकशेष एकविभक्तौ"

वित्यत्र तत्समावेशप्रतीतेः , तथाहि - " सरूपाणा " मित्यत्र सरूपत्वंहि समानरूपत्वं, तत्र ' समानानामित्येवास्तु , किंरूपग्रहणेने ' त्याशंक्य ( १ ) " अक्रियमाणे रूपग्रहणे यत्र सर्वं समानं शब्दोऽर्थश्च , तत्रैवस्यात् वृक्षौ वृक्षा इति , इहनस्यात् - यत्र शब्द स्समानो नार्थः , अक्षाः पादा माषाइति , क्रियमाणेपुना रूपग्रहणे यत्र रूपं समानं तत्र सर्वत्र स्यात वृक्षा वक्षाविती " त्युक्तम् , एवंच - अक्षा वित्यत्र श्लिष्टेन वृत्तार्थाभिधानं शक्त्यन्तरेणैव वाच्यम् , य द्यक्षपदप्रयोगविषयत्वादिना लक्षणया ऽभिधानं स्या त्तदा एकार्थत्वादेवै कशेष स्सिद्धइति नार्थो रूपग्रहणेन , अतो नवृत्तिद्वयविरोधइति । मैवं - इन्द्रियत्वविभीतकत्व प्रवृत्तिनिमित्तपुरस्कारेण प्रवृत्ताक्षपदद्वय द्वंद्व निवृत्त्यर्थतया एकशेषविधानोपपत्तेः । अथवा - अस्तु शक्तिद्वयसमुच्चयः , नैतावता विळम्बिताविळम्बितवृत्तिद्वयसमुच्चयः , अतएव " पितामात्रे " त्यादिकं प्रष्याख्यातं । तत्रहि लाक्षणिकेनैकेनैव प्रवृत्तिनिमित्तेना र्थद्वयबोधन मुपपाद्य विशेषप्रतीतेः प्रकरणादिना ऽन्यथासिद्धि मुक्त्वा प्रत्याख्यानं कृतं । एवं भिन्नार्थ विरूपैकशेषप्रत्याख्याना द्भिन्नार्थसरूपैकशेषविधानार्थस्य रूपग्रहणस्या प्रत्याख्यानाच्च उभयशक्ते न लक्षणा - गौरवात् , शक्याशक्ययो श्शक्तिलक्षणाभ्यां बोधने विळम्बिताविळम्बितवृत्तिद्वय विरोधा दशक्योपस्थापनाय लक्षणाया आवश्यकत्वे सति तयैवा र्थद्वयबोधनोप-

---

(१) यद्यपी दानीन्तन मुद्रितमहाभाष्यपुस्तके - " रूपग्रहणं किमर्थम् , समानानामेकशेष एकविभक्ताविती यत्युच्यमाने यत्रैव सर्वं समानं शब्दोर्थश्च तत्रैवस्यात् - वृक्षाः प्लक्षा इति, इहनस्या दक्षा पादा माषाइति, रूपग्रहणेपुनः क्रियमाणे न दोषो भवति , रूपंनिमित्तत्वेनाश्रियते, श्रुतौचरूपग्रहणम् " इत्येतादृशी भाष्यपङ्क्ति र्दृश्यत । तथापि नात्र भाष्यपङ्क्तेरेवा नुवादः । किन्तु तदर्थानुवादएवेति नदोषः । यद्वा - एतद्ग्रन्थरचनसमये तादृशएवपाठ आसीत् , ततश्च देशकालयो र्भेदा त्पाठभेदो जातइति नदोषइ ज्ञेयम् ॥ - त्व-

तेजांसि नस्पृशेत् " इत्यादिव न्मुख्यामुख्यसमुच्चयाभिप्रायं । नद्वितीयः; शुद्धोपहितविकल्पासहत्वात ; नहि निर्विशेषतयाभिमतेशुद्धे " बृहतिबृह्मयती " ति श्रत्युक्तानिमित्तमस्ति । अधिष्ठानत्वेन सर्वविवर्तमूलतया च तत्स्यादितिचेन्न; तत्र तदुभया नभ्युपगमात् ;

---

पत्तौ शक्तेरपि व्यापारकल्पनायां गौरवाच्च शक्याशक्ययो रेकेनैव निमित्तेन लक्षणे त्यवगम्यते । अतो विजातीयवृत्तिद्वयविरोधएव । ननु , कथ मप्रत्याख्यानं, प्रत्याख्यातंहि " सरूपाणा " मितिसूत्रं । किंतन । नहि रूपग्रहणमात्रं प्रत्याख्यातं - किन्तु सूत्रमेव । अत स्सूत्रस्थापनपक्षे व्यर्थस्य " पितामात्रे " त्यादेः प्रत्याख्याना द्रूपग्रहणस्या प्रत्याख्यानाच्च नोक्तार्थस्य विरोधः । प्रत्याख्यानेपि ' अभिधानम् पुन स्स्वाभाविक ' मिति यत् प्रत्याख्यानं तस्मिन् पक्षेपि नोक्तविरोधः । यच्चाकृतिपक्षाश्रयणेन प्रत्याख्यानं ' व्यर्थेषुच सामान्यात्सिद्धं अक्षोतिरक्षः पद्यतेः पाद ' इति - तत्र शक्तिद्वयस्य समावेशाभावसिद्धावपि विळम्बिताविळम्बितवृत्तिद्वय समावेशाभावोक्ते र्नविरोध स्सिध्यतीति । ( शुद्धेति ) किं स्वरूपातिरिक्त प्रवृत्तिनिमित्ताविशिष्ट मुत तद्विशिष्टमिति विकल्पोऽभिप्रेतः । प्रथमकोटिं विवृण्वन्नेव दूषयति ( नहीति ) शुद्धइत्येतद्विवरणं ( निर्विशेषतया भिमतइति ) स्वरूपातिरिक्त प्रवृत्तिनिमित्ताविशिष्टतया भिमतइत्यर्थः । प्रवृत्तिनिमित्तमपिहि वाच्यमेव , ततश्च स्वरूपस्यैव वाच्यत्वपक्षे श्रुत्युक्तप्रवृत्तिनिमित्तस्य स्वरूपान्तर्गतत्वाभावे वाच्यत्वाभावेन प्रवृत्तिनिमित्तत्वमेव नस्यादिति स्वरूपान्तर्गतत्वं वाच्यं, तच्च नास्तीत्यर्थः । शुद्धे निमित्त न्नास्तीति - शुद्धे स्वरूपे निमित्त नान्तर्गतमित्यर्थः । अधिष्ठानत्वसर्वविवर्तमूलत्वे एव बृहत्वबृह्मणत्वे , ते च स्वरूपान्तर्गते एवेति शङ्कते ( अधिष्ठानत्वेनेति ) अधिष्ठानत्वं- भ्रमधर्मित्वं , विवर्तमूलत्वं - विवर्तोपादानत्वं , अधिष्ठानत्वेन सर्वतादात्म्या त्सदेव बृहत्त्वं, सर्वविवर्तमूलत्वस्य भूतभौतिकरूपेणा विद्या परिणामत्व मू तदेव बृह्मणत्व मित्यर्थः । ( तत्रेति ) नगौ

अन्यथा मुक्तावपि तद्योगात् मुक्तेरेवमुक्तेः ।

उपलक्षणार्थं निर्वचनमितिचेन्न; विशेषणार्थत्वे बाधाभावात्, 'तस्मा दुच्यते परं ब्रह्मे' ति प्रवृत्तिनिमित्ततयैव बृहत्त्वादिश्रुतेः, "बृहत्त्वाद्ब्रह्मणत्वा च्च तद्ब्रह्मेत्यभिधीयत" इतिस्मृतेश्च, " गोत्वाभिसम्बन्धाद्गौ " रितिवत् ।

अस्तु व्यावहारिकं तद्वैशिष्ट्यं; कथन्तर्हिशुद्धेवृत्तिः । तदपि तद्द्वारा गम्यत इतिचेत् ; तर्हि त न्न मुख्यम् । उपहितम्मुख्यमितिपक्षस्तु श्रुतिसिद्ध-स्वाभाविक सार्वज्ञ्याद्युपहितत्वविवक्षायां स्वमतविरोधा दपास्तः । स्वाभि मताज्ञानादिदोषोपहितत्वं त्वनाक्ष मलैंग मश्रौत मस्मार्त मसौत्रंचेति स्याप

---

स्स्वरूपान्तर्गतत्वा नभ्युपगमा दित्यर्थः । ( अन्यथेति ) तयो स्स्वरूपान्तर्गतत्व इत्यर्थः । ( मुक्तावपीति ) स्वरूपस्या नपाया दिति भावः । सर्वतादात्म्यस्य स्वरूपत्वे तस्य मुक्ता वनपाया त्तस्यच सर्वविना नुपपत्तेश्च मुक्तावपि सर्व स्यात्, सर्वविवर्तमूलत्वस्य स्वरूपत्वे- तस्य मुक्तावपि सत्वात मुक्तौ सर्वस्यात् । ननु - न प्रवृत्तिनिमित्तप्रदर्शनार्थं निर्वचनम्, किन्तु वाच्योपलक्षकधर्मप्रदर्शनार्थं, गोसदृशोगवय इति गवयत्वप्रवृत्तिनिमित्तक गवयशब्दवाच्योपलक्षक गो सादृश्यप्रतिपादकवाक्यव दिति शंकते ( उपलक्षणार्थमिति ) अस्तु- तर्हि प्रवृत्तिनिमित्त प्रदर्शनमेव, तच्च स्वरूपाद्भिन्नमेव, नचैवं सद्वितीयत्वप्रसंगः; तस्य व्यावहारिकत्वादिति गूढाभिसन्धि श्शंकते ( अस्त्विति ) दूषयति ( कथन्तर्हीति ) स्वरूपातिरिक्त प्रवृत्तिनिमित्ताविशिष्ट स्वरूपमात्रपरत्वं न सिध्यतीत्यर्थः । अभिसन्धिमुद्घाटयन् शंकते- ( तदपीति ) प्रथमं प्रवृत्तिनिमित्तविशिष्टरूपेणो पस्थापितंस त्पश्चात्स्वरूपेणोपस्थाप्यतइत्यर्थः । ( तर्हीति ) लाक्षणिकत्वमेव स्यादितिभावः । स्वरूपातिरिक्त प्रवृत्तिनिमित्ताविशिष्टमेव मुख्यमिति द्वितीयं कल्प मनूद्य दूषयति ( उपहितमिति ) सत्यसार्वज्ञ्या द्युपहितं मुख्यार्थः, उत मिथ्याभूता विद्या द्य्कार्योपहितं, इति विकल्प मभिप्रेत्य प्रथमं शिरो दूषयति ( श्रुतिसिद्धेत्यु द्वितीय न्दूषयति ( स्वाभिमतेति ) यद्वा- द्वोपहितेणया सौख्यमात्रं मुख्यार्थः [illegible] भूतमिति वि-

कल्पो विवक्षित । आद्यन्दूषयति ( नहीति ) निर्विशेषत्वा च्चैतन्ये निमित्त मस्तीत्यर्थः । व्यावहारिकधर्मा अपि बिम्ब प्रतिबिम्बयो-रेवेति भावः । सार्वज्ञ्यादे श्चैतन्यमात्रे ऽभावे प्यधिष्ठानत्व विवर्त मूलत्वे तत्रैव स्यातां , ते एव बृहत्वब्रह्मणत्वे इति शंकते ( अधि ष्ठानत्वेनेति ) अधिष्ठानत्व विवर्तोपादानत्वञ्च बिम्बस्थानीय ब्रह्मण एवेति येषाम्मतं - तान्प्रत्याह ( तत्रेति ) येतु चैतन्यमात्रएवा धिष्ठान त्व सर्वविवर्तमूलत्वे इच्छन्ति - तान्प्रत्याह । ( अन्यथेति ) व्याव-हारिकस्यैव प्रवृत्तिनिमित्तत्वे प्रातिभासिकस्य रजतादिपदवाच्यत्वाभा-वापत्तेः, सत्तादिविशेषमनपेक्ष्य धर्ममात्रस्य प्रवृत्तिनिमित्तत्वे प्राति भासिकपीतत्वाश्रय शंखादेः पीतादिपदवाच्यतापत्तेश्च , धर्मिस-मानसत्ताकस्यैव प्रवृत्तिनिमित्तत्वा द्धर्मिणश्च पारमार्थिकतया तयो रपि पारमार्थिकत्वे ज्ञाना न्निवृत्त्यसम्भवेन ब्रह्मव्यतिरिक्त कृत्स्ननि-वृत्तिरूप मुक्ति र्नस्यादित्यर्थः । नन्वस्तु व्यावहारिकमेव सार्व-ज्ञ्यादिकं प्रवृत्तिनिमित्त , तस्यच ज्ञाना न्निवृत्तिसम्भवा न्न मुक्तेर्भुक्ति रिति गूढाभिसन्धि श्शंकते ( अस्त्विति ) दूषयति ( कथमिति ) धर्मिसमानसत्ताकस्यैव प्रवृत्तिनिमित्तत्वा त्प्रवृत्तिनिमित्तस्यच मि-थ्यात्वे पारमार्थिकस्वरूपगतत्वं न स्यादिति न स्वरूपस्य मुख्यते त्यर्थः । अभिसन्धि मुद्घाटयति ( तदपीति ) शुद्धम प्यशुद्धान्तर्भा-वा दशुद्धे प्रतीयमाने प्रतीयत इत्यर्थः । ( तर्हीति ) नायं केवल शुद्ध मुख्यवृत्तिपक्षइत्यर्थः । तदपीत्यादेः पूर्ववदेवार्थः । यद्वा - मुक्तावपी त्यत्र सत्यत्वसाधनं न विवक्षितं , किन्तु - सत्यत्वाभिमानमात्रं , स-म्भवतिहि यावन्मिथ्यात्वोक्ति सत्यत्वाभिमानः , एवंचोत्तरत्र न-गूढाभिसन्धिता । बिम्बत्वोपहितं मुख्यमिति द्वितीयं पक्षं दूषयति ( उपहितमिति ) किन्तद्बिम्बस्थानीयं ब्रह्म सत्यप्रवृत्तिनिमित्त विशिष्टं ! उत मिथ्याभूत प्रवृत्तिनिमित्त विशिष्टं ! इति विकल्पमभिप्रे-त्याद्यं दूषयति ( श्रुतीति ) द्वितीयं दूषयति ( स्वाभिमतेति ) यद्वा - स्वरूपमेव मुख्य मुताविद्योपहितमिति विकल्प्य तत्राद्यं ... शेषं द्वितीय व्याख्यानवदेव । यद्वा - अनुपहित म्मुख्य मुत ... तत्रेतिद्वपहितमिति

यिष्यते । तत्रच शुद्धे परे ब्रह्मणि निर्दोषभव्यगुणविशिष्टविषयभगवच्छब्द-मुख्यवृत्तिनिरुक्तिविरोधः, "परंब्रह्म परन्धाम पवित्रंपरमम्भवा" नितिस्तुत्यनुपपत्तिः । पवित्रंपरममित्यादि समभिव्याहारवैयर्थ्यंच । निर्विशेषलक्षणायातु स्तुति र्नकथंचिदपि सम्भवति; गुण्यवच्छिन्न गुणाभिधानरूपत्वा त्तस्याइति । पूर्वापरादिविसंवादाच्च न कुत्रापि निर्गुणसिद्धिः ।

---

विकल्पार्थः । अज्ञानादी त्यादि पदेन तत्कार्यं विवक्षितं । अविद्याद्युपहितं मुख्यमिति द्वितीयपक्षे दोषान्तरमाह (तत्रचेति) तत्र - अज्ञानादिदोषोपहितत्वे, ब्रह्मशब्दमुख्यार्थो न दोषोपहितः - 'शुद्ध' इति त मर्थ मनूद्य तत्र निर्दोषत्वपुरस्कारेण भगवच्छब्द निर्वचन विरोधात, नच ब्रह्मपदलक्ष्ये तन्निर्वचनम्, गुणविशिष्टविषयत्वात्तस्य, भगवच्छब्दस्यापि तत्र मुख्यत्वायोगाच्चेति भावः। (परंब्रह्मेति) नहि दोषवैशिष्ट्याभिधानं स्तुतिः, प्रत्युत निन्दैवेति भावः। (पवित्रमिति) दोषोपहितस्या पवित्रत्वा दिति भाव.। 'परं ब्रह्म' त्यत्र - ब्रह्मपदेन शुद्ध लक्ष्यत इत्यत्राह (निर्विशेषेति) (कथंचिदिति) दोषाभावाभिधानादपि न स्तुतिः, स्वरूपमात्रपरत्वा देवेत्यर्थः । (गुणाभिधानेति) निर्दोषत्वमपि गुणान्तर्भूतम्, किञ्च - मुख्यार्था नुपपत्त्यभावा न्न लक्षणा । ननु निर्गुणत्वस्य श्रुतिस्मृति सूत्रैः प्रतिपन्नत्वा द्गुणानां मिथ्यात्वेन हेयत्वा त्तद्वैशिष्ट्याभिधाने निन्दैवेति मुख्यार्थानुपपत्त्या लक्षणाश्रुयत इतिचे त्तत्राह (पूर्वेति) चेति प्रमाणान्तर विसंवाद न्यायोपेत स्वपदविरोधौ समुच्चीयेते। यद्वा - दोषाभावमुखेनापि लोकवेदयोः स्तुतिदर्शनात "यदाह्येवैष - एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इत्यादिभि र्भेददर्शनस्य दोषत्वावगमात निर्गुणवाक्यै स्तद्वैधुर्यस्य स्वरूपेऽवगमा द्भवान्ब्रह्मेति सामानाधिकरण्येन तादृशस्वरूपेणो पहितस्या भेदबोधना द्दोषाभावस्यात्र कण्ठरवेण प्रतिपादनेऽपि निर्गुणवाक्ये निर्दोषतया प्रसिद्धस्वरूपैक्य बोधमात्रेणापि गुणाबोधनेपि प्रसिद्धगुणक सम्राडभेदबोधनेनेव स्तुत्युपपत्ते रुपहितैक्य बोधनस्यबाधेन भवानित्यस्यापि लक्षणया स्वरूपपरत्वेपि तस्यो पहितसम्बन्धस्य शब्दादर्थाद्वा

अपिच अविद्यानिवृत्त्यर्थ मिहज्ञातव्य मुपहित निरुपाधिकंवा; आद्ये तत्त्वावे दक तटस्थस्वरूपलक्षणादिभि रपि तंद्रहा दविशिष्ट ब्रह्मणि वृत्त्यसिद्ध्यास्म दिष्टसिद्धिस्स्यात् । स्याच्चातत्त्वज्ञानादेव मोक्षसिद्धिः, तस्य मिथ्यात्वेनैव-युष्माभिरगीकारात् । द्वितीये त्वतद्व्यत्पन्नेन तदुक्तययोग एव । तल्लक्षि त तज्जिज्ञास्यते लक्ष्यते शोध्यतेचेतिचेत्; ततएव निर्विशेषलक्षकब्रह्म-शब्दात् ज्ञातत्व लक्षितत्व शोधितत्व सिद्ध्या जिज्ञासा द्यनपेक्षा स्यात् ।

---

प्रतीत्या मुखादिप्रतीकस्तुत्या ऽ वयविस्तुतिवत् अष्टाकपालादिस्तुत्या द्वादशकपाल स्तुतिवच्चो पहितस्तुतिसिद्धेश्च निर्विशेषलक्षणयापि-रतुति नविरुद्ध्यतइति तत्राह ( पूर्वेति ) एवमपि न स्तुतिसिद्धिः - ब्र-ह्माभेदमात्रस्य सर्वचेतनसाधारणत्वा दित्यपि भावः । यद्वा – निर्वि शेषस्वरूपस्यैवा सिद्धे न तल्लक्षणे त्यभिप्रायेणाह ( पूर्वेति ) ...

एवमेतावता मुख्यवृत्त्यभावा न्न लक्षणेति लक्षकत्वाभिमत शब्द-स्वरूप पर्यालोचनया निर्विशेषलक्षणा निरस्ता, इदानीं लक्ष्यत्वाभिमत जिज्ञास्यस्वरूप पर्यालोचनयापि निर्विशेष लक्षणां निराकरोति - ( अपि चेति ) लक्षणेति वाक्यपरं, प्रथमसूत्रस्थ ब्रह्मशब्देनार्पीत्यर्थः । उपहितस्य ज्ञेयत्वेन तस्यं जिज्ञास्यत्वे जिज्ञासात्मक लक्षणादिलक्ष णानां तदारम्भप्रतिपा[illegible]प्रथमसूत्रस्यचोपहितपरत्वेन न ब्रह्मशब्दे लक्षणा श्रयणीया । तत्त्वावेदकाना मुपहित परत्वां गीकारे ऽप-सिद्धान्त इति द्योतयति ( तत्त्वावेदके ति ) ( अत द्व्यु-त्पन्नेनेति ) ब्रह्मणो न्यत्र मुख्यवृ त्त्यसम्भवस्यो क्तत्वेन-ब्रह्मबोधकस्य तच्छक्तत्वमेव वक्तव्य मितिभावः । एवंच प्रतिज्ञालक्ष-णशोधनानि न सम्भवन्तीति तात्पर्यम् । अत्र ततो न्यत्रा मुख्यस्य त-द्बोधकत्वम् तन्मुख्यवृत्त्यैवेति नियमो विवक्षितः । अन्यत्रामुख्यत्वेप्युप हिते मुख्येन तत्सबन्धा दनुपहित लक्ष्यता मिति शंकते ( तल्लक्षित-मिति ) ( जिज्ञास्यतइति ) जिज्ञास्यतया प्रतिज्ञायते । लक्ष्यते. " जन्माद्यस्ययत " इति । शोध्यते – उत्तर सूत्रैः । ( ज्ञातत्वेति ) ज्ञातत्वपदानिर्णयपरं, तस्य सिद्धत्वा लक्षणशोधनेअपि सिद्धप्राये, एवच लक्षणशोधनाभ्यां साध्यस्य निर्णयस्य ब्रह्मपदादेव सिद्ध्या प्र-तिज्ञालक्षणशोधनानां वैयर्थ्यमुचेत्यर्थः । बिलीनघृतोत्थापनन्यायमाशं-

नच जिज्ञासादौविधिः, अदृष्टार्थत्वाभावात्; येनपिष्टपेषणंसहेम । निरुपाधिके ब्रह्मशब्दवृत्तिमविदुषः प्रतिबोधनेनं सर्वं सार्थमितिचेत्; किम्मुख्यामुख्यांवा । पूर्वत्र प्रस्तुतव्याघातः, सर्वस्योपहित मुख्यवृत्ति विषयबोधनोप

---

क्याह (नचेति) जिज्ञासादौ - सूत्रकारस्य जिज्ञास्यत्वप्रतिज्ञायाम्, श्रोतुर्विचारेच । नविधिरित्यर्थः । ननु शास्त्रस्य श्रवणात्मकत्वे मननात्मकत्वेवा "श्रोतव्योमन्तव्य" इतिविधाना त्तदर्थत्वाच्च प्रतिज्ञायाः कृत्स्नं शास्त्रं सार्थकमेवेत्यत्राह (अदृष्टार्थत्वाभावादिति) त्वयापिहि श्रव दे दृष्टद्वारत्वमेवेष्यते, ननु केवलादृष्टद्वारत्वमित्यर्थः । यद्वा (अतद्रूपत्वेनेति) ततश्च सामान्यतोपि ज्ञानाभावा त्तज्ज्ञानेच्छालक्षणशो नि न सम्भवन्तीत्यर्थः । (जिज्ञास्यतइति) ज्ञातुमिष्यतइत्येवार्थः । "लक्ष्यतेशोध्यत" इत्येत च्चुत्यादिसाधारणं । जिज्ञासाद्यनपेक्षास्यादित्यत्रापि जिज्ञासापदं ज्ञानेच्छापरमेव, जिज्ञासादि विषयि ण्यपेक्षाप्रत्याशा तव नोपपद्यतइत्यर्थः । विध्यभावे हेतुमाह (अदृष्टार्थत्वाभावादिति) विषयवैलक्षण्याधीनाया इच्छाया विध्ययोग्यत्वंच विवक्षितं । येन-विधिना । (सहेमेति) अनुदात्तेत आत्मनेपदविधानस्य चक्षिङो ऽनुदात्तत्वेपि ङित्करणेना नित्यत्वज्ञापना त्परस्मैपदम् । यद्वा- "आधृषाद्वे" ति विकल्पितणिच स्सहेरेतद्रूपं, सहिसहिः परस्मै पदी । निर्विशेषलक्षक ब्रह्मशब्दा ज्ज्ञातत्वासिद्ध्या जिज्ञासाद्यनपेक्षास्या दित्यत्र शंकते । (निरुपाधिकइति) निरुपाधिक इत्येत त्सार्थमित्यनेन सम्बध्यते, ब्रह्मशब्दवृत्ति मविदुषः प्रतिबोधनेन निरुपाधिक एव विषये लक्षणशोधनात्मकं शास्त्रं सार्थमित्यर्थः । विषयभेदमनादृत्य ब्रह्मशब्दमात्रे वृत्तिविकल्पयति (किम्मिति) (पूर्वत्रेति) मुख्य वृत्त्याबोधनस्यो त्तरशास्त्रसार्थक्यार्थता शास्त्रस्य मुख्यवृत्तिविषयगोचरत्व एवस्यात्, मुख्यवृत्तिविषयश्चो पाहित एवेति शास्त्रस्य तद्बोधनोपक्षीणत्वेना नुपाहितस्या जिज्ञास्यत्वा न्निरुपाधिके सर्वं सार्थमित्यस्य व्याघातइत्यर्थः, अनुपहिते मुख्यवृत्त्यङ्गीकारेण सार्थक्यापादनं न सम्भवति, अपसिद्धान्तादित्याह (अनुपहितइति) यद्वा - कथं व्याघातः किंच प्रस्तुतमित्यत्राह (सर्वस्येति) शास्त्रस्यो पहितविषयत्वेना नुपहितस्या जिज्ञास्यत्वा न्न

क्षीणत्वात्, अनुपहिते हि लक्षणामेव वदसि, अभिधानांगीकारेवा किं-सार्वज्ञ्यादि विशिष्टपरब्रह्माभिधान प्रद्वेषेण। उत्तरत्र "अधीहि" त्यादि-वैयर्थ्यं; ब्रह्मशब्दस्य मुख्यार्थमधीहीत्युक्ते लक्ष्यार्थ लक्षणोपदेशस्यासंगते.। लक्ष्यार्थ मधीहीतितु निरुत्थानम्, कारणाभावात्; मुख्यार्थबाधादि निश्चयपूर्वकत्वा दमुख्यवृत्तिविज्ञप्तेः तन्निश्चयस्यचात्र ततः प्रागासिद्धेः, तत्सिद्धौ वा निर्विशेषावगमे किं प्रश्नेन प्रत्युक्त्यावा।

मुख्यार्थबाधोनिश्चितः, लक्ष्यार्थ विशेषश्च नविदितः, अस्मिन्नवसरे-प्रश्नायस्तु । माभूत् । किं प्रत्यक्षेण बाधः! किं वानुमानेन !

---

तत्र लक्षणा श्रयणीयेति प्रक्रान्ता नुपहितलक्षणा व्याघात इत्यर्थः। ( अभिधानेति ) सिद्धान्त मुल्लंघ्य स्वरूपमात्रशक्त्यंगीकारे न किञ्चि त्प्रयोजनम्, नहि विशेषणस्या शक्यतामात्रेण शक्ये स्वरूपे लक्षणो पपादिता भवति, नाप्यवाच्यत्वश्रुतिः, प्रत्युत विशिष्टशक्त्यंगीकारएव विशेष्ये लक्षणा भवति, अतो न निर्विशेषलक्षणा सिद्ध्यतीत्यर्थः। यद्वा - ननु लक्षणशोधनादेः प्राग्ब्रह्मपदेन निरुपाधिकस्वरूपस्योक्तिं नांगीकुर्मः, येना तद्व्युत्पन्नेन तदुक्त्ययोगः, लक्षणया तदुक्तौ जिज्ञासालक्षणादि वैयर्थ्यञ्च स्यात, किन्तु निरुपाधिके ब्रह्मशब्दवृत्ति मविदुषः प्रत्येव लक्षणशोधनादिकम् सर्वं प्रवर्तत इत्यगीकुर्मः, ततश्च न पूर्वोक्तदोषाविति शंकते ( निरूपाधिकइति ) निरूपाधिकशब्दस्य ब्रह्मशब्दवृत्ति मित्यनेनैवा न्वयः, निरूपाधिके स्वार्थ मित्येत दर्थसिद्धम् । किंच तत्र कारणं - कथ च तदभाव इत्यत्राह ( मुख्यार्थेति ) मुख्यार्थबाधो मुख्यार्थानुपपत्तिः- आदिशब्देन सम्बन्धः परिगृह्यते, इदं पदं मुख्यवृत्तमिति निश्चयः कारणम्, तत्रच मुख्यार्थबाधादिनिश्चयो हेतुः, तदभावा त्तदभावइत्यर्थः । ( ततइति ) उपदेशादित्यर्थः । ( तत्सिद्धाविति ) उपदेशा त्प्रागिति शेषः । ( निर्विशेषावगमइति ) जातइति शेषः ( मुख्यार्थबाधइति ) मुख्यार्थस्य बृहत्त्वस्य बाधितत्वेन निश्चितत्वा त्तस्य मुमुक्षुजिज्ञास्यत्व मनुपपन्नतया वगत मिति भावः। ( लक्ष्यार्थेति ) अनेन लक्ष्यसामान्यज्ञानम् लक्ष्यविशेषजिज्ञासाच [illegible] ( [illegible] ) [illegible]

अथतर्केण, अथवा तादृशेनागमेन । नाद्यः । अतीन्द्रियेप्रत्यक्षबाधायोगात् । नद्वितीयतृतीयौ । अनुमानस्यतर्कमात्रस्यच नित्यागमे स्पर्धितुमशक्तेः । नचतुर्थः । नब्रूहतिनबृहयतीतिचवाक्यान्तराभावात । निर्गुणादिवाक्यै-स्तत्सिद्धिरितिचेत्. तथापि निर्मूल प्रश्न, तैरेवगुणत्सिनबोधात् । नचतैर-पितत्सिद्धिर्न्याय्या, अविरुद्धविषयसिद्ध्यातयामप्यान्यपर्यस्यवक्ष्यमाण वात् । आपातविदितार्थश्रुतिविप्रतिपत्त्यासन्दिहानः कीदृग्भूतंब्रह्मशब्द विवक्षित-मितिपृच्छतीतिचेत्, नैवं; तटस्थस्वरूपलक्षणाभ्यामपि कारणत्ववैलक्षण्यवि-षयाभ्यांसन्देहस्यैवस्थापनप्रसङ्गात् । नचनिर्विशेषंसविशेषवेतिविमृशतोज-गत्कारणत्वोक्त्यानिर्विशेषत्वनिश्चयास्सिध्येत् । अपितुसर्वकारणत्वाक्षिप्तंस-र्वज्ञसर्वविदादिशब्दकण्ठोक्तञ्च सर्वज्ञत्वादिकबृहत्त्वमेवनिर्धार्येत । . .

नन्वविदितमुख्यलक्षकविभाग. शिष्योमुमुक्षुर्जिज्ञास्यब्रह्मेतिसामान्य-तउपश्रुत्यतल्लक्षणं पृच्छति, .... ...

---

सस्याप्युपलक्षणं । प्रश्नवैयर्थ्यपरिहारमाशङ्कते ( आपातविदितार्थेति ) श्रुती-द्वैताद्वैतश्रुती, तएवविप्रतिपत्तिः - विरुद्धार्थप्रतिपादकवचनद्वयी. ( कीदृग्भूतमिति ) निर्विशेषंसविशेषंवेत्यर्थः. ( पृच्छतीतिचेदिति ) त तश्चलक्ष्यार्थनिर्विशेषोपदेश उपपन्नइतिभावः. ( लक्षणाभ्यामिति ) वा क्यपरम् । वैलक्षण्यं-अनृतादिभ्यावृत्त्यात्मकंस्वरूपं । तटस्थलक्षणेन स-विशेषत्वकोटिः स्वरूपलक्षणेन निर्विशेषत्वकोटिश्चसिद्धा, स्वरूपलक्ष णस्य तेननिर्विशेषपरत्वस्याभिमानादित्यर्थः । नसन्देहमात्रं प्रत्युतविप रीत निश्चयएवेत्याह ( नचेति ) ( सर्वकारणत्वाक्षिप्तमिति ) कर्तृत्वा-क्षिप्तमित्यर्थः. उपादानत्ववन्निमित्तत्वस्यापि तत्र विवक्षितत्वात्. ( स र्वज्ञेत्यादि ) कारणत्वानुपपत्ति लक्षणन्यायसाचिव्या त्सविशेष श्रुते-स्सविशेषमेव निर्धार्येतेत्यर्थः. ( बृहत्त्वमेवेति ) निर्वचनोपबृंहित ब्रह्म शब्दावगतञ्चेतिभावः । यद्वा नत्वदभिमतंनिर्विशेषं ब्रह्मशब्दविवक्षित मितिसिद्ध्यति. किन्त्वस्मदभिमतं बृहत्त्वविशिष्टमेवेत्याह ( बृहत्त्वमेवे ति ) सत्यज्ञानादिवाक्येनापि सत्यत्वादिकमेव निर्धार्येतेतिभावः । वै यर्थ्यपरिहारान्तरमाशङ्कते ( नन्विति ) अत्रप्रश्नस्य सन्देहमूलत्वानुक्ते-र्न दूषणमितिभावः. ( तल्लक्षणमिति ) ब्रह्मशब्दविवक्षितस्य लक्षण

आचार्यस्तु कृत्स्नविद्ब्रह्मशब्दलक्ष्यनिर्विशेषवस्तुलक्षणमुपादिशतु । तदपिन, मुमुक्षुभिर्जिज्ञास्यंनिर्विशेषमित्यस्यैवनिर्मूलत्वात्; प्रत्युत "तमेवंविद्वा" नित्यादिभिर्विभूतिगुणविग्रहव्यापारविशिष्टमहापुरुषवेदनस्यैवामृतत्वप्रा - सयपायत्वश्रवणादबाधाच्च । अतोयथाश्रुतएवब्रह्मशब्दार्थः । निरुक्तिच-यास्कः । "ब्रह्मपरिवृढंसर्वत" इति । .... ....

---

पृच्छतीत्यर्थः । "ब्रह्माधीही" त्यस्य ब्रह्मशब्दविवक्षितमधीहीत्यर्थइ-तिभावः । पूर्वमनुपहितस्य जिज्ञास्यत्वमङ्गीकृत्य लक्षणशोधनादि वैय र्थ्यप्रसङ्गान्नतन्नलक्षणेत्युक्तं । इदानीमनुपहितस्य जिज्ञास्यत्वमेवासिद्ध-मतस्तन्ननलक्षणेत्याह (तदपिनेति) यद्वा यदिमुमुक्षुभिर्ज्ञातव्यं ब्रह्म निर्विशेषमिति निर्धारितंस्यात्तदा जिज्ञासावाक्यस्य तदानुगुण्येन वर्ण नीयतया ब्रह्मपदमुख्यार्थप्रश्नस्य तदननुगुणत्वान्मुमुक्षुज्ञातव्य ब्रह्मश-ब्दार्थःकइति लक्षणयाप्रश्नसमर्थनंस्यात्, नचैतत्सिद्धं, अतः "अधीहि भगवोब्रह्मे" तिपदंमुख्यार्थस्यैवप्रश्नपरम्, तथाचोक्तप्रकारेण प्रश्नोनु पपन्नइत्यभिप्रायेण परिहरति (तदपिनेति) (तमेवंविद्वानिति) आ-दिशब्देन "तमेवविदित्वाअतिमृत्युमेती" त्यादिविवक्षितं । "तमस-स्तुपारे सर्वाणिरूपाणी" त्यादिभिर्विभूतिः, "महान्त" मित्यादिभि र्गुणः, "आदित्यवर्ण" मितिविग्रहः, "विचित्यकुरुते" तिव्यापारः प्रतिपाद्यते. (विशिष्टेति) तत्पदेन एवमितिच प्रस्तुतविभूत्यादि वै-शिष्ट्यपरामर्शादितिभावः. (महापुरुषेति) "पुरुषम्महान्त" मिति वाक्यार्थउक्तः । एवंजिज्ञास्यपर्यालोचनया निर्विशेषस्य जिज्ञासानर्थ-क्यादिभिर्जिज्ञास्यत्वासम्भवादुपहितस्यैव जिज्ञास्यत्वे ननिर्विशेषलक्षणे ति. (अतइति) यतोलक्षकत्वाभिमत शब्दस्वरूपपर्यालोचनया मु-ख्यवृत्त्यभावे साधुत्वानुपपत्ते स्त्वन्मते मुख्यवृत्तेः क्वाप्यसम्भवाच्च त न्मूललक्षणायाअनुपपत्तिः, यतश्च लक्ष्यत्वाभिमत जिज्ञास्यस्वरूप प-र्यालोचनयोपहितस्यैव जिज्ञास्यत्वे लक्षणायाअसम्भवः, अतः । "बृह तिबृंहयति तस्मादुच्यतेपरंब्रह्मे" तिश्रुत्युक्त प्रकारएव ब्रह्मशब्दार्थ-इत्यर्थः । सर्वतः - सर्वस्मात्, अनवधिकातिशय बृहदित्यर्थः । यद्वा स र्वतः - सर्वप्रकारेण, स्वरूपतोगुणतो विभूतितश्चेत्यर्थः । अत्र तत्वटीका यामुक्तं "यस्याथर्वशिखा निरुक्तिर्बृंहणत्वमप्याह" इत्यत्र निरुक्तिपदं

इदंसर्वमभिप्रेत्याभाष्यत " ब्रह्मशब्देनचस्वभावतो निरस्तनिखिलदो-
षोऽनवधिकातिशयासंख्येयकल्याणगुणगणःपुरुषोत्तमोऽभिधीयत " इति ।
अभिधीयते - मुख्ययावृत्त्यावोच्यते । अनेवंनामकमनेवंविधञ्चकिमपिब्रह्मे-
तिवदतांसर्वेषा मप्यत्र निरासोभाष्यः । विशेषणद्वयेनचब्रह्मपुरुषोत्तम-

---

स्त्वादुच्यतेपरंब्रह्मे " ति. पौराणिकोचप्रसिद्धिः " बृहत्त्वाद्बृंहणत्वाच्च
तद्ब्रह्मेत्यभिधीयत " इति, तद्गोबलीवर्दन्यायादिति नविरोधः, तेनानव-
धिकातिशय बृहत्त्वमेव ब्रह्मशब्दार्थइत्येके, अपरेतु बृहत्त्ववत् बृंहण-
त्वमप्यनवधिकातिशयं ब्रह्मशब्दार्थः " बृहतिबृंहयती " तिपृथगभि-
धानस्वारस्यात्, " बृहत्त्वाद्बृंहणत्वाच्चे " ति समुच्चयस्वारस्याच्चेत्याच
क्षते, वयन्तुब्रूमः विरोधाभावादुभयथाप्याचक्ष्महे " इति । अत्रबृंहण
त्वं बृहत्त्वान्तर्गतमेवार्थो नपृथगितिप्रथमपक्षः, बृहत्त्वं तदनन्तर्भूतं बृं
हणत्वञ्च समुच्चितमर्थइति द्वितीयः, बृहत्त्वान्तर्भावेनापि बृंहणत्वम-
र्थः स्वरूपेणापि तत्रापि समुच्चितमर्थइति तृतीयः, प्रतिपाद्याकारभे-
दान्नपौनरुक्त्यम्, नच गोबलीवर्दन्यायात्सङ्कोचः, तस्य पदान्तरविष-
यत्वात्, अतउभयथा प्यर्थो बृंहणत्वमितिभावः । " क्षरन्त्यत्र " मि
त्युक्तमुपपादयन्नेतन्मूलभूतं भाष्यमाह ( इदंसर्वमिति ) यथाश्रुतएव
ब्रह्मशब्दार्थः. इदंसर्वमभिप्रेत्याभाष्यतेति वाक्याभ्यामयमर्थःश्रुतो म
तश्चेतिगम्यते । इदञ्चभाष्यं प्रकाशितमाचार्यैः, " प्रथमविशेषणेन स्व
भावतोनिरस्त निखिलदोषत्वात्परमेव ब्रह्मशब्दवाच्यः नान्यः । नहि-
कारागृहनिगलितस्य तन्मोचनार्थमभ्यर्थनीयः, अतोमुमुक्षूपास्यपर जि
ज्ञासासूत्रस्थ ब्रह्मशब्देन पुरुषोत्तमएवार्थ सामर्थ्यादभिधीयत इत्यव-
गम्यते । द्वितीयविशेषणेन " यस्मिन्प्रयुज्यमानेतु गुणयोगस्तुपुष्कलः ।
तत्रैवमुख्यवृत्तोयमन्यत्रह्युपचारत " इतिन्यायेन गुणतोपि बृहत्त्वेशब्द
शक्तेरसङ्कोचस्सिध्यतीति शब्दशक्तेः पुरुषोत्तमएवाभिधीयत इत्यवग-
म्यत " इति . ( अनेवंनामकमिति ) तन्निरासप्रकारस्तु वेदान्तविजये
प्रपञ्चितोऽस्माभिः . ( विशेषणद्वयेनेति ) " ब्रह्मपरिवृढं सर्वत " इतिब्रह्म
शब्दनिरुक्तिः, " यस्मात्क्षरमतीतोह मक्षरादपिचोत्तमः । अतोस्मिल्लो
केवेदेच प्रथितःपुरुषोत्तम " इतिपुरुषोत्तमशब्दनिरुक्तिः । एतेन पुरु-

शब्दयोः निरुक्तिरपिव्यज्यते ॥ .... .... ...

इति कवितार्किकसिंहस्य सर्वतंत्रस्वतंत्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां ब्रह्मशब्दवृत्त्यनुपपत्तिवादः प्रथमः ॥

---

षोत्तमशब्दो नकर्मधारयः, उत्तमशब्दस्य पूर्वनिपातप्रसङ्गात्। नचष ष्ठीसमासः, "नर्निर्धारणे" इतिनिषेधात। नापिसप्तमीसमासः, "न निर्धारणे" इतिनिषेधादेव। नचवाच्यं षष्ठ्याएवायं समासनिषेधोन सप्तम्याइति विशेषाभावेन सप्तम्याअपि निषेधात्। अन्यथाषष्ठीसप्त-मीसमासयो रूपतोर्थतश्चभेदाभावेन निषेधानर्थक्यात्, अतोत्रावयवार्थ निरुक्तेरसम्भवा त्केवलरूढएवायमश्वकर्णादिवत्। तदिदमाह "रू-ढ्यात्तु कामंपुरुषोत्तमोस्तु" इतिनिरस्तम्, "यस्मात्क्षरमतीतोहमक्ष रादपिचोत्तम" इत्यादि निरुक्त्यनुसारेण "पंचमीविभक्ते" इतिविहि तपंचम्याः "पंचमीभयेनेत्यत्र" पंचमीतियोगविभागात्समासोपपत्तेः। यो-गविभागश्च "तादपिपरस्सपर" इतिभाष्यवाक्यादवगम्यते। विस्तर-स्तुवेदान्तविजयेद्रष्टव्यः। ... ... ... .. ...

इतिश्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत प रावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरण परायणेन तत्प्रसा दलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणी-व्याख्यायां चण्डमारुताख्यायां ब्रह्मशब्दवृत्तिनिरूपणन्नामप्रथमःस्कन्धः।



|| श्रीमतेरामानुजायनमः ||

|| श्रीमतेनिगमान्तमहादेशिकायनमः ||

## द्वितीयवादः

अथस्वात्मैकभासस्य निर्विशेषस्यदुष्यतः । विशुद्धस्यापिजिज्ञासा-
परेष्टाप्रतिषिध्यते ॥ .... .... ....

यदाहुः - ब्रह्मशब्दनिर्दिष्टं विचार्य, ....

---

पदार्थनिरूपणानन्तरं वाक्यार्थनिरूपणस्यौचित्यं भाष्यक्रमस्यानु-रोद्धव्यत्वंचाभिप्रेत्याह (अथेति) वादार्थसंगृह्णाति (स्वात्मेति) कर्मत्वाभावात्सामान्यविशेष वेदनद्वयविषयत्वाभावेन हेतुफलाभावाज्जिज्ञासानोपपद्यतइत्याह (स्वात्मैकभासस्येति) स्वप्रकाशस्यैव स्वगतसामान्यविशेषविषयत्वेन हेतुफलत्वेस्तामित्यत्राह (स्वात्मेति) स्वयमेवात्मा स्वात्मा जिज्ञासासमानाधिकरणयोरेव सामान्यविशेषज्ञानयोः हेतुफल भावात्स्वप्रकाशस्यैवात्मत्वेन सामानाधिकरण्यासम्भवात्साध्यत्वासम्भवाच्च नहेतुफलभावः । किञ्च निर्विशेषत्वाच्च सामान्यविशेषयोरभावेन नजिज्ञासाहेतुफल सम्भवइत्याह (निर्विशेषस्येति) किमविद्योपहितस्यजिज्ञास्यता उत विशुद्धस्य, नाद्यइत्याह (दुष्यतइति) मिथ्याविषयकज्ञानस्य निवर्तकत्वासम्भवेन इष्यमाणत्वासम्भवादितिभावः । द्वितीयन्दूषयति(विशुद्धस्येति) विशुद्धस्यज्ञप्तिविषयत्वाभावादितिभावः । निर्विशेषस्येत्यनन्तरं ब्रह्मणइतिशेषः । स्वात्मैकभासस्य निर्विशेषस्य ब्रह्मणो जिज्ञासा या परेष्टा सादुष्यतोविशुद्धस्यापि प्रतिषिध्यतइत्यन्वयः । जिज्ञासामात्रं खण्डयतः ब्रह्मजिज्ञासाखण्डनं नानिष्टमित्याशंक्याह (परेष्टेति) यथालोकंब्रह्मण्यपि तस्याइष्टत्वात्, अन्यथानारम्भेण शास्त्रोच्छित्तेरिति भावः । अस्मिन्वादे जिज्ञासानुपपत्तिर्विचारानुपपत्तिर्वा प्रतिपाद्या, अन्यतरार्थत्वे अन्यतरनिरसनमार्थं । अत्रच विचारानुपपत्तिपक्षे जिज्ञासापदं विचारपरम् । हेतुफलाभावाज्जिज्ञासानुपपत्त नतत्साध्य विचारसम्भवइतिवा तात्पर्यं । ब्रह्मपदादेवब्रह्मणः प्रतीतेः विचारानुपपन्नइत्यभिप्रायेणोक्तं (शब्दनिर्दिष्टमिति) (विचार्यमिति) जिज्ञासानुपपत्तिपक्षे विचारफलक जिज्ञासाविषयइत्यर्थः । विचारानुपपत्त्या तत्फल

अनुदितान स्तमितस्वरूपैकप्रकाशमशेषविशेषशून्यमनाद्यविद्यान्धकारा-
तं नित्यशुद्धञ्चेति । तत्रविचित्रोव्याघातः । यद्धि नविदितकर्म कथंतत्र-
जिज्ञासा । सामान्यतोविदितेविशेषतश्चवेदितव्येतत्प्रवृत्तेः । अन्यथा
हेतुप्रयोजनविरहेतदयोगात् । नचब्रह्मणितथाविधवेदनद्वयविषयत्वंपरैरिष्य
ते । जिज्ञासापूर्वकंनगीअगमत्रप्रक्रम्यते, .... ....

---

कजिज्ञासानुपपत्ते जिज्ञासापूर्वकमित्यादिना वक्ष्यमाणायाः प्रदर्शनार्थ-
विचारफलकत्वोक्तिः । व्याघातस्फोरणार्थं तदभिमतार्थान्तराण्यप्यनुवद
ति ( अनुदितेत्यादिना ) ब्रह्मशब्दनिर्दिष्टस्य विचारविषयत्व मनुदिता
नस्तमितस्वरूपैक प्रकाशत्वादिकञ्चाहुरित्यर्थः । चकारेणविचार्यत्व-
स्यानुदितानस्तमित स्वरूपैकप्रकाशत्वादेश्च विरोधस्सूच्यते । विचित्रो
विविधः । व्याघातश्चोत्तरत्रानुसन्धेयः । अनुदितेत्यादिपदचतुष्टयेन स्वा
त्मैकभासस्येत्यादि श्लोकगतपदचतुष्टयं क्रमाद्विवृतम् । “अनुदितानस्त
मिते” ति स्वात्मेतिप्रतिपन्नातत्वाक्षिप्तार्थउक्त. । स्वरूपैकप्रकाशमित्यने
नसूचितंव्याघातं दर्शयति ( यद्धीति ) ( सामान्यतइति ) इदञ्चप्राथि-
काभिप्रायम् । शब्दत्वादिनाज्ञाते गुणत्वद्रव्यत्वादि सामान्याकार जि
ज्ञासादर्शनात् ततश्च केनचिदाकारेणज्ञाते केनचिदाकारेणाज्ञाते जिज्ञा
सेत्येवविवक्षितम्,अतएववक्ष्यति‘ विदिताविदिताकारभेदोदुस्त्यज” इति.
( अन्यथेति ) सामान्यविशेषवेदनयोरभावे । सामान्यविशेषवेदनयोर्जिज्ञा
साहेतुफलभावस्य लोकसिद्धत्वादितिभावः. ( तदयोगादिति ) जिज्ञा
सायोगादित्यर्थः । तथाविधवेदनद्वयविषयत्वाभावेपि वृत्तिद्वयविषयत्वं-
सम्भवत्येवेत्यत्राह ( नचेति ) अन्यत्र वेदनद्वयविषयएव जिज्ञासादर्शना
द्वृत्तेश्चा वेदनत्वादितिभाव. । एवं कर्मत्वाभावे सामान्यविशेषवेदनयोर-
भावेन हेतुफलयोरभावा जिज्ञासानुपपन्नेत्युक्तं । इदानीं दृश्यत्वादिप्रस
ङ्गेनप्रमाणविषयत्वानुपपत्त्या विचारासम्भवेन जिज्ञासानुपपत्तिमाह -
( जिज्ञासापूर्वकमिति ) दृश्यत्वेत्यनेन अनुदितानस्तमित स्वरूपैकप्रका
शमित्यत्र एकपदलब्धापादितकर्मत्वेन व्याघात. प्रदर्शितः । मिथ्यात्वेत्य
नेन ज्ञाननिवर्त्यत्वपरेण अनस्तमितपदोक्तानिवर्त्यत्वेन व्याघातःप्रकाशि
तः । जडत्वेत्यनेनास्वप्रकाशत्वपरेण स्वरूपप्रकाशमित्यनेन व्याघातो-

तच्च तत्रप्रमाणोपक्षेपेण । प्रमाणञ्च निर्विषयं न निरूप्यं। सवियत्वे तु तद्विषयत्वाद्दृश्यत्वमिथ्यात्वजडत्वादिस्वोक्तानिष्टापत्तिः । स्वरूपप्रकाशएवहेतुः फलञ्चजिज्ञासायाइतिचेन्न; तस्यास्तदुभयसामानाधिकरण्यनियमदृष्टेः । स्वरूपप्रकाशस्यच तदेकाधारताभावात् । अनादेः प्रकाशस्यचनिरपेक्षहेतुत्वे जिज्ञासानादित्वप्रसक्तेः ।.... ....

---

दर्शितः। आदिपदेन प्रकाशानात्मकत्वंगृह्यते, तेनस्वरूपैकप्रकाशमित्यत्र प्रकाशत्वेन व्याघातः प्रदर्शितः। विचारानुपपत्तिपक्षेतु अस्तु जिज्ञासानुपपत्तिः विचारानुपपत्तौ किमायातमित्यत्राह (जिज्ञासापूर्वकमिति) तथाच जिज्ञासायाअसम्भवे तत्साध्यविचारो नोपपद्यतइतिभावः। विचारानुपपत्तौ हेत्वन्तरमाह (तच्चेति) मानूद्ब्रह्मणोवित्तिकर्मत्वम्माच सामान्यविशेषवेदनद्वयविषयत्वं, तथापि स्वरूपप्रकाशस्यैव स्वगतसामान्यविशेषविषयत्वेन हेतुफलभावाज्जिज्ञासोपपद्यतइति पूर्वोक्तन्यायातपरिहारंशङ्कते (स्वरूपेति) ज्ञानमात्रस्यैव हेतुत्वंफलत्वञ्च, नतुसामान्यविशेषज्ञानयोर्गौरवादित्येव काराभिप्रायः. (नेति) अन्यथा यज्ञदत्तीयसामान्यज्ञाना द्देवदत्तीयविशेषज्ञानफलक जिज्ञासाया विष्णुमित्रेजननापत्तिरितिभावः। यद्यपि हेतुभूतज्ञानस्य जिज्ञासासामानाधिकरण्य - नियमोनास्ति अहमितिस्वप्रकाशादेव नित्यत्वादिजिज्ञासादर्शनात्, अथापि अहमितिप्रतीतिरन्तःकरणाकारवृत्तिरिति यन्मतं तदनुसारेण तदुभयेत्युक्तं। स्वभिन्नविषयजिज्ञासाभिप्रायेणवा तदुक्तम्। हेतुफलत्वयोस्सामान्यतो दूषणमुक्त्वा प्रातिस्विकन्दूषणमाह (अनादेःप्रकाशस्येत्यादिना अनादित्वभङ्गादित्यन्तेन) किंस्वरूपप्रकाशो निरपेक्षएवहेतुरुतागन्तुक सहकारिणमपेक्ष्येति विकल्पमभिप्रेत्य प्रथमेदूषणमाह (अनादेरिति) अत्रजिज्ञासायदि निरपेक्षा अनादि प्रकाशजन्यास्यादनादिस्स्यादित्यापादनं विवक्षितम्, तेन नापाद्यापादकयोर्वैयधिकरण्यम्। ननुजन्यत्वानादित्वयो विरुद्धत्वेनव्याप्त्यभावात् कथमापाद्यापादकभावः, नच प्रवाहानादित्वमापाद्यम्, क्रमिकोत्पत्तौहिप्रवाहः, निरपेक्षजन्यत्वेच विळम्बहेतोरभावेन एकव्यक्त्युत्पत्तिकालएवयावद्व्यक्त्युत्पत्तेरावश्यकत्वेन प्रवाहस्यैवासिद्धेः। नच निरपेक्षजन्यत्ववादिनो धारावाहिकस्थले पूर्वज्ञानस्यैव उत्तरज्ञानम्प्रतिपूर्वजिज्ञासाया उत्तरहेतुत्वं व

सापेक्षत्वेयथादर्शनम् स्वविषयवेदनापेक्षणात्। .... ....

---

वक्तुंशक्यमितिचेन्न, जिज्ञासा यदि प्रकाशानन्तरभाविनिरपेक्षप्रकाशज-
न्यास्यात्तर्हि प्रकाशसमवधानक्षणोत्तरक्षणवर्ति प्रागभावप्रतियोगिनीस्या
त्, योयदनन्तरभावि निरपेक्षयज्जन्यः सतत्समवधान क्षणोत्तरक्षणव-
र्ति प्रागभावप्रतियोगी नभवतीतिव्याप्तेरिति तात्पर्यात्। तस्यचप्रकाश
स्यानादित्वात् तत्समवधानक्षणोत्तरक्षणवर्ति प्रागभावप्रतियोगित्वाभावे
अनादित्वंपर्यवस्यती त्यभिप्रायेणानादेः प्रकाशस्येत्युक्तम्। प्रकाशोयदि
जिज्ञासासामग्रीत्व पर्याप्त्यधिकरणंस्यात् स्वाधिकरणक्षणान्यूनसङ्ख्याक-
जिज्ञासाधिकरण क्षणकःस्यात्, जिज्ञासाप्रागभावाधिकरण क्षणपूर्वक्षण
वर्तीनस्यात्, जिज्ञासाप्रागभावाधिकरण क्षणद्वयवर्तीनस्यात्, यद्यत्सा
मग्रीत्वपर्याप्त्यधिकरणं तत्स्वाधिकरणक्षणान्यून सङ्ख्याकतदधिकरण-
क्षणकं, तत्प्रागभावाधिकरण क्षणपूर्वक्षणवर्तिनभवति, तत्प्रागभावाधिकर
णक्षणद्वयवर्ति नभवतीतिच व्याप्तेरितिचाततात्पर्यं। अत्रच द्वितीयाद्य-
स्तर्काः प्रतिबन्धकाभाव कारणत्वमतेन। अनादिपदस्य पूर्ववदेवप्रयो
जनम्, तथाच निरपेक्षस्यप्रकाशस्यानादेः कारणत्वमेव नस्यादितिभा
वः। यद्वा प्रकाशोत्तरजन्य जन्यत्वाभावे अनादित्वंस्यादिति विवक्षितं,
तत्कुतइत्यपेक्षायामुक्तं (अनादेरिति) ततश्चानाद्युत्तरजन्य जन्यत्वाभावे
अनादित्वमितिव्याप्ते रात्मादौदृष्टत्वेन अनादिप्रकाशोत्तरभावि (जन्य)
जन्यत्वाभावे अनादित्वंस्यादिति। नचजन्यत्वाभावस्यैव व्याप्यत्वेशेष-
वैयर्थ्यम्, अखण्डाभावे तदभावात्। यद्वाजन्यत्वाभावे प्रयोजकोजन्य
जन्यत्वाभावः, तच्चानाद्युत्तरजन्य जन्यत्वाभावइतिभावः। यद्वानिरपेक्षा-
नादिजन्यत्वोक्तिर्जिज्ञासाया अनादित्वेपर्यवस्यति, यस्मिन्कालेकार्योत्प-
त्तिरभिमता ततःप्रागपिकार्यंस्यात् कालयोर्विशेषाभावात्। एवंपूर्वपूर्वका
लेपीत्यापादिते निरपेक्षानादिजन्यत्ववादिना पूर्वकारणाभावोनवक्तुंश-
क्यइति अस्यापादनस्यानुद्धारादित्यर्थः। एवंचानादित्वेसिद्धेजन्यत्वमेव-
नसंभवतीतितात्पर्यं. (यथादर्शनमिति)जिज्ञासायास्समानविषयधर्मिज्ञान-
जन्यत्वस्य लोकेदर्शनादितिभावः। ननु यद्यपिधर्मिविषयज्ञानं लोकेदृ-
श्यते तथापितस्य धर्मिविषयज्ञानत्वेन नहेतुत्वं किन्तुधर्मिज्ञानत्वमात्रेण
लाघवात्, तथाचस्वरूपप्रकाशएव हेतुः, नचानादित्वप्रसक्तिः सापे-

प्रागसिद्धस्य तुच्छत्वकार्यत्वयोरन्यतरप्रसङ्गात् प्राक्सिद्धस्यफलत्वा - योगात् । फलत्वेचानादित्वभङ्गात् । उपहितरूपेणवेदनद्वय- विषयत्वाज्जिज्ञासास्यादितिचेन्न; हेतोरुपहितविषयत्वाभ्युपगमेऽपिफल - स्यतथात्वेभ्रान्तित्वापातात्. भ्रान्तेश्चासंपाद्यत्वान्नतदर्थंप्रेक्षावतांप्रारंभः । भ्रान्तिमेवप्रमितिंमन्यमानैस्सासंपाद्येतिचेन्न; परीक्षकेभ्योऽपिप्राथमिकभ्रा- न्तिप्रमात्वव्यवसायिनामेवप्रागल्भ्यप्रसङ्गात् । स्वरूपव्यतिरिक्तंकृत्स्नंमिथ्ये ति प्रयोजकशिक्षणविरोधाच्च -

---

क्षस्यैवतस्यजिज्ञासाहेतुत्वात , अपेक्षणीयश्चसंशयएवेतिचेन्न, स्वरूपप्र काशेनैवतस्यज्ञातत्वेन संशयस्यैवानुपपत्तेः। फलत्वेदूषणमाह ( प्राग- सिद्धस्येत्यादि ) प्रागसिद्धस्योत्तरकालमसत्त्वेतुच्छत्वं सत्त्वेकार्यत्वमिति भावः। प्राक्सिद्धत्वपक्षे सिद्धत्वफलत्वयोः परस्परव्याघातमाह ( प्रा- क्सिद्धस्येत्यादिना ) अनादिपदंप्राक्सिद्धपरम् । यद्वा स्वरूपप्रकाशस्य फ लत्वेदूषणमाह ( फलत्वइति ) अनादित्वभङ्गाच्चेत्यन्वयः । एतेनानुदित पदसूचितव्याघातोदर्शितः । एवंस्वरूपप्रकाशस्यैव हेतुफलभावासम्भ वेऽन्वयव्यतिरेकाभ्यां जिज्ञासासमानाधिकरणयो स्सामान्यविशेषज्ञान योर्हेतुत्वंफलत्वञ्चेतिस्थितम् , तत्रशङ्कते ( उपहितरूपेणेति ) अविद्योपहि- तरूपेण. ( वेदनद्वयेति ) मुमुक्षूपास्यत्वेन सामान्यवेदनं, जगत्कारणत्वा दिनाविशेषवेदनम् , ( नेति ) निर्विशेषस्य जिज्ञास्यत्वभङ्गापत्तेरितिभावः. ( अभ्युपगमेपीति ) फलस्यानुपहितविषयत्वावश्यम्भावात् सामान्यविशे- षवेदनयोस्समानविषयत्व नियमाच्च हेतोरप्यनुपहितविषयत्वमेव वक्त- व्यम्. धर्म्यैक्यमात्रेण समानविषयत्वाद्धेतोः उपहितविषयत्वाभ्युपगमे पीत्यर्थः. ( भ्रान्तेश्चासम्पाद्य त्वादिति ) तत्वज्ञानसाध्यत्वान्मोक्षस्येतिभा वः। परीक्षकाः-विचारशास्त्राधिकारिणः। प्राथमिकभ्रान्तिः-प्रपञ्चभ्रमः। ( प्रागल्भ्यप्रसङ्गादिति ) निरर्थकायासवैधुर्यादविकृ भ्रान्त्यसम्पादनाच्चेति भावः. ( स्वरूपेति ) प्रमात्वबुद्ध्याविचारप्रवृत्तावपि विचारदशायामेव कृत्स्नमिथ्यात्वस्य शिक्षितत्वेन तत्रप्रमात्वबुद्धिनिवृत्ते स्तदुत्पादनार्थमन ननिदिध्यासनादौ प्रवृत्तिर्नस्यादितिभावः । यद्वा त्वन्मते नित्यानित्यव- स्तुविवेकदशायामेव ब्रह्मातिरिक्तमिथ्यात्वज्ञानस्य जातत्वात् श्रवणादौ-

नित्यभूतेऽपिसमाविवत् स्वमात्रसाक्षित्ववैराग्यमात्रवासाध्यमितिचेन्न, तयो रपितत्स्वरूपत्वेसिद्धत्वात् । धर्मत्वेसत्यत्वमिथ्यात्वविकल्पक्षोभात् ।

---

प्रवृत्तिनस्यादितिभावः । स्वरूपस्यैवफलत्वे प्राक्सिद्धस्य फलत्वायोगा- दितियद्दूषणमुक्तं तत्रपरिहारंशङ्कते ( नित्येति ) ज्ञानस्यसिद्धत्वेपि तद्रू- पावच्छिन्नस्यासिद्धत्वा जिज्ञासासम्भवत्येवेतिभावः । प्राप्ताप्राप्तविवेके नधर्मस्यैवेच्छा, साचनजिज्ञासा , समाधौतुताद्दशज्ञानस्यासिद्धत्वा जि ज्ञासेत्यभिप्रेत्याह ( नेति ) ( सत्यत्वेति ) धर्मस्य सत्यत्वेअद्वैतहानिः ; मि थ्यात्वेतदर्थप्रेक्षावत्प्रवृत्त्यनुपपत्तिः , नहिमिथ्यावस्त्वसहमानोमुमुक्षुर्मि- थ्योत्पादनाय प्रवर्तेत । नचवैराग्यादेरविद्यानिवर्तकत्वा त्प्रवृ- त्युपपत्तिः , तस्यजडत्वेनानिवर्तकत्वात् । ज्ञानमेवाज्ञाननिवर्तकमि तिहियुष्माकमुद्घोषः । तन्मात्रविषयकज्ञानमेव निवर्तकं नतुधर्मइतिचेत्त- र्हि तस्यज्ञानस्यानादित्वादनादि निवृत्त्यापत्तिः । स्वमात्रसाक्षिज्ञानं पूर्व नास्त्येव सर्वसाक्षित्वादितिचेत्, हन्तकिमिदानीं ताद्दशज्ञानमुत्पद्यते । स्व मात्रसाक्षित्वमुत्पद्यतइतिचेत् , तर्हितदेवाविद्यानि वर्तकमितिपर्यवसित म् । ननुस्वमात्रसाक्षित्वमविद्या निवर्तकतावच्छेदकमितिचेत्? शुक्त्या दिज्ञानस्याधिष्ठानातिरिक्त विषयस्यापि निवर्तकत्वदर्शनेन अधिष्ठानमा त्रविषयत्वस्य निवर्तकतानवच्छेदकत्वात् । अधिष्ठानतत्वज्ञानत्वेन निवर्त कत्वेवाच्ये प्रकृतेचाधिष्ठानतत्वज्ञानस्यानादित्वेनाध्यासएवनस्यात् । न नुतत्वसाक्षात्कारमात्रं ननिवर्तकं, तीरस्थवृक्षादावूर्ध्वाग्रत्व साक्षात्कारेवि द्यमानेपि जलेअधोग्रत्वभ्रमात् । तथाचारोप्याविषयकाधिष्ठान तत्वसा - क्षात्कारत्वमेव निवर्तकतावच्छेदकमितिचेन्न, तत्रोर्ध्वाग्रत्वतत्वज्ञानानिवर्त्य- त्वादधोग्रत्वभ्रमस्य, उपाधिनिवृत्त्यैवतन्निवृत्तेः, अन्यथापूर्वमूर्ध्वाग्रत्वमा त्रसाक्षात्कारसम्भवेन तदनन्तरमधोग्रत्व भ्रमाभावप्रसङ्गात् , विशेषाद र्शनजभ्रमस्यैव तत्वज्ञाननिवर्त्यत्वात् । किञ्चारोप्याविषयकाधिष्ठानसाक्षा त्कारत्वमात्रं निवर्तकतावच्छेदक? उतारोप्याविषयकाधिष्ठान तत्वसाक्षा- त्कारत्वं? नाद्यः, इदमितिधर्मिज्ञानानन्तरं रजतभ्रमानुदयप्रसङ्गात् । द्वि तीयेकिमधिष्ठानतत्वन्नाम? किमधिष्ठानस्वरूपमेव , उतारोप्यविरोध्याका

अतिरिक्ताकारप्रकाशएवचेद्वैशद्यं, तस्मिन्नप्याकारेसएवविकल्पः -नित्यस्व-
साक्षिणिनिरंशेनिर्विशेषेचकः इदानीम्प्रकाश्यआकारः-कथंचजिज्ञासा । इदं
किमितिवाकथमितिवासास्यात् , सर्वत्रयथायथंविदिताविदिताकारभेदोदु
स्त्यजः, कृत्स्नावग त्यनवगत्योर्नैष्फल्यानिर्हेतुकत्वाभ्यांतदयोगात्

---

रः? नाद्यः उक्तदोषादेव । नद्वितीयः निर्धर्मकेब्रह्मणिविरोध्याकाराभावात्.
ननुस्वरूपमेव ब्रह्मणिविरोध्याकारइतिचेत् । किंविरोधित्वंवैयधिकरण्यं-
तदभावरूपत्वंवा? नाद्यः ब्रह्मणोनिरधिकरणत्वेना विरोधितापत्तेः । नद्वि
तीयः शुक्तित्वादेरविरोधितापत्तेः । ननुतत्राप्यधिष्ठानस्वरूपारोप्याभावए
वविरोधीतिचेत? तर्हीदन्त्वेनाधिष्ठानज्ञानेसति अध्यासाभावप्रसङ्गात् । कि
ञ्च स्वमात्रसाक्षित्वंहीतरासाक्षित्वेसति स्वसाक्षित्वं, तथाचेतरेषामभास
मानतया प्रपञ्चएवनस्यात् , प्रतिभासमानसत्ताकत्वान्मिथ्यापदार्थस्य ।
ननुयुगपदेव सर्वमुक्तेस्तद्दशायां प्रपञ्चाभावइष्टइतिचेन्न , इतराविषयत्व -
स्यापिमिथ्यात्वेन तद्भानावश्यकतया इतराविषयत्वस्यैव व्याघातात् ।
इतराविषयत्वोत्पत्तिकालएवाविद्यादेर्निवृत्ततया विचारसाध्यज्ञानस्य वैयर्थ्य
प्रसङ्गाच्च । वैशद्यपक्षे दूषणान्तरमाह ( अतिरिक्तेति ) अत्रातिरिक्तपदंज्ञा
तातिरिक्तपरम् । ब्रह्मणः स्वतोपरोक्षतया प्रत्यक्षस्य तत्समानाकारत्व
स्यच साध्यत्वायोगादितिभावः ( सएवेति ) स्वरूपधर्मविकल्पएवेत्यर्थः ।
स्वरूपपक्षे किङ्कालविशेषेज्ञानाभावेन ज्ञातातिरिक्तता उतांशभेदेनेतिवि
कल्पमभिप्रेत्य प्रथमपक्षेदूषणमाह ( नित्येति ) द्वितीयेदूषणमाह ( निरं
शइति ) धर्मपक्षेदोषमाह ( निर्विशेषइति ) मिथ्याभूतविशेषपक्षस्तु " फ
लस्यतथात्वेभ्रान्तित्वापातादि " त्यनेननिरस्तइतिभावः । एवमियताग्रन्थे
न अनुदितानस्तमितस्वरूपैक प्रकाशमित्यनेन सूचितव्याघातोदर्शितः ।
अथस्वमात्रसाक्षित्वस्य वैशद्यस्यवासाध्यत्वेपि जिज्ञासानोपपद्यतइत्युपपा-
दयन्नशेषशून्यमित्यनेन सूचितंव्याघातंदर्शयति ( कथञ्चेत्यादिना ) जि-
ज्ञासाहीदंकिमित्याकारावा कथमित्याकारावाभवति; एतदाकारप्रश्नयो
र्यविषयाभवतीत्यर्थः . ( सर्वत्रेति ) प्रश्नद्वयविषयेपीत्यर्थः । विदितावि-
दिताकारभेदाभावेपि इदंकिमित्यादिप्रश्नोस्त्वित्यत्राह ( कृत्स्नेति ) कृत्स्ना
वगतौज्ञातव्यांशाभावेन नैष्फल्यात्प्रश्नोनोपपद्यते । कृत्स्नानवगतौहेत्व
भावेन धर्मिनिर्देशोनुपपन्नः । ( तदयोगादिति ) इदंकिमित्यादिप्रश्नस्यायो-

गात । एवं कृत्स्नावगायनवगम्यो ऽप्येकस्यनिर्हेतुकत्वप्रसङ्गेन इदंकिमित्या
दिप्रश्नस्थले विदिताकारभेदआवश्यके तादृशप्रश्नप्रयोजक जिज्ञासायाअ
पितन्नैयत्यात् स्वमात्रसाक्षित्वस्य वैशद्यस्यवासाध्यत्वेपि नतन्मात्रेणजि
ज्ञासोपपत्तिरितिस्थितं । जिज्ञासासमर्थनार्थमतत्रयमाहनवीन । सत्वविशि-
ष्टज्ञानंहेतु , अखण्डविषयज्ञानं फलं, तद्विषयेच्छा जिज्ञासेत्येकं । प्रति-
बद्धःप्रथमोत्पन्नोऽद्वैतसाक्षात्कारएवहेतुः. अप्रतिबद्धज्ञानंफलं, तदिच्छाजि-
ज्ञासेत्यपर । प्राथमिकज्ञानमनवधारणत्वादविद्याया अनिवर्तकं तदेवच-
हेतुः, अवधारणरूपश्चरमसाक्षात्कार फलं, तदिच्छैवजिज्ञासेतिचापरं
तत्राद्यमुत्तरत्रनिरसिष्यते । इतरमतद्वयमनेननिरस्यते । तथाहि– वेदान्त-
वाक्यादद्वैतसाक्षात्कारएव प्रथममुत्पद्यते । तच्चापातरूपम् । आपातत्वञ्च-
प्रतिबद्धफलत्वम् । प्रतिबन्धश्चानादिप्रवृत्त दृढतरभेदवासनाभ्यएव ।
ताश्च श्रवणमननादिभिः क्षीयन्ते, ततोवाक्यादुत्पन्नात्मसाक्षा,-
त्कारादविद्यानिवर्तते । अतोप्रतिबद्धापरोक्षज्ञानेच्छासंभवति, सै-
वजिज्ञासेतियन्मतं , तत्तावदनुपपन्नं — विदिताविदिताकारभेदाभा-
वात्प्रश्नानुपपत्ते स्तत्प्रयोजकजिज्ञासानुपपत्तेः । ब्रह्मजिज्ञासायाःप्रश्नप्रयो-
जकत्वञ्च " अधीहिभगवोब्रह्म " "किंभगवन्तःपरमंवदन्ति" " सोहंम-
न्त्रविदेवास्मिनात्मविद्ब्रह्मानभगवोविजिज्ञासे " इत्यादिभिरवगम्यते । ननु
अद्वैतस्यप्रथमतोदर्शनेपि द्वैतवाक्यदर्शनात्सन्देहेसति जिज्ञासोपपद्यत-
इतिचेन्न, द्वैतवाक्यदर्शनेपि धर्मिनिश्चयस्यनिष्प्रत्यूहत्वात् । अद्वैतानन्द-
त्वादिश्चतद्भिन्नत्वात्सन्देहोनोपपद्यते । नचाद्वैतादेर्निश्चयेप्यद्वैतत्वादिप्रका
रकनिश्चयाभावात्सन्देहोपपत्तिः, तस्यविचारानन्तरमप्यभावेनसन्देहानिवृ-
त्तिप्रसङ्गात् , निष्प्रकारकज्ञानस्यैवविचारजन्यत्वाङ्गीकारात् । नचाप्रति.
बद्धेन विचारानन्तरभाविज्ञानेनाज्ञाननिवृत्तेरेव संशयनिवृत्तिरितिवाच्यं । सं
शयविरोधिज्ञानस्यैवाज्ञाननिवर्तकत्वात् । संशयनिवृत्त्यनुकूलस्वरूपविशे
षवतएव त्वयानिश्चयत्वोक्ते । नचनिश्चयेसत्यपि प्राथमिकज्ञानेनप्रतिबंधा
दज्ञानानिवृत्तेः संशयसंभवइतिवाच्यं, अज्ञानानिवृत्तावपि श्वैत्यानुमि;
त्या शङ्खपीतत्वभ्रमदशायां श्वैत्यसंशयनिवृत्तिदर्शनात् । विपरीतभ्रम
रूपनिश्चयेनापि संशयनिवृत्तिदर्शनाच्च । नचाद्वैतं स्वरूपाद्भिन्नमेवेतितत्को
टिकसंशयोपपत्तिः तस्यद्वैतकोट्यन्तर्भावेनकोट्यन्तरत्वानुपपत्ते । किञ्च स
त्योअद्वैतइति । निष्प्रत्यूहप्रतियोगिसमानसत्ताकस्यप्रतियोगिकालेप्रति

योग्याश्रयेब्रह्मण्यसंभवः । किञ्चब्रह्मणिजगत्कारणत्वादिद्वैतनिश्चयादेवनद्वै-
तकोटिकसन्देहः । नचपारमार्थिकद्वितीयवस्त्वादिनासन्देहः । कोट्यप्रसिद्धेः
प्रपञ्चेसत्यत्वमिथ्यात्वकोटिकसन्देहेपि नब्रह्मजिज्ञासायाइदंकिमित्यादिप्र-
श्नस्यच ब्रह्मण्युपपत्तिः, तस्यब्रह्मविषयकसन्देहाभावात् । तदेतत्सर्वम.
भिप्रेत्योक्तं - कथञ्चजिज्ञासेत्यादि ।

किञ्च प्राथमिकाद्वैतसाक्षात्कारादेवाविद्यानिवृत्तौकुतस्सन्देहः .
ननुभेदवासनयाप्रतिबन्धान्नप्राथमिकसाक्षात्कारादविद्यानिवृत्तिरितिचेन्न ,
ज्ञानस्याज्ञाननिवर्तकत्वेहि ज्ञानेनाज्ञानंनिवृत्तमित्यनुभवोमानं । ततश्चवेदा-
न्तवाक्याद्ब्रह्मज्ञानेजाते ब्रह्मज्ञानेनब्रह्माज्ञानंनिवृत्तमित्यनुभवस्य दुरपह्नव-
त्वेन प्राथमिकब्रह्मज्ञानस्यप्रतिबन्धासंभवात् । प्राथमिकब्रह्मज्ञानमात्रात्सं-
सारनिवृत्तेरदर्शनेन तदनुवृत्तये तदुपादानाज्ञानानुवृत्ति राश्रयणीयेति-
चेत्, त्यज तर्हि संसारस्याज्ञानोपादानत्वं । यच्च तत्वज्ञानस्यप्रतिबंधा-
दज्ञानानिवर्तकत्वेनिदर्शनं विशेषदर्शनं प्रतिबन्धात्प्रतिबिंबभ्रमंनिवर्तय-
तीति, तन्न, तत्रविशेषदर्शनस्यतन्निवर्तनायोग्यत्वात् । ननुविशेषदर्शन-
विषयविरुद्धविषयभ्रमत्वमेवनिवर्त्यतावच्छेदकं, विशेषादर्शनजन्यभ्रमत्वा-
पेक्षयालघुत्वात् . विरोधस्यनियमघटितत्वेपि जन्यत्वस्यानन्यथासिद्ध-
त्वादिघटितत्वेन ततोपिगुरुत्वादितिचेन्न, चंद्रप्रादेशिकत्वदूरस्थपर्वता-
ल्पपरिमाणादिभ्रमेव्यभिचारात् . तद्भ्रमस्यसोपाधिकत्वाभावेनोपाधिरूप-
प्रतिबन्धकाभावात् । नन्ववच्छेदकलाघवानुसारेण तत्रापिदूरस्थत्वा-
देःप्रतिबन्धकत्वंकल्प्यतइतिचेत्तन्न, विशेषदर्शनमन्तरेणोपाधिनिवृत्त्याव्या-
सङ्गादिनावानिवृत्तिस्थलेव्यभिचारेण तस्यतदवच्छेदेन निवर्तकत्वाभावात्
नचोपाधिनिवृत्त्याद्यनिवर्त्यत्वेनविशेषणान्नव्यभिचारइतिवाच्यं, उपाधि-
निवृत्त्याद्यनिवर्त्यसोपाधिकभ्रमस्याप्रसत्त्वेन तदर्थं प्रतिबन्धककल्पनावैय
र्थ्यात् . किञ्च उपाधिनिवृत्त्येत्यादिना उपाधिनिवृत्त्यनिवर्त्यत्वव्यासङ्गानि-
वर्त्यत्वादिकंहिविवक्षितं, तत्रचोपाधिनिवृत्त्यानिवर्त्यत्वस्थानेविशेषादर्शन
जन्यत्वमेवनिवेश्यतां लाघवात् , उपाधिनिवृत्त्यनिवर्त्यत्वस्य उपाधिनि-
वृत्तिजन्यनिवृत्तिप्रतियोगित्वाभावात्मकतया निवृत्तिप्रतियोगित्वाभाव-
प्रवेशेन गौरवात् । किञ्चैवं विशेषदर्शनविषयविरुद्धविषयभ्रमत्वमिति
विशेष्यभागोपिनवक्तव्यइतिलाघवं । ननुच पक्षद्वयेपिव्यासङ्गादि तत्तद-
नेकानिवर्त्यत्वविशेषणेगौरवात् विशेषादर्शनासमवहितसामग्र्यनिवर्त्यत्व-

मेवविशेषणं । ततश्च पूर्वोक्तलाघवं स्थितमेव । नचैवमपि प्रतिबन्धककल्पनावैयर्थ्यं, सोपाधिकभ्रमस्योपाधिनिवृत्तिनिवर्त्यत्वादितिवाच्यं, यत्रविशेषदर्शनसमकालोत्पत्तिकोपाधिनिवृत्त्याभ्रमनिवृत्तिः तत्र विशेषदर्शनासमवहितसामग्र्यनिवर्त्यभ्रमत्वस्यसत्त्वेन उपाधिकालीनविशेषदर्शनादनिवृत्त्यर्थंप्रतिबन्धकल्पनात् । नचविशेषदर्शनस्य विद्यमानस्याग्रिमभ्रमनिवर्तकत्वे विप्रतिपत्ते स्तदसमवहितसामग्र्यनिवर्त्यत्वानिश्चयान्न प्रतिबन्धकल्पनेतिवाच्यं, विशेषदर्शनासमवहितत्वेन विशेषदर्शनासमानकालीनत्वस्यविवक्षितत्वादितिचेन्न, विशेषदर्शनकालीनविशेषादर्शनजभ्रमत्वस्यैव विशेषदर्शनासमवहितसामग्र्यनिवर्त्यविशेषदर्शन विषयविरुद्धविषयभ्रमत्वापेक्षायालघुत्वेनावच्छेदकत्वात् । ननु तर्हि विशेषदर्शनकालीनविशेषदर्शन विषयविरुद्धविषयभ्रमत्वमेवावच्छेदकमस्तुलाघवादितिचेन्न, विशेषदर्शनोत्तरकालोत्पन्नसोपाधिकभ्रमस्य विशेषदर्शनंविनाप्युपाधिनिवृत्त्यैवनिवृत्तिदर्शनेन व्यभिचारेण तस्यानवच्छेदकत्वात्तदर्थमुपाधिनिवृत्त्यनिवर्त्यत्वेनवा विशेषदर्शनासमानकालीन सामग्र्यानिवर्त्यत्वेनवा विशेषणेगौरवात् । किञ्च विशेषदर्शनविषयविरुद्धविषयभ्रमत्वस्यावच्छेदकत्वे संयोगाद्यवच्छेदकमूलाद्यवच्छेदेन संयोगाभावभ्रमस्य तदवच्छेदेन संयोगवत्त्वव्याप्यदर्शनानिवर्त्यत्वापत्तेः, विशेषदर्शनविषयमूलादिगतधर्मविरोधित्वाभावाद्भ्रमविषयसंयोगाभावस्य । आमघटे रक्तभ्रमस्यच रक्तत्वाभावनिरूपितकालिकव्याप्तिमादाय यदामत्वादिविशेषदर्शनं तेनानिवर्त्यत्वापत्तिः, विशेषदर्शनविषयामत्वादिविरोधित्वाभावाद्भ्रमविषयरक्तत्वस्य । पाकानन्तरं तत्रैवरक्तत्वोत्पत्तेः । विशेषादर्शनजन्यत्वंतु तत्राप्यस्तीतिनास्मन्मतेदोषः । नचविशेषदर्शनविषयेणसहैकस्मिन्काले एकावच्छेदेन सहानवस्थायिविषयकभ्रमत्वमेवावच्छेदकमितिदोषद्वयनिस्तारः, एतद्वृक्षत्वादेर्मूलावच्छेदेन संयोगव्याप्यत्वग्रहे तद्दर्शनस्यमूलावच्छेदेन संयोगाभावभ्रमविरोधित्वात् , तत्रचैकावच्छेदेनसहानवस्थायित्वस्याप्यभावात् । घटत्वस्यचदशाविशेषे रक्तत्वाभावव्याप्यत्वग्रहे तद्दर्शनस्यतद्दशायां रक्तत्वभ्रमविरोधित्वात् , तत्रचैककाले सहानवस्थायित्वस्याप्यभावात् । किञ्च त्वन्मते स्फटिकत्वादिविशेषदर्शनेन लौहित्यभ्रमस्यप्रतिबिंबस्थलइव निवर्त्यत्वंवाच्यं, तत्रच

परंपरासंबधेन लौहित्यस्यस्फटिकेसत्त्वाद्विरोधाभावान्ननिवर्तकतास्यात् । ननूपाधिनिवृत्त्याद्यनिवर्त्यत्वादिना नविशेष्यते, किन्तु विशेषदर्शनाव्यवहितपूर्वक्षणवर्तित्वेन, अतोनगौरवं । यदप्युक्तं "विशेषदर्शनविषयविरुद्धविषयभ्रमत्वस्यावच्छेदकत्वइत्यादि " तदपिन, विशेषदर्शनविषयपदेन व्याप्यत्वेन गृह्यमाणव्यापकस्य विवक्षितत्वात् , एतद्वृक्षत्वस्यसंयोगविशेषोव्यापकः । यदपि "किञ्चत्वन्मते" इत्यादि. तदपिन भ्रमविषयसंबधेनविरोधित्वस्यविवक्षितत्वात् , भ्रमविषयसाक्षात्सम्बन्धेन लौहित्यस्यापिस्फटिकत्वादिविरुद्धत्वादितिचेत् । उच्यते , यत्रसोपाधिकभ्रम द्वितीयक्षणोत्पन्नोपाधिनिवृत्तिमात्रेण तृतीयक्षणेभ्रमनिवृत्तिः , तत्क्षणएवविशेषदर्शनंचोत्पद्यते तद्भ्रमेउक्तनिवर्त्यतावच्छेदकस्य सत्त्वेनव्यभिचारात् , तदर्थंविशेषदर्शनाव्यवहित पूर्वक्षणोत्पत्तिकत्वंवक्तव्यम् , उत्पत्तिश्चस्वसमानकालीनपदार्थ प्रतियोगिकध्वंसानाधारसमय सम्बधः । अव्यवहितत्वंचविविशेषदर्शनानधिकरण क्षणानन्तरितत्वम् । पूर्वक्षणश्चप्रागभावावच्छिन्नक्षणः । व्यापकत्वंच प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्न स्वसमानाधिकरणात्यन्ताभावा प्रतियोगित्वम् । तथाचविशेषदर्शन क्षणाव्यवहितपूर्वक्षणोत्पत्तिकत्वे सति विशेष ( दर्शनविषय ) व्यापकेनसहैकस्मिन्कालएकावच्छेदेन भ्रमविषयसम्बन्धेन सहानवस्थायिविषयकभ्रमत्वापेक्षया विशेषदर्शनकालीन विशेषादर्शनजन्यभ्रमत्वस्यैव लघुत्वेनावच्छेदकत्वात् । किंचविशेषदर्शनंविना ह्युपाधिनिवृत्त्या निवृत्तिदर्शनेन सोपाधिकभ्रमत्वावच्छेदे नोपाधिनिवृत्तेर्निवर्तकत्वकल्पनात् तदभावादेवभ्रमानिवृत्त्युपपत्तौ नतत्रप्रतिबन्धकल्पना । नचव्यासङ्गादिनापिसोपाधिकभ्रमनिवृत्तेर्व्यभिचारः, व्यासङ्गाद्यजन्यत्वेन विशेषणात् । किंचविशेषदर्शनस्यप्रतिबिम्बभ्रम निवर्तकत्वे श्वैत्यानुमितेरपि शङ्खपीतत्वभ्रमनिवर्तकत्वापत्तिः । नचततस्तन्निवृत्त्य दर्शनादेवानिवर्तकत्वं, लाघवाद्विशेषदर्शनविषयविरुद्धविषय भ्रमत्वेननिवर्त्यत्वकल्पनात् तदनुसारेणप्रतिबिम्बस्थलइवात्रापि विशेषसाक्षात्कारत्वापेक्षया विशेषज्ञानत्वेन निवर्तकत्वकल्पनेलाघवात् तदनुसारेण प्रतिबन्धककल्पनोपपत्तेः । नचेष्टापत्तिः, प्रपंचभ्रमनिवृत्त्यर्थं शाब्दापरोक्षाङ्गीकार विरोधात् । नचापरोक्षेब्रह्मणिपरोक्षज्ञानासम्भवा च्छाब्दज्ञानस्यापरोक्षत्वाङ्गीकारः अपरोक्षेपिवह्नौसिषाधयिषयानुमितिदर्शनात् । विस्तरस्तु शाब्दजन्यापरोक्षभङ्गे द्रष्टव्यः । तस्माद्विशेषदर्शनकालीन विशेषादर्शनजन्य भ्रमत्वमेवावच्छेदकं ।

ननुनूलावच्छेदेन संयोगभ्रमे अग्रावच्छेदेन तदभावव्याप्यदर्शने तद्भ्रम निवृत्त्यापत्तिरितिचेन्न, स्वाभावजन्यभ्रमंप्रति विशेषदर्शनस्यनिवर्तकत्वा त् । नचविशेषादर्शनस्य हेतुत्वेमानाभावः । विशेषादर्शनहेतुदोषाणामेव-भ्रमहेतुत्वादितिवाच्यम्, विशेषदर्शनस्य प्रतिबन्धकत्वेन तदभावस्य-कारणत्वावश्यम्भावात् । प्रतिबन्धकाभास्य कारणत्वाभावमतेऽच विशेषाद् र्शनप्रयोज्यत्वंविवक्षितम् । यत्तूक्तंविशेषादर्शनं नकारणं,स्ववृत्तिविशेषद-र्शनस्यासार्वत्रिकत्वेन तदभावस्यापि सर्वत्रभ्रमस्थलेऽसम्भवात् । परकी-यविशेषदर्शनाभावस्यापि प्रसक्तत्वादिति, तन्न, सिषाधयिषाविरहावच्छि न्नसिद्ध्यभावस्यानुमिताविव .अप्रामाण्यशङ्काशून्यविशेष दर्शनत्वावच्छि-न्नसामान्याभावस्यैव हेतुत्वात् । अप्रामाण्यशङ्काक्रान्त विशेषदर्शनेसत्यपि भ्रमानिवृत्तेः । अथवा विशेषदर्शनप्रतिबन्धक दोषजन्यत्वमेवावच्छेदक मस्तु । ननुप्रतिबन्धकत्वस्य कारणीभूताभाव प्रतियोगित्वात्मकतया कारणत्वस्पचानन्यथा सिद्ध्यादिघटितत्वेनगौरवम् । विशेषदर्शनाविष येत्यादि मदुक्तावच्छेदकन्तु लघ्वितिचेन्न । प्रकृतेकारणत्वस्य नियत-पूर्ववर्तित्वस्य विवक्षितत्वात् । कार्यानुत्पादव्याप्यत्वंवा प्रतिबन्धकत्वम -त्रविवक्षितम् । तथाचोपाधिनिवृत्त्याद्यनिवर्त्यत्वादि विशिष्टत्वदुक्ताव -च्छेदकापेक्षया लाघवादिदमेवावच्छेदकमस्तु । वस्तुतस्तुपूर्वभ्रमोविशेष दर्शनेन विरोधिगुणतया निवृत्तइतिनतत्रप्रतिबन्धः । अतोविशेषदर्शनस्यो त्तरज्ञानप्रतिबन्धकत्व मुपाधेश्चोत्तेजकत्वमिति पर्यवसितम् । तथाचनेदं प्रकृतार्थनिदर्शनम् । यदप्युक्तं परेषामप्यात्मनि शरीराभेदबुद्धिर्निरुपा -धिकभ्रमएव, उपाध्यन्तराभावात् । तथाच यदितत्वज्ञानमप्रतिबन्धान्नभ्रमं निवर्तयतीतिनोच्येत तदाकथंपरेषां शास्त्रारम्भस्स्यात् । नचेश्वरसाक्षा-त्काराभावात्तत्र भ्रमोननिवर्तते नतुप्रतिबन्धादितिवाच्यम्, ईश्वरसाक्षा त्कारस्यभिन्नविषयस्य साक्षात्तदनिवर्तकत्वात् । जीवसाक्षात्कारस्त्विदा -नीमपिविद्यतएव । ईश्वरसाक्षात्कारस्याप्यलौकिकस्य इदानीमपिसत्वात् । लौकिकस्यपश्चादप्यभावात् । तस्मात्तत्रात्मज्ञानं केनचित्प्रतिबद्धं सन्नभ्रमं निवर्तयतीति वक्तव्यमित्यप्यन्मतेपि तत्तथेति । अत्रभ्रमः, स्वात्मतत्वसा-क्षात्कारोमिथ्याज्ञान प्रागभावासहवृत्ति मिथ्याज्ञाननिवृत्तिहेतुः , ईश्वर-साक्षात्कार आत्मतत्वसाक्षात्कारद्वारा मिथ्याज्ञान निवृत्त्युपयोगीत्येकन्मतं

अदृष्टद्वारात्मतत्त्वसाक्षात्कारस्य सहकारीत्यपरम्, मतद्वयेपीदानीं- विशेषदर्शनस्य सत्त्वेपि मिथ्याज्ञानप्रागभावासहवृत्ति मिथ्याज्ञानध्वंसत्वा वच्छेदेन देहादिभेदप्रकारकात्मतत्त्वसाक्षात्कारत्वावच्छिन्नस्य कारण- त्वोपगमेन तादृशसाक्षात्कारस्य श्रवणादिसाध्यस्य ततः प्रागसिद्धेः सा क्षात्परम्परयावा मिथ्याज्ञाननिवृत्तिप्रयोजकीभूतस्येश्वर साक्षात्कारस्याभा- वाच्च तादृशमिथ्याज्ञाननिवृत्त्युपपत्तौ नात्रप्रतिबन्धकापेक्षा । नचेश्वर- साक्षात्कारोऽलौकिक इदानीमप्यस्ति, लौकिकः पश्चादपिनास्तीतिवाच्य म् । श्रवणादिपर्वकर्मोत्पन्न योगजधर्मजन्यसाक्षात्कारस्य तद्धेतुत्वात्, इदा- नींचतदभावात । किंच-भेदवासनायाः कथमविद्यानिवृत्ति प्रतिबन्धकत्वं मानाभावात्, प्रहरपर्यन्तं रजतवासनानुवृत्तावपि शुक्तिज्ञानेनशुक्त्य- ज्ञाननिवृत्तिदर्शनात् । कथञ्चश्रवणादीनां भेदवासनानिरासकत्वं माना भावात्, रजतज्ञानानन्तरं बहुतरशुक्तिज्ञान सन्तानेसत्यपि शुक्ति- संस्कारानुद्बोधदशायां तद्रजतमितिभ्रमरूपस्मृति दर्शनेन ध्यानसन्तान- स्यविपरीतसंस्कारनिवर्तकत्वासिद्धेः । किञ्च किंनिदिध्यासनस्या दृष्ट द्वाराभेदवासनानिरासकत्व मुतआहत्य, नाद्यः- त्रिचतुरस्मृतिसन्तानेनैव- तत्सिद्धौ बहुकालध्यानवैयर्थ्यप्रसङ्गात्, अपसिद्धान्ताच्च । नद्वितीयः- प्राथमिकस्मृतिव्यक्त्यैव तद्विपरीतवासनानिरासे उत्तरवैयर्थ्यप्रसङ्गात । नचैकव्यक्तेरेकवासना निवर्तकत्वमेवेतिवाच्यम्, तथासत्यनादिभ्रमवा सनानामानन्त्येन कदाप्यनिवृत्त्यापत्तेः । किंचप्रतिबन्धनिरासार्थत्वे किं म्मानम्, अप्रतिबद्धज्ञानोद्देशेन श्रवणादिविधानमितिचेन्न, "द्रष्टव्य" इतिद र्शनमात्रस्यैवोद्देश्यत्वप्रतीतेः । किञ्चाप्रतिबद्धज्ञानार्थत्वं श्रवणस्य नप्रासं, नापिद्वैतवाक्यविचारादि साधनान्तरस्येति नियमविधिर्नस्यात । किञ्च अप्रतिबन्धज्ञानं फलमित्यत्र किंप्रतिबन्धकाभावविशिष्टं फलत्वेनविवक्षितम्, उत प्रतिबन्धकाभावकालीनत्व मवच्छेदकमिति, नाद्यः । सविशेषणेही तिविशेषणमात्रपर्यवसानात् । नद्वितीयः । प्रतिबन्धकाभावकालीनत्वस्य - प्रतिबन्धकाभावसामग्रीमहिम्नैवोपपत्तौ सामग्र्यन्तरानपेक्षणात् । तथा चप्रतिबन्धकाभावोद्देशेन विधाने श्रुतहानाश्रुतकल्पनाप्रसङ्गइति ॥

यच्चतृतीयम्मतम् - ': यद्यपि प्रथमंनिर्विशेषब्रह्मसाक्षात्कारश्शाब्दान्निष्प न्नः तथापिसोनवधारणएव असंशयदर्शनात । नन्वेककोटिकज्ञानमात्रं नि-

त्वे इदंघटत्वंनवेतिसंशयोननिवर्तेत । तस्मिन् घटत्वव्यतिरिक्तप्रका-
राभावात् । अनभ्यासदशायां जलेसंशयोपिनस्यात् । किंचैवंप्रमेयत्वा-
दितिज्ञानात्त्वदभिमतनिश्चयोद्घटत्वप्रकारकसंशयनिवृत्तिप्रसक्तिः । तत्र-सा
मान्यधर्मप्रकारकत्वं प्रतिबन्धकंचे दिदमितिज्ञानेपि तथाभविष्यती " ति ।

तदप्यनेननिरस्तं – विदिताविदिताकारभेदाभावात् । नहिकेनचिदा
कारेणधर्मिनिश्चयाभावे अविदिताकारज्ञानस्यैष्यमाणत्वाभावेच इदं कि-
मित्यादिप्रश्नहेतुजिज्ञासासंभवः । नचब्रह्म केनचिदाकारेणनिश्चितम् ।
किंच नित्यानित्यवस्तुविवेकं साधयन्न्यायोपबृंहितवाक्येनैव नित्यानं
दत्वावधारणमबोचः । आमनुष्याद्ब्रह्मलोकं कर्मकार्यं " कर्मणापितृ
लोको विद्यया देवलोक " इतिश्रुतेः । विद्याचात्मोपासना । साचविहि
ततयाकर्तृपरतंत्राक्रियैव । कार्यंसर्वमनित्यमेव घटादिवत् । " तद्यथेह
कर्मचितोलोकःक्षीयते एवमेवामुत्रपुण्यचितोलोकःक्षीयते " इतिश्रुतेश्च ।
आत्माचनित्योमेऽश्रवादिभिस्सर्वैरभ्युपेयः । सचपरमप्रेमास्पदत्वात् " ए-
षोस्यपरमआनंदः " इतिश्रुतेश्चानन्दइति । तेनहिश्रवणादेः प्रागुत्पन्न-
ज्ञानस्यानवधारणत्वकथनंविरुध्यते । अथ नित्यानंदाद्यंशावधारणत्वांगी
कारेपि तेनाभेदाद्वैतांशानवधारणं न विरुध्यतइतिचेत् । हन्त किंब्र-
ह्मणस्सावयवत्वमवयवसंघातात्मकत्वं सधर्मकत्वंवांगीकरोषि, येनै
वंब्रूषे । अपिच नित्यानंदात्मकत्वं किंजीवस्य उतब्रह्मणः, नाद्यः – त-
द्भेदस्यासाध्यत्वात् अपुरुषार्थत्वात्तद्दर्शनेनेतर वैराग्यसिद्ध्यप्रसंगात् ।
" ब्रह्मवेदब्रह्मभवती " तिब्रह्माभेदस्यैव पुरुषार्थत्वश्रुतेश्च । द्वितीये जी
वब्रह्मणोरभेदज्ञानेन भवितव्यमेव । तच्चाभेदज्ञानमज्ञत्व सर्वज्ञत्वादिभे
दज्ञाने जाग्रतिनोत्पद्यतइति, तन्मिथ्यात्वज्ञानमपि तदानी मावश्यकमेव ।
ननु विषयत्वाभेदज्ञानंमिथ्यात्वज्ञानंच । तदनवधारणरूपमित्युक्तमिति
चेन्न – ततोमुमुक्षानुपपत्तेः । अनवधारणादपि मुमुक्षाभवत्येवेतिचेत्,
तर्हि नित्यत्वानन्दत्वादिज्ञानमप्यनवधारणमेवास्तु । तथैवेष्यतइतिचेत्
तर्हि नित्यानित्यवस्तुविवेकस्यन्यायसाध्यत्वोक्तिविरोधः । नचन्यायसा
ध्यस्यापिज्ञानस्य संशयनिवर्तकस्यानवधारणत्वं वक्तुंशक्यम् । किंच यथा-
नन्दत्वादौन्यायावतारः तथा अभेदमिथ्यात्वयोरपि श्रवणात्प्रागेव त्वदुक्त,
मतिकल्पितदुर्न्यायावतारस्सुलभ इति तदवधारणंच स्यादेव । किंचास्मि

त्पक्षे मननानन्तरभाविज्ञानस्यैव संशयविरोधितयावधारणत्वात्तत एवाविद्यानिवृत्तौ किन्निदिध्यासनेन । अवधारणत्वेनोत्पन्नत्वेन तत्प्रतिबन्धककल्मषनिवर्तकत्वेनोपयोगस्य वक्तुमशक्यत्वात् । कल्मषनिवृत्तेर्ज्ञानात्पूर्वमेवभावात् । नचाद्यपक्षे जातेऽप्यवधारणेऽविद्यानिवृत्त्यनुत्पत्तेस्तत्प्रतिबन्धकभेदवासनानिरासकत्वेनोपयोगो वक्तुं शक्यः । तथात्वे प्राथमिकज्ञानस्यावधारणत्वेपि मननानन्तरमिव प्रतिबन्धाद्ज्ञानानिवृत्त्युपपत्त्या तदनवधारणत्वकल्पनवैयर्थ्यात् । नचानवधारणत्वकल्पनं नप्राथमिकज्ञानादविद्यानिवृत्त्यभावाय, किन्त्वनभ्यासदशायां जलादिज्ञानस्य लङ्घोत्तरकाले संशयोपपत्तयइति वाच्यम् । तत्र तथात्वेप्यत्राहितसन्देहोपपत्तेरनवधारणत्वाकल्पनात्, वाक्यान्तरात्प्रमाणान्तराद्वाभेददर्शनस्य तद्बाधकत्वात । भेददर्शनाभावेच संशयस्यैवासिद्धेः । जलादिज्ञानस्थलेप्याहितसन्देह इतिवक्ष्यते । नत्वाहितसन्देहस्यैवापह्नवश्शक्यः, शब्दयोजकत्वसंदिग्धोपाध्यादीनां संशयाधायकत्वात् । निश्चयेस्त्यपित्वदोषजन्यत्वादिशंकयार्थसंशयस्यानुभवसिद्धत्वाच्च । किंच एककोटिकज्ञानस्य निश्चयत्वानवधारणत्वमनुपपन्नं । अत्र यदुक्तं – नतावन्निश्चयत्वं जातिरित्यादिना संशयनिवृत्त्यनुकूलस्वरूपविशेषवत्वातिरिक्तस्य जात्यादिरूपस्य निश्चयत्वस्य स्वविषये स्वाकारतद्विरुद्धद्वयवैशिष्ट्यावगाहिज्ञानाविरोधिज्ञानत्वातिरिक्तस्य संशयत्वस्य च वक्तुमशक्यत्वात्, प्राथमिकज्ञानेनिश्चयत्वाभावस्यानवधारणत्वात्मकसंशयत्वस्य चोपपत्तिरिति, तन्न–निश्चयत्वस्य जातित्वेबाधकाभावात् । नचचाक्षुषत्वादिना सांकर्य । कत्वादिव्याप्यतारत्वादिवदुपपत्तेः । नन्वेवं निश्चयपदं नानार्थस्यात्, तारपदस्यतुननानार्थता, सजातीय साक्षात्कारप्रतिबन्धकतावच्छेदकरूपत्वेनानुगतीकृतजातीनां प्रवृत्तिनिमित्तत्वादितिचेन्न, इष्टत्वात् । अत्राप्येककोटिकत्वाद्यभिव्यंग्यजातित्वादि ताद्दशधर्मान्तरसंभवाच्च । नचसंशयेधर्म्यंशे निश्चयत्वाभावप्रसंगः, जातेरव्याप्यवृत्तित्वाभावादितिवाच्यम् । निश्चयत्वस्य तत्रसत्वेप्यव्याप्यवृत्तित्वप्रसंगाभावात् । नहि संशयत्वसामानाधिकरण्यमात्राद्व्याप्यवृत्तित्वं, किंतु स्वात्यन्ताभावसामानाधिकरण्यात । ननुकोट्यंशेसंशयत्वात्तदंशेनिश्चयत्वाभावात् स्वात्यन्ताभावसामानाधिकरण्यमस्त्यादितिचेन्न, संशयत्वनिश्चयत्वयोर्द्वैयत्वघ

त्ववद्देववृत्तेरिष्टत्वात् , संयोगतदभावयोरिवावच्छेदकभेदेनवृत्तयंगीक-
रात् । यद्येवंधर्म्यंशेनिश्चयइति व्यवहारोनस्यात् , किंच संशयानन्तरं
संशयोनस्यात् , पूर्वसंशयस्यैवतन्निश्चयत्वादितिचेन्न । धर्मितावच्छेदक-
विषयत्वाभिव्यंग्य जातिमत्त्वेन तन्निश्चयत्वव्यवहारात् । ननु
धर्मितावच्छेदकविषयत्वंननिश्चयत्वाभिव्यंजकं, एककोटिकत्वंह्यभिव्यंज-
कमुक्तं, तच्चैकमात्रकोटिकत्वमेव अन्यथा एकशब्दवैयर्थ्यात् । तथाच
संशयेतदभावात्कथंतदभिव्यक्तिरितिचेन्न, एकमात्रकोटिकत्वंहि – किंचि
त्प्रकारकत्वेसति तद्विरुद्धाप्रकारकत्वं । तथाच संशयस्यापिधर्मितावच्छे
दकप्रकारकत्वेसति तद्विरुद्धाप्रकारकत्वस्य सत्त्वान्निश्चयत्वाभिव्यक्तिस्सं
भवत्येव । यद्वा – धर्मितावच्छेदकैककोटिरेवविषयतयासंबन्धाभिव्यंजि-
का, इतरनैरपेक्ष्येणाभिव्यंजकत्वमेकशब्देनविवक्षितम् , ततश्च धर्मिता-
वच्छेदककोट्यभिव्यंग्यत्वात्तन्निश्चयत्वव्यवहारः । संशयत्वंच – स्वप्रकार-
विरुद्धप्रकारकत्वाभिव्यंग्यनिश्चयत्वव्याप्यजातिविशेषः । सच यत्प्रका-
रविरुद्धप्रकारकत्वाभिव्यंग्यस्तत्संशयइतिव्यवहारः । यद्वा –निश्चयत्वंध-
र्मितावच्छेदकावच्छिन्न धर्मितत्संबन्धितावच्छेदकं , संशयत्वन्तु विरु
द्धकोटिसंबन्धितावच्छेदकं । तेन यत्संबन्धितावच्छेदकं निश्चयत्वं त
न्निश्चयत्वव्यवहारः । यत्संबन्धितावच्छेदकं संशयत्वं तत्संशयत्वव्यवहा
रः । तथाच न संशयानन्तरं संशयानुत्पत्तिप्रसंगोपि तन्निश्चयस्यैव तत्सं
शयनिवर्तकत्वात । संशयान्यत्वं निश्चयत्वमित्यत्रापि नकिंचिद्बाधकम् ।
नच धर्म्यंशे निश्चयत्वाभावप्रसंगः , त्वयैव वृक्षादावप्यौपाधिकभेदेन त
दुभयप्रतीतेरित्यादिनाऽवच्छेदकभेदादवच्छिन्न भेदांगीकारात् । तद्वदे
व धर्मिविषयत्वावच्छेदेन संशयान्यत्वोपपत्तेः । संशयत्वाभाववत्त्वं नि
श्चयत्वमित्यत्रापि नदोषः, ज्ञानेंऽशाभावेनांशभेदेन वृत्त्यसंभवेपि धर्मिवि
षयत्वावच्छेदेन संशयत्वतदभावोपपत्तेः । नच विषयित्वस्य ज्ञानमा
त्रतया विरुद्धधर्मद्वयासंभवा दवच्छेदासंभवः । घटादेराकाशसंबन्धमात्रे
णाकाशावच्छेदकत्ववद्विषयस्यैव ज्ञानसंबन्धिनो ज्ञानेऽवच्छेदकत्वोपप
त्तेः । धर्म्यवच्छिन्नएव संशयत्वात्यन्ताभावसंभवात् । यद्येवमवच्छेदक
भेदेन वृत्तिरिष्यते तर्हि विरुद्धोभयप्रकारकत्व लक्षणसंशयत्वाभावएके
ककोट्यंशेपि स्यादितिचेन्न । स्वप्रकारीभवद्धर्मविरुद्ध प्रकारकज्ञानाभि

ज्ञानस्यैवसंशयत्वात् । नच समूहालंबनेतिव्याप्तिः,एकविशेष्यकत्वेन वि
शेषणात् । नन्वेवमपि धर्म्यंशेतिव्याप्तिवारणाय तज्ज्ञानप्रकारविरुद्धप्रका
रकत्वमभिवाच्यम् , तथाचैकविशेष्यक त्वेसति स्वप्रकारीभवद्धर्मविरुद्ध
प्रकारकज्ञानाभेदेसति तद्विरुद्धप्रकारकत्वापेक्षया, लाघवात् स्वविषये
स्वाकारतद्विरुद्धद्वय वैशिष्ट्यावगाहिज्ञानाविरोधि ज्ञानत्वमेवसंशयत्वमि
तिचेन्न,तदपेक्षया एकविशेष्यकत्वेसति स्वप्रकारीभवद्धर्मविरुद्धप्रकारकज्ञ
नाभिन्नत्वस्यैवलघुत्वात् । उभयत्रज्ञानपर्यंतंतुल्यम् । अविरोधित्वस्याप्रतिबंध
कत्वात्मक त्वेऽनिवर्तकत्वात्मकत्वेच तदपेक्षया भेदाभावमात्रंलघुभवत्येव
ननुतत्रधर्म्यंशेऽतिव्याप्तिवारणार्थ तद्विरुद्धप्रकारकत्वं विशेषणंदेयमित्युक्त-
मितिचेन्न । स्वशब्दोहि नज्ञानपर , किन्त्वभिन्नपरः, ततश्च नधर्म्यंशेतिव्या
प्तिः । किंच त्वयापि धर्म्यंशेतिव्याप्तिवारणार्थ विशेषणंदेयमेव, तस्य स्वप्र
कारीभूत किंचित्कोटि तद्विरुद्धकोट्यन्तर वैशिष्ट्यावगाहि ज्ञाना
विरोधित्वात् । यदिच तत्र धर्मिज्ञानस्य संशयाभिन्नत्वादनतिप्रसंगं प
श्यसि, कुतस्तर्हि तस्मिंल्लक्षणेतच्चक्षुर्निमीलयसि । नहि क्वचिल्लक्षणेस्व
न्मतानुसारः कार्यं , क्वचित्त्वन्मतानुसारइति क्वचिद्विधिमर्दोपि । यद्वा
स्वाभिन्नप्रकार विरुद्धप्रकारकत्वमेव लक्षणमस्त्विति नकश्चिद्दोषः । किं
च स्वविषये स्वाकारेत्यत्र स्वशब्दद्वयं ज्ञानपरं, तदविरोधिपरंवा? पूर्वस्वश
ब्दमविरोधिपरमुत्तर स्वपदं ज्ञानपरमितिवा? नाद्यः – स्थाणुत्वादि संशया
विरोधित्वयं घट इति ज्ञानेतिव्याप्तेः । नच तस्यापि तादृशघटत्वादिसंश
यविरोधित्वान्न तत्रातिव्याप्तिरितिवाच्यं । अयं क्षणिकोवा क्षणिकविशे
गुणवान्वेति संशयेऽव्याप्तेः । नच स्वविषये स्वाकारतद्विरुद्धद्वय वैशिष्ट्या
वगाहिज्ञानाविरोधित्वं यदंशे तदंशे संशयत्वमितिवाच्यम् । केवलान्वयि
प्रमेयत्वादि प्रकारकज्ञानस्य प्रमेयत्वाद्यंशे संशयत्वापातात् तत्कोटिकसं
शयाभावात्तद्व्यकोटिक संशयंप्रत्यविरोधित्वात् । कथंचित्तत्कोटिक संश
योपपादनेच स्वप्रकारकोटिकसंशयान्यत्व लक्षणस्याप्रसिद्ध्या दूषणा
नुपपत्तेः । यत्प्रकारकसंशयः कदापि नास्ति तादृशोत्पन्नविनष्टादिव्य
क्तिविशेषनिष्ठ धर्मविशेषप्रकारक निश्चयेऽतिव्याप्तेः । अतएव नतृती-
यः । नापिद्वितीयः – प्रमेयमिदंजलमित्यनवधारणात्मकत्वदभिन्नतसंशये
प्रमेयांशेतिव्या[illegible] । व्यक्तिविशेषनिष्ठ यद्धर्मप्रकारकद्विकोटिसंशयः

कदापि नास्ति तद्धर्मप्रकारकत्वदभिमतैककोटिकसंशयेऽव्याप्तेः । तस्या नवधारणत्वंच त्वद्रीत्याउत्तरकालं प्रामाण्यसंशयादवगम्यते । किंच पर्वतोवह्निमानित्यत्र स्वविषयेवह्नौ स्वप्रकारीभूतवह्नि तद्विरुद्धवह्न्यभाव प्रकारक ज्ञानाविरोधित्वात्संशयत्वापत्तिः । तदनन्तरं वह्निर्वह्निमान्नवेति संशयदर्शनात् । ननु तस्य पर्वते वह्निसंशयविरोधित्वात् स्वप्रकारवि रुद्धप्रकारकज्ञानविरोधित्वस्य सत्त्वान्नतद्भावइतिचेत्तर्हि अयंक्षणिकोऽ- क्षणिकविशेषगुणवान्वेति सन्देहेऽव्याप्तेः । तस्य विशेषगुणक्षणिकत्व संशयविरोधित्वात् । ननु यदंशेस्वप्रकारतद्विरुद्धाकारद्वय वैशिष्ट्याव गाहिज्ञानाविरोधित्वं तदंशे संशयत्वं, तेन विशेषगुणांशे क्षणिकत्वसंश यविरोधित्वान्न संशयत्वं । आत्मादिधर्मिणिच संशयत्वमितिचेत् , एवं त र्हि पर्वतोवह्निमानिति ज्ञानस्य वह्न्यंशे वह्निसंशयत्वापत्तिः, तत्र वह्निप्रका रकसंशयाविरोधित्वात् । स्वाकारविशेष्ये तदाकारतद्विरुद्धद्वय वैशि ष्ट्यावगाहिज्ञानाविरोधित्वं तदंशेसंशयत्वमितिचेन्न । एवंसति निर्विशेष ब्रह्मसाक्षात्कारस्य निष्प्रकारकतया विशेष्याभावेन उक्तलक्षणस्य त त्रासंभवात् । किंच द्वितीयपक्षे आकारः किंप्रकारोविवक्षितः, उतप्रका- रकवृत्तिरित्यादि त्वद्रीतिसिद्धज्ञानाकारोवा, नाद्यः – ब्रह्मसाक्षात्कारेत दसिद्धेः । नान्त्यः– स्वविषये स्वाकारावगाहनस्याभावात् .

वस्तुतस्तु वस्तुतोविरुद्धप्रकारकत्वविवक्षायां भविरोधभानदशायां स्थाणुः पुरुषश्चेति निश्चयस्यापि संशयत्वापत्तेः, भासमानविरोधाश्रयप्र कारकत्वेविवक्षणीये असंभवएवस्यात् । विरोधेभासमाने एकत्रधर्मद्वय वैशिष्ट्यावगाहिज्ञानायोगात् । अन्यथा संशयसामग्रीतएव परस्परविरु द्धस्थाणुत्वपुरुषत्ववानिति प्रतीत्यापत्तेः । किञ्चानुमित्युपनीत श्वैत्यवि षयकस्य शङ्खपीतत्वज्ञानस्य श्वेतःशङ्खःपीतइत्याकारकस्य विरोधविषयक स्यापि संशयत्वप्रसङ्गात् । तर्हि किंकुर्मः किंचिद्विरुद्धविषयं किंचिद्वा विरुद्धविषयमनुभूयतइतिचेत् । विरुद्धविषयत्व तदयोग्यत्वोपपादकं इक्षुक्षीरादिमाधुर्यवदनुभवसाक्षिको विषयीकरणविशेषएव वैलक्षण्यमि त्यंगीकुरुतं । ततश्च विषयीकरणविशेषावेव संशयत्वनिश्चयत्वे । किंच एककोटिकज्ञाने संशयत्वानुभवः कस्यापि नास्त्येव , प्रत्युतएककोटि कज्ञानानन्तरं द्विकोटिकसंशयोत्पत्तिपर्यन्तंमम निश्चयोजातइत्येव व्य

चइयति । द्विकोटिकसंशयोत्पत्त्यनन्तर मेतावन्तंकालमेव निश्चयएव - मस्थितः, इदानीं सन्देहोजातइतिच । ततश्च प्रमाणबलसिद्धसंशय- निश्चयविभागानुरोधेन जातिरुपाधिः स्वरूपंवा लक्षणमेष्टव्यम्, नतु- स्वाभिमतलक्षणानुसारेण लक्ष्यनिर्णयः अतिप्रसङ्गादिति । यद्वा स्वप्र कारकोटिकसंशयान्यत्वमेव निश्चयलक्षणमस्तु । यदुक्तं - परमते इदन्त्व स्यकेवलान्वयितया तत्प्रकारकसंशयाप्रसिद्धिरिति, तन्न- इदन्त्वस्य तत्त द्व्यक्तिपर्यवसिततया नानात्वेन केवलान्वयित्वाभावात् । केवलान्वयि त्वव्यवहारश्चेदं शब्दप्रयोगविषयत्वविषयः । ननु इदं प्रमेयं स्थाणुः पुरु षोवेतिसंशयः प्रमेयत्वांशे निश्चयोनस्यात्, तत्प्रकारकसंशयस्याप्रसिद्धे रितिचेन्न । अभावे प्रमेयत्वप्रतियोगिकत्व भ्रमदशायामिदं प्रमेयत्ववत्प्रमेय त्वाभाववद्वेति संशयोपपत्तेः । अत्र - केनचिद्यदुक्तं - एवमभावे प्रमेयत्वप्र तियोगिकत्वप्रसिद्धावपि संशयकोटिभूताखण्ड प्रमेयत्वाभावाप्रसिद्धिरे वेति, तन्न - अखण्डप्रमेयत्वाभावस्यैव कोटित्वासिद्धेः । प्रमेयत्वप्रतियोगि कत्वभ्रमविषयस्य प्रसिद्धाभावस्यैव संशयकोटित्वात् । इष्यतेचशुक्तौ रज तत्वभ्रमानन्तरमिदं रजतमिहनास्तीति रजतत्वभ्रमविषयस्य पुरोवर्ति न्यत्यन्ताभावाधिकरणे आरोपः आरोप्यनिषेधइत्यभ्युपगमात् । किंच य स्य देवदत्तस्य रजतमेवनास्ति तदीयत्वस्य रजतेऽनाप्तवाक्यादवगमे - यस्मिन्भूतले रजतं देवदत्तीयपटश्चास्ति तत्र देवदत्तीयं रजतमिहनास्ति इदं भूतलं देवदत्तीयरजतवद्वानवेति संशयविपर्ययदर्शनाच्च । अस्तुवा अखण्डप्रमेयत्वाभाव कोटिकसंशयः सच समवायाद्यवच्छिन्नः प्रसिद्ध- एव । तेनच प्रमेयत्वस्य विरोधभ्रमदशायां संशयस्संभवत्येव । प्रमेयत्वद्रव्य त्वयोर्विरोधभ्रमदशायां तदुभयकोटिक संशयोपिसंभवति, विरोधभ्रमदशा यांप्रसिद्धविशेषत्व निर्विशेषत्वसंशयवत् । नन्वेवमपि ज्ञानवानात्माज्ञा- नं नवेत्यादिसंशये ज्ञानवानितिधर्म्यंशाव्याप्तिः स्वप्रकारीभूतस्य ज्ञानस्य तादात्म्येन संशयकोटित्वादितिचेन्न । येनसंबन्धेनप्रकारत्वं तत्संबन्धघ- टितप्रकारताकतत्कोटिक संशयान्यत्वस्य विवक्षितत्वात् । यदुक्तं - यद्य त्संशयनिवृत्त्यनुकूल स्वरूपविशेषवत् तत्तन्निश्चयइति, तन्न - स्वरूपप्रका- शस्याद्वैतानन्दाद्यनवधारणत्वांगीकारात्, तस्यच नित्यत्वाद्ब्रह्माद्वैत साक्षात्कारेण तदनिवृत्तेश्चरमसाक्षात्कारस्यानिश्चयत्वापत्तेः । नच त दनिवर्तकत्वेप्यहमानन्दो नवेत्यादि द्विकोटिकसंशयनिवर्तकतया -

निश्चयत्वोपपत्तिः, तथासत्युत्तरसंशयस्यापि यत्किञ्चित्पूर्वसंशयनिवर्तकत्वेन निश्चयत्वप्रसंगात् । इदं जलमित्यनभ्यासदशोत्पन्नैककोटिकसंशयानन्तरमुत्पन्नस्य इदं जलं नवेतिसंशयस्य एककोटिकसंशयनिवर्तकत्वेन निश्चयत्वप्रसंगात् । किंच स्थाणुत्वनिश्चयस्य स्थाणुत्वाभावसंशयनिवृत्त्यनुकूलस्वरूपविश्लेषवत्त्वेन तन्निश्चयत्वापत्तिः, पुरुषत्वव्याप्यकरादिदर्शनस्य पुरुषत्वसंशयनिवर्तकत्वेन तस्य पुरुषत्वनिश्चयत्वापत्तिः । किंच मुक्तिकालीनानन्दावधारणरूपे ब्रह्मस्वरूपेऽव्याप्तिः, तस्य संशयविरोधित्वे इदानीं संशयानुपपत्तेः, तदेवहिसंसारेपि ब्रह्मस्वरूपं । प्रतिबन्धादिदानीं संशयंननिवर्तयतीति चेत्तदाऽनवधारणत्वांगीकारविरोधः । प्रतिबिंबभ्रमस्थलीयतत्त्वसाक्षात्कारवद्विरोधिनोपि प्रतिबन्धादेवानिवर्तकत्वात । किंच चरमसाक्षात्कारस्य स्वरूपानन्दप्रकाशस्यच तद्धर्मिकसंशयविरोधित्वं तत्कोटिकसंशयविरोधित्वंवानास्त्येव, स्वरूपमात्रगोचरत्वात् । नहि घटमात्रगोचरंज्ञानं तद्धर्मिकस्यवातत्कोटिकस्य वासंशयस्यविरोधिभवति । दृश्यतेच प्रकृष्टप्रकाशश्चन्द्रइति चंद्रस्वरूपेऽवधृतेऽपि तत्कोटिकोदेशकालविशेषादिधर्मिकः देशकालविशेषादिकोटिकस्तद्धर्मिकश्चसंशयः । चन्द्रः प्रकृष्टप्रकाशोनवेत्यादिसंशयाभावस्तु प्रकृष्टप्रकाशवैशिष्ट्यनिश्चयात् । अन्यथा प्रादेशपरिमितश्चन्द्रइत्यादिलक्षणमुखेन चन्द्रस्वरूपावधारणेपि प्रकृष्टप्रकाशोनवेत्यादि संशयनिवृत्तिप्रसंगात् । ननु स्वरूपमात्रगोचरस्यापि चरमसाक्षात्कारस्य एककोटिकसंशयविरोधित्वमस्तीतिचेत् , द्विकोटिकसंशयाविरोधितया तस्यापि प्राथमिकापातप्रतीतिवदनवधारणत्वेन कस्यापिसंशयस्यतेनाविरोधात् । किंचायंघटइत्यादिनिश्चये घटोरक्तः कृष्णोवेत्यादि संशयानिवर्तकत्वादव्याप्तिः । यत्किंचित्संशयनिवर्तकत्वेतु स्थाणुर्वापुरुषोवेति संशयेपि पुरुषत्वस्थाणुत्वयोः परस्परविरोधभानात् स्थाणुत्वं पुरुषवृत्तिनवा पुरुषत्वसमानाधिकरणं नवेत्यादि स्थाणुत्वसंशयनिवर्तकत्वादतिव्याप्तिः । नचेष्टापत्तिः संशयनिश्चयविभागानुपपत्तेः । यच्चैककोटिकज्ञानस्य संशयत्वसमर्थनार्थमुक्तं – अनभ्यासदशापन्न जलज्ञानानन्तरमिदंजलं नवेति संशयदर्शनात्तत्संशयकोटिनिश्चिते, निश्चिते संशयायोगादिति, तदपिन - ज्ञानप्रामाण्याप्रामाण्यसन्देहादर्थसन्देहोपपत्तेः । यदि

तस्यार्थसन्देहपर्यवसानंब्रूषे तर्हि, दोषजन्यत्वतदभावसन्देहादर्थसन्देहोऽस्तु । यद्वा प्रामाण्यतदभावकोटिकः संशयोऽस्तु, तदानीं जलेजलत्वाभावावगाहनाभावेन विरोधाभावात् । विशेष्यवृत्तिप्रकारकत्व-तदभावसन्देहाद्वासंशयोऽस्तु । यद्वा तद्वतितत्प्रकारकं तदभाववति तत्प्रकारकंवेत्येव प्रामाण्याप्रामाण्यसंशयोस्तु । नच तद्वत्त्वस्य-गृहात्तत्संशयासंभवः । इदंजलमितिनिश्चये इदंत्वावच्छेदेन इदंजलंन-वेतिसंशयोमाभूत् । ज्ञानेप्रामाण्याप्रामाण्यसंशयेकोविरोधः । अप्रामाण्यस्य तदभाववत्त्वघटितत्वात्तद्वत्त्वग्रहे कथंतदभाववत्त्वग्रहइतिचेन्न – इदंत्वावच्छेदेन तद्वत्त्वगृहात्तदवच्छेदेन तदभाववत्त्वाग्रहाद्विरोधाभावात् । यदवच्छेदेन यत्र यद्ग्रहः तदवच्छेदेनैव तत्र तदभावग्रहोविरुध्यते, न तुतत्र तदभावग्रहमात्रम्, तथासति शुक्तीरजतंनभवतीति शुक्तित्वावच्छेदेन रजतत्वाभावगृहे इदंरजतमितिभ्रमाभावप्रसंगात् । तस्मात्प्रामाण्यसंशयाधीनार्थ संशयस्य सार्वलौकिकत्वात् स्वयं तदुपपादनासामर्थ्यमात्रेण तदपह्नवस्स्वाकौशलाविष्करणमेव । किंच फलाभावाज्जिज्ञासानोपपद्यते । नचाद्वैतसाक्षात्कारएव फलं, तस्य संशयानिवर्तकत्वेने-ष्यमाणत्वासिद्धेः । समानप्रकारकत्वेनैव निश्चयस्य निवर्तकत्वात् । ननूक्तं "ज्ञानं समानविषयतया संशयनिवर्तकं नतु समानप्रकारकतया अन्यविषयात्तदर्शनात् । समानविषयत्वमप्यपेक्षणीय मितिचेत् संशयादपि प्रसंगः । निश्चयत्वमप्यपेक्षितमिति चेत्तर्हि समानविषयनिश्चयोनिवर्तकः लाघवादिति" मैवं – आत्माश्रयप्रसंगात्, संशयनिवृत्त्यनुकूल स्वरूपविशेषवत्त्वंनिश्चयत्वमितीतिहवियोक्तं । इदमितिज्ञानानन्तरमयं घटोनवेतिसंशयाभावापत्तेश्च । ननूक्तं "घटत्वादिवैशिष्ट्यविषयत्वाभावा त्समानविषयत्वाभावेन नतत्संशयंनिवर्तयतीति" तत्किं यावत्संशयविषय विषयकत्वेन निवर्तकत्वं, तर्ह्यसंभवएव स्थाणुत्वादिनिश्चयस्य पुरुषत्वविषयकत्वाभावात् । तस्मात्संशयधर्मितावच्छेदकावच्छिन्न धर्मिताकसंशयकोटिविरुद्धप्रकारकज्ञानं संशयनिवर्तकम् । अत्र यदुक्तं - "एवंसत्ययंघटइति ज्ञानात्तद्बोधरे घटत्वे इदंघटत्वं नवेतिसंशयोननिवर्तेत तस्मिन्घटत्वातिरिक्तप्रकाराभावादिति" तन्न – इष्टापत्तेः । अयंघटइतिनिश्चयेसत्यपि संस्थानवादिभिस्तत्र तत्संशयस्य जातिवादिभिस्तत्र तत्संशयस्यांगीकारात् ।

किंकथमित्यत्र कागतिरितिचेत्, न तत्रापिसामान्यतः प्रतीतसमुदा यान्तर्गत विशेषनिर्धारणार्थत्वात्किमादेः । एतेषु किंकथमित्येवहि तत्राकांक्षा ।

---

किंच समानविषयावधारणस्य निवर्तकत्वेपि तत्रसंशयोननिवर्तेत, घ टत्वत्ववैशिष्ट्याविषयत्वेन समानविषयत्वाभावात् । किंचायंघटइतिज्ञान स्य घटत्वविषयसंशयनिवर्तकत्वे एकस्मिन्घटेघटत्वेन ज्ञाते घटान्तरेअयंघ- टोनवेतिसंशयोनस्यात् । यदुक्तं - "समानप्रकारकज्ञानस्य निवर्तकत्वे स न्निकृष्टेघटे घटत्वसामान्य प्रत्यासत्तिजन्यज्ञानेन घटान्तरेपि संशयोनि वर्तेतेति" तन्न - तवापिघटोरूपीति वाक्याद्घटत्वावच्छेदेन रूपसंसर्गेज्ञाते अयं घटो नवेति संशयोनस्यात, समानविषयकत्वात् । यदिच तस्यान वधारणत्वं तदा घटोरूपीनवेत्यपि सन्देहप्रसङ्गः । यदिच घटत्ववैशि ष्ट्यांशेऽनवधारणत्वंतदाघटत्वंरूपसमानाधिकरणं नवेति सन्देहप्रसङ्गः । अ यंघटइत्यनिश्चयादयं घटइतिसन्देहोभवतीतिचेत्, तर्हि प्रकृते सामान्यास त्तिस्थलेपितथैवभावय । अयञ्च परिहारोऽस्मन्मतएव संभवति, नतुत्वन्म ते, त्वयासमानविषयत्वेनैव निवर्तकत्वस्वीकारात्, तस्यचतत्रापिसत्त्वा त् । यदुक्तं " समानप्रकारकस्य निवर्तकत्वे प्रमेयवानितिज्ञानात् स्थाणु त्वादिप्रकारकात् संशयनिवृत्त्यापत्तिरिति " तन्न-कोटौ कोटिद्वयसामान्य धर्मप्रकारकत्वस्य प्रतिबन्धकत्वात् । नचैवंसति इदमितिज्ञानात्संशय निवृत्तिस्स्यादितित्वदुक्तं भज्येत धर्मिणि सामान्यधर्मप्रकारकत्वस्य प्र तिबन्धकत्वसंभवादितिवाच्यं । इदन्त्वस्य सामान्यधर्मत्वाभावस्योक्तत्वा त् । नचैवं स्थाणावयं स्वनिष्ठधर्मवानितिज्ञानादपि निवृत्त्यापत्तिः, प्रति बन्धकाभावादितिवाच्यं । अन्यतरकोट्यसाधारणत्वेना निर्धारितधर्मस्य सामान्यधर्मपदेन विवक्षितत्वात् । नचैवं प्रमेयस्थाणुत्ववानयमिति ज्ञा- नात्संशयनिवृत्त्यभावापत्तिः, कोटौ सामान्यधर्ममात्रप्रकारकत्वस्य प्रतिब न्धकत्वात् । यद्वा कोटिद्वयसामान्य धर्ममात्राप्रकारकं समानप्रकारकस मानविषयावधारणं निवर्तकमस्तु । निवर्तकानुपपत्तौच विस्तरोद्रष्टव्य इति । ( किंकथमित्यत्रेति ) सामान्याकारस्याप्रतीतेरिति भावः । ननु - जिज्ञासामात्रं खण्डयतो ब्रह्मजिज्ञासाखण्डनमिष्टमेवेति शङ्कानुद्यपरिह

य पुनर्ज्ञाताज्ञातांश विकल्पेन जिज्ञासास्वरूपमेवखण्डयेत् स ब्रह्मजिज्ञासा म.ि जिवांसतीतिकः प्रकृतोपयोगः । इष्टाचसायथालोकमिहापि,अन्यथाऽ नारंभेणशास्त्रोच्छित्तेः । अस्तिवहापि साम न्यतः स्वरूपज्ञप्तिः अध्यासवि रोधिरूपेणविशेषतश्चजिज्ञासा.मैव, निर्विशेषेसामान्यासिद्धेः निस्सामान्येच विशेषायोगात् । कल्पनयातदुपपत्तिरितिचेन्न, सामान्यरूपस्य कल्पितत्वे स्वरूपोच्छित्तेः विशेषासंभवाच्च । नह्यकिञ्चिद्भूतोविशेषतः कश्चित् स्यात्- नखलु खरशृंगेकुण्ठत्वादिः । नच "अस्तिब्रह्मेतिचेद्वेद सन्तमेनंततोविदु" रितिश्रावयन्तीश्रुतिः ब्रह्मण स्सामान्यधीबाधंसहेत । अतएव कल्पि तास्तित्वरूपसामान्याकारभ्रमाद्विशेषमुभुत्सेति प्रत्युक्तं, अपसिद्धांताच्च ।

---

रति ( यःपुनरिति ) ( ज्ञातेति ) किंज्ञातांशे जिज्ञासा उताज्ञातांशे, आ द्ये वैय्यर्थ्यम् । द्वितीये ज्ञानाभावादेव न जिज्ञासा तत्साध्यत्वात्तस्याः । ( इत्तीति ) इत्यस्येत्यर्थः । ( कःप्रकृतोप्रयोगइति ) सर्वखण्डकस्य तव उ क्तविकल्पेन जिज्ञासायाः पारमार्थिकत्वखण्डनमेवेष्टं नतुव्यावहारिकत्व खण्डनमपि, अस्माभिश्च व्यावहारिक्यपि जिज्ञासाब्रह्मणि न संभवतीति प्रतिपाद्यते, तत्परिहारेच पारमार्थिकत्वखण्डनेष्टत्वोद्भावनस्य कउपयो गइत्यर्थः । व्यावहारिकजिज्ञासापि ब्रह्मणि नाङ्गीक्रियतइतितु त्वयानत्र क्तुंशक्यतइत्याह ( इष्टेति ) लोकेहि ज्ञानार्थप्रवृत्त्यनुपपत्त्या जिज्ञासेष्यत इत्याशंक्य तत्प्रकृतेपि तुल्यमित्याह ( अन्यथेति ) जिज्ञासानंगीकारे आ रंभहेतुत्वभावेन शास्त्रमुच्छिद्येतेत्यर्थः । ( निर्विशेषइति ) निर्धर्मकइत्य र्थः । (विशेषायोगादिति)विशेषस्सामान्यप्रतिसम्बन्धीयत्र विवक्षितः । प्रतिसं बंधिभूतस्य सामान्य धर्म स्याभावे तस्यासंभवादितिभावः । निर्धर्मक त्वाच्च विशेषोनसंभवतीति च कारस्यभावः । ( तदिति ) सामान्यज्ञा- नविशेष ज्ञानाभावयोरुपपत्तिरित्यर्थः । सामान्यप्रमा,विशेष प्रमाविरह- श्चन प्रयोजकौ, गौरवादितिभावः । सामान्यशब्देन सत्स्वरूपंविवक्षितं, उतसामान्यधर्ममात्रं, अथवा सत्त्वसामान्यं नाद्यइत्याह ( सामान्यरूप- स्येति ) नद्वितीयइत्याह ( नहीति ) कृत्स्नस्य पिसामान्यस्य कल्पनायांस त्स्वरूपकल्पनायांच श्रुतिबाधमप्याह ( नचेत्यादि ) नतृतीयइत्याह ( अ तएवेति—(अपसिद्धांतादिति) ब्रह्मणि सत्त्वस्य स्वरूपादनन्यत्वोक्ते

विशेषस्यतु कल्पितत्वे तज्जिज्ञासावैफल्यं ।

---

रितिभावः। एतेनाद्यंनवीनमतंनिरस्तं, तथाहि-" आपातप्रतीतिरेवधर्मिज्ञा नम्, साच विचारात्प्रागेव सांगाध्ययनेन विदितपदार्थसंगतिका द्वा क्यादेवोत्पद्यते । साच ब्रह्मणि सत्त्वप्रकारिका, सत्त्वप्रकारकत्वादेवा खण्डविषयाज्ञानं ननिवर्तयति । तन्निवर्तकंचाखण्डविषयमेव निष्प्रका रकंज्ञानं । तस्यचानुत्पत्तेस्तज्ज्ञानेच्छा संभवत्येव । सैवजिज्ञासेति " हि त्वन्मतम् , तदनुपपन्नम् – सत्त्वप्रकारकज्ञानस्यापातत्वंहि अविद्यानिवृ त्त्यनर्हत्वम् । तच्च भिन्नविषयत्वाद्भ्रमत्वाच्चेत्यभिमतं । तच्च नोपपद्यते , स्वरूपोच्छित्ते श्रुतिबाधप्रसंगाच्च । किंच तदेवज्ञानं ब्रह्मविषयं तदज्ञान निवर्तकंस्यात् । नचाखण्डविषयाज्ञानस्य तज्ज्ञानेनैव निवर्त्यत्वात् स त्त्वविशिष्टज्ञानं ननिवर्तकमितिवाच्यं, सत्त्वविशिष्टविषयस्याप्यज्ञान स मानविषयकत्वेन तन्निवर्तकत्वोपपत्तेः । नच भ्रान्तित्वादनिवर्तकता , शुक्तिरजतज्ञानस्य द्रव्यत्वविषयस्य द्रव्यत्वाज्ञाननिवर्तकत्वात् । नचा धिकविषयत्वादनिवर्तकता , शुक्तिज्ञानस्य शुक्तिगतरूपादिविषयत्वेपि शुक्त्यज्ञाननिवर्तकत्वात् । नच विशिष्टविषयत्वादखण्डाज्ञान समानवि षयत्वाभावः , जिज्ञासायाअपि समानविषयधर्मिज्ञान साध्यत्वेन सत्त्व विशिष्टज्ञानस्याखण्ड जिज्ञासाजनकत्वोपवर्णन विरोधात् । नचाज्ञानम खण्डत्वविषयं, सत्त्वविशिष्टज्ञानंतु नतथेतिनतन्निवर्तकमिति वाच्यम् , अखण्डत्वस्य स्वरूपातिरेके जडत्वेनाज्ञानाविषयत्वात् । स्वरूपत्वे सत्त्व विशिष्टज्ञानविषयत्वावश्यंभावात् । नचाखण्डत्वप्रकारक ज्ञानमेव तत्प्र कारकाज्ञाननिवर्तकं, निष्प्रकारकज्ञानस्यैव निवर्तकत्वमिति सिद्धान्तभ ङ्गात् । स्वरूपातिरिक्ताप्रकारकत्वमेव निष्प्रकारकत्वमिति अखण्डत्वस्य स्वरूपाभेदात्तत्प्रकारकस्यापि निष्प्रकारकत्वान्न सिद्धान्तभङ्गइतिचेन्न अखण्डत्वादिप्रकारक ज्ञानस्यापि सत्त्वविशिष्टज्ञानवद्विदित पदार्थसङ्ग तिकस्य विचारात्प्रागेवोत्पत्तेः । नच वाक्यद्वयाद्विरुद्धानेक कोट्युपस्थि तौ मानससंशयाज्जिज्ञासोपपत्तिरिति वाच्यम्, अद्वैतवाक्यजन्य प्राथ मिकाखण्डत्वप्रकारक ज्ञानादेवाज्ञाननिवृत्तौ कुतस्संशयः, कुतस्तरां जिज्ञासेति । ( वैफल्यमिति ) इष्यमाणज्ञानस्य भ्रमत्वेन प्रपञ्चभ्रमानिव

नहि ब्रह्मण्यसदपूर्वाकारकल्पनार्थं पूर्वकल्पितमिथ्याकारप्रतीत्यर्थंवा शारीरकमित्यत्रेदवाह्यः कश्चिदपिक्षमते । कल्पिताकारमिथ्यात्वबोधनार्थमितितुस्यात् , नतर्हिब्रह्मजिज्ञास्यं,अपि त्वयमाकारस्सत्योमिथ्यावेति । ततः किमितिचेत् श्रुति सूत्रस्वरसार्थभंगस्तावत् । ब्रह्मात्मैक्यंशास्त्रवेद्यमिति स्वमतव्याहतिश्च । कल्पितभेदमिथ्यात्वधीरेव तद्धीरितिचेत् ; न - माध्यमिकमतेपितद्भावेनत्वदिष्टैक्यलाभे तद्विवादविलयापातात् ।

---

र्तकत्वादितिभावः । कथं वैफल्यंकल्पितविषयकज्ञानस्यैव फलत्वादित्याशंक्य एवंसति वैदिकत्वभूमिकाकंचुक प्रच्छन्नं बौद्धत्वमेवाविष्कृतंस्यादित्याह ( नहीति ) वेदान्तवाक्याना म्मिथ्यावस्तुविषय तयाऽतत्त्वावेदकत्वांगीकारादितिभावः । तस्यच विशेषस्य प्रातिभासिकत्वं व्यावहारिकत्वञ्च नसंभवतीत्यभिप्रायेणोक्त मसदित्यादि । गूढाभिसन्धिश्शङ्कते ( कल्पितेत्यादि ) कल्पिताकारः-प्रपञ्चः । मिथ्यावस्तुनो मिथ्यात्वेन बोधनेच नवेदाप्रामाण्यमितितुशब्दार्थः । ( अयमाकारइति ) प्रपञ्चइत्यर्थः । प्रपञ्चस्सत्योमिथ्यावेति सन्देहात्तस्यैव जिज्ञास्यतास्यादित्यर्थः । ( ततःकिमिति ) शुक्त्याद्यधिष्ठानतत्त्वज्ञानस्येव रजतमिथ्यात्वज्ञानस्यापि मिथ्यारजतनिवर्तकत्व दर्शनात् प्रपञ्चमिथ्यात्वज्ञानमपि प्रपञ्चनिवर्तकमेवेति जिज्ञासाया अवैफल्यादितिभावः । ( श्रुतीति ) " तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत् समित्पाणिः" "प्रोवाचतांतत्वतोब्रह्मविद्याम् " "तद्विजिज्ञासस्व "इत्याद्याश्श्रुतयः । " ब्रह्मजिज्ञासा" "जन्माद्यस्ययत "इत्यादीनिसूत्राणि । श्रुतिसूत्रयोर्यथा कथंचित्प्रपञ्चमिथ्यात्व विषयत्वेन नयनेच स्वारस्यभङ्गइत्यभिप्रेत्योक्तं ( स्वरसेति ) ( ब्रह्मात्मैक्यमिति ) "आत्मैकत्वविद्याप्रतिपत्तये सर्वेवेदान्ताआरभ्यन्त " इतित्वयैवोक्तेरितिभावः । अभिसन्धिमुद्घाटयञ्छङ्कते ( कल्पितभेदेति ) तद्धीः-ब्रह्मात्मैक्यधीः । भेदाभावस्याभेदत्वादितिभावः । ( तद्विवादेति ) तेनेत्यर्थः । तस्मिन्नितिशेषः । अथवा ( तदिति ) तस्मिन् तेनेतिशेषः । तस्मिन्नित्यस्य ऐक्यांशइत्यर्थः । यदि प्रपञ्चमिथ्यात्वमेव ब्रह्मात्मैक्यंस्यात् , स्याद्विवादविलयः । नचतथाभ्रमः किन्तु भेदमिथ्यात्वज्ञानाधीनं ब्रह्मात्मैक्यज्ञानमिति , तत्र चमाध्यमिकेन भेदमिथ्यात्वाङ्गीकारेपि, जीवब्रह्मणोरपि मिथ्यात्वाङ्गीका

यच्च मन्यसे;कल्पिताकारमिथ्यात्ववुद्ध्यापि ब्रह्मणस्तच्छून्यत्वमवसेयामिति त ज्जिज्ञासाद्युपपत्तिरिति; तदपियदिसामान्यबुद्धिक्रोडीकृतं । तदानजिज्ञास्यं,ब हिष्ठस्यतुसत्यत्वे सद्वितीयता । मिथ्यात्वे प्रतियोगिसाहित्यसत्यता । साहित्यरा हित्ययोस्सहजसंघर्षात् । परस्परविरोधेच प्रकारांतरास्थित्ययोगात् ।यदिराहि त्यमपिकल्पितं कथंतदा कल्पिताकारराहित्यनिवृत्तिः ।

---

रेण तदैक्यानङ्गीकारात्, तेन विवादोयुज्यतइत्याशंक्याह ( यच्चेति ) ( तदपीति ) कल्पिताकारशून्यत्वमित्यर्थः । ( सामान्येति ) धर्मिज्ञानेन विषयीकृतमित्यर्थः । ( बहिष्ठस्येति ) धर्मिज्ञानाविषयस्येत्यर्थः । ( मिथ्या त्वइति ) आकारशून्यत्वं – आकाराभावः । आकारशून्यत्वमिथ्यात्वमाका राभावाभावः । सचाकारएववा तत्समनियतधर्मोवा, अतः कल्पिताकार शून्यत्वस्य मिथ्यात्वे कल्पिताकारसत्यता स्यादित्यर्थः । तत्रहेतुमाह ( साहित्येति ) संघर्षः–विरोधः । गोत्वाश्वत्वयोर्विरोधेपि नान्यतराभावे अ न्यतरसत्त्वमिति सहजेत्युक्तं । सहजत्वं-निरुपाधिकत्वं, गोत्वाश्वत्वयोः परस्पराभावव्याप्यत्वाद्विरोधः, भावाभावयोस्तु स्वतइतिभावः । ननु स्वतोविरोधेप्यन्यतरसत्त्वे इतराभावनियमोस्तु अन्यतराभावे इतरस- त्त्वनियमः कुतइत्यत्राह ( परस्परविरोधइति ) अत्र परस्परविरोधपदेन परस्पराभावात्मकत्वंविवक्षितम् । ययोस्स्वाभाविको विरोधःतयोरन्यतर- त्सर्वत्रवक्तव्यं । अन्यथाघटाभावोनास्तीत्युक्ते घटार्थिप्रवृत्तिर्नस्यात् । "द्वौ नञौ प्रकृतमर्थंसूचयत" इति तान्त्रिकव्यवहारश्चोच्छिद्येतेति भावः। दूषणान्तरमाह ( यदीति ) ( कल्पिताकारराहित्य निवृत्तिरिति ) क- ल्पिताकारराहित्यस्य ज्ञानेन तदितरकल्पिताकारनिवृत्तावपि तदनिवृ तेः मुक्तेर्मुक्तिरितिभावः । यदि कल्पिताकारराहित्यं तन्निवृत्तिरितिपाठः तदा कल्पिताकारराहित्यमिति हेतुगर्भविशेषणम् । तन्निवृत्तिः- कृत्स्नप्रप ञ्चनिवृत्तिः । कल्पिताकारराहित्यात्मिका तन्निवृत्तिःकथंस्यात् । कृत्स्नप्रप ञ्चनिवृत्तिरपि कल्पिताकारराहित्यविशेषः, अतस्सापिकल्पितेति वक्त व्यम्, कल्पितत्वादेव स्वप्रतियोगिकत्वं वक्तव्यम्, तच्च व्याहतम्, अतः कृत्स्नप्रपञ्चनिवृत्तिस्वरूपमेव कथंस्यादित्यर्थः । ननु कल्पिताकार राहित्यस्य मिथ्यात्वेपि न तन्निवृत्तेर्मिथ्यात्वम् ... नकेज्ञान

यत्किञ्चिन्निवृत्तिमात्रंतुप्रागपिसुलभमिति कृतं तदर्थविचारव्यसनेन । अत.स्वीकुरुवासतस्सत्याकार द्वय वैशिष्ट्यं।परिहृत्वा तज्जिज्ञासामिति । किंच-यद्यशुद्धं ब्रह्मजिज्ञासो वेदितव्यं, तर्हि दुस्त्यजं नैष्फल्यम्, तथा प्रकाशस्य संसारभेषजत्वानभ्युपगमात् । अन्यथा प्रागेव मुक्तिसिद्धौ किमर्थाजिज्ञासा । कथंचाशुद्धतत्वोपदेशिनश्शास्त्रस्य तत्वावेदकत्वम् । कथन्तरामतत्वज्ञानेन भ्रान्तिविलय: । ननु भूरन्ध्रभ्रमेण दामदर्वीकर भ्रमनिवृत्तिवत्स्यात् ,नस्यात्-तद्वदेव भ्रान्त्यन्तरास्थितावात्यन्तिकत्वासिद्धे: । ,तद्विलापकतत्वज्ञानादेरुक्तक्रमेणात्रासंभवात् । अहेतुकविनाशादेश्च निरसिष्यमाणत्वात् ।

---

इत्यादिना मोक्षदशायां भ्रमाभावावगमादितिचेत् , तर्हिकल्पिताकाररा हित्यमपि श्रुतत्वान्नमिथ्या । यदिच राहित्यस्य स्वरूपान्तर्भावे जिज्ञा स्यत्वानुपपत्तेः तद्बहिर्भावेच सत्यत्वे ऽद्वैतहानेर्मिथ्यात्वमनुमन्यसे , तर्हि प्रपञ्चनिवृत्तेरपि स्वरूपान्तर्भावे साध्यत्वानुपपत्तेस्तद्बहिर्भावे वाच्ये सत्यत्वे अद्वैतहानेर्मिथ्यात्वमनुमन्यस्व । ज्ञाननिवर्त्यत्वाभावात् कथंमिथ्यात्वं निवृत्तेरितिचेत्, असाध्यत्वा द्वैतहानिप्रसङ्गाभ्यां कथंसत्यत्वं । तर्हि किंकुर्मइतिचेत् श्रूयतामयमुपदेशः , परस्परव्याहत वैदिकमाध्यमिकमतद्वयाशां विहायान्यतरस्मिन्नेव तृप्तोभव । सतः-ब्रह्मणः । एवमशेषविशेषशून्यमित्यनेन सूचितव्याघातोदर्शितः । इदानीमनाद्यविद्यान्धकारितमित्यनेन सूचितव्याघातः प्रदर्श्यते । तत्राविद्याश्रयत्वं तदावृतत्वंचविवक्षितम्, तत्राश्रयत्वसूचितो व्याघातइदानीं प्रदर्श्यते । किमशुद्धं ब्रह्मजिज्ञास्यमुतशुद्धमिति विकल्प्याद्यंदूषयति ( किंचेति ) ( तथाप्रकाशस्येति ) अशुद्धिविशिष्ट प्रकाशस्येत्यर्थः । अत्रचाशुद्धिरेव वेदितव्याकारइति विवक्षितम् । पूर्वत्र उपहिते उपधानातिरिक्त धर्मविशेषइतिभेदः । ( प्रागेवेति ) अविद्याविशिष्टप्रतीते रनादित्वादितिभावः । ( कथंचेति ) अशुद्धेर्मिथ्यात्वादितिभावः । दामदर्वीकरः - दामाधिष्ठानक दर्वीकरः ( भ्रान्त्यन्तरेति ) निवर्तकभ्रमस्यानिवृत्तेरिति भावः । ( आत्यन्तिकत्वासिद्धेरिति ) निवृत्तेरितिशेषः । तन्निवर्तकं तत्त्वज्ञानान्तरमस्त्वित्यत्राह ( तद्विलापकेति ) सत्यमिथ्यात्वविकल्प क्षोभादिनेत्यर्थः । ( अहेतुकेति ) आदिशब्देन प्रतियोगिमात्रहेतुक विनाशादिर्विवक्षितः ।

शुद्धं तर्हि जिज्ञास्यमपि न तेस्यात्, ज्ञतया तत्स्वरूपस्पर्शानभ्युपगमात् । शाखाचन्द्रन्यायेन स्वरूपस्पर्शइवेतिमतमितिचेत्, कथंतदधीनबोधविषयतामन्तरेण दृष्टान्तदार्ष्टान्तिकयोस्तदुपलक्ष्यत्वम् । तद्विषयत्वेच कथं तत्प्रयुक्तदोषातिक्रमः । सोपिबोधः स्ववेद्यतायाभ्रान्तिरसत्य श्चेत्यदोषइति चेत्, विलीनंतत्त्वावेदकवाक्यैः । वेद्यमिथ्यात्वमन्तरेण भ्रान्तित्वायोगात् ।

---

अविद्याविशिष्टज्ञानस्या विरोधान्न निवर्तकतेत्यपिबोध्यम् । नित्यशुद्धमित्यनेन सूचितंव्याघातं दर्शयितुं द्वितीयंकल्पमाशंकते ( शुद्धंतर्हीति ) जिज्ञासोर्वेदितव्य मित्यनुषज्यते । दूषयति ( जिज्ञास्यमपीति ) अशुद्धस्यजिज्ञास्यत्वपक्षे तस्य ज्ञानविषयत्वसंभवेपि फलाभावाज्जिज्ञासा नोपपद्यतइत्युक्तं, शुद्धस्यतु ज्ञानविषयत्वं प्रत्येवायोग्यत्वा जिज्ञास्यत्वं नोपपद्यतइत्यभिप्रायेणाह ( अपीति ) ननु शुद्धंब्रह्मजिज्ञास्यमित्यत्र शुद्धस्येष्यमाण ज्ञानविषयत्वं नाभिमतं, किन्तु यथाशाखायां चन्द्रसंबन्धाभावेपि तत्संबन्धभ्रमाच्छाखायां चन्द्रमाइत्यत्र शाखा चन्द्रस्योपलक्षणम्, तथा विशुद्धंजिज्ञास्य मित्यत्रापीष्यमाणं ज्ञानमुपलक्षणमेवेतिशंकते ( शाखेति ) ( कथमिति ) दृष्टान्तार्थं दृष्टान्तोपादानं । यथादृष्टान्तेशाखालक्षणोपलक्षणजन्यज्ञानविषयतामन्तरेणनोपलक्ष्यत्वं तथा दार्ष्टान्तिकेपीष्यमाणज्ञानलक्षणोपलक्षणाधीन ज्ञानविषयतामन्तरेण नोपलक्ष्यत्वमित्यर्थः । तत्प्रयुक्तदोषः - अशुद्धत्वजडत्वादिः ( सोपीति ) सः - उपलक्षणाधीनः । सत्यमिथ्याविभागमन्तरेण तदधीनज्ञानविषयतामात्रेणोपलक्ष्यत्वसंभवादितिभावः । उपलक्षणाधीनबोधविषयत्वस्यभ्रान्त्यन्तरसिद्धत्वे तद्भ्रमविषयताया अपि भ्रमान्तरसिद्धतावाच्येत्यनवस्था स्यादिति स्वयमेव ' स्ववेद्यतायाभ्रमइत्युक्तम् ' ( विलीनमिति ) स्ववेद्यतायाभ्रमविषयत्वे स्ववेद्यत्वरूप वेद्यमिथ्यात्वमन्तरेण भ्रान्तित्वायोगेन स्ववेद्यत्वाभावे उपलक्षणत्वेनाभिमत ज्ञानस्योपलक्षणत्वासंभवात् वेदान्तवाक्याना मुपलक्षणीभूतज्ञानजनकत्वमपि न संभवतीति कथञ्चिदप्यावेदकत्वाभावात्, आवेदकत्वेपि फलीभूतज्ञानस्य भ्रमत्वात्तत्त्वावेदकत्वं संभवतीत्यर्थः । भ्रान्तिसिद्धप्रातिभासिक स्वविषयत्वमादायैव उपलक्षणाधीनज्ञानविषयत्वसंभवेनोपलक्षणत्वेनाभिमतज्ञानवि

उपलक्षणपर्वावलंबननैष्फल्याच । शुद्धिश्चास्य नित्याऽनित्यावा, आद्ये किमर्था जिज्ञासा, अन्ततस्तस्यास्तादर्थ्यात् । शुद्धता ध्यवसायार्थं सास्यात् नतु शुद्ध्यर्थमिति चेत् न तदध्यवसा येनापि तत्सिद्ध्यर्थेन भवितव्यं, अन्यथा नैष्फल्यात् । आरोपि ताशुद्धिनिरसनात्साफल्यमिति चेन्न, आरोपसंभवे नित्यशुद्ध्ययोगात् । उपरक्तेऽपि स्फटिके शुभ्रत्ववत्तत्संभव इति चेन्न, भावानभिज्ञानात्। न हि वयमारोप्यदोषत्वेनाशुद्धिं प्रसञ्जयामः ब्रह्मण्येव कुदृष्टिक ल्पित विविधदोषदृष्टेरभ्युपगमात्, किन्तु भ्रमाद्याधारतया ।

---

पयत्वस्यैव प्रातिभासिकस्यवक्तुंशक्यतया उपलक्षणपर्वावलम्बन नैष्फ ल्यमित्याह ( उपलक्षणेति ) स्ववेद्यताया भ्रान्तिरित्यनन्तर मसत्यश्चेति यदिपाठः तदाज्ञतया तत्स्वरूपस्पर्शानभ्युपगमादित्यस्य शुद्धस्यकेना पि मिथ्यार्थेनासंस्पर्शादितिभावः । भ्रान्तिरसत्यश्चेत्यस्यत्वसत्यत्वेपिभ्रा न्तित्वाद्दोषइत्यर्थः । यद्वा स्वसमानसत्ताकं यज्ज्ञानं तद्विषयत्वमेव जड त्वादिप्रयोजकमित्यसत्यश्चेत्यस्यभावः । स्ववेद्यताया भ्रान्तिरित्यत्रोत्तरं "विलीनमित्यादि" असत्यश्चेत्यत्रोत्तर मुपलक्षणेति ( किमर्थेति ) शु-द्ध्यतिरेकेणाविद्यानिवृत्तेरभावादितिभावः । नन्वस्तु ब्रह्माभेदार्था जिज्ञा सा "ब्रह्मवेदब्रह्मैवभवती" तिब्रह्माभेदस्यापि फलतयाप्रतिपादनादि ति तत्राह ( अन्ततइति ) अभेदस्यनित्यसिद्धतया साध्यत्वायोगात्तत्साध्य तोक्तिरपि शुद्धावेवपर्यवस्यति, सापिचेन्नित्या वैयर्थ्यमेवेतिभावः । ( तदध्यवसायेनेति ) शुद्धताध्यवसायेनापि शुद्धिसिध्यर्थेन भवितव्य-मित्यर्थः । ( आरोपिताशुद्धीति ) नित्यशुद्ध्यध्यवसायस्येति शेषः। नि त्यशुद्ध्यध्यवसायेसति प्रतीयमानकर्तृकत्वादिरूपाशुद्धेर्मिथ्यात्वज्ञाने न साधनानुष्ठानेन तन्निवृत्तेस्साफल्यमिति भावः । नित्यशुद्धेः परमार्थ त्वादारोपिता शुद्ध्यासहनविरोधइति सदृष्टान्तंशङ्कते ( उपरक्तइति ) ( ब्रह्मण्येवेति ) "तदिदंविविधकुतर्क कल्ककल्पित" मितिभाष्येणत थावगमादितिभावः । शुक्तिरजतादौ पराभिमतमिथ्यात्वमभ्युपगम्या विशेषात्परोक्षस्थलेपि तदापादनमभिप्रेत्याभ्युपगमादित्युक्तम् । ( भ्र माद्याधारतयेति ) अशुद्धिमसञ्जयामइत्यनुषङ्गः । आदिशब्देनतत्कार्यसु खदुःखशोकमोहादिः । अस्मदभिमताशुद्ध्याश्रयत्वे नायं दृष्टान्तइत्या

LIBRARY ACADEMY OF SANSKRIT RESEARCH MELKOTE-571 431

न तथास्फटिकस्स्वयं स्वात्मनिरागमध्यस्यति । नचं तत्कर्तृकोऽन्य कर्तृ कोवा रक्तताध्यासस्तच्छ्वेतिमाख्यशुद्धिविरोधी । इहतु स्वदोषेण ब्रह्मणि स्वयमेव बंभ्रम्यमाणे कथं भ्रान्त्यादि प्रत्यनीकतामयी शुद्धिः । नित्या भ्रान्तिरपि स्फटिकरागादिवत्तत्त्वतो नास्तीति निस्तारइतिचेत्, स्थितंतर्हि विचारनैष्फल्यम् । असत्येव भ्रान्तिस्सतीव भातीति तन्निवर्तनंफलमितिचेत् न तत्सत्त्वभ्रमसत्यत्वमिथ्यात्वविकल्पे सद्वितीयत्वानवस्थयोरन्यतरापातात् । स्वरूपेण ब्रह्मनभ्राम्यति, किन्तु जीवेश्वररूपाभ्यामितिचेत्, हन्त एकां व्याहृतिं परिहर्तुमनेकामुपादत्से, कथमभ्रान्तस्य तस्य तद्भावः,

ह ( नतथेति ) ( स्वात्मनीति ) इदञ्च ब्रह्मण्यारोपस्य स्वविषयत्वादुक्तं । वस्तुतस्तु स्वविषयत्वे न तात्पर्यं, किन्तु आरोपाश्रयत्वमात्रे, अन्यविषया रोपस्यापि दोषत्वात् । अध्यासस्य सविषयत्वाद्रागस्यच प्रकृतत्वाद्राग मध्यस्यतीत्युक्तं । अन्यारोपस्यापि दोषत्वात् । एवं भ्रमरूपाशुद्ध्यभा वाद्दृष्टान्तवैषम्यमुक्तं, इदानीं तदंगीकृत्यापि वैषम्यमाह ( नच तत्कर्तृ कइति ) अन्यकर्तृकइतिदृष्टान्तार्थं । भ्रान्तिरूपाशुद्धिस्सत्यपि नश्वैत्या ख्यशुद्धिविरोधिनीत्युक्तं । तर्हि तद्वदेव प्रकृतेपि शुद्ध्यशुद्ध्योरविरोध एवास्त्वित्यत्राह ( इहत्विति ) ( स्वदोषेणेति ) अविद्ययेत्यर्थः । इयम प्येका शुद्धिरित्यभिप्रायेण स्वदोषेणेत्युक्तं । यद्यप्यविद्या स्फटिक लौहि त्यवदारोपिता, आरोप्यदोषत्वेन नाशुद्धिं प्रसञ्जयामइतिचोक्तं । तथा प्यारोपहेतुत्वेनैव दोषत्वमितिभावः । भ्रमाश्रयत्वं नजीवेश्वररूपाभ्यां, किन्तु स्वरूपेणैवेत्यभिप्रायेण स्वयमेवेत्युक्तं । भ्रान्त्यादीत्यादि शब्देना विद्यागृह्यते । ( विचारनैष्फल्यमिति ) सत्त्वाभावेऽसत्त्वनियमा दसत श्च निवृत्त्ययोगादिति विवक्षितं । ( तन्निवर्तनमिति ) भ्रमसत्त्वगोचर भ्रमनिवर्तनमित्यर्थः ( अनवस्थेति ) तत्सत्त्वभ्रमस्य मिथ्यात्वे पुनर्नि र सनीयाभावान्नैष्फल्यं, तत्सत्त्वभ्रान्तिरप्यसत्येव सतीव भातीतिचेदन वस्थेत्यर्थः । यद्वा आरोपिताशुद्धीति भावप्रधाननिर्देशः, आरोपविषय त्वमितियावत् । ( आरोपेति ) आरोपस्याशुद्धित्वादिति भावः । उपर क्ते- रक्तिमारोपविषये ( आरोप्यदोषत्वेनेति ) दोषारोपविषयत्वेनेत्यर्थः । ( स्वरूपेणेति ) शुद्धेस्स्वरूपगतत्वान्न विरोधइतिभावः । तस्य -ब्रह्मणः । तद्भावः - जीवेश्वरभावः । जीवेश्वरभावयोरपि कल्पितत्वात् कल्पकान्त

कथं सर्वज्ञोपि भ्राम्यतीति विवक्षाप्युत्तिष्ठेत, कथञ्चैकआत्मा युगपत्सर्व ज्ञमज्ञञ्चात्मानमनुसन्दधीत, प्रपञ्चयिष्यतेचैतत् । उत्तरत्रातुनित्यशुद्ध त्वश्रुत्यादि विरोधः । किंचोभयावधिमत्तया तदनित्यत्वं, उत्तरैकाव धिमत्तयावा, पूर्वैकावधिमत्तयावा, नाद्यः — त्रिवर्गापवर्गयोरैक राश्यप्र सङ्गात्; वैराग्योपदेशादि वैयर्थ्यात् ; अपुनरावृत्ति श्रुत्यादिविरो धाच्च । अतएव नद्वितीयः - बन्धमोक्षयोर्व्युत्क्रमता प्रसंगात्, शुद्धेरसाध्यत्वेन विचारादिनैष्फल्याच्च । तृतीयस्तु न शुद्धेर्नि त्यस्वरूपैक्ये स्यात् । निरवधित्वसावधित्वयो र्नित्यत्वैरात् । अ तिरेकेच सएव सत्यासत्यविकल्पावतार इति । यद्यप्यस्मन्मते नित्य शुद्धईश्वरः साध्यशुद्धिः क्षेत्रज्ञश्च जिज्ञास्येते । तथापि नप्रतिबन्दी, ईश्वरशुद्धेरसाध्यत्वात् । जीवशुद्धेस्साध्याया अपि स्वरूपान्यत्व,सत्यत्वा च्च । उदारगुणसागरः परमपुरुषः स्वाराधनात्मक शास्त्रार्थसंप्रीतस्त्रि वर्गमपवर्गंच प्रयच्छतीतिहि प्राचीमर्यादा ।

---

राभावाच्च ब्रह्मस्वयमेव कल्पयतीतिवक्तव्यं, ततश्च ब्रह्मणो भ्रान्तिरनि वार्येतिभावः । ईश्वरस्य सर्वज्ञत्वात्तत्रापि भ्रमोनुपपन्नइत्याह ( कथमि ति ) जीवेश्वरभावौचानुपपन्नावित्याह ( कथञ्चेति ) सर्वज्ञः - ईश्वरः । अ ज्ञोजीवः ( उत्तरत्रेति ) शुद्धिर्नित्यानित्यावेति विकल्पे द्वितीयकल्पइत्य र्थः । नाद्यइत्यत्र वैराग्योपदेशवैयर्थ्य हेतुः तत्र हेतुस्त्रिवर्गेति । हेत्वन्त रमाह ( बन्धमोक्षयोरिति ) ( व्युत्क्रमतेति ) शुद्धेर्विनाशेसंसारोत्थाना त् शुद्धिकालेचविरोधेन संसारासंभवादितिभावः ( अतिरेकेचेति ) स त्यत्वे अद्वैतहानिः, मिथ्यात्वे अनुद्देश्यता, नहि मिथ्यावस्तव सहमा नो मुमुक्षुर्मिथ्योत्पादनार्थं श्रवणादौ प्रवर्ततइतिभावः । ननु अनित्यशु द्धियोगिनो नित्यशुद्धियोगिनश्च जिज्ञास्यतायास्सिद्धान्ते समर्थनात्कथ मयं विकल्पश्शोभते तत्राह ( यद्यपीति ) आश्रयभेदाच्छुद्ध्य शुद्ध्यो र्नविरोधः, साध्यत्वेनाभिमतशुद्धे स्स्वरूपादन्यत्वान्न साध्यत्वविरोधः, सत्यत्वान्न मिथ्यात्वप्रयुक्त जिज्ञास्यत्वविरोधः । अशेषविशेषशून्यत्वानाद्य विद्यान्धकारितत्वाभ्यां जिज्ञास्यत्वस्य व्याघातं प्रकारान्तरेण दर्शय ति ( उदारेत्यादिना ) प्राची- वैदिकी । भ्रान्तत्वे कथमजिज्ञास्यतेत्यत्राह

सयदि स्वयमेव भ्राम्येत् स्वाश्रितत्राणौपयिक गुणहीनोवा, न तर्हि जिज्ञास्यः, स्वरक्षणेप्यशक्तस्येति न्यायात् । कल्पितसार्वज्ञ्यादि योगात् तदभावेपि तीर्थादिवद्वातस्य भजनं स्यादिति चेन्न, कल्पितस्य सार्वज्ञ्यादेर्जिनादिष्वपि सिद्धेः तदुपसत्तिप्रसंगात् । सर्वैस्तेषु न तत्क्लृप्तिरितिचेन्न, अविशेषात् । महाजनपरिग्रहा द्विशेषइतिचेन्न,सर्वेषां सर्वतरसम्मूढत्वमिच्छतां क्वचिदपि प्रामाणिकत्वादि लक्षणमहत्त्वस्यासिद्धेः,प्राचुर्यस्यविगानादप्रयोजकत्वाच्च । यत्तुतीर्थादिवदिति तत्तदासह्येत,यदितत्सेवयेवतदुपसत्या प्रसाद्योन्यः । नहि क्रियातच्छक्त्यपूर्वाण्येव फलन्तीति नैगमःपन्थाः ।

---

( स्वरक्षणइति ) तत्वतस्सार्वज्ञ्याभावेपि कल्पितसार्वज्ञ्यात्फलप्रदानोपयोगिभूताराधनाराधक तदिष्टपरिज्ञानसंभवात् , तदभावेपि ध्यानादेः पुण्यतीर्थ स्नानादिवद् दृष्टार्थत्वसंभवाच्च कथं ब्रह्मणोनजिज्ञास्यत्वमिति शंकते ( कल्पितेति ) सार्वज्ञ्यादीत्यादिशब्देन फलप्रदानोपयोगि दयादिगुणान्तरंगृह्यते । ( सर्वैरिति ) तथाच तत्र नव्यावहारिकं सार्वज्ञ्यमितिभावः । ( अविशेषादिति ) कैश्चित् ब्रह्मण एवानभ्युपगमादिति भावः । महत्त्वं किंप्रामाणिकत्वं उतप्राचुर्यं , नाद्यइत्याह ( सर्वेषामिति ) सर्वे सर्वत्रभ्रान्ताइतिहि युष्माभिरिष्यते , सर्वस्य मिथ्याऽवाङ्गीकारात , ततश्च युष्मन्मते कस्यापि तत्वदर्शित्वलक्षणमहत्त्वंनसिध्यतीत्यर्थः । आदिशब्देन तत्वार्थोपदेशित्वं गृह्यते । तदतिरिक्तं नप्रामाणिकत्वं , भ्रान्तस्यापि प्रामाणिकत्वे शुक्तौ रजतभ्रमवतोपि प्रामाणिकत्वापत्तेरिति भावः । नद्वितीयइत्याह ( प्राचुर्यस्येति ) ( यदीति ) यथा तीर्थादिसेवयेश्वरः प्रसाद्यः, तथा यदीश्वरसेवयान्यः प्रसाद्यस्स्यात् स्यात्तीर्थादि तुल्यतेत्यर्थः ( क्रियेति ) अयं कर्ममीमांसावृत्तिकारान्तर पक्षः । विनष्टमपि कर्म कालान्तरे फलं जनयतीति स्वभावः, अव्यवहितोत्तरकाले यथा कार्योत्पादकत्वं केषाञ्चित्स्वभावइति तेषामाशयः । शक्तिरितिभट्टपक्षः । अपूर्वमितिगुरोः । ( नैगमइति ) "सएवैनंभूतिं गमयति" "सएनंप्रीतःप्रीणाति" "इष्टापूर्तंबहुधाजातंजायमानं विश्वंबिभर्तिभुवनस्यनाभिः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदुचन्द्रमाः" "सवाएषमहानजआत्मान्नादोवसुदान" इत्यादिश्रुतिभिः "लभतेचततःकामान्मये-

उक्तन्यायेन जैनगन्धिवेदान्तिमतेपि जिज्ञासानुपपत्तिर्द्रष्टव्या । तदेतद खिलमन्तर्निधाय ब्रह्मशब्दाभिधेयमुभय लिंगं सर्वेश्वरं प्रस्तुत्यतस्यैवारं भसूत्रे विवक्षितत्वमाह " तापत्रयातुरैरमृतत्वायसएवजिज्ञास्य " इति ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां जिज्ञासानुपपत्तिवादो द्वितीयः ॥

---

वविहितान्हितान् " "अहंहिसर्वयज्ञानां भोक्ताचप्रभुरेवचे " त्यादिस्मृतिभिः " फलमतउपपत्ते " रित्यादिसूत्रैः " फलंविभत्सयाकर्मभिरात्मानंपिप्रीषन्ति सप्रीतोलंफलाये " त्यादिद्रमिडभाष्यकारादिमहर्षिवचनैश्च ईश्वरस्यैव फलप्रदत्वावगमादितिभावः । भास्करादिमतेपि जिज्ञासानुपपत्तिमाह ( उक्तेति ) भेदाभेदवादित्वेनानैकांतिकत्ववादित्वाज्जैनगन्धित्वं । ब्रह्मणस्सर्वज्ञत्वात् तदभिन्नजीवस्यापि सर्वज्ञत्वेन विदिताविदिताकारभेदाभावाज्जिज्ञासानसंभवति । ब्रह्मणोनित्यशुद्धत्वे तदभिन्नस्यापि जीवस्यनित्यमुक्तत्वा त्तदर्थाजिज्ञासानसंभवति । जीवाशुद्ध्या तदभिन्नस्यब्रह्मणोप्यशुद्धत्वात स्वरक्षणेप्यशक्तस्येति न्यायाज्जिज्ञास्यता नसंभवतीत्यादि द्रष्टव्यमित्यर्थः ॥

इति वाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां

चण्डमारुताख्यायां जिज्ञासानिरूपणंनाम-

द्वितीयस्कन्धः ॥

॥ श्रीमतेरामानुजायनमः ॥

॥ श्रीमतेनिगमान्तमहादेशिकायनमः ॥

## ॥ तृतीयोवादः ॥

त्रय्यन्ताः कर्मभागेन सौहार्दं समधिश्रिताः ।
मुक्तिं यद्भजना दाहुस्तमनन्तमुपास्महे ॥

---

( त्रय्यन्ताइति ) सौहार्दमित्यनेन एकशास्त्रत्वमेकग्रन्थत्वंचोच्यते । एकार्थत्वलक्षणसंबन्धस्य विवक्षितत्वाच्छास्त्रभेदापादकविरोधाभावोऽपिदर्शितः । सौहार्दसमधिश्रिता यद्भजनान्मुक्तिमाहुरित्यनेन अङ्गप्रधानप्रतिपादकत्वेन पूर्वोत्तरभागयोस्संबन्धोव्यज्यते । एवमैक्ये हेतुमाह (त्रय्यन्ताइति ) उत्तरभागत्वात्पूर्वभागेनैक्यं युक्तमितिभावः । अनेन व्याख्येयैक्याद्व्याख्यानभूतमीमांसयोरैक्यं सूचितं । मुक्तिमित्यनेन विरुद्धफलत्वान्नैकशास्त्र्यमित्येतत्परिहृतम् । अनन्तशब्देन वस्तुपरिच्छेदमुखेनान्तर्यामित्वाभिधानात् सर्वकर्मणांतदाराधनात्मकतया उपासनांगत्वसंभवस्सूच्यते । एकव्याख्येयव्याख्यानात्मना विंशतिलक्षणमेकं शास्त्रमित्यैकग्रन्थ्यपर्यन्तैकशास्त्र्यं प्रतिज्ञास्यन् तत्रैकग्रन्थव्याख्यानत्वेपि एकैकदेशव्याचिख्यासया प्रवृत्तयोरेकग्रन्थत्वादर्शनादिहापि मीमांसाद्वयस्य तथैवकरणान्नैकग्रंथ्यंयुक्तमित्याशंक्य विचारस्य"स्वाध्यायोऽध्येतव्य" इति विध्यधीनत्वपक्षे तद्विधिबलात्सामान्येन स्वाध्यायार्थविचारः कर्तव्य इत्येवबुद्धिरुत्पद्यते, रागप्रयुक्तिपक्षेऽपि कृत्स्नस्यापि स्वाध्यायस्याधीतत्वादुक्तरीत्यैव बुद्धिरुत्पद्यते अतःकृत्स्नगोचरविचारः प्रथमंकर्तव्यतयाप्रतिपन्नः, ननु पूर्वभागविचारः कर्तव्यः उत्तरभागविचारः कर्तव्यइत्येवंरूपाबुद्धिः प्रथमत उत्पद्यते, अतोविचारकर्तव्यताबुद्धिमनुरुषानुजिघृक्षया प्रवृत्तंविचारशास्त्रं प्राथमिकस्वारसिकबुद्धिमनुसृत्यसामान्येन वेदार्थविचारोद्देशेनप्रवृत्तमितिवक्तुं युक्तमिति पूर्वोत्तरमीमांसयोरैकशास्त्र्यमुचितमित्यभिप्रायेण/ विचारस्यकृत्स्नविषयत्वं साधयति ।

स्थितं तावदध्ययनविधिनाध्यापन विधिनावा प्रयुक्तमध्ययनंसांग सशिरस्क कृत्स्न स्वाध्यायविषयमिति । रागतोविधितोवा प्रयुक्त स्तदर्थविचारोऽपि कृत्स्नगोचरः, तयोस्संकोचकाभावात् । ननु विधि प्रयुक्तौ माभूत्संकोचः रागप्रयुक्तौतु स्यात् यावद्रागंप्रवृत्त्युपपत्तेः, मैवं विकल्पासहत्वात् । किं ब्रह्मणि विचारसंकोचः किंवा कर्मणि,नाद्यः पुरुषस्य चतुर्ष्वपि पुरुषार्थेषु रागसंभवात्, क्रमेण भोगसंभवे विरो धाभावाच्च । सन्तिह्युभयभावनास्तथाविधाः । यस्यतु क्वाचित्कोरागः तस्यैकदेश विचारेकाविचिकित्सेति चेन्न,

---

(स्थितंतावदित्यादिना) अध्ययनस्यकृत्स्नविषयत्वं विचारस्य कृत्स्नविषयतासाधनार्थं । नन्वध्ययनस्य कृत्स्नस्वाध्यायविषयतानयुक्ता, स्वविधिप्रयुक्तौ "वेदानांकिञ्चिदधीत्य ब्राह्मण"इत्येकदेशाध्ययनप्रतीतेः । अतएव नतद्विध्यधीनविचारोपि कृत्स्नविषयः । परविधिप्रयुक्तौच कृत्स्नवेदाध्यापनासंभवात् स्वाध्यायपदाभावेनाध्यापनस्य तन्मात्रविषयत्वासंभवाच्च । किञ्चिदध्यापनमात्रेणाचार्यकसिद्धेर्नतत्प्रयुक्तमध्ययनं कृत्स्नविषयमित्यत्राह । (अध्ययनविधिनाध्यापनविधिनावेति) स्वविधिप्रयुक्तौ स्वाध्यायशब्दस्य कृत्स्नविषयत्वात् कृत्स्नस्वाध्यायाध्ययनसिद्धिः, वेदानामित्यस्यसंज्ञापरत्वान्नसङ्कोचकत्वं । अध्यापनविधिप्रयुक्तिपक्षेऽपि अध्यापनविधिना अध्ययनविधिसिद्धस्य व्रतनियमविशेषयुक्तस्य कृत्स्नविषयस्यैवाध्ययनस्य स्वांगभूतोपनयनद्वारतया स्वीकारादध्यापनविधिः कृत्स्नस्वाध्यायाध्ययनं प्रयुङ्क्तइति नतन्मुखेनाप्यध्ययनसङ्कोचावकाशइतिभावः । तयोः - विधिरागयोः । (नन्विति) अध्ययनविधिर्यदार्थज्ञानपर्यन्तः तदा तत्प्रयुक्तविचारस्सर्वत्रसिद्ध्यति, रागप्रयुक्तौतुविचारस्तत्त्वाध्यनिर्णयोवा नस्वतः पुरुषार्थः, अपितु पुरुषार्थसाधनतया, अतो यस्ययत्पुरुषार्थरागसंभवः तस्य तदुपयोगिविचार एवेच्छास्यादितिविचारस्सङ्कोचमर्हतीतिभावः । त्रिवर्गापवर्गयोः परस्परविरोधादेकस्योभयत्ररागासंभवमाशंक्याह (क्रमेणेति) उभयभावनाः - कर्मब्रह्मोभयभावनाश्चतुर्मुखादयः । (यस्यत्विति) यद्यपि सर्वेसर्वपुरुषार्थ रागयोग्याः तथापि तत्तत्कर्मानुरोधात् क्वचित्क्वचिदेवेच्छाजायते, अत

यस्य लोकायतोपक्लृप्तमते द्विवर्गमात्रनिष्ठस्य वेदोदितेषु चतुर्वर्ग्येष्वनास्था, यस्य चाशक्तिरापद्वा, तस्य केति प्रसंगात् । अस्त्वनर्हस्यानधिकारः स्वार्हं प्रति प्रवृत्ता मीमांसेति चेत्, तुल्यं त्रिकाण्ड्यामपि । तिष्ठतु फलपार्थरागः कृत्स्नप्रवचनादिरागादपि कृत्स्नविचारस्समस्ति, तेन न ब्रह्ममात्रे विचारसंकोचः । कर्ममात्रे च विचारं संकोचयन् कबन्धमीमांसकस्तु राहुमीमांसकैरपि प्रतिवक्तव्यः, सिद्धेपि व्युत्पत्तिसंभवात् । अप्राप्तेस्वतः पुमर्थे च विषये प्रवृत्त्यंगत्वेपि, श्रवणादियोगादर्थज्ञानस्य स्वतन्त्रत्वे उपायानुष्ठानशेषत्वेपि,

---

एतदीयप्राथमिकरागानुसारेण विशेषोद्देशेनैव मीमांसाशास्त्रं प्रवर्तेतेति भावः । ( यस्येति ) द्विवर्गः - अर्थकामौ । वेदोदितेषु - वेदप्रतिपन्नसाधनकेषु । तथाच तादृशपुरुषानुरोधे कर्तव्ये मीमांसायाः प्रवृत्तिरेव न स्यादिति भावः । ( तुल्यमिति ) उभयार्हानुसारेणैव प्रवृत्तावेकैकाधिकृतपुरुषानुग्रहस्यापि संभवा दुभयार्हानुसारेण मीमांसायाः सामान्योद्देशेनैव प्रवृत्तिरस्त्विति भावः । एवंच चतुर्ष्वपि पुरुषार्थेषु रागसंभवात्तदर्थं कृत्स्नवेदार्थजिज्ञासायां तदनुसारेण सामान्योद्देशेन प्रवृत्तिरुपपादिता । इदानीं कृत्स्नवेदार्थजिज्ञासायां हेत्वंतरमाह ( तिष्ठत्विति ) रागात्कर्ममात्रे विचारसंकोच इति पक्षे दूषणं सूचयन्नेव कर्ममात्रे विचारसंकोचं प्रकारांतरेणाशंक्य परिहरति ( कर्ममात्र इति ) कबन्धमीमांसकस्त्विति तुशब्देन रागात्संकोचयन् प्रथमपक्षदूषणेनैव निरस्त इति सूचयति । कबन्धस्येत्थं - न ब्रह्मणो विचारस्संभवति सिद्धे व्युत्पत्त्यभावेन वेदांतानां परिनिष्पन्नब्रह्मबोधनाशक्तेः । तत्सत्त्वेपि प्रवृत्तिनिवृत्त्यविषयस्य ब्रह्मणः प्रतिपादने प्रयोजनाभावादुपासनविधिशेषत्वेनार्थवादत्वेन स्वार्थविवक्षाविरहाच्च वेदांतानां तत्र प्रामाण्याभावादिति । (राहुमीमांसकैरिति ) एकशास्त्रस्य समर्थनार्थं प्रयतमानै रस्माभिरिति भावः । प्रत्युक्तिप्रकारमाह ( सिद्धेपीत्यादिना ) ( अप्राप्त इति ) "अर्थज्ञानस्य स्वतन्त्रत्वे" इत्येतत्पूर्वेण संबध्यते । अर्थज्ञानस्य स्वतन्त्रत्वपक्षे स्वविषयप्रवृत्तिहेतुत्वाभावेपि पूर्वोक्तनिरतिशयपुरुषार्थं प्रतिपादनमुखेन तदुपयोगित्वेनाप्रवृत्तिहेतुत्वस्य पुरुषार्थपर्यवसानादित्यर्थः । ( उपायानुष्ठानेति ) शास्त्रविप्रतिपादितफलरूप प्रतिष्ठादिवदुपासनविध्युपदिष्टब्रह्मस्वरूपविषय द

तदुपयोगिसिद्धार्थत्राधायोगाच्चेति ।

---

धोपि नयुज्यतइत्यर्थः । वयमप्येवमेव प्रतिज्ञ्मइतिभावः । इतिप्रतिवक्त व्यइत्यन्वयः । यद्वा ( राद्धमीमांसकैरिति ) अतस्तैर्नैयंशङ्काकार्येतिभावः॥ कबन्धमीमांसकैरेव तथाशंकायां भवद्भिः कथं प्रत्युच्यन्नइत्याशंकायां प्र त्युक्तिप्रकारमाह ( सिद्धेपीत्यादिना अयोगाच्चेतीत्यन्तेन ) ( स्वतइति ) प्रवृत्तिनिवृत्त्यविषयत्वेपि स्वतो निरतिशयपुरुषार्थस्य स्वेनापिलब्धुंयोग्य त्वेनानुसंहितस्य श्रवणं प्रीतिश्चयुज्यतएवेति नप्रयोजनाभावः । ननु य दिश्रवणादेव प्रीत्यर्थं ब्रह्मबोधनं तदाबालोपच्छन्दनादि वाक्यवदयथार्थ त्वेपि प्रीतिसंभवान्नतस्य ब्रह्मणि प्रामाण्यं, अतः प्रामाण्यलाभार्थमुपास नानुष्ठान शेषतया कार्ये प्रामाण्यं वाच्यम् , तथाचारोपितेनाप्युपासन सिद्धेर्न ब्रह्मणिवेदान्तानां प्रामाण्यमित्यत्राह (अर्थज्ञानस्येति ) स्वातंत्र्यं- उपायानुष्ठानमनपेक्ष्य प्रयोजनपर्यवसानं । ( तदुपयोगीति ) तच्छब्देन स्वातन्त्र्योपायानुष्ठाने विवक्षिते । अयंभावः , बालाद्युपच्छन्दनादाव प्यर्थतथात्वज्ञानादेव प्रीतिः । नचात्रापि तादृशभ्रमादेवप्रीतिः; बाध काभावेनौत्सर्गिक प्रामाण्यत्यागायोगात्, वाक्यान्तरेण तत्प्राप्त्युपायवि धानाच्च । उपायानुष्ठान शेषत्वपक्षेप्युपासनापेक्षित फलसमर्पकतया- प्रामाण्यं स्वर्गाद्यर्थवादवत्, विषयसमर्पकतयापि प्रामाण्यं - वाग्धेनु त्वादिवदत्र बाधकाभावात् । "तस्मिन्यदन्त" रितिसिद्धवदनुवादा त्, "ततोमांतत्वतोज्ञात्वा" "विदुःकृष्णंब्राह्मणास्तत्वतोये" इत्यादि ना तत्वज्ञानस्यैव मोक्षहेतुत्वश्रवणाच्च । स्वातन्त्र्यपक्षे तत्प्रेप्सापूर्वकत त्साधनप्रवृत्त्यादि मुखेनापि पुरुषार्थपर्यवसानं द्रष्टव्यम् । अत्रच स्वा तन्त्र्यपक्षे प्रत्यक्षादौ पशुधनादिस्वरूपं प्रतिपाद्य पर्यवसिते तत्प्रेप्सोः "चित्रयायजेत पशुकाम" इत्यादिना तत्साधनविधानवत् ब्रह्मपर वाक्ये ब्रह्मस्वरूपं प्रतिपाद्य पर्यवसिते तत्प्रेप्सोरुपासनादि विधान- मित्येकः प्रकारः, अस्मिन्पक्षे वाक्यभेदः । यद्वा "तपांसिसर्वाणिच यद्वदन्ती" ति सर्वस्य तपश्शब्दविवक्षितस्य वेदान्तस्य ब्रह्मपरत्वाव गमात् "तन्त्वौपनिषद" मितिच तथाऽवगमात् सर्वजगत्कारणत्वस र्वान्तर्यामित्व सर्वशेषित्व सर्वफलप्रदत्व सर्वकर्माराध्यत्व सकलविद्या प्रसाद्यत्वनुक्तप्राप्यत्व निरतिशयानन्दत्वादि विशिष्टब्रह्मस्वरूपं प्रति

कर्मशेषभूतस्यात्मनः शास्त्रान्तराद्विचारइति वदतापि शारीरकं शास्त्रै कदेशइति स्वीकर्तव्यम्, अन्यतस्तदयोगात् । तेनैव दन्तिभुक्तकपित्थन्याये न निस्सारएव वेदांतइति नास्तिकानां वचनमवधूयते । अस्तु तर्हि ब्रह्मै कविषयतया विचारसंकोचः अतिशयितपुरुषार्थप्रतीतौ " स्थितेऽरविन्दे " इति न्यायात्ततारादिति चेन्न, कर्मविचारस्य कैश्चिदप्यननुष्ठानप्रसंगात् । अस्त्विति चेन्न, प्रत्यक्षविरोधात् । अतिशयितपुरुषार्थ प्रतीत्यभावात्कस्यचिदुपपत्तिरिति चेन्न । तदभावस्तस्य त्रय्यन्तभागानध्ययनाद्वा तत्सहकारि विरहाद्वा, नाद्यः - विधेः कृत्स्नविषयत्वस्थापनात् । नद्वितीयः - सांगाध्ययनादेव तत्रापि तत्सिद्धेः । नहि सांगाध्ययनविधेस्तत्रैव सर्पमारः, अन्यत्रापि तत्प्रसंगात् । तथात्वेत्वाकशास्त्रारंभः । तत्सिद्धावप्यनादि

---

पाद्यम्, अत्राप्येतादृशब्रह्मप्रतिपादनेन प्रीत्यर्थतया पुरुषार्थपर्यवसानेऽपि ब्रह्मस्वरूपप्रतिपादने उपसर्जनतया प्रसक्तोपायानुष्ठानेनापि पुरुषार्थपर्यवसानमित्यपरः प्रकारः, अत्रच नवाक्यभेदः । उपायानुष्ठान शेषत्वेतु उपायविध्यपेक्षित विषयफलार्पकतया उपसर्जनतया ब्रह्मप्रतिपादनं, अत्रापि नवाक्यभेदइति । प्रसङ्गात्कर्ममीमांसकैकदेशिनापि - नेयं शंकाकार्येत्याह ( कर्मशेषेति ) ( अन्यतइति ) शास्त्रैकदेशादन्यतइत्यर्थः ( तेनैवेति ) अतस्तन्निरासोपि नास्माकमेव भरइतिभावः । ( अस्त्विति ) तथाच चतुर्ष्वपि पुरुषार्थेषु रागसंभवादिति परिहारोसंगतइतिभावः । तत्सहकारीति व्युत्पत्त्यादिकं विवक्षितम् । ( तत्रापीति ) कर्मभागइव ब्रह्मभागेपि व्युत्पत्त्यादिसहकारिसिद्धेरित्यर्थः । ( तत्रैवेति ) त्रय्यन्तभागे । तथाच ब्रह्मणि विचारं संकोचयतस्तवाभिमता ब्रह्ममीमांसापि नस्यादित्यपिहृदयम् । नचायमिष्टप्रसंगइत्याह ( तथात्वेति ) अन्यत्रापिसर्पमारे । ( तत्सिद्धावपीति ) व्युत्पत्त्यादिसहकारि सिद्धावपीत्यर्थः । तथाच सत्पथवर्त्यनुग्रहाय ब्रह्मविचारार्थमेव शास्त्रप्रवृत्तिर्युक्ता । यद्यप्यन्येप्यनुग्राह्याः तथापि दुर्वासनादार्ढ्यात्केषाञ्चित्कर्मण्येव जिज्ञासा । तदभावात् " स्थितेरविन्द " इतिन्यायेन केषाञ्चित् ब्रह्मण्येव जिज्ञासेति नैकस्योभयजिज्ञासासंभव इति सामान्यतो जिज्ञासानुरोधेन शास्त्र

दुर्वासना दार्ढ्यादपथे प्रवर्तन्ते कर्ममीमांसका इतिचेन्न, त्वयापि विविदि षासाधनाधिकारे कर्मणा सत्पथत्वस्वीकारात् ।

तथापि तद्विचारश्शारीरक शेषइतिचेत्, सिद्धंशास्त्रैक्यं। कर्मस्वरूपा दिविचारमन्तरेण विविदिषार्थविनियोगायोगात्। वेदनार्थविचारपक्षेपि किंपु न । भवान्तरीय सुकृतविशेषमृदितकषायस्य कस्यचिदयत्नेनविविदिषोत्पत्तौ किंतदर्थकर्मविचारेणेति चेन्न, तथैवकस्यचिदत्यन्तमृदितकषायस्य जाति स्मरणादिवसिद्धज्ञानतया शारीरकेप्यनारंभात् । तदर्हस्य तदारंभइतिचेत् ,

---

प्रवृत्तिरितिभाव । (त्वयापीति) सत्पथत्वस्यैनुग्रहेपि कर्माधिकार्यनुग्र हाय कर्ममीमांसापेक्षितेति भावः । (तथापीति) सत्पथत्वस्वीकारेपि विविदिषार्थकर्मणामेव सत्पथत्वं , तानिच यज्ञादिकर्माणि प्रसिद्धयज्ञा दिभ्योभिन्नानि मासाग्निहोत्रवत् , तद्विषयविचारश्च विविदिषार्थत्वादि चिन्तैव, तथाच तद्विचारस्सत्पथत्वेन स्वीकृतकर्मविचार श्शारीरकशे षत्वात्तत्रैव क्रियते , जैमिनीयकर्म विचारश्च प्रसिद्धकर्मविषयः - तेषां चापथत्वात्तद्विचारोपि तथेति नतेनैकशास्त्र्यमित्यर्थः । (कर्मस्वरूपेति) विविदिषार्थकर्मणामन्येषांच मासाग्निहोत्र नैयमिकाग्निहोत्रवद्भेदोवास्तु , नित्यकाम्य ज्योतिष्टोमवद्विनियोग पृथक्त्वमात्रंवास्तु , सर्वथापि कर्म स्वरूपविचारा भावेऽनुष्ठानानुपपत्तेः विविदिषार्थ विनियोगोनयुक्तः , वैयर्थ्यप्रसङ्गात् । अतोवश्यापेक्षितः कर्मविचारइति तेनैकशास्त्र्यमित्यर्थ । भवद्भिर्विविदिषार्थत्वा नङ्गीकाराद्भवत्पक्षे कथं तच्छेषत्वेनैक शास्त्र्य मित्यत्राह (वेदनेति) विविदिषार्थत्वेपि कर्म मीमांसा कथंचिद्ब्रह्मजि ज्ञासोपयोगिनी , वेदनार्थत्वे त्वङ्गविषयत्वाद्ब्रह्मशास्त्रेण सुतरामभिन्नेति भावः । (भवान्तरीयेति) तथाच तत्र ब्रह्ममात्रे विचारसंकोचस्संभव तीतिभावः । मृदितकषायस्येत्यनेन " कषाये कर्मभिः पक्व " इतिस्मृ त्यनुसारात् प्रतिबन्धकपापापनोदनेन कर्मणां विविदिषार्थत्वं यज्ञादि वाक्ये विवक्षितमिति सूचितम् । (जातीति) जन्मान्तरसुकृतविशे षाज्जातिस्मरण धर्मरुच्यादिकं यथा सिद्ध्यति तथा ज्ञानमपि येषांसिद्धं ' स्वयमागतविज्ञाना " इत्यादिप्रमाणात्तेषां तान्प्रत्यनुपयोगात् ब्र ह्ममीमांसापि व्यर्थेत्यनारंभस्स्यादित्यर्थ । तदर्हस्य—ब्रह्मजिज्ञासोः ।

एवमुभयार्हस्य उभयारंभइतितुल्यं । नह्यनधिकारिणंविधि विकुरुते ; रागोऽपितथा । नह्यशकनीयमर्थं वेदोऽपि विदधातीतिन्यायात् । यदा च यावज्जीव मनुष्ठेयं ज्ञानमपवर्गोपायइतिसेत्स्यति तदा तदुपचयार्थं तदर्थविविदिषानुवृत्त्यर्थंवा सत्कर्मणांनित्यानुष्ठेयत्वेन विचारोऽवश्यंभावी ।

---

(उभयार्हस्येति) कृत्स्नवेदार्थजिज्ञासोः कृत्स्नविचारारंभः । कर्मविचारापेक्षा नियमाभावो नैकशास्त्र्यभञ्जकः - तथा सति जन्मान्तरीयसुकृतवशा द्वेदप्रामाण्ये सुदृढविश्वासपुरुषस्य प्रमाणलक्षणस्या नपेक्षितत्वात्तस्या प्युत्तरलक्षणैरैकशास्त्र्यं न स्यादिति भावः । ननु उभयार्ह प्रतिकृत्स्नवि चारारंभोयमिति कुतः, एकैकार्ह प्रत्येकैकारंभइति कुतो नस्यादित्यत्रा ह (नहीति) विचारोहि विधिप्रयुक्तोवा स्यात् रागप्रयुक्तोवा स्यात्, तत्राध्ययनविधे रर्थज्ञानकामाधिकारकत्व पक्षे विचारस्याध्ययनविधि नाक्षेपाद्विधिप्रयुक्तता, नचाध्ययनविधिः कृत्स्नार्थज्ञानकामाधिकारकः, तत्तद्वाक्यार्थज्ञान कामनायास्तत्तद्वाक्या ध्ययनाधिकारत्वे कृत्स्नाध्ययन नियमानुपपत्तेः । तथाच तद्विधिमूलविचारोऽपि तादृशाधिकारि विषय कएव । अतो नैकैकमात्रजिज्ञासुं प्रति विधिः प्रवर्तकः, तस्यानधिकारि णं प्रत्यप्रवर्तकत्वात् । रागप्रयुक्तिपक्षेपि स्वाङ्गाध्ययनविधेः कृत्स्नगोच रतया तदधीनापात प्रतीत्युत्थापित रागोऽपि कृत्स्नार्थज्ञानगोचरोयु क्तइति विध्यधीनस्तदुपाय विचारराग: कृत्स्नार्थज्ञानकामं प्रत्येव प्रव र्तकः, विधिवदेव तस्याप्यनधिकारिणं प्रत्यप्रवर्तकत्वात । अत्रच फल रागोऽधिकारस्थानीयः तथाच उपायरागः स्वस्मिन्नधिकारिस्थानीयं फ लार्थिनमेव प्रवर्तयति विधिवदित्यर्थः । (नहीति) अशकनीयार्थविधा यकत्वं यथावेदस्य न संभवति, तथानधिकारिप्रवर्तकत्वमपि विधिरा गयोर्नसंभवतीत्यर्थः । एवं विविदिषार्थत्वपक्षे ब्रह्ममात्रेविचारसंकोचं पुरुषविशेषेभ्युपगम्य तदन्यपुरुषविषयतया कृत्स्नविचारारंभस्समर्थितः वस्तुतस्तु सत्कर्मणां ज्ञानार्थत्वे विविदिषार्थत्वेवा ब्रह्ममात्रे विचारसं कोचः क्वापि पुरुषे नसंभवतीत्याह (यदाचेति) यद्यपि वेदनार्थत्वे त दुपचयार्थं कर्मापेक्षा, विविदिषार्थत्वेतुकथम्, उत्पन्नायास्तस्यास्स्वय

नच जन्मांतरकर्मबलाद्यावज्जीवं विविदिषा स्यादितिनिश्चेतुं शक्यं, प्राक्तनैरद्यतनैर्वा प्रबलैर्विरोधिकर्मभिः तत्प्रतिबन्धशंकयापि नित्यं सत्कर्मणां संग्राह्यत्वात् । अन्यथा प्राक्तनैरेव कर्मभिर्वृष्टिस्स्यादिति कारीर्यादिकं नानुष्ठीयेत। नच नित्यनैमित्तिकविधि.विविदिषोत्पत्त्या निवर्तते, वर्णाश्रमादिनिबन्धनत्वात्तस्य । वर्णाश्रमाद्यभिमाननिवृत्त्या तन्निवृत्तिरितिचेत् , केयमभिमाननिवृत्तिः; किन्तद्भ्रमस्यनिवृत्तिः , उतस्वसमवेतत्व भ्रमस्यानिवृत्तिः , किंवा देहात्मतादात्म्यभ्रमस्य निवृत्तिः , अथवा वर्णाश्रमाद्याश्रय पिण्ड संबन्धभ्रान्तिनिवृत्तिः, अथवा पिण्डस्यैवनिवृत्तिः । नाद्यः - असिद्धेः। नद्वितीयः - कर्ममीमांसकानामपि पारलौकिकात्मविदां वर्णादेस्स्वसमवेतत्वभ्रमाभावेन कर्मणामधिकार्यभावप्रसङ्गात् ।

---

मेवानुवृत्तेः , विविदिषायामुपचयो सिद्धेश्चेत्यत्राह ( नचेति ) हेत्वभावादितिभावः । निश्चये प्रतिबन्धसद्भावादपि न निश्चयसंभवइति हेत्वन्तरोपन्यासपूर्वकं निश्चयाशक्यतामुपसंहरन् तत्फलितं कर्मणां संग्राह्यत्वमाह ( प्राक्तनैरिति ) प्रतिबन्धशंकयेत्यनन्तरं उक्तनिश्चयाभावेनेतिशेषः । संग्राह्यत्वादिति पञ्चम्या विचारोवश्यंभावी त्यध्याहृतपदेनान्वयः । कस्यचिदुक्तनिश्चय संभवेपि कर्मापेक्षामुपपादयति ( नचेति ) ततश्च नविचारसंकोचइति भावः । आत्मनि वर्णाश्रमादेरभावात्तदभिमान निबन्धनएव विधिः , नचाभिमानो विविदिषायाःप्रागेव नित्यानित्यविवेकबलान्निवृत्तइति तन्निबन्धनविधिरपि तदानींनिवृत्तइति जन्मान्तरकर्मबलसिद्धविविदिषस्य तदर्थं कर्मविचारापेक्षाया अभावाद्ब्रह्ममात्रे विचारसंकोच इत्याशयेन शंकते ( वर्णाश्रमेति ) ( तद्भ्रमस्येति ) तत्स्वरूपाध्यासस्येत्यर्थः । ( किंवादेहात्मेति ) वर्णाश्रमशब्देनतद्विशिष्टोदेहः, अभिमानशब्देनतादात्म्याभिमानश्च विवक्षितुंशक्यतइतिभावः ( पिण्डस्यैवेति ) अभिमानशब्देन धर्माध्यासः तस्यचवर्णाश्रमशब्देनदेहपरेण कर्मधारयोविवक्षितुंशक्यइति भावः । ( असिद्धेरिति )

नहि देहात्मभ्रमवंतंप्रति धर्मोपदेशः । न तृतीयः — भ्रमनिवृत्तिर्हि देहातिरिक्तात्मविस्रंभौपयिकतया पारलौकिककर्मानुष्ठान योग्यतामेवाव हेदिति कथंतया सा निवर्तते । न चतुर्थः - तत्संबन्धस्य सत्यत्वेन भ्रमत्वा सिद्धेः। न पंचमः - ब्रह्मविचारस्याप्यनारंभप्रसंगात् प्रत्यक्षादिविरोधाच्च। वास्तवनिवृत्तिमात्रविवक्षाया मविरोधइतिचेन्न , तस्य कर्माधिकारदशा यामपि भवता स्वीकारात् । किंच यावताकर्माधिकारो निवर्ततइति मनुषे तावता वेदान्तश्रवणाद्यधिकारोपि निवर्ततइति ब्रह्ममीमांसैव न स्यात् । नचायमिष्टप्रसंगः , तत्वज्ञानोदयात्पूर्वं तदनभ्युपगमात् । न नु कर्ममीमांसाया वेदान्तविचारानुपयुक्तत्वा न्न तया सहास्यैकशा स्त्रयमितिचेन्न , अनुपयोगासिद्धेः । को सावुपयोगइतिचेत् , न्यायो पजीवनं तावत् । तथाहि - बाह्यान्तरनिमित्ताप्रामाण्य निराकरणेन प्र माणलक्षणं तावत्कृत्स्नोपयुक्तं । भेदलक्षणोपजीवीच गुणोपसंहारपादः ।

---

मोक्षदशाया मेवतदध्यासनिवृत्ते रिति भावः । ( तत्संबं - धस्येति ) देहसंबंधस्याप्रातिभासिकत्वेन तज्ज्ञानस्य प्रातिभासिकभ्र- मत्वासिद्धे स्तस्य मोक्षात्प्रागनिवृत्तेरित्यर्थः । ( यावतेति ) श्रवणविधिर नित्रैवर्णिकाद्यधिकारिकः । तथाचानिवृत्ताभिमानेनुकर्मविचारस्संभवति, ब्रह्मविचारस्तु नित्यानित्य विवेकाधिकारकत्वा न्निवृत्ताभिमानस्यै वेति सकुत्रापि नस्यादितिभावः । एवं विचारसंकोचाभावात्कृत्स्नवे दार्थनिर्णयोद्देशेन शास्त्रप्रवृत्त्यौचित्यादेकशास्त्रयमिति स्थितं । तत्र विचारशास्त्रयोस्तथापि परस्पराकांक्षाविरहात्कथमैकग्रन्थ्य पर्यन्तैक शास्त्रयमिति चोदयति ( नन्विति ) यद्यपि विद्यायां कर्मणामुपयोग उक्तः तथापि विचारयोः परस्परमुपयोगानुक्ते राकांक्षाविरहान्नैकशा स्त्रयमित्याक्षेपो युक्तः । ( न्यायेत्यादि ) उपयोगइत्यनुषङ्गः । ( बाह्येति) बाह्यहेतुसमुत्थाप्रामाण्यं प्रथमपादे निराक्रियते । आन्तरहेतुसमुत्थाप्रामा ण्यं त्रिपाद्यां । ( कृत्स्नेति ) पूर्वोत्तरभागविचारात्मके कृत्स्नशास्त्रे उपयु क्तं ( भेदेति ) " सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषा " दित्यत्र तावत " एकंवा संयोगरूपचोदनाख्या विशेषा " दिति शाखान्तराधिकरण

तार्तीयाश्च श्रुतिलिङ्गाद्यसार्वत्रिकाः । प्रयुक्तिश्च वर्णाश्रमादिधर्माणां विद्याप्रयुक्तत्वाश्रमप्रयुक्तत्वादिविमर्शे निविशते । गतिचिन्तायांच पा ञ्चमिकः क्रमः ।

---

न्यायव्युत्पादन मुपजीव्यते । नचेदमेवं तद्व्युत्पादनमितिवाच्यं, चोद नाद्यविशेषादित्यादि शब्दस्य संयोगरूप चोदनाख्याविशेषादिति पा ठापेक्षत्वात् । एकमिति साध्यनिर्देशश्च तन्त्रचार्योपजीवनेन तत्सा ध्यलाभादेव । तथा " गुणश्चापूर्वसंयोगे वाक्ययोस्समत्वा " दित्यधि करणव्युत्पादितो गुणभेदो " नवाप्रकरणभेदात् परोवरीयस्त्वादिव " दिति च्छान्दोग्य बृहदारण्यकोद्गीथ विद्ययोर्भेदार्थमुपजीव्यते । तथा " नानाशब्दादिभेदा " दित्यत्र शब्दान्तराभ्यासादिभि र्भेदव्युत्पादनो पजीवनमादि शब्दात्प्रतीयते । ( तार्तीयाइति ) " श्रुत्यादिबलीयस्त्वा च्च नबाधः " " लिंगभूयस्त्वात्तद्धि बलीयस्तदपी " त्यादिना तार्तीय न्यायानामेवोपजीवन मितिगम्यते । ( प्रयुक्तिश्चेति ) " विहितत्वाच्चाश्र मकर्मापी " त्यधिकरणेन विद्यांगत्वाश्रमांगत्व निर्णये कृते चातुर्वर्ण्या वेन प्रयुक्तिस्सिध्यतीत्यर्थः । ( गतिचिन्तायामिति ) " वायुमब्दादवि शेषविशेषाभ्या " मित्यधिकरणे पाञ्चमिकन्याय उपजीव्यते । तथाहि कौषीतकिनः " सएतंदेवयानं पन्थानमापद्याग्निलोकमागच्छति सवा युलोकं सवरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक " मित्यग्निलोकादनन्तरं वायुलोकमधीयते । वाजसनेयि नस्तु " यदावै पुरुषोस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै सतत्रवि जिहीते यथा रथचक्रस्यखन्तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छ ती " त्यादित्यात्पूर्वं वायुमधीयते । तत्र कौषीतकिनां पाठक्रमेणाग्नि- लोकशब्दोक्तादर्चिषः परत्वेन वायुः प्राप्तः । उक्तवाजसनेयश्रौत क्रमेण पाठक्रमाद्बलीयसा तद्बाधेनादित्यात्पूर्वं वायुर्निविशते । संवत्सरस्तुच्छा न्दोग्ये मासात्परं श्रूयते " तेर्चिषमभिसंविशन्ति अर्चिषोहरह्न आपूर्य माणपक्षमापूर्यमाण पक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसोविद्युतं तत्पुरुषोमानव-

कर्ताविद्याधिकारिचिन्तने विशेष्यते । अतिदेशादयश्च " तदेव रूपं यदमुष्य रूपम्" इत्यादिषु । .... ....

---

स एनान्ब्रह्मगमयती " ति । वाजसनेयके तु " अर्चिषोह " रित्यादिमासान्तं पठित्वा "मासेभ्यो देवलोकन्देवलोकादादित्य" मिति मासात्परतो देवलोकः श्रूयते । तत्र द्वयो श्रुतिस्वेष्यधिककालानां न्यूनकालोत्तरत्वेनाहःपक्षादिषु दर्शनादर्थक्रमेण संवत्सरस्य मासात्परतो निवेशस्सिद्ध्यति, तथा चार्थस्य क्रमनियामकत्वं श्रौतक्रमस्थपाठक्रमाद्बलीयस्त्वं च पंचमसिद्धमुपजीव्याब्दादित्ययोरन्तराळे वायुदेवलोकशब्दार्थनिवेशं सिद्धं कृत्वा " वायुमब्दा " दित्यधिकरणे वायुदेवलोकशब्दयोर्भिन्नार्थत्वं पूर्वपक्षीकृत्यैकार्थ्यं प्रसाध्यते । एवं " तडितोधि वरुणस्संबन्धा " दित्यधिकरणेपि पांचमिकन्यायउपजीव्यते, तत्र च वरुणस्य कौषीतकिपाठक्रमादादित्यात्पूर्वत्वेप्राप्ते मेघोदरवर्तित्वलक्षणविद्युत्संबन्धाद्वर्षाद्विद्युत ऊर्ध्वं निवेशउक्तः । अर्थक्रमस्य बलीयस्त्वं च पञ्चमसिद्धं तत्रोपजीव्यं । ( कर्तेति ) " फलार्थत्वात्कर्मणश्शास्त्रं सर्वाधिकारं स्यात् " इत्यधिकरणे समर्थानामेवाधिकारो नान्येषां शक्यांगमात्रोपसंहारेणेति निर्णयमुपजीव्यासुरादीनां देवादीनां च किं सामर्थ्यमस्ति उत नेत्यादिचिन्तया अधिकारिविशेषनिर्णयः क्रियते । नैष्ठिकादिभ्रष्टानाञ्च पातित्यस्मरणेन वैदिककर्ममात्रानधिकारिणामसामर्थ्यात ब्रह्मविद्यानधिकारश्च प्रतिपाद्यते । एवं स्वर्गकामाधिकरणेन फलकामस्याधिकारे सिद्धे मोक्षकामानां देवादीनामप्यधिकारोस्ति नवेति चिन्त्यत इत्यर्थः । ( अतिदेशादयश्चेति ) " अन्तस्तद्धर्मोपदेशा " दित्यत्र भाष्ये – " अन्तरादित्येन्तरक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव, तद्धर्मोपदेशात् , जीवेष्वसंभवंस्तदखिलस्यैव परमात्मनो धर्मोयमपहतपाप्मत्वादिः ' स एष सर्वेभ्यः पाप्मभ्य ' इत्यादिनोपदिश्यत " इत्युक्तं । अनन्तरं हिरण्मयपुण्डरीकाक्षत्वादिविशिष्टाप्राकृतदिव्यविग्रहयोगश्च परमात्मनः प्रसाध्य " अतः परस्यैव ब्रह्मण एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः, अत आदित्यमण्डलाक्ष्यधिकरण आदित्यादिजीवव्यतिरिक्तः परमात्मैवे " त्युपसंहृतम् । तत्र अक्षिपुरुषेऽपहतपाप्मत्वविलक्षणविग्रहयोरतिदेशतः प्राप्तिमुपजीव्य ।

तत्र विग्रहप्राप्तिः " तदेवरूपं यन्मनुष्यरूप " मित्यतिदेशात् , अत्ररूप शब्दस्य वर्णपरत्वविग्रहपरत्वसंशये " एककपालानां वैश्वदेविकःप्रकृति " रिति सूत्रोक्तन्यायेन विग्रहस्यातिदेश इति निर्णयः । तथाहि- वैश्वदेवे " द्यावापृथिव्यएककपाल " इतिश्रुतं, अनन्तरं वरुणप्रघासे- " कायएककपाल " इति श्रुतं, अनन्तरं साकमेधे " एतद्ब्राह्मणएकक- पाल " इति, तत्र किंवैश्वदेविकस्यैककपालस्य ब्राह्मणमतिदिश्यते, किं वावारुणप्रघासिकस्येति संशये - वारुणप्रघासिकेऽल्पं प्राकृतं वैश्वदेविके बहु, अतो भूयोधर्मलाभाद्वैश्वदेविकस्यातिदेश इत्युक्तं । अत्रापि रूपश- ब्देन वर्णविशेषाभिधानेऽप्यतिदेशाद्विग्रहपरत्वे तच्छब्देन प्रकृतपुण्ड रीकाक्षत्वहिरण्यश्मश्रुत्वादि परामर्शाद्भूयोधर्मलाभाद्विलक्षणविग्रहाति- देशइति निर्णयः । यद्यपि तत्रायंपूर्वपक्षः - अव्यवहितत्वादेतच्छब्देन वा रुणप्रघासिकस्यातिदेशइति सिद्धान्तितं, तथाप्यत्र तादृशबाधकाभावा त्पूर्वपक्षन्यायेनैवार्थनिर्णयः । अपहतपाप्मत्वमपि " यन्नामतन्नाम " त्य तिदेशप्राप्तनामबलात् । उदित्येतन्नामह्यत्रातिदिश्यते, तस्यच " तस्यो दितिनाम सएषसर्वेभ्यः पाप्मभ्यउदित " इत्यादित्यपुरुषे प्रवृत्तिनिमि त्तंवर्णितं । तथाच तदन्यप्रवृत्तिनिमित्तकल्पने गौरवादुपास्यगुणविशेषलाभा च्च तत्प्रवृत्तिनिमित्तस्वीकारा दपहतपाप्मत्वलाभः । यथा 'मासमग्निहोत्रं जुहोति' त्यत्र मासाग्निहोत्रनैयमिकाग्निहोत्रयो रग्निहोत्रशब्दप्रयोगाद्विशे- षादुभयत्रापि मुख्यत्वे प्राप्ते " एकस्यत्वभिधेयत्वे गौणत्वेनापि संभ वात् । नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः ॥ " इतिएकत्रैव मुख्यत्वमु क्तं । तथात्राप्यनेकार्थत्वपरिहाराय तदेव प्रवृत्तिनिमित्तमिति सिद्धय- ति । अतिदेशादयइत्यादिशब्देन ऊहादयो विवक्षिताः । अयंभावः - " स र्वापेक्षाच्च यज्ञादिश्रुतेरश्ववत् " दित्यत्र यज्ञादीनां विद्याङ्गत्वं प्रतीयते , यज्ञानाञ्चाग्नेयसौर्यादीनामङ्गत्वं साङ्गानामेव , अतो यज्ञांगभूतस्य " अग न्मसुवस्सुवरगन्मे " त्यादिमन्त्रस्य स्वर्गरूपफलप्रकाशकस्य विद्यार्थ यज्ञाङ्गत्वं " अगन्मविद्यांविद्यामगन्मे " त्यूहसापेक्षं , अतस्सांगस्य य ज्ञस्य विद्यार्थत्वनिरूपणमूहसापेक्षं, ऊहश्च नावमिकन्यायाधीनः । त त्राहि - " फलदेवतयोश्च " इत्यधिकरणे सौर्यादिष्वतिदेशतः प्राप्तस्य- " अगन्मसुव " रितिमन्त्रस्य 'अगन्मब्रह्मवर्चस' मिति सौर्यफलप्रकाशकपद

प्रक्षेपेणोद्दउक्तः । तथा " हानौतूपायनशब्दशेषत्वात् " " कुशाच्छन्दस्तु
त्युपगानवत्तदुक्त " मित्यत्र शाखान्तराम्नातोपायनवाक्यस्य हानिवा
क्यशेषत्वं कुशादिदृष्टान्तेनोपपाद्य एकवाक्यत्वसंभवे हान्युपायनयोश्चि
न्तने विकल्पापादकवाक्यभेदो न न्याय्यइत्यत्र " तदुक्त " मिति सू
त्रखण्डे दाशमिकपर्युदासाधिकरणसम्मतिप्रदर्शनेन तन्न्यायउपजीव्य-
ते । तत्राहि – " नार्षेयंवृणीत " इति महापितृयज्ञाम्नातं " यजेयुयेयजामहं
करोति – नानूयाजेष्वि " त्यनारभ्याधीतञ्च वाक्यमधिकृत्य विचार्यते-
किं वरणयेयजामहाभ्यां प्रतिषेधस्य विकल्पः, उततयोर्निवृत्तिरिति - त
त्र प्रतिषेधे नञोमुख्यार्थत्वलाभात पर्युदासे कात्यायनमते समासप्र-
सङ्गाच्च प्रतिषेधः, तथाच विकल्पइति " प्रतिषेधः प्रदेशेनारभ्यविधा
नेच प्राप्तप्रतिषिद्धत्वाद्विकल्पस्स्या " दितिसूत्रेण पूर्वपक्षंकृत्वा,
" अपितु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्या"
दिति सूत्रेण सिद्धान्तितम् । तस्यार्थः-एकवाक्यत्वलाभान्नासान्वयेपि सम ।
सविकल्पस्य पाणिनिस्मरणाद्दष्टदोषदुष्टविकल्पस्यान्याय्यत्वाच्च पर्युदा
सः, तथाच वरणयेयजामहयोर्निवृत्तिरिति । तथा " नस्थानतोपी "
त्यधिकरणे " दर्शयतिचाथोअपिस्मर्यते " इत्यादिसूत्रेषु श्रुतिर्दर्शयति
गुणमित्युक्तिः – पदाहवनीयन्यायेन विशेषनिषेधस्य विहितविशेषेतरविष
यत्वमभिप्रेत्य । सच न्यायोदाशमिकः । तथा अहीनसत्रयोर्लक्षणतोभेदे
तदुपजीवनेन " द्वादशाहवदुभयविधंबादरायण " इत्युक्तं । एवं " पूर्व.
विकल्पःप्रकरणात् स्यात् क्रियामानसव " दिति विद्यामयमनश्चितादी
नां विद्यामयक्रत्वंगत्वसाधनार्थेधिकरणे पूर्वपक्षे विद्यामयस्यापि क्रिया
मयक्रत्वंगत्वे मानसग्रहोनिदर्शितः । तस्यच द्वादशाहांगत्वं दाशमिके
" मानसमहरन्तरं स्यात् भेदव्यपदेशा " दित्यधिकरणसिद्धमुपजीव्यते।
एवं तन्त्रन्यायो " विहितत्वाच्चाश्रमकर्मापि " त्यत्रोपजीव्यते। तत्राहि-
कर्मणामाश्रमांगत्व विद्यांगत्वसाधनपूर्वक मुभयार्थकर्मणामैक्यसाधनस्य-
तन्त्रेणानुष्ठानं फलमित्युक्तम् । पृथक्प्रयुक्तिशक्तिमदुभयगोचरत्वे दे-
शकालाद्यैक्येच सकृत्करणं तन्त्रं, तच्चैकादशेस्थापितम् । विद्यार्थकर्म
णैव प्रसंगान्नित्यसिद्धिरित्याचार्यमेघनादारिसूरयः । तेषामेतद्विचारस्य

अतः कर्ममीमांसानिरूपितस्वरूपैस्तत्तन्न्यायैरेवहिवेदांतार्थोविचार्यते । अपूर्वास्त्वल्पकतिपयेन्यायाः । विद्याङ्गभूतयज्ञादिस्वरूपशिक्षणञ्च । अन्यथा"यज्ञेने"त्यादिवाक्यार्थानवबोधप्रसङ्गात् । नह्यविदितपदार्थविशेषोवाक्यार्थावसायीस्यात् । यज्ञादिकल्पनंच तत्रतत्राक्रियते, तदपि यज्ञादिस्वरूपनिरूपणसापेक्षं । यच्चातिशयितपुरुपार्थप्रतीत्यातदर्थीवेदान्तभागएव प्रवर्ततामिति, तत्रेयं प्रतीतिः किमापातसम्भवा उत निर्णयात्मिका, नप्रथमः "अपामसोमममृताअभूम अक्षय्यंहवैचातुर्मास्ययाजिनस्सु कृतं भवति,, इतिकर्मभागेप्यक्षयफलापातोपलम्भात् , ब्रह्मभागेऽपि "नप्रेत्यसंज्ञास्ती,, त्यादिभिरपुरुपार्थापातोपलम्भात् । ननुपूर्वापरवाक्यानुगुण्यात्तेपां स्तुतिमात्रपरत्वम् , अस्यतुवाक्यस्य तस्मादेवपरमपुरुपार्थ एव तात्पर्यमिति वैषम्यमस्तीतिचेत् ; किंतेन , अप्रमितत्वेन विचारनियमं प्रत्यनुपकारकत्वात्। नद्वितीयः — मीमांसयाविनातदसिद्धेः । तत्वविदुपदेशा त्तत्सिद्धिस्संभवतीतिचेत् , तर्हि ब्रह्ममीमांसायाअप्यनारम्भस्स्यात् -तदुपदेशातएव ब्रह्मस्वरूपसिद्धेः, ततएव भ्रमनिवृत्तेश्च । .... ....

---

प्रसंगःफलं । उपयोगान्तरमाह ( विद्येति ) विद्यांगभूतेत्यनेनांगांगिविचारत्वाद्दर्शपूर्णमास प्रयाजादिशास्त्राणामिव परमशास्त्रैक्यमवर्जनीयमिति सूचितम् । अनेन शारीरकतृतीयाध्यायेनैक्यमुक्तं भवति । 'यज्ञे' त्यादिना " सर्वापेक्षाचे " त्यनेन ऐक्यमुक्तंभवति । उपयोगान्तरमाह ( यज्ञादीति ) अस्तुतर्हि ब्रह्मैकविषयतया विचारसंकोचः, अतिशयितपुरुषार्थप्रतीतौ " स्थितेरविन्द " इति न्यायावतारादित्यत्रबोधे, यद्युक्तहेतुना ब्रह्ममात्रे विचारसंकोचः तदा कर्मानुष्ठानस्यैवाभावात्प्रत्यक्षविरोधः, कथंचित्तदुपपादनेच शास्त्रैक्यंसिद्धमित्यनिष्टापादनेन संकोचकत्वासंभवेन परिहार उक्तः । इदानीमतिशयितपुरुषार्थप्रतीतिरूपहेत्वंशं दूषयितुमनुवदति ( यच्चातिशयितेति ) हेत्वंशानुवादे तात्पर्यम् - ( ननुपूर्वापरेति ) ततश्च कर्मफलस्य वस्तुतः क्षयिष्णुत्वमेवेति भावः ( किन्तेनेति ) वास्तववैषम्येणेत्यर्थः । ननु साक्षात्कारस्य भ्रमनिवर्तकत्वात्तस्य च श्रवणादिजन्यत्वान्मीमांसापेक्षेत्यत्राह ( ततएवेति ) स्वतो परोक्षवि

अत एकस्यैव पुरुषस्य वेदोदितसर्वपुरुषार्थयोग्यतामाश्रित्य एकव्याख्ये यव्याख्यानात्मना विंशतिलक्षणमेकं शास्त्रमिति । ....

---

षयेत्वन्मते अविचारितेनापि शब्देन साक्षात्कारस्यैवोत्पादात्, अन्यथा विचारितेनापि तदनुत्पादादिति भावः (अतइति) एकग्रन्थत्वपर्यन्तमैकशाख्यमिहसाध्यं – तस्यैव क्रमहेतुत्वात्, तत्रैकव्याख्येयव्याख्याना-त्मत्वं हेतुः। एकव्याख्यानात्मत्वेपि तदंशव्याचिख्यासयैव प्रवृत्तौ नो भयोरेकग्रन्थत्वमित्यत्रोक्तं (एकस्यैवेति) आत्मनेत्यनन्तरं प्रवृत्तमिति शेषः। पूर्वोक्तनीत्या प्राथमिकसामान्यजिज्ञासानुसारेणैव ग्रन्थप्रवृत्ति र्युक्तेतिभावः। एकव्याख्येयव्याख्यानात्मना प्रवृत्तमित्यत्र "अथातोध र्मजिज्ञासा" इति सूत्रस्वारस्यमभिप्रेतं । तत्रह्यथशब्दः कृत्स्नवेदाध्यय नानन्तर्यपरतया सर्वसम्मतः, अतश्शब्दोपि कृत्स्नवेदाध्ययननिर्वृत्तेर्हेतु-त्वपरतया, अत इदं पदद्वयं मीमांसाद्वयस्यापि सामान्येन कर्तव्यतां हेतुपूर्ववृत्तोपन्यासमुखेन साधयत् विंशतिलक्षण्यास्सामान्येन वेदार्थवि शदीकरणे शिक्षीर्षामूलतां तन्निबन्धनमैकग्रन्थ्यञ्च स्पष्टमाचष्टे। तथा एतत्सूत्राभिप्रेतौ पूर्वोत्तरपक्षहेतूअपि अविवक्षितार्थत्वविवक्षितार्थत्वे अनवकाशावकाशौ प्रवर्तकाभावतत्सद्भावौ वा साधारण्येन मीमांसामात्रस्यानारंभणीयत्वारंभणीयत्वसमर्थनमुखेन मीमांसायास्सामान्येन वे-दार्थविशदीकरणकर्तव्यताबुद्धिनिबन्धनत्वं तन्निबन्धनमैकग्रन्थ्यंच स्पष्टमाचक्षाते। नचैवंसति विंशतिलक्षणीजैमिनिनैवकर्तव्येति वाच्यम्। तत्कर्तव्यतां समर्थितवतैव तत्कर्तव्यमिति नियमे ईश्वरेणैव सकलकर्मानुष्ठानप्रसंगात्। नन्वव्यवहितस्वकृत्यारंभसमर्थनार्थं इदं सूत्रमित्यव्यवधानादवगम्यते, अन्यथा एतत्सूत्रानन्तरं प्रमाणप्रमेयेत्यादिशास्त्रस्यापि-प्रवृत्तिप्रसंगात्। अतएवोक्तं – "यदाहि धर्मजिज्ञासाकर्तव्येत्युक्त्वा शास्त्रमारभ्यमाणं दृश्यते तदा नूनमिदंशास्त्रं धर्मप्रतिपादनप्रयोजनमित्यवगम्यत" इति। अतएतत्सूत्रस्य साधारणत्वे जैमिनिनैव सर्वकर्तव्यमितिचेत्? उच्यते, धर्मजिज्ञासासूत्रस्य मीमांसामात्रसाधारण्यं तावत्सिद्धं, अधीतसांगसशिरस्कस्वाध्यायस्य पुरुषस्य वेदार्थजिज्ञासोदयात्तदनुजि-घृक्षया शास्त्रंप्रणेष्यता अविवक्षितार्थत्वादिनानारंभणीयत्वमाशंक्य विवक्षितार्थत्वादिभिरारंभणीयत्वसमर्थनात्, कृत्स्नवेदार्थजिज्ञासुपुरुषानुग्रहा-

र्थतश्च शास्त्रस्य अथातश्शब्दाभ्यामवगम्यते । एवंच शास्त्रप्रवृत्तिनि-
मित्तजिज्ञासासाधारण्यात्, साधारणजिज्ञासामूलशास्त्रसमर्थनार्थस्य सा
धारणविषयत्वौचित्यात्, अथातश्शब्दबलात्पूर्वोत्तरपक्षयुक्तिसाधारण्याच्च,
अस्य सूत्रस्य विंशतिलक्षणीसाधारण्यं सिद्धं । तत्र यदि प्रतिज्ञासा
धारण्ये सर्वं जैमिनिनैव कर्तव्यं नच तथाक्रियतइति विचिकित्सा-
जायेत, तदा गुरुशिष्याभ्यां सामान्यचिकीर्षामूलमेकमेव कार्यं परस्प
रसम्मत्या प्रत्येकावयवनिर्माणमुखेन निर्वर्त्यतइति समाधानमुचितं ।
ननु धर्मशब्देविद्यमाने कथं सूत्रस्य वेदान्तसाधारण्यं, धर्मशब्दस्यवे
दार्थपरत्वात् । नच धर्मशब्दलक्षणा दोषः, उक्तयुक्तिभिर्वाक्यतात्पर्ये-
निश्चिते तदनुसारेण लक्षणायाज्यायस्त्वात् । तदुक्तं पूर्वतन्त्रे "अभ्यु
दये कालापराधादिज्याचोदनास्याद्यथा पंचशरावे" "यस्यहविर्निरु
प्तंपुरस्ताच्चन्द्रमाअभ्युदेति त्रेधा तण्डुलान्विभजेत् येमध्यमास्स्युः ता-
नग्नयेदात्रेपुरोडाशमष्टाकपालं निर्वपेत येस्थविष्टास्तानिन्द्रायप्रदात्रेदधं
श्चरुं येक्षोदिष्ठास्तान्विष्णवेशिपिविष्टायशृतेचरुमिति", तत्र संशयः, किं
कर्मान्तरमिदमुतप्रक्रान्तस्यैव दर्शप्रयोगस्य पूर्वदेवताभ्योपनयो देवता
न्तरसंयोगश्च चोद्यतइति । तत्राग्नेर्देवतायास्तद्गुणस्य दातृत्वस्यच वि
धौ वाक्यभेदात्तद्विशिष्टंकर्मान्तरं विधीयते । एवं प्राग्दधियागोद्देशे-
न स्थविष्ठानांचरुत्वस्य दध्नोधिकरणत्वस्य इन्द्रस्य देवतायाः प्रदातृ
त्वस्य तद्गुणस्यचविधौ वाक्यभेदात्तद्विशिष्टं कर्मान्तरंविधीयते । एवं-
शिपिविष्टविष्णुदेवताकशृताधिकरणक्षोदिष्ठचरुहविष्कंकर्मान्तरं विधी
यतइति पूर्वः पक्षः । प्रकृतप्रत्यभिज्ञानात्तदेवकर्म – नच वाक्यभेदः अ
परित्यक्तयागान्वयानामेव सतां दधिस्थविष्ठादीनां देवतान्तरसंबन्धमा
त्राभिधानात् । देवतायास्तद्गुणस्यच विधानादपि न वाक्यभेदः, दातृ
त्वादिविशिष्टाग्न्यादेरेकस्यैव संप्रदानकारकस्य विधानात । त्रेधा त-
ण्डुलानितितु देवतान्तरसंयोगविधानार्थं पूर्वदेवताभ्योपनयो विधीय
ते, तत्रच दधिशृतयोरपि देवतान्तरसंयोजनार्थं तण्डुलशब्देन तण्डु
लादिप्रकृतहविर्मात्रं लक्ष्यते, तण्डुलविभागमात्रस्य मध्यमादिविनियोगल-
भ्यस्यात्र विधिवैयर्थ्यात् । तदेवं न कर्मान्तरं । एवं देवतान्तरेण सं-
योक्ष्यमाणहविषां पूर्वदेवतापनयविधिपरं त्रेधा तण्डुलान्विभजेदिति वा

क्यमिति निश्चिते वृथ्यादिसाधारण्यार्थं तण्डुलशब्दो हविर्मात्रोपलक्षण मित्युक्तम् । अथवा उपासनरूपधर्मप्रतिपादनात् कात्र कथन्ता । उपासनस्य शाब्दप्राधान्येऽपि ब्रह्मणआर्थप्राधान्यं नहीयते, ब्रह्मणएव शाब्दप्राधान्येऽपि न शंकावकाशः । धर्मशब्दोभगवत्प्रीतौ मुख्यः । कर्मव्यापारोहि धर्मशब्दार्थः, सच प्रसादएव । अथवा अत्र सूत्रे धर्मपदमलौकिकश्रेयस्साधनत्वं गुणं निमित्तीकृत्य प्रवर्तते । अतएव " द्रव्यक्रियागुणादीनां धर्मत्वंस्थापयिष्यत " इत्युक्तम् । अतो यागादीनां ब्रह्मणश्च प्रीतिद्वारकश्रेयस्साधनताया अलौकिक्याविद्यमानत्वाद्धर्मशब्द इह यागादिब्रह्मसाधारणः । एतदेवाभिप्रेत्यानुगृहीतमाचार्यैः " अलौकिकश्रेयस्साधनंधर्मः तदनुयायिप्रतिपाद्य " मित्यादि । अत्रत्य धर्मशब्दे न कर्मब्रह्मरूपद्वयं साक्षात्परंपरयावा श्रेयउपयोगमात्राद्विवक्षितमितिभावः । अथवा अलौकिकश्रेयस्साधनताया धर्मशब्दप्रवृत्तिनिमित्तत्वात् ब्रह्मणएव तत्साधनत्वात् प्रसादस्यच व्यापारमात्रत्वात्तादृशश्रेयः कर्तृत्वस्य प्रवृत्तिनिमित्तत्वाद्वा ब्रह्मैव धर्मशब्दस्य मुख्यार्थः । " येचवेदविदोविप्रा येचाध्यात्मविदोजनाः । तेवदन्तिमहात्मानं कृष्णं धर्मं सनातनम् ॥ " इत्युक्तेः । तस्यच साध्यत्वं प्रसादरूपव्यापारविशिष्टवेषेण, तस्माद्धर्मजिज्ञासेत्यस्य ब्रह्मजिज्ञासेत्यर्थः । एतदेवाभिप्रेत्यानुगृहीतमाचार्यैः " अथातोब्रह्मजिज्ञासा " इत्येवोभयभागसाधारणार्थप्रतिज्ञा " इत्यादि । ननु तर्हि कथं ब्रह्ममीमांसायां कर्ममीमांसायाअवकाशः, अत्राप्यनुगृहीतं - " कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणे चतुर्थपादेसङ्गत" इति । अत्रत्यब्रह्ममीमांसाशब्दः " अथातोब्रह्मजिज्ञासा " इतिसूत्रविवक्षितब्रह्ममीमांसापरः - अतस्तृतीयलक्षणइत्युक्तिसंभवः । तृतीयलक्षणचतुर्थपादे " सर्वापेक्षाचयज्ञादिश्रुतेरश्ववत् " इत्यत्रकर्मणामुपासनांगत्वप्रतिपादनात् तत्र संगततया कर्मनिरूपणं युज्यतइति । यद्येवं, तर्हि तत्रैतद्विचार्यं, अत्राप्यनुगृहीतं " ब्रह्मविचारान्तर्भावेऽपि पृथक्करणमुपपद्यते, यथा निग्रहान्तर्गतयोश्छलजात्योराह्निकभेदेन पृथगुक्तिः, यथाचनिग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः । पृथक्करणंच बहुग्रन्थप्रतिपाद्यत्वात् , तत्रच पूर्वभावित्वमुपजीव्योपजीवकभावादि वक्ष्यमाणहेतुनिबन्धनं " इति । " अथातोधर्मजिज्ञासा " इतिसपरिकरब्रह्मजिज्ञासां प्रतिज्ञायत्रैवर्णिकमुमुक्षुसाधारणतया मुमुक्षुसाधारणतयाच वि

चारावान्तरभेदं विवक्षित्वा मुमुक्षुसाधारणब्रह्मविचाराधिकारहेतुतया नियतपृथग्भावपूर्वभावं कर्मविचारं सर्वानुग्रहार्थं प्रथमतः पृथक्किर्षत्यै अधिकारप्रदर्शनार्थं सिद्धेव्युत्पत्त्यभावलक्षणपूर्वपक्षनिराकरणार्थञ्च " अथातोब्रह्मजिज्ञासा " इति मुमुक्षुसाधारणब्रह्मविचारंपुनः प्रतिज्ञाय तद्विचारः प्रवर्त्यते मुनिद्वय्या भगवत्येत्याचार्याभिप्रायः । वेदार्थजिज्ञासेतिवा ब्रह्मजिज्ञासेतिवावक्तव्ये धर्मजिज्ञासेत्युक्तिश्श्रेयस्साधनत्वप्रतिपादनेन मीमांसाया रागप्राप्तिसूचनमुखेन प्रवर्तकाभावादनारंभइति पूर्वपक्षनिराकरणाय रागस्यैवप्रवर्तकत्वादारंभइति राद्धान्तसूचनार्था । एतेन शास्त्रैक्ये आदौ साधारणप्रतिज्ञयाभवितव्यमित्येतन्निराकृतम् , प्रतिज्ञायास्सामान्यविषयत्वोपपादनात् । यदिसामान्यविषयत्वं तर्हि कर्मविषयविशेषप्रतिज्ञया भवितव्यं, मैवं – तदसाधारणपूर्वपक्षानुत्थानेन तदर्थमधिकरणानारंभात् । स्वकर्तव्यार्थप्रदर्शनमात्रप्रयोजनप्रतिज्ञाचार्थसिद्धा । पक्षान्तरेपिसार्थसिद्धैव, न्यायपरत्वात्सूत्रस्य तथाविधसूत्राकरणं चन्यायनिबंधनात्मकेशास्त्रेतादृशस्यनिवेशायोगात् । " शब्दाबोध्यत्वशंकापरिजिहीर्षयाचपुनःप्रतिज्ञाकृता " इतिवाक्येनाचार्यैरयमर्थस्सूचितः । अतएववेदान्ताचार्यैः " तस्यनिमित्तपरीष्टिः" इतिसूत्रव्याख्याने –" इदमपिसूत्रंनकेवलंप्रतिज्ञापरं, अपितु प्रमाणमात्रस्यापरीक्षणीयत्वपूर्वपक्षप्रतिक्षेपार्थं " इत्यनुगृहीतं । अर्वाचीनव्याख्यातृभिरपि वेदार्थमात्रविचारप्रतिज्ञारूपत्व मस्यसूत्रस्याङ्गीकृतमेव, परंतु धर्मस्यैवकृत्स्नवेदार्थत्वं वेदान्तभागस्यतच्छेषत्वंचतैरुक्तं, वेदान्तिभिस्तु कर्मब्रह्मरूपार्थद्वयं भागद्वयार्थतयाङ्गीकृतमितीयानेवविशेषः । वेदार्थमात्रविचारप्रतिज्ञारूपत्वे न विवादः । किञ्चैवं. यदिविशेषप्रतिज्ञा तदाज्ञनपेक्षितविधानापेक्षितपरित्यागयोःप्रसंगः, सामान्यप्रतिज्ञाद्यविवक्षितार्थत्वादिनिराकरणेन विवक्षितार्थत्वादिसमर्थनार्थमपेक्षिता, विशेषप्रतिज्ञातु पूर्वभागविषयेनापेक्षिता, ब्रह्मभागइवकर्मभागासाधारणपूर्वपक्षस्यानुदयात् । अतएवपूर्वतन्त्रे " पानव्यापच्चतद्व " दित्यधिकरणे " यस्सोमवामीस्यात्सश्यामाकंचरुंनिर्वपे " दितिविहितेष्टिः किंलौकिकेवैदिकेचवमनेसर्वत्र उतवैदिकएवेतिविशये अविशेषात्सर्वत्रेतिप्राप्ते, सम्यग्जरणपर्यंतभक्षणस्य विहितत्वाद्वमने तद्वैगुण्यात्तत्समाधानमपेक्षितं, लौकिकंतुभक्षणंवमनार्थमेवेति नतत्रापेक्षेत्यपेक्षितत्वाद्वैदिकएवेष्टिविधिरित्युक्तं । तथा " पत्नीसंया-

एतेनार्थप्रयोजनाधिकारिभेदाच्छास्त्रभेदइतिनिरस्तम्, सामान्यतोवेदार्थपुरुषार्थतदर्थित्वरूपेणतेषांभेदासिद्धेः, अवान्तरार्थभेदादेस्शास्त्रैक्येऽप्यविरोधात् । अन्यथा षट्काध्यायादिभेदेऽपि भिन्नशास्त्रत्वप्रसंगात् । नचैवंवेदार्थानुबन्धित्वाविशेषाद्विद्यास्थानभेदविलयप्रसंगइति वाच्यम्, उपकारभेदेन तद्भेदव्यवस्थापनात् । .... ....

---

जान्तत्वंसर्वेषामविशेषात्'' इत्यत्र '' पत्नीसंयाजान्तान्यहानिसंतिष्ठन्त '' इति द्वादशाहेश्रूयते, किमिदमह्नामविशेषेण उतोत्तमवर्जमिति विशये, अविशेषप्रवृत्तविधेस्संकोचायोगात्सर्वेषां पत्नीसंयाजान्तत्वमिति पूर्वपक्षे, द्वादशयागानां सहकर्तव्यत्वेनचोदितत्वात् पूर्वमहः कस्मिंश्चित्पदार्थेऽवस्थाप्यापरस्यारंभणीयत्वात् कस्मिन्पदार्थेऽवस्थापनमित्यपेक्षायां पत्नीसंयाजान्तेऽवस्थापनमित्युच्यते, उत्तमस्यत्वनापेक्षाः इतरयागसाहित्यस्यक्वचिदवस्थापनाभावेपिसिद्धेः, अनपेक्षितविधानायोगात्, इत्युत्तमवर्जं पत्नीसंयाजान्ततेति व्यवस्थापितं । अतोपेक्षितत्वात्साधारणप्रतिज्ञैवोचिता । ननु किञ्चित्प्रयोजनसिद्ध्यर्थं तदर्थिनम्प्रत्यर्थविशेषप्रतिपादनार्थंप्रवर्तमानं अर्थप्रयोजनाधिकार्युद्देशैक्यएकं तद्भेदाद्भिन्नंचस्यात्, यथान्यायशास्त्रशब्दशास्त्रे प्रत्येकमर्थोद्देशाद्यभेदादभिन्ने तद्भेदाच्चपरस्परंभिन्ने, इहच कर्मब्रह्मलक्षणार्थभेदात् भोगमोक्षरूपप्रयोजनभेदात् तदर्थिरूपाधिकारिभेदाच्च तदुद्देशाअपिभिन्नाएवेतिकथंशास्त्रैक्यमित्याशंकामनूद्यपरिहरति ( एतेनेति ) अर्थोद्देशो वेदार्थत्वपुरस्कारेण वेदार्थप्रतिपादनम्मया कार्यमिति प्रवर्तमानएकएव, प्रयोजनोद्देशोपि प्रयोजनसिद्ध्यर्थमिति प्रवर्तमानएकएव, अधिकार्युद्देशोपि पुरुषार्थार्थिनंप्रतीति प्रवर्तमानएकएव - पुरुषार्थसिद्ध्यर्थं तदर्थिनंप्रति वेदार्थप्रतिपादनंकार्यमितीच्छया - मीमांसाशास्त्रप्रणयनादिति परिहाराभिप्रायः । ननूक्तरूपेणैक्येप्यवान्तरार्थप्रयोजनादिभेदेन तदुद्देशस्यापि भेदाच्छास्त्रभेदस्स्यादित्यत्राह (अवान्तरेति ) ( नचैवमिति ) सामान्यकोटीकाररूपेणैकत्वे वेदार्थानुबन्धित्वालौकिकार्थानुबन्धित्वादिना रूपेणैकोद्देशसंभवाच्छन्दःशिक्षाप्रभृतीनामेकविद्यास्थानत्वमेव स्यादित्यर्थः । ( उपकारेति ) उक्तरीत्यासामान्यतः कोटीकारसंभवेपि नतथोद्देशेन शास्त्रप्रवृत्तिः, किन्तु वर्णशि

अतएवर्हीतिहासपुराणयो रदूरविप्रकर्षादेकविद्यास्थानत्वनियमः । नचधर्म शास्त्रस्यैवात्रमहर्षिभिःपृथक्परिसङ्ख्यानम् । तथापिभिन्नकर्तृकयोःकथमेक प्रबंधत्वमितिचेन्न; एकेनापिकर्त्राऽनेककार्यारंभदर्शनात्, अनेकैरप्येकरथगो पुरप्राकारादिनिर्माणदर्शनाच्च । निबन्धनेऽत्वयंविशेषइतिचेन्न; तत्राप्येकेनवि दुषाऽनेकप्रबन्धकरणदर्शनात्, पाणिनीयवृत्तिकादम्बरीप्रभृतिषुचानेकक र्तृकत्वेऽप्येकप्रबन्धत्वसंप्रतिपत्तेश्च । तत्रकर्तृभेदेकिंप्रमाणमितिचेत्, कर्म ब्रह्ममीमांसयोरपिवार्किं । उपदेशपारम्पर्यमितिचेत्; तुल्यम् । अस्तु तर्ह्यर्थविरोधाद्भेदइतिचेत्; कोसौविरोधः । द्वैताद्वैतगोचरत्वमितिचे न्न, तयोरेकनिष्ठत्वासिद्धेः । नहिकर्मकाण्डनिरूपितफलकरणेतिकर्तव्य तादीनामैक्यं ब्रह्मैक्यादिविषयेषु वेदान्तेष्वभिधीयते । तत्सत्यत्वमिथ्या त्वप्रतिपादनाद्विरोधइतिचेन्न, वेदान्तभागस्यप्रपञ्चमिथ्यात्वतात्पर्याभ्यु पगमे कर्मभागस्य तत्सत्यत्वप्रतिपादनतात्पर्यासिद्धेः । सत्यत्वाभावेऽपिहि त्वदुक्तव्यावहारिकमर्यादया फलकरणभावादिकन्निरूपयितुंशक्यते । अन्यथावेदान्तविचारस्यापिप्रमाणतर्कादिभेदसापेक्षत्वेनस्वव्याघातप्रसंगः । सगुणब्रह्मोपासनतत्फलादिचिन्तनमपिशास्त्रान्तरसाध्यंस्यात ।

---

**क्षाद्युपकारविशेषोद्देशेन शिक्षादेः प्रवृत्तिः, अतस्तेषां भेदएव । मीमांसा शास्त्रंच वेदार्थविशदीकरणरूपैकोपकारोद्देशेनैव प्रवृत्तमितिभावः । (अदूरेति) नच तत्वनिर्णयप्राधान्यात् । नन्विह वेदार्थविशदीकरणा देकविद्यास्थानत्वे स्मृतेरपीतिहासपुराणाभ्यां सहैकविद्यास्थानत्वप्रसं गः, तत्वाचारविशदीकरणरूपावान्तरभेदविवक्षायां कर्मब्रह्मभेदविवक्ष या मीमांसायामपि विद्यास्थानभेदप्रसंगइत्यत्राह (नचेति) तत्तत्प्रवृ त्तिप्रयोजकोपकारविशेषमालोच्य विद्यास्थानभेदान् परिगणयद्भिस्तत्त त्प्रबन्धभिप्रायविद्भिर्महर्षिभिर्मीमांसेत्येकविद्यास्थानत्वेन कीर्तना न्मी- मांसायाएकोद्देशेनप्रवृत्तिरवगम्यतइतिभावः । (अन्यथेति) फल करणेतिकर्तव्यतादिनिरूपणार्थं तत्सत्यत्वतात्पर्याभ्युपगमे वेदान्तभागे पिकरणेतिकर्तव्यतारूपप्रमाणतर्कव्युत्पादनार्थं तत्सत्यत्वतात्पर्याभ्युपगम प्रसङ्गाद्व्याघातइत्यर्थः (सगुणेति) तत्रापिसत्यत्वतात्पर्याभ्युपगमप्रसङ्गे**

यदात्वस्मदुक्तन्यायेनसकलकर्म समाराध्यमनन्तगुणविभूतिकंब्रह्मवेदान्तवे द्यं तदातुनविरोधगन्धोऽपि । निरीश्वरत्वसेश्वरत्वाभ्यांविरोधइतिचेन्न ; जैमिनिसूत्रेष्वीश्वरप्रतिक्षेपादर्शनात् , अर्वाचीनव्याख्यातृजल्पितानांतु अ नादरणीयत्वात् । अतएवसेश्वरमीमांसापक्षोऽपिनातीवविच्छिन्नः; परै रनूद्यतेच । देवताकाण्डश्चकर्मकाण्डशेषतयाभाष्यकारैःपरिगृहीतं । " त दुक्तंसंकर्षे " इति तत्रत्यसूत्राणिचोदाहरन्ति । तस्यच काण्डस्योप संहारे " अन्तेहरौतद्दर्शनात् " इतिदेवताकाष्ठांप्रदर्श्य " सविष्णु राहहि " इतिसर्वदेवताराधनानां तत्पर्यवसानायतस्यसर्वांतरात्मत्वेन व्याप्तिंप्रतिपाद्य "तंब्रह्मेत्याचक्षतेतम्ब्रह्मेत्याचक्षते" इतितस्यैववेदान्तवे द्यपरब्रह्मत्वोपक्षेपेणोपसंहारात् , सामान्यतोपिविशेषतश्चेश्वरःप्रस्तुतइति तत्वविदांसम्प्रदायः । अतएवकर्मकाण्डदेवताधिकरणमपिकर्मप्राशस्त्य मात्रपरम् । किमलौकिकदेवताविग्रहादिसमर्थनप्रयासेन - यथाश्रुतकर्मणए वफलप्रदत्वशक्तिरित्येतावतैवोक्तेन परप्रतिक्षेपात् , अश्रुतवेदान्तानां प्ररोचनासिद्धेश्च, .... .... ....

---

नार्थविरोधादित्यर्थः । (देवताकाण्डश्चेति) तथाचकर्मकाण्डेदेवतानिरा करणासंभवइतिभावः । (अतएवेति) देवताकाण्डैकशास्त्र्यादित्यर्थः । यदि प्राशस्त्यमात्रपरं तर्हि पूर्वपक्षप्रतिक्षेपोनस्यात् , प्राशस्त्यपरत्वंचा संभवि न्यायनिबन्धनत्वाच्छास्त्रस्येत्यत्राह ( किमलौकिकेति ) अन्वारु- ह्यवादेन परप्रतिक्षेपसिद्धिः । न्यायनिबन्धनत्वेपि प्ररोचनालक्षणप्रयो जनसाम्यात् प्राशस्त्यपरत्वोक्तिरिति भावः । ( अश्रुतेति ) फलप्रदत्वा भिमतानामिन्द्रादिदेवतानां प्रळयेऽनन्तरसर्गे तत्फलावाप्तिर्नस्यात् , अ कृताभ्यागमश्च स्यादितिबुद्ध्या कर्मण्यश्रद्धास्यात् , श्रुतवेदान्तानांतुअ नादिनिधनसर्वज्ञसर्वशक्तिपरमपुरुषाराधनरूपत्वात् सर्वकर्मणां तेनैव तत्फलदाननिश्चयान्नाश्रद्धेति भावः । इदंचावार्चीनोक्तसूत्रार्थमंगीकृत्यो क्तम् । वस्तुतस्तु न सूत्रेषु देवतानिराकरणप्रतीतिः, तानिचैवंव्या- ख्यातानि तत्वटीकायां वेदान्ताचार्यैरेव – " देवतोद्देशेन देयं द्रव्यं दे वतानप्रयोजयेत, कुतः; कृष्यादिवत्फलसाधनभूतक्रियायाएव प्रयोजकत्वो

पपरोत्तत्राह " देवताप्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वा " दि ति । याद्दगंशंकानिवर्तकः । हविरुद्देश्यादेवताफलार्थिनं स्वाराधने प्र योजयेत् , कुतः? भोजनस्य तदर्थत्वात् –भोजनस्य हविषस्तत्समर्पणस्यच तदर्थत्वात्– तच्छेषत्वात् । संप्रदानभूताहि देवता प्रधानतया स्वार्थे द्रव्य तत्समर्पणे प्रयुङ्क्ते । क्रियाप्रधानवाक्येष्वन्यभूतापिहि देवता । तत्तन्मंत्रा दिसामर्थ्यादार्थप्राधान्यशालिनी ॥ अतो यथाविग्रहादिमानतिथिराराध्यः स्वार्थं स्वाभीष्टं उपचरणं प्रयुङ्क्ते तथा देवतापीति । ' आर्थपत्याच्च ' अ र्थतेप्राप्यतइत्यर्थोविभूतिः, अर्थ्यतइतिवा, अतस्तदभावान्नाराध्या, अनी- प्सितत्वादप्रयोजकेति न शंकनीयं । पराखलु देवतासर्वस्येष्टे तन्नियु क्तावापरा यथाधिकारंतद्विभूतीनां । तथापि निरपेक्षादेवतानकृताश्चि- र्प्रीयेत, न कंचित्प्रीणाति, अतः कथं प्रयोजिकेत्यत्राह " ततश्च तेन संबन्धः " अतो नैरपेक्ष्येऽपि नरदेवनीत्या दयौदार्यशालिन्याः परिचर्य माणायाः प्रसेदुष्यादेवतायाएव हेतोः परिचरतां स्वाभीष्टफलेन संबं धः स्मृत्युपचारादिभिरेव सिद्धइति पूर्व पक्षः । राद्धान्तस्तु, "अ पिवाशब्दपूर्वत्वाद्यज्ञकर्मप्रधानंस्यात् " अत्रापिवेति सार्धाङ्गीकारं पर पक्षव्यावर्तनं । यद्यपि देवताया विग्रहहविरादानयुगपत्कर्मसन्निधिप्री- तिफलप्रदानरूपविग्रहादिपंचकं दुर्निषेधं । द्रव्याद्यपेक्षया संप्रदानस्य- प्राधान्यं; यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यं; सिद्धपरवा- क्येषुच परापरदेवतयोस्स्वरूपादिकमनन्यार्थमामनामः , तथापि कर्त व्योपदेशेषु यज्ञादिरूपं कर्मस्वर्गादिफलसाधनतया चोदितत्वात्प्रधानं- सत् साध्यतयाबुद्ध्यारोहेण पुरुषंप्रवर्तयति, कृत्स्नंचदेवतादिक्रियाशे- षभूतं । ननु फलप्रदायादेवताया आराध्यत्वेन प्रधानत्वमनुशोश्रूया महे , अत्राह " गुणत्वेनदेवताश्रुतिः " हविष्प्रदानंप्रतिगुणीभूतांहि- देवतामनुश्रृणुमः, मन्त्रार्थवादोपस्थापितदेवताप्रीतिरूपमपूर्वं चोदितस्य क्षणिकस्य कालान्तरभाविफलद्वारतयोनादीयेत, अतो वास्तवप्राधान्य- शालिन्यपि देवताफलकामप्रवर्तकशाब्दप्राधान्याक्रियागुणभूता नप्राधा- न्येनप्रयोजिकेति । अतिथेस्तर्हिकथंप्रयोजकत्वं इत्थमित्याह - " अतिथौ तत्प्रधानत्वमभाव:कर्मणिस्यात् " आतिथ्यंप्रत्यतिथेःप्रधानत्वं प्राप्तं , अ- न्यथाहि तदर्थकर्मणिप्रयोजकाभावात्तदभावस्स्यात् । तत्सपर्या विधिरे-

सहसा च गुह्यार्थाना मवचनीयत्वात् । एवंसति ब्रह्मकाण्डदेवताविकर णेकरस्यसिद्धेः । द्रव्यदेवतयोर्द्रव्यबलीयस्त्ववर्णनमपि नदेवताविग्रहाद्यपा रमार्थ्यलिंगम् , प्रतीतिसन्निकर्षविप्रकर्षाभ्यामेवप्राबल्यदौर्बल्यसिद्धेः ।

---

वतत्रप्रयोजकइतिचेत् तत्रप्रत्याह " तस्यप्रतिविधानत्वात् " आति- थ्यकर्मणोहि अतिथ्यागमनप्रतिविधानतयैवचोदना । क्रियाप्रयुक्तपुरु- षसमाहूतातुदेवता । सन्निधत्तेतदिष्टार्थंनततस्तत्प्रयुक्तता ॥ अतिथिस्तु स्वयंप्राप्तः स्वाभीष्टंचप्रयोजयेत् । तदिष्टानुविधानेन तत्तत्पर्यार्थचोदना ॥ अतः प्राप्ताप्राप्तविवेकादतिथिप्राधान्योक्तिः " इति । ननुकिमर्थ- मन्वारोहेणचित्तसंक्षोभः क्रियते, यावतापरमात्मसमर्थनादेवप्ररोचना- सिद्धिरित्यत्राह ( सहसाचेति ) निर्धारितकर्मस्वरूपस्यैव ब्रह्मज्ञाना- धिकारइतिभावः । अन्वारुह्यवादत्वेहेतुमाह ( एवंसतीति ) नचैकरस्या सिद्धिःपरस्येष्टैवेतिवाच्यम् , " मध्वादिष्वसंभवादनधिकारंजैमिनिः " इत्यादावैकरस्यप्रतीते स्तत्परित्यागायोगादितिभावः । ननु " विप्रति- पत्तौहविषानियम्येतकर्मणस्तदुपाख्यत्वात " इत्यधिकरणे " ऐंद्रमेका- दशकपालंनिर्वपे " दितिविहितविकृतियागे द्रव्यतआग्नेयसाम्याद्देवता तस्साम्राय्ययागसाम्याच्च कस्यधर्माग्राह्याइतिविचारे द्रव्यसाम्यस्यबलीय- स्त्वात्तेनप्रकृतिनियमइतिसमर्थितं । तत्रप्राबल्यदौर्बल्येसत्त्वासत्त्वनिबन्धने- एवेति विरोधइत्यत्राह ( द्रव्यदेवतयोरिति ) देवतायाःस्वरूपंदेवता- त्वञ्चाप्रत्यक्षं, द्रव्यस्यतु हविष्ट्वधर्मस्वाप्रत्यक्षइति प्रतीतिशैघ्र्यविलंबाभ्या मेवप्राबल्यदौर्बल्ये इतिभावः । ननु धर्मिणः प्रत्यक्षगम्यत्वंकथंप्राब- ल्यहेतुः, यत्कर्मसाम्यंशीघ्रंप्रतीयते तद्धर्मातिदेशःकार्यइतिहिवक्तुंयुक्तं, नचद्रव्यसंबन्धोदेवतासंबन्धाच्छीघ्रंप्रतीयते, येनप्राबल्यंस्यादितिचेत्सत्यं; द्रव्यवाचिपदानांलोकेव्युत्पन्नतया द्रव्यविनियोजकवाक्यश्रवणसमनन्तर मेव झटितद्रव्यसंबन्धःप्रतीयते, देवतावाचिपदानां लोकाव्युत्पन्नतया तद्विनियोजकवाक्यश्रवणसमनन्तरन्ततः प्राग्वा श्रौतव्यवहारदर्शनात् , कोवेन्द्रइतिजिज्ञासायां ' वज्रहस्तःपुरन्दर ' इतिवाक्यश्रवणेनवा पुराणा- दिश्रवणेनवा अन्यथा वेन्द्रादिपदव्युत्पत्तौसत्यां तत्संबन्धप्रतीतिरित्य- स्त्येव द्रव्यसंबंधप्रतीतौ शीघ्रभावः । किञ्च देवताऽभावोनदौर्बल्येहेतुः

यद्यपि द्रव्यस्यापिधर्मत्वंपरोक्षं अथापिस्वरूपत.प्रत्यक्षतया विशेषोऽस्त्येव ।
एवं सर्वत्राविरोधस्सेश्वरमीमांसायामनुसन्धातव्यः । तथापि " मध्वादिष्वसं
भवादनधिकारं जैमिनिः " " धर्मं जैमिनिरतएव, " " शेषत्वात्पुरुषार्थ
वादोयथान्येष्वितिजैमिनिः „ " परामर्शंजैमिनिरचोदनाच्चापवदतिहि „
" परंजैमिनिर्मुख्यत्वात् „ " ब्राह्मेणजैमिनिरुपन्यासादिभ्यः „

---

किन्तु तत्साम्यनिबन्धनातिदेशाभावएव हेतुरिति कुतः प्राबल्यदौर्ब-
ल्यचिन्ता, कुतश्चदेवतासाम्यात्क्वचिदतिदेशः । यदि शब्दस्यैवदेवता-
त्वात्तत्संबंधादतिदेशः तर्हि द्रव्यदेवतयोः कोविशेषः, अतस्सम्प्रदा-
नादपिकरणस्यत्यागस्वरूपोत्पादकतया प्रथमाकांक्षितत्वाच्च प्राबल्यंद्रव्य-
स्यग्राह्यं ( धर्मत्वमिति ) अलौकिकश्रेयस्साधनत्वमित्यर्थः । ( मध्वा-
दिष्विति ) मधुविद्यादिषुवस्वादीनामनधिकारंजैमिनिराचार्योमन्यते, कु-
तः असंभवात्, तत्रहि विद्यायां वस्वादयउपास्याः नचतत्र तएवक-
र्तारस्संभवन्ति, कर्मकर्तृविरोधादित्यर्थः । अत्रच वस्वादिजीवपर्यवसित
मुपासनमित्याशयेन पूर्वपक्षोत्थाना दर्थविरोधः (धर्मेति ) धर्ममेव
फलप्रदं जैमिनिराचार्यो मन्यते, कुतः; अतएव - श्रुतेरुपपत्तेश्च; अभि-
लषितस्वर्गस्यतत्साधनतया " स्वर्गकामोयजेत " इतिश्रुत्या यागस्यै-
व साधनतयाबोधनात् । कृष्यादिवदाराधनरूपत्वाभावेपि कालान्तर-
भाविफलप्रदत्वोपपत्तेश्चेत्यर्थः । ( शेषत्वादिति ) " तत्त्वमसि " इ-
त्यादिसामानाधिकरण्येन कर्मसु कर्तुरेव ब्रह्मत्वावगमात् तद्वेदनस्य-
तत्संस्कारतया कर्मशेषत्वा द्रव्यादिष्विव फलश्रुतिरर्थवाद इतिजैमि-
निर्मन्यत इत्यर्थः । ( परामर्शमिति ) " त्रयोधर्मस्कन्धाः " इत्य-
त्रचोदनाभावात् उपासनस्तुत्यर्थमनुवादमेव जैमिनिर्मेने । " वीरहा-
वाएषदेवानां योग्निमुद्वासयते " इत्यपवदतिचाश्रमान्तरमित्यर्थः ।
( परमिति ) परमेव ब्रह्मोपासीनानर्चिरादिर्नयतीतिजैमिनिः, ब्रह्मग-
मयतीतितत्रैवमुख्यत्वादित्यर्थः । ( ब्राह्मेणेति ) अस्यस्वरूपाविर्भावो
ब्राह्मेण अपहतपाप्मत्वादिस्वरूपेण, तेहि ब्रह्मगुणाः प्रत्यगात्मनोऽपिस्वा-
भाविकाइति " यआत्मापहतपाप्मा " इत्यारभ्योपन्यासादिभ्योऽवग-

" भावञ्जैमिनिर्विकल्पामननात् ,, इतिसूत्रेपुजैमिनिमतस्यपूर्वपक्षत्वेनो पपादनाद्विरोधस्सिद्धइतिचेन्न; अल्पल्पतराप्रधानार्थविवादस्यप्रधानभेदकत्वा भावात् । अतएवहि शास्त्रेषुवार्तिकावतारः । किं पूर्वकृतप्रासादखण्ड विषमांशापनयनेन शेषनिर्माणेतदैक्यंनास्ति । अतःप्रतिसंस्कारेणात्रापि सन्धानं । यद्वावैभवोक्तेपुतत्वभ्रमोमंदधियांमाभूदिति तदनुवादप्रतिक्षेपौ । तदुक्तंतदुक्तमितिजैमिनिपरिग्रहएवबहुशोदृश्यते ।

---

भ्यते, ननु ज्ञानस्वरूपेणाविर्भाव इति जैमिनिरित्यर्थः । ( भावमि- ति ) " सएकधाभवति " इत्यादिना देहेन्द्रियादिभिर्विविधताश्रुते- र्देहादीनां भावमेव जैमिनिर्मेने नकदाचिच्छिलोऽशरीरत्वमित्यर्थः । यद्य- प्येते सर्वेऽर्था नपूर्वकाण्डेसूत्रिताः अतोनार्थविरोधः, तथाप्युक्तरीत्याभि- न्नमतस्थत्वात्तत्कर्तृकेण सहैकशास्त्र्यमितिभावः । प्रौढवादेनपरिहर- ति ( अल्पल्पतरेति ) अत्यल्पतरविवादस्य अप्रधानार्थविवादस्यचे- त्यर्थः । तेन भगवतः फलप्रदत्वरूपप्रधानार्थविरोधेऽपि तस्याल्पत्वा- दितरवह्वर्थविरोधेपि तेषामप्रधानत्वान्नदोषइतिभावः । प्रतिसंस्का- रोऽत्रविपरीतांशशिक्षणं । तात्त्विक परिहारमाह ( यद्वेति ) वैभ वोक्तयवगमो गुरुशिष्ययोरैककण्ठ्यादित्यभिप्रेत्य तयोरैककण्ठ्य - मुपपादयति ( तदुक्तं तदुक्तमित्यारभ्याचख्युरित्यन्तेनग्रन्थेन ) छन्दोगानां वाजिनांचोद्गीथविद्याया ऐक्यंपूर्वपक्षीकृत्य निरस्य संज्ञातऐ क्यमाशंक्योक्तं " संज्ञातश्चेत्तदुक्तमस्तितु तदपि " इति संज्ञैक्येपि भेदउक्तः । यथा " प्रकरणान्तरे प्रयोजनान्यत्वं " इत्यत्र नैयमिकमा साग्निहोत्रयोरित्यर्थः । " अक्षरधियान्त्ववरोधस्सामान्यतद्भावाभ्या मौपस दवत्तदुक्तं " " यत्तदद्रेश्यमग्राह्यं " इत्याद्युक्तास्थूलत्वादिविषयाणाम- क्षरधियां सर्वत्रावरोधः, सर्वत्र ब्रह्मणएकत्वात्तैर्विना इतरव्यावृत्तब्रह्मा नुसंन्धानानुपपत्तेश्च, अतः प्रधानब्रह्मानुसन्धाने तद्गुणानामप्यवरोधः - औपसदवत् – जामदग्न्यचतूरात्रे पुरोडाशुपसद्गुणभूतस्य मन्त्रस्योपस दनुवर्तित्वेनोपांशुगुणकत्वमुक्तं " गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग " इत्यत्रेति । " प्रदानवदेवतदुक्तं " दहरविद्यायामपहतपा

विशेषतश्च " साक्षादप्यविरोधंजैमिनिः ,, " संपत्तेरितिजैमिनिस्तथा हिदर्शयति ,, "अन्यार्थन्तु जैमिनिःप्रश्नव्याख्यानाभ्यामपिचैवमेके ,, "तद्भूतस्यतुनातद्भावोजैमिनेरपिनियमा त्तद्रूपाभावेभ्यः ,,

---

प्मत्वादिगुणविशिष्टोपासने तत्तद्गुणविशिष्टस्वरूपभेदात्प्रतिगुणं गुण्या वृत्तिः यथा " इन्द्रायराज्ञे " इत्यादिषु विशिष्टस्वरूपभेदात्प्रदानावृत्तिः । तदुक्तं संकर्षे – " नानावा देवतापृथक्त्वात् " इति । " इन्द्राय राज्ञेपुरोडाशमेकादशकपालंनिर्वपेत् " "इन्द्रायाधिराजाय " " इन्द्रायस्वराज्ञे " इतिविहितायां त्रिपुरोडाशिन्यामिष्टौ हविर्भेदाद्भेदेनावदानप्राप्तौ " वचनात्सर्वेषां सहावदीयेरन् " इति सूत्रेण " सर्वेषामभिगमयन्नवद्यति " इतिवचनात्सहावदानेस्थापिते ततोवदानसाहित्यात् प्रदानसाहित्यं " तेषां सहप्रदानमवदानैकत्वात् " इति सूत्रेण पूर्वपक्षीकृत्य "नानावादेवतापृथक्त्वात् " इति अधिराजत्वादिविशिष्टदेवताभेदात् प्रदानंनानैवेत्युक्तमित्यर्थः । ( साक्षादिति ) " सएषोऽग्निर्वैश्वानरः " इत्यग्निशब्दसामानाधिकरण्यं परमात्मवाचिनो वैश्वानरशब्दस्य परमात्मनोऽग्निशरीरकतयोपास्यत्वायेत्युक्तं नावश्यमेव, अग्रनयनादियोगेन परमात्मन्येवाग्निशब्दस्य साक्षाद्वृत्तेस्तत्सामानाधिकरण्याविरोधं जैमिनिर्मन्यतइत्यर्थः । ( सम्पत्तेरिति ) " लोमानिबर्हिर्हृदयंगार्हपत्य " इत्यादिनोपासकहृदयादीनां यद्वैश्वानरविद्यायां वेदित्वादिकल्पनं तद्विद्याङ्गभूतायाः प्राणाहुतेरग्निहोत्रत्वसंपादनार्थं । दर्शयतिच श्रुतिः– " यएतदेवंविद्वानग्निहोत्रंजुहोति " इति । ( अन्यार्थन्त्विति ) " तौहसुप्तं पुरुषमाजग्मतुः " इत्यादौ यद्देहातिरिक्तजीवसद्भावप्रतिबोधनं " योवैबालाकएतेषां पुरुषाणां कर्ता यस्यवैतत्कर्मसवैवेदितव्यः " इति वेद्यतयोक्तब्रह्मप्रतिबोधनार्थमिति " क्वैषएतद्बालाके पुरुषोशयिष्ट " इतिप्रश्नात् " अथास्मिन् प्राणएवैकधाभवति " इति " सतासौम्य " इत्यादिवाक्यसमानार्थात्प्रतिवचनाच्च अवगम्यते । एकेवाजसनेयिनोप्येतत्प्रतिवचनसमानार्थं वाक्यं स्पष्टमधीयते " क्वैषएत " दित्यादि " यएषोन्तर्हृदयआकाशस्तस्मिञ्छेते " इत्यन्तं । ( तद्भूतस्यत्विति । ) तद्भूतस्य-नैष्टिकाद्याश्र

इतिसूत्रेषु भगवता बादरायणेन स्वाभिमतार्थस्थापनायजैमिनि-स्वनाम्नैवोपात्तः । सच भगवान्जैमिनिः " औत्पत्तिकस्तु शब्द स्यार्थेनसंबन्धः तस्यज्ञानमुपदेशोव्यतिरेकश्चार्थे ऽनुपलब्धे तत्प्रमाणं बाद रायणस्यानपेक्षत्वात् " इति स्वोक्तार्थसंप्रतिपत्तये स्वाचार्यं बादरायण मेव पुरस्करोति । जैमिनेर्बादरायणशिष्यत्वञ्च महाभारतादिषु प्रसिद्धं- " सुमन्तुंजैमिनिंपैल्वं वैशंपायनमेवच " इत्यादिना । नन्वत्रव्यासशि ष्योजैमिनिरित्युक्तं, सत्यं व्यासएवात्रबादरायणः " द्वीपेबदरिकामिश्रे बादरायणमच्युतम् । पराशरात्सत्यवती पुत्रंलेभेपरन्तपम् ॥ "इतिहिस्मर्यते ।

---

संप्राप्तस्य, नातद्भावः - अतद्भावः- अनाश्रमित्वेनावस्थानं, न संभवति, कुतः? तद्रूपेत्यादि - तेषां नैष्ठिकवैखानसपरिव्राजकानां, रूपाणि-धर्माः, तन्निवृत्तिभ्योनियमात्, " ब्रह्मचार्याचार्यकुलवासी तृतीयोत्यन्तमात्मान माचार्यकुलेवसादयन् " इति, " आरण्यमियात्ततो न पुनरेयात् " इति, " सन्न्यस्याग्निंनपुनरावर्तयेत् " इतिच शास्त्राणिहि नियच्छन्ति, जैमिनेरप्येवंमतमिति । उत्पत्तिर्जन्मस्वभावः, औत्पत्तिकः - नित्यइतियावत् । नित्यश्शब्दार्थसंबन्धः न सांकेतिकः, येन प्रमाणंनस्यात् । नित्यत्वात्तस्य-धर्मस्य, उपदेशो,ज्ञानं-ज्ञापकः, तच्च ज्ञानं, न व्यतिरेकः- न विपर्ययः, संशयस्याप्युपलक्षणमेतत्, तथानुपलब्धेर्थे प्रवर्तमानत्वान्नानुवादकोपि, तस्मादनपेक्षत्वादनधिगतार्थबोधकत्वाच्चोदना धर्मे प्रमाणं भवत्येव, बादरायणस्याचार्यस्यमते नेति सूत्रार्थः । ( स्वाचार्यमिति ) तथाच स्वाचार्यभूतब्रह्मसूत्रकृत्पुरस्कारेण प्रवर्तमाने जैमिनीयशास्त्रे न तद्विरुद्धाभिधानमित्यर्थः । नन्वाचार्यत्वान्न ब्रह्मसूत्रकृत्पुरस्कारः तत्र मानाभावात । किन्तु ऐतिशायनादिवत्तद्ग्रहणं क्वचित्सम्मतिमात्रात्, अतोन्यत्र तद्विरुद्धाभिधाने नानुपपत्तिरित्यत्राह ( जैमिनेरिति ) ( नन्वत्रेति ) नच सएवबादरायणः,बादरायणशब्दस्य ऐतिशायनादिवदपत्यप्रत्ययान्तत्वेन बादरिशब्दाद्व्युत्पन्नत्वादिति भावः ( द्वीपइति ) अनेन बदराणां समूहोबादरं तदयनं यस्य सबादरायणइति व्युत्पत्तिस्सूचिता । संज्ञात्वाच्च " पू

व्यासव्यक्तिनिर्णयेऽपि बादरायणसंज्ञाप्रयुक्तेनिर्णेतुं तथापि " तपोनि
[illegible] वरिष्ठान्मुनिसत्तमात् । [illegible] । रहस्यज्ञा
[illegible] " इति [illegible] प्रतिज्ञनकादेः संप्रदायाद्
[illegible] स्वीक्रियते । अत[illegible] वाचस्पति
प्रभृतयोपि [illegible] । [illegible] पृ[illegible]तया
[illegible]मनुक्तं शारीरके [illegible] विताहद्धा : परब्रह्मज्ञानोन्मुक्तस्य
परब्रह्मसाम्यापत्तिविग्रहादिमत्त्वञ्च प्रतीयते, तदपि तत्प्रणीतकर्म
काण्डदेवताधिकरणादिस्वरसं [illegible]करोति । [illegible]चीनत्र जैमिनि
हृदयानभिज्ञस्तदा [illegible], अतः परस्परसङ्गतार्थत्वमपि चात्रा
पि यथांशकरणमपि युक्तं । तदेतदभिप्रायमभिप्रेत्योक्तं भगवता बोधायनेन -
“संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः” इति ।
तदेतदुपादाय व्यस्तृणीत [illegible]भाष्यकारः । नन्वेतावतापि कर्मब्रह्ममीमांसयोरै
कशास्त्रत्वे प्रवर्त[illegible] किंप्रमाणं[illegible]न्यस्तनिति [illegible], किंवा कर्मकाण्ड
द्वादशाध्याय्यादौ शारीरकचतुरध्याय्यां प्रवेश[illegible]वयानिर्णीतं ।

---

**र्वपदात्" इत्यादिना णत्वमितिभावः (व्यासेति) तथाच कतरोबाद-
रायण स्सूत्रकारइत्यनिर्धारणमिति भावः। (तथापीत्यादि) श्लोके ज्ञा
नपदस्य कर्मणिव्युत्पत्त्या वेदनशब्दस्य च णिजन्तनिष्पन्नतया व्यासस्य
रहस्यतमार्थव्यापकत्वप्रतीतेः रहस्यतमार्थोपदेशकत्व[illegible] त
स्यैव युक्तमित्यर्थः। " अवतीर्णो महायोगी सत्यवत्यां पराशरात् । " इ-
त्यारभ्य " चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा । " इत्यादिस्कान्दवच
नादिकण्ठोक्तिरादिशब्दार्थः। ननु जैमिनीयसूत्राणां देवतानिराकरणप
रतया तद्व्याख्यातृभिर्व्याख्यातत्वाद्देवतासद्भावादौ तात्पर्याभावात्तद-
भिप्रायापरिज्ञानादेव वेदान्ते तथातथा जैमिनिमतोपन्यासइत्यत्राह (न
रीति) आचार्यबादरायणशब्दाभ्या मभिप्रायापरिज्ञानायोगे हेतुरुच्य-
ते। (अतइति) व्याख्येयैरस्यात्प्रथमतस्समाम्नानेन वेदार्थनिर्णयोद्देशेनैव-
[illegible]मीमांसाद्वयस्य युक्तत्वात् परस्परविरोधाभावाच्चेत्यर्थः। प्र
तिबन्दीमुखेन साधयितुं शङ्कते (नन्विति) (किंवेति) ऐकशास्त्र्यइत्यै**

विधेरागस्यवाऽभावात, किंवा जयादित्यवामनवृत्त्योरिव कर्तृभेदेऽ-
व्याख्येयैक्यात्, यद्वा प्रबन्धान्तरइवैकप्रबन्धत्वव्यवहारात् । नाद्यः -
एकशास्त्रत्वहेतोः पूर्वोत्तरभागव्यवहारस्यात्राभावात्, पूर्वोत्तरशास्त्रव्यव
हारस्यच भिन्नयोःशास्त्रयोः पूर्वापरीभावमात्रेणोपपत्तेः । द्वितीये -ब्रह्ममी
मांसायाः कर्ममीमांसोपजीवित्वं किं नित्यफलार्थिनःपुंसोब्रह्मविचारेप्र
वृत्त्यर्थस्य तत्प्रामाण्यनिश्चयस्यवा ब्रह्मज्ञानकर्मफले नित्यानित्येइति विवे
कस्यवा कर्मफलानित्यत्वनिश्चयविशिष्टस्य ब्रह्मज्ञानफलनित्यत्वापातप्र-
त्ययस्यवा कर्मविचाराधीनत्वात्, किंवा ब्रह्मभागविचारे प्रवृत्तस्य त
दर्थनिश्चयार्थश्रुतिलिंगादिबलाबलादौ कर्मविचारापेक्षणात्, यद्वा ब्रह्म-
निश्चित्य तन्निदिध्यासने प्रवृत्तस्य निदिध्यासनांगकर्मानुष्ठाने कर्मविचा
रापेक्षणात् । नाद्यः - वेदप्रामाण्यस्य ब्रह्मतर्काख्यतर्कशास्त्रसिद्धस्यवा
ब्रह्ममीमांसायामेव अस्मन्मते 'नविलक्षणत्वा' दित्यत्र त्वन्मते 'अतएवच
नित्यत्व' मित्यत्र वक्ष्यमाणस्यवा पूर्वतन्त्रेवक्ष्यमाणस्य त्रैवर्णिकाधिकार
स्यैवोपजीवनात ? नित्यानित्यविवेकस्यच त्वन्मते ब्रह्मविचारप्रवृत्त्यहे-
तुत्वात्, कर्मविचारंविनाप्यस्मद्रीत्यातत्सिद्धेश्च । विशिष्टापातप्रत्ययस्य
च ब्रह्मज्ञानफलनित्यत्वापातप्रतीतिमात्रेण नित्यफलार्थिनस्तत्र प्रवृत्ति-
वत्कर्मफलानित्यत्वापातप्रतीतिमात्रेण ततो निवृत्तेरुपपत्तौ विशेषणस्य
कर्मफलानित्यत्वनिश्चयस्यानपेक्षिततया कर्मत्यागेन ब्रह्मविचारे प्रवृ-
त्त्यहेतुत्वात् । नद्वितीयः - श्रुतिलिंगादिबलाबलादेरुपक्रमोपसंहारबलाब
लादेरिव ब्रह्मतर्कसिद्धस्य लोकसिद्धस्यवोपजीवनात् । नतृतीयः - ब्रह्म
विचारानन्तरं निदिध्यासनात्प्राक्कर्मविचारोपपत्तेः । नापिमीमांसयोर्विष-
याद्यैक्यं, सिद्धसाध्यविषयत्वात नित्यानित्यमोक्षाभ्युदयफलत्वात् वि-
रागसरागाधिकारिकत्वाच्च । वेदार्थत्वालौकिकपुरुषार्थत्वतदर्थित्वैर्विषया
द्यैक्येच अर्थकामशास्त्रयोरपि शास्त्रार्थत्वपुरुषार्थत्वतदर्थित्वै मोक्षशा-
स्त्रादिना विषयाद्यैक्यंस्यात् । न तृतीयः - 'षडंगोवेदोऽध्येतव्य' इत्येकेनैव
विधिना तदुत्थरागेणवा व्याकरणाद्यंगविचारस्यापि प्रयुक्तत्वेन केव-
लवेदविचारे विधेरागस्यवा अभावेन व्याकरणादिविचाररूपमहाभाष्या
देर्वेदविचाररूपमीमांसयैकशास्त्र्यापातात् । इहैव कर्मकाण्डस्यापि ब्र-
ह्मपरतया विचारितत्वेन एकदेशविचाराभावाच्च । चतुर्थे-वाक्येयैक्यं

नतावद्वेदत्वादिनैक्यमात्रं, व्याख्यानेऽपि प्रबन्धभेदे सत्यपि वेदव्याख्यान त्वादिनैक्यसिद्धिप्रसंगात् । नापिपूर्वापरीभूतैकप्रबन्धत्वं, व्याख्यानस्यै कप्रबन्धत्वेहि नतावद्व्याख्येयैक्यमात्रं हेतुः, वैदिकपदार्थनिर्णायकयो- र्निरुक्तव्याकरणयोरिव एकप्रबन्धव्याख्यानयोः प्रस्थानयोरिवच प्रबंध भेदेऽपि तदुपपत्तेः । नाप्येकप्रबन्धपूर्वापरभागव्याख्यानत्वं हेतुः, असि द्धेः । तथाहि – तत्तच्छाखासंहितारण्यकभागयोः पूर्वापरतया न पू- र्वापरभागव्याख्यानता, एकशाखासंहितारण्यकयोः क्रमेण व्याख्या- नानन्तरं शाखान्तरसंहितारण्यकव्याख्यानरूपत्वाभावात् । अतः कर्मब्र ह्मपरसमुदायरूपेण पूर्वापरभागता तद्व्याख्यानरूपतया पूर्वापरभाग- व्याख्यानतावाच्या । समुदाययोश्च पूर्वापरभावो न कल्पेनापि क- ल्प्यः, तत्तच्छाखियसंहितारण्यकयो रध्ययनसिद्धं क्रमं बाधित्वाकल्प नासंभवात् । नापि तत्तच्छाखास्थसंहितारण्यकयोः पूर्वापरीभावमात्रेण तत्समुदाययोस्तत्सिद्धिः, ब्रह्मसूत्रव्याकरणसूत्रादौ प्रथमपादसमुदाय- स्य द्वितीयपादसमुदायस्यच पौर्वापर्यप्रसंगात् । यदिच विप्रकीर्णकर्म ब्रह्मभागौ बुद्ध्या पूर्वापरीभावेन विविच्य मीमांसयोः प्रवृत्तिः, तर्हि वे दार्थविचारत्वोपाधिना अप्रवृत्तेः प्रयोजनभेदमभिसन्धाय कर्मब्रह्मविचा रत्वोपाधिनैव प्रवृत्तेर्नैकशास्त्रता, तस्मान्नमीमांसयोः पूर्वापरभागव्या- ख्यानत्वं । अस्तुवातत्, तथापि कर्मब्रह्मकाण्डार्थनिर्णायकयोः स्मृति पुराणयोरिव भिन्नप्रबन्धतास्तु । नपंचमः – उत्तरषट्काद्याद्यध्यायेषु पू- र्वषट्काद्याध्यायमपेक्ष्य सप्तमादिव्यवहारवत् देवताकाण्डब्रह्मकाण्डाद्या द्यध्यायेषु कर्ममीमांसाद्याध्यायमपेक्ष्य त्रयोदशसप्तदशादिव्यवहारस्य द्वितीयभागतृतीयभागप्रथमादिव्यवहारस्यवा अभावात् । देवताविग्रहा दिनिरासतत्समर्थनाभ्यामर्थविरोधाच्च न मीमांसयोरैक्यं । तन्निरासःक र्मण्यश्रद्धावारणार्थइतिचेत्, सत्येव ब्रह्मणि तज्ज्ञानइव सत्यामपि देव तायामाश्वासंभवात् । पौरुषेयत्वाद्वेदाप्रामाण्यं माशंकीति तन्निरास इतिचेत् सत्यामपिदेवतायां तदकृतत्वमात्रेणापौरुषेयत्वात् । किंच "म न्त्रादिव्यसंभवात्" "शेषत्वात्पुरुषार्थवादः" इत्यादिषु जैमिनिमतस्य पूर्वपक्षितत्वात्कथमविरोधः । नचातन्मतंतन्मतमिति वक्तुं युक्तं । किं- च यादेशास्त्रेऽयं तदा आदौ वेदार्थजिज्ञासेति साधारणीप्रतिज्ञा-

स्यात् । नच ब्रह्मजिज्ञासेत्येव साधारणीप्रतिज्ञा कर्मविचारस्तु ब्रह्म मीमांसाचतुर्थपादे संगतइतिवाच्यं, तथासति ब्रह्मजिज्ञासायाः कर्मविचारानन्तर्यासंभवात् । कर्मब्रह्ममीमांसाप्रतिज्ञाभ्यामेव साधारणी प्रतिज्ञार्थसिद्धेरित्यपि न , प्रतिपिपादयिषितशास्त्रविषयादिसूचनाय साधारणस्यैवादौ साक्षात्प्रतिज्ञेयत्वात् । ननु धर्मजिज्ञासेत्येव साधारणीप्रतिज्ञा, अलौकिकश्रेयस्साधनं धर्मः स च सिद्धस्साध्यश्च, साध्यो यागादिः, सिद्धो ब्रह्म, "कृष्णंधर्मंसनातनं" इतिभारतोक्तेरितिचेन्न, तथात्वे देव ब्रह्ममीमांसयोर्धर्ममीमांसेति व्यवहारापातात् , प्रतिज्ञातधर्मसामान्यस्यैवानन्तरं लक्षणीयत्वेन चोदनालक्षणोऽर्थइति विशेषलक्षणायोगाच्च । तत्र चोदनापदस्य वेदमात्रपरत्वे पुनर्ब्रह्ममीमांसायां शास्त्रयोनित्वसूत्रवैयर्थ्यं । कृष्णंधर्ममिति धारणाद्धर्मइतिवचनाद्यौगिकः, अन्यथा "पातनात् पावनाद्वापुनाति पुण्यनामभाक्" , "परमंयोमहत्तपः" इति वचनात् पापत्वाद्यपि स्यात् । देवताकाण्डस्थं केवलापाच्य नक्वचिद्धर्मशब्दो दृष्टइति ।

तदेतत्सर्वमाचार्यसूक्तग्रन्थश्रवणहेतुदौर्भाग्यनिबन्धनं । तथाहि "एकशास्त्रत्वञ्च भागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यानरूपत्वात्" इत्यादिना व्याख्येयैक्येनैव शास्त्रैक्ये हेतुतयानुगृहीतमाचार्यैः । "अस्त्वेकशास्त्रत्वं कथंपौर्वापर्यनियमइतिशंकापरिहरन्" इत्यादिना उपजीव्योपजीवकभावादिक्रमनियामकत्वेनैवानुगृहीतम् । एवमिति विकल्पसंभ्रमआहोपुरुषिकामात्रं । यदुक्तं-'कर्मफलानित्यत्वापातप्रतीतिमात्रेण ततोनिवृत्त्युपपत्तौ कर्मफलानित्यत्वनिश्चयोनापेक्षित' इति तन्न, "सांगाध्ययनेन कर्मब्रह्मज्ञानयोरुभयोरप्यापातप्रतीतौ अधीतकर्मज कर्म विचार्य कर्मणामनित्यफलत्वनिश्चया यदि नित्यफलं केनचिद्भवति तदा तदनुष्ठेयमितिज्ञानवतो ब्रह्मज्ञानस्य नित्यफलत्वसंभावनया तद्विचारे प्रवृत्तिः" इत्याचार्यैरनुगृहीतं, अत्रास्य कुचोद्यस्यावकाशाभावात् । यदि कर्मण्यपि नित्यफलसंभावना तदा यदि नित्यफलं किञ्चित्स्यात्तदा तन्मयानुष्ठेयमितिबुद्धिमतः कर्मणोनिवृत्त्यसंभवेन अनित्यफलत्वनिश्चयस्यैव केवलकर्मणोनिवर्तकत्वात् । यच्चोपजीव्यविकल्पेषु तृतीयविकल्पदूषणं तच्चैकशास्त्रत्वहेतुतया विकल्प्य तेन क्रमासंभवदूषणोक्तेरुपहास्यम् । अ

स्त्वनेनैकशास्त्रत्वं तथापि क्रमोनसंभवतीत्यभिप्रायेण तथोक्तमितिचेन्न, ते
नैक्यंयदिसिद्ध्यति तदा स्वाध्यायाधीतिक्रमाद्व्याख्याननियमसिद्धेः ।
यच्च विषयाद्यैक्यदूषणं तदपि पूर्वोक्तप्रमाणाभ्यामैकशास्त्र्येसिद्धे ग्रंथो
क्तप्रकारेण विषयाद्यैक्यस्यानिष्प्रत्यूहत्वान्निरस्तं । किञ्च पूर्वोत्तरभागात्मि-
कायाः एकैकशाखाया एकैकग्रन्थत्वात्तत्र च विषयाद्यैक्यस्यावश्यकत्वे त
द्व्याख्यानस्यापि तदेवविषयादिकमिति कथं नविषयाद्यैक्यं । नच कर्म
ब्रह्मादिरूपविषयादिभेदादेकशाखायामपि कर्मब्रह्मभागयोर्भिन्नग्रन्थता ,
तथासत्येकस्मिन्नेवानुवाके नानाकर्मणां भिन्नफलानां प्रतिपादनात्तत्रा-
पि तत्तत्कर्मप्रतिपादकानां वाक्यानां नानाग्रन्थत्वप्रसंगात । यदुक्तं—व्या
करणादंगविचारोऽप्येकविधुर्यवशान्नयुक्तइति, तन्न, स्वाध्यायापातप्र-
तीतेरेव व्याकरणविचारसाध्यतया स्वाध्यायापातप्रतीतिप्रयुक्तविचार
शास्त्रस्य व्याकरणविषयत्वासिद्धेः । यदुक्तमेकदेशविचाराभावादिति ,
तन्न, इहैव कर्मकाण्डस्य ब्रह्मरूपतया विचारितत्वेपि सहस्राधिकरण
निवर्त्यसंशयनिवर्तकविचारस्य ब्रह्मविचारेणासिद्धेः , किञ्चिद्विचारमा
त्रेणास्य कर्मविचारत्वे वेदप्रामाण्यविचारएव ब्रह्मविचारस्स्यात् । यदु
क्तं- वेदार्थविचारत्वेनाविशेषे अप्रवृत्तेः प्रयोजनभेदमभिसन्धाय कर्मब्रह्म
विचारत्वोपाधिनैव प्रवृत्तेर्नैकशास्त्रतेति तन्न, अवयवप्रयोजनभेदाभिसं
धेरवयविप्रयोजनाभिसन्ध्यविरोधित्वात, अन्यथा षट्काध्यायपादपेटि-
काधिकरणभेदेनशास्त्रभेदप्रसंगात् । यच्च – देवतानिराकरणस्य कर्मण्यश्र
द्धावारणार्थत्वे दूषणोद्भावनं तदश्रुतवेदान्तानामित्याचार्यानुगृहीतपदा
श्रवणनिबन्धनं, तदनुग्रहस्यायंभावः, देवतानां प्रलये विनाशात् तत्प्रा
चीनकर्मणां फलाभावप्रसंगात् अनन्तरसर्गे [illegible] प्रसंगात् इन्द्र-
स्येन्द्रयजनश्रवणेन स्वस्यैव स्वस्मै फलप्रदत्वविरोधाच्च कर्मण्यश्रुतवेदा
न्तानामश्रद्धास्यात् , श्रुतवेदान्तानान्तु तदन्तर्यामिणः परमात्मनएव फ
लप्रदत्वाध्यवसायात्कर्मणि नाश्रद्धास्यात् इति, तस्मात् अश्रुतवेदान्ता
नां कर्मण्यश्रद्धावारणार्थमन्वारुह्यवादेन देवतानिराकरणंयुज्यतएवेति ।
यच्चातन्मतं तन्मतमितिवक्तुमयुक्तमिति तदप्याचार्यैरेव परिहृतं –
तन्मतत्वेनोपन्यासनिरासस्तदुक्ततया तत्र तत्त्वबुद्धिर्मन्दमतीनाम्माभू
दिति । अतन्मतत्वञ्च भारतादेवज्ञायतइत्याचार्यैरेवोक्तं – सञ्छिद्य-

स्य जैमिनेर्नभगवद्व्यासाचार्यमतिविरुद्धमतिसंभवः, तस्मादैकशास्त्र्यमन ङ्गीकुर्वताप्यन्वारुह्यवादेनैव जैमिनिना देवतानिराकरणमित्यङ्गीकार्य । ब्रह्मजिज्ञासेत्येव साधारणार्थप्रतिज्ञेत्याचार्यसूक्तितात्पर्यं प्रागेवोपपादितम् – धर्मजिज्ञासासूत्रस्य साधारणप्रतिज्ञात्वंचोपपादितमिति ॥

इति शतदूषणीव्याख्याने चण्डमारुते शास्त्रभेदभङ्गोनाम तृतीयः स्कन्धः ॥



॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

॥ अथ चतुर्थो वादः ॥

विचित्रैस्तैर्यत्तत्कथितमविधेयश्रुतिपथैः विवक्षेयुःस्वार्थं निरवधिमभि-
धेयां मतिमिति । तदुद्धर्योपायं भगवदुपनीतं प्रथयते नम-
स्यामस्यामो यतिपरिवृढार्यप्रातिकूल्यम् ॥ * ॥

यदेतद्भ्रान्तजनजल्पितं; समूलस्य संसारस्य संविन्मात्रे परस्मिन्ब्रह्मण्या-
रोपितत्वात् दर्वीकरकल्पितादेरिव विज्ञानात् ब्रह्मात्मत्वज्ञानादेव विलयः;
न पुनः कर्मणोपासनेन वा विहितेनादृष्टद्वारा । आहुश्च " मणिमन्त्रौ-
षधादिभ्यो दण्डपातादिनापि वा । क्रियते नैव केनापि सत्यानृतवि-
खण्डनं " इति ।

---

उद्गृह्णन्निगमान्तसागरतलस्पर्शीनि रत्नान्यसौ
सासूयप्रतिवादिदर्शनशिरोमर्माणि भिन्दन्निव ।
वेदान्तार्यवचःप्रसाधनपटुव्याख्यानमुद्राकरः
चित्ते भातु वधूलसन्ततिपरिष्कारस्य कस्यापि नः ॥ * ॥

( विचित्रैस्तैरिति ) विधेयत्वे अदृष्टद्वारा निवर्तकत्वप्रसङ्गेन ज्ञप्ति-
वर्त्यस्य सत्यत्वप्रसङ्गो विचित्रत्वहेतुः । ( अविधेयेति ) अपरिचितश्रु-
तिमार्गैरित्यर्थः । तेन यागादिशब्दार्थेऽपि मौढ्यं व्यज्यते । यत्तदित्यत्र
तच्छब्दः प्रसिद्धिपरः । ( नमस्यामस्याम इति ) नमस्यां प्रयुञ्ज्महे
इत्यर्थः । ( प्रातिकूल्यमिति ) दुरर्थप्रलापोन्मूलनदशायां सदर्-
थोपदेशदशायां चेत्यर्थः । तेन तत्कृतोपकारस्मृतिर्नमस्याहेतुरित्युक्तं भव-
ति । सविशेषब्रह्मव्यावृत्त्यर्थं ( संविन्मात्र इति ) " ब्रह्म वेद ब्रह्मैव भवति " इ-
त्याद्यभिप्रायेण ( परस्मिन्ब्रह्मणीति ) केनापि प्रकोपेनापि '

यत्पुनरुन्मत्तान्प्रति भिषज्यते; तदपि तत्रानारोपितत्वाभिमतदोषविशेषमोक्षणायैव, नपुन स्तदधीनधीविशेषमात्रसिद्धमिथ्यापदार्थ निवर्तनाय। दोषेतु शममुपेयुषि स्वरसवाहितत्त्वज्ञानादेवतन्निवृत्तिः। अत्राप्याहुः " भ्रांतभेषजनिर्माणं नभ्रांतेरुपशांतये। किन्तुभ्रांतिनिदानस्य दोषस्यैवोपशांतये॥" इति। नचात्रापिदोषनिवारणाय वैधापेक्षानुप्रवेशः; दोषस्याप्यत्र दृङ्मात्राधीनसिद्धितया मिथ्यात्वाविशेषेण एकहेलयैव तत्त्वज्ञानेनानिवार्यत्वात्। ततश्च — विश्वमिथ्यात्वविज्ञानकुक्षिनिक्षेपभक्षितः। नापेक्षतेपुनर्दोषः कर्मायत्तात्मबाधकम्॥*॥ लौकिकस्यतुदोषस्य व्यावहारिकव्यवस्थानतिक्रमाद्भेषजाद्यवकाशः। यद्यप्यविद्यायामपि सा समाना; तथापि तथाविधत्वप्रबोधनायप्रवृत्तत्वाद्वाक्यस्य तावतैवतन्निवृत्त्युपपत्तिः। नचज्ञानंस्वरूपेणविधातुंशक्यं, अतएवद्रष्टव्यइत्यपि फलानुवादइतिनिरणैषुः। तदर्थतयाचनश्रवणादिविधिनैरर्थक्यं। तादर्थ्यंच प्रतिबन्धकभेदवासना

---

**( अनारोपितत्वाभिमतेति)लौकिकानामभिमतिर्विवक्षिता तेन,व्यावहारिकत्वं विवक्षितम्। ( भ्रान्तेरिति ) भ्रान्तिसिद्धार्थस्याप्युपलक्षणं। ( नचेति ) दोषः - अविद्या। भक्षितः - जीर्णः। ( तथाविधत्वेति ) व्यावहारिकत्वबोधनाय ; मिथ्यात्वे तात्पर्यम्। ज्ञानस्यैवतर्हिविधानमस्त्वित्यत्राह (नचज्ञानमिति) आज्यावेक्षणादिविधीनां तत्साधनपरत्वाभिप्रायेणाह (स्वरूपेणेति) कथन्तर्हि द्रष्टव्य इतिविधिरित्यत्राह (अतएवेति) ननुतर्हि श्रोतव्यादिवाक्यानामपि ज्ञानविषयाणां विधिपरत्वासंभवाद्वैयर्थ्यमेवस्यादित्यत्राह (तदर्थतयेति) ज्ञानार्थतयेत्यर्थः। ज्ञानार्थोऽयंचेतोवृत्तिविशेषः; नतु स्वयंज्ञानमितिभावः। यद्वा-यद्यविधेयाज्ज्ञानादेवबन्धनिवृत्तिः ननुविहितात्, तदा श्रवणादिविधानं व्यर्थमित्यत्राह (तदर्थतयेति) दर्शनरूपफलार्थतयेत्यर्थः। वाक्यजन्यज्ञाने वाक्यमेवह्यपेक्ष्यते, नपुनः श्रवणमित्यत्राह (तादर्थ्यंचेति ) ननु श्रवणादीनां सर्वेषामपि प्रकरणेन, मोक्षार्थताअविशिष्ट**

निरसनद्वारेण । तस्याश्चप्रतिबन्धकत्वं असम्भावनाविपरीतसम्भावना ख्यचित्तविक्षेपहेतुत्वात् । " ब्रह्मवेद " इत्यादौच ज्ञानमात्रस्यैवमो क्षहेतुत्वंश्रूयते । नचास्यवाक्यतस्सिद्धस्यैवज्ञानस्यविधेयत्वसंभवः, "अ प्राप्तेशास्त्रमर्थव " दितिहि न्यायविदः । यत्तु नायंसर्पइतिबुध्यस्वेत्यादौ भ्रमनिवृत्त्यर्थे ज्ञानविधिवद्दृश्यते; तत्रापि नायंसर्पइत्येतावतैवासिद्धंज्ञा नं विस्रम्भमभिसन्धायविधेयवदनूद्यते । यदिचनायंसर्पइत्येतावता भ्र मोननिवर्तेत, तदाजानीहीतिपरश्शतविधानेऽपि कथंतन्निवृत्तिः, अतः " तत्त्वमसि " इत्याद्युपदेशात्सोहमित्यादिरूपेण विवर्तमानयाधियैव विशुद्धाधिष्ठाननिष्ठया समूलभेदभ्रमोन्मूलनमिति ॥

अत्र ब्रूमः । सिद्धे विश्वस्य मिथ्यात्वे धीमात्रात्तन्निवर्तनं । तदेवनघ टेतेति यथावदभिधास्यते ॥

यत्तु लौकिकदोषस्याविद्यायाश्च मिथ्यात्वाविशेषेपि व्यावहारिक व्यवस्थया वैषम्यमुक्तं, तदपि न, मिथ्याभूतानामपि काचकामलादि दोषाणां ज्ञानेतरनिवर्त्यत्वे दृष्टेस त्यविद्यायामपि तदविरोधात् । अस्त्ववरो धः, तथापि प्रयोजकोपदेशजन्यज्ञानादेव तन्निवृत्त्युपपत्तेः हेत्वन्तरप रिग्रहे कल्पनागौरवमितिचेन्न, श्रुतेतदभावात् , तत्परिग्रहएव तत्प्र संगाच्च । नहि श्रुतहानं न्याय्यं । येच ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति प्र योजकज्ञानवन्तः, तेपि चक्षुरादिगततिमिरादिदोषनाशाय प्रतिभट

---

**वाक्यतस्तुनज्ञानस्याप्तीत्यत्राह (ब्रह्मवेदेति) एवमपि ज्ञानस्यस्वरूपेण वि धातुमशक्यत्वंकुतइत्यत्राह(नचास्येति) प्रमाणपरतंत्रस्यज्ञानस्यनविधेयता, विद्ध्यभावेतदप्राप्तौहि विधिःस्यादित्यर्थः । ( विस्रंभमिति ) विस्रंभयो ग्यतानूद्यत इति भावः । ( मिथ्याभूतानामिति ) ततश्च विश्वमिथ्यात्व ज्ञानेन निवृत्तिसंभवेपि तन्निवृत्त्यर्थतयाऽन्यस्यापि विधानमविरुद्धमित्य र्थः । ( प्रयोजकेति ) ब्रह्मव्यतिरिक्तत्वेन मिथ्यात्वोपदेशजन्यज्ञानादेवेत्य र्थः । तदभावात – आभिप्रायिकोदोष स्तच्छब्देन गृह्यते । ( तत्परिग्रह- इति ) परिग्रहः कल्पना । ( येचेति ) अनेन व्यभिचारः स्वप्रवृत्ति**

संसारश्च भेदवासनादिभिः प्रवृत्तानामस्यन्ते. न पुनर्मिथ्यात्वाध्यवसाय
महारोगेण प्रमाणयन्तो जोपमासते । आहुश्च " मायावादिमतस्थाश्च-
महारोगेण [ दृति ] पीडिता । सर्वेऽज्ञानादश्नन्ते किञ्चभेषजक-
भिषग ॥" इति । तस्मादविद्यायामपि मिथ्यात्वाध्यवसायस्य प्रयोजको-
पदेशवशात्सिद्धावपि दोषान्तरवदेव ज्ञानेतरहेतुनिवर्त्यत्वाविशेषात् त-
दर्थकर्माङ्गकोपासनविधानं नानुपपन्नं । उक्तं च वरदराजाचार्यैः " य-
थाहरति कीटकादि क्रियते दोषशान्तये । तद्वद्दुरितशान्त्यर्थं क्रियताहार-
कर्मणे " इति । यत्तूक्तं न ज्ञानं स्वरूपेण विधानार्हमिति, तत्किं ज्ञा-
नस्याभासात्मकतया, इच्छाभावार्थतया, यद्वा स्वाश्रयप्रयत्नविषयत्वाभा-
वात्, अथवा स्वाश्रयपुरुषव्यापारतामात्रात् . उतमानसभावनानु-
प्रवेशाविरहात्, अन्यस्माद्वृत्तिश्चेदिति । नप्रथम . सर्वपक्षेऽवृत्तिरूप-
पत्र पदपक्षेत्वात्मविशेषगुणस्य उत्सर्गपक्षेतु तदर्थप्रयत्नविशेषरूपस्य का-
रणाधीनतया भाव्यत्वसिद्धेः । आहुश्च " कादाचित्कस्वभावस्य भा-
व्यत्वं केन वार्यते । तस्मात्कारणजन्यत्वे नार्वाकपतञ्चर्वणम् ॥ " इति ।
न द्वितीयः . " ज्ञा अवबोधने " इति भावार्थतयैव पाणिनीयस्मरणात् .
आत्मस्वरूपभूतज्ञानस्य तु विधानप्रसक्त्यभावात् ।

---

विरोधश्चोक्तः । बाधितानुवृत्त्यादिभिस्तदुपपादनेऽपि अननुवृत्त्यर्थमपि भे-
षजपानवदविद्याननुवृत्त्यर्थमेव साधनान्तरविधानं संभवतीत्याशयः ।
( नप्रथम इति ) आत्यन्तिकेन साध्यत्वं विवक्षितम् । ( कादाचित्केति )
अत्र पूर्वार्धमिहोपजीव्यम् । यद्वा – भाव्यत्वं साक्षात्परंपरयोदासीन्येन कृ-
तिसाध्यत्वं भाव्यत्वञ्च करणाधीनस्येति, केषाञ्चिज्ज्ञानानां पुरुषप्रय-
त्नाधानकरणजन्यत्वदर्शनेन भाव्यत्वसिद्धेरित्यर्थः । सिद्धे हि करणाधी-
नत्वे तत्प्रयोजकप्रयत्नाधीनतापत्तेः, तदेव नेत्यत्राह ( तस्येति ) ( भा-
वार्थतयेति ) बुद्धेर्भावार्थतया पाणिनीयस्मरणादित्यर्थः । वृत्तिरूपस्या-
र्थः । आत्मस्वरूपभूतन्तु ज्ञानमनाद्यनन्तत्वादविधेयमेवेत्यत्राह (आत्मेति )

न तृतीय:, प्रयत्नस्याविधेयत्वप्रसंगात्, लोकेहि स्वाभिमतकार्यार्थं प्रयतेतेतिप्रयत्नविषयविधानदर्शनात् । नचतुर्थ:, भावार्थान्तराणामप्यविधेयत्वप्रसंगात् । नपञ्चम:, यष्टव्यइत्यादौ यागादेरिव द्रष्टव्यइत्यादौ दर्शनादेरपि तदनुप्रवेशे विरोधाभावात् । नापि षष्ठ:, ज्ञानविधिविरोधिन:कस्यचिदन्यस्यापि कुतश्चित्सिद्ध्यभावात् । किञ्च – यदिज्ञानं नविधेयं कथं तर्हि यागादिविधिरपि न भज्येत, यागोपिहि देवतोद्देशेनद्रव्यत्यागात्माबुद्धिविशेषएव । एवञ्चद्वादशाहे अविवाक्ये दशमेहनि बुद्धिविशेषरूपस्य मानसग्रहादे: कथंविधेयतेष्यते, कथंवा मनश्चिताद्यग्नीनां दृष्टिरूपाणां तत्त्वविषयाणांचोपासनानां विधेयत्वमिष्यते, कथञ्च दर्शनार्थतयापि श्रवणमनननिदिध्यासनानि विधेयानीन्छसि, तान्यपि ज्ञानविशेषरूपाण्येव । ननु नतानिज्ञानरूपाणि, अपितु तदर्थव्यापाररूपाणीतिचेत् नन. तदर्थत्वेसत्यपि तेषामपि स्वरूपस्यज्ञानरूपत्वात् ।

---

अस्माभिरपि स्वरूपभूतज्ञानस्य विधानं नेष्यतइत्यर्थ: । (लोक इति) तृप्त्यर्थं भोजने प्रयतेतेत्यादा विष्टसाधनत्वबोधनरूपविधानस्य दर्शनादित्यर्थ: । (भावार्थान्तराणामिति) पुरुषशब्देनात्मविवक्षायां प्रक्षेपादेर्विधेयतानस्यात्, शरीरपरत्वेतु त्यागादेर्विधेयता नस्यात् । (अनुप्रवेशइति) केनेत्यंशानुप्रवेशइत्यर्थ: । (कुतश्चिदिति) प्रमाणादित्यर्थ: । ननु श्रवणादीनां न ज्ञानत्वं, परोक्षापरोक्षज्ञाने क्लृप्तकारणाजन्यत्वात्, किन्तु ज्ञानाभास: पदार्थान्तरं, अन्त:करणसमवेतंज्ञानं सुखाद्यष्टगुणातिरिक्तान्त:करणविशेषगुणभिन्नं पदार्थत्वात सुखादिवत् । न चाप्रयोजकत्वं प्रत्यक्षसिद्धायावृत्ते: क्लृप्तकारणाजन्यत्वेन ज्ञानत्वायोगात् । नच तस्मिन् मन:करणमितिवाच्यं, मनस: प्रमाश्रयत्वेन तद्करणत्वात्, अत: इन्द्रियादिवज्ज्ञानार्थत्वा न्न ज्ञानमिति शंकते (ननु नतानीति) (तदर्थत्वइति) अयंभाव:, श्रवणादीनां ज्ञानत्वं तावदनुभवसिद्धं – ध्यानेतु विद्युपास्योर्व्यतिरेकेणोपक्रमोपसंहारदर्शनेनापि ज्ञानत्वमवगम्यते । नचान्यत्र क्लृप्तकारणविरहाद्ज्ञानत्वं. ज्ञानत्वे प्रमा

णिके सिद्धेस त्यन्यत्रक्लृप्तकारणाभावेपि सामग्र्यन्तरस्यैव कल्प्यत्वा-त् । अन्यथा प्रत्यक्षे क्लृप्तकारणविरहा दनुमितेरप्यज्ञानत्वप्रसंगात् । स्वभावतस्तु मनसएवकारणत्वा न्नान्यत्र क्लृप्तकारणविरहः । नच-मनसः प्रमाश्रयत्वमेवेतिवाच्यम् , आत्मनएव ज्ञानाश्रयतया मनसःका रणत्वसाधनात् । किंच निदिध्यासनं तावदविच्छिन्नस्मृतिसन्तानः, ध्या नानन्तरं एतावन्तं कालं भगवन्तमस्मार्षमिति प्रयोगानुभवदर्शनात् , ध्याने ध्रुवास्मृतिरित्यादिश्रौतप्रयोगाच्च । स्मृतेश्च ज्ञानत्वं तवापीष्टम् । अतस्संस्कारादेस्सत्वान्नान्यत्र क्लृप्तकारणविरहः । अतएवानुभवप्रयोग दर्शनात् हृष्ट्युपासनस्याप्याहार्यारोपसन्तानात्मकस्य ज्ञानत्वंसिद्धम् । मननमपि युक्तिभि रेवमेवैतदिति व्यवसायः । तच्च ज्ञानमेव, " म-नुअवबोधने " इति धातोर्निष्पन्नत्वात् । श्रवणमपि शाब्दज्ञानविशेषए व - तत्रैव स्वारस्यात । श्रवणमननयोर्निरुक्तहेतुभूतव्यापारत्वेपि व्या प्तिसहचारलाघवोपक्रमादिप्रतिसन्धानातिरिक्तस्य मनोव्यापारस्यादर्श ना त्तेषांचज्ञानरूपत्वात् ज्ञानविधिस्तवाप्यवर्जनीयः । यदप्युच्यते, ज्ञा नस्य बहुशः कृतिव्यभिचारात्कृतिसाध्यत्वाभावान्न विधेयत्वमिति । त-न्न । वाय्वादिनोदनाधीनक्रियायाः कृतिव्यभिचारेण योगादेरपि कृत्य साध्यत्वप्रसंगात् । किंच प्रत्यक्षादिमनोवृत्तौ कृतिसाध्यत्वादर्शनाच्छ्र-वणाद्यात्मकमनोवृत्तेरपि कृतिसाध्यत्वाभावप्रसंगः । यदुक्तं जीवकर्तृ कक्रियायां कृत्यव्यभिचारइति । तन्न । नतावज्जीवकृतिसाध्यत्वं कृतिमा त्रसाध्यतावच्छेदकं - ईश्वरकृतिसाध्ये अव्याप्तेः, नापि जीवकृतिसाध्यता वच्छेदकं आत्माश्रयात् । नच - जीवकर्तृकक्रियात्वं नात्रावच्छेदकतया ऽभिमतं, किन्तु, यागादिक्रियाविशेषउपलक्ष्यते, तत्रचास्त्येवाव्यभिचारः, ज्ञानन्तु जीवकर्तृकं कुत्राप्यप्रसिद्धमेवेति वाच्यम् । तवमते अवधार-णात्मकब्रह्मसाक्षात्कारस्यापि निदिध्यासनादिद्वारककृतिमन्तरेणासिद्धेः । नच - कृत्यव्यवधानाभावा न्न कृतिसाध्यत्वमिति वाच्यम् । घटादेः कृ-तिसाध्यत्वाभावप्रसंगात् । नच - निदिध्यासितव्यइति निदिध्यासनस्य विहितत्वात् तत्कृत्यतिरिक्तदर्शनहेतुकृत्यभावाच्च दर्शनविधिर्व्यर्थइति-वाच्यम् । तर्हि ततएवाविधानमिति स्यात नतु कृत्यसाध्यत्वात् । व स्तुतस्तु दर्शनसमानाकारध्यानस्य विधेयत्वा त्तस्यचकृत्यव्यभिचारात्

श्रवणंहि नाम तत्त्वदर्शिन आचार्यां न्याययुक्तार्थग्रहणं, मननमपि तथा एवमेवैतदिति युक्तितः प्रतिष्ठापनरूपो व्यवसायः, निदिध्यासनमपि अनवरतभावनात्मकस्मृतिसन्तानः । तदेवमेषां ज्ञानभूतानामेव यदि विधेयत्वमिष्येत, कथं द्रष्टव्यइत्यत्र दर्शनस्य विधेयत्वं नेष्यते । तथाच, विष्णुर्यष्टव्य इत्यादौ विधिबाधनदर्शनात् । सर्वत्रस्याच्च तद्बाधोऽदर्शनेवा नबाधनम् ॥ अथच ध्यानफलतयादर्शनमनूद्यतइतिमन्यसे, तदा मननध्यानयोरपि पूर्वपूर्वफलतयाऽनुवादइतिकिं न कल्पयसि । अस्त्वेवमितिचेन्न; " फलोपकार्यंगतया श्रवणादित्रयविधि " रितियुष्माभिःप्रतिपादनात् । तथाचैकत्रैवविधेयत्वमनुवाद्यत्वंचेति विरोधः, नहि विरुद्धत्रिकद्वयापत्तिरनुमन्यते तान्त्रिकैः । उक्तंहि " उद्देशेनानुवादेन प्राधान्येन समन्वितं । उपादानं विधानंवा गुणत्वंनैवदृश्यते " इति । " उपस्थितेऽतस्तद्वचनात् " इतिसूत्रोक्तन्यायेनो पासनस्य सांसारिकफलोत्तीर्णे प्राकरणिकस्वरूपाविर्भावपूर्वकनिरतिशयानन्दब्रह्मानुभवाख्यफलेसति द्रष्टव्यइत्यत्र निष्कारण

---

**ज्ञानं नविधेयमित्यनुपपन्नं, ज्ञानार्थस्य ज्ञानत्वमविरुद्धं पदज्ञानादिवदिति । दर्शनान्तरस्य विध्यदर्शनान्न ब्रह्मदर्शनस्य विधेयतेत्यत्राह ( तथाचेति ) यदि क्वचिद्दर्शनेविध्यभानाद्दर्शनान्तरेऽपि नविधिः, तर्हि - " विष्णुरुपांशुयष्टव्यः प्रजापतिरुपांशुयष्टव्यः अग्नीषोमावुपांशुयष्टव्यौ " इत्यादावनुवादरूपत्वस्य स्थापनाज्जयोतिष्टोमादावपि विधिर्नस्यात् । यदि तत्र भातितदभावाभ्यां विशेषः तदा प्रकृतेऽपि सएव विशेषोऽङ्गीकार्यइत्यर्थः ( दर्शनइति ) ब्रह्मदर्शने विधिबाधनं न स्यादित्यर्थः । ( तदेति ) श्रवणमात्राद्यत्नान्तरव्यतिरेकेण मननाद्यसिद्धेर्यदि विधेयता तदा दर्शनेऽपि तुल्यमितिभावः ( फलेति ) फलोपकारितया अंगतयाचेत्यर्थः । फलोपकारित्वंच फलकरणत्वं, करणत्वं श्रवणस्य, अंगत्वमितरयोः । ( विरोधइति ) अयंच मनननिदिध्यासनयोरनुसन्धेयः । एवं सम्प्रतिपन्नपापध्वंसदृष्टान्तेन दुःखध्वंसस्य साध्यत्वेपिनित्यत्वमुपपादितम् । वस्तुतस्तु पापध्वंसएव मोक्षः, तत्रच साध्यत्वे**

विधिभंगप्रयासेन दर्शनस्यफलत्वं किमर्थं कल्प्यते । नियोगसाध्य त्वे मोक्षस्यानित्यत्वप्रसंगादितिचेन्न, मोक्षशब्देन दुःखध्वंसविवक्षायां सा ध्यत्वेऽपि नित्यत्वोपपत्तेः, प्रायश्चित्तधर्मसाध्यपापध्वंसवच्च । नच दुः खप्रध्वंसोमोक्षः, किन्तु दुःखहेतुसर्वकर्मध्वंसः, दुःखस्यक्षणिकत्वेन स्व यमेव विनाशात्। पुनर्दुःखानुत्पत्तिविवक्षायां तस्यासाध्यत्वाभावेन प्रसंज काभावः । ब्रह्मस्वरूपविवक्षायामपि तेनैव दत्तोत्तरत्वं । नह्यनादि सिद्धं ब्रह्म उपायसाध्यमित्यनुन्मत्तोब्रवीति । स्वरूपाविर्भावविवक्षायाम पि नियोगविशेषा दत्यन्तवृत्ते प्रतिबन्धे स्वरूपमात्राधीनस्य स्वरूपा विर्भावस्य स्वरूपवन्नित्यत्वा त्पुनःप्रतिबन्धाभावाच्चा निवर्त्यत्वमुपपद्यते । ननु यद्युपासनविधेः फलतया मोक्षः स्वीक्रियते, तर्हि श्रवणमनन- दर्शनविधीनां किंफलमितिचेन्न, श्रोतव्योमन्तव्यइत्यनयो र्विधित्वाभावात्, द्रष्टव्यइत्यस्यतु पृथग्विधित्वाभावात्, निदिध्यासनापरपर्याय मुपासनमेव द र्शनरूपं तस्मि न्विधेयं । तथाहि श्रवणंतावत् सांगसशिरस्कस्वाध्यायाध्ययन जनितापात प्रतीतिविदितपुरुषार्थतत्साधननिर्णयार्थिनः पुरुषस्य रागतएव सिद्धमिति नतत्रविध्यपेक्षा। श्रवणप्रतिष्ठार्थत्वान्मननस्य तदपि ततएवसिद्ध मिति नतत्रापि। अतोयथावस्थितवाक्यार्थाध्यवसायस्य ध्यानोपकारकत्वात् तज्जनकयो श्श्रवणमननयोरिहानुवादएव । ध्यानन्त्वप्राप्तत्वा द्विधेयमेव ।

---

**पि नित्यत्वं संम्प्रतिपन्नमेवेत्याह ( नचेति ) ( पुनः प्रतिबन्धेति ) यद्य पि प्रतिबन्धकं नकार्यविनाशकं किन्तु तदुत्पत्तिविरोधि, तथाप्यत्र चक्षुरादिजनितज्ञानावस्थायाः प्रतिबन्धकीभूतकर्मणानिवृत्तिदर्शनादिहापि पुनः प्रतिबन्धसत्त्वे तच्छंकास्यात्, तन्निराकरणार्थमिदमुक्तं । न- चैवं चक्षुरादिजन्यज्ञानस्य द्वितीयक्षणएव निवृत्तिः स्यादितिवाच्यम्। यादृशं प्रतिबन्धकं तादृशस्यैव निवर्तकत्वात्, चक्षुरादिसंप्रयोगाद्यभा वविशिष्टंच कर्मप्रतिबन्धकं, चक्षुस्संप्रयोगादिच तत्रोत्तेजकं, नचैतद्वि तीयक्षणेऽस्ति, नच चक्षुरादेरुत्तेजकत्वे ज्ञानकरणत्वानुपपत्तिः, सा क्षात्कारत्वानुमितित्वादिवैजात्यप्रयोजकतया करणत्वस्याप्यावश्यकत्वा- दितिभावः। ( नतत्रापीति ) विध्यपेक्षेतिशेषः । ननु ध्यातव्यगोचर**

यद्यपिचात्र विषयस्यानुकूलत्वा त्क्वचिन्नेऽपिरागस्संभवति, तथापि । तत्तद्गुणविशेषविशिष्टस्याहरहरनुवर्तनीयस्य सांगस्यतस्य फलसाधनत्व- विधिमन्तरेण तथाविधविशिष्टानुष्ठानस्यरागप्राप्तत्वं नसंभवति स्वाचधीश्चोदनयैव, तन्मूलश्च रागोयागादिष्वपि समानो विधे- रपेक्षितश्चेति नदोषः । ननु यदिध्यानोपकारकतया श्रवणमननयोरत्रा द स्तर्हि द्रष्टव्यइत्येत्रविधि रस्तु ध्यानन्तु तदुपकारकत्वेन सिद्धत्वाच्छ्रव- णादिवदनूद्यतइतिकल्प्यमितिचेन्न । ध्यानस्य दर्शनोपकारकत्वं किं अदृ ष्टद्वारा, उतदृष्टद्वारा । नपूर्वः-तस्य चोदनामन्तरेणासिद्धेः । उतरत्रापि दर्शनशब्देन किं चाक्षुषं ज्ञानं विवक्षितं, उतप्रत्यक्षमात्रं, यद्वाप्रत्यक्षसमा नाकारमिति; आद्ये "नचक्षुषागृह्यतेनापिवाचा मनसानुविशुद्धेन" इत्या दिश्रुतिविरोधः । द्वितीयेऽपि-किंलौकिकंप्रत्यक्षं उतयोगिप्रत्यक्षं, पूर्वत्रध्यान स्य लौकिकप्रत्यक्षजनकता यामन्वयव्यतिरेकाद्यभावेन अदृष्टद्वारा तन्निर्द्धा तत्रापि चित्रपशुफलत्वादाविव विध्यपेक्षैव । भावनाबलजन्यप्रत्यक्ष नाभ्युपगच्छामः । तस्यच 'वृक्षेवृक्षेचपश्यामी' तिवद् भ्रान्तौ स्मृतिविशेष मात्रेवा पर्यवसानात् । नभ्रान्तिः अनंगीरात् । नापिस्मृतिविशेषं, अ स्वपक्षांगीकारप्रसंगात् । इतरत्तु योगिप्रत्यक्षस्य प्रकृष्टादृष्टजन्यत्वा त्तन्मूलविध्यपेक्षायां निदिध्यासितव्यइत्ययमेवात्रविधिरंगीकार्यः । तृतीयेतु

---

**श्रवणमननयोर्मोक्षार्थतया विधानंस्यात , रागप्राप्तस्यापि राजसूयांगतया विदेवनादेर्विधानवदिति शंकां परिहरन्नुपसंहरति ( अतइति ) मोक्ष साधनत्वेन ध्याने विदिते लोकतएव ध्यानोपकारत्वेन सिद्धयोः श्रवण मननयोर्ध्यानार्थतयैव प्रवृत्ते स्ततएव ध्यानसिद्ध्या मोक्षसिद्धे र्न तन्मो क्षार्थमपिविध्यपेक्षा, राजसूयंप्रतितु विदेवनादीनां लोकतोऽगत्वेनाप्राप्ते नियतानुष्ठानसिद्धये तदंगतया विधानं युक्तमेव. अतश्श्रोतव्योमन्तव्य इत्यनुवादएवेति । ( तत्तदिति ) अविच्छिन्नत्वदृशेनफलपर्यन्तानि दन्याद योगुणाः । नन्वेवं गुणान्तरमप्राप्ततयाविधानेऽपि स्वरूपस्य विधानं न स्यादित्यत्राह ( फलेति ) फलसाधनतया प्राप्त्यभावात**

विदेवनवद्विधेयतेत्यर्थः । एतेन - यदुक्तं कैश्चित् " उपायत्वदशाप्रभृति भगवज्ज्ञानं प्रीतिरूपमिति वदतां भवतां मते कृतश्रवणमननंप्रति भगवतोऽत्यन्तानुकूलत्वा दनुकूलविषयचिन्तनेच रागतएव प्रवृत्ते स्तच्चिन्तनरूपनिदिध्यासनस्यैव विधिर्नस्यात् , तत्र रागप्राप्ते चिन्तने अविच्छिन्नत्वादिगुणविधानंचे द्रागप्राप्ते श्रवणे गुरुमुखपूर्वक वादि विधानं श्रवणादिवाक्येष्वस्त्वि" ति, तन्निरस्तं । तथाहि । किमत्राज्ञातज्ञापकत्वन्नसंभवति उताप्रवृत्तप्रवर्तकत्वं, नाद्यः, निदिध्यासनस्य मानान्तरेण मोक्षसाधनत्वेनाप्राप्तेः तदुद्देशेन विधानसंभवात् । न द्वितीयः, मोक्षार्थिनो विधिं विना तत्र प्रवृत्त्यसंभवात् । ननु मोक्षार्थिन स्तत्र प्रवृत्त्यभावेपि सुखरूपे तस्मिन् भगवद्ध्याने तदुद्देशेन प्रवृत्तौ तत्स्वाभाव्यान्मोक्षोऽपि सेत्स्यतीतिचेन्न, नहि भगवद्ध्यानमात्रं प्रीतिरूपं – इदानीं तददर्शनात्, किन्तु – अहरहरनुष्ठीयमानानभिसंहितफलभगवत्समाराधनात्मकनित्यनैमित्तिकादिभिः परिशुद्धे मनसि शान्त्यादिपरिष्कृते अहरहरभ्यासाधेयातिशयस्य ध्यानस्य बहुकालसाध्यस्य प्रीतिरूपत्वमिष्यते । नच निरतिशयनित्यपुरुषार्थेच्छां विना शमदमादि संभवति । नापि ध्यानरूपसुखस्यावगमेऽपि तस्य वैषयिकसुखवदेवाल्पास्थिरतया त्रिवर्गप्रावण्येन प्रतिबन्धाच्च बह्वायाससाध्या योगकर्मादिप्रवृत्ति र्विषयनिवृत्तिश्च संभवति । यच्चोक्तं तैरेव, " भवद्भिरपि ' सहकार्यन्तरविधिः ' इतिसूत्रे ' तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य ' इत्यादिवाक्यै रौपदेशिकार्थाधिगमस्य पुनः पुनर्ब्रह्मसंशीलनस्यच विधेरङ्गीकृतत्वेन तयोरेव श्रोतव्योमन्तव्यइत्याभ्यां विधिरस्तु, औपदेशिकात्र्थाधिगमादौ श्रवणादिपदप्रयोगा" दिति ॥

तदिदमाचार्यैरेवाशंक्य निरस्तं, ननु न्यायोपेतवाक्यमात्रानवगम्य केवलोपदेशगम्यार्थविशेषश्रवणं श्रोतव्यइत्यत्र विधेयमितिचेन्न , मननपूर्वभावितया श्रवणस्य न्यायानुगृहीतवाक्यजन्यरूपत.वगमा च्छब्दस्वारस्याच्च । नच मन्तव्यइत्यालंबनसंशीलनरूपमननविधिरिति वा

श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञानइव मन्तव्यशब्दस्य तने प्रसिद्धिप्राचुर्यात् , तस्यचापवादाभावात्, उभयोरप्राप्तार्थ-

द्रष्टव्यइत्यनेन ध्यानस्यैववैशद्यलक्षणविशेषविधानमिति तदेव सामान्यतो निदिध्यासितव्यइत्युच्यतइतिवैशद्यविशिष्टध्यानसिद्धौ ध्यानदर्शनयोस्साध्य साधनभावाभावात् कथं दर्शनार्थतया ध्यानानुवादः । नन्वेवमस्तु ध्यानस्यविधेयता, दर्शनन्तु योगिप्रत्यक्षात्मकं पृथ ग्विधेयमिति किं नांगीक्रियते,पृथक्फलनिर्देशाभावादिति नवक्तव्यं-मोक्षार्थतया विधेयस्य दर्शनस्य प्रधानत्वे तन्निर्वर्तकतया ध्यानस्यापिविधाने पृथक्फलनैरपेक्ष्या त्प्रधानवाक्यार्थैक्योपपत्तेश्च, अन्यथा दर्शनशब्दस्य मुख्यार्थभंगश्चेतिचेन्नैवम्, "ध्रुवास्मृतिः, स्मृतिलम्भेसर्वग्रन्थीनांविप्रमोक्षः" इतिक्वचिद्ध्रुवानुस्मृतेः साक्षात्सर्वग्रन्थिविप्रमोक्षहेतुत्वं श्रूयते स्मृतिलम्भइति सप्तम्या । क्वचित्तु "भिद्यतेहृदयग्रन्थिश्छिद्यंतेसर्वसंशयाः । क्षीयंतेचास्यकर्माणितस्मिन्दृष्टे परावरे" इतिदर्शनस्य तथैव फलसाधनत्वं श्रूयते । अनयोर्न तावदेक फलसाधनयोर्विकल्पः, गुरुलघुविकल्पायोगात् । अधिकारिभेदेनव्यवस्थितविकल्पकल्पनायामतिगौरवं, विकल्पकल्पनतद्व्यवस्थाकल्पनाच्चेति ।

---

**विधायित्वे वाक्यभेदप्रसङ्गात् । ननु दर्शनरूपताविशिष्टध्यानविधिव दुपदेशगम्यार्थश्रवणशुभाश्रयमननविशिष्टनिदिध्यासनविधिः किं नस्यात्, मैवं, चतुर्ष्वंशेषु विधेस्तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघुत्वात् । नचास्मिन् वाक्ये विधानाभावा दौपदेशिकार्थाधिगमालम्बन संशीलनयो रसिद्धिश्शंकनीया, "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यंच पाण्डित्यंच निर्विद्याथमुनिः" इत्यनन्यथा सिद्धवाक्यान्तरसिद्धत्वात् । किंच सर्वत्र निगमाधीनार्थावधारणस्य न्यायानुसन्धानात्मकमननस्य च निदिध्यासनसहपाठा दिहापि तत्सहचरितयो स्तथात्वमेवयुक्तं, "आगमेनानुमानेन ध्यानाभ्यासवशेनच । त्रिधाप्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥" इति स्मृतौ "श्रुत्वामत्वातथा ध्यात्वा तदज्ञानविपर्ययौ । संशयंचपराणुद्य लभते ब्रह्मदर्शनम् ॥" इति त्वदुदाहृतश्रुतावन्यत्रापि तथा दर्शनात् । (साध्यसाधनभावाभावादिति) निदिध्यासितव्यो द्रष्टव्यइति पदयोरेकविषयत्वेन तदर्थयोःसाध्यसाधनभावाभावादित्यर्थः । निदिध्यासितव्यो द्रष्टव्यइत्यनयो रैका**

किञ्च विकल्पस्य प्रयोगक्रमेण प्रामाण्यत्यागा प्रामाण्यस्वीकार त्यक्तप्रामाण्य स्वीकार स्वीकृताप्रमाण्यपरित्यागावृत्तिरूपाष्टदोषदुष्टत्वादन्याय्यत्वमेव । नापि समुच्चयः, यौगपद्यस्याशक्यत्वात् । क्रमेप्युपकार्योपकारकयोरुपकार्यस्य फलहेतोरंगिनः स्वांगेनसह समुच्चयायोगात् । नच क्रमिकयोरपि दर्शपूर्णमासयोरिव ध्रुवानुस्मृतिदर्शनयो रेकं करणत्वं, तद्रूपस्यापकश्रुत्याद्यभावात् । नच अङ्गभूतायां ध्रुवानुस्मृता वंगिनोदर्शनस्यैव फलं कीर्त्यतइति न विरोधइति वाच्यं, अंगांगिभावस्याद्याप्यनिश्चितत्वात्, दृष्टद्वारस्यासिद्धेः, अदृष्टद्वाराकल्पनेगौरवात् । स्वतः प्रतीयमानार्थभंगेच श्रुतहानिदोषात् । नचात्रप्रजापतिवाक्यनयः, भूयसांन्यायविरोधात, " द्वैधेबहूनांवचनं " इतितान्त्रिकाः । भूयांसिहिवाक्यानि ध्यानोपासनादिशब्दैर्ध्रुवानुस्मृतिमेव मोक्षसाधनमभिदधति । नकेवलं श्रुतिरेव, स्मृतीतिहासपुराणसर्वोत्तरतन्त्रयोगसांख्यशास्त्राण्यपि । दर्शन त्वरपवाक्यावसितम् । एव मीश्वरोपासनस्यैव भूयोभिर्वाक्यै र्मोक्षसाधनत्वावसायात् तदन्यनिषेधश्रुतिसामर्थ्यात् क्वचित्कजीवोपासनानां मोक्षसाधनतया श्रुतानां यथाऽऽक्षिप्तं जीवविशिष्टपरमात्मविषयतया अंगत

---

र्थाभावे द्रष्टव्यइत्यस्य दर्शनसमानाकारत्वोपचारहेत्वभावेन नतादर्थ्ये न लोकसिद्धसाधने ध्याने प्रवृत्तिसंभव इति भावः । किं युगपदनुष्ठितयोस्समुच्चयः उतक्रमेणेत्यभिप्रेत्याद्यं दूषयति (यौगपद्यस्येति) क्रमेपि किमङ्गाङ्गिनोस्समुच्चयः उतप्रधानयोः, आद्यआह (क्रमेऽपीति) (उपकार्योपकारकयोरिति) स्ततोरितिशेषः । द्वितीयआह (नचक्रमिकयोरिति) यथा दर्शपूर्णमासाभ्यामितिद्विवचना त्समुच्चयः तथेहनास्तीत्यर्थः । ननु एकफलो दर्शनमास्तूभयोस्समुच्चयेनविधिः किन्तुदर्शनमेवफलार्थविधीयते, तदङ्गभूतस्मृतौतु तत्फलस्यानुवादमात्रमित्याशङ्क्याह (नचाङ्गेति) स्वतः स्वरसतः, सचार्थःसाक्षात्साधनत्वम् । (नचात्रेति) तत्रहिजीवोपासनस्य मोक्षसाधनताप्रतीतावपि तस्ययथाऽङ्गत्वमेव, एवं ब्रह्मोपासनस्यापि

यावा निर्वाहः, अत्रतु नतथेति विशेषः । अतः परिशेषाद्ध्रुवानुस्मृति दर्शनयो रैक्यएव पर्यवसानं । विस्तृतश्चैतद्भाष्यएव - छागपशुन्यायेन वेदनध्यानादिशब्दानामुत्तरोत्तरं विश्रान्तिप्रतिपादनात् । एवंस्थिते स्मृतिदर्शनशब्दयोर्मुख्यैकार्थासंभवे कस्यचिदौपचारिकत्वमवश्याश्रयणीयमितिचावधारिते स्मृतिशब्देन प्रत्यक्षज्ञानोपचारेऽतिशयासिद्धेः दर्शनशब्देनतु स्मृतेरुपचारे प्रत्यक्षसमानाकारतारूपवैशद्यातिशयलक्षणविशेषसिद्धेश्च दर्शनशब्देन विशदतमाध्रुवानुस्मृतिरेव विवक्षितेत्यंगीक्रियते । अतोऽत्रापि निदिध्यासितव्यइति ध्रुवानुस्मृतिविधानात् द्रष्टव्यइत्येतदपि तद्विशेषसमर्पकमिति । तेन " स्मृतिलंभेसर्वग्रन्थीनांविप्रमोक्षः " " तस्मिन्दृष्टेपरावरे " इत्यत्रच्छागपशुन्यायनिर्णीतोऽर्थः एकस्मिन्नपिवाक्ये निदिध्यासितव्यो द्रष्टव्यइत्यनयो रप्याश्रीयतइति नविरोधः । नच तव्यप्रत्ययद्वयविरोधः, " अग्नयेपथिकृत" इत्यादिषु एकविधेयत्वेपि चतुर्थीद्व

---

त्यर्थः । (नतथेति ) नभूयश्श्रवणाभावोनापिनिषेधइत्यर्थः । ( एवंस्थितइति) ननुदर्शनशब्दलक्षणाभयाद्भिन्नार्थत्वमेववाच्यमितिचेन्न, वाक्यस्वारस्यानुसारेणपदलक्षणायान्याय्यत्वात्, अतएवगङ्गायांघोषइत्यत्रलक्षणा । (स्मृतिशब्देनेति) स्मृतिसमानाकारत्वंहि ज्ञानत्वादि, तच्च दर्शनविधानादेवसिद्धम्, तथाच दर्शनविध्यसिद्धस्य विधेयस्यासिद्धेर्ध्यानविध्यानर्थक्यं । दर्शनसमानाकारोपचारेतु वैशद्यस्य ध्यानविधिमात्रेण तदलभाद् द्रष्टव्यइत्यस्यापि सार्थकत्वमित्यर्थः । दर्शनशब्दस्य चाक्षुषज्ञाने मुख्यस्य प्रत्यक्षपरत्वेऽपि लक्षणैव, अतउभयोर्लक्षणापेक्षया एकस्यापिमुख्यार्थापरित्यागोन्याय्यइत्यपिद्रष्टव्यम् । एवं "स्मृतिलम्भेसर्वग्रन्थीनांविप्रमोक्षः" "तस्मिन्दृष्टेपरावरे" इत्यत्रनिर्णीतमर्थं निदिध्यासितव्योद्रष्टव्यइत्यत्रातिदिशति (अतइति)भिन्नवाक्यएवैतन्न्यायदर्शनात् कथमेकवाक्येप्रवृत्तिरित्यत्राह ( तेनेति ) विशेषसमर्पकत्वेनेत्यर्थः । नहि न्यायप्रवृत्तौ भिन्नवाक्यत्व मेकवाक्यत्वंवा प्रयोजकं, किन्तु सामान्यविशेषभावः, सचेहाप्यस्तीतिभावः । (नचेति) विशिष्टविधेरेकेनलाभादितिभावः । ( अग्नयइति) तत्रापि विशिष्टस्यदेवतात्व मेकेनैवप्रत्ययेनलभ्यते, अत उभयत्रा

यवदविरोधात् । एवंस्थिते यदिवाक्यार्थज्ञानस्यमोक्षोपायता तदोपासना दिविधिनैरर्थक्यं दुष्परिहरं, शब्दजन्यप्रत्यक्षवादस्तुपरिहरिष्यते । यत्तु वाक्यार्थज्ञानोत्पत्तौ प्रतिबन्धकभेदवासनानिरासद्वारेण श्रवणमनननिदिध्यासनाना मुपकारकत्वमुक्तम्, तदपि हास्यं, वाक्यस्याकाङ्क्षायोग्यतासन्निधिपरामर्शमन्तरेणापेक्षणीयान्तराभावात् । सत्यांतुसामग्र्यांवाक्यार्थज्ञानानुत्पत्त्यनुपपत्तेः । नचप्रतिबन्धकमपि सामग्री वैकल्यपर्यवासितम्, यथाहुः, "प्रतिबन्धोऽपि सामग्रीतद्धेतुप्रतिबन्धकः" इति, विपरीतवासनायाः प्रतिबन्धकत्वस्यैवासिद्धेः, सत्यामपि विपरीतसर्पादिवासनाया माप्तोपदेशलिंगादिभिः सर्पादिबाधकं तत्त्वज्ञान मुत्पद्यते । अतएवासम्भावनाविपरीतसम्भावनाख्यचित्तविक्षेपद्वारा भेदवासनायाः प्रतिबन्धकत्वमित्येतदपिनिरस्तम् । यदिच भेदवासनानिरसनद्वारेणाद्वैतवाक्यार्थज्ञानोत्पत्तिरिष्यते, तदानकदाचिदपितदुत्पत्तिस्सेत्स्यति, उक्तंहि—"यावच्छरीरपातंहिकिन्नवर्तेतवासना । तन्निवृत्तौकथं पुंसा मुन्मीलननिमीलने ॥" इति । किञ्च अनादिकालोपचितानां पटुतरप्रत्ययाभ्यासादरै र्दृढतरनिरूढाना मपरिमितानां भेदवासनानां कतिपयकालसाध्याविशदप्रत्ययादिमूलाल्पीयस्तमाद्वैतवासनया निरसितुमशक्यत्वात् । किञ्च तत्त्वज्ञानेसति तद्विषयभावनया तद्विपरीतवासनानिरासः तन्निरासेच तत्वज्ञानमिति मिथस्संश्रयस्स्यात्

---

**पिप्रत्ययान्तरमनुवादस्साधुत्वार्थवेतिभावः । (एवमिति) एवंस्वपक्षेस्थिते परपक्षेदोषउच्यतइत्यर्थः । (नैरर्थक्यमिति) वाक्यश्रवणादेववाक्यार्थज्ञानसिद्धिरितिभावः । प्रत्यक्षार्थतयासार्थक मित्याशङ्क्याह (शब्देति) (नचेति) प्रतिबन्धकइतीत्यनन्तर मितीतिशेषः, नचेत्येत दनेन संम्बध्यते। विपरीतवासना भेदभ्रमजन्यसंस्कारः । असंभावना अद्वैतंनोपपद्यत इतिबुद्धिः । विपरीतसंभावना- भेदउपपन्नइतिबुद्धिः । (कथमिति) उन्मीलनादीनामप्यध्यस्तत्वेन संस्कारजन्यत्वादित्यर्थः । (अनादीति) यदिविरोधिगोचरत्वादद्वैतज्ञानस्य भेदवासनानिवर्तकत्वं तदाएकेनापि**

तदप्याहुः " उत्पन्नेसतिविज्ञाने वासनातुनिरस्यते । निरस्त वासनस्यैव विज्ञानमितिदुर्भणं ॥ " इति । अनुत्पन्नएव तत्वज्ञाने श्रवणमनननिदिध्यासनैः क्रमात्तन्निरासइतिचेत्, किन्तानितत्त्वगोचराणि उतातत्त्वगोचराणि, पूर्वत्र विपरीतवासनायां सत्यां तेषामप्यनुत्पत्तिरेव । उत्तरत्रातत्त्ववासनया कथं तत्त्वज्ञानोत्पत्तिप्रतिबन्धकवासनानिरासः । तथाच " सागरंगन्तुकामस्य हिमवद्गमनोपमं । "इतिन्यायः । किञ्च अभेदज्ञाने सिद्धे भेदवासनानिरासस्य किमर्थमपेक्षा । तदसिद्धौतु तत्प्रतिपक्षवासनानिरासाभिलाषानुत्थानं । नह्यभेदज्ञानप्रतीतिरभेदप्रतीतिमन्तरेणस्यात् । नच प्रतीतौतुवैशद्यावैशद्यादिवैषम्यं त्वया वक्तुंशक्यं, अभेदस्य ब्रह्मस्वरूपायमाणस्य सर्वदैकरूपत्वात्, विशेषग्रहेच भेदप्रतीतित्वप्रसंगात् । नच व्यावहारिकभेदोऽत्रास्तीति वाच्यम्, भेदवासनानिरासद्वारेणाभेदग्रहस्य परमार्थविषयत्वात् । अतो नभेदवासनानिरासद्वारेण श्रवणादित्रयस्य दर्शनोपकारकत्वमिति । यत्पुनरुक्तं " ब्रह्मवेदब्रह्मैवभवति " इत्यादौ ज्ञानमात्रस्यैव मोक्षहेतुत्वं श्रूयते नहि प्रतिपन्नेर्थे नास्तिकत्वं न्याय्यं । अतएवोच्यते " नैषाकरणमितिस्तर्केणापनेया " इतीति, तदप्यसत्, सामान्यशब्दानां विशेषे-

---

निवृत्तिःस्यात, यदि तावतामेकेननिवृत्तिर्नसंभवति तदातावत्कालध्यानेनैव तन्निवृत्तिस्स्यादितिभावः । (अनुत्पन्नइति) ध्यातव्यादिज्ञानंध्यानाद्यहेतुरितिभावः। (कथमिति) प्रत्युत विपरीतवासनावर्धकत्वमितिभावः। ( तदसिद्धाविति ) अभेदएवतात्विकइति ज्ञानेसत्येव तद्विपरीतभेदभ्रमनिरासाभिलाषोभवेत् नान्यथेति भावः ( अभेदस्येति ) अभेदस्य ब्रह्मस्वरूपतया तस्यच निर्विशेषत्वात् स्वरूपेणैव तत्सदा विषयीक्रियते नतु कदाचित्किंचिद्धर्मविशिष्टतया, अतोतिरिक्ताकारप्रकाशरूपवैशद्यं न संभवतीत्यर्थः । ( विशेषेति ) तथाच ब्रह्मणस्सविशेषत्वं स्यादित्यर्थः । ( भेदेति ) भेदवासनानिरासमाध्यस्येत्यर्थः । ( ज्ञानमात्रस्येति)मात्रशब्देन अज्ञानस्य ज्ञानविशेषस्यच निरासात् क्वचिन्मतेऽज्ञानत्वात्

पर्यवसानस्य पश्वधिकरणादिन्यायसिद्धत्वात् । न्यायानपेक्षत्वे किं शारीरकशास्त्रेणापि । ध्यानोपासनशब्दयोश्च ज्ञानविशेषविषयतया ज्ञानसामान्यविषयवेदनादिशब्दानां तस्मिन् विशेषशब्दार्थ एव पर्यवसानं युक्तं, विकल्पसमुच्चयफलान्तरार्थाद्यसंभवस्योक्तत्वात् ,तदुक्तम्— " अष्टदोषाविकल्पेस्यु र्गौरवंचव्यवस्थितौ । समुच्चयेऽनपेक्षास्या दंगांगित्वं नमीयते ॥ " इति । तथा विद्युपारयोर्व्यतिकरेणोपक्रमोपसंहार दर्शनाच्च तयोरैकार्थ्यं सिद्धम् । " मनोब्रह्मेत्युपासीत " इति विहित मेवह्युपासनं " भातिचतपतिचकीर्त्या यशसाब्रह्मवर्चसेन यएवंवेद " इतिफलविधानार्थमनूद्यते । नह्यफलंविधायान्यत्सफलमनुवदितुं युक्तम्, एवं " यस्तद्वेदयत्सवेद " इति वेदनशब्दमात्रश्रावीजानश्रुतिः तदर्थं " यांदेवतामुपास्से " इत्युपासिनानुवदति । एवमन्यत्रापि । तथा "तमेवंविद्वानमृतइहभवति । नान्यःपन्थाअयनायविद्यते " " नाहंवेदैर्नतपसा " इत्यादिश्रुतिस्मृत्योर्वेदनभक्तिशब्दाभ्यां मोक्षोपायमभिधाय तदपरोपायनिषेधपरयोः परस्परार्थप्रतिक्षेपानुपपत्तेः वेदनशब्देनापि तैलधारावदविच्छिन्नभक्तिरूपज्ञानविशेषएव विवक्षितइति स्वीकर्तव्यम् । एवं ध्यानोपासनभक्तिशब्दसमानार्थतया वेदनादिशब्दानां विशेषविषयत्वे निश्चितेसति सामान्यमात्राश्रयणं न्यायानभिज्ञतानिबन्धनम् । तदुक्तं " पशोश्छागत्वनिर्णीतौ निपुणन्यायपूर्वकं । गर्दभादिपुतुल्यत्वं गर्दभप्रायकल्पितम् ॥ " इति । यत्पुनर्वाक्यतस्सिद्धस्यैवज्ञानस्य विधेयत्वं न संभवतीति तदस्माकमिष्टमेव, ततोन्यस्यैव विधानोपपादनात् । प्रत्यक्षविरुद्धश्चायमविधेयज्ञानाधीनमोक्षवादः, वाक्यार्थज्ञानमात्रेणाविद्यानिवृत्त्यदर्शनात्, आहुश्च " तत्वमस्यादिवाक्यस्य शतशश्श्रवणेपिहि । दृश्यतेत्वमहं पूर्वो विवादोब्रह्मवादिनां ॥ " इति । ननु येषां वाक्यार्थज्ञानं जातं तेषां तन्निवृत्तिरस्त्येव, येषान्तुसानास्ति तेषां तदपि नजातमित्यविरोधइतिचेत् तन्न, तज्ज्ञानाभावे तत्प्रवचनाद्यसंभवात्, तदसंभवेच शिष्याणां श्रवणादेरप्यसिद्धिप्रसंगात् ।

एवमाचार्यस्यापि । अथवाक्यार्थज्ञानेन निवृत्ताविद्याएवाविद्यावतां श्रावकाइतिचेन्न; तेषां श्रावकत्वादिव्यापारस्य तत्करणशरीरेन्द्रियादेस्तत्प्रयोजनस्य च ख्यातिलाभपूजापरानुग्रहादेस्तत्प्रतिभासस्यचाविद्यामन्तरेणासंभवात् । अविद्यानिवृत्तावपि बाधितानुवृत्त्या भेदप्रतिभासात् प्रत्यक्षाद्यविरोधः प्रवचनाद्युपपत्तिश्चेतिचेत् तन्न; भवत्पक्षे बाधितानुवृत्त्यसंभवस्य वक्ष्यमाणत्वात् । तथाप्यविशदप्रतिपत्तिमात्रादवि द्याविशेषवशादेव वा प्रवचनाद्युपपत्तिरितिचेन्न: विशदप्रतीतिपरामर्शरूपप्रत्यक्षसिद्धान्तयोर्विरोधात् । विशदाध्यक्षितसमस्ततत्वार्थाश्च वासुदेवादयोऽर्जुनादिभ्य उपदिशन्तीतिहि स्वीकृतंयुष्माभिः । नचाद्वैतसिद्धान्तश्रावका स्वात्मनां तदनभिज्ञतामनुमन्यन्ते । तथास त्यविवादश्च । किंच प्रतिवादिनः प्रबलाविद्याः कथं भवत्पक्षं प्रतिक्षिपंति । नतावदविदितैव. निराश्रयत्वाद्योगात् । विदित्वाचेत् कथं तर्हि प्रतिवादिनाविदिते भवत्पक्षे भवतां ज्ञानानुत्पत्तिः । नहि स्वोक्तं परे जा

---

कचित् ज्ञानविशेषत्वात् न निदिध्यासनसाध्यते त्यर्थः । (एवमाचार्यस्येति) श्रवणासिद्धिप्रसंगइत्यर्थः । (भवत्पक्षइति) दोषत्रयाविद्या बाध्यतुल्यमिथ्यात्वांगीकारादित्यर्थः । (अविद्याविशेषेति) विशदज्ञानात्काचिदविद्यानिवृत्ता काचिन्नेति भावः । (विशदेति) गुरुमुखश्रवणेनार्थो मेविशदइति प्रत्यक्षविरोधइत्यर्थः । सिद्धान्तविरोधं विवृणोति (विशदाध्यक्षितेति) अविद्याविशेषात्प्रवचनादिपक्षे दूषणमाह - (नचेति) त्वमेवाज्ञानापादनेन गुरुभ्यो द्रुह्यसि, ते तु स्वाज्ञानं नानुमन्यन्तइत्युपालंभः । अज्ञानानुमतौ दोषमाह (तथासतीति) अद्वैतस्याज्ञाने त्वया तदसाधनान्नावयोर्विवादस्स्यात् । नहि किंचिदज्ञानेपि कस्यचिदज्ञानस्य निवृत्त्याव्यवहारसंभवः - पूर्वादिदिगज्ञाननिवृत्तौ उत्तरादिगज्ञानान्तरसत्त्वेपि व्यवहारप्रसंगात्, एकतमोनिवृत्तौ तमोऽन्तरसत्त्वेऽपि व्यवहारप्रसंगाच्चेतिभावः । येषामविद्यानिवृत्तिर्नास्ति तेषांज्ञानमपि नजातमित्यत्र परेषां प्रवचनाद्यसंभवइतः . इदानीं दोषान्तरमाह (किंचेति) ( निराश्रयेति ) निर्विषयविवादायोगादित्यर्थः

नन्ति वयन्तु नविद्मइति स्वस्थैरभिधेयं । यत्तदविद्यानिवर्तकं विश दमद्वैतज्ञानमुदेष्यति, यच्चेदानीं श्रवणादविशदमुत्पन्नं - तदुभयं भि न्नविषयमेकविषयंवा; भिन्नविषयत्वे तस्यान्यासिद्धान्तज्ञानवत्तदनुपकार कत्वम् । एकविषयत्वेप्यन्यूनानतिरिक्तविषयंवा प्रकारविशे-षविशेषितविषयंवा; आद्ये पश्चात्तनस्याप्यनिवर्तकत्वं, इदानी-न्तनस्यैववा निवर्तकत्वं स्यात्; अविशेषात् । द्वितीये ब्रह्मण-स्सविशेषत्वंस्यात् । सविशेषमिदानीं गृहीतं पश्चात्तु निर्विशेषं प्रका शिष्यतइति वैषम्यमितिचेत्; कथमिदं त्वयावगतम् । श्रुतेरितिचेत्; तर्हि श्रुतेरेव निर्विशेषज्ञानमिदानीमेव जातमिति कः पश्चात्तनस्य - विशेषः । ज्ञानमिदानीं जातं व्यवसायस्तु पश्चाद्भविष्यतीति विशेषइ तिचेन्न; वेदप्रामाण्यनिश्चये तदानीमेव व्यवसायोदयात्, तदनिश्च येतु पश्चादपि तदसिद्धेः । प्रमाणत्वाभ्युपगमेवा तदर्थविशेषसन्दे हइतिचेत्; तर्हि विशदप्रवचनप्रवीणेभ्य आचार्येभ्यो न्यायपूर्वं द्वि स्त्रिश्शतशोवा श्रोतव्यं, नपुनश्श्रवणदशायामेव सन्दिहानेन भवता

---

(तस्येति) ध्यानादिद्वारा भाविविशदज्ञानानुपकारकत्वमित्यर्थः । (इदानी-न्तनस्येति) निवृत्तस्य पुनर्निवृत्त्ययोगादित्येवकाराभिप्रायः । अविशे-षात् - स्वरूपविषयत्वाविशेषादित्यर्थः । अविशदमपि स्वरूपाज्ञाननिव र्तकं दृष्टमिति भावः । (सविशेषत्वमिति) विशदज्ञानस्य तत्त्वज्ञानत्वा दितिभावः । (कथमिति) निर्विशेषज्ञानंभविष्यतीति कथमवगतमित्य-र्थः । (श्रुतेरिति) अद्वैतश्रुतेर्निर्विशेषबोधनसामर्थ्यपर्यालोचनेनेत्यर्थः । इदा नीन्तनस्यापि तादृशश्रुतिजन्यज्ञानत्वादिति भावः । व्यवसायः - अप्रा माण्यशंकाशून्यं ज्ञानं । वेदप्रामाण्यनिश्चयेपि तत्तात्पर्यसन्देहा द्व्यवसाया भावइत्याशंक्य तथापि श्रवणवेळायामेव शङ्कितताप्तर्यावधारणेन मन नादिवैयर्थ्यमित्याह (प्रमाणत्वेति) न्यायत स्तात्पर्यनिर्णयेऽपि बाधकत र्काभासोत्थापित सन्देहनिराकरणाय ज्ञानान्तरं मननवदिति शंकते -

पश्चादनवरतध्यानेनापि ज्ञातुं शक्यं । मननवदाहार्यसन्देहनिराकरणाय पश्चात्तनंज्ञानमितिचेन्न; मननेनैव संभावितनिष्कंपत्वे पुनरन्यावकाशाभावात्; अन्यथातिप्रसंगात् । अस्तुतर्हि पारोक्ष्यापारोक्ष्यलक्षणं वैषम्य मितिचेत्; विषयातिरेकाभावेनैव प्रागुक्तेन तदसिद्धेः, सिद्धावपि बाधकत्वमबाधकत्वंच प्रत्यकिंचित्करत्वात । परोक्षेणापि शास्त्रानुमानजन्यज्ञानेनापरोक्षभ्रमबाधस्याभ्युपगमात, प्रत्यक्षेणापि देहात्मभ्रमादिनाशास्त्रबाधानभ्युपगमाच्च । उत्पन्ना भ्रान्तिरनित्यत्वात्स्वयमेव निवर्तते, भ्रान्त्यनुवृत्तिनिवृत्तिस्तु कारणानुवृत्तिनिवृत्त्याभवति - तदनुवृत्तौतु बाधकस्य प्रत्यक्षत्वेपि भ्रान्त्यनुवृत्तिर्भवत्येव, चन्द्रैकत्वे प्रत्यक्षेपि अंगुल्यवष्टंभादिना भ्रान्त्यनुवृत्तिवत् । वाक्यजन्यज्ञानमपरोक्षमितिच सर्वलोकविरुद्धं, पृथक्चैतत्प्रपंचयिष्यामः । तदेतदखिलं मुखान्तरेण प्रपंचितं भाष्ये "नतावद्वाक्यार्थज्ञानं" इत्यादिनाविस्तरेण ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यामविधेयज्ञानवादभंगश्चतुर्थः ॥

---

**(मननवदिति) (विषयेति) प्रमाणैक्येचेतिशेषः । एकस्यापि प्रमाणस्य विषयभेदेपरोक्षापरोक्षजनकत्वं दृष्टं, मनस आत्मप्रत्यक्ष वह्न्यादिस्मृतिजनकत्वदर्शनात्, विषयैक्येपि प्रमाणभेदात्तद्दृष्टं, यथैकत्रैव वह्नौ प्रत्यक्षानुमानाभ्यां, विषयप्रमाणैक्येतु नदृष्टमित्यर्थः । ननु सहकारिवैचित्र्या दात्मस्मृतिजनकत्वंदृष्टं, अतइहापि मननादिसहकारि वैचित्र्या दपरोक्षं संभवतीत्यत्राह (सिद्धावपीति) किंच किंभ्रान्तिनिवृत्त्यर्थ मपरोक्षज्ञानं उततदनुवृत्तिनिवृत्त्यर्थं, आद्यआह (उत्पन्नेति) द्वितीयआह (भ्रान्तीति) ननु भ्रान्तिकारणभूताज्ञाननिवृत्त्यर्थ मितिचेन्न, परोक्षज्ञानादपि तत्संभवस्योपपादयिष्यमाणत्वात् ॥**

**इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावर तत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायामविधेयज्ञानवादभंगश्चतुर्थःस्कन्धः ॥**

श्रीमते रामानुजाय नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ।

## अथ पञ्चमस्कन्धः ॥

नानुवर्तेत संसारो यत्प्रसादैकबाधितः ।
प्रसीदतु स मे देवः प्रथमाञ्जलिकिङ्करः ॥

यदुच्यते, तत्त्वमस्यादिवाक्यात् तत्त्वज्ञाने जातेऽपि ब्रह्मविदां बाधितानुवृत्त्या भेदप्रतिभासादिशरीरानुवृत्तिः, तदनुवृत्तावपि छिन्नमूलतया दग्धपटादिवदबन्धकत्वञ्चेति । तत्र पृच्छाम, बाधितत्वे कथमनुवृत्तिर्भिन्नतानकत्वात्. तस्मात् तत्कथम् ।

---

हृदि विनिहिते दैवाद्यत्पादपङ्कजयोर्युगे
भवति हि निधेय पारम्परी निरवग्रहा ।
दुरितनिवहैर्दूरे दृष्टं भवश्वससाध्वसैः
मनसि करवै वेदान्तार्थं तमन्यकथोज्झितः ॥

नैवक्ष्यमाणि दुरितानि सकृद्दीक्षाक्रोडीकृतं कमपि तत्क्षणविद्रुतानि । भूयस्समीक्षितुमशेषविधःपुमर्थं स्सश्रीनिवासगुरुरस्तिकृतं-परैर्नः ॥

(बाधितानुवृत्त्येति) इत्थंभावे तृतीया । तत्त्वज्ञानेन बाधितस्यापि भेदप्रतिभासस्य बाधितानुवृत्तिरूपैवानुवृत्तिः, नतु प्राग्वदनुवृत्तिरित्यर्थः । भेदप्रतिभासानुवृत्तौ तत्कार्यबन्धोऽपि स्यादित्यत्राह (तदनुवृत्तावपीति) भेदप्रतिभासानुवृत्तावपि अविद्याया निकृत्तत्वात् तस्या दग्धपटन्न कार्यकरत्वमित्यर्थः । ननु – कथं बाधानुवृत्त्योर्विरोधः; भेदमिथ्यात्वबुद्धिरूपबाधस्य भेदप्रतिभासानुवृत्तेश्चाविरोधात्, दृश्यते हि एक एव चन्द्रः न द्वाविति चन्द्रभेदमिथ्यात्वज्ञाने सत्यपि तिमिरादिवशात्तत्प्रतिभासानुवृत्तिरिति छिन्नमूलत्वोक्तिविरोधमजानानस्य शंकामनुवदति

प्रमाणबलान्मिथ्यात्वाध्यवसायेऽपि द्विचन्द्रादिष्विव दोषमहिम्ना प्रतिभासानुवृत्तिरिति नविरोधइतिचेत्, समस्तद्वैतकुक्षिम्भरिणाप्यद्वैतज्ञानेनाबाधितः कोऽसौदोषः । अविद्यैवेतिचेत्, कथं तर्ह्यविद्यानिवृत्तिः, नहि तन्निवृत्तावपर्यवसितः कश्चिद्बाधोनाम । तन्निवृत्तावपि तन्मूलवासनास्तीतिचेत्; साकिंब्रह्मवत्सत्यत्वात्तत्त्वज्ञानेनाबाधिता, उत मिथ्यात्वेपितदविषयत्वात् । नप्रथमः— द्वैतापसिद्धान्तादिदोषप्रसंगात् । नच साब्रह्मस्वरूपानुप्रवेशिनी, भेदप्रतिभासानुवृत्तेरनिर्मोक्षप्रसंगात्, ब्रह्मणस्सावयत्वादिदोषप्रसंगाच्च । नचासत्याविद्योपात्तावासना सत्येति सम्पद्यते । नचोपादानध्वंसे कार्यानुवृत्तिमुन्मत्तो प्यनुसन्धत्ते । नापिद्वितीयः, वासनाया अपि श्रवणसमयसमधिगतब्रह्मव्यतिरेकलक्षणे कोपाधिक्रोडीकारात, अन्यथात्वविद्याया अपि बाधकज्ञानाविषयत्वप्रसंगात । "नेह नानास्ति" इत्यादेरविशेषात्तद्विषयत्वमितिचेत्; तुल्यम् । यदिचवाक्यार्थज्ञानाद्वासनाननिवर्तते, कुतस्तर्हितन्निवृत्तिः । ननावददृष्टादेः, तथासति ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसंगात् । अत

---

(प्रमाणबलादिति) अबाधितः - अनिवृत्तः । माभूदविद्यानिवृत्तिः, नचतथासति बाधितानुवृत्त्यसिद्धिः, मिथ्यात्वबुद्धिरेव बाधइत्यभिधानादित्यत्राह (नहीति) मिथ्यात्वबुद्धे र्बाधरूपता ह्यविद्यानिवर्तकत्वादेवेति वाच्यं, अन्यथा छिन्नमूलत्वोक्तिविरोधात् । त्वत्प्रकरणपाठकानां डिंभानामपि बाधितानुवृत्तिप्रसंगात, जीवन्मुक्तानामेवहि सेष्यते, अतोऽविद्या, निवृत्तिपर्यवसितएव बाधइत्यर्थः । (सेति) तत्त्वज्ञानं - ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वज्ञानम् । (द्वैतेति) आदिपदेन तन्मूलभेदप्रतिभासस्य सत्यत्वं गृह्यते । ब्रह्मस्वरूपानुप्रवेशा न्नोक्तदोष इत्यत्राह (नचेति) (ब्रह्मण इति) आदिपदेन विनाशित्वं गृह्यते । (नचोपादानेति) वासनापि भावकार्यतया अविद्योपादानेतिभावः । एतेन 'संस्कारः कार्योपि ध्वंसइवनिरुपादानः' इति निरस्तं । किंच – परमते ध्वंसोपि भावरूपाज्ञानोपादानक एव । यद्वा – अत्र कार्यपदेनानुवर्तमानशरीरादिकं विवक्षितम् । ननु ध्वं

एवनस्वतः, व्याघाताच्च । नहि वध्यघातकयोस्तादात्म्यन्दृष्टम् । नच सहकार्यन्तरमन्तरेण घटादिष्वपि स्वप्रध्वंसहेतुता । अहेतुकविनाशवादेतुसौगतचार्वाकादिसौहार्दोद्गारप्रसंगः । अविद्यायाश्चतद्वदेवाहेतुकनिवृत्त्यविरोधस्स्यात् । नचदहनान्त्यशब्दचरमसंस्कारादिवदिति वाच्यम् , तत्रापि तत्तदवस्थान्तरकालविशेषादिसामग्रीसहितपरमेश्वरसंकल्परूपस्य कारणस्यास्माभिरभ्युपगमात् । द्विचन्द्रादौतु अंगुळ्यवष्टंभतिमिरादिदोषस्य चन्द्रैकत्वज्ञानाविषयत्वात् तदुभयविषयैकज्ञा

---

समात्रस्य प्रतियोगिजन्यत्वा न्नव्याघातइत्यत्राह ( नच सहकार्यन्तरमिति ) आगन्तुकहेत्वन्तरमनपेक्ष्य स्वप्रध्वंसहेतुत्वस्य एकक्षणाधिककालवृत्तित्वस्यच व्याघातः । ( अहेतुकेति ) कार्यस्याहेतुकत्वांगीकारेचार्वाकमतप्रवेशः, विनाशस्याहेतुकत्वांगीकारे क्षणिकत्वप्रसंगेन सौगतमतप्रवेशइत्यर्थः । ( अविद्यायाश्चेति ) ततश्च श्रवणाद्यायासवैयर्थ्यमितिभावः । ननु क्वचि दहेतुकनिवृत्तिमात्रा न्न सर्वत्र तथाप्रसंगः , त्वयापि क्वचि दहेतुकनिवृत्तेरंगीकार्यत्वात. यथा दहनेन दाह्यनाशेसति दहननाशः स्वतएव दृश्यते, तथैव अन्त्यशब्दस्य मरणसमयानुभवजन्यसंस्कारस्यच स्वतएव नाशइत्यत्राह ( नचेति ) संस्कारादिवदित्यनन्तरं अहेतुकनिवृत्तिरिति शेषः । ( तत्रापीति ) दहननाशो दहनस्य सूक्ष्मावस्थान्तरापत्तिः, तद्धेतुश्च दाह्यभस्मीभावावस्था, अन्त्यशब्दनाशश्च तदातनो गगने यत्किंचिद्द्रव्यसंयोगादिः, तद्धेतुश्च प्रसिद्धएव - संस्कारनाशावस्था नरकानुभवादिः अतिरिक्ताभावपक्षे प्येतएवागन्तुकहेतवः, उपान्त्यशब्दस्तन्नाशोवाऽन्त्यशब्दनाशकः । ईश्वरसंकल्पोप्यागन्तुककारणमित्याह ( ईश्वरेति ) अतस्स्वतोनिवृत्तेरसंभवा द्वाक्यजन्यमिथ्यात्वज्ञानादेवाविद्यावासनानिवृत्तिः, ततश्च नभेदप्रतिभासानुवृत्तिसंभव इतिस्थितम् । यद्येवं मिथ्यात्वज्ञानेसति भेदप्रतिभासासंभवः, कथंतर्हि तस्मिन्सत्यपि चन्द्रभेदप्रतिभासइत्याशंक्य वैषम्यमाह ( द्विचन्द्रादाविति ) द्विचन्द्रादौतु दोषस्याबाधइति तन्मूलभ्रमपरम्परानुवृत्तिर्घटतइत्यन्वयः । चन्द्रैकत्वं-चन्द्राभेदः । ( तदुभयेति ) यथा ताराप्रकाशांशस्य

नोदयेपि प्रार्श्वस्थतारकाप्रकाशस्येव दोषप्रकाशांशस्य चन्द्रैकत्वप्रका-
शेनविरोधाभावात् , दोषोमिथ्येतितुज्ञानस्य लौकिकाना मनुदयात् , यौ
क्तिकमिथ्यात्वज्ञानस्यैव भ्रान्तित्वेन तत्सत्यत्वाच्चाबाधइति तन्मूलभ्रम
परम्परानुवृत्तिर्घटते, तद्विपयान्यथात्वाध्यवसायेन भयाविस्मयादिकार्यनि
वृत्तिश्च । तवतु नतथा, कारणभूताविद्यावत्कार्यभूतशोकादिवच्च,
मध्यगतभेदवासनाभेदज्ञानयोरप्येकहेलयैवनिवार्यत्वात् , अनुवृत्तावपि
बाध्यबाधकयोराविद्यत्वेन वास्तवप्रामाण्याभावात् विशेषेणबाधकबलासं
भवाच्चेति । तदेतत्सर्वमभिप्रेत्य " सत्यपिवाक्यार्थज्ञाने " इत्यादि
" भयादिकार्यंतुनिवर्तते " इत्यन्तंभाषितम् ॥

इति श्री कवितार्किकसिंहस्य सर्वतंत्रस्वतंत्रस्य श्रीमद्वेंकटनाथस्य
वेदांताचार्यस्यकृतिषु शतदूषण्यांबाधितानुवृत्तिभङ्गवादः पञ्चमः ॥

---

**चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभावः, तथा दोषप्रकाशांशस्यापि चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभावादित्यर्थः । बाधकज्ञानेनिषिद्धत्वेन-विषयस्यैव बाध्यत्वादिति भावः । कस्यचिद्दोषमिथ्यात्वज्ञानेऽपि च-न्द्रभेदप्रतिभासोदृश्यतइत्यत्राह ( दोषोमिथ्येति ) ( यौक्तिकेति ) त्वत्कु मतिकल्पित दुर्न्यायमूल दोषमिथ्यात्वज्ञानस्य मिथ्यात्वसाधकानिरासादेव भ्रान्तितया दोषाणां सत्यतया न बाधइत्यर्थः । वस्तुतस्तत्पक्षेपि दोष स्य यौक्तिकज्ञाना दनपायएवेति तन्मूलभ्रमोघटतएव, विरोधितत्वविष यत्वेन निवर्तकत्वे अविद्यावदिदानीमेव वासनायाअपि निवृत्तिप्रसंगा त्, बाध्यबाधकज्ञानयोर्मिथ्यात्वाविशेषेण वास्तवप्रामाण्यतदभावाभ्यामपि विशेषाभावात्, बाधकज्ञानस्य बाध्यप्रतिभासापेक्षया विशेषेणबलाभावाच्च पश्चादप्यनिवृत्तिप्रसंगात् एकहेलयैवनिवार्यत्वं वाच्यमित्याह (कारणभूतेति)**

**इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत
परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणप-
रिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन
रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां
चण्डमारुताख्यायां बाधितानुवृत्तिभङ्गः पञ्चमस्कन्धः ॥**

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्त महादेशिकाय नमः ।

अथ षष्ठस्कन्धः ।

दृष्टानुश्रविकार्थजातविमुखान् पुंसोऽधिकृत्य श्रुतौ-
यज्ञादिर्यदुपास्तिसाधनतया साक्षाद्विधिप्राप्नुते ।
लीलाभोगविभूतियुग्मभरितस्वात्मप्रदानोन्मुखः-
श्रीमानस्तु समे समस्तदुरितोत्ताराय नारायणः ॥

यदुच्यते, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इत्यत्र यज्ञादिकं विविदिषासाधनत्वेन विधीयते, ननु वेदनसाधनत्वेन, वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनाच्च, विविदिषन्तीति हि श्रूयते न पुनर्विन्दन्तीति । तत्र ब्रूमः; कोऽसौ वस्तुविरोधस्तावत्; किं ज्ञानस्य यज्ञादिभिस्साधयितुमशक्यत्वं, उत ज्ञानांगभूतशमादिप्रत्यनीकात्मत्वं । यद्वा तत्वज्ञानफलापवर्गप्रत्यनीकत्रिवर्गसाधकत्वं, यद्वा आश्रमांगतया विहितानां विद्यांगत्वे नित्यानित्यसंयोगविरोधः, अन्यो वा कश्चिदिति । न प्रथमः, सहि यज्ञादिकमन्तरेणोत्पत्तिदर्शनाद्वा यज्ञादिसन्निधावप्यनुत्पत्तिदर्शनाद्वा, आद्ये त्वसिद्धिः प्राचीनेष्वर्वाचीनेषु वाधिकारिष्वननुष्ठितशुद्धधर्मेषु विद्योत्पत्तेरसिद्धत्वात् ।

---

अद्वैतिजालकलिलेन मुदीर्णदर्पमीषज्जलंकरमनाहतमर्मगाथैः ।
संवर्मितेन निगमांतगुरोः प्रबन्धैः तेब्रह्मतत्त्वमिहनः प्रतिबोधयन्तु ॥

सकलजनहितेच्छु श्रीनिवासार्यवर्यो-
हृदि निहितहितार्थ श्चेत्वयीमातुरेषः ।
कुमतिविकृतवाचो नह्युपादेक्ष्यदस्या-
श्चिरतरमतिकष्टा तर्ह्यवस्थान्ववस्यत ॥

(दृष्टेति) इहामुत्रार्थफलभोगविरक्तान् । साक्षाद्यदुपास्तिसाधनतयेत्यन्वयः । (विविदिषन्तीतिहीति) सन्नन्तप्रकृतिधात्वर्थेन नान्वयः उपसर्जनत्वात् । (आश्रमांगतयेति) आश्रमप्रयोज्यतयेत्यर्थः । अनेन नित्यत्वं विवक्षितं । शुद्धधर्मकारणान्तराभावादिवत्कचित्स्वस्यैवानिवृत्तेः

द्वितीयेत्वप्रयोजकता, सामग्र्यैवाहिकार्योत्पत्तिः नपुनर्हेतुमात्रात् ; संभवतिच प्रायशः कर्मकर्तृसाधनवैगुण्यं, अन्यथा चित्रापशुफलत्वादावपिकस्तेसमाश्वासः । तस्यास्तत्साधनत्वं विदधातिश्रुतिरितिचेत् , अत्रापियदिश्रुतिर्विदधाति तदा तद्वदेव समाश्वसिहि । अन्यथाविविदिषासाधनत्वेपि त्वयानसमाश्वसितव्यं; तत्रापि साध्यसाधनभावस्य श्रुत्येकावसेयत्वात् । " कुर्वद्वायमकुर्वद्वे " त्यादिचार्वाकदुर्वादस्य त्वयाप्य स्मर्तव्यत्वात् , व्यभिचारस्यचसमत्वात् । एतेन - वाक्यजन्यप्रमितिरूपस्य संस्कारजन्यस्मृतिसन्ततिरूपस्यवा वेदनस्य किंकर्मापेक्षये तिनिरस्तं; इच्छाया अप्यनुकूलता बोधाधीनोत्पत्तेः किंकर्मापेक्षयेति समत्वात् । अन्तःकरणनैर्मल्यद्वारेणेतिचेत् तुल्यं; " यत्रोभयोस्समोदोष " इत्यभियुक्तवचनं किमर्थमित्थं विस्मरसि । " कषाये कर्मभिःपक्वे ततोज्ञानं प्रवर्तते " इत्यादिवाचानिकार्थातिलंघनं तवाधिकम् । नापि द्वितीयः; शमादेरविहिताप्रतिषिद्धनिषिद्ध विषयत्वेन विद्यांगतया

---

कार्याभाव इत्याह ( संभवतीति ) ( चित्रापशुफलत्वादाविति ) चित्रायाः पशुफलत्वादौ । ( तस्याइति ) तथाच श्रुतिबलात्साधनत्वे सिद्धे कारणान्तराभावात्कर्मादिवैगुण्याद्वा कार्याभावइत्युन्नीयत इति भावः । ( अत्रापीति ) तथाच श्रुत्यक्षरपर्यालोचनैव कार्या नोक्तार्थविरोधइत्यर्थः । अन्यथा - श्रुत्यासमाश्वासाभावे । चार्वाकमताप्रवेशेन यत्रकुत्रचिद्यस्य कस्यापि कारणत्वमंगीकुर्वता कर्मणां वेदनसाधनत्वं न निराकर्तुं शक्यमित्यभिप्रायेणाह ( कुर्वद्वेति ) विस्मरणशीलस्य व्यभिचारनिमित्ताशंका मुक्तार्थस्मारणेन परिहरति ( व्यभिचारस्येति ) एतेन - वक्ष्यमाणेन ( किं कर्मापेक्षयेति ) अन्यथा घटमानयेति वाक्यार्थज्ञानाय घटादिस्मरणायच यागाद्यनुष्ठानप्रसंगादितिभावः । ( इच्छायाइति ) यदीच्छामात्रे तदपेक्षाभावेपि प्रमाणबलादिह तदपेक्षा तदा प्रकृतेपि तुल्यमिति भावः । अविशेषे कथं विविदिषासाधनत्वप्रतिक्षेपइत्यत्राह ( कषायइति ) ( अविहितेति ) अविहितश्च तदप्रतिषिद्ध

विहितेभ्यः कर्मभ्यो व्यतिरिक्तविषयत्वात् । विहितस्यच " धर्मेणपापमपनुदति ", " कषायपक्तिः कर्माणि ज्ञानंतुपरमागतिः " इत्यादिभिर्विद्योपकारकत्वस्यैव श्रुतत्वात् । नचतृतीयः, फलाभिसंधिविरहादेवत्रिवर्गानारंभात्, अनेकफलसाधनस्यापि ज्योतिष्टोमादे रभिसंधिविशेषेण फलंप्रतिनियमस्य सर्वैरभ्युपगन्तव्यत्वात् । अतएवनचतुर्थः, तत्रापि विनियोगपृथक्त्वेन नित्यानित्यसंयोग विरोधाभावात् । तदेतत्सर्वं सूत्रकारै रेव विस्पष्टमुक्तम् - " सर्वापेक्षाचयज्ञादिश्रुतेरश्ववत् " " शमदमाद्युपेतस्स्यात्तथापितुतद्विधे स्तदंगतया तेषामवश्यानुष्ठेयत्वात् " " विहितत्वाच्चाश्रमकर्मापि " " सहकारित्वेनच " " अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात् " इत्यादिभिः । याचते श्रुत्यक्षरपर्यालोचना सोऽपिहस्तसमालोचः; " सोऽन्वेष्टव्यः, सविजिज्ञासितव्यः " " तद्विजिज्ञासितव्यम् " " श्रोतव्योमन्तव्यो निदिध्यासितव्यः " इत्यादिश्रुतिशीलापरामर्शात्., नहि तेषुसन्प्रत्ययार्थविधिपरत्वं भवतापि स्वीकृतम् ।

---

श्वेत्यर्थः । शमादेस्तावन्मात्रविषयत्वे नियामकमाह ( विहितस्यचेति ) ननु फलाभिसन्धिविरहेपि तद्योग्यस्य कथं तदनारंभकत्वं, नहि दाहार्थं स्पृष्टएव वह्निर्दहतीतिनियमोस्तीत्याह ( अनेकेति ) श्रुत्येकसमधिगम्येऽर्थे तत्तत्कामाधिकारबलाद्यथाश्रुतिः तथांगीकारइतिभावः । ( अतएवेति ) फलाभिसन्धितदभावाभ्यामेवेत्यर्थः । तदेव विवृणोति ( तत्रापीति ) ( हस्तसमालोचइति ) हस्तस्येव समालोचनमित्यर्थः । एकहस्तवद्वेवहीतरहस्तोऽपि । अयश्च घञन्तत्वान्नियतपुंलिंगः ( सोऽन्वेष्टव्यइति ) आदिशब्देन " तद्विजिज्ञासस्व " इत्यादेस्संग्रहः । प्रकृत्यर्थस्यैव वाक्यार्थान्वयेपीच्छानुवादः श्रुतेश्शीलं, तथाचोपसर्जनेनापि-प्रकृत्यर्थेन विध्यन्वयवत्कारणान्वयो युज्यतेहीतिभावः । ( तेष्विति ) " विजिज्ञासितव्यः " " विजिज्ञासितव्यं " " निदिध्यासितव्यः " इत्या

विधिबलावसितपुरुषार्थसाधनत्वार्थसिद्धेच्छानुवाद रूपत्वात्प्रत्ययस्य, ध्यायीतेत्यादिविध्यन्तरैकार्थ्यात् । तत्र शाब्दं प्रत्ययार्थप्राधान्य मनादृत्येच्छाया इष्यमाणप्रधानत्वादार्थे प्रकृत्यर्थप्राधान्यं स्वीक्रियतइति चेत्; तर्हि "क्रियावानेषब्रह्मविदां वरिष्ठः, "कर्मणैवहि संसिद्धि" कषायेकर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इत्यादिप्रमाणसहस्रैकार्थ्यादत्रापि वेदनपरत्वमंगीकुरुष्व । लोकेच असिना जिघांसति अश्वेन जिगमिषति इत्यादिषु प्रकृत्यर्थे करणान्वयो बहुलमुपलभ्यते । अत्रासेरश्वस्यवा हननगमनेच्छासाधनत्वायोगात् हननादिसाधनत्वस्यान्वयव्यतिरेकसिद्धत्वाच्च अगत्याप्रकृत्यर्थसाधनत्वाश्रयणं, इहतु न-तथा, अन्तःकरणनैर्मल्यद्वारेण सत्वविवृद्ध्युपकारकत्वस्य ज्ञानतदिच्छयोरविशेषादिति चेन्न; अनन्यपरत्वस्योपपादितत्वात्, अयोगस्यचात्राप्यविशेषात् । तथाहि - योयं विविदिषाकामो यज्ञादिष्वधिक-रोति सकि तदानीं वेदनमिच्छति उतन; आद्ये विविदिषासिद्धैवेति न तस्या यज्ञादिसाध्यत्वं, तथाच चक्रकम्; वेदनेच्छायां जातायामेव विविदिषेच्छा जायते, तस्यां जातायां कर्मानुष्ठानम्, ततो विविदिषेति । अत्रैकैकोभयपर्यसंको चेनात्माश्रयान्योन्याश्रयावप्यन्तर्भा

---

दित्वित्यर्थः । अत्र वाक्येष्विति विशेष्यमध्याहार्यम् । शंकते (विधिबलेति) अनुवादरूपत्वे हेतुः (ध्यायीतेत्यादीति) (शाब्दं प्रत्ययार्थप्राधान्यमनादृत्येति) अत्र हेतुरनुवादरूपत्वम् । (स्वीक्रियतइति) प्रकृत्यर्थे नैव विध्यन्वयहेतुतयाद्रियतइत्यर्थः । उपसर्जनेन प्रकृत्यर्थेन करणान्वयोपि लोके दृष्टइत्याह (लोकेचेति) शंकते (अत्रासेरिति) (अनन्यपरत्वस्येति) "क्रियावानेषब्रह्मविदां वरिष्ठः" इत्यादिवेदनसाधनत्वप्रतिपादकश्रुतिबलादिति भावः । (अयोगस्येति) इच्छान्वयायोगस्येत्यर्थः । (तथेति) तथात्वे - यज्ञादिसाध्यत्वइत्यर्थः । (वेदनेच्छायामिति) विविदिषायाः स्वतः प्रयोजनत्वाभावेन

च्यौ । द्वितीयेपि वेदनस्यानिष्टत्वे विविदिषाप्यनिष्टैव स्यात्, तद्वि षयत्वात्तस्याः; विविदिषाहि वेदनं साधयेत; तच्चापवर्गादिकामिति म त्वैवहि तस्यामभिलाषसंभवः । ननु वेदनौन्मुख्यलक्षणविविदिषा पूर्वं संवृत्ता । तदर्थप्रवृत्तिपर्यन्तातु साध्यतयाभिमतेतिचेन्न; तादृशतीव्रे- च्छायाएव उत्पत्त्यनुत्पत्तिविकल्पे प्रागुक्तदोषानतिलंघनात् । नहि वेद ने तीव्रेच्छायामसंभवन्त्यां तादृशीमपितामिच्छेत्, तदुपायवर्गानुष्ठान क्लेशं वा सहेत । ननु दृष्टमेतत् यद्बुभुक्षापिपासादिकामनया- भेषजमुपदिश्यते; तत्रापि भोजनादेरिष्टत्वानिष्टत्वविकल्पेन प्रागुक्तप्र सङ्गोदुर्वारः । तत्र यः परिहारस्ते सनोऽत्रापि भविष्यतीतिचेत् तन्नः भोजनादेस्सामान्यतोऽनुकूलत्वज्ञानादेवेष्टत्वसिद्धेः। तथापि दोषवशात्तदा तनमनारोग्यात्मकं प्रातिकूल्यमपनेतव्यमिति तावन्मात्रार्थं भेषजोप देशः, न पुनरिच्छास्वरूपनिष्पत्तये । अत्रापि तर्हि तथास्तु; सामा न्यतो वेदनस्येष्टत्वेऽपि तादात्विकतत्प्रातिकूल्यापादकरजस्तमोनिबर्ह- णेन अन्तःकरणशुद्ध्यर्थं कर्मणां विनियोगइतिचेत्;

---

वेदनार्थमेवोद्देश्यत्वादिति भावः । ( तद्विषयत्वादिति ) तस्याः- वि विदिषायाः । ननु वेदनेच्छाभावे कथं विविदिषेच्छाया असंभवइत्या कांक्षायां तद्विषयेच्छायास्स्वयं प्रयोजनत्वाभावेन तत्साधनत्वेनैवोद्दे- श्यत्वादित्याह ( विविदिषाहीति ) अपवर्गः – अविद्यानिवृत्तिः । आ- दिशब्देनानवच्छिन्न ब्रह्मानन्दानुभव उच्यते । ( तदर्थेति ) वेदनार्थश्र वणाद्यनुष्ठानपर्यन्तेत्यर्थः । ( प्रागुक्तेति ) तीव्रविविदिषाहेतुभूत यज्ञा द्यधिकारिणः तीव्रवेदनेच्छाभावे वेदनौन्मुख्यमात्राद्वेदनसाधनश्रवणादा विव ततोपि व्यवहितायां श्रवणादिहेतुतीव्रविविदिषायामिच्छानस्या त्, तीव्रविविदिषांगीकारेतु यज्ञाद्यसाध्यत्वचक्रकयोः प्रसंगइत्यर्थः । ( तथापीति ) प्रातिकूल्यशब्दः प्रतिकूलपरः भोजनप्रतिकूलमित्यर्थः । प्रा तिकूल्यहेतुपरोवा भोजनस्य प्रातिकूल्यहेतुरित्यर्थः । (तत्प्रातिकूल्येति) वे दनेच्छायांसत्यामपि रजस्तमोभिभूतत्वात्तत्साधनश्रवणादौ दुःखसाध्यगुरु शिश्रूषादिसाध्ये प्रातिकूल्यबुद्धिर्भवतीति रजस्तमोनिबर्हणार्थकर्मेत्यर्थः ।

तर्हि विविदिषासाधनत्वश्रुतिः परित्यक्तैव । अवान्तरव्यापार-त्वा दविरोध इतिचेत ; तर्हि वेदनसाधनत्व मप्यनुमन्यतां, तत्पूर्वभाविन स्सर्वस्यापि यज्ञादिकर्मावान्तरव्यापारत्वोपपत्तेः । एवञ्चसति " क्रियावानेषब्रह्मविदांवरिष्ठः " " कषायेकर्म-भिः पक्वे ततोज्ञानं प्रवर्तते " पुण्यंप्रज्ञांवर्धयति क्रियमाणं पुनः पुनः " इत्यादिभिरैकार्थ्यंच । अतो यज्ञादिकर्म वेदनसाधनमेव । ननु विविदिषासाधनत्वेयच्चोद्यं यज्ञादेः तद्भक्तिसाधनत्वेऽपि समानं । तथाहि; किंभगवतिभक्तिमान्भक्तिंकामयते उत तद्विधुरः ? नप्रथ मः; भक्तेर्निष्पन्नत्वेन साध्यत्वायोगात् । नद्वितीयः; भगवद्भक्तिवि-धुरस्य तद्भक्तावपि नैरपेक्ष्यात , भक्त्यवस्थाभेदान्निर्वाहेऽपि प्राग्वदे वदोषइति तन्न; प्रीतिरूपज्ञानविशेषोऽहि भक्तिः, प्रीतिश्च तारतम्यवती विषयस्वभाव विशेषाभिमानाभ्यासभेषजादिभिः प्रेमवृद्धिः कामशास्त्रा दिष्वपिसम्मता, पुरुषस्यतत्कामना संभवति नवेत्येतावदेव चिन्तनीयं ।

---

(तर्हीति) विविदिषायाः पूर्वसिद्धत्वा द्रजस्तमोनिबर्हणार्थमेव कर्मानु-ष्ठानमिति विविदिषार्थतया यागादिकं श्रुतिप्रतिपाद्यं नस्यादित्यर्थः । गुरुशिश्रूषादिदुःखसाध्येऽपिश्रवणादौ प्रातिकूल्यबुद्धिविरोधिनीच्छा रजस्तमो निबर्हणमन्तरेणनभवतीति यज्ञादिभिस्तादृशेच्छायांजननीयायां रजस्तमोनिबर्हणस्यावान्तरव्यापारात् यज्ञादेर्विविदिषार्थतया श्रुतिप्र-तिपाद्यत्वमविरुद्धमितिशङ्कते । (अवान्तरेति) यद्यप्येवं सतिपूर्वोक्ता न्योन्याश्रयःस्थिरएव । तथापि दूषणान्तरमाह (तर्हिवेदनेति) एवं व्यापा रस्याव्यवधायकत्वेन विविदिषाकारणत्वाङ्गीकारे रजस्तमोनिबर्हणं प्रा तिकूल्यनिवृत्तिंविविदिषां श्रवणादिकंचद्वारमङ्गीकृत्य वेदनसाधनत्वम-ङ्गीकर्तुं शक्यमेव, बाधकाभावात् , एवञ्च श्रुत्यन्तरानुसाराद्वेदनसाध नपरत्वमेवास्यवाक्यस्याङ्गीक्रियतामितिभावः । ( तद्भक्तावपीति ) तस्मि-न्निवेतिभावः । भक्तिविधुरस्यापि भक्तेर्मोक्षसाधनत्वंज्ञातवतोभक्तीच्छा सम्भवत्येव - तथापि प्रथमकोटिमभ्युपेत्याह (तन्नप्रीतिरूपेति) (भेषजा-दिभिरिति) आदिशब्देनमणिमन्त्रादिग्रहः । ( कामशास्त्रादिष्विति )

तत्र यदिसंजातमात्रादतिशयितस्य प्रेम्णः फलान्तरं प्रमाणतस्सिद्ध्येत् तदा तथाविधं तस्यातिशयमभिवाञ्छेदेव । नच तावता तथाविधस्यातिशयस्यापि निष्पन्नत्वप्रसंगः; ज्ञानवदुपपत्तेः, सामान्यतोऽवगतेहि विशेषतो ज्ञानायव्याप्रियते, अन्यथा जिज्ञासैव सर्वत्रनस्यात । नन्वेवं विविदिषायामप्येवमस्त्विति चेन्न; विशेषेच्छायाएव प्रागेवोदयात्, नहिपूर्वं सामान्यतो ज्ञानमिच्छति पश्चाद्विशेषतइति संभवति । नच विषयविशेषावच्छेदमन्तरेण इच्छाजाति

---

आदिशब्देन "रोचनालक्ष्मणामूल कल्कलिप्ततनूर्वधूः । प्राप्नोतिसौभाग्यं दयितप्रियतामपि" ॥ इत्याद्युक्तायुर्वेदसंग्रहः । (सञ्जातमात्रादिति) प्रेम्णइतिविशेष्याध्याहारः । (ज्ञानवदिति) विशेषतोज्ञानेच्छायांसत्यामपि विशेषतोज्ञानाभावादित्यर्थः । व्याप्रियत इत्यनन्तरं नतुविशेषतोज्ञातइत्याध्यहारः । (अन्यथेति) विशेषतोज्ञातेचेदित्यर्थः । सिद्धइच्छाविरहादितिभावः । (विविदिषायामप्येवमिति) यथाजिज्ञासाकारणतयापूर्वज्ञानसत्त्वेपि ज्ञानान्तरविषयिणीजिज्ञासा तथावेदनेच्छाविविदिषेच्छाकारणतयापूर्वसत्त्वेपि विविदिषान्तरविषयिणीच्छास्त्वित्यर्थः । कारणीभूताया अपिवेदनेच्छाया इष्यमाणतयाभिमतेच्छास जातीयत्वा द्विषमोदृष्टान्तइत्याह (न विशेषेच्छायाइति) विशेषविषयाया इच्छायाइत्यर्थः । ननु विशेषविषयेच्छासिद्धावपि स्वरूपतएव तद्विजातीया तद्विषयेच्छैवेष्यतामित्यत्राह (नच विषयेति) यद्यप्येकस्मिन्नेवविषये इच्छायामुत्कृष्टत्वानुत्कृष्टत्वरूप जातिविशेषो लोकसिद्धः, तथापि पूर्वोक्तरीत्या उत्कृष्टेच्छाप्यत्रास्तीति तात्पर्यम् । यद्वा - जिज्ञासाविषयीभूतविशेषज्ञानस्य कारणीभूतसामान्यज्ञानादिवात्र इष्यमाणविविदिषाया विद्यमानविविदिषापेक्षया विषयविशेषावच्छेदान्न वैलक्षण्यं ब्रूमः, किन्तु लोकसिद्धोत्कृष्टत्वादिनैवेत्याशंक्य तदपि प्रकृते नसंभवतीत्याह (नच विषयेति) विषयविशेषावच्छेदातिरिक्तो यो जातिविशेषः औत्कट्यादिरूपस्सप्रकृते न संभवतीत्यर्थः । तादृशोत्कृष्टवेदनेच्छाया असिद्धौ उत्कृष्टविविदिषाविषयकेच्छाया

विशेषः कश्चित्संभवति । भक्तौतु भोग्याकाराविर्भाव तारतम्यवशा त्तारतम्यमुक्तमिति । इहापि ततएव तारतम्यमितिचेत्; अस्तुत त्तथापि काम्यत्वंदुर्वचं - तथाविध विषयविशेषितस्य वेदनस्य काम्य त्वमन्तरेण तदसिद्धेः, तत्काम्यतायाश्चसिद्धौसिद्धा तथाविधवेदनेच्छेति कथंसाकाम्या, अतस्सिद्धं

---

असंभवादित्यर्थः ननु इष्यमाणभक्तावपि कथं प्रकृते जातिविशेषसंभ व इत्याकांक्षायां प्रीतिश्च तारतम्यवतीत्यादिना पूर्वमुक्तं स्मारयति· (भक्तौत्विति) भोग्यस्याकारः भोग्याकारः प्रियत्वमितियावत्। आ विर्भावोनिष्पत्तिः। प्रियत्वतारतम्यस्य प्रीतितारतम्याधीनत्वात् प्रीतिता रतम्येतात्पर्यम्। तथाच प्रीतिरूपभक्तितारतम्यमेव भक्तिविषये का मनायां हेतुरित्यर्थः । ननु यादृशीभक्तिस्त्वयेष्यमाणत्वेनाभिमता त-द्रूपवेदनवि षयत्वमेवेष्यमाणायां विविदिषायां विशेषोस्त्वित्याशंकते (इ-हापीति) विविदिषायामित्यर्थः (काम्यत्वमिति) विविदिषायाइति शेषः। (तथाविधेति) अतिशयितप्रीतिरूपत्वात्मको य इष्यमाणविविदिषा-याः प्रकारतया विषयः तद्विशेषितं यद्वेदनं तत्कामनामन्तरेण त-द्विषयविविदिषाकामनापि न संभवतीत्यर्थः। नन्विच्छार्थं कर्मानुष्ठा नस्यात्माश्रयग्रस्तत्वे क्वचिदपीच्छानसंभवेत् इच्छाहेतुभूतकर्मानुष्ठाना योगात्, नचेच्छायाविषयवैलक्षण्यज्ञानमात्राधीनत्वं; वैलक्षण्ये ज्ञाते पि कस्यचिदिच्छानुत्पत्तिदर्शनात् । अतः कस्यचिदिच्छोत्पत्तेः कर्म हेतुकत्वमाश्रयणीयम् - तच्चैवं सत्यनुपपन्नमित्यतआह (अतस्सिद्ध-मिति) अस्माकम्मते इच्छार्थं कर्मानुष्ठानं नास्त्येव, भोगादृष्टोद्बोधि तपूर्ववासनासाचिव्याद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेः । नचाज्ञात सुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम्; बहु र्थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतहेतुरूपत्वासंभवात्, "यज्ञेन विविदिषन्ती" तिवाक्यस्य ह्यर्थश्चिन्त्यतेः अतो बुद्धिपूर्वकमेव एतद्वा

यज्ञादिकर्मविविदिषासाधनत्वेन न विहितमिति । तदेतत्सर्व मभि सन्धायाह-- " एवं रूपाघाध्रुवानुस्मृते स्साधनानि यज्ञादीनि कर्माणीति " यज्ञादिश्रुतेरश्ववदि " " त्यभिधास्यते " इति ॥

इतिश्री कवितार्किकासिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिपु

शतदूषण्यां विविदिषासाधनत्व भङ्गवादः षष्ठः ।

---

क्यविहितयज्ञाद्यनुष्ठानम् । तदिदमुक्तं ( यज्ञादिकर्मेति ) ( विविदिषा साधनत्वेन नविहितमितिच ) अत्र विविदिषन्तीत्यस्य सन्निधौ " मन सैवानुद्रष्टव्य " मिति विशदवेदनं विहितम्, " एतमेव विदित्वामुनिर्भ वति " इतिस्तुतम् । अतो विधिस्तुतिविषयस्यैव वेदनस्यात्रविध्यन्त राकांक्षा - नतु तदुभयरहिताया विविदिषायाः " इति तत्वटीको क्तमप्यनुसन्धेयम् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत

परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण

परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन

रामानुजदासेनविरचितायां शतदूषणी

व्याख्यायां चण्डमारुताख्यायां -

विविदिषासाधनत्वभंगष्षष्ठः

॥ स्कन्धः ॥

श्रीमते रामानुजायनमः ।

श्रीमतेनिगमान्तमहादेशिकायनमः ।

## ॥ अथ सप्तमोवादः ॥

विभूत्यंशेयस्यस्फुरतिजगतामक्षमखिलं
श्रुतिर्जात्यंधानामुपदिशतियंरूपमिवनः ।
निजाध्यक्षप्रेक्षाचुळकितसमस्तस्स्वयमसौ
हृषीकेशोदिव्यांदिशतुममचक्षुरस्वविषयम् ॥

यदूचिरे-यद्यपि तत्वमस्यादिवाक्यश्रवणसमयसम्भवं परोक्षं ज्ञानं अवि-
द्यां ननिवर्त्तयति, तथापि श्रवणादिभि निरस्तसमस्तभेदवासनामूलासंभा-

---

सर्वाध्यक्षोप्यनध्यक्षो देहिनां यस्य सूक्तिभिः ।
अध्यक्षति हरिस्तस्मै नमो वेदान्तसूरये ॥

अतिदृशमखिलस्य तं पुराणं निगमगुहाहितमग्र्यचयोगगम्यं ।
ममहृदिभवदर्षशोकमुक्त्यै दधतुरमानिधिदेशिकेन्द्रवाचः ॥

परेषां शब्दजन्यत्वेनाभिमते ब्रह्मापरोक्षे किमक्षाणामेव कारण
ता, उतशब्दस्य, आद्ये दोषमाह (विभूत्यंशइति) अक्षयोग्यविभूत्ये
कदेशेपि मनःप्रभृती न्यक्षाणि प्रतिहन्यन्ते, किमुतायोग्ये ब्रह्मणीति
भावः । द्वितीये दोषमाह (श्रुतिरिति) जात्यन्धानां कृतइति शे-
षः । लोके उपदेष्टारो जात्यन्धानां कृते यथा रूपमुपदिशन्ति, तथा
श्रुतिरपि नःकृते यमुपदिशतीत्यर्थः । इवेत्यनेन उपदेशद्वयस्यापि-
परोक्षत्वेन सादृश्यं विवक्षितम् । अनेन वादार्थसंग्रहः । (निजाध्यक्षे
त्यादि) स्वतस्सिद्धसर्वसाक्षात्कारो भगवान् परोक्तदुरर्थम्, अस्मदु-
क्तसदर्थंच, जानन्, पारितोषिकतया स्वस्य हृषीकेशतया स्ववि

वना विपरीतसंभावनाख्यचित्तविक्षेपलक्षणप्रतिबन्धस्य तदेववाक्यं अवि घानिवर्त्तक मपरोक्षं ज्ञानञ्जनयति । नच—शब्दस्य कथ मपरोक्षधीहेतुत्व मितिवाच्यम्, इन्द्रियस्यापि कथमितिप्रसंगात् । दर्शनादितिचेत्, तुल्यं । क्वतद्दर्शनमितिचेत्, संवित्स्वप्रकाशा दशमस्त्वमसीत्यादिषु । नह्यत्रसंविद्विषयः स्वविषयोवा प्रकाशोनास्ति, सन्नपिवापरोक्षः, स्वधीविरोधात्, प्रत्यक्षेच विषये परोक्षप्रकाशव्याघातात्, अन्यथा शुक्तितत्वप्रकाशेपि रजतावभासाविरोधप्रसंगात् । नचायंप्रकाशइन्द्रियजन्यः, वाक्यस्य तदानीमबोधकत्वप्रसंगात्, वाक्यमन्तरेणापि तत्प्रसंगाच्च । नच-रत्नतत्वाधिगमवत् शब्दसंभिन्नेन्द्रियजन्यः, अन्यतरेणतदुत्पत्युपपत्तौ कल्पनागौरवात्, अन्वयव्यतिरेकाविशेषेस तीन्द्रियसहकृतशब्दजन्यइति विपरिवर्तप्रसंगाच्च । किन्नामेन्द्रियं तत्सहकारिस्यादितिचेत् ?

---

श्यमानस्वप्रकाशं ददातीत्यर्थः । अस्त्वपरोक्षप्रकाशः, सइन्द्रियकरणकएवस्यात्, नवाक्यकरणकइत्यत्राह ( नचेति ) इन्द्रियजन्यः – इन्द्रियकरणकइत्यर्थः । ( वाक्यस्येति ) इन्द्रियस्य वाक्यनिरपेक्षत्वादिति भावः । ( अन्यतरेणेति ) इन्द्रियवाक्ययोः पृथक्करणत्वेन क्लृप्तयो रन्यतरेण कार्योपपत्ता वन्यतरस्मिन्नन्यतरसहकारित्वकल्पनायां माना भावादित्यर्थः । रत्नतत्वाधिगमेपि शाब्दज्ञानसंस्कारसचिवेन्द्रियस्यैव हेतुत्वमिति भावः । ( किन्नामेति ) यद्यपि पूर्ववादिना शब्दस्य इंद्रियंप्रति सहकारित्वमुच्यते, तस्यैवेन्द्रियस्य शब्दं प्रति सहकारित्व स्यानेनाभिधाने नैतच्छंकावकाशः, अथापि तटस्थस्येयमाशंकेति नदोषः । यद्वा - चक्षुरादीनां प्रत्येकं व्यभिचारा च्छाब्दज्ञानेच वैजात्यस्याक्लृप्तत्वात् नेन्द्रियस्य वाक्यसहकारित्वं संभवति, प्रत्यक्षे चाक्षुषस्पार्शनादिवैजात्यस्य क्लृप्तत्वात्, ननु शब्दस्य सहकारित्वेपि शब्दजन्यतावच्छेदक मिन्द्रियजन्यज्ञानविशेषे कल्पनीयमिति चेत्, न, तथापि शब्दजन्यतावच्छेदकस्यैकस्यैवकल्पनात्, चक्षुरादीनांत्वननुगमाज्जन्यतावच्छेदकमनेकं कल्पनीय-

मनसः सर्वज्ञानकरणसाधारणसहकारित्वं किं नजानासि। तथापि विनिगमनायां को हेतुरिति चेत्, न, अन्धस्यांधतमसिस्थितस्यत्वा वाक्यश्रवणा दशमोस्मीति प्रत्यक्षप्रत्ययात्। नचात्रापरोक्षत्वमारोपितं, बाधकाभावात्। नच सम्प्लवे भेदाग्रहा त्तद्व्यवहारः, कदाचिदपि तत्र धीभेदानुपलंभात्। अतो वाक्यजातीयस्य क्वचित्प्रत्यक्षज्ञानजनकत्वसिद्धौ क्व विरोधाव काशः। अन्यदपि वाक्यं किं नजनयतीतिचेत्, न, गोजातीयत्वे शाक्करः किं न दुग्धे दुग्धमितियद्वुपहास्यत्वात्। अस्ति तत्रावान्तरोपाधिरिति चेत्, अस्त्वत्रापिकश्चित्। नच-तदज्ञानं तत्कार्योत्पत्तिप्रतिबन्धि, तज्ज्ञानस्य तत्कारणत्वानभ्युपगमात्। अन्यथा अतिप्रसंगात्। यथाहुः-"नकारण परिज्ञानं तत्कार्योत्पत्तिकारणं। नहि बीजाद्यविज्ञान मंकुरोत्पत्तिवार

---

मिति वाङ्गिन एवाशंकेति। (मनसइति) तथाच तस्यां न पूर्वोक्तगौरवमितिभावः। विनिगमनायामिति शब्दकरणकत्वनिर्द्धारणे कथमिति प्रच्छति (तथापीति) (अन्धस्येति) तत्र चक्षुरादेरव्यापारात्, मनसश्चापि करणत्वानङ्गीकारात् शब्दस्यैव तत्र करणत्वं वाच्यमिति भावः। (प्रत्यक्षप्रत्ययादिति) प्रत्यक्षत्वमानुभाविकमितिभावः। यद्यपि नेदं रजतमितिवन्नप्रत्यक्षबाधः, तथापि यौक्तिकबाधोस्त्येव, मनस्संवलितसामग्र्या श्शब्दसंवलितसामग्र्याश्च विद्यमानतया परोक्षापरोक्षरूपकार्यद्वयस्यावश्यकत्वात्, अतोदशमोस्मीत्येकैवापरोक्षप्रतीतिरितिबुद्धे र्भ्रमत्वमवर्जनीयमेवेतिशङ्कां परिहरति (नचसंप्लवइति) (भेदाग्रहादिति) भ्रमस्याप्युपलक्षणं। (कदाचिदिति) तत्र-तादृशस्थले। करणान्तरसन्निधानस्थले धीभेदानुपलम्भेन मनसः करणान्तरसहकारित्वमेव, न पृथ क्करणत्वमित्यर्थः। यद्यपि मनसः करणत्वं स्वमते कुत्रापि नास्त्येव, तथापि परेण स्वमतेन शंकिते तदभ्युपगमेन परिहृतमिति ध्येयं। (क्वेति) शब्दस्य प्रत्यक्षजनकत्वं नविरुद्धमित्यर्थः। (अस्तीति) स्त्रीत्वविशेषितं गोत्वमित्यर्थः। नन्वस्माभिरज्ञातत्वं यद्यपि न दोषः, तथा प्यस्यैताज्ञातत्वे वस्तुसत्त्वैव नस्यादित्यत आह

णम्"इति । नचास्यात्यन्ताज्ञातता, स्वतोऽपरोक्षार्थगोचरत्वस्योपाधेरव धारणात् । नच– तत्वमस्यादिवाक्यस्य प्रत्यक्षज्ञानजनकत्वे किं प्रमाण मितिवाच्यम् , निवर्त्यमिथ्यात्वान्यथानुपपत्त्यैव तत्सिद्धेः। स्वत.शुद्धेपि हि विश्वसाक्षिणिब्रह्मणि स्फटिकमणिघटितदाडिमीकुसुमरागोपरागवत् अवभासमात्रसिद्धि रियमशुद्धिः, साच ज्ञानमात्रनिवर्त्येति "तरतिशोकमा त्मवि"दित्यादिश्रुतिशतसिद्धं, मिथ्याभूतस्य च धीमात्रनिवर्त्यत्वं,युक्तं, नच परोक्षंज्ञानंनिवर्तकंदृश्यते । अत· परिशेषादपरोक्षमेव ज्ञानं निवर्तक मितिस्थिते, ननावत्करणमिन्द्रियं, बाह्येन्द्रियाणां प्रत्यक्पराङ्मुखत्वात्, मनसोपि सोहमस्मीत्यस्मिन्नर्थे स्वातन्त्र्येणाप्रवृत्तेः, शब्दसंस्का रादिपुरस्कारेतु तस्यैव करणत्वोपपत्तेः, मनसश्च नित्यशुद्धबुद्धमुक्तस्वभाव ब्रह्मगोचर साक्षात्कारकरणत्वस्या दृष्टचरत्वेन शब्दस्य तत्स· हकारित्वकल्पनायोगात् , तथात्वेच श्रवणादिनैष्फल्यात् । "न चक्षुषागृ ह्यते नापि वाचा" "मनसातुविशुद्धेन" "मनसैवेदमाप्तव्य" मित्यादिश्रुतीनां

---

(नचास्येति) ( निवर्त्येति )तज्ज्ञाननिवर्त्यस्य मिथ्यात्वं तज्ज्ञानस्य साक्षा त्त्वमन्तरेणानुपपन्नमिति प्रदर्शनार्थं निवर्त्यपदम्, प्रपञ्चरूपस्य निव र्त्यस्य मिथ्यात्वं तत्वमस्यादिवाक्य स्यापरोक्षजनकत्वमन्तरेणानुपपन्न मित्यर्थः। मिथ्यात्वं ज्ञाननिवर्त्यत्वञ्च प्रपञ्चस्योपपादयति ( स्वतइत्यादि- ना ) ज्ञानमात्रनिवर्त्यत्वे युक्तिमप्याह ( मिथ्याभूतस्येति ) मिथ्याभूत स्य ज्ञानमात्रनिवर्त्यत्वं युक्तश्चेत्यन्वयः । (मनसोपीति ) सहकारिविशेष मनासाद्य सोहमितिज्ञानस्य मनसाऽसंभवादित्यर्थः । तत्सहकृतमनस एव करणत्वं कुतो नस्यादित्यत्राह (मनसश्चेति ) यद्यपि शब्दस्यापि ताद शसाक्षात्कारकरणत्वमसिद्धं, तथापि तादशज्ञानकरणत्वे नविवादः, अतस्तज्जन्यज्ञानस्यसाक्षात्त्वमात्रंकल्पनीयं , मनसस्तु तादशज्ञानकरण त्वं तज्जन्यज्ञानस्यसाक्षात्त्वंच कल्प्यम् , अतोलाघवाच्छब्दस्यैव साक्षा- त्कारकरणत्वकल्पनं युक्तमितिभावः । ( तथात्वइति ) मनसस्ताद- शसाक्षात्कारकरणत्वस्य दृष्टचरत्वे श्रवणादिसापेक्षापरोक्षज्ञाने प्यन्यत्र

चित्तैकाग्र्यस्यांतरंगत्वबोधनेतात्पर्यात् । अतएव " अप्राप्यमनसासहे " त्यादेरनधिकृत मनोविषयत्वव्यवस्थापनानुपपत्तिः । नच-मानसंप्रत्यक्षमस्ति, आत्मनः स्वप्रकाशत्वात् , सुखादेस्तु साक्षिवेद्यत्वात् , भावनासहकृतमनो जन्यसाक्षात्कारस्यापि पथिकपरिभावितप्रियतमासाक्षात्कारवत् भ्रान्ति-त्वात् , भ्रान्तिरूपसाक्षात्कारस्यापि साक्षिरूपत्वेनैव मानसत्वाभावात् , अनुमानादेस्त्वापरोक्ष्याविद्वेषशीलत्वात । अतो वाक्यपरिशेषे तत्रापि भेदगर्भाणां वाक्यानां भेदभ्रमानिवर्तकत्वायोगात् अद्वैतवाक्यान्येवा विद्यानिवर्तकापरोक्षज्ञानंजनयन्तीति । किंच—प्रत्यक्षस्य भेदभ्रमस्य परोक्षा दैन्द्रियिकप्रत्यक्षाद्वा न परिभवोयुक्तः, न्यूनत्वात् समत्वाच्च । शास्त्रमूलंतु प्रत्यक्षं साक्षात्कारत्वाविशेषेपि निर्दोषहेतुकत्वाद्बाधक्षमं । तच्चोक्तं "न्यून-त्वाच्च समत्वाच्च परोक्षं नाक्षजंक्षमं । निर्दोषहेतुजन्यत्वात् प्रत्यक्षं शास्त्रजं क्षम " मिति । प्रत्यक्षभेदभ्रमनिवर्तनइतिशेषः । साक्षात्कारस्यचा विद्यानि वर्तकत्वं तस्यच शब्दकरणत्वं शब्दादेवसिध्यति, " निचाय्यतं मृत्यु मुखात् प्रमुच्यते " " क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टेपरावरे" इत्या-

---

**क्लृप्तस्य मनसएव करणत्वेन शब्दस्य करणत्वाभावाच्छ्रवणादिनि-रपेक्षपरोक्षज्ञाने शब्दस्य करणत्वं ग्राह्यं, तथाच श्रवणादिवैय्यर्थ्यमि-तिभावः । ( अतएवेति ) मनोग्राह्यत्वाभावे श्रुतिः प्रमाणमित्यर्थादु-क्तं भवति । ( भावनेति ) भावनासहकृतमनोजन्यत्वेन पराभिमतस्ये-त्यर्थः ( पथिकेति ) प्रोषितचिंतितायाः प्रियतमायाः साक्षात्कारव दित्यर्थः । पूर्वं परोक्षज्ञानस्य निवर्तकत्वा दर्शना दपरोक्षपरिशेषः प्रमा-णान्तराणामप्रवृत्तेर्वाक्यपरिशेषश्चोक्तः, इदानीं परोक्षस्यापरोक्षस्य च निवर्तकत्वासंभवा दपरोक्षत्वं शब्दजन्यत्वंच परिशेषयति ( किं-चेति ) ( न्यूनत्वाच्चेति ) परोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्वदर्शनात्ततोन्यू नबलत्वादित्यर्थः । न्यूनत्वात्परोक्षन्नक्षमम् , समत्वादक्षजंच नक्षममि त्यर्थः । नकेवलं परिशेषात् साक्षात्त्वशब्दकरणत्वयो स्सिद्धिः, किं-तु श्रुत्यापीत्याह ( साक्षात्कारस्यचेति ) ( निचाय्येति ) चायृधातुर्दर्श**

दिभि रपरोक्षज्ञानस्य अविद्यानिवर्तकत्वसिद्धेः । " तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनात्कुमारः" "वेदांतविज्ञानसुनिश्चितार्थाः" "स्वाध्यायश्चक्षुस्तएकमस्य योगोद्वितीय मभिवीक्षणाय । अध्ययनमननन यनोस्यद्रष्टा नमांसचक्षुरभिवीक्षनेतं" "पितृदेवमनुष्याणां वेदश्चक्षुस्सना तन"मित्यादे स्तस्य शब्दकारणकत्वसिद्धिः । प्रयोगश्च—विगीतंज्ञानं साक्षा त्कारि - तत्वमस्यादिवाक्यजन्यज्ञानत्वात् , तत्स्वरूपगोचरश्रावणज्ञानवत् । नच तत् तदजन्यं - प्रत्यक्षेविषयस्य कारणत्वस्वीकारात् । तत्रैवप्रतिज्ञा- या मपरोक्षज्ञानविषयत्वात्सुखादिज्ञानवदितिवाप्रयोगः । तत्वमस्यादिवाक्यंवा स्वप्रतिपाद्यगोचरसाक्षात्कारजनकम् — स्वप्रकाशार्थोपदेशरूपत्वात् , स्वतोपरोक्षार्थविषयत्वाद्वा, संवित्स्वप्रकाशा दशमस्त्वमसीत्यादिवाक्य वत् । अपरोक्षत्वं तत्वमस्यादिवाक्यजन्यज्ञानवृत्ति - अपरोक्षज्ञाननि ष्ठात्यन्ताभावा प्रतियोगित्वात् , ज्ञानत्ववदिति । नच - अत्र परोक्षत्वं तत्व मस्यादिवाक्यजन्यज्ञानवृत्ति - परोक्षनिष्ठात्यन्ताभावाप्रतियोगित्वात् , ज्ञानत्ववदिति सत्प्रतिपक्षसाधनता, सिद्धसाधनात् । तेषा मेवहि वाक्याना मसंभावनाविपरीतसंभावनाप्रतिबद्धचेतसिपुरुषे परोक्षज्ञान

---

नार्थः । (तस्माइति) करिष्यमाणोपदेशएव तत्र दर्शयतिना उक्तइति भावः । (वेदान्तेति) सूपसर्गः प्रत्यक्षरूपइति भावः । (नमांसेति) मांसचक्षुर्निषेधाच्छ्रुतिचक्षुरनुमितमिति भावः । (विगीतमिति) नन्वयमसिद्धोहेतुः, वाक्यार्थज्ञाने वाक्यस्यातीतादिरूपत्वेनाजनकत्वा त, तज्ज्ञानस्यैव जनकत्वात, प्रयोज्यत्वमात्रविवक्षायां तल्लिङ्गिकायां तत्पक्षिकायांच व्यभिचार इतिचेन्न, अनुमित्याद्यन्यत्वेन विशेषणात् । यद्वा - तत्वमसिवाक्यंप्रत्युच्चारणंभिन्नमेव, तथाच - यस्य तत्वमसि वाक्यस्य नलिङ्गत्वं नापि पक्षत्वं नापिस्मृतिः, तच्छ्रवणजन्यं वाक्यार्थ ज्ञानं पक्षः, तद्वाक्यप्रयोज्यज्ञानत्वं हेतुरिति । तत्वमस्यादिवाक्यजन्य- किञ्चिज्ज्ञानवृत्तित्वसाधनेदोषमाह (सिद्धसाधनादिति) तत्वमस्या-

जनकत्वमिष्यते । पूर्वोक्तश्रुतिविरुद्धतया कालात्ययापदेशाच्च। नचबाध्यं-अग्निहोत्रादि वाक्यजन्य ज्ञानेष्व प्येवं प्रयोक्तुं शक्य मित्याभाससमान योगक्षेमतेति, तत्र विपक्षेबाधविरहात् । नहि तत्र प्रामाण्यस्यानुपपत्तिः, अनुमानादिवदुपपत्तेः । नाप्यनुष्ठानस्य, परोक्षनिश्चयादपितदुपपत्तेः । नापि फलस्य । ततएव तत्सिद्धेः । नापिच फलकामनायाः, फलसंबन्धनिश्चयादेव तस्याअप्युपपत्तेः । अतएव पुरुषप्रवृत्तिरपि संगच्छते । इहतु प्रागुक्तार्थानुपपत्तिरेव विपक्षेबाधिकास्यात् । अतोनाभासतुल्यतेति ॥ एवं पूर्वेष्वपि प्रयोगे ष्वाभासतुल्यतोद्धारो द्रष्टव्यः । अतोविपक्षेबाधकस्यैव प्रतिबन्धरहस्यत्वात उक्तार्थे महाविद्याजातयश्च यथावगाहं प्रयोक्तव्याः । स्वपरपक्षसाधारण्यंहि महाविद्यानां स्वभावः, तत्रानुकूलतर्कसदसद्भावाभ्यां एकत्रार्थसिद्धि रितरत्रार्थासिद्धिरितिनिर्णयः । ननु-तर्कपराहताइमेहेतवः, शब्दस्यप्रत्यक्षांतर्भावप्रसंगादितिचेत् ; न,अप्रसंगात्। योगिमनसोबाह्यविषयप्रत्यक्षज्ञानजनकत्वेपि बाह्यप्रत्यक्षत्वहिर्भाववदुपपत्तेः । अथ-चक्षुरादिपंचकान्यतमत्वं , योगिमनोन्यत्वेसति बाह्य

---

दिवाक्यजन्ययावज्ज्ञानवृत्तित्वसाधने दोषमाह ( पूर्वोक्तेति ) ( नचेति ) अपरोक्षत्वमग्निहोत्रादिवाक्यजन्यज्ञानवृत्त्यपिप्रयोक्तुंशक्यमित्यर्थः । (फलकामनायाइति ) अनेनेदंफलम्मेभूयादितिकामनायाइत्यर्थः । ( फलेति ) फलसंबंधः - फलजननयोग्यता । ( अतएवेति ) पूर्वमनुष्ठानमित्यग्निहोत्रादिक्रियाविवक्षिता, प्रवृत्तिस्तु तज्जनककृतिरितिभेदः । ( इहत्विति ) निवर्त्यमिथ्यात्वान्यथानुपपत्तिरित्यर्थः । प्रतिबन्धोव्याप्तिः । ननु महाविद्यानां स्वपरपक्षसाधारण्यात् स्वेनैव सत्प्रतिपक्षितत्वात् कथं ततस्साध्यसिद्धिरित्यत्राह ( स्वपरेति ) यद्यपि स्वपरपक्षसाधारण्यं महाविद्यानां स्वभावः, तथाप्यनुकूलतर्कतदभावाभ्यां साध्यसिद्धितदभावावित्यर्थः । ( योगीति ) बाह्यविषयत्वं - बाह्यविशेष्यक

विषया परोक्ष प्रमितिकारणत्वं वा बाह्य प्रत्यक्षांतर्भावे प्रयोजकमिष्येत, इहापितर्हि स्वतोपरोक्षार्थब्रह्मात्मविषयशब्दान्यत्वेस त्यपरोक्षप्रमितिकारणत्वं प्रत्यक्षांतर्भावप्रयोजकमितिसम स्समाधिः । किञ्च-प्रत्यक्षांतर्भावइति इन्द्रियांतर्भावोवा, साक्षात्कारजनकवाक्यांतर्भावोवा विवक्षितःस्यात् । पूर्वत्र मनसोपि बाह्यानंतर्भावइतिवदुपलंभविरोधात् अशक्यः । उत्तरत्राविष्टप्रसंगता, ऐकराश्येसिद्धेस त्यवांतरभेदाश्रयणाविरोधात् । तदेवतु कथमितिचेत् ,न,दशमस्त्वमसीत्यादौ तद्दर्शनस्यसमर्थितत्वात् । वाक्यस्यैवापरोक्षधीजनकत्वे मननिदिध्यासनविध्यानर्थक्यं, श्रुतवेदांतानां संसारानुवृत्तिदर्शनविरोधश्चेतिचेत्,न,प्रागुक्तप्रतिबन्धनिरसनद्वारेण तयोःश्रवणं प्रतिफलोदयकार्यंगतयाविधानोपपत्तेः, संसारित्वोपलब्धेश्च प्रतिबन्धकवत्पुरुषविषयत्वात् । अतो बाधकापेत सानुग्राहक श्रुत्यादिसिद्धं तत्वमस्यादेः साक्षात्कारजनकत्वमिति ॥

अत्रब्रूमः — यत्तावदुक्तं केषुचिद्वाक्ये ष्वपरोक्षधीहेतुत्वं दृश्यतइति, तन्नरविषाणांकुरप्रसाधने खरविषाणांकुरनिदर्शन मिति मन्यामहे । तथाहि - संवित्स्वप्रकाशेत्यत्रतावत्सामान्यतः स्वपरसमवेत त्रैकालिकसर्वसंवित्स्वप्रकाशत्वंवाक्यार्थः । तादात्विकीतु तज्जन्या संवि देका तदानीं स्वप्रकाशा, तत्र न सर्वसंविदां स्वप्रकाशत्वमिदानीमपरोक्षं, यतो

---

त्वं, ज्ञानाप्रत्यासत्तिकत्वेसतीतिवा विशेषणीयम् । ननु कथमिष्टत्वं, ' निर्विशेषं न सामान्य ' मिति न्यायेन चक्षुरादिविशेषानन्तर्भावे प्रत्यक्षजनकसामान्यान्तर्भावस्यापिबाधा दित्याशंक्य सामान्यतः प्रत्यक्षान्तर्भावेसति चक्षुराद्यवान्तरभेदाश्रयणव च्छब्दरूपावान्तरभेदाश्रयणमपि संभवतीत्याशयेनाह ( ऐकराश्यइति ) ( तदेवत्विति ) ऐकराश्यमित्यर्थः । तद्दर्शनस्य – साक्षात्कारजनकत्व दर्शनस्येत्यर्थः । ( यत्तावदिति ) नवप्ररूढत्व लाभार्थ मंकुरशब्दप्रयोगः । ( यतइति ) अपरोक्षार्थविषयत्वप्रयुक्तत्वाभ्युपगमात् ज्ञानापरोक्ष्यस्येतिभावः । नच-सर्व संविदां कदाचि दापरोक्ष्या तद्विषयापरोक्ष्यस्यापीतिवाच्यं,

वाक्यस्य तदापरोक्ष्यहेतुता स्यात् । नच सर्वसंविदैक्यं, तस्यदू-षयिष्यमाणत्वात् । तदैक्येपि तत्तदुपाहिताकारेण परोक्षापरोक्षविभाग स्य दुरपह्नवत्वात् । वाक्यजन्यसंवित्स्वरूपापरोक्ष्येतावद्वाक्यमेव कारणं - विषयप्रकाशांशकारणव्यतिरेकेण स्वप्रकाशांशे कारणान्त रानुपलम्भादिति चेत ; तर्हि सिद्ध मनुमानादे र्वाक्यान्तराणामप्यपरोक्ष धीजनकत्वं, तत्तज्जन्यधियामपि स्वप्रकाशांशेपि तत्तत्कारणकत्वात् । सत्यं, तथापि— संवित्स्वप्रकाशेत्यादिवाक्येतु विषयप्रकाशांश स्वप्रकाशांश श्चैकएवेति विशेषइतिचेन्न, सामान्यविशेषविषयतया तद्भेदस्यदर्शितत्वात् ।

---

च्यम् । वह्न्यनुमितेरप्यापरोक्ष्यापातात । ( नचेति ) वस्तुतो ज्ञान-स्य स्वप्रकाशत्वेपि तत्स्वप्रकाशत्वस्य तेन ज्ञानेनाग्राह्यत्वान्न तदापरोक्ष्य मितिभावः । ( तदैक्येपीति ) उपहितसंविदां कासांचि दन्यकाली-नत्वात् कासांचिद्व्यधिकरणत्वाच्च पारोक्ष्यमितिभावः । ननु - संवि त्स्वप्रकाशेतिवाक्यजन्यज्ञानस्य स्वप्रकाशत्वेनापरोक्षत्वात् तज्जनकत्वेना परोक्षहेतुत्वं सिद्धमेव, नच - प्रत्यक्षांशे जनकत्वमेव साध्यम् ; अन्य-था सिद्धसाधनात् , वाक्यंच विषयांशएव हेतुः—नत्वजन्यज्ञानांशेपि,अतः प्रत्यक्षजनकत्वं नास्त्येवेतिवाच्यं; तदंशेपि वाक्यातिरिक्तकारणादर्शनेन तस्यैव कारणत्वादिति शंकते ( वाक्येति ) ( तर्हीति ) तथाच सिद्धसाधनं हेतुविशेषण वैयर्थ्यं चेति भावः । ननु विषयप्रका-शांशाभिन्नप्रत्यक्षांशजनकत्वं साध्यं, अनुमानादिषु 'वह्निमानितिजानामी' त्यत्र वह्निमानित्यंशोविषयांशः, जानामीत्यंशः स्वप्रकाशांशः, संवित्स्व प्रकाशेत्यत्रतु तज्जन्यज्ञानस्यापि संवित्त्वेन विषयान्तर्भावात् तत्प्रका शेनैव स्वव्यवहारोपपत्तौ जानामीत्यंशान्तरकल्पकाभावात् स्वप्रत्यक्षरूप-स्वात्मप्रकाशांशो विषयप्रकाशांश श्चाभिन्नएवे त्यदोष इति शंकते ( सत्यमिति ) ( नेति ) संविदि त्यतीतानागतस्वपरसाधारण संविन्मा-त्रगोचरविषयप्रकाशांशमात्रेण जानामीति तदातनव्यक्तिमात्रगोचर त-

एवं दशमस्त्वमसीत्यादावपि यदि दशमत्वंस्वात्मनः पश्यतएवेदंवाक्यमुक्तं; तदा घटंपश्यतो ऽयंघटइतिव सिद्धानुवादपरमिदं वाक्यं स्यात् । तथाच प्रत्यक्षानुवादितामात्रेण प्रत्यक्षताभ्रमः, परोक्षविषयप्रयोग इवा परोक्षविषय प्रयोगेपि शब्दशक्ते स्तदवस्थत्वात् , यदापुनरकिंचित्स्वात्मदशमत्वं प्रत्युच्येत तदातु दशमत्वांशे परोक्षत्वंस्पष्टं, उद्देश्यांशस्यतु प्रागेवदृष्टत्वात् विशिष्टेपि प्रत्यक्षताभ्रमः, प्रतिपत्तिझाटित्यात् ।

---

दाश्रय पुरुषविशेषसंबंधित्वादिविशिष्ट व्यवहारस्य जानामीत्यंशांतर मन्तरेणासंभवात् , ततश्च दृष्टांतासिद्धिरितिभावः । यद्यपि-- विषयांशेपि स्वस्यान्तर्भावोस्त्येव, तथापि विषयप्रकाशांश स्संविदन्तरवत् एतत्संविदंशेपि परोक्ष एवेति भावः । स्वप्रकाशतया प्रत्यक्षत्वावश्यंभावेन विषयप्रकाशांशस्यैव तत्संवि दंशे प्रत्यक्षत्वमित्याशंकितुर्भावः ।

यद्वा--ननु विषयप्रकाशांशे यत्प्रत्यक्षं तज्जनकत्वं साद्धर्यं, विषयप्रकाशांशश्च नपूर्ववद्वेद्यांशोविवक्षितः, किन्तु विषयावगाह्यंशः, इदंच साद्धर्यं नानुमानादिष्वस्ति, इहत्वस्ति स्वस्यापिविषयतया स्वप्रकाशांशस्यैव विषयावगाहितया विषयप्रकाशांशत्वादिति शंकते ( सत्यमिति ) ( नेति ) किं सर्वविषयावगाह्यंशे यत्प्रत्यक्षं तज्जनकत्वं साद्धर्यं, यत्किञ्चिद्विषयावगाह्यंशे प्रत्यक्षजनकत्वं वा ? नाद्यः, वाक्यस्य स्वप्रकाशांशस्यच सामान्यविशेषविषयतया भेदस्य दर्शितत्वेन सर्वविषयावगाह्यंशे प्रत्यक्षत्वाभावात् साद्धर्यवैकल्यमित्यर्थः । नद्वितीयः, अतिन्द्रियत्वावच्छिन्न यत्किञ्चिद्विषयावगाह्यंशप्रत्यक्षजनकत्व व्यापकस्य वेद्यांशान्तर्भूतज्ञानजनकत्वस्योपाधित्वादितिभावः । (दर्शितत्वादिति) दर्शितप्रायत्वादित्यर्थः । प्रमैवकुतोनस्यादित्यत्राह ( परोक्षेति ) प्रागविदितस्वात्मदशमत्वस्य यदिकस्यचिद्विशिष्टेपि प्रत्यक्षताधीस्तदाभ्रांतिरेवसेत्याह । ( उद्देश्येति ) अतः प्राचीनप्रत्यक्षाभेदभ्रमस्तत्रेतिभावः ।

एतेन- कदाचिदपि तत्र धीभेदानुपलम्भादिति पूर्ववाद्युक्तं निरस्तम् करणान्तरसन्निधानात्प्राक् मनसामानक्षोत्पादेन तदभेदभ्रम-

नच -- तत्प्रत्यक्षत्वेनैव विशिष्टस्यप्रत्यक्षता, अयं पर्वतोवह्निमा नि-
त्यनुमानेपि तत्प्रसंगात् , गुरुत्वादे रतींद्रियत्वभंगप्रसंगाच्च । एवं क्षत्रिय
त्वमसीत्यादिष्वपि विकल्पो नुसंधेयः ।

यत्तु -- प्रत्यक्षेविषये परोक्षप्रकाश व्याघात इति, तदप्यसत् ।
आपरोक्ष्यादेः ज्ञानधर्मत्वे ज्ञानव्यक्ति भेदेन विषयैक्येपि परो
क्षत्वापरोक्षत्वयोर्विरोधाभावात् । विषयधर्मत्वे पीन्द्रियेण तथाविध
ज्ञानं जायतां , लिंगशब्दादिना त्वन्यथा भूतमिति पुरुष -
भेद इवैकस्मिन् पुरुषेपि करणभेदेन कालभेदेनच एकस्यैव वस्तुनः
प्रत्यक्षता परोक्षताच प्रागेवदर्शिता । विपरीतवासनाभूयस्त्वेपि करण-
शक्त्या तत्वज्ञानोदयस्योपपादनात् । यदि - प्रत्यक्षे विषये परोक्षप्र---
काश स्स्यात् - तदा शुक्तित्वप्रकाशेपि रजतावसायाविरोधप्रसंगइति
चेत् ; किं शुक्तौचक्षुर्व्यापारान्वयव्यतिरेकानुविधायी रजतभ्रमः
परोक्षः, येनैवं ब्रवीषि । अथ पुन र्भ्रान्तिरेव प्रसञ्जनीया । तदा शु-
क्तित्वादिलक्षणविशेषग्रहस्य भ्रमोत्पत्तिप्रतिपक्षतया विशेषाग्रहाख्य
सहकारिविरहेण सामग्रीवैकल्याद्वा शुक्तौ रजतभ्रमानुदयः । इहतु

---

**सम्भवात् । (आपरोक्ष्यादेरिति) परोक्षत्वापरोक्षत्वयोर्ज्ञानभेदेनाविरो-
धात् तन्निबन्धनः प्रत्यक्षेविषये परोक्षप्रकाशव्याघातविरहइतिभावः ।
(विषयधर्मत्वेपीति) विषयधर्मत्वेपि तदनिबन्धनेएव पारोक्ष्यापारोक्ष्येज्ञा-
नेपि वाच्ये, इन्द्रियलिंगादिजन्यज्ञानेषु वैलक्षण्यानुभवात् . तथाच-
एकस्मिन्नेव करणद्वयप्रवृत्तौ परोक्षापरोक्षरूपज्ञानद्वय मविरुद्धमिति
भावः । (विपरीतेति ) मननादिभिर्विपरीतवासनायामनिवृत्तायामपि वा-
क्यात्प्रथमतः परोक्षज्ञानस्य त्वयोक्तत्वादित्यर्थः । ननु - नवय मपरोक्षे
परोक्षप्रकाशे शुक्तित्वेनापरोक्षे परोक्षरजतप्रकाशमापादयामः, किन्तु
विरुद्धयोरविरोधांगीकारे शुक्तित्वे भासमानेपि रजतभ्रमस्स्यादिति
ब्रूम इति शंका मनूद्यपरिहरति (अथपुनरिति) (शुक्तित्वादीति) प्रतिब
न्धकाभावस्य अकारणत्वमतेनाह (विशेषेति) ( इहत्विति ) अपरो...**

अप्रतिबद्धपरोक्षज्ञानसामग्रीसिद्धौ कथं तदनुत्पत्तिः । तथाविधाच तत्सामग्री प्रागेव दर्शिता । अंगीक्रियतेच भवतापि श्रवणदशायां। अतएवैवंविधप्रसंगस्य निर्मूलता ।

किञ्च स्वानिष्टं प्रसञ्जकं परानिष्टं प्रसञ्जनीयमितितु तर्कतन्त्र व्यवस्था । उक्तञ्च श्रीपुण्डरीकाक्षाचार्यैः । ❋ " प्रसञ्जकन्तु स्वानिष्टं परानिष्टं प्रसज्यते । विपर्यये पराभीष्टं स्वाभीष्टे पर्यवस्यति ।। प्रसञ्जकेतु स्वाभीष्टे स्वानिष्टेपर्यवस्यति । स्वाभीष्टस्यत्वसिद्धि स्स्यात् परेष्टस्यप्रसंज-न"❋ इति । उभयमप्यत्र विपरीतं, स्वतः प्रत्यक्षेपि ब्रह्मणि श्रवणदशायां वाक्यतः परोक्षज्ञानजननस्य भवदभिमतत्वात् । मिथ्यैतदितिचेत् , पश्चात्तनप्रत्यक्षज्ञानजननमपि तथैवेति कोविशेषः ।

---

परोक्षज्ञाने नप्रतिबन्धकम् , नापि तदभावःपरोक्षज्ञानहेतुः, मानाभावादितिभावः । (तथाविधेति) परोक्षविषयप्रयोगइवापरोक्षविषयप्रयोगेपि तच्छक्तेस्तद्वस्थत्वादिति शब्दरूपसामग्रीदर्शितेत्यर्थः । (अतएवेति) अपरोक्षे विषयेपि परोक्षप्रत्ययस्यांगीकारात् व्याप्तचभावात् प्रशिथिलमूलस्तर्कइत्यर्थः । (विपर्ययइति) विपर्यये पर्य्यवसानेतु पराभीष्टं स्वाभीष्टम् साधयति, यथा-दृश्यतेच धूमस्तस्मात् वह्निमानिति । स्वानिष्टं प्रसञ्जकमित्यत्र हेतुमाह ( प्रसंजकंत्विति ) प्रसंजक वि ार्ययेपर्यवासानात् प्रसंजकस्य इष्टत्वे तदभावस्यानिष्टत्वादनिष्टपर्य्यवसानमित्यर्थः । परानिष्टमेवप्रसञ्जनीयमित्यत्रहेतुमाह(स्वाभीष्टस्येति)आपाद्यविपर्य्ययस्य स्वेष्टसाधनत्वा दापाद्यस्य चेष्टत्वे तदभावासिद्धे र्नस्वेष्टसिद्धिरित्यर्थः। (उभयमिति) प्रसञ्जकं स्वेष्टम् , प्रसज्यश्चपरेष्टमित्यर्थः । प्रसंजकस्य स्वेष्टत्वमुपपादयति (स्वतइति) (मिथ्यैतदिति) परोक्षज्ञानस्य मिथ्यात्वेन तदभावस्य परमार्थत्वेनेष्टत्वात् परमार्थत्वेनेष्यमाणाभावप्रतियोगित्वेना निष्टत्वमुपपद्यत इतिभावः । ( पश्चात्तनेति ) श्रवणाद्यनन्तरभाविप्रत्यक्षस्यापि मिथ्यात्वात् तदप्यनिष्टमिति अनेन तर्केणा निष्टमेव सिध्यतीत्यर्थः । किञ्च-अभावस्य सत्यत्वादेवहि प्रतियोगिनः परोक्षज्ञानस्यानिष्टत्वं, अभावस्य

शुक्तौ रजतत्वस्येवा विरोधापादकञ्च मिथ्यात्व मिह स्मर्त्तुमर्हसि ॥*॥ सत्यं विरोधाच्छुक्तित्वं बाधकत्वेनकथ्यते । मिथ्याभूतंञ्चरजतं बाध्यत्वेनाभिधीयते॥*॥नेन मिथ्यैतदितिवचनं तवाविरोधापादकं न भवति, प्रसञ्जनीयंच क्वचिदस्मदिष्टं, आप्तोपदेशादिभिः शुक्तित्वप्रकाशेपि दुष्टेन्द्रियादिना कस्यचित् क्वचिद्रजतावभासानुवृत्तेः, अन्यथा भवतां बाधितानुवृत्तेर्दृष्टान्तस्याप्यभावप्रसंगात् । तथा प्रत्यक्षसिद्धेपि शुक्तेस्तत्वे भ्रान्तविप्रलंभकवाक्यादिभिरपि रजतधीरुदेत्येव, साच परोक्षेव, शीघ्रन्तु बाध्यमानतया केषांचि त्तत्र तदनु त्पत्तिभ्रमः । किंच - यदिप्रत्यक्षेविषये परोक्षप्रकाशो व्याहतः । तदा पर्वतोवह्निमानित्यादिपुविशे-

---

**सत्यत्वंच मिथ्यात्वस्य शुक्तिरजतयो रिवाविरोधापादकत्वाद्वाच्यम् . तच्च न संभवति, सत्यमिथ्यार्थयोर्विरुद्धत्वात् , अन्यथा बाध्यबाधकभावानुपपत्तेः, तस्मात् परोक्षतदभावयोरविरोधासिद्धेः परोक्षा भावासंभवा न्न प्रसञ्जकस्यानिष्टत्वमित्याह ( शुक्तावित्यादिना तवाविरोधापादकन्नभवतीत्यन्तेन ) स्मर्तुमर्हसी त्यनन्तरन्त न्नसंभवतीतिशेषः । ( सत्यमिति ) सत्यं शुक्तित्वमित्यन्वयः । बाध्यत्वेनाभिधीयत इत्यत्र विरोधादित्यनुषञ्जनीयम् । ( अविरोधापादकं नसंभवतीति ) परोक्षतदभावयोरिति शेषः । परोक्षज्ञानस्यापरोक्षभ्रमानिवर्तकत्वेपि शाब्दज्ञानस चिवेन्द्रियेणापरोक्षज्ञानादेव भ्रमनिवृत्तिस्स्यादित्यत्राह ( दुष्टेन्द्रियेति ) दोषमाहात्म्या दाप्तोपदेशे सत्यपि क्वचि न्न तत्वापरोक्ष्यमुत्पद्यते, किंतु भ्रमएवेत्यर्थः । एवं विरुद्धयोस्सान्निपाते शुक्तित्वज्ञाने सत्यपि रजतभ्रमस्स्यादि त्यापादनार्थमभिप्रेत्य तत्र दोष उक्तः, इदानीन्तु अपरोक्षेपि परोक्षप्रकाशोस्तिचेत् शुक्तित्वेनापरोक्षेपि रजतत्वेन परोक्षंस्यादित्यापादनार्थमभिप्रेत्य तत्र दोषमाह ( तथेति ) अयोग्यताज्ञानं प्रतिबन्धकन्नेतिभावः । यद्वा – अप्रामाण्यशंकादशाविवक्षिता । ( उदेत्येवेति ) तत्रानुभवएव मानमिति भावः । ( विशेषतइति ) प्रत्यक्षयोग्यार्थे विशेषतोदृष्टं, तदयोग्यार्थे सामान्यतोदृष्टमिति विभाग-**

परोक्षानुमानेषु तथाविधार्थगोचरवाक्येषुच परोक्षप्रकाशो न स्यात् । योग्यतामात्रंतु तत्र, नतु तदानीं प्रत्यक्षतेतिचेन्न । यस्य कस्यचित् आरण्यकयोगीश्वरादे स्तद्दर्शनात् । तथापिनानुमातुस्तथेतिचेत्; तर्ह्यत्रापिदशमस्यादे र्वाक्यश्रवणात्पूर्वं मदर्शना न्नवाक्यत स्साक्षात्कारसंभवः । यत्पुनः स्वस्यैव द्रष्टृयोग्यतयाऽनंतरंदर्शनाद्वा तत्र तत्संभव इष्येत, तर्हि सिद्ध मनुमानादावपि तदुभयसंभवा त्तथात्वं । यदाच अयंघटइति मन्यमानंप्रत्येव कश्चि दयंघटइति ब्रूयात् , तदा तस्यापि प्रत्यक्षार्थविषयत्वाविशेषात् साक्षात्कारजनकत्वप्रसंगः । इष्यतएवेदमपीति चेन्न, स्वतोपरोक्षार्थविषयत्वादिति हेतुविशेषण प्रयुंजानस्य तदनिष्टं, इष्यतांवा, तथापि ज्योतिष्टोमादिवाक्यार्थस्यापि योगिप्रभृतीनां प्रत्यक्षत्वस्यावयोरविगीतत्वात् तान्प्रति केनचि दविदितमाहात्म्येन तत्प्रयोगे ततः साक्षात्कारसंभवस्स्यात् । तथाच सर्वमपि वाक्यं कस्यचित्साक्षात्कारकारणमिति स्थितौ केषांचिदेवेति व्यवस्थाभंगः । अस्त्वेवमपि

---

भिप्रायेणोक्तम् । ( तथाविधेति ) अश्वयादिवत्प्रत्यक्षार्थगोचरेष्वित्यर्थः । तदानीं प्रत्यक्षे परोक्ष प्रकाशोव्याहतः, अश्वयादिर्नतथा, ब्रह्मतु तथैव, नित्यापरोक्षत्वादिति शंकते ( योग्यतेति ) अग्निरपि तदानीमारण्यकानां योगिना मीश्वरस्य हिरण्यगर्भादेश्च प्रत्यक्षइत्याह ( यस्यकस्यचिदिति ) तंप्रत्यपरोक्षे तस्य परोक्षं व्याहतमिति शंकते ( तथापीति ) ( तर्हीति ) तत्र परोक्षज्ञानस्य व्याघाताभावान्न साक्षात्कारसमर्थनमित्यर्थः ( यत्पुनरिति ) यदि- प्रत्यक्षे परोक्षव्याघात इत्येवोच्यते, प्रत्यक्षइतिच प्रत्यक्षयोग्यत्वं, व्याहतत्वेनाभिमत परोक्षज्ञानानन्तरमपरोक्ष इतिवा विवक्षितं, तथाच दशमत्वस्य प्रत्यक्षयोग्यत्वा दनन्तरं प्रत्यक्षदर्शनाद्वा परोक्षव्याघातात् अपरोक्षसंभव इष्यतइत्यर्थः ।

ननु - तदा प्रत्यक्षे परोक्षप्रकाशस्यैव व्याघातः, यदाच दशमत्वं प्रत्यक्षं तदा तत्रापरोक्षज्ञानसमर्थन मिति स एव दृष्टान्त इत्यत्राह ( यदाचेति )

किन्न दिच्छन्नमिति चे त् , न, अनुमानादिष्वपि तत्प्रसंगस्योक्तत्वात् । तथाच तत्त्वमस्यादिवाक्य परिशेषासिद्धिः । ततश्चापशूद्रनयविरोधादि-प्रसंगः । किंच - विश्वस्यापि ज्ञाततयाऽज्ञाततयावा साक्षिवेद्यत्वस्य भवदभिमतत्वा त्सर्वैः प्रमाणैः साक्षात्कारसंभवः सुलभएव। यदिच स्वतो परोक्षार्थ विषयमेव वाक्यं तज्जनकमितिव्यवस्थाप्येत । तदा दशमस्त्व मसीत्यादिदृष्टांतासिद्धिः । यद्यपि त्वमंशस्यस्वतोपरोक्षता, तथापि सं-ख्यादिविशिष्टाकारेण स्वतोपरोक्षत्वाभावात् , अन्यथा वाक्यश्रव णात्पूर्वमेव तद्वैशिष्ट्यप्रकाशप्रसंगात् । अतोनुमानस्येव वाक्यजातीयस्य क्वचिदपि साक्षात्कारहेतुत्व दर्शनस्या सिद्धे रनुग्राहकतर्काभा वाच्च स्वाभिमतस्य कस्यचिद्वाक्यस्य तद्धेतुत्वकल्पनं विरुद्धमेव । अतएव स्वतोपरोक्षार्थगोचरत्वलक्षणोपाधिरपिनिरस्तः ।

यत्तु - निवर्त्यमिथ्यात्वानुपपत्त्या पारम्पर्येणा परोक्ष्य तज्जनक विशेषयोः परिशेषइति । तदप्यसिद्धयन्यथासिद्धिभ्यामाक्रम्यते । सत्यमेवहि संसार मुपासन प्रीणितेश्वरसंकल्पविशेष निवर्त्य

---

( ततश्चेति ) अत्रैवर्णिकत्वेपि अनुमानाधिकार स्यानपायात , आनुमानिकापरोक्षज्ञानवत्त्वा त्तेषामपि ब्रह्मविद्याधिकारस्स्यादिति भावः। आदिशब्देन श्रवणादिवैयर्थ्यम् विवक्षितं । ( किंचेति ) नच - साक्षिणस्तदीयत्वाभावा त्तत्प्रत्यपरोक्षत्वं नेतिवाच्यम्, शास्त्रार्थं न जानामी या-दिरूपेणाज्ञानावच्छेदकार्थ व्यवहारजनकस्य साक्षिणोपि तदीयत्वादिति भावः। नच -- कृत्स्याऽपरोक्षत्वं विवक्षितम् ।ब्रह्मण स्स्वतोपरोक्षत्वेनऽ तथा त्वादिति भावः। ( दृष्टान्तासिद्धिरिति ) ननु - स्वतोपरोक्षार्थमात्रविषयत्वं न हेतुः, तादृशार्थविषयत्वमात्रं त्वमस्वरूपमादायास्त्येवेतिचेत्, किमयं हेतु स्स्वतोपरोक्षार्थांशे परोक्षजनकत्वसाधकः, उततदर्थमात्रे, न द्वि-तीयः त्वं घटश्चातिष्ठथ इत्यत्र घटांशे ऽपरोक्षतापत्तेः, नाद्यः, दशमस्त्वमसी-त्यादि वाक्योदाहरणायोगात । (अतएवेति) वाक्यस्यापरोक्षज्ञानजनकत्वा सिद्धे रपरोक्षार्थगोचरत्वं कारणतावच्छेदक मित्यपि निरस्तमित्यर्थः। ( सत्यमेवहीति ) संसारस्य सत्यत्वं भगवत्संकल्पनिवर्त्यत्वश्च सा

माधयिष्यामः । यत्तु - "तरतिशोक मात्मवि" दित्यादिभि र्ज्ञानमात्रनिवर्त्यत्वं सिद्धमिति. एतदपि वेदनज्ञानादिशब्दानां उपासनाख्यविशेषपर्यवसानस्य प्रागेवदर्शितत्वान्निरस्तं । यदाहुः ॥*॥ वेदनं ध्यानविश्रांतंध्यानं श्रान्तं ध्रुवस्मृतौ । साचदृष्टित्वमभ्येतिदृष्टिर्भक्तित्व मृच्छतीति ॥ मिथ्याभूतस्य ज्ञानमात्रनिवर्त्यत्वं युक्तमित्येतच्च मिथ्याभूततया भवदभिमतस्य तिमिरादिदोषस्य प्रतिभटादेश्च भेषजशास्त्रादिनिवर्त्यत्वोदाहरणेन प्रागेव दत्तोत्तरं । अस्तुच मिथ्यात्वे धीबाध्यत्वे युक्तिः, नचात्रभिध्यात्वं ॥ * ॥ दृश्यत्वाद्यदि मिथ्यात्वं प्रपंचस्याभिधीयते । ब्रह्मणोऽपि चमिथ्यात्वं ततएवाभिधास्यते ॥ ब्रह्मणोयदि दृश्यत्वं व्यावहारिकनुच्यते । प्रपंचस्यापि दृश्यत्वं तात्विकं किं त्वयेष्यते ॥ * ॥ अपिच संसारमिथ्यात्वेपि किंनिवृत्तिशब्देन प्रतिभासमानामिथ्यार्थ प्रध्वंसनमभिप्रेत्य तदर्थमपरोक्षधीगवेषणं, उततद्विषयज्ञानप्रध्वंसनं, आहोस्वित्तत्कारणोच्छेदं, अथवा तथाविधज्ञानान्तरानुत्पादं, उततद्विपरीतविषयावगाहरूपविषयापहारं, यद्वा तद्विषयसत्यताध्यवसायशैथिल्यं, अथान्यदेव किञ्चिदलांव्यवहारिकमिति ॥ नाद्यः क्वचिदपि मिथ्यार्थस्य प्रध्वंसाभावात, " प्रध्वंसोहि स्वरूपस्य प्रच्युतिःप्रतिपाद्यते,

---

धयिष्याम इत्यर्थः । सत्यत्वसाधना न्मिथ्यात्वस्यासिद्धिः सिद्धा, सत्यत्वेवा मिथ्यात्वेवा प्रमाणबला दीश्वरसंकल्पनिवर्त्यत्वस्यावश्यकत्वा दन्यथा सिद्धिस्सिद्धा ।(तरतिशोकमित्यादि)ननु - उपासनस्यापि ज्ञानत्वात् कथं ज्ञानमात्रनिवर्त्यत्वस्य निरासइतिचेत्; न, ध्यानादिभिन्नस्यैव परेण ज्ञानत्वांगीकारात तन्निवर्त्यत्वस्यैव तदिष्टत्वा त्तस्यैवेह निरस्ततामिधानेन दोषाभावात् । किंच, उपासनादिनानिवृत्तौ मुमुक्षादिसहकारिणोपेक्षितत्वात् न ज्ञानमात्रनिवर्त्यत्वम्, तन्मतेतु उपासनादि सर्व ज्ञानार्थं मपेक्ष्यते, ज्ञानेनतु बन्धनिवृत्तौ न किंचि दपेक्ष्यतइति । युक्तिः- युक्तता । ( व्यावहारिकमिति ) तथाच हेत्वसिद्धे र्नमिथ्यात्वसाधनमितिभावः । किं - मिथ्यार्थोस्ति, उत न, द्वितीय आह, ( प्रध्वंसोहीति ) विद्यमानतामात्रं सत्यत्वं, नातिरिक्तं अनिरूपणादितिभावः ।

स्वरूपसत्यताभावे कस्य प्रच्युतिरुच्यते ॥ सत्यपि तस्मिंस्तेन तदुच्छेदायोगात् । अन्यथा बाधकज्ञानात्पूर्वं सुषुप्ते द्रष्टरिपुरुषे शुक्तिरजताद्यवस्थितिप्रसंगात् । संविदधीनसत्ताकस्यतस्यतन्निवृत्तिरेवहिनिवृत्तिः । आहुश्च - अरोपस्यनिवृत्तिरस्या दारोपस्यापिसंक्षयः । तस्य स्वरूपशून्यस्यकानिवृत्तिर्हिकथ्यते ॥ नद्वितीयः - तस्य बाधकज्ञानाभावेपि बाधकज्ञानवदेव स्वरसवाहिविनाशहेतुबला देवाशुतरविनाशित्वात् । अन्यथा नुदितबाधकज्ञानस्य भ्रांतस्य सुषुप्त्याद्यभावप्रसंगात् । तथाहुः न भ्रांतिर्बाधकज्ञानात् नियमेनविनश्यति । तस्माद्धि भ्रांतचित्तस्य सुषुप्तौ भ्रांतिसंक्षयइति ॥ यद्यपि — उत्तरज्ञानमात्रमपि संस्कारादेःपूर्वज्ञाननिवर्त्तकमिष्यते — तथापि, यत्किञ्चिदविरुविरुद्धविषयात् परोक्षज्ञानादपि पूर्वज्ञाननिवृत्त्युपपत्तौ विरुद्धविषयप्रत्यक्षज्ञानान्वेषणंनिष्फलं । नच तृतीयः - भ्रांतिज्ञानकारणानुच्छेदे यथावस्थितप्रत्यक्षज्ञानानुदयात । नह्यगुंल्यवष्टंभतिमिरादिदोषेष्वनुवर्तमानेषु चन्द्रैकत्वसाक्षात्कारसंभवः । संभवेवाकिंतदुच्छेदेन । प्रत्यक्षानुवृत्त्यर्थंतदुच्छेदइतिचेत् , न, तत्सामग्र्यनुवृत्तिमन्तरेणतदुच्छेदेपितदासिद्धेः , तस्यांचानुवर्त्तमानायां तदवस्थानेपि विरोधाभावात् । स्वाभाविकप्र

---

आह । (सत्यपीति) तेन - ज्ञानेनेत्यर्थः । (अन्यथेति) नचेष्टापत्तिः । सुषुप्तिकाले शुद्धरजिनाशुक्तिनिवृत्तौ यदिरजतस्यापिनिवृत्तिः , तदा ज्ञानानिवर्त्यत्वप्रसङ्गात , अनिवृत्तौ निरधिष्ठानाध्यासप्रसंगात् । दूषणान्तरमाह (संविदिति) भ्रान्तिज्ञानेत्यादि दोषस्य तत्वज्ञानप्रतिबन्धकत्वादितिभावः । (संभवेवेति) तत्वज्ञानोत्पत्त्यर्थंहि भ्रान्तिसामग्र्युच्छेदकल्पनं; तस्यांसत्यामपि तत्वज्ञानोत्पत्तौ किन्तदुच्छेदकल्पनेनेत्यर्थः । द्वितीय प्रत्यक्षज्ञानोत्पत्तेः प्राक्, तत्सामग्र्यनुवर्तनेनवा, द्वितीयेदोषमाह(तत्सामग्रीति)साक्षात्कारसामग्र्यभावभ्रमसामग्र्युच्छेदेपि तत्साक्षात्कारानुत्पत्तेरित्यर्थः । आद्ये दोषमाह (तस्यांचेति) तत्वसाक्षात्कारसामग्र्यांभ्रमसामग्र्यांसत्यामपि प्राथमिकतत्वापरोक्षवत द्विती

त्यक्षप्रतिबन्धकतया तदुच्छेदकल्पनामितिचेत् । किमत्र स्वाभाविकत्वं, किंसामग्र्यांसत्यांस्वरसवाहित्वं, उतनित्यस्वाभाविकत्वम् । आद्येप्रागपि कथं तदवस्थानेप्रत्यक्षोदयः अन्योन्याश्रयणात् । द्वितियेपि नित्यस्वाभाविकप्रत्यक्षस्यच किन्नामप्रतिबन्धकम् । अयमत्रसंग्रहश्लोकः ॥ भ्रांतिकारणसद्भावेप्रत्यक्षस्यह्यसंभवः । सम्भवेनिष्फलैवस्या तदुच्छेदस्य कल्पना ॥ स्वानुवृत्त्यर्थमुच्छेद स्सामग्र्यैवानुवर्त्तनात् । प्रतिबन्धनिवृत्त्यर्थमुच्छेदेप्रथमं कथं ॥ प्रत्यक्षंकारणोच्छेदेतदुच्छेदस्ततोपिचेत् । अन्योन्याश्रयणंतुस्या त्प्रतिबन्धोनचात्मनीति ॥ नापिचतुर्थः, प्रागभावस्यासाध्यत्वात् , तदनुवर्त्तनस्याप्यंतत स्तत्प्रतियोगिकारणोच्छेदको

---

याद् रप्युत्पत्तिसंभवादित्यर्थः (नित्येति) नित्यत्वात्मकस्वाभाविकत्वमित्यर्थः । किं प्रतिबन्धकनिवर्तकं नित्यज्ञानमेव, उत स्वरसवाहि । आद्ये दोषमाह (अन्योन्येति) (द्वितीये दोषमाह ( नित्येति ) नित्ये प्रतिबन्धकस्याभावात् , तन्निवर्तकत्वन्नस्वारसिकप्रत्यक्षस्य कल्प्यमित्यर्थः । ननु - भ्रान्तेः पुनरप्यनुत्पादार्थं तत्सामग्र्युच्छेदकत्वम् प्राथमिकप्रत्यक्षस्य कल्पनीयमितिचेत् , न , सामग्र्या मिथ्यात्वे तस्या अपि स्वरूपतस्सत्त्वाभावेन प्रच्युत्यसंभवात्तस्या अपि अनिवृत्तिस्तद्भ्रान्तिकारणनिवृत्तिरित्येव वाच्यम् तत्राप्येवमित्यनवस्था, सत्यत्वे नापरोक्षज्ञाननिवर्त्यत्वं तवेष्टमितिभावः । स्वाभाविक प्रत्यक्ष प्रतिबन्धकतया तदुच्छेदकल्पन मित्यत्र प्रागुक्तविकल्पे प्रथमशिरसि दूषणमाह । ( प्रतिबन्धेति ) द्वितीयेपि पूर्वोक्तविकल्पमभिप्रेत्य प्रथमशिरसि दोष माह ( प्रत्यक्षमिति ) प्रत्यक्षं भ्रान्तिकारणोच्छेदे सत्येव वाच्यम् , तस्य त्वया प्रत्यक्षप्रतिबन्धकतोक्तेः, तदुच्छेदस्तु यदि प्रत्यक्षेण स्यात् , तदान्योन्याश्रयइत्यर्थः । द्वितीय आह ( प्रतिबन्ध इति) आत्म रूपे अपरोक्षे न प्रतिबन्धकं नित्यत्वादित्यर्थः । क्वचित्तु न द्वितीयइत्यतःप्रागेवान्योन्याश्रयणादितिपाठः, सतु सुगमः, संग्रहोपि तदनुसारेण योज्यः ( तदनुवर्तनस्येति ) प्रागभावपरिपालनंहि सत्यां सामग्र्यां कार्यविलंबायोगात प्रतियोगिकारण विघटनेनैव वाच्यम् ; तच्च नि

दिनिक्षेपात , तस्यच निरस्तत्वात् ॥ न पंचमषष्ठौ , परोक्षा दपि तत्सिद्धेः, प्रत्यक्षमपि हि द्विचन्द्रादिज्ञानमनुवर्तमानं परोक्षेण चन्द्रैकत्वानुमानादिना बाध्यते, तावतैव चन्द्रद्वित्वाध्यवसायशैथिल्यं जायते । अन्यथा - देहात्मभ्रमवतामनुमानेनागमेन वा देहातिरिक्तात्मविस्रम्भो नस्यात् । परोक्षबाधे भ्रमोनुवर्तत इतिचेत् , न तुल्यमेतादित्युक्तत्वात् ॥ संजातेप्यपरोक्षेपि बाधकारणसंभवात । अंगुल्याद्यैर्भवद्भ्रान्ति रुपष्टंभनहेतुभिः ॥ नापि सप्तमः, तस्या सांव्यवहारिकत्वेनै तदर्थोपायोपदेशायोगात , अन्वयव्यतिरेकागोचरत्वेना परोक्षपक्षपातविरहाच्च । एवं सामान्येना परोक्षज्ञानानपेक्षायां कुत स्तत्कारणविशेषचिन्तेत्यनुत्थानमेव शब्दजन्यप्रत्यक्षवादस्येत्यभिप्रेत्य भाष्यकारैरिह न संरंभः कृतः"सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्ते " रित्यादिना । "द्रष्टव्य"इत्योर्दर्शनसमानाकारविधिपरत्वोक्तेश्चेद मपि दूषितममंस्त । समन्वयाधिकरण पूर्वपक्षेतु - परोक्त्यैव दूषयिष्यति " नच शब्दएव प्रत्यक्ष ज्ञानं जनयतीति वक्तुंयुक्तं, तस्यानिन्द्रियत्वा"दित्यादिना । अस्तुवा - कथंचिदापरोक्ष्यपरिशेषः । तथापि — प्रत्यक् पराङ्मुखत्वादि लक्षणविरुद्धव्याप्तयेन्द्रिय परित्यागे तुल्यन्यायतया वाक्यस्यापि परित्यागप्रसंगः ।

---

**रस्तमित्यर्थः । भ्रमानुवृत्तिरेव सत्यताध्यवसायशैथिल्यं तच्च परोक्षज्ञानान्नेति शंकते ( परोक्षेति ) ( उक्तत्वादिति ) प्रत्यक्षसिद्धेपि शुक्तेस्तत्वे विप्रलंभकवाक्या द्रजतधी रुदेत्येवे त्युक्तत्वादित्यर्थः । ( अपरोक्षेपीति) भ्रान्तिरपीत्यन्वयः। ( एतदिति )अपरोक्षज्ञानद्वारा एतदर्थस्य श्रवणाद्युपायस्योपदेशायोगात् । प्रत्यक्षपरिशेषमभ्युपगम्य वाक्यपरिशेषं दूषयति ( अस्तु वेति ) ( प्रत्यगिति ) आदिशब्देन मनस्त्यागहेतु स्सोहमित्यस्मिन्नर्थे ऽ स्वातन्त्र्य॥ मनुमानपरित्यागहेतुरापरोक्ष्यविद्वेषित्वञ्चगृह्यते, प्रत्यक्पराङ्मुखत्वादिलक्षणेन साध्यविरुद्धेन व्याप्तयेत्यर्थः ( तुल्येति ) वाक्यस्या प्यापरोक्ष्य विद्वेषशीलत्वादि**

दर्शना दर्शनाभ्यां विशेषइतिचेन्न, तदसिद्धेः । तत्सन्देहेपि न विरुद्ध व्याप्तिरिति चेन्न । इन्द्रियादिष्वपि प्रसंगात् । अथ - सत्यामेव विरुद्धव्याप्तौ गत्यन्तराभावात् तदनादरेण वाक्यस्यापरोक्षधीहेतुत्वं कल्प्येत, हन्त तर्हि इन्द्रियादिष्वेव भक्तिरियं प्रयुज्यतां । तथाच- सिद्धे गत्यन्तरे किं वाक्येन । अयन्तु निर्णयः । विरुद्धव्याप्तिसद्भावो वा क्यस्यापि तथाभवेत् । असद्भावोयदिभवेत् समएव द्वयोरपि ॥ दश मस्त्वमसीत्यादौ भवेद्वाक्यात्परोक्षधीः । सामग्र्यत्थापनात्पश्चा त्प्रत्य क्षादपरोक्षधीः ॥ नच - प्रत्यक्षादेरद्वैतगोचरत्वविरोधः, तेषामपि त्वद्भिमतकूटयुक्तिभि स्तत्वमस्यादेरिवाद्वैतगोचरत्वस्थापनस्य शक्यत्वात् ।

यत्तु – प्रत्यक्षस्य न परोक्षात्परिभवइति । तदपि ज्वालैक्यबाधकभेदानुमानादिदर्शनेन निरस्तमेव ।

यदपि-ऐन्द्रियकप्रत्यक्षाच्छास्त्रजन्यप्रत्यक्षस्य प्राबल्यमुक्तं । तदप्यसत्, एकदोषप्रसूतत्वादेर्दर्शयिष्यमाणत्वात् । *प्रत्यक्षं ब्रह्म गृह्णाति यदिचब्रह्मइ

---

त्यर्थः (दर्शनेति) दशमस्त्वमसीत्यत्र दृश्यतइति भावः (तदिति) अत्रा प्यपरोक्षजनकत्वदर्शनस्या सिद्धेरिति भावः (तदिति) दर्शन सन्देहेपीत्यर्थः । (इन्द्रियेति) मनसि प्रत्यक्पराङ्मुखत्व सन्देहान्न विरुद्धव्याप्तिनिश्चयः प्रत्यग्विषयस्य शब्दस्या परोक्षजनकत्व सन्देहदशायां तुल्यन्यायस्य तद्विषयस्यानुमानस्यापि तथेत्यभिप्राये णादिशब्दप्रयोगः (इन्द्रियादिष्वेवेति) वस्तुतः अपरोक्षधीसामर्थ्यस्य इन्द्रिये क्लृप्तत्वा त्तस्यैव प्रत्यक्षवियत्वकल्पनं युक्तमितिभावः । दशमोह मिति ज्ञानेऽपरोक्षत्वानुभवः कथमित्यत्राह (सामग्रीति) शब्दोपनीतं दशमत्वं मनसैव गृह्यतइति भावः । (तेषामिति ) भेदवासनानिरासे यथावाक्यस्यापरोक्षज्ञानजनकत्वं कल्प्यते एव मिन्द्रियस्यैव कल्प्यतामित्यर्थः (तदपीति) परिभवोहि नार्थनिवृत्तिः नापि प्रतीतिनिवृत्तिरित्युक्तम्, अतोऽप्रामाण्यबुद्धिः परिभवः पर्यवस्यति, प्रकृते ज्वालाभेदानुमानेन ऐक्यप्रतीते अप्रामाण्यबुद्धिरस्त्येवेत्यर्थः । प्रमान्तरप्रति-

स्यता । अब्रह्मालम्बनन्त्वेतु कथन्नु बलवत्तरम् ।। यत्पुनःअपरोक्षज्ञानस्य मो क्षहेतुत्वं श्रुतिसिद्धमिति । तावन्मात्राभ्युपगमेपि न नः काचित् क्षतिः।

यत्तु - शब्दादेव शब्दस्यापरोक्षधीहेतुत्वं दर्शितम् । तद पि हास्यं, अन्यपरत्वस्य आकुमारंप्रसिद्धेः, साक्षात्कारहेतोर्मनस स्स- हायतया दृढव्यवसायहेतुतामात्रेणवा तदुपपत्तेः । यथाश्रुतग्र हणेचक्षुरादेरपि स्वीकर्तव्यत्वात् । "श्रुतिस्मृतीतु विप्राणां नयने द्वे" इतिहिश्रूयते । "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिषु परोक्ष व्यवसायमात्रमेवोच्यते । यत्तु-विज्ञानमिति विशेषणेन विशेषविषयत्वासि- द्ध्या निश्चयहेतुत्वे सिद्धेपि सुशब्देनविशेषणा दपरोक्षनिश्चयहेतुत्वं सिद्धमिति। तदप्यत्यन्तपरिहास्यं, अकम्पनीय व्यवसायविवक्षया सुशब्दप्र योगात् । यः पुनःतत्वमस्यादिवाक्यजन्यज्ञानत्वादिति प्रयोगः,स तज्जन्यश्राव णज्ञानेनैकान्तिकः । अतिप्रसंगश्च - वाक्यान्तरेष्वप्येवं प्रयोक्तुं श क्यत्वात् । परिहारस्यच समत्वात् । विषयजन्येषुच व्याप्तेरसंकोचात् ।। नवाक्यजन्यताहेतुः प्रत्यक्षत्वेतु किं पुनः । अर्थजन्यत्वमेवस्यात्

---

बन्धः परिभवइतिचेन्न, सत्रातेप्यपरोक्षेपीत्यादिना अपरोक्षबाधेपि भ्र माद्यनुवृत्तेः प्रागेवदर्शितत्वात् । ( कथन्त्विति ) द्वैतविषयत्वा दविरोधा द्बलाबलचिन्तैव का इतिभावः । निश्चितपदेन निश्चयहेतुत्वे सिद्धेपि सुविशषणं - विशेषविषयत्वार्थस्या दित्यत्राह ( विज्ञानमिति विशेषणे न विशेषविषयत्वसिद्ध्येति) । ( तज्जन्येति ) श्रवणं - श्रोतव्यइति विहितं विवक्षितम्, ततो जातं- श्रावणं, प्राथमिकपरोक्षज्ञाने व्यभि चारइत्यर्थः । अग्निहोत्रादिवाक्ये प्रयोगो प्रयोजकइत्यत्राह ( परिहार स्यचेति ) मिथ्यार्थनिवृत्त्या अपरोक्षज्ञानकल्पनस्य निरासादिति भा वः । योगजधर्माद्यजन्य जन्यत्वावच्छिन्नसाक्षात्कारित्वव्यापकं विषय जन्यत्वमुपाधिश्चेत्याह ( विषयेति ) ( नवाक्येति ) प्रत्यक्षत्वेतु न वा- क्यजन्यता, हेतुः - प्रयोजकः, किन्तु अर्थजन्यत्वमेव हेतुस्स्यात ततश्चा

तत स्सोपाधिकस्त्वयं ॥ वाक्यविषयप्रत्यक्षेपिवाक्यस्यैवार्थत्वा दर्थजन्य त्वोपाधेः साध्यव्यापकत्वाविरोधः । यश्च- स्वप्रकाशार्थोपदेशरूपत्वात् स्वतः प्रत्यक्षार्थविषयत्वाद्वेति, सोपि पूर्ववदेवानैकान्तः । दृष्टान्तस्यच साध्यविकलत्वं दर्शितमेवेति ॥

प्रतिप्रयोगश्च । विगीतंवाक्यं नस्वार्थविषयप्रत्यक्षज्ञानजनकं- वाक्यत्वात्

---

यं सोपाधिकइत्यर्थः । किं याव तत्त्वमस्यादिवाक्यव्यक्तयः पक्षः, उतश्रवणाद्यनन्तरभाविव्यक्तिमात्रं ? आद्ये मननात्प्राथमिकव्यक्तांवंशतोबाध मभिप्रेत्य द्वितीये तत्रैव व्यभिचारमाह (सोपीति)(दृष्टान्तस्येति) स्वप्रकाशत्वस्य दशमत्वस्यचा स्वप्रकाशत्वात्, स्वतःप्रत्यक्षत्वाभावाच्चेतिभावः । ( विगीतमिति )

ननु - साध्येस्वशब्दस्य जन्यपरत्वे तत्त्वमसिवाक्यार्थविषय प्रत्यक्षस्याप्रसिद्धेः तज्जनकस्याप्रसिद्ध्यातद्भेदसाधनमनुपपन्नं, जनकपरत्वे कस्यापिवाक्यस्यस्वार्थगोचरप्रत्यक्षजनकत्वाभावात् प्रतियोग्यप्रसिद्ध्या तद्भेदसाधनमनुपपन्नं, स्वार्थशब्देनस्वजन्यज्ञानविषयत्वं विवक्षित्वा इन्द्रियेप्रतियोगिप्रसिद्ध्युपपादनेबाधः,स्वस्यैवस्वजन्यश्रावणज्ञानविषयतयास्वार्थत्वात् विषयतयास्वगोचरज्ञानजनकत्वाच्च । स्वार्थशब्देन भिन्नत्वमात्रं विवक्षित्वा स्वभिन्नविषयप्रत्यक्षजनकंनभवतीत्युक्तौ बाधोदृष्टान्तासिद्धिश्च, स्वजन्यश्रावणज्ञानस्य तकारत्वादिविषयत्वात । नन्वस्तु स्वशब्दोभिन्नपरएव, नच-तत्त्वमसिवाक्यार्थप्रत्यक्षाप्रसिद्धिः , घटादिगोचरप्रत्यक्षस्यैव प्रमेयत्वसामान्यलक्षणप्रत्यासत्तिजन्यस्य तत्त्वमसिवाक्यार्थ गोचरत्वादितिचेन्न । बाधादेवतत्त्वमसिवाक्यगोचरसामान्यलक्षण प्रत्यासत्तिजन्यज्ञानस्यापि तत्त्वमसिवाक्यार्थगोचरतया वाक्यस्य तत्र जनकत्वात् । नच - सामान्यप्रत्यासत्तिजन्यज्ञानेसन्निहितविषयप्रतियोगिकलौकिकप्रत्यासत्ते र्जनकत्वाभावा न्नतस्य प्रत्यासत्तिद्वारकं जनकत्वमितिवाच्यं । सन्निकृष्टविषयांशे लौकिकप्रत्यासत्तेर्विद्यमानतया तस्याजनकत्वस्या ऽवर्जनीयत्वात् । नह्यगतिवद्धा सामग्रीकार्यन्नजनयमीतिकेनापिवक्तुंशक्यं, कस्यचित्

प्रतिबन्धकत्वकल्पनेच न किञ्चित्प्रमाणमस्ति। अस्तुतर्हि जनकपरमेव, नच - प्रतियोग्यप्रसिद्ध्यासाद्ध्याप्रसिद्धिः, शब्दोवर्त्ततइति वाक्येस्वार्थविषयप्रत्यक्षजनकत्वस्य प्रसिद्धत्वादितिचेत्, न, तत्रैवव्यभिचारात। अस्तुतर्हिस्वजन्यज्ञानविषयप्रत्यक्षजनकत्वाभावस्साद्ध्यः, इन्द्रियेच प्रतियोगिप्रसिद्धिः, नचबाधः, विषयतातिरिक्तरूपेण स्वजन्यत्वस्य विवक्षितत्वात, वाक्यप्रत्यक्षस्य विषयतारूपेणैव तज्जन्यत्वात्, स्वकरणकत्वंवा स्वजन्यत्वमिहविवक्षितमितिचेन्न। शब्दोवर्त्ततइत्यत्र व्यभिचारात्। अस्तुतर्हि स्वभिन्नविषयप्रत्यक्षजनकत्वाभावः, नच- तकारत्वादि प्रत्यक्षजनकत्वात् बाधः, स्वगोचर प्रत्यक्षाविषयत्वस्य स्वभिन्नविशेषणत्वात्, यद्यप्येवं नेन्द्रिये प्रतियोगिप्रसिद्धिः, तथापि शब्दस्पर्शादिप्रत्यक्षजनकेशरीरेप्रसिद्धिरितिचेन्न। सर्वस्यापि शरीरादिविषययोगिप्रत्यक्षादिविषयत्वेनाप्रसिद्धेरिति।

उच्यते - साध्येस्वपदंभिन्नपरमस्तु, साद्ध्यप्रसिद्धिश्च, सामान्यप्रत्यासत्त्या सर्वविषय प्रत्यक्षजनकेन्द्रिये। नचोक्तबाधः, स्वार्थविषयत्वावच्छेदेन प्रत्यक्षजनकभेदस्य साद्ध्यत्वात्, इन्द्रियस्य प्रत्यासत्तिभूतसामान्याश्रयसर्वविषयावच्छेदेन प्रत्यक्षजनकत्वात्, विषयस्य चस्वविषयतावच्छेदेनैव विषयतयाजनकत्वात्। न च - शब्दोवर्त्ततइत्यत्र व्यभिचारः, स्वागोचरवृत्तिकवाक्यत्वस्य हेतुत्वात्, शब्दावर्त्ततइत्यस्य स्वगोचरवृत्तित्वात। अस्तुवास्वपदं जनकपरं, नचोक्तव्यभिचारः, पूर्ववदेवहेतुविशेषणात्। अस्तुवाविषयतानवच्छिन्न स्ववृत्तिकारणतानिरूपितजन्यताश्रयज्ञानविषयप्रत्यक्षजनकत्वाभावस्साद्ध्यः-प्राग्वदेवहेतुविशेषणाच्चन पूर्वोक्तव्यभिचारः। अस्तुवास्वकरणकत्वंस्वजन्यत्वं, नच पूर्वोक्तव्यभिचारः,ज्ञानप्रत्यक्षपदव्यत्यासेन स्वकरणक प्रत्यक्षविषयकज्ञानजनकभेदस्य साध्यत्वात्। अस्तुवा स्वगोचरप्रत्यक्षाविषय स्वभिन्नविषयप्रत्यक्ष जनकत्वाभावः, शरीरादौच प्रतियोगिप्रसिद्धिरुक्ता, नच - सर्वस्य शरीरादिविषययोगिप्रत्यक्षादिविषयत्वात् साद्ध्याप्रसिद्धिः, योगजधर्माद्यजन्यत्वेन स्वगोचरप्रत्यक्षविशेषणात। अत्रच साध्येवाक्यत्वादित्येव हेतुरिति। प्रत्यक्षकरणं नभवतीतिवा, विषयतातिरिक्तरूपेण प्रत्यक्षज

ज्योतिष्टोमादिवाक्यवत् । तथा-विगीताधीः न स्वविषये प्रत्यक्षा-वाक्यजन्यत्वेसति वाक्येतरविषयत्वात् स्वर्गयागादिसंबन्ध बुद्धिवत् । नचात्रश्रुतिविरुद्धतयाकालात्ययापदेशः, श्रुतेरन्यपरत्वस्थापनात् । नच-दशमस्त्वमसीत्यादिवाक्येन तज्जन्यज्ञानेनवा नैकान्तिकता , तत्र साक्षात्कारप्रसंगस्यापि निषिद्धत्वात । नच- पूर्वैरेव हेतुभिस्सप्रतिसाधनता, उपलंभानुरोधेना नतिप्रसंजकव्याप्तिमूलतया प्रबलत्वात , समत्वेपि प्रकरणसमत्वापादनदशायामन्योन्यप्रतिरोधस्येष्टत्वेन तत्प्रसंगानुपपत्तेश्च । न च- विपक्षे बाधकविरहादप्रयोजकता , अविशेषात् , शब्दान्तराणामपि प्रत्यक्षज्ञानजनकत्वस्य बाधकस्यच सत्वात् । नचाप्रत्यक्षार्थविषयतयातेषां तदनुत्पादकत्वमिति वाच्यं । तथाप्ययंघटः दशमोय मित्यादिवाक्यानां

---

नकं न भवतीतिवा, प्रत्यक्षजनकतावच्छेदक विषयतातिरिक्तदावत स्ववृत्तिधर्मकमिति वा साध्यम् । अत्र चरमसाध्येविषयतातिरिक्तपदं-बाधव्यभिचारवारणाय । एवंच स्वतोपरोक्षार्थविषयत्वादे रनवच्छेदकत्वसिद्धयेष्टसिद्धिः।एतेषुत्रिष्वपि साध्येषु वाक्यत्वादित्येव हेतुरिति । (विगीतेति) तत्त्वमस्यादिवाक्यजन्यातद्गोचराधीः पक्षः। स्वप्रकाशतया स्वांशे प्रत्यक्षत्वात बाधवारणाय साध्ये स्वविषयइत्युक्तम् । वाक्येतिघटप्रत्यक्षे व्यभिचारवारणाय विशेषणं। वाक्यप्रत्यक्षवारणाय विशेष्यं । वाक्येतरपदं - वाक्यतरमात्रपरं । तेन वाक्यजन्यत्वे सतिवाक्यविषयत्वंपर्यवस्यति ( अनतिप्रसंजकेति ) अग्निहोत्रादिवाक्येष्वस्य परोक्षधीजनकत्वस्य तन्न्यायेन संभवाद्यथातत्त्वमस्यादिवाक्यजन्यज्ञानस्येनापरोक्षधीजनकत्वसाधने तिप्रसंगः नतथास्मदुक्तव्याप्ताविति बलवत्त्वमिति भावः । ( समत्वेपीति)स्थापनानुमानस्यहि प्रतिरोधो दोषः प्रत्यनुमानस्य तु स्थापनाप्रतिबन्धैकफलत्वान्न प्रतिरोधो दोष इत्यर्थः । वस्तुतोस्त्येव विपक्षे बाधकमित्याह ( नचेति ) ( अविशेषादिति ) ज्योतिष्टोमादिवाक्य व्यावृत्ता वान्तरोपाधे रभावा दित्यर्थः ॥ प्रत्यक्षार्थविषयत्वं तत्त्वमस्यादिवाक्ये विशेषः, ज्योतिष्टोमादिवाक्येतु

तत्प्रसंगात् । नचेहभवतापि शब्दस्य साक्षात्कारहेतुत्वमिष्यते । इ-
ष्यतांवा । तथापि ज्योतिष्टोमादिवाक्यानां तत्प्रसंगोदुर्वारः । तत्रापि
मनस्सहकृतशब्देनैव प्रत्यक्षज्ञानं जायतइति साहसस्य सुशकत्वात्,
तावतैव तेषां प्रत्यक्षार्थविषयत्वस्यापिसिद्धे स्वांतरविशेषा निर्धा-
रणादिति । अस्तुवा विपक्षेबाधकाभावः । सतुपूर्वेषामपि समानइति ।
तथापि प्रतिरोधमात्रंसिद्धं । नन्वस्ति पूर्वेषां विपक्षेबाधकं आत्मविज्ञा
नस्य मोक्षसाधनत्व श्रुत्यन्यथानुपपत्तिः, तथाहि- श्रुत्युपपत्तिभ्यांवाक्या
र्थज्ञानादेवमिथ्याभूतसंसारनिवृत्तिरितिस्थिते प्रत्यक्षस्यभ्रमस्य परोक्षवा-
ध्यत्वायोगेन प्रत्यक्षपरिशेषे ब्रह्मणिच सकलकरणागोचरे अनुमानादिषु
च साक्षात्कारवैदेशिकेषु यदिवाक्यादप्यपरोक्षज्ञानं नस्यात् , अपवर्गोपि
नस्यादेवेति । इदमपि दण्डवातसूदितदर्वीकरनर्त्तनं अस्याः परिपाटिकायाः
आरंभएव निरस्तत्वात् । यः पुनरसावूहः —अपरोक्षत्वं तत्त्वमस्यादिवा-
क्यजन्यज्ञानवृत्ति - अपरोक्षनिष्ठात्यताभावाप्रतियोगित्वात् ज्ञानत्ववदिति ।
अत्रतावद्वाक्यस्वरूपजन्यतद्विषयश्रावणसाक्षात्कारेण सिद्धसाधनता,
प्रत्यक्षज्ञानहेतावििन्द्रियार्थसन्निकर्षे अर्थस्येन्द्रियस्यच तुल्यकक्ष्यत्वात् । अथ

---

तदभावान्नातिप्रसंगइत्यत्राह ( नचेति ) ननु कथं ज्योतिष्टोमादिवा
क्ये तत्प्रसंगः अपरोक्षार्थ विषयत्वरूप प्रयोजकस्य तत्राभावा दित्य-
त्राह ( तत्रापीति ) अपरोक्षार्थ विषयत्वंहि अपरोक्षज्ञानविषयार्थ वि
षयत्वं, तथाचा परोक्षज्ञाने आपाद्यमाने ऽपरोक्षार्थविषयत्वमपि सहैवा
पादितंभवतीति नावान्तरविशेषइत्यर्थः । पूर्वेषां – त्वदनुमानानाम् ।
इहतुप्रागुक्तार्थापत्तिरेव विपक्षेबाधिकेत्युक्तमुत्थाप्यनिराकरोति । नन्वि-
त्यादिना(वाक्यार्थज्ञानादिति) वाक्यार्थः-ब्रह्म, तज्ज्ञानादित्यर्थः , ननु वा-
क्यजन्यं विज्ञानं विवक्षितम्, उत्तरत्रब्रह्मणिचेत्यादिना करणपरि
शेषात् । प्रत्यक्षस्य विषयजन्यत्वमुपपादयति ( प्रत्यक्षेति ) (अ-
थेति ) तत्त्वमस्यादिवाक्यस्या परोक्षज्ञानजनकत्वरूपोद्देश्यासिद्ध्यर्थ,
ईश्वरयोगि प्रत्यक्षवृत्तितया सिद्धसाधनवारणार्थं च, साध्ये (तत्वमस्यादि

पुनस्तत्त्वमस्यादिवाक्यजन्यतदर्थविषयज्ञानवृत्तीति-साध्यंविशेष्येत, तथापि परोक्षतद्वाक्यार्थानुभवसंस्कारसहकृतश्रवणजन्यतदर्थप्रतिपादकत्व विशिष्टवाक्यस्वरूपसाक्षात्कारेणसिद्धसाधनतैव, सहिप्रत्यभिज्ञात्मा विशेषणतया अर्थविशेष्य तथा वाक्यञ्चविषयीकरोति । अथतदर्थैकविषयकज्ञानवृत्तीति विशेषयसि । तथापि ब्रह्मेतरविषयत्वधर्मेण हेतोरनैकांतिकता । तत्खलुसंप्रतिपन्नेष्वपरोक्षेषुसर्वेष्वपि वर्त्तते, नपुनस्संशयत्वविपर्ययत्व चाक्षुषत्वादिवत् कुतश्चिदपरोक्षान्निवर्त्तते, तत्त्वमस्यादिवाक्यजन्येतुज्ञाने नैववर्तते । तत्त्वमस्यादिवाक्यव्यतिरिक्तजन्योपिब्रह्मसाक्षात्कारोस्तीतिचेत्, हंततर्हिवाक्यैकपरिशेषप्रयासंविस्मृतवानसि । तथासति वाक्यजन्यसाक्षात्कारकल्पनावैय्यर्थ्यंच, तत एव तत्कार्यसिद्धेः । यत्तु—परोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्तीति प्रत्यनुमाने सिद्धसाधनत्वमुक्तं । तत्र यदितत्त्वमस्यादिवाक्यजन्यज्ञानाभ्यापीति प्रयुंजीत, तदाकिंब्रूयाः । श्रुतिविरोधात् कालात्ययापदेशमेव ब्रूम इति चेत्, हन्ताद्यापित्वयाश्रुति स्तपस्विनी कूटसाक्षिणी कल्प्यते । सातु यथार्थवादिनी न किञ्चित्त्वदाभिमतं ब्रवीति । यत्तु - अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्य ज्ञानवृत्तीति -

---

वाक्यजन्येति ) (अथेति ) तत्त्वमस्यादिवाक्यजन्यतदर्थमात्रविषयज्ञानवृत्तीत्यर्थः । सिद्धान्तेतत्त्वमसिवाक्यजन्यशाब्दानुभवसंस्कार सहकृत मनोजन्येसोहमितिप्रत्यक्षेसत्वेन सिद्धसाधनवारणार्थं, पूर्ववदुद्देश्यसिद्ध्यर्थंच, तत्वमसिवाक्यजन्येति विशेषणं । (तथापीति ) ब्रह्मेतरविषयत्वे साध्याभावस्य निश्चितत्वा द्धेतोस्संदिग्धत्वात् सन्दिग्धानैकान्त्यमित्यर्थः । नच-अनुपदोक्तेमानसे सोहमस्मीति प्रत्यक्षे व्यतिरेकनिश्चयात्नसन्दिग्धानैकान्त्यमितिवाच्यम् । परमतेमनसोप्रमाणत्वात् तन्मतेनैवास्योक्तत्वात् । यद्वा तत्त्वमस्यादिवाक्यजन्यज्ञानान्यज्ञानत्वं वा विवक्षितं । (तत्त्वमस्यादिवाक्येति ) वाक्यातिरिक्तजन्यस्यापि ब्रह्मसाक्षात्कारस्य सत्वात् , ब्रह्मेतरविषयत्वस्यच तत्राभावाद्धेत्वभावादेव न व्यभिचार इत्यर्थः । (अद्यापीति) श्रुतेरान्यपर्यस्योक्तत्वेर्त्यर्थः ।

प्रतिबन्ध्यनुमाने विपक्षे बाधकाभावाद्वैपम्यमुक्तं, तदत्रापि समानमेव ! अर्थापत्तेः कल्पकासिद्ध्यादिनिरस्तत्वात् । परोक्षादपि ज्ञानात् प्रत्यक्षोपमर्दादेः प्रागेव समर्थितत्वात् । प्रत्यक्षापेक्षायामपि तत्त्वमस्यादिवाक्यव्यतिरिक्तजन्येनापि प्रत्यक्षेण बाधोपपत्ता वन्यथासिद्धेः । अस्तिच योगिप्रत्यक्ष मदृष्टविशेषसहकृतान्तःकरणजन्यं आगमसमधिगम्यमास्तिकानां ॥ श्रूयतेहि रामायणे ॥ " रहस्यंच प्रकाशंच यद्वृत्तं तस्य धीमतः । तत्सर्वं धर्म वीर्येण यथावत्संप्रपश्यती " ति ॥ यत्तु भाष्ये दर्शनसमानाकारत्वमुच्यते । तन्मोक्षसाधनभूताया ध्रुवानुस्मृतेरेव । नपुन धर्मवीर्यफलभूत योगिप्रत्यक्षं निषिध्यते तस्यापि श्रुतत्वात् । त्वदभिमतस्यतु श्रुतत्वं प्रतिक्षिप्तमिति तस्यैवासंभवः । यद्यपि - योगिप्रत्यक्षं फलमात्रमित्यस्मन्मतं, तथापि तदधीनायाः परिशेषासिद्धेरन्यथासिद्धेश्चोपन्यासो नानुपपन्नः । " क्लृप्तकल्प्य

---

( श्रूयतेहीति ) " दर्शयतिभगवान् सनत्कुमारः " इत्यत्र वाक्यरूपकारणस्य विवक्षितत्वात् , चाक्षुषज्ञानमुख्यस्य दृशेस्तत्रामुख्यत्वात् , क्लृप्तशब्दप्रमाणशक्त्यनुरोधेन परोक्षज्ञानएव दर्शनवदनेक विशेषविशिष्टावगाहनरूपगुणयोगाद्वृत्तिः । इहतुकरणान्तरासम्भवात् धर्मवीर्यस्य च पृथक्करणत्वेगौरवा न्मनस्सहकारित्वेनोपपत्ते स्संस्काराजन्यत्वेन स्मृतित्वाभावात् पश्यतेश्च दर्शनवाचिनस्साद्दश्यातिशयेन प्रत्यक्षत्वस्खेन लक्षणौचित्याच्च संप्रपश्यतीत्यनेन प्रत्यक्षत्वसिद्धिरित्यर्थः । (मोक्षसाधनेति) 'स्मृतिलम्भेसर्वग्रन्थीनाम् विप्रमोक्ष' इति श्रुत्यनुसारात्तथोक्तमितिभावः । ' तस्मिन्दृष्टेपरावर' इत्यपि श्रूयत इतिचेन्न - प्रत्यक्षपरत्वेऽपि लक्षणायावाच्यत्वेन ' स्मृतिलंभ' इत्यव्यवहित साधनत्ववाक्यस्यानुरोधेन दृशेर्दर्शनसमानाकारपरत्वौचित्यात् । ननु त्वन्मते योगिप्रत्यक्षस्य बन्धनिवर्तकत्वाभावात् कथं तेनान्यथासिद्धिरित्यत्राह (यद्यपीति) तन्मतेमिथ्याभूतबन्धस्यापरोक्षज्ञाननिवर्त्यत्वात् , योगिप्रत्यक्षमादायान्यथा सिद्धिस्स्यादेवेत्यर्थः

विरोधेतु युक्तः क्लृप्तपरिग्रह " इति न्यायात् । यदिच - यत्किंचि द्विपक्षे बाधकमित्यभिमानमात्रेण परिगृह्यानुमिनोषि । तदा - ज्यो तिष्टोमादिवाक्येपि भवादृशः कोपि तथा तदभिमत्या अनु मिनुयादेव । एवं सिद्धसाधनत्वा नैकान्तिकत्वा तिप्रसंजकत्वा भास सामानयोगक्षेमत्वान्यथासिद्धत्वादि दोषदूषितत्वा दनुमानविशेषो त्प्रेक्षणमेव निपुणधियां सिसाधयिषितस्य प्रामाणिकत्वा नुमिति मन्तर्गतां सूचयति । अतएवास्मिन्नर्थे महाविद्यादिप्रयोगा न्तरमनोरथोपि भग्नः । यत्तु - शब्दस्य प्रत्यक्षांतर्भावप्रसंगे- स्वतो परोक्षब्रह्मात्मविषयशब्दान्यत्वेसति अपरोक्षप्रमिति कारणत्वं- प्रत्यक्षान्तर्भावप्रयोजकमित्युक्तं , तत् तत्त्वमस्यादेरपरोक्षधीजनकत्वे वक्तव्यम् तत्तु नाद्यापि सिध्यतीति तत्प्रसंगो दुर्वारः । तदे वं वाक्यजन्यसाक्षात्कारासिद्धेः परिशेषा त्तज्जन्यपरोक्षज्ञानेनैवाप्र- तिबद्धसामग्रीसमुद्भवेन बाधइति स्थितौ श्रवणादिविधिनैरर्थक्यं प्रागुक्तं सुस्थितमेव । ततश्च श्रुतवेदान्तानां संसारानुवृत्तिदर्शनविरोधो दुर्वारः । बाधितानुवृत्तिस्तु बाधिता जीवन्मुक्तिंच विस्तरेण दूषयिष्यामः ।

---

**ननु अलौकिकप्रत्यक्षस्य प्रत्यक्षभ्रमानिवर्तकत्वा त्र योगिप्रत्यक्षे-णान्यथा सिद्धिरितिचेत्, तर्हि - लौकिकसन्निकर्षजन्यप्रत्यक्षस्यैव भ्रमनि-वर्तकतया शाब्दप्रत्यक्षकल्पनानुपपत्तेः, अलौकिकसन्निकर्षाजन्य प्रत्यक्ष-स्य भ्रमनिवर्तकत्वे गौरवात् (तात्त्विति)अन्यत्रप्रत्यक्षान्तर्भाव प्रयोजकत्वेन-क्लृप्तस्य प्रत्यक्षकरणत्वस्य शब्देपि सत्वात् प्रत्यक्षान्तर्भावस्स्यात् , नच - अन्यत्रब्रह्मात्मविषयशब्दान्यत्वं तत्प्रयोजकत्वेन क्लृप्तं, तत्त्वमस्या-दिवाक्यस्यापरोक्षधीजनकत्वस्याद्याप्यसिद्धेरित्यर्थः ।**

**यदाह नवीनः-आत्मातावत् स्वतोपरोक्षः "यत्साक्षादपरोक्षा" दिति श्रुतेः, तत्रसाक्षादितिज्ञान क्रियाव्यवधानस्य निषिद्धत्वात् । घटादिकंचा-परोक्षात्मन्यध्यस्तमिति सएव तदपरोक्षता, तदपरोक्षानुभवस्य तत्सत्ता-नुभावस्येव तदधिष्ठानात्मगोचरत्वात् । तर्हि सत्वमिवघटादेरपरोक्षत्वमपि**

सर्वदास्यादिति चेत् , न, प्रमातृचैतन्यतादात्म्यस्य सर्वदा असत्वात् । अत-एव देवदत्तस्यापरोक्षतादशायां सर्वस्यापि घटादिरपरोक्षस्स्यादिति निर-स्तम् । तदवच्छिन्नचैतन्यस्य अन्यं प्रतिभिन्नत्वात् । अतएव घटापरोक्षत्व दशायां रसगुरुत्वादिक मप्यपरोक्षं स्यादिति निरस्तं । चक्षुर्जन्यवृत्तेरसाद्यवच्छिन्नचैतन्यानभिव्यञ्जकत्वात् । तज्जन्याया-एव वृत्ते स्तदपरोक्षता व्यंजकत्वात् । सुखाद्यवच्छिन्नचैतन्यं च-वृत्तिंविनैवाभिव्यक्तं, तस्यानावृतसाक्ष्यध्यासात् । तर्हि - धर्माधिकम प्यपरोक्षं स्यादितिचेत् , न, तस्यानुद्भूततया ऽप्रत्यक्षत्वात् स्वरूपवि-शषस्य परमतइव तत्राप्यपेक्षितत्वात् । यथा संयुक्तसमवाये सत्यपि-धर्मादेरपरोक्षज्ञानजनकत्वं, एव मस्मन्मते तस्यापरोक्षता ऽनभिव्यं जकत्वात् । तस्माज्जडमुद्भूतं यदायदभिन्नचैतन्याभिन्नं तत्तदा-तस्या परोक्ष तादात्म्यात् भवत्यपरोक्षं । ज्ञानापरोक्षत्वन्तु चैतन्यस्य स्व रूपेणैव, वृत्ते स्त्वपरोक्षार्थ विषयत्वं । नच - अपरोक्षार्थ विषयत्वमेव ज्ञानस्यापरोक्षत्वं चैतन्य वृत्ति साधारणमिति वाच्यम् , चैतन्यस्य-सुखसाक्षात्कारत्वाभाव पसंगात् । अतएवा नुमित्यादिर्नापरोक्षः लिं गादिजन्य वृत्त्यभिव्यक्त चैतन्यस्यार्थभिन्नत्वात् । नच - योगिप्रत्यक्ष स्याप्रत्यक्षत्वप्रसंगः । तस्याप्युद्भूतविद्यमानार्थे व्यवहितेपि चक्षुरा-दिसंप्रयोग संभवेन विषय चैतन्याभिव्यक्तेस्सत्वात् । अविद्यमानेऽ नु द्भूते नतज्ज्ञानं प्रत्यक्षं । किन्तु - योगाराधितपरमेश्वरोपदेशजन्यं परोक्षम् । अतएव योगिनां व्यवहितार्थज्ञाने ध्यानादिक मर्थवद्भ-वति ।धर्मविशेषजन्य ज्ञानाभासोवा । नन्वेवं – अपरोक्षार्थविषयानुमिते-रप्यपरोक्षत्वं स्यादितिचेत् , सत्यं, ज्ञानवत्तस्याअप्य परोक्षविषयिण्या-अपरोक्षत्वात । अतएव पर्वतांशेऽनुमितिस्साक्षात्करोमीत्यनुभूयते -नन्वेवं– अहंकाराद्यतिरिक्तात्मानुमिति रप्यपरोक्षास्यादिति चेत्, यद्य प्यपरोक्षार्थविषयत्वमापाद्यते , तस्यार्थः आनुमिति विषयस्य सा क्षात्करोमी त्यनुभवविषयत्वं, तदस्त्येव, चैतन्यं साक्षात्करोमीत्यनुभवा त् । नचैवं – अनुमितेरपि साक्षात्कारतया ऽनुभवप्रसंगः । अपरोक्षार्थ विषयकज्ञानत्वस्या प्यनुभूयमानत्वात् घटादिविषयेन्द्रियजन्यज्ञानेपी-तोतिरिक्तसाक्षात्कारताननुभवात् । नचैवमनुमित्याप्यविद्या निवृत्तिप्र

संगः । देहातिरिक्तात्मानुमिति गोचरसाक्षिविषयाज्ञानाभावात् पूर्णब्र-ह्मविषयाज्ञानस्य भिन्नविषयानुमित्या निवृत्त्यसम्भवात । शुद्धे सत्य ज्ञानानन्दात्मके ब्रह्मणि नियमेन पक्षसाध्यादि वैशिष्ट्य विषयानुमिति र्नसंभवत्येव । तत्त्वमस्यादिवाक्य सन्निधावेव " तस्य तावदेव चिरं यावन्नावि मोक्ष्य " इति श्रवणेन" वेदान्तविज्ञान सुनिश्चितार्था " इति-वचनेनच श्रुतिजन्यज्ञानस्यैव मुक्तिसाधनत्वावगमात् । नचैवं - आत्मानुमितेरपि प्रत्यक्षप्रमात्वेन व्यवहारप्रसङ्गः प्रत्यक्षव्यवहारस्येन्द्रि-यजन्यमात्रगोचरत्वात् । नच-चक्षुरादाविवापरोक्षप्रमाणव्यवहारापत्तिः । अत्मानुमानं ह्यन्यत स्सिद्धापरोक्षताविशिष्टार्थविषयतया दैवाद्परोक्षं नत्व र्थस्यापरोक्षताया निमित्तं । चक्षुरादिकंत्वर्था परोक्षतायां प्रयोजकमित्यने नैव विशेषणतन्मात्रगोचरोपरोक्ष व्यवहारः । तस्मात् तत्त्वमस्यादि वाक्यजन्यज्ञानं न परोक्षं-अपरोक्षार्थविषयत्वात् चाक्षुषज्ञानवत । तत्त्वमसि वाक्यार्थ विषयज्ञानमपरोक्षं-अविद्यानिवर्त्तकत्वात् संप्रतिपन्नवत् । नचेंद्रियजन्यत्वमुपाधिः, त्वदभिमताजन्यप्रत्यक्षे सुखादि प्रत्यक्षे दशमस्त्वमसीति ज्ञानेच साध्याव्यपकत्वात् । नच जन्यज्ञानस्य परोक्षत्वाभावे इन्द्रियजन्यत्व मुपधिः, जन्यज्ञानापरोक्षत्वे लिंगजन्यत्ववत्तस्याप्यप्रयोजकत्वात्, अपरोक्षार्थविषयस्यैववृत्तावपरोक्षतारूपत्वेन तस्यापरोक्षत्वाभावव्याप्तेश्च । अत एवनशब्दाजन्यत्वमुपाधिः । अन्यथा तत्त्वमसिवाक्या दपरोक्षज्ञाना भावे अविद्यानिवृत्त्यभावादनिर्मोक्षप्रसंगाच्चेति ।

अत्रोच्यते - अस्तितावल्लोके ज्ञानार्थयो रपरोक्षत्व व्यवहारः, तत्रयद्यर्थगत मपरोक्षत्वं तद्विषयत्व निबन्धन एवज्ञानेतद्व्य-वहार इत्युच्यते, तदादेवदत्तेन साक्षात्क्रियमाण घटविषयकशाब्द ज्ञाने यज्ञदत्तस्य जाते तदुभयवेदिन श्शाब्दज्ञाने अपरोक्षव्यव हार प्रसंगः । स्वाश्रयं प्रत्यपरोक्षार्थ विषयत्व निबन्धनो ज्ञानेऽप्रत्य क्षत्वव्यवहार इतिचेत् , स्वाश्रयं प्रतीत्यत्र विवक्षितं स्वाश्रयप्रति संबन्धित्वं,किं स्वाश्रयाभिन्नत्वं,अन्यद्वा? नाद्यः, लौकिकानां प्रमात्रर्थयोर्भेद प्रतीतावपि, ज्ञाने अपरोक्षव्यवहारात् । नद्वितीयः, अनिर्वचनात् । स्वाश्रय संबन्ध्यपरोक्षभिन्नत्वंतदिति चेन्न , मदीयत्वेनभासमानस्य वृत्त्यवच्छिन्ना परोक्ष चैतन्यस्य त्रिधया भेदस्यैव प्रतीतेः । तस्मात् स्वाश्रयसंबन्ध्य

परोक्षप्रतीति विषयत्वमेव तदितिवाच्यम् । तथाच ज्ञानगतमापरोक्ष्यं अर्थेतुतन्निबन्धनं वाच्यं । किंच- ज्ञानापरोक्ष्य पक्षे तद्विषयत्वमात्र मेवार्थाप रोक्ष्यं । अर्थापरोक्ष्यपक्षे तु उक्तप्रकारेणार्था परोक्ष्यं निर्वाच्यमितिगौरवं ।

यदुक्तं-अपरोक्षत्वं ज्ञानगतं जात्यादिरूपं वक्तुमशक्यमित्यर्थ मुखमेव ज्ञानेतद्वाच्य मिति । तन्न- अर्थेपि निर्वक्तुमशक्यत्वात् । नहि ब्रह्मणि संवित्त्वातिरिक्तमपरोक्षत्वं किंचिद्वक्तुं शक्यं, यत्सत्वमिव तत्तादात्म्या दन्यत्रप्रतीयेत ! संवित्त्वंतु नापरोक्षत्वं, घटो नसंविदिति भेदप्रतीता वपि घटोपरोक्ष इति व्यवहारात् । यदिच- व्यवहारबलात विशिष्यानि रुक्तमपि किंचिदर्थेऽङ्गीक्रियते, तर्हि ज्ञानएव तदिष्यतां ॥

ननु-यदिप्रत्यक्षज्ञान विषयत्वाद्विषये प्रत्यक्षत्वव्यवहारः, तदासामान्य ज्ञान विषयत्वात् परमाणुरपरोक्षइति व्यवहारापत्तिः;शब्देन काशीस्थपदार्थं जानतःकाशीस्थपदार्थं जानामीत्यनुभवतः काशीस्थः पदार्थोऽपरोक्ष इत्यनु भवप्रसंगः;अन्धस्य शाब्दशौक्ल्यानुभवमनुभवतश्शौक्ल्य मपरोक्षमित्यनुभ वापातः;तथा-दण्डयमासीदित्यनुभवेदेवदत्तेदण्डो ममेदानी मपरोक्षइतिव्य वहारप्रसंगइति चेत,नतावत्परमाणा वापरोक्ष्यव्यवहारापत्तिः । लौकिकै स्तज्ज्ञानस्य सन्निहितव्यक्त्यतिरिक्तपरमाण्वादि विषयत्वापरिज्ञाना त्, तत्परिज्ञातॄणान्तु विदुषां भवत्येव व्यवहारः । नापि काशीस्थः पदार्थो ऽपरोक्षइतिवा, शौक्ल्यमपरोक्षमितिवानुभव प्रसंगः । ज्ञानस्य स्व यं प्रकाशतया तदनुव्यवसायाभावेन ज्ञानस्य तत्राप्रत्यासक्तित्वात् । प्रत्यासक्तिपक्षेऽपि तदंशे प्रत्यक्षत्वव्यंजकस्य तदंशे प्रत्यासत्तिजन्यत्व स्याज्ञानात । अतएव दण्डांशेपि न प्रत्यक्षत्वव्यवहारः । किंच - त त्रापि प्रत्यक्षज्ञानविषयत्वस्य सत्वाद्दण्डं चाक्षुषाजानामि प्रत्यक्षेण जानामीत्यनुभवस्स्यात् । यदिचेष्टापत्तिस्तदास्माकमपितुल्यं । देवदत्तः प्रत्यक्षः दण्डस्तु नेति व्यवहारोपि तदंशे प्रत्यासक्तिजन्यत्वस्य व्यंजकस्याज्ञानात् देवदत्तवत्स्वतन्त्रप्रत्यक्षाविषयत्वाभावाद्वा देवद त्तं विहाय दण्डस्याप्रत्यक्षत्वात् । किंच – चाक्षुषत्वं यदि – च क्षुर्जन्यज्ञानविषयत्वं स्यात , तदा दण्डेपि तत्सत्वाद्दण्डो ममे दा- नीं चाक्षुषइति व्यवहारापत्तेश्चाक्षुषत्व मप्यपरोक्षत्वत् ज्ञाननिबन्धनमेवा

र्थगतं स्वीकार्यं स्यात् । किंच – वह्निमनुमिनोमीतिवत् पर्वतमनु-
मिनोमी त्यव्यवहारात् अनुमेयत्वमप्यनुमिति विषयत्वा दन्यत्स्यात् ।
तस्मात् ज्ञानगतमेवाऽपरोक्ष्यं , "यत्साक्षादिति" श्रुतिस्तु स्वप्र-
काशतादिपरत्वेनाप्युपपन्ना, साक्षादिति - घटादाविव ज्ञानान्तराधीन
साक्षात्त्वस्य निषेधसंभवात् । किंच - यदि सत्तानुभवइव परोक्षत्वानु
भवेऽपि तदधिष्ठानात्मगोचरस्स्यात, तदा-सत्ववदपरोक्षत्वमपि निष्प्रतियो
गिकं स्यात् । अतः – किंचित् प्रति कदाचिदपरोक्षं किंचित् प्रति
कदाचिन्नेति न स्यात । यदप्युक्तं– अपरोक्षार्थ विषयत्वं वृत्ते रपरोक्ष
त्वमिति । तत्रापरोक्षत्वमित्यस्य - अपरोक्षव्यवहारनिमित्तमित्यर्थः । त
थाच – प्रत्यक्षव्यवहारस्य इन्द्रियजन्यमात्रगोचरतयेति स्ववचनवि-
रोधः । नच – नेदं लौकिकव्यवहारनिबन्धनं, किन्तु – परीक्षकव्य
वहारनिबन्धनमिति वाच्यम् । एतस्य नैय्यायिकाद्यपरोक्षव्यवहार-
निबन्धनत्वाभावात । नच – त्वत्समयपरीक्षकव्यवहारनिबन्धनं , त्व
दभिमतपारिभाषिकप्रत्यक्षत्वसाधनेपि उभयसंप्रतिपन्ना परोक्षनिष्ठ -
स्यास्मदभिमतस्य परोक्षव्यवहार निबन्धनस्य शाब्दज्ञाने असाधने
नार्थान्तरत्वात । नच – सर्वत्रापि इदमेव व्यवहारनिबन्धनं , नतु -
त्वदभिमतं, इदन्त्वशाब्दज्ञानेप्यस्तीति साध्यतइति वाच्यम् । स्वोक्ति
विरोधादे दर्शितत्वात् । किंच – किमत्रापरोक्षार्थविषयत्वंसाध्यते ,
उतापरोक्षआदात्म्ये नाध्यस्तार्थविषयत्वं ? । आद्येपि ब्रह्मणोपरोक्षत्वे
सिद्धे तद्विषयत्वं साध्यते, उतासिद्धे । नाद्यः,सिद्धसाधनात् । नहि
तत्त्वमस्यादिवाक्यस्य ब्रह्मविषयत्वे कश्चित विप्रतिपद्यते । नन्वस्तु
द्वितीयः पक्षः, तत्र ब्रह्मविषयत्वस्य सिद्धत्वा दपरोक्षत्वसाधने पर्य
वस्यतीति चेन्न । स्वप्रकाशवादिनां प्रतितस्यापि सिद्धत्वात् , अन्यं
प्रति साधनेपि सिद्धसाधनमेव नैय्यायिकादिभिरपीश्वरस्यापरोक्ष-
त्वांगीकारात् । ननु - तै स्स्वकीयापरोक्षज्ञानविषयत्वेना परोक्षत्वां
गीकारेपि स्वरूपत आपरोक्ष्यंनांगीकृतमितिचेत् , तर्हि घटादावाप
रोक्षं तादृशं तैरंगीकृतं 'अतस्साध्यविकलो दृष्टान्तः । घटाद्यधिष्ठान
चैतन्यांशमादाय साध्योपपादने चैतन्ये अपरोक्षत्वसिद्ध्यासिद्धिभ्यां

तदेवमनुमानागमार्थापत्तीनां प्रतिक्षेपात् प्रत्यक्षोपमानादेश्च तत्रासंभवात् त्वयाप्यनङ्गीकृतत्वाच्च निष्प्रमाणतया तत्त्वमस्यादेः साक्षात्कारजनकत्ववचनं प्राचामाचार्यवन्दकानां प्रलोभनमात्रमित्युपरम्यामइति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कट
नाथस्य वेदान्ताचार्यस्य कृतिषु
शतदूषण्यां शब्दजन्यप्रत्यक्षभङ्गवादः सप्तमः ॥

---

लिङ्गसाधनसाध्यवैकल्ये । न द्वितीयः, बाधात् । किञ्च - अनावृतसाक्षिचैतन्याभिन्नत्वं यद्यापरोक्ष्यं, तदा कश्चन्द्र इति प्रश्नस्थले चन्द्रस्वरूपस्य ज्ञातत्वेऽपि तदनवधारणात्मकमिति नाज्ञाननिवृत्तिरिति त्वयाभिधानात् । तत्र चन्द्रस्यानावृतसाक्ष्यभेदाभावेनापरोक्ष्याभावात् तद्विषयकज्ञानस्याप्यापरोक्ष्यमनुभूयमानं भज्येत । अनभ्यासदशायां जलज्ञानस्य उत्तरकाले संशयदर्शनेन त्वयानवधारणत्वाङ्गीकारात् । तस्मादावरणानिवृत्तेस्तस्यापरोक्षत्वं न स्यादिति ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत
परावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरण
परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन
रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
शब्दजन्यप्रत्यक्षभङ्गः सप्तमस्कन्धः

श्रीमतेरामानुजायनमः ।

श्रीमतेनिगमान्तमहादेशिकायनमः ।

॥ अथ अष्टमोवादः ॥



शास्त्रैक्येविषयाद्यभेदनियते संगत्यधीनक्रमे
कर्मालोच्य तदंगिकामथपरांविद्यामुपादित्सुभिः ।
यस्त द्वेद्यतया स्वयं फलतया प्यारोहतिज्ञेयतां
कुर्वीतैष विभु श्श्रिया सह मम स्वान्तं निजान्तःपुरम् ॥ * ॥

---

परिमितगुणान्नानादेवान् फलंफलसाधना
न्यधिगतशुचस्सर्वदुष्टं समीक्ष्यवृणीमहे ।
हरिमधिगत[तं]त्रय्यन्तार्थ्या[र्यं]हरेश्चरणौचतत् -
त्प्रसदनकरींविद्या श्श्रुत्यन्तगाश्चवृणीमहे ॥ * ॥

शङ्खायमाणकुहनाहत्कुतर्ककृत्त पूर्वापरांगघटना विकसन्मुदेव ।
मीमांसयाप्रकटितागमितार्थसार्थ नित्यं रमानिधिगुरुं शरणंप्रतीमः॥

( शास्त्रैक्यइति ) सर्वत्र प्रतिपाद्यैक्यादेवहि वाक्यैक्यं, अत इहापि वेदार्थस्यवा साराधनब्रह्मणोवा विषयत्वा देकग्रन्थता । आदिपदेन व्याख्येयग्रन्थैक्यं गृह्यते । तदैक्यंहि वामनजयादित्यवृत्त्योरिवैक्यहेतुः । अनेन वक्तृभेदात् भेदशङ्कानिरस्ता । ( संगत्यधीनइति ) त्रिवर्गप्रथमप्रावण्यादिना क्रमेच सिद्धेसतीत्यर्थः । ( परामिति ) सद्विद्यादिकां ब्रह्म विद्यामित्यर्थः । ( तदिति ) प्रावेद्याविषयतया फलतयाच विचार्यतामधिरोहतीत्यर्थः । ( कुर्वीतेति ) एवं मीमांसया प्राप्यत्वेन प्रापकत्वेनच निर्णीतव्योपि स्वकृपामेव न्यायस्थानेऽभिषिच्य स्वस्यैवप्रयोजनतया मम स्वान्ते नित्यं सन्निधत्तामित्यर्थः । न्यायतो निर्णये क्रियमाणे देवतान्तरादिविरुद्धार्थानां प्रसंगे तन्निषेधः कार्यः, कृपयैवतत्सन्नि-

इहतावदानन्तर्यार्थे प्रचुरप्रसिद्धिक मथशब्द मादौ प्रयुञ्जानस्य सूत्रकारस्य तत्संभवे तदर्थते वाभिमते स्यंगीकार्यम्। तत्संभवश्च यदि नियतपूर्ववृत्तमसाधारणं तथात्वज्ञापने सप्रयोजनंच किमपि स्यात्, तदास्यात्। अन्यथा नस्यात्। यथा - "अथ योगानुशासन" मित्यादौ। नहि यदृच्छागतं यत्किञ्चिन्निमेषोन्मेषादिकं मक्षिकासंचारादिकं वा पूर्ववृत्ततयात्र वक्तुं युज्यते, तस्य सर्वत्र संभवात्, अभिधानप्रयोजनविरहाच्च। अतएव सर्वपुरुषव्यापारसाधारणापेक्षित भोजनादिपूर्ववृत्तत्वोक्तिरपि निरस्ता, विशेषनियमाभावात्। अवधानात्ममनस्संयोगादिकमपि न विचारविशेषंप्रति विशेषहेतुः, सर्वशास्त्रसाधारण्यात्। सामग्रीतु तथास्यात्, तदुक्तिरपि यदि साम

---

धाने तेषां प्रसंगएव नास्ती त्यन्तःपुरशब्दंप्रयुञ्जानस्यभावः। नहिराज्ञा मन्तःपुरे पृथग्जनानां प्रसंगोस्ति, येन तन्निष्कालनाय यत्नः कर्तव्यः।

इहवादे साधनचतुष्टय पूर्ववृत्त स्याथशब्दविवक्षितत्वनिरासपुरस्सरं कर्मविचारपूर्ववृत्तत्वं व्यवस्थाप्यते। तत्रा थशब्दस्यानन्तर्यार्थत्वे निर्णीतेहि तच्चिन्तावकाशः, अत उपोद्घातेनाथशब्दस्याऽनन्तर्यार्थत्वं पूर्वपक्षिमुखेन व्यवस्थापयन् पूर्वपक्षमाह (इहतावदिति) नित्यानित्यविवेकस्यैव पूर्ववृत्तत्व मिति कुतो निर्धार्यते, अन्यस्यापि संभवादित्यत्राह (तत्संभवश्चेति) (अथ योगेति) तत्र हि सप्रयोजनाभिधानस्य नियतपूर्ववृत्तस्याभावा दथशब्दो धिकारार्थत्वेन व्याख्यातइत्यर्थः। एव मन्यथा न स्यादित्येतस्योदाहरणं दर्शितम्। एवमपि - कथमन्येषां निरासइत्याशंक्याह (नहीति) यदृच्छयेत्यनेन नियमाभाव स्सर्वत्रेत्यसाधारण्याभावश्च व्याप्यते। तथात्वज्ञापने सप्रयोजनं चेत्यनेना पीदं निरस्तमित्याह (अभिधानेति) अतएवे त्येत द्विवृणोति (विशेषेति) भोजनादे रपेक्षितत्वात् पृथङ्निरासः। (अवधानेति) इन्द्रियाणां विषयान्तरासंचारः - अवधानं, विचारज्ञाननिय-

अन्वेषेण, तदपि सर्वकार्यसाधारण्यात् तदभिधाननैरर्थक्याच्च निरस्तम् । तेन सामग्रीविशेषविशेषकं विशेषकारणमेव वाच्यम् । अत स्सप्रयोजनाभिधानासाधारण नियतपूर्ववृत्तवस्तुगवेषणे नित्यानित्य वस्तुविवेकादि साधनचतुष्टयं पूर्ववृत्तं, तस्यैव ब्रह्मजिज्ञासायां नियमेनापेक्षितत्वात्, तदुक्ते श्चाधिकारिविशेषप्रतिपादनार्थतया सप्रयोजनत्वाच्चेति यदुक्तं तत्परामृशामः ।

तत्र नित्यानित्यवस्तुविवेकस्तावत्कथंभूतइति । किं इदंवस्तुनित्यमिदं वस्त्वनित्यमित्येव मात्मा, उतनित्यानित्ययोर्वर्तति नित्यानित्यवस्तु-तच्च नित्यानित्ययो र्धर्मः - हेयत्वोपादेयत्वे इत्यर्थः इति वाचस्पतिकल्पित-प्रकारइति? । तत्र नप्रथमः । तस्य वेदान्तश्रवणात्पूर्वमसिद्धत्वात् । त-त्रैवह्यात्मादेर्नित्यत्वं वियदादेश्चानित्यत्वं विविच्यते । तथाचान्योन्याश्रयणम् ॥ * ॥ वेदान्तश्रवणेसिद्धे नित्यानित्यविवेकधीः । नित्यानित्यविवेकेन वेदान्तश्रवणन्त्विति ॥ * ॥ अथ—यदि शास्त्रान्तरात्तद्विवेकइति मन्यसे । तदा विपरीतविवेकापत्तिः । वियदादयोवैशेषिकादिभि र्नित्याएव परिगृह्यन्ते, आत्मादयश्च सौगतादिभिरनित्या असन्तोवा । अथा दूरविप्रकृष्टसांख्ययोगशीलनेन तद्विवेकइतिचिन्तयसि । तर्हि - तत्रैवा त्मानात्मविवेकासिद्धेः किं ब्रह्ममीमांसया । अनन्यलभ्यंहि शास्त्रफलम् । विशेषज्ञत्वर्थमिति चेन्न, निर्विशेषे त

---

**त पूर्ववृत्तत्वा दवधानात्ममनस्संयोगादेः पृथङ्निरासः । ( तत्रैवेति ) आदिशब्देन कालादिः स्वमतेन गृह्यते । ( विपरीतेति ) वेदान्ते यादृशो नित्यानित्यविवेकोऽभिमतः, तद्विरुद्धनिश्चयएव शास्त्रान्तरै र्भवतीति न तस्य तत्रोपयोगइति भावः । विरुद्धनिश्चय मेवोपपादयति ( वियदादयइत्यादिना ) ( तर्हीति ) आत्मानात्मविवेकार्थाहि ब्रह्ममीमांसा, तस्यच तत्रैव सिद्धे ब्रह्ममीमांसायां प्रवृत्ति र्नस्यादित्यर्थः । अन्यथापि तत्सिद्धे स्त्रापि प्रवृत्तिस्स्यादित्यत्राह ( अनन्यलभ्यमिति ) नियतापेक्षितेन शास्त्रान्तरेण विवेकासिद्धा वेतस्य निष्फलत्वमेव**

दयोगात् । आत्माद्वैतसिद्ध्यर्थमिति चेन्न, स्वात्मनो नित्यनिर्लेपत्वा दि व्यवसायमात्रेण समीहितसिद्धौ स्वव्यतिरिक्तात्मसदसद्भाव चिन्तनस्य ध्वांक्षदन्तपरीक्षायमाणत्वात् । आत्मव्यतिरिक्तमिथ्यात्वा यार्थमित्येतदपि ततएव दत्तोत्तरम् । तस्य सौगतसमयेपि सुलभ त्वाच्च । उक्तंहि—योगाचारेण "अविभागोऽपि बित्त्यात्मा विपर्या सितदर्शनैः । ग्राह्यग्राहकसंवित्ति भेदवानिव लक्ष्यते" इति । अथ -- वेदविरुद्धतन्त्रत्वा त्ततो न निश्चयइत्याशयः, तर्हि सूत्रकारै

---

**स्यादिति भावः । ( स्वात्मन इति ) मोक्षोपायाधिगमार्थंहि ब्रह्ममीमां सायां प्रवृत्तिः, सांख्यशास्त्र एवाऽत्मनो निर्लेपत्वादिव्यवसायस्य मोक्ष-साधनतया प्रतिपादनात् ब्रह्मण स्वव्यतिरेकानतिरेकचिन्तायाः व्य र्थत्वात् ब्रह्ममीमांसायां प्रवृत्ति र्नस्यादित्यर्थः । अस्तुवा - आत्मव्य-तिरिक्तमिथ्यात्वाध्यवसायस्यैव मोक्षोपायत्वबुद्धिः, तथापि सौग-तसमयेपि तत्सुलभमित्याह ( तस्येति ) ( तर्हीति ) सूत्रकारै निरा करिष्यमाणत्वात् सांख्यादिशास्त्रमपि वेदविरुद्धमेव, अतस्तेन नि त्यानित्यवस्तुनिर्धारणाश्वास स्तव न संभवतीत्यर्थः ।**

**ननु वेदान्तशास्त्रएव सांख्यशास्त्रप्रामाण्यस्य निराकरिष्यमा णत्वात तत्प्रवृत्तेःप्रा क्सांख्यशास्त्रप्रामाण्यव्यवसाय सम्भवात् त-तो नित्यानित्यवस्तुविवेक स्सम्भवत्येवेति चेत् , तर्हि, वेदान्ते सौगत-शास्त्रस्यापि निराकरिष्यमाणत्वात् तत्रापि वेदान्तप्रवृत्तेःप्रा क्प्रा-माण्यबुद्धिस्स्यादिति तेन मिथ्यात्वाध्यवसायो दुर्वारः । यदि कर्म मीमांसायामेव तन्निराकरणेन तत्परिचयात् तदधीनलोकप्रवादाद्वा-तदप्रामाण्यनिश्चयः, इह तन्निराकरणन्तु तद्द्रढिमार्थमेव । तर्हि – कर्म मीमांसायामेव विरोधाधिकरणेन सांख्यशास्त्रस्यापि निरासात् तत्प-रिचया त्तदधीनलोकप्रवादाद्वा तदप्रामाण्यनिश्चयः, इह तन्निराकर णन्तु तद्दाढ्यार्थमेवेति स्यात् । अत स्सौगततन्त्रसमानयोगक्षेमत्वमेवेति भावः । सूत्रकारैर्निराकरिष्यमाणत्वोक्तिश्च नाधिकारिणो प्रामाण्य-ज्ञानार्थं, किन्तु - वास्तवाप्रामाण्यप्रदर्शनार्थमिति ज्ञेयम् । किञ्च -**

रेव तद्व न्निराकरिष्यमाण सांख्यादितन्त्रैरपि नाश्वसिहि । नहि त-द्वा तादृग्वेति कश्चिद्विशेषइति न्यायात् ; अविरुद्धांशं स्वीकुर्मइति चेत् ; क स्तर्हि सौगतेषु ते प्रद्वेषः । तेष्वपि भवदुपजीव्याबहवोर्थरा शयस्सन्ति । कथंचायमर्थो न विरुद्धः अयन्तु विरुद्धइति वेदान्तश्रव णात् पूर्वमवगच्छसि? । तथाच तत्राप्यन्योन्याश्रयणम् । हितोपदे-

---

ब्रह्मविचाराधिकारिण स्सांख्यशास्त्राप्रामाण्यज्ञान मावश्यकमेव, अन्य था तत्राप्रामाण्यज्ञानाभावेन तत्प्रतिपाद्यसत्यत्वविरोधि प्रपञ्चमिथ्या त्वप्रतिपत्तये तत्प्रतिपादकब्रह्ममीमांसायां प्रवृत्त्यसम्भवात् । तत्रच - यदि सांख्यशास्त्रान्नित्यानित्यविवेकात्प्रागेव वेदविरोधज्ञानं स्यात् , त दा तत्राप्रवृत्तेः नित्यानित्यविवेकएव न स्यात् । अथतु प्रवृत्तस्य - नित्यानित्यविवेकानन्तरं तत्र वेदविरोधज्ञानं, तदा जातोपि नित्या-नित्यविवेको न मुमुक्षाद्वारा ब्रह्मविचारोपयोगीस्यात् , अनाश्वासग्र स्तत्वात् ।

ननु महर्षिप्रणीतस्य सांख्यतन्त्रस्य कथं निरासइत्यत्राह ( न-हीति ) वेदविरुद्धत्वाविशेषात् सौगततन्त्रवदेव तन्निराकरणमिति-भावः । यद्वा - सौगततन्त्रे प्रवृत्त्यभावउक्ते महर्षिप्रणीते सांख्यतंत्रे कथं प्रवृत्त्यभाव इत्यत्राह ( नहीति ) नहिसौगतसमयत्वादप्रवृत्ति-रुक्ता, किन्तु – वेदविरोधित्वेना प्रामाण्यादेव, अतः प्रयोजकत्वावि शेषात् तस्मिन्निव तादृशेपि प्रवृत्ति र्नैस्यादेवेति भावः । ( तेष्वपी-ति ) ततश्च मिथ्यात्वाध्यवसायार्थं सौगतमतेपि प्रवृत्तिस्स्यादिति भा वः । ( कथंचायमर्थइति ) आत्मनित्यत्व मविरुद्धं, अन्यत्तुविरुद्ध मिति वेदान्तै रात्मनित्यत्वादिनिर्णयात्प्रा क्कथं निश्चियित इत्यर्थः । त-थाचा विरुद्धांशं स्वीकुर्मइति न युक्तमिति भावः ( तथाचेति ) वेदा न्तश्रवणानन्तरं अविरोधज्ञाना दविरुद्धसांख्यांशश्रवणं, तच्छ्रवणे अ-धिकारासिद्ध्या वेदान्तश्रवण मित्यन्योन्याश्रय इत्यर्थः । ( हितेति ) अयमर्थोऽविरुद्धइत्यधिगच्छामीति शेषः ।

शि पित्रादिवचनविस्रम्भादिति चेत् , तर्हि - ततएव नित्यानित्यवस्तुविवेकोपि सिध्यति, किं सांख्यादिकपोलजल्कणिकास्वादेन । अस्त्वेवमपि का नोहानिरितिचेत् . वेदान्तश्रवणहानिः । तदुपदेशमात्रेणास्त्वास्तिकवत् समस्तार्थविस्रम्भोपपत्तेः । सर्वस्यापि विवेकस्य आत्मानात्मविवेकार्थतया तन्सिद्धौ ज्ञातव्यान्तरपरिशेषाभावात् ।

---

ननु यस्य पुरुषस्य हितैषिवचनात् नित्यत्वादावेव विस्रम्भो जातः, अर्थान्तराणां हितैषिणानुपदेशा द्विस्रम्भः, तस्य शास्त्रश्रवणं सेत्स्यति , नचैवंसति - आत्मनित्यत्वस्य पूर्वमेव ज्ञाततया जिज्ञास्यत्वाभावेन , आरम्भसूत्रविषयत्वाभावात इह निरूपणं न स्यादितिवाच्यम् , प्रसंगादपि तदुपपत्तेरित्यत्राह ( सर्वस्यापीति ) विवेकस्य विवेकसाधनस्य ।

ननु - नित्यानित्यवस्तुविवेके जातेपि आत्मैकत्वं न ज्ञातम् , अतएवहि " आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त " इत्युक्तम् , तथाऽनन्दात्मकत्वं प्रपंचमिथ्यात्वंच नज्ञातमेवेति चेन्न । आत्मैकत्वादिज्ञानस्य सत्यमिथ्याविवेकस्यच श्रवणात् प्रागेव वाच्यत्वात् । तथाहि - आत्मनित्यत्वज्ञानंहि तस्यैवानन्दात्मकस्य प्राप्यताज्ञाना न्मुमुक्षाहेतुर्भवति , नान्यथा । नह्यतिशयित नित्य पुरुषार्थस्य - प्राप्यताज्ञानंविना क्षुद्रा दनित्याच्च पुरुषार्था न्निवृत्तिः । नापि नित्यस्यानन्दात्मकस्य स्वस्यैव प्राप्यताज्ञानं मुमुक्षाहेतुः; तस्यानादिसिद्धताज्ञानेन श्रवणादिप्रवृत्त्यनुपपत्तेः । अतो ब्रह्मस्वरूपस्या खण्डानन्दात्मकस्य प्राप्यताज्ञानादेवेतिवाच्यं । ततश्च भिन्नस्याभेदासंभवा दभेद एवपारमार्थिकः । किंचिज्ज्ञत्व सर्वज्ञत्वादिभेदो मिथ्यैव । अतो भेदभ्रम निरासेन ब्रह्मैव प्राप्यमिति बुद्ध्यैव मुमुक्षोत्पत्तिरिति किंनाम ज्ञातव्य मवशिष्यते । एवमात्मैकत्वादिकमपि ज्ञानव्यमेवे त्यभिप्रेत्यै व " आत्मानात्मविवेकार्थतये " त्यनुगृहीतं, ननु नित्यानित्य विवेकार्थतयेति , त्वदभिमत स्सर्वोपि विवेकस्सिद्ध एवेतिहि सामान्यनिर्देशस्य भावः ।

एतेन यदाहुर्नवीनाः - नतावन्नित्यानित्यविवेकासंभवः, आमनुष्या दाब्रह्मलोकं कर्मकार्यंच सर्व मनित्यं घटादिवत् " तद्यथेह कर्मचितोलोकः क्षीयत " इति श्रुतेश्चेति न्यायानुगृहीत स्पष्ट श्रुत्यैव विचारात्प्रागेव कर्मफलस्या नित्यत्वावधारणसंभवात्, आत्मा च नित्य इत्यवगम्यते । अन्यथा - कस्यापि मते मोक्षाय प्रवृत्त्यसंभवात् । तस्यानन्दरूपत्वमपि परमप्रेमास्पदत्वात् " आनन्दाद्ध्येवखल्वि" त्यादि वाक्याच्च निश्चीयते । नचैवं - विचारानारंभप्रसंगः, अन्यस्याप्येवं निश्चेतुं शक्यत्वादिति वाच्यम् । यत्रहि मानान्तरविरोधो वर्तते, तर्हि शब्दश्रवणमात्रान्न निश्चेतुं शक्यम् । अद्वैतसमन्वयश्च तत्तत्पूर्वपक्ष न्याय मानान्तरादिना प्रथमं विरुद्धतया प्रतीयत इति न वाक्यमात्रा न्निश्चेतुं शक्यते । ब्रह्मणो नित्यानन्दरूपत्वन्तु न मानान्तरेण विरुद्धतया प्रतिसन्धीयतइति तच्छब्दादेव निश्चेतुं शक्यते । नहि परमात्मनस्सुखाभेदे प्रत्यक्षविरोधोस्ति । नचानित्यसुखस्य नित्यात्माभेदविरोधः ; अनुकूलतर्काभावेन सुखमात्रे अनित्यत्वावधारणायोगात्, सौषुप्तिकसुखावमर्शदर्शनेन जीवसुखस्यापि नित्यतया तद्विनाशबुद्धे रन्यविषयत्वावधारण सम्भवात् । किञ्च - येन यदेकं न्यायेन निश्चितं, तेन इतरदपि न्यायेन निश्चेतव्यमिति न नियमः, पुरुषाणाञ्च विचित्रबुद्धितया न्यायानाञ्चालौकिकविषयतयापि सुलभतया नियमानुपपत्तेः । अन्यथा - धूमाग्न्योर्व्याप्ति स्तर्कैरेव गृहीतेति सर्वापि व्याप्तिरेवं ग्राह्येति वैशेषिकादिग्रन्थान्तरारम्भो व्यर्थएव स्यात्. एतादृशएव पुरुषोस्मिन् शास्त्रेधिकारी । तदुक्तम् " नात्यन्तमज्ञो नो तज्ज्ञस्सोस्मिन् शास्त्रेधिकारवा"निति । एवञ्च ब्रह्मसुखस्य जीवसुखस्यच नित्यत्वं तदितरभोगानाञ्चानित्यत्वं सुनिरूपणं, ततो वैराग्यं । नचैवं - रंहतिपादवैयर्थ्यं । नहि - तत्र नित्यानित्यनिरूपणमुखेन वैराग्यं । किन्तु - संसृतिप्रकारनिरूपणेन पूर्वोत्पन्नस्य दृढीकारः क्रियते : वैराग्योत्कर्षेन्द्रियोपरम दार्ढ्येन मुमुक्षाद्वारा श्रवणादिदार्ढ्यसंभवात् प्राग विरक्तस्य स्वकाम्यफलाविरोधि ब्रह्मज्ञानप्रवृत्त्यनुपपत्त्यैव-मेव वक्तव्यत्वात । एवं - वैराग्ये शरीरेन्द्रियचेष्टाया मनोवृत्तेश्च -

निमित्ताभावाच्चित्तेन्द्रिययो र्व्यापारोपरमरूपौ शमदमौभवतः, ताभ्यां
च तितिक्षादिः, ततश्चाविक्षिप्तचित्तो निरस्तानर्थव्रातानानतिशयानन्द
गळिताखिलभेद मात्मानं वेदान्तवाक्येभ्यो धिगम्य मुमुक्षुर्भवति, त
तो "ब्रह्मविदाप्नोति" "तरतिशोक" मित्यादिश्रुतितो ज्ञानस्य
मोक्षहेतुतां निश्चित्य जिज्ञासतइति । तदपि निरस्तं, ज्ञातव्यान्तरपरि
शेषाभावादेव । तथाहि - मुमुक्षासिद्ध्येहि नित्यानित्यविवेकादेः पूर्व-
वृत्तत्वमिष्यते, तत्र यद्यद्वैतनिश्चयाभावेपि मुमुक्षा जायेत, तर्ह्यान
न्दत्वनित्यत्वयो र्निधारणंवा किमर्थमपेक्ष्यते । नित्यपुरुषार्थनिर्धारणा-
भावे अनित्यसुखवैराग्याभावेन कथं मुमुक्षेति यदिपश्यसि, तदा
स्वप्राप्यत्व योग्यता ज्ञानाभावे कथं सा, कथंचाद्वैतज्ञानंविना अभेद
लक्षण प्राप्तियोग्यताज्ञानमित्यपि पश्य । किञ्च - ब्रह्मविचारारंभोहि सं
दिग्धार्थनिर्णयाय प्रतिज्ञायते, आनन्दत्वमपि जगत्कारणे सन्दिग्धमेव,
कारणत्वस्य प्रधानचेतनगतत्वसन्देहे नानन्दपदस्यापि मुख्यगौणार्थ
सन्देहात्, "आनन्दाद्ध्येवे" ति वाक्यार्थनिर्णयाभावात् । तथा नि-
त्यत्वमपि सन्दिग्धमेव, "नात्माश्रुते" रित्यादिना तस्यापि विचारा
त्; "विज्ञानघनएवैतेभ्योभूतेभ्य स्समुत्थायतान्येवानुविनश्यती" त्या-
दिना विनाशप्रतीते स्तस्य विचार्यत्वाच्च । "अदुःखमसुखंसम" मि
त्यादिनाऽनानन्दत्वप्रतीते रानन्दत्वमपि विचार्यम् । किञ्च - श्रवण
स्य मुमुक्षाधिकारकत्वे सिद्धेहि मुमुक्षार्थं नित्यानित्यविवेकादेः पूर्व
वृत्तता, तदेवतुकुतः, मुमुक्षाहि - मोक्षसाधनेधिकारः । नच - श्रवणं
मोक्षसाधनमिति तवाभिमतं, किंतु मोक्षसाधनापरोक्षसाधनमिति,
ततश्चापरोक्षकामस्यैव श्रवणाधिकारस्स्यात्, नमुमुक्षा । ननु - मुमुक्षा-
विरहेतत्साधनेकामनानस्यात्, अतो मुमुक्षा परम्परया श्रवणाधिकार
इतिचेत्; स्यादेवं, यद्यपरोक्षज्ञानस्य मोक्षसाधनत्वं निर्णीतंस्यात्,
तच्चसन्दिग्धमेव ।

ननु - स्वपदार्थश्रुत्या न्यायनिरपेक्षमेव दर्शनस्यमोक्षसाधन-
त्वमवगम्यतइतिचेन्न । दर्शनस्य मोक्षसाधनत्वे विप्रतिपत्तेस्तन्नि-
र्णयस्य अद्वैतस्यैव पूर्वपक्षयुक्तिनिराकरणसापेक्षत्वात् ।

ननु - नैतद्विचारःप्रतिज्ञाविषयः किंत्वद्वैतविचारएव, अतोबहिरेव

तद्विचार्यशास्त्रमधिकरोतीतिचेत् , तर्हि - तस्यैकाधिकरणसाध्यत्वा दितरवैयर्थ्यं । अद्वैतोपयोगितया कारणत्वादिकमपिचिंतनीयमितिचेत् , तर्हि तदर्थमेव बन्धस्य ज्ञाननिवर्त्यत्वमपि चिन्तनीयम् ।

ननु - नब्रह्मविचारमात्रस्यकर्तव्यत्व मिह प्रतिज्ञायते, किंतु " श्रोतव्य " इति विध्युपयोगिन्यायप्रतिपादकत्वा द्विहितविचारस्य कर्तव्य त्वं प्रतिज्ञायते, " श्रोतव्य " इत्यस्यचब्रह्मदर्शनाय विचारः कार्यइति ह्यर्थः, ब्रह्मदर्शनोद्देशेनविचारविधानंच ब्रह्मदर्शनस्य " निचाय्य तमृत्युमुखात्प्रमुच्यत " इत्यादिभि र्वेदान्तवाक्यै र्मीमांसितै र्मोक्षसाधनत्वे सिद्धएव , तस्मा ज्ज्ञानस्य मोक्षसाधनत्वोपयोगिन्यायोपजीव नेनैव श्रोतव्यइति वाक्यप्रवृत्ते स्तदर्थविचारात्मक मिदमपि सूत्रं तदुपजीवनेनैव प्रवृत्तमिति नतन्न्यायकर्तव्यतैतत्सूत्रस्य विषयइति- चेत् ; स्यादेवं , यदि श्रोतव्यइतिविधिस्स्यात , नतावदयमपूर्वविधिः ; शक्तितात्पर्यावधारणरूपस्य तदनुकूलव्यापाररूपस्यच श्रवणस्य " द्रष्टव्य"इति विवक्षितवाक्यार्थज्ञानकारणताया लोकसिद्धत्वात् - असंभावनाविपरीतभावनाविरहे गृहीतशक्तितात्पर्यस्यवाक्यस्या वधारणजनकत्वमपि लोकसिद्धमेव , तथा सन्निकृष्टविषये दशमस्त्वमसी त्यादौ वाक्यस्यापरोक्षज्ञानजनकत्वमपि लोकसिद्धमेव, तव्यप्रत्ययेच परिपन्थिनि जाग्रति कामिपदाभावेच कथं दर्शनफलोद्देशेन विधिः, दर्शनस्य विधानासंभवादिति चेन्न । तत्सम्भवस्य स्थापनात् ।

यत्तु कैश्चिदुक्तं - आपातदर्शनभिन्नं कृतिसाध्यत्वेनविधानार्हं प्रति वाक्य मय मस्यवाक्यस्यार्थ इति सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणमात्रं श्रवणम् । तच्चाज्ञानमात्रविरोधि , न तु मननमिव संशयादिविरोधि, मननरूप न्यायावतारांग संशयधर्मिज्ञानरूपत्वात । मननन्तु अयमेव वाक्यार्थो युक्तो नान्य इति निर्णयहेतु युक्त्यनुसन्धानम् । निरन्तरं निध्यानं - निदिध्यासनं । इत्थमेव श्रवणादीनां भेदः । विचारादिविधिस्तव पूर्वविधिः, ब्रह्मज्ञाने वेदविचारहेतुताया अत्यन्ताप्राप्तत्वात् । नहि वेदार्थज्ञानाय वेदविचारः क

र्तव्यइति वचनव्यक्तिः : ब्रह्मज्ञानस्योद्देश्यत्वात् । नापि - ब्रह्मज्ञानाय ब्र ह्मविचारः कर्तव्यइतिः तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वा-पातात् । किन्तु - ब्रह्मज्ञानाय वेदविचारः कर्तव्यइत्येव वचनव्य क्तिः । यद्यपि - ब्रह्मपरवेदविचारएव ब्रह्मविचारः, तथापि न ब्रह्मवि चाररूपेण विधानं, किन्तु वेदविचाररूपेण । तथाच श्रुतिः; " तस्मा देनं सर्ववेदानधीत्य विचार्यञ्च ज्ञातुमिच्छे " दिति । एवंच यथा घ-टादेः वितरभेदे सिद्धेपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरे-भ्यो भिद्यत इत्यत्र न सिद्धसाधनता । यथावा स्थानप्रकरणाधिकर णोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्राप्तिस्विकरूपचोदकत इति कर्तव्यताप्राप्तावपि राजसूये तदप्राप्तिः । तथा वेदविचारत्वोपहिते ब्र ह्मज्ञानहेतुतायाः अप्राप्ते रपूर्वविधिता । नहि कर्मकाण्डेन ब्रह्मकाण्डे ष्ववान्तरकारणादिवाक्येन पदवर्णस्वरादिना आपाततोपि ब्रह्मधीर स्ति । यद्वा - निदिध्यासनस्या व्यक्तस्वभावब्रह्मसाक्षात्कारहेतुता ना न्यतः प्राप्तेति सतावदपूर्वविधिः । तथा - अज्ञातादौ निदिध्यासना-सम्भवेन श्रवणमननयो र्लिंगादेव प्राप्तावपि नियतविषयक निदिध्या सनविषय गुणान्यगुणेषु लिंगेन तयोरप्राप्ते स्तद्विधिरप्यपूर्वविधिरेव । एवंच श्रवणमननयो र्निदिध्यासितव्य गुणांशे दृष्टद्वारेण अन्यत्र त्व दृष्टद्वारेण निदिध्यासनांगत्वेति ध्येयमिति ।

अत्रोच्यते - श्रवणेताव दुरुशाखयो र्नान्तर्भावः, " श्रोतव्य " इत्यत्र तद्वाचक पदाभावात्, शाब्देर्थे अयमर्थश्श्रुत इत्यादि बहुळप्र-योगात् " श्रोतव्य " इति शाब्दज्ञानमेव स्वरसतः प्रतीयते। " आत्माश्रोतव्य " इत्यभिधानात्, आत्मनिच वेदान्तानामेव प्रमा णत्वात् तस्य शाब्दज्ञानस्य वेदान्तजन्यत्व मवगम्यते । तत्र तर्क-स्यापि सहकारित्वात् मीमांसितवेदान्तजन्यत्व मवगम्यते । तस्य गुर्वधीनत्वं वाक्यान्तरार्थमेव । एवंचसति " श्रोतव्य " इति शा ब्दज्ञानमात्र मात्मसमभिव्याहारलब्ध वेदान्तजन्यं ज्ञानंवा, नाविधेयं, तस्याध्ययनकालएवसिद्धेः । नापि न्यायोपबृंहितवेदान्तजन्यं ज्ञानं । साङ्गाध्ययनेना पातप्रतीतोभयभाग पुरुषार्थ नत्साधनस्य जिज्ञासोः

पाठक्रमात त्रिवर्गे प्रथमप्रावण्याच्च कर्मविचारे प्रवृत्तस्य निर्णयेन प्रतिबन्धकजिज्ञासापगमे रागादेव वेदान्तविचारे प्रवृत्तेः । किञ्च-ध्यानस्य मोक्षसाधनत्वविधाने ध्येयावधारणस्य ध्यानसाधनत्वस्य लोकसिद्धत्वा द्ध्यानार्थिन स्स्वतएव विचारे प्रवृत्तेः नविचारस्यविधेयता । अतएव श्रवणदशावगत न्यायातिरिक्त साधक बाधक परिहारतद्विरुद्धार्थनिरासात्मक मननस्यापि श्रुतार्थ प्रतिष्ठात्मकत्वात् स्वत एव प्रवृत्ते र्नविधेयं । एतेन – पराभिमत न्यायमात्रानुसन्धानात्मकमपि दत्तोत्तरं । ध्यानार्थिनो ध्येयावधारणे लोकतएवप्रवृत्तेः ।

यच्च - विचारविध्यात्मकस्वाभिमतमननविधिसमर्थनं , तत्र वेदार्थज्ञानार्थवेदविचारः कर्तव्यइति वचनव्यक्तौ नकश्चिद्दोषः । वेदपदेनवेदान्तविवक्षायां ब्रह्मणएव वेदार्थतया उद्देश्यत्वाविरोधात्, वेदमात्रविवक्षायामपि नैवं वचनव्यक्तौ दोषः, विधित्वेसिद्धेहि सदोषः, सदेवचेदानीं विप्रतिपन्नं । अनुवादे त्वेवं वचनव्यक्तावपि नदोषः ।

यश्च - ब्रह्मज्ञानायब्रह्मविचारःकर्तव्यइतिवचनव्यक्तौदोषउक्त सच तदीयैरेवदूषितः । भगवतःप्राधान्यंनाम तद्दर्शनादि फलभूत प्रात्यवच्छेदकत्वमेव, नान्यत् , अनिर्वचनात्, तच्च साधनभूतदर्शनाद्यवच्छेदकत्वेप्यविरुद्धं, एकस्यैव राज्ञः फलीभूतप्रीत्यवच्छेदकस्यापि तत्साधनसेवावच्छेदकत्व दर्शनात् । नहि राजसेवा राज्ञानवच्छिन्नप्रीतिहेतुः नचा स्वयं तदनवच्छिन्ना प्रीतिहेतुरिति । किञ्च – वेदस्या निदिध्यासितव्यत्वात् वेदार्थमात्रस्यच निदिध्यासनाङ्गीकारात् ब्रह्मनिदिध्यासनमेवविधेयं, तदपिनस्यात ब्रह्मणोगुणत्वप्रसंगात् ।

यच्च-ब्रह्मज्ञानार्थवेदविचारइति वचनव्यक्तिरिति । तन्न । तत्र वेदपदे नवेदांतविवक्षायां नविधिसंभवः ब्रह्मजिज्ञासो स्तत्प्रतिपादकवेदान्तविचारे स्वतएव प्रवृत्तेः, नचायमधिकारी ब्रह्मणेवेदान्तवेद्यत्वं नजानातीति वाच्यम् । प्रधानादिव्यावृत्तिसन्देहेपि अध्ययनकालएव वेदांतानांब्रह्मपरत्वावगमात् । अन्यथा “ आत्माश्रोतव्योमन्तव्य” इत्युक्ते कुतस्स मागताविचारस्य वेदान्तविषयता, आत्मनोविचार्यत्वप्रतिपादनात्, तत्र च वेदान्तानामेव प्रामाण्यावधारणाद्धि विचारस्य त द्विषयताप्रतीतिः

ननु- वेदपदेन वेदमात्रं विवक्ष्यते: अत्र वेदान्तविचारस्य ब्रह्मज्ञानहेतुतायाः प्राप्तत्वेपि नवेदविचारस्य प्राप्ततेति चेत्, तत्र यदि कर्मविचारस्य ब्रह्मविचारहेतुताया अप्राप्ति म्मन्यसे, तर्हि नब्रह्मविचारे विधिः । सत्यं; " श्रोतव्य " इति विधिसमर्थनमेव सिषाधयिषितं नतुब्रह्मविचारविधिसमर्थनमितिचेत्, किं कर्मविचारस्य तादर्थ्यं दृष्ट द्वारा उतादृष्टद्वारा? नाद्यः, असिद्धेः, विधिवैयर्थ्याच्च । नद्वितीयः । दृष्टद्वाराभ्युपगमेहि आत्मविचारस्य वेदविषयतास्यात् तद्विचारस्य तत्प्रमाणविषयत्वादिति, अदृष्टद्वारत्वाभ्युपगमे " आत्माश्रोतव्योमन्तव्य" इत्युक्ते कोहि वेदस्यप्रसंगः ।

ननु - वेदस्य आत्मप्रमाणत्वादेव वेदविचारो विधीयते, तत्रैकदेशद्वारा दृष्टार्थता, अंशान्तरे त्वदृष्टार्थतेतिचेत्; तथासति वाक्यस्या ऽप्रमाण्यात् वाक्यविचारत्वेन सर्ववाक्यविचार विधिः प्रसज्येत । अपिचैवमेकदेशेनुवादः एकदेशेविधिरितिस्यात्, पदार्थैकदेशेविध्यन्वयोनुपपन्नएव । यदिच ब्रह्मविचारस्यापि वेदविचारत्वेन वेषेण ब्रह्मविचारहेतुत्वेना प्राप्तिम्मन्यसे; तत्किं वेदान्तेवेदत्वं नावगतं? अवगतमेव तत्रवेदत्वं तद्विचारे वेदविचारत्वंच, किंतु वेदविचारत्वावच्छेदेन कारणत्वं नावगतमितिचेत; किं सर्वविचाराणां कारणत्वं नावगतमिति मन्यसे? तर्हि सर्वविचारकारणताबोध्या तत्रवेदान्तविचारे ऽनुवादो दुष्परिहरः ।

ननु - वेदविचारत्वस्य कारणतावच्छेदकत्व मनवगतमितिचेत्; तथासति वेदविचारत्वेन कारणत्वबोधनं स्यात् । नच श्रोतव्यवाक्यस्य तथाविधं सामर्थ्यं पश्यामः। नापि - " तस्मादेव " मिति वाक्येनतथाविधिः; " सर्ववेदान्विचार्य " त्युक्ते नहि सोर्थः प्रतीयते,किंतु सर्वेषां विचाराणां तत्तत्प्रातिस्विकरूपेण साधनत्वम् ।

ननु - सर्ववेदविचारत्वं कारणतावच्छेदकत्वेन बोध्यत इतिचेन्न । अतीतानागतव्याधिकरणविचाराणां कारणत्वासंभवेना योग्यत्वात् । सर्वत्वस्य वेदविशेषणत्वे सर्ववेदसंबन्धिन एकस्य विचारस्यालाभात् । सर्ववेदसंबन्धिनो ये विचारा इत्युक्तेतु प्रातिस्विकरूपेण तत्तद्वाक्यविचारकारणतापर्यवसानात् । तत्तद्वाक्यविचाराणां समुदायः

कारणं बोध्यतइति चेन्न। सर्वत्वस्य वेदविशेषणतया प्रतिवाक्यं वि चारऽभेपि विचारसमुदायबोधक पदाभावात् । दृष्टान्तश्च विषमः, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिपक्षे तादृशोद्देश्यप्रतीतिजनन- सामर्थ्य मस्त्येव, इहतु त्वदुद्देश्यप्रतीतिजननसमर्थं किमपि वाक्यं न दृश्यत इत्युक्तमेव । राजसूयदृष्टान्तश्च विषमः, तथाहि – राजसू ये बहव इष्टिपशुसोमयागा स्सर्वे फलवन्तः समप्रधानाः, तत्राभिषेचनी योनाम सोमयागः, तत्सन्निधौ विदेवनादय स्समाम्नाताः, ते किं स र्वस्य राजसूयस्यांगं उताभिषेचनीयस्यैवेति ? यदि सन्निधिर्बलीयान् अभिषेचनीयांगं, अथ प्रकरणं ततो राजसूयस्येति । तत्र सन्निधिविशे षादभिषेचनीयांगत्वे प्राप्ते – अभिधीयते; प्रकरणाविशेषात् सर्वार्थता। नन्वभिषेचनीयस्याप्यस्त्येव फलवत्त्वात्प्रकरणं; यद्यप्यस्ति तदप्यन्ये षामप्यस्तीति तादर्थ्यमपि युक्तं । यदिचपरमविशेषतस्सर्वेषामाकां क्षायामपि पाठसन्निधिविशेषादभिषेचनीयस्य विशेषत आकांक्षां क- ल्पयित्वा तादर्थ्यं स्यात् ततश्च विप्रकर्षः, सर्वार्थताहि क्लृप्ताकांक्षा तस्सुखं गम्यते, अभिषेचनीयस्य त्वाकांक्षाकल्पनीयेति । एतेनाग्नेयादी नां धर्मसाधारण्यमपि व्याख्यातमिति । इह सन्निधेः प्रकरणस्य ब- लवत्त्वं व्युत्पाद्यते, नतु तत्राकारान्तरेणाकांक्षानिवृत्ता वप्या- कारान्तरेणाकांक्षाव्युत्पाद्या । यदपि शास्त्रदीपिकायामुक्तं – "अपिच नास्त्यभिषेचनीयस्य प्रकरणं, प्राकृतेनेत्थम्भावेन कथमाकांक्षापूरणात् । नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम्, सत्यम्; प्रातिस्विकरूपेण नास्ति राजसूयात्मनात्वस्त्येव, कथं, श्रुत्यादिविहि तांगसन्दंशात्तद्वशेन निवृत्ताप्याकांक्षापुनरुत्थाप्यते, पवित्रादारभ्यक्ष त्रस्य धृतियावदङ्गविधिषु प्रायेण 'राजसूयायज्ञेनाऽऽत्पुनाति, राजसूयेनेजा नस्सर्वमायुरेतो' तिराजसूयपरामर्शात्तावन्तं देशमनुवृत्तो राजसूयकथंभा वश्शक्नोति तन्मध्यपतितानि विदेवनादीनि गृहीतु" मिति तत्रापि राज सूये प्रकरणाभावमाशंक्य सन्दंशन्यायात्तत्समर्थने तात्पर्यम्, नत्वा- कारान्तरेण धर्मप्राप्तावप्याकारान्तरेणाप्राप्ते राकांक्षाप्रतिपादने ता- त्पर्यम्; तथासति किं मुत्थापिताकांक्षोपयोगित्वेनाकारान्तरोपन्यासः,

किंवा स्वारसिकाकांक्षाप्रयोजकत्वेन? नाद्यः आतिदेशिकांगान्वयेन निराकांक्षत्वे प्यौपदेशिकांगान्वयार्थं तेनैवाकारेणाकांक्षोत्थापनस्य बहुशो दर्शनात्। नद्वितीयः सन्दंशवशेननिवृत्ताप्याकांक्षा पुनरुत्था प्यत इत्युक्तिविरोधात् । राजसूयात्मना त्वस्त्येवेतितु विदेवनादीनां समुदायान्वयरूपसिद्धान्तसिद्ध्यर्थं समुदायाकांक्षाप्रतिपादनपरम् । किंच वेदान्तविचारांशे लोकतएव प्रवृत्तिसिद्धे स्तदंशे नविधेः प्रयोजकत्वं, किन्तु पूर्वभागविचारांशएवेति , विधे र्विधेयैकदेशप्रयो जकत्वमस्वरसमापद्येत । अनेनैव यद्वेत्यादिकमपि दत्तोत्तरं। किंच किमात्मा श्रोतव्य इत्यत्रात्मशब्दो निदिध्यासितव्य गुणतरगुणे व्युत्पन्नः , येनैवं ब्रवीषि, तथासति निदिध्यासितव्यगुणानां विचार्यता- न स्यात्। सामान्यत स्सर्वेगुणा विवक्षिताइति चेत ; तर्हि निदिध्या सनस्यापि सर्वगुणविषयत्वादस्यैवात्मशब्दस्य "निदिध्यासितव्य" इत्य त्राप्यनुषंगणार्थं वैरूप्यायोगात् ।

यत्तु- कैश्चिदुक्तं,"द्रष्टव्यश्श्रोतव्य " इत्यादयो दर्शनादीनां विधा यकाएव। " आत्मनि खल्वरेदृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञात " मित्युप क्रम्य तदुपसंहारे" एतावदरेखल्वमृतत्व " मिति एतावच्छब्देन प्रकृतदर्श नादिचतुष्टयं परामृश्य तस्य लांगलं जीवनमिति वत्साधनेसाध्योपचारेणा- विशेषेणामृतत्व साधनत्वप्रतिपादनात् । दर्शनादयश्च दर्शपूर्णमासा- भ्यामिति द्वन्द्वेनेव " एतावदरेखल्वमृतत्व" मित्येतावच्छब्देन परा मृत्युतुल्यवत्फलसम्बन्ध प्रतिपादनात् समप्रधानाः । ननु श्रवणा दीनां पूर्वपूर्वस्य उत्तरोत्तरद्वारैव मोक्षसाधनत्वात् न समप्राधान्य मुपपद्यतइति चेत् ; एतावदित्यादिभिश्श्रवणादीनां दर्शनवन्मोक्षसाधन त्वे सिद्धे आधानवदुपकारकत्वेपि प्राधान्याविरोधात् । यद्यप्यसा- क्षात्कृत स्वर्गादिभावनायाइवा व्यक्तस्वभावब्रह्मनिदिध्यासनस्या- पितादृशब्रह्मसाक्षात्कारहेतुतानलोकतःप्राप्ता,तथापि तस्यमोक्षेजनयितव्ये दृष्टसन्निहित परमात्म दर्शनद्वारकत्व संभवे अदृष्टद्वार कल्पनस्य अन्याय्यत्वेन दृष्टपरमात्मदर्शनमेव द्वारं कल्प्यते । अतो नाकृतनिदि ध्यासनस्यापि परमात्मसाक्षात्कारप्रसंगः, तत्तदधिकार्यनुसारेण नियत तत्तद्गुणवत्तया परमात्मध्यानविध्यपेक्षित तत्तद्गुणत्वावधारणाय फलव

दर्थावबोधपर्यन्ताध्ययनविधिना तत्तद्गुणवत्त्वविषयक श्रवणमननाक्षेप संभवेपि तदन्यगुणविषयक श्रवणमननाक्षेपासंभवेन नियतविषयक ध्यानापरनामक निदिध्यासनविषयगुणान्य गुणवत्त्वविषयक श्रवणमननयोरत्यन्ताप्राप्तया "श्रोतव्योमन्तव्य" इतिविधेरप्यपूर्वविधित्वं । तत्रश्रवणस्य मोक्षेजनयितव्ये दृष्टं सन्निहितंच मननमेवद्वारं, मननस्यतु मोक्षेजनयितव्ये ध्येयान्यगुणांशे अदृष्टं ध्येयगुणांशेतु ध्यानोपकारकत्वमपीति ।

केचित्- श्रवणमननयोर्नविधिः, अर्थावबोधपर्यन्ताध्ययन विधि तएवतयोः प्राप्तेः, अतस्तयोरनुवादः, निदिध्यासनस्यतु मोक्षेजनयितव्ये दृष्टं दर्शनं द्वारं, दर्शनेत्वदृष्टं द्वारं । नचैवं -मोक्षं प्रत्येवादृष्टं द्वारमस्त्विवतिवाच्यं । मोक्षंप्रति द्वारकल्पनादशाया मदृष्टस्यानुपस्थितत्वादिति।

अत्रोच्यते यदुक्तं "एतावदरेखल्वमृतत्व" मित्यादिना चतुर्णां मोक्षसाधनत्वेन विधानमिति । तन्न । प्रयोजकत्वमात्रेण तत्र सामानाधिकरण्योपपत्तेः । लांगलं जीवनमितिवत् । नहि लांगलं साक्षाज्जीवन हेतुः, अपितु कर्षणादिबहुव्यापारव्यवधानेनैव । निदिध्यासने मोक्षार्थ विहिते लोकसिद्धतत्साधनभावयोः श्रवणमननयो र्लौकितएव प्रवृत्त्युपपत्तौ तद्बोध्यकस्मादेव गुरुभूतविधिव्यापार कल्पनानुपपत्तेः ।

यदुक्तं- निदिध्यासनस्य दृष्टपरमात्म दर्शनद्वारकत्वं कल्प्यत इति । तन्न । "स्मृतिलम्भेसर्वग्रन्थीनां विप्रमोक्षः" "तस्मिन्दृष्टेपरावारे" "भिद्यते हृदयग्रन्थि"रित्युभयत्रापि तुल्यवन्मोक्षसाधनत्व प्रतिपादनात् । दृष्टद्वारत्व संभवे तद्ग्राह्यमितिचेन्न । त्वयैव तदसंभवस्योक्तत्वात् । नहि निदिध्यासन स्याव्यक्तस्वभाव ब्रह्मसाक्षात्कारहेतुतान्यतः प्राप्तेतिह्युवोचः । तज्जन्यस्या दृष्टत्वेपि तत्स्वरूपं दृष्टमितिचेन्न । यत्रतज्जन्यं तत्फलजननयोग्यंच दृश्यते तत्र ह्येतन्न्यायप्रवृत्तिः, दृष्टमेव ह्यवहननस्य तुषविमोकसाधनत्वं, तुषविमोकश्चयोग्यएव पुरोडाशादिषु । अन्यत्र नैतन्न्याय प्रवृत्तिसंभवः। अदृष्टकल्पना भीत्या दृष्टं द्वारं कल्पयत स्तदर्थं पुन रदृष्टकुहरकल्पना पातात । दृष्टद्वार कल्पनादशायां नतदुपस्थितिरितिचेन्न । दृष्टंहिद्वारत्वेन कल्प्यते, नस्वरूपेण, तथाकल्पनायांच तज्जन्यादृष्टोपस्थितिरनिवार्या ।

तस्माद्ध्यानभक्तिप्रत्यक्षात्मक मेकमेवज्ञानं मोक्षसाधन मित्यनुगृह्णन्ति वेदान्तरहस्यवेदिनः । अस्तुतर्हि नियमविधिः । यद्यप्यात्माविचारितवेदान्तैरेव ज्ञातव्य इति वेदान्तनियमोनसंभवति । आत्मनि वेदान्तातिरिक्त प्रमाणाप्रसक्ते र्व्यावर्त्याभावात् । नच-लौकिकतुषनिवृत्ता वुपायांतरवल्लौकिकात्मज्ञाने मनःप्रमाणं प्रसक्तमितिवाच्यं । सिद्धान्ते मनसोप्रमाणत्वात्, उपादानतया तस्यशब्देना प्यपेक्षितत्वात । नाप्यनुमानं, "नैषातर्केण" ति निषेधशास्त्रादेव तत्सिद्धेः । श्रुतिसमान विषयस्य तस्य "मन्तव्य" इति श्रुत्यैव सहायत्वेनांगीकारात ; भिन्नविषयस्यतु विवक्षित श्रुत्यर्थे ब्रह्मण्यप्रसक्ते र्ननिवर्त्यत्वं । नापि पुराणवाक्यं व्यावर्त्य ; " इतिहास पुराणाभ्यां वेदं समुपबृंहये " दिति तस्यापि वेदार्थज्ञानोपाय त्वोपगमात् । नाप्यात्मविषय प्राकृतगाथा व्यावर्त्या , नम्लेच्छित वाक्यादमुमुक्षूणामपि वेदाधिकारिणां तस्या निषिद्धत्वात । नापि वेदान्तानां विचारेणैवात्माज्ञातव्य इति विचारानियमो प्युपपद्यते । तत्रापि व्यावर्त्याभावात् । नच-गुरुमुखं श्रवणं नियम्यतइति वाच्यं । "तद्विज्ञानार्थ"मिति ज्ञानार्थ गुरूपसदनविधिनैव स्वतन्त्रश्रवणस्य व्यावृत्तत्वात्, अन्यथा तद्विधेरदृष्टार्थतापत्तेः । नचा विचारित वेदान्तवाक्यं व्यावर्त्यम् । तन्मात्रा न्निर्णयानिष्पत्तेः । नापि मुमुक्षूणां मोक्षसाधनज्ञानायात्मैव श्रोतव्य इत्यात्मा नियम्यतेः आत्मनोऽविधेयत्वात, अनात्मविचारस्य मुमुक्षुजिज्ञासितात्म ज्ञानानुपायत्वेनस्वतएव व्यावृत्तत्वा त । तथापि मुमुक्षुणा मद्वैतात्मविषय वेदान्तविचारो नियम्यते, तद्वाक्यस्थात्मशब्दस्य " इदंसर्वं यदयमात्मा" "आत्मनिविज्ञाते" सर्वमिदं विज्ञात " मित्येवमादि तत्प्रकरणस्थ वाक्यपर्यालोचनया अद्वैतात्मपरत्वात्, भिन्नात्मविषयवाक्यश्रवणं व्यावर्त्यते. ततो मुक्तिसाधनज्ञानासंभवात् । नचैवम्मुमुक्षुः स्वतो निवृत्तइति वाच्यंः आपातप्रतीतिदशायां "द्वासुपर्णे"त्यादि वाक्यात " जुष्टंयदापश्यत्यन्यमीशमस्यम हिमानमिति वीतशोक " इति भेदज्ञाना च्छोकनिवृत्ति प्रतिपादनात

यदुक्तं भ्रमगृहीतसाधनव्यावृत्त्यर्थमेव नियमइति अस्त्वेवं तथापि यदि नियमेनविना भ्रमनिवृत्तिर्नस्यात तदाहि नियमस्स्यात् । नत्व नियमेनविनासाधनत्वभ्रमोविद्ळनादेर्निवर्तते इहतु नियमाभावेपि न्यायानुगृहीतैर्ज्ञानस्य मोक्षसाधनताप्रतिपादकवाक्यै ज्ञानस्याद्वैतविषयस्यैव मोक्षसाधनताप्रतिपत्तौ कथं द्वैतज्ञानस्य मोक्षसाधनत्वभ्रमः । वस्तुतस्तु यदि भ्रमगृहीतसाधनव्यावृत्त्यर्थो नियमस्स्यात्, तदा " उरुप्रथ॰वे "तिमन्त्रस्यप्रथनप्रकाशकत्वलिंगेन पुरोडाशप्रथने विनियोगेमन्त्रान्तरेपि प्रथनप्रकाशकत्वलक्षणलिंगभ्रमात्तस्यापि तत्रैवविनियोगभ्रमे अनुष्ठेयार्थ प्रकाशन लक्षणकार्यस्य एकेनैवमन्त्रेणसिद्धौ मन्त्रद्वयं वैकल्पिकमेवेतिबुद्धौसत्यां " उरुप्रथस्वेति पुरोडाशं प्रथयती " तितदर्थशास्त्रं मन्त्रान्तर निवृत्त्यर्थ नियमविधिरेवस्यात् ,नानुवादः । किञ्च भ्रमगृहीतसाधनव्यावृत्त्यर्थ नियमंवदन्कयावाचापक्षान्तराणिनिराचकर्थ । पू॰भागस्यापि " सर्वेवेदायपदमामनन्ती " त्यादिना ब्रह्मणिप्रामाण्यभ्रमात वेदान्तनियमो युज्यतएव । "नैषातर्केणे"ति श्रुत्यनुसन्धाने अनुमानस्यापि निवर्त्यत्वं युज्यतएव । "नम्लेच्छितवा" इत्यादिवाक्यस्य तदर्थस्यचास्फुरणदशायां प्राकृतगाथायान्यावर्त्यत्वेपि नहानिः । किंच निषिद्धानुष्ठानेन दुरितापूर्वोत्पत्तावपीष्टलाभस्याप्यनिवारणान्नियमेनविनाननिवृत्तिः । किंच "नम्लेच्छितवा" इति गाथोच्चारणस्य निषेधेपि तद्विचारस्यननिषेधः । तथागुरूपसदनस्यादृष्टार्थत्वभ्रमवतो गुरुमुखश्रवणनियमेवाकाहानिः । तथाविरोधास्फूर्तिदशायां विचारितवाक्यादपि निर्णयोत्पत्तेः स्वविचारितवेदान्तव्यावृत्तौवाहानिः का? तस्मात्त्वदुक्तःपक्षश्शंकितुमप्यनर्हः । यद्यपि त्वद्दूषिताः पक्षाश्शंकार्हाः । तेप्यपरोक्षसाधनान्तरस्याव्यावर्त्यतयैव निरस्ताः ।

एतदुक्तं भवति, किमुत्पन्नमप्यवधारणंनियमादृष्टाभावादनिवर्तकं? उत नियमादृष्टाभावाद वधारणमेव नोत्पद्यते? आद्ये मोक्षस्यादृष्टसाध्यत्वप्रसंगः । द्वितीयेनुभवविरोधः । दृढतरविश्वस्तोपदेशादिनाप्यवधारणं जायतएव । अपरोक्षार्थविषयत्वात् त्वद्रीत्याऽपरोक्षमेवेति । एवंच यदि तृणारण्यादिरूपाननुगतकारणे ष्वनुगता शक्तिः कारणतावच्छेदकत

येष्यते. तदा नियोगीयव्रीहिष्वपि अवहननसाध्यतुषविमोकंप्रति नखवि दळनादेः स्साधनत्वमस्त्येव। नच - तदनुष्ठानेपि यागनिर्वृत्तिप्रसंग.। नि-यमादृष्टाभावात् । यदिच कारणाननुगमे कार्यवैजात्यं कल्प्यते तदोद्दे-श्यतावच्छेदकधर्माधिकरणे यद्वस्तु तत्साधनं तदेव नियमनिवर्त्यं, नि यमेन विना ततो निवृत्त्यसंभवात । उद्देश्यतावच्छेदकीभूततुषविमोक त्वाधिकरणे क्वचिद्विदळनस्यापि साधनत्वमस्त्येव । नच--मोक्षसाधन-ज्ञानत्वरूपोद्देश्यतावच्छेदकाधिकरणे भेदविचारस्य साधनत्वर्नास्ति । ननु नियोगीयतुषविमोकत्वमेवोद्देश्यतावच्छेदकमितिचेन्न । उद्देश्यपदेन प्रवृत्तिद्वयोद्देश्यस्य निवक्षितत्वात् । तथाच नियमाप्रवृत्तिदशाया मेतद-धिकारिणः प्रवृत्तिद्वयप्रयोजकीभूतधर्मे तात्पर्यं । वस्तुतस्तु- तुषविमोक-त्वमेव इष्टतावच्छेदकं, नत्वेतन्नियोगीयतुषविमोकत्वं, तस्य पूर्वमज्ञानात । तस्मात यथा सुखत्वेनेष्टत्वेपि स्वस्वसंबन्धितया काम्यते, तथावैतुष्य मपि स्वकीयनियोगीयव्रीहिगततया काम्यते । अन्यथा यत्रावघातोपक्र-मानन्तरं दैवाद्विघाताद्वैतुष्यानिर्वृत्तिः तत्र इष्टतावच्छेदकस्वरूपस्या प्र-सिद्धत्वेन इच्छाया दुरुपपादत्वात् । एतेन स्वातन्त्र्येण पुराणवा-क्ये प्रवृत्ति र्व्यावर्त्यतइत्यपि निरस्तं. ततोप्यपरोक्षज्ञानस्या विद्यानि वृत्ते श्चावश्यं भावात् । सप्रकारकात्मसाक्षात्कारे मनसः कारणत्वेन आत्मज्ञानत्वसामान्येन निर्विशेषात्मज्ञानेपि तस्य प्रसक्ते स्तद्व्यावृत्तये नियमइतिकश्चित् । तन्न । शाब्दज्ञानेपि मनसः कारणत्वेना व्यावर्त्य-त्वात । करणत्वेन व्यावर्त्यतेतिचेन्न। त्वन्मते मनसः करणत्वासि-द्ध्या प्रसक्त्यभावात। अस्तुवा - करणत्वं, तथापि मनसोऽ साध्य-त्वान्न तस्य व्यावर्त्यता। नच - मनः प्रणिधानं व्यावर्त्यम्। तस्या त्मप्रत्यक्षे कारणत्वाभावेना त्मत्वस्य तत्राप्रसञ्जकत्वात् । नह्यहमिति प्रत्यक्षे प्रणिधानमपेक्ष्यते । ननु - सूक्ष्मार्थग्रहणे प्रणिधानस्यापेक्षित त्वा तेनरूपेण तत्प्रसक्तमितिचेत; वहुकालं प्रणिधानेपि सद्वि-तीयात्मनएव प्रतीयमानतया तदकरणत्वस्य लोकतएव निश्चयात्। किञ्च - प्रणिधानस्य परिज्ञाताकारातिरिक्ताकार परिज्ञान हेतुत्वा-दर्शनादपि तत्साध्यत्वाभावो लोकतएवावगतः । किञ्च - प्रणिधा

तस्मादश्रवणरूपत्वा त्तदपि विचारणापेक्षितमेव । तस्मा न्नियमविधि स्सम्भवः । ननु - सिद्धान्ते स्वतन्त्रपुराणादिविचार व्यावृत्त्यर्थो नियम. किं नस्यात् । न । तस्यापि श्रवणत्वेन ग्राह्यत्वात, तद्व्यावर्तक- पदाभावात्, "श्रावयेच्चतुरोवर्णा" निति तस्यापि श्रवणत्वोक्तेः । नापि स्वतन्त्रस्यानुमानस्य व्यावर्त्यत्वं । शास्त्रयोन्यधिकरणेन तन्नि रासात् । किञ्च - श्रवणस्य निदिध्यासनसमानविषयत्वा न्निदिध्या- सितव्यगुणे स्वतन्त्रानुमाननिवृत्त्यर्थो नियमस्स्यात, तत्र तद्गुणवि- शिष्टनिदिध्यासनस्य तदपरोक्षस्यवा मोक्षसाधनत्वेनाज्ञाने तदर्थमनु- माने प्रवृत्तिर्नस्यात्, तज्ज्ञानेच श्रुत्या गुणवैशिष्ट्येपि ज्ञाते नानुमाने प्रवृत्तिः । सिसाधयिषयानुमानंच मननान्तर्गतमेवेति न निवर्त्यम् । अस्तु तर्हि - मननविधिः श्रुतेर्थे जिज्ञासाविरहादपूर्वविधिरेव, विहि तेच सिषाधयिषयानुमानं संभवत्येवेतिचेत् । न । नह्येतत्पदमनुमाने व्यु त्पन्नं, किन्तु ज्ञानमात्रे, अतः प्रकृते शाब्दज्ञानस्य तदधीनध्यानस्य च "श्रोतव्यो निदिध्यासितव्य" इत्युक्ते गोबलीवर्दन्यायेन श्रव- णाद्यतिरिक्तं ज्ञानं मन्तव्यइत्युच्यते । ननु - गोबलीवर्दन्यायात् सं कोचेसति लक्षणयैव त्वदिष्टार्थबोधनं वाच्यं, ततश्चानुमानमेव लक्षणया विधीयतामितिचेन्न । अनुवादेहि यथाप्राप्तत्वनुवादाल्लक्षणानदोषाय, विधौतु लक्षणादोषएव - अन्यथा विधित्वसिद्धये सर्वत्र लक्षणाया स्सुलभत्वात् क्वाप्यनुवादो नस्यात् । अस्तु तर्हि कार्यत्वाद्यनुमानस्य श्रुतिविचारस्यच नियमेन प्राप्ता वाज्यभागौ यजतीतिवं देकस्मिन् शेषिणि शेषद्वयप्राप्तौ शेषान्तरनिवृत्तिफलक परिसंख्येति; तत्राख ण्डोपकारकस्य समुच्चिताज्यभागस्य प्रयाजादि साध्यत्ववदिह ज्ञानस्य समुच्चितप्रमाण साध्यत्वाभावात शब्देतिकर्तव्यताभूत तर्कसाहित्य स्य चेष्टत्वा न्नपरिसंख्येति । तस्माच्छ्रोतव्यइत्यस्य विधित्वाभावान्न- विध्युपयोगिन्यायप्रतिपादकं सूत्र मिति । तस्माच्छ्रोतव्यइति विहितवि चारप्रतिज्ञारूपत्वासंभवात कृत्स्नविचारस्यापि प्रतिज्ञाविषयत्वयात्म नित्यत्व ज्ञानमोक्ष ' नत्वादि विचारस्यापि तदन्तर्गतत्या ग्रहद्धि

परिशेषेच निर्गुणत्वव्याघाताच्च । ख्यातिलाभपूजार्थप्रवचनादिकं तु कात्स्न्र्येन तत्परीक्षणमिति चेत्, हन्तैवं साधु शान्तिदान्त्यादिसम्पत्सम्पादिता; कामक्रोधादेरेव वेदान्तश्रवणनिमित्तत्वेनोपादानात् । ख्यातिलाभाद्यर्थश्रवणेच नित्यानित्यवस्तुविवेकादेः कोपयोगः ।

अथ वैधत्वान्मीमांसाश्रवणस्य स्वयं विमर्शइति. तदपि न. अर्थनिश्चयसिद्ध्यर्थत्वाद्विमर्शस्य । निश्चयो यद्युपदेशात् सिद्ध्यति, किं वृथा प्रयासेन । अन्यथा प्रदक्षिणनमस्कारादिवददृष्टार्थत्वमेव स्यात् मीमांसाश्रवणस्य । नच मीमांसाश्रवणस्य वैधत्वमिति प्रागेव समर्थितम् । अस्तुच वैधत्वम्, तथापि नित्यानित्यवस्तुविवेकस्यापि स्वेतिकर्तव्यताभूतमीमांसाधीनस्यैव विधिना स्वीकारात् तथाविधस्यच तस्य अविरोधलक्षणसाध्यत्वान्न पूर्ववत्वसिद्धिः ।

---

वेकस्य पूर्ववृत्तत्वसंभवः । तर्ह्यगत्याब्रह्मणि ज्ञातव्याकारान्तरसिध्यस्त्वित्यत्राह ( परिशेषेचेति ) तर्हि जगत्कारणत्वादिकमेव ज्ञातव्यं स्यात्, तथाच तेन तदुपयोगिसार्वज्ञ्यादिभिश्च सविशेषत्वान्निर्विशेषत्वभङ्गइत्यर्थः । मिथ्याभूतकारणत्वादिपरत्वेच साधु तत्त्ववेदकत्वं मोक्षार्थत्वंच. वेदान्तशास्त्रस्योपपादितं स्यात । ( प्रवचनादीति ) आदिशब्देन जल्पादि कथा प्रवर्तनं गृह्यते । ( अन्यथेति ) यद्यर्थज्ञानवन्तं प्रत्यपि विधीयेत तदेत्यर्थः । अर्थज्ञानवन्तं प्रत्यपि वैधत्वे नियमविधित्वभंगात् दृष्टसिद्धान्तोपीतिभावः । फलस्यासिद्धत्वात् तदर्थश्रवणं नियुक्तं, इदानीं रागप्राप्तत्वान्न विधिरिति पूर्वोक्तंस्मारयति ( नचेति ) ( तथापीति ) विधिर्मीमांसायाः स्वेतिकर्तव्यतात्वेनान्तरंगत्वात् तज्जन्यमेव नित्यानित्यविवेकं विचाराधिकारतया स्वीकरोति नतूपदेशसाध्यं, तादृशमीमांसाधीनश्च नित्यानित्यविवेको द्वितीयाध्यायसाध्यइति नतस्य पूर्वत्वमित्यर्थः । तर्हि कस्मादेवासंभवाद्दोषदेशिको नित्यत्वादिविवेकोऽपि उपदेशादेव सिद्धइति चेन्न ; उपदेशतएव फलसिद्ध्या तदसंभवस्यात्रोक्तत्वात् ; सूत्रकाद्विचारधीन नित्यानित्यविवेकस्याधिकारत्वेच द्वितीयाध्याये तन्निरूप

यदि चैवं वेदान्तश्रवणमिच्छसि, तदा कर्ममीमांसायां कुतस्तेकोप । श्रूयते हि "स्थाणुरयं भारवाहः किलाभूत्, अधीत्य वेदं नविजानातियोऽर्थ"मिति । तेन कर्मभागश्रवणपूर्वकमेव ब्रह्मभागश्रवणमिति सिद्ध्यति । न तावदनधीतवेदस्य वेदान्तश्रवणमुपपद्यते - अनधिकारात् । नचोपनिषन्मात्राऽध्ययनं कस्यचित् शास्त्रार्थ ; स्वाध्यायोऽध्येतव्यइत्यखण्डग्रहणात् । तस्मात्राध्ययनविध्यर्थश्रवणाच्च । कृत्स्नाध्ययनेच कृत्स्नार्थविचारमेव विधिः प्रयुङ्क्ते । तथाच ब्रह्मविचारात् पूर्वं पश्चाद्वा कर्मविचारोऽपि कर्तव्यएवेति पश्य । तथाच सति यदि साधनचतुष्टयसंपत्तिपूर्वकम श्रूयन्त वेदान्ता, कथमसौ पुनरनपेक्षितविरुद्धत्वाभिमत कर्मजिज्ञा

---

सन्त्यर्थम् । ( कर्ममीमांसायामिति ) तत्रवैधत्वं कुतोनेच्छसीत्यर्थः । ( तेनेति ) अविशेषेण पूर्वोत्तरभागात्मक कृत्स्नवेदविचारस्यापि कर्तव्यतां बोधयन्नयं विधिरनुष्ठेयस्य क्रममाकांक्षमाणो वेदक्रमानुसारेण तदितिकर्तव्यताभूत विचारक्रम मंगीकरोतीति पूर्वमीमांसाया प्राथम्यं सिध्यतीत्यर्थः । प्रकारान्तरेणापि क्रममुपपादयति ( नतावदिति ) ( अनधिकारादिति ) स्थाणुरयमिति वाक्ये अधीतवेदस्तं विचारयेदिति विधिपर्यवसानेन अध्ययनस्य तदधिकारत्वादितिभावः । उपनिषन्मात्राध्ययने तद्विचारेऽधिकारस्यसत्त्वादित्यत्राह (नचेति) ( कस्यचिदिति ) कस्यापिमते अध्ययनविध्यर्थोनभवतीत्यर्थः । विहिताध्ययनस्यैवविचारविधौ निमित्ततयानुवादात् कृत्स्नस्वाध्यायाध्ययनस्यैव विधानात् एकदेशाध्यायिनो विचाराधिकाराभाव इतिभावः । कृत्स्नाध्ययनस्याधिकारत्वेऽप्येकदेशविचारः कुतोनस्यादित्यत्राह ( कृत्स्नेति ) अधीत्यवेदं विचारयेदित्यत्राधीतस्वाध्यायस्यैव विचारविषयतया प्रतीतेरितिभावः । विचारकर्तव्यतायां [illegible] ब्रह्मविचारादनन्तरं कर्म [illegible]सम्भवात् तत् पूर्वं कर्मविचारस्येत्युक्तं - इदानीं [illegible]

सेतेति परिशेषा त्कर्मविचारस्य पूर्वत्वसिद्धिः । यदातु कर्मपूर्वं विचारितं तदा "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायात्" दित्यादिश्रुतिसिद्धप्रकारेण ब्रह्मबुभुत्सासंभवतीत्यतोपि क्रमानियमइतिकर्मविचारस्य पूर्ववृत्तत्वमवश्याश्रयणीयम् । एवं रागप्राप्तश्रवणपक्षेपि क्रमसिद्धिः, रागोऽपि हि सांगाधीतसशिरस्कवेदस्या पातप्रतीत सर्ववेदभागार्थस्य कर्मब्रह्मभागयोरविशेषेण सातिशयनिरतिशय समस्त पुरुषार्थप्रतीता वुभयत्राप्यविशेषेण प्रवर्तने क्रमम् क्षमाणः स्वाध्यायानां सर्वेषां प्रायशः कर्मोपक्रमत्वात् सारस्वतांगवत् मुख्यक्रमानुरोधेन स्वाध्यायेतिकर्तव्यताभूतमीमांसाक्रमं प्रयुञ्जानः "कांक्षन्तः कर्मणां सिद्धिं यजन्तइहदेवता. । क्षिप्रंहि मानुषे लोकेसिद्धिर्भवतिकर्मजा" इति न्यायेन त्रिवर्गप्रथमप्रावण्यरूप मर्थक्रमं चापेक्षमाणः; "यज्ञेन दानेने"त्यादिना यज्ञाद्यंगकोपासनविधौ यज्ञादिदृष्टान्तेषु यज्ञादिफलत्वेनेच पदार्थभूतयज्ञादिस्वरूपाधिगम साकांक्षतया पूर्वमेव कर्मविचाराक्षेपं पश्यन् ब्रह्मविद्यांगभूत कर्मस्मृत्यर्थतया ब्रह्मदृष्टिरूपतयाच शारीरकेमुख्यसंगतस्यो द्गीथविद्यादेश्च कर्मा

---

पकर्तव्यतायां बुभुत्सोत्थापकत्वेनोपजीव्यत्वात् कर्मविचारस्य पूर्ववृत्तत्वमित्याह ( यदात्विति ) प्रसंगादाह ( रागेति ) ( मुख्यसंगतस्येति ) अनेनप्रासंगिकापेक्षितत्वमात्रेण कर्मणः पूर्ववृत्तत्वनियमोनयुक्तः, साक्षात्संगतस्य तात्सापेक्षत्वेहि तथा स्यात्, अथशब्दः प्रतिज्ञातार्थापेक्षया पूर्ववृत्तत्वं हि प्रतीयते, नच प्रसंगसंगतोर्थः प्रतिज्ञाविषयइति निरस्तम् । प्राप्यत्वेन प्रापकत्वेनच प्रतिपन्नस्य ब्रह्मणएवं जिज्ञास्यत्वात्, तेनैव रूपेण विषयतया उपात्तस्य तदुपयुक्तानांच प्रापकत्वातिज्ञान्तर्भावेण उपासनार्थकर्मस्वरूपयथोद्गीथादीनामपि शास्त्रसंगतत्वात् । नचेह कर्मनिरूपणमपि शंकनीयं । उक्तप्रसंगात् । ननु तर्हि कर्मत्वमुद्गीथस्यात् उद्गीथादेः पूर्वकाण्डगत निरूपणमा दित्यत्राह ( ब्रह्मदृष्टीति ) ब्रह्मज्ञानंविना तन्निरूपणं नसम्भवतीतिभा

गाश्रयतया तदाश्रयांगकर्मपरिज्ञान ज्येष्ठतामालोचयन् कर्मब्रह्ममीमांसयोः क्रमेण पुरुषं प्रवर्तयति । किञ्च - प्रसंगाचिन्तितस्याप्यर्थस्य प्रकृते केनचिदुपयोगेन भवितव्यं, तत्र यद्यपि विद्यारूपत्वाविशेषादिहोद्गीथविद्यादीनां प्रसंगस्संभवति, तथापि तच्चिन्तनस्यात्र क उपयोगः । कर्मिणां तदनुष्ठानेन कर्मसाद्गुण्यार्थमिह चिन्तेति-चेन्न; कर्मनिष्ठस्यात्रशास्त्रे त्वयाधिकाराभावकथनात् । अथ यदि-कर्मविन्मध्ये समागत्य स्वोपयुक्तांश कश्चिच्चिन्तयत्विति मन्यसे; तदसत्, अनिरूपितब्रह्मस्वरूपस्य ब्रह्मदृष्टिरूपासु तासु चिन्तनानवकाशात् । तदाह- " उद्गीथाद्युपासनानि कर्मसमृध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणी " त्यादि । अथ सएव कर्मार्थं ब्रह्मापि चिन्तयेत्, तर्हि ततएवैकशास्त्रयं तावत्सिद्धं -

---

थः । शारीरकएव मुख्यसंगतत्वरूप विशिष्टसाध्ये कर्मसमृद्ध्यर्थता मुख्यांशहेतुः । सच भागद्वयसाधारणः । कर्मसंबन्धिसमृद्धिहेतुत्वस्य कर्मभागनिरूपणहेतुत्वात् । कर्मसमृद्धिर्हि कर्मफलप्रतिबन्धनिरासः । अतः विद्यारूपफलप्रतिबन्ध निरासकत्वस्य इह निरूपणहेतुत्वाच्च, ब्रह्मदृष्टिरूपतात्विहैव संगतत्वहेतुः । पश्यन्नालोचयन्निति रागसमानाधिकरणत्वात तन्निष्ठत्वोपचारः । ब्रह्मविद्यांगकर्मसमृद्ध्यर्थतया साक्षात्संगतिरित्युक्तं, इदानीं प्रसंगसंगतेरसंभवाच्च साक्षादेव संगतिरित्याह ( किंचेति ) यद्यत्र प्रसंगतश्चिन्त्यते तस्य तत्रोपयोगेन भवितव्यं अत इहाप्युपयोगो वाच्यइत्यर्थः । ननु विद्यारूपत्वेन साजात्यमेवेह प्रसंगः नचोपयोगाभावेन तद्संभवः इत्यत्राह ( यद्यपीति ) नहि वयं विद्यारूपत्वेन साम्याभावं ब्रूमः, किन्तु तस्मिन्सत्युपयोगाभावे प्रयोजनाभावात् निरूपणं न स्यादित्युपयोगो वाच्यइति स च नेहास्तीत्यर्थः । उपयोगमात्रादेव सप्रयोजनत्वं न त्विहोपभोगेनेत्यभिप्रायेण शंकते ( कर्मिणामिति ) ( ततएवेति ) यदि कर्मार्थमुद्गीथनिरूपणात ब्रह्मचिन्तयेत, तर्हि ब्रह्मचिन्तया उद्गीथद्वारा कर्मा

प्रागुक्तनयेनक्रमश्च । गुणप्रधानभाववैपरीत्यमेव तु भवता साधितं । ब्रह्म विदस्तु तच्चिन्तयाकोपयोगस्त्वन्मते । कर्मविद्भ्यस्तदुपदेशउपयोगइतिचे त्तर्हि कर्मापि चिन्तयेदविशेषात् । अथ विविदिषार्थकर्मसाद्गुण्य सिद्ध्यर्थमिति पश्यसि; तथाप्यनुपयोगएव - विविदिषायां जाता यामेव श्रवणे प्रवृत्तेः, तत्रापि पूर्ववत्परोपदेशार्थत्वायोगात् । क र्मणांच वेदनांगत्वस्य प्रागेव स्थापितत्वात् न विविदिषांगकर्मसि द्धिः । महाविद्याभ्यः पृथक्करणमेव प्रयोजनमिति चेन्न; तस्यैका धिकरणमात्रसाध्यत्वात् , तथाचात्र चिन्तनस्यादर्शनात् . प्रकारा

---

र्न्तवशात् कर्मब्रह्मविचारयो रैकशास्त्र्यं सिद्ध्यतीत्यर्थः । नैतावदेव , अनिष्टान्तरमपि तव सिद्ध्यतीत्याह ( प्रागिति ) ऐकशास्त्र्येसति क्र माकांक्षायां मुख्यक्रमानुरोधादिन्यायेन क्रमोपि सिद्ध्येदित्यर्थः । सा धकान्तरमप्याह ( गुणप्रधानेति ) ब्रह्मोपसर्जनतया इतरेषां निरूप णमुचितं , त्वयातु ब्रह्मणएव इतरोपसर्जनतया निरूपणमुक्तमित्य- र्थः । त्वदिष्टं किमपि न साधितमित्यवधारणार्थः । एवमनिष्टप्रसंगात्त्व येव मुपयोगो वक्तुं न शक्यतइति स्थितम् । एव मुप योगमात्रेण सप्रयोजनत्वमंगीकृत्योक्तं , इदानीं मिहोपयोगाभावे एतदधिकारिणस्तत्र प्रवृत्त्यसंभवादिह तन्निरूपणं नस्यादित्याह ( ब्रह्म विदास्त्विति ) ( कर्मापीति ) ब्रह्मविदिति शेषः । यद्विच मोक्षसाध नश्रवणादिव्यासक्तस्य मुमुक्षो स्तदसंभव इति मन्यसे; तदोद्गीथा दिचिन्तायामपि तुल्यमिति भावः । ननु - स्वस्य विविदिषायां जाता यामपि परस्य विविदिषोत्पादनाय तदर्थकर्मसाद्गुण्यार्थंतंप्रत्युपदेशा य उद्गीथादिचिन्तनमित्यत्राह ( तत्रापीति ) कर्मणोपि विचारप्रसंगा दित्यर्थः । ( न विविदिषांगकर्मसिद्धिरिति ) विद्यांगकर्मसमृद्ध्यर्थत्वं तु त्वया नेष्यत इतिभावः । एवमिहोपयोगे वाच्ये साक्षात्संगतिरेवेति स्थि तं । नचैवं प्रसंगसंगत्युच्छेदः । कर्मविचाराधिकार्युपयोगितयैव शेषल क्षणे संगतम्याप्यौपादानिकशेषत्वस्य प्रथुन्यध्याये चिन्तनात् ।

न्तां किन्तु वह्शोत्र तासां चिन्तनात् । एवं कर्मविनिरूपणे ब्र ह्मवेदनापेक्षणात् ब्रह्मनिरूपणेच कर्मवेदन सापेक्षत्वात् अन्यत रत्र्वै ऽशास्त्रनिरूपणासूद्गीथविद्यासूभयविदएव चिन्तनावकाशइति भाविं। शारीरकेच ब्रह्मस्वरूपनिरूपणानन्तरमेव तच्चिन्तनं सूत्रितं । तस्मादत्रैव साक्षात्संगतस्य तच्चिन्तनस्य प्रधानोपयोगापेक्षायां अ नन्तरकर्मसमृद्धिद्वारांगिनो वेदनस्य शीघ्रनिष्पादन नाम महानुप योगः । तदप्याह " तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्यो त्पादकानीति तत्सामुग्यापादकान्येतानि सुतरामिहैव संगतानी " ति । किंच " अर्केचेन्मधुविन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ कोविद्वान्यत्नमाचरेत् ॥" इतिन्यायात्कर्ममात्रेण चेद मृतत्वंलभ्येत कः पुनः कर्मांगकात्कर्मसमुच्चिताद्वा ज्ञानादमृतत्वं लि प्सेतेत्येतदप्युक्तं प्रागेव । अतोपि कर्मण्येव प्राक्प्रवृत्तिः - कर्मणितु निरूपिते न्यायपरिश्रान्तचेतस्तयोत्तरोत्तरातिशयित कर्मविधानादि-

---

हेत्वन्तरेणापि साक्षात्संगतिं साधयति ( एवमिति ) विचारद्वयसापे क्षतया पृथङ्निरूपणीयस्यास्य ब्रह्मचिन्तायां निरूपणं तत्रैव साक्षात्संग तिं द्योतयतीत्यर्थः । ननु प्रसंगादपि तत्र तन्निरूपणोपपत्तेः कथं - साक्षात्संगतिरित्याशंकानिरासाय ब्रह्मस्वरूपनिरूपणानन्तरमेवेत्यु- क्तम् । यदिह्युद्गीथादिचिन्ताप्रसंगतस्स्यात्तदा ब्रह्मविद्यानिरूपणानं न्तरं स्यात् , सातु ब्रह्मविद्याभ्यः प्रागेव ब्रह्मनिरूपणानन्तरं क्रियत इत्यर्थः । साक्षात्संगतौवा कथमिहोपयोग इत्यत्राह ( प्रधानेति ) नित्य फलेच्छायामपि कर्मणएव पूर्ववृत्तत्वमित्याह ( किंचेति ) ( संसिद्धा विति ) अयत्नेनेति शेषः ( कर्ममात्रेणेति ) आपातप्रतीतिदशायां त- त्राप्यक्षयफलत्वप्रतीते स्सर्वेभ्यः कामेभ्यइत्यादिना सर्वान्तर्भावेण मो क्षफलत्वप्रतीतेश्चेति भावः । ( न्यायपरिश्रान्तेति ) सम्यगभ्यस्तन्या यतयेत्यर्थः ( उत्तरोत्तरेति ) प्रयत्नतारतम्यात्फलतारतम्यासिद्धिः; त- च्च स्वरूपतः कालतोवा वाच्यम् , तथाऽऽवृत्तिविधानादपि तत्सिद्धि

भिः कर्मणामल्पास्थिरफलत्वमवसाय तत्संवादकानिच " परीक्ष्य लोका " नित्यादीनिवाक्यानि प्रागापातधीजनकान्यपि निरूपित संवादाद्यथाश्रुतार्थानि सामान्यतो निश्चित्यानन्तस्थिरफलस्य केवलक र्मभिरलभ्यतां मत्वा प्राचीन कर्मोपस्कृतज्ञानसाध्यानन्तस्थिरफ लापातप्रतीत्या प्रतिबन्धकराहितया सञ्जातबुभुत्सातिशयः शारीरक शास्त्रमारभेतेति स्थितमेतत् । कथंच नित्यानित्यवस्तुविवेकसिद्धये शा स्त्रान्तरावकाशः ; प्रागुपनयनात् कामचारवादभक्षितया यथोपल- ब्धकुक्षिभरेर्बालस्य शास्त्रान्तरावतारशंकापि नास्ति , उपनीतस्य -

---

रित्यर्थः । ( निरूपितेति ) अनित्यत्वप्रतिपादकांशस्य निरूपणसंवा दित्वादंशान्तराण्यपि यथाश्रुतार्थएव न्यायसंवादीनीति सामान्यतो- निश्चित्येत्यर्थः । अत्र निश्चयशब्देन समानकोटिकसंशयविरोधित्वं वि वक्षितम् । एतन्निश्चयानन्तर मुत्कटकोटिकएव संशयो भवति नतु समानकोटिकइति भावः । तेन नापातप्रतीत्येति वक्ष्यमाणविरोधः । ( प्रतिबन्धकराहित्येति ) उक्तरीत्या प्रथमभाविनी कर्मजिज्ञासानिवृत्ते ति भावः । ( बुभुत्सातिशयइति ) पूर्वोक्तसामान्यनिश्चयो तिशयहे- तुः । एवं नित्यानित्यवस्तुविवेकस्यौपदेशिकत्वे कृत्स्नस्यौपदेशिकत्व सम्भवाद्विचारवैयर्थ्यमुक्त्वा विधिबला द्विचारमाशंक्य विध्यंगीकारे- ऽपि कर्मणएव पूर्ववृत्तत्वं स्यादित्युक्तप्रसंङ्गाद्रागप्राप्तिपक्षेपि क्रमनि- यम उपपादितः । एव मौपदेशिकनित्यानित्यविवेकपक्षो दूषितः । शास्त्रजन्यनित्यानित्य विवेकपक्षे दोषान्तरमाह ( कथंचेति ) ( काम चारेति ) ततश्च यथेच्छाचारिणो नुपनीतस्य अलौकिकपुरुषार्थेच्छा विरहेण तदर्थं प्रवृत्तिर्न सम्भवति । नच - शास्त्रान्तरप्रवृत्तेः काम चारान्तर्भावः । बह्वायाससाध्यत्वात् । नच - ख्यात्याद्यर्थं प्रवृत्तिसंभवः; बालंप्रति तस्य पुरुषार्थत्वासिद्धेः, तादृशपुरुषार्थोपि तस्य प्रसिद्धका मचारादावेव , एतदभिप्रेत्यैव तस्य भोजनैकप्रयोजनकत्वमुक्तं, ( य- थोपलब्धकुक्षिम्भरेरिति ) ननु कर्मविचारानन्तरं अध्यापकाभावादिना

वेदाध्ययने नियुक्तत्वात् अधीतवेदस्यापि तदर्थविचारे विधिना रा गेणवा प्रेरितत्वात् तयोश्च विंशतिलक्षणीश्रवणमन्तरेणानुपरमात् । अक्रमप्रवृत्तांस्तु नशास्त्राधिकारिणइति स्वीकुर्मः । अन्यथेदानीमेव - अकृतव्रतस्य अनधिगतांगस्य लिखितपठितस्वाध्यायस्यैव मीमांसा धिकारप्रसंगात् सौगतादीनामप्य स्मन्मतदूषणार्थिनां ब्रह्मविचाराधि कारप्रसंगाच्च । अतो हेत्वन्तरा न्नित्यानित्यवस्तुविवेकोय माशामो दकायते । तेनान्यस्मात्तदसिद्धौ न तद्वतो ब्रह्मविचारः, तेनैव तद्व त्तेतितु मिथस्संश्रयः पुनरुन्मज्जति । एतदभिप्रायेण भाष्यम् "नित्यानि त्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्त" इत्या दि । एतेनैव द्वितीयोपि कल्पो दूषितइति भाष्यकाराभिप्रायः । तथाहि - यदि नित्यानित्यौ पदार्थौप्रमाणेन निश्चित्य तद्वते हेयो- पादेयत्वे विविच्येते तदा पूर्वोक्तमेवोत्तरम् , चक्रकापत्तेः । अथ नित्यमस्तिचेत्तदुपादेयं अनित्यंचेदनुपादेयमित्येव मात्मविवेकः, तद पि मन्दम्; अपुरुषार्थत्वे नित्यस्याप्यनुपादेयत्वात्, अनित्यस्यापि-

---

**ब्रह्मविचारप्रवृत्तिप्रतिबन्धे व्याख्यानार्थं सांख्यादिशास्त्रे प्रवृत्तिर्युज्यत एवेत्यत्राह ( अक्रमप्रवृत्तांस्त्विति ) अध्ययनविधिप्रयुक्त क्रमातिक्रमे- ण प्रवृत्तानित्यर्थः । ( मीमांसाधिकारप्रसङ्गादिति ) अतश्च "अथातोधर्म जिज्ञासे" त्यत्र वेदाध्ययनानन्तर्य मथशब्दार्थो न स्यादिति भावः । एवं "अथातश्शेषलक्षण" मित्यादावपि पूर्वपूर्वाध्यायार्थवृत्तता अथ शब्दा- र्थो न स्यात् । ( सौगतेति ) तथाच साधनचतुष्टयस्यापि पूर्ववृत्तत्वं तव नसंभवतीति भावः । हेयोपादेयत्वविवेकइति द्वितियकल्पं दूषय ति ( एतेनेति ) ( पूर्वोक्तमिति ) अन्योन्याश्रयइत्यर्थः । चक्रक मपिहि तद्गर्भमेव, श्रवणेन नित्यानित्यनिश्चयः तेन हेयोपादेयताज्ञान मनेनश्र वणमिति चक्रकमित्यर्थः । ( अपुरुषार्थत्वइति ) पुरुषार्थशब्दस्सुखादि परः, उपादेयत्वशब्दइच्छाविषयत्वपरः , विवेकिना मनित्यमनुपादेय**

पुरुषार्थताया मुपादेयत्वात् । अतएवह्यनित्यस्वरूपस्य मोक्षसाधनस्या नुष्ठानं । अथ पुरुषार्थेषु नित्यमस्तिचेत् तदेवोपादेयमिति विवेकः; एवं विधसंशयात्मकविवेकस्तु शास्त्रान्तरे कर्मविचारेपि प्रवर्तयितुमलमिति नासाधारण्यम्, तत्रापिहि"अपामसोमममृता अभूम" "अक्षय्यँहवैचातुर्मास्ययाजिनस्सुकृतंभवती " ति नित्यफलापातप्रतीत्या संशयउपपद्यते । वस्तुतस्तत्रनित्यफलं नास्तीतिचेत्किमतः; अधिकुर्वाणस्य तदनिश्चयात् । आप्तवाक्यादेवादौ निश्चिनोतीतिचेत्; तर्ह्यत्रापि ततएव नित्यमस्तीति निश्चिनुयादिति नित्यमस्तिचेदित्येवं रूपयद्युपनिबन्धनानुपपत्तेः । तथानिश्चयेच प्राग्वदेवोत्तरं । यदि नित्यमस्तीति सामान्यतो विस्रम्भः; तर्हि इदं नित्यं इदमनित्यमिति विविच्योपदिष्टेपि शक्यं विश्वसितुं; तथाच वृथा - वेदान्तवाक्यविचारइति । याच शमदमादिसाधनसम्पत् सा किं - श्रवणौपयिकतादात्विकावधानरूपा विवक्षिता; उत "शान्तोदान्त" इत्याद्युक्तजितेन्द्रियत्वरूपेति । पूर्वस्यास्तावद्धेतुत्वमिच्छामः, तस्यास्सर्वग्रन्थ श्रवणसाधारण्यात् नासौ वेदान्तश्रवणे विशेषइति नात्र तद्विवक्षा युक्ता । सांख्यादिश्रवणेऽपिहि तादृग्विधतादात्विकशान्त्यादि सम्पद्युक्तैव । द्वितीयातु न श्रवणं प्रति साधनं - " शान्तोदान्त उपरतस्तितिक्षुस्समाहितोभूत्वाऽऽत्मन्येवात्मानं पश्ये " दिति दर्शनसाध

---

**मेवेत्यत्राह ( अतएवेति ) सामान्यतो वेदान्ते नित्यमस्तीति निश्चये - दोषान्तरमाह ( तथेति ) विवृणोति ( यदीति ) ( नित्यमिति ) ननु- यस्य सामान्येन वेदान्तवाक्यानि नित्यपुरुषार्थप्रतिपादकानीत्युपदेशः, विशिष्यतु नोपदेशः, तं प्रति विचारस्सार्थक इति चेन्नः नित्यफल सम्भावनयापि प्रवृत्त्युपपत्तेः, तस्याश्च सांगाध्ययनादेव सिद्धत्वात्, औपदेशिकनित्यत्वावधारणस्य कल्पनानुपपत्तेः । तर्हि भग्नं कर्मविचारस्य पूर्ववृत्तत्वमित्यत्राह ( तस्याइति ) श्रवणद्वारा दर्शनांगत्वं श्रु-**

नत्वया तच्छ्रुतेः । नच — तद्दर्शनं श्रवणफलमिति दर्शनसाधनभूतश्र वणांगत्वं शमादीनामिति वक्तुं युक्तं ; श्रुतहानाश्रुतकल्पनयादि दो षप्रसंगात् । अविधेयज्ञानवाद शब्दजन्यप्रत्यक्षयोश्च निरस्तत्वात् । एषांच शमादीनां ब्रह्मविद्यांगतयोपादेयत्वं साधनलक्षणे शमदमा धिकरणेऽवगन्तव्यम् । अतएते शमादयः कथं शारीरकश्रवणात्पू र्वमुपात्तास्स्युः । अयमत्रसंग्रहः — शान्त्यादयोविधास्यन्ते विद्यांगत्वेन संयुताः । शास्त्रारंभे कथं तेषां उपयोगस्त्वयोच्यते ॥ * ॥ इदंचोक्तं भाष्ये-- "नित्यानित्यवस्तुविवेकादयश्च" त्यादिशब्देन संग्रहात् । तथाशमादी नां साधनत्वावगतेः कर्ममीमांसापेक्षतया कर्मविचारपूर्ववृत्तत्वस्य दुस्त्यजत्व मप्युक्तम् — "एषांसाधनत्वंच विनियोगावसेयं, विनियोगश्चश्रुतिलिङ्गादिभ्यः सचतार्तीय" इति । यद्यपि शारीरकमीमांसायामेव अपेक्षिताः श्रुतिलिङ्गा दयोपि व्युत्पादयितुं शक्यन्ते; तथापि संगतिविशेषा त्सामान्यत स्तृतीयाध्यायएव तद्व्युत्पादनं प्राप्तमिति सिद्धोपयोगमात्रमत्रकर्तव्यं, नपुनस्तद्व्युत्पादनेप्रयतितव्यं । इदंच तार्तीयश्रुत्यादिसापेक्षत्वाभिधानं प्रदर्शनार्थं; कथंवेदप्रामाण्यस्थापनमन्तरेण तदर्थभूतब्रह्मविचारोपिस्यात्, तत्प्रामाण्यंच प्रथमाध्यायसाध्यं, कथंच सामान्यतश्शास्त्राणां शास्त्रा र्थानांच द्वैतीयभेदाभावेदुरनुष्ठानतादृस्थं प्रामाण्यं प्रतिष्ठितंभवेत् ;

---

त्यपेक्ष्यत्राह (नचेति) (श्रुतेति) "शान्तः परेत" इति स्वरसतश्श्रुत- स्य साक्षात्साधनत्वस्य त्यागः अश्रुतस्य श्रवणसाधनत्वस्य कल्पनं- चेत्यर्थः । ननु — दर्शनस्याविधेयत्वेन तदंगत्वासंभवा न्मनननिदिध्या सनयोश्चांगत्वेन मुख्यांगत्वे सम्भवति तदंगत्वकल्पनायोगात् श्रवणं प्रत्येवांगत्वमित्यत्राह (अविधेयेति) किञ्च — श्रवणांगत्वेपि फलोप- कार्यंगत्वात् शमादेः पूर्ववृत्तत्वमित्यपि द्रष्टव्यम् । त्वत्पक्षे दर्शनसा- धनतया श्रवणविधानञ्च न सम्भवतीत्याह (शब्दजन्येति) श्रवणे प्र वृत्तस्यानन्तरजेन विचारेण ब्रह्मविद्यांगत्वमवधार्यानन्तरमेव ब्रह्मविचार्थं

कथंवा विद्याख्येषु शास्त्रार्थविशेषेषु भेदाभेदचिन्तावकाशः, तेनशब्दा न्तरादयोद्वैतीया विशेषतश्चिन्त्याः । तार्तीयोपयोगस्तु दर्शितस्थलान्तरे भाव्यः, श्रुतिलिङ्गादेस्सर्वत्रापेक्षणात । उद्गीथविद्यादेः क्रत्वर्थत्वपुरुषार्थत्वा दिविमर्शस्तु तौर्यप्रयुक्तिसापेक्षः, षोढाविभक्तपाञ्चमिकक्रमप्रमाणापेक्षिणी चार्चिराद्यातिवाहिकगण पौर्वापर्यव्यवस्था, कर्तृलक्षणन्यायोपजीविनीच ब्रह्मविद्याधिकारवर्णाश्रमादि धर्मविशेषस्थापना । एवं " तेषामेकैकएव तावा न्यावानसौपूर्वे " इत्यादिष्वप्यतिदेशादिसापेक्षत्वमनुसन्धेयम् । सूत्रकारोऽपि"तदुक्त"मित्यादिना कर्ममीमांसायां सामान्यन्यायान् प्रथ क्सिद्धानुदाहरतीति भवद्भिरपिव्याख्यातमेव । नचायं शारीरकेवक्तव्य मेवतन्द्रालुतया परोपजीवनेन दर्शयतीति वाच्यम् , तत्र तत्रैवतत्सं गतेः स्थापितत्वात् । नच - प्रसिद्धैर्न्यायैः स्वयमेववेदप्रामाण्यादिकं विचारयामः किं जैमिनीयेनेतिवाच्यम् । तथापि कर्मविचारपूर्ववृ त्तत्वस्यदुष्प्रतिक्षेपत्वात , तत्रविचारसागरे परिप्लवमानानां यदिजैमिनि ना कर्णधारायितं, सएषक्षम्यतामपराधः । एवंच लोकोत्तरप्रज्ञेन भवता बादरायणीयमपि नादरणीयमविशेषात । नचायं क्रमनिय मोऽर्थस्वभावादापतन् जैमिनीयो बादरायणीयोवा, येन तत्राभ्यसूयि ष्यसि । अतः कार्त्स्न्येन कर्ममीमांसासापेक्षत्वप्रदर्शनार्थमेव शमादिसा धनत्वावगते स्तार्तीयापेक्षाभाषणं । यद्यपीहामुत्रफलभोगविरागमुमुक्षुत्वे

---

**तया तदनुष्ठाना न्तरस्य श्रवणात्पूर्वत्वं युक्तमित्याह ( एषामिति ) विधास्यन्ते - ब्रह्मविद्यांगत्वेन कर्तव्यतया निरूपयिष्यन्ते । ( तत्रैवे- ति ) मुख्यक्रमाद्यनुसारेण कर्मविचारपूर्वत्वे सिद्धे तत्रापेक्षिततया न्यायानां तत्रैव संगतत्वादित्यर्थः । ततश्च एतदधिकारिणा तेषां न्या यानां ज्ञातत्वादेवेहानिरूपणं, नतु तन्द्रालुत्वादिति भावः । ( दुष्प्र तिक्षेपत्वादिति ) मुख्यक्रमानुरोधन्यायादिति भावः । इष्टापत्ति माशंक्य तत्रानादरेपि मुख्यक्रमादिसिद्धे क्रमे नाभ्यसूया कार्येत्याह ( नचाय मिति ) नन्वेवंसति मुख्यक्रमादेरेव पूर्ववृत्तत्वसाधकत्वं नतु न्याय-**

पूर्ववृत्तत्वेनभाषिते—( यद्यपि इहामुत्रफलभोगविरागो मुमुक्षुत्वंचे त्युभयं नियतपूर्वमसाधारणं सप्रयोजनाभिधानं चेत्यभ्युपगच्छामः, तथोक्तं भाष्ये — ) :" अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्मजिज्ञासाह्यनन्तरभाविनी" ति; तथापि पुरुषप्रवृत्तिक्रमविशेषसूचनस्वारस्यात, कर्मविचारपूर्ववृत्तत्वो क्त्यैवतयोरप्यर्थलब्धत्वात्, अनन्तास्थिरफलतया प्रथममापात प्रती तकर्माख्य प्रतिबन्धकनिवृत्तिसूचनेन निर्विघातब्रह्मविचारारम्भद्योतनात्, यज्ञादिवाक्यार्थापेक्षित पदार्थनिश्चयवत्त्वव्यंजनाद्यथावस्थितब्रह्मतदुपासना दि तत्त्वावगमहेतुभूत न्यायकलापशीलनोद्भेदात् अपवर्गोपायभूतोपासनापे क्षिता नभिसंहितफलसहकारिवर्गस्वरूपनिश्चयांशोपजीवनाभिप्रायाच्च कर्मविचारस्यैव पूर्ववृत्तत्वोक्तिः प्रयोजनवत्तामेतीति तामेवाद्रियामहे । अव्यवहितं पूर्ववृत्ततया वक्तव्यमितिचेत्तर्हि मुमुक्षुत्वमेकमेव त्वयापि वक्त व्यम् । तदर्थतया पूर्वेषामुक्तिरितिचेत्तुल्यम् । प्रयोजनाधिक्यं मिथःसंश्र याद्यभावश्च विशेषः । एतेन तापत्रयाभिहतिपूर्ववृत्तत्ववादिनोपि प्रत्युक्ताः, तापत्रयाभिहतिमात्रस्य मन्त्रौषधिनीतिशास्त्रादि प्रवृत्ति साधारण्यात । दृष्टानु श्रविकविषयवितृष्णा पर्यन्तायास्तु तस्याः क र्मविचारसापेक्षत्वस्थापनात् । तथोक्तं सांख्यैरपि " दुःखत्रयाभिघा ता ज्जिज्ञासातदुपघातकेहेतौ । दृष्टेसापार्थाचे न्नैकान्तात्यन्ततोभावा त् ॥ दृष्टवदानुश्रविकस्सह्यविशुद्धः क्षयातिशययुक्तः " इति । एवं कर्मपरीक्षोपबृंहितैव सा भाष्येप्युक्ता " तापत्रयातुरै रमृतत्वाय स एव जिज्ञास्य " इति । श्रुतिश्च " परीक्ष्यलोकान् कर्मचितान् ब्रा ह्मणो निर्वेदमायात " इत्यादिका । अतः " अथातोब्रह्मजिज्ञासे " त्यत्र न साधनचतुष्टयाद्यानन्तर्यं सूत्रकृदभिप्रेतं, अपितु कर्मवि चारानन्तर्यमेव । तथाच वृत्तिकारः " वृत्तात्कर्माधिगमादनन्तरं ब्र ह्मविविदिषे " ति । अयंच पक्षो भास्करैरप्यंगीकृतः । निरीश्वरमी मांसकैरपि " कृत्स्नाध्येतुर्निश्शेष वेदार्थविज्ञानाय मीमांसारम्भ " इति

वदद्भिः कर्मोपक्रमं शास्त्रमर्थतो ब्रह्मविचारशिरस्कमित्यभ्युपगन्तव्यमेव । नच द्वादशाध्यायमात्रे शास्त्रं पर्यवसितं; शबरस्वामिप्रभृतिभिः संकर्षकाण्डांशस्य सूत्रोपादानात्, शास्त्रान्तरत्वादुपनिषद्भागचिन्तेति पक्षस्यच त्वदीयैः कैश्चित्परिग्रहादिति ।

इति श्री कवितार्किकसिंहस्य सर्वतंत्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदांताचार्यस्यकृतिषु

शतदूषण्यां साधनचतुष्टय पूर्ववृत्तत्व भंगोऽष्टमः ॥

---

सापेक्षताया इतिचेत्, सत्यम्, शास्त्रापेक्षितानां न्यायानां कर्मविचारसिद्धतया कर्मविचारस्य अथातश्शब्दपरामर्श योग्यताप्रतिपादनपरत्वाद्भाष्यस्य ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां साधनचतुष्टय पूर्ववृत्तत्वोक्ति भंगोनाम

॥ अष्टमस्कन्धः ॥

श्रीः ।

श्रीमते रामानुजायनमः ।

श्रीमते निगमान्तमहादेशिकायनमः ।

## अथ नवमोवादः ॥

हयग्रीवसुधासिन्धु हर्षहेषारवोर्मयः ।

जयन्ति वादवेलान्तक्षिप्त बाह्यकुदृष्टयः ॥

---

( हयग्रीवेति ) चन्द्रदर्शनजन्यहर्षेण समुद्रोर्मिषूत्कटत्व दर्शना दत्राप्युत्कटत्वसिद्धये हर्षाधीनत्वमाह ( हर्षेति ) तेन दूरक्षेपो व्य ज्यते, ऊर्मयोहि वेलान्ते क्षिपन्ति - हेषास्तु वेलान्तादपि क्षिपन्ति, उपाध्यनुक्त्या सुधापदेनानन्दस्य विवक्षितत्वाच्च स्वाभाविकानवधिका तिशयानन्द लाभेन चन्द्रदर्शनजन्यहर्षादतिशयो हि गम्यते, तेन प्र सिद्धोर्मिभ्योतिशयसिद्धिः । वादवेलान्तादित्यर्थः । पंचमीति योगवि भागेन तपरइतिवत्समासः । वादस्य वेलात्वेन रूपणात् भाष्यका रादीनां हयग्रीवात्मक सुधासिन्धुतया तदुपदेशसूक्तेर्हेषात्वेनच रूप णं विवक्षितमिति गम्यते । उपदेशस्य वादवेलान्तात् क्षेपकत्वोक्त्या- हेषात्वरूपणेनच, 'एतच्च विस्तरेणे' त्यतः प्राचीनग्रन्थस्योपदेशरूपत्वमु- त्तरग्रन्थस्थशंकानां परिहारगर्भत्वं, तस्य अस्पष्टत्वंच व्यज्यते, तेन- वादान्तरे ष्विव सिद्धान्ताकथनात् ग्रन्थो न पूर्णइति न भ्रमितव्यम् । सिद्धान्ताकथनेन कथानधिकारे कथानधिकारकथा कथंप्रवर्तेतेति शंका परिहारमभिप्रैति । याथात्म्यविद्धिरित्यनेन निश्शेषमेव शंका परिहृता । अयं भावः ; ॥ * ॥ याथात्म्यंहि प्रमाणानां साधकत्वे प्रयोजकं । तच्च- सत्वं परन्यायात्ततो मानमसाधकम् ॥ प्रातिभासिकमानेन व्यावहारि कसाधकं । व्यावहारिकमानेन तत्वंसिद्ध्येन्नचान्यथा ॥ प्रातिभासिक मानेच काचित्सिद्धिस्ततोनच । किन्तुमानान्तरादेव संवादान्नैवबाधकम् ॥ स्वान्यार्थगोचरज्ञान मनुमापकमुच्यते । तेन नस्यान्यवाक्यानां हेतूनां

विस्तरेण कुदृष्टिमतमनुभाष्य " तदिद''मित्यादिना " न्यायानुगृहीतवाक्य प्रत्यक्षादिसकलप्रमाणवृत्त याथात्म्यविद्भिरनादरणीय " मित्यन्तेन शिष्यान् प्रत्युपदिशतो भाष्यकारस्यायं भावः, सौगतानामिव प्रच्छन्नसौगतानामपि कथायामनधिकार इति । वेदार्थसंग्रहेच स्पष्टमाह– " सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तसर्ववस्तुमिथ्यात्ववादिनश्च स्वपक्षस्थापकप्रमाण पारमार्थ्यानभ्युपगमादभियुक्तैर्वादानधिकारएव प्रतिपादितः, " अधिकारोनुपायत्वान्न वादे शून्य वादिनः । " इति । अयमाशयः -- ॥ * ॥ यदिप्रपंच मिथ्यात्व वादी वादाधिकारितां । भजेन्माध्यमिकस्यापि भवेद्वादाधिकारिता ॥ तथाच ब्रह्मतत्त्वंते निर्गुणं निष्प्रमाणकं । कथं मध्यम बौद्धस्य विवादे

---

**च्चप्रमाणता ॥ असाधकाभिमानस्य योग्येस्वमतनीतितः । साधक वक्र्मेणैव कथासनमनुत्तमम् ॥ प्रमाणभूषैरारूढं प्रापिरस्सन्तिदुरध्वना । निष्कासनीयास्तेसर्वे वादगोष्ठीसमीपतः ॥ * ॥ इति । ' विस्तरेणानुभाष्यशिष्यान् प्रत्युपदिशत' इत्यनेन सर्वत्र शिष्यान् प्रत्येवोपदेशाः क्रियन्ते, मायिककुतर्कैन्द्रजालैस्साविकान् कुदृष्टयो वशमानयेयुरित्यधिकारमारोप्यतैस्सहविवादाभिनयेकृते शिष्याणां हृद्यताभवतीति तद् भिनयः क्रियतइति सूच्यते । " परमपुरुषवरणीयताहेतुगुणविशेष विरहिणामनादि पापवासनादूषिताशेष शेमुषीकाणा " मित्यादिना सौगतसाधारण धर्मोक्त्याऽस्याधिकारे तद्गुरोरप्यधिकारो भवेदिति प्रतिबन्दिरभिप्रेतेत्याह ( अयंभावइति ) सर्वशून्यवादिनइत्यारभ्य शून्यवादिनइत्यन्तो वेदार्थसंग्रहग्रन्थः । अभियुक्ताः - पूर्वतन्त्रव्याख्यातारः । ( अनुपायत्वादिति ) प्रमाणतर्काणां तन्मते शून्यत्वात् तन्मतेनैवानधिकारइत्यर्थः । शून्यवादिविषयस्य कथं प्रकृतसंगति रित्याशंक्याह ( अयमाशयइति ) प्रतिबन्द्युत्थापकत्वान्नासंगतिरिति भावः । मध्यमोमाध्यमिकः । सहि कथानधिकारा न्निष्कासनीय इति मन्यसे तवापि तादृशत्वात् त्वया कथं तन्निष्कासनमिति भावः । नापलप्यतइत्ययमा**

र्नोपलप्यते ॥ * ॥ एतच्चविस्तरादुपपादयामः । तत्र यत्ताव त्खण्डितं; कथकयोः प्रमाणादिसत्ताभ्युपगमः कस्यहेतोः ? किंतत्सत्ता भ्युपगमसाहित्यनियतस्य व्यवहारस्यान्यथा प्रवर्तयितुमशक्यत्वात् ? उ तनद्व्यवहारंप्रति तस्यहेतुत्वात् ? लोकव्यवहारासिद्धत्वात्? तदनभ्युपगम स्य कथाफलातिप्रसंजकत्वाद्वा । न प्रथमः; तमंतरेण तत्तीर्थकरैस्तद नुमारिभिश्च व्यवहारस्य प्रवर्त्यमानत्वात् । अन्यथा भवतस्तन्निरास प्रयासानुपपत्तेः । साधनबाधनक्षमो व्यवहारः प्रमाणादिसत्ताभ्युपग मसाहित्यनियतइति तमन्तरेण तत्क्षमत्वं न स्यादिति चेन्न; सा धनबाधनक्षमत्वं प्रति सद्वचनाभासलक्षणयोगित्वस्यैव प्रयोजकत्वा त् । सत्वाद्यभ्युपगमे सत्यप्याभासे तदक्षमत्वस्य सर्वसम्मतेः । अ स्मद्वाक्येचाभासत्वस्य दुरुपपादत्वात् । सत्तानभ्युपगममात्रेणाभासत्वो क्तौ सत्ताभ्युपगमेन भवद्व्यवहारएवाभासइति विपरिवर्तप्रसंगात् ।

---

शय इत्यन्वयः । इत्थं संक्षिप्तोऽर्थो विस्तरेणोपपादनीयइत्यत्राह ( एतच्चेति ) पूर्वपक्षविस्तरात्परमुखेन सिद्धान्त्याशयोद्घाटनादुपपादयाम इत्यर्थः । पूर्वपक्षमाह ( तत्रेति ) यत्खण्डितं तत्र तावदित्यन्वयः। तस्य - प्रमाणादिसत्ताभ्युपगमस्येत्यर्थः । कथाफलमन्यतरार्थनि- र्धारणम् । प्रमाणसत्तानभ्युपगमे प्रतिवाद्यभिमतार्थः कथं नसिद्ध्ये- दिति भावः । ( तत्तीर्थकरैरिति ) - सिद्धान्तिवाक्यप्रस्तुताः शून्यमिथ्या वादिनो गृह्यन्ते । तदपलापे बाधकं तत्सम्मत्यैवाह ( अन्यथेति ) प्रमा णतर्कयोरसत्वे साधनबाधनक्षमता न स्यादर्थक्रियाकारित्वासंभवात् । तन्निरासप्रयासश्चाधिकाराभ्युपगमा दप्युपपद्यतइत्याशंकते ( साधन बाधनेति ) ( सद्वचनेति ) सद्वचनाभासः - साधुवचनप्रतियोगिकाभासः, ( आभासत्वमिति ) दृश्यतइतिशेषः । ननु प्रमाणादिसत्तामन- भ्युपगच्छन् परीक्षकः कथं प्रमाणादिभिर्व्यवहरेत् , ततश्च व्यवहारए व नस्यात् , तस्यैवासिद्धौ कथं प्रतिवादी पूर्ववाद्युपन्यस्तप्रमाणादेराभा सत्वं साधयेत् , कथंच इदमेवंत्वात्सल्लक्षणयोगि, इदमेवंत्वादसल्लक्ष

अस्तिच सत्ताभ्युपगमेसत्यपि असिद्धविरुद्धादेराभासत्वं । ननु प्र माणादिसत्ताभ्युपगमाभावे व्यवहारस्यैव धर्मिणोऽसिद्धौ तस्य कथ माभासत्वसाधनं, कथंवा सद्वचनाभास लक्षणयोगित्वादि प्रयोजका वधारणामुखेन दूषणदूष्यादि व्यवस्थापनं; सर्वेषां स्थापनबाध नानां प्रमाणाधीनत्वात्; मैवं सत्ताभ्युपगममात्रेण प्रसिद्धिसिद्धेः प्र माणादिभिरस्माकं व्यवहारोपपत्तेः । उक्तञ्चेष्टसिद्धिकारैः— "सत्यं; प्रसिद्धिरस्ति, अतएव व्यवहरामः, किन्तु ना स्यामूलंपश्याम" इति । यथाप्रमाणादीनि सद्रूपाणि स्वीकुर्वता भवता प्रमाणं सा धकं नतदाभासइत्यादि व्यवह्रियते तथा व्यवहारिभिरेव सर्वैः प्र माणादिसत्त्वासत्त्वचिन्तायामुदासीनैः कथाप्रवर्त्यतामिति ह्यादिशा मः । यदिचैवं नानुमन्यसे तिष्ठामस्त्वयास्मास्वारोपिते सत्तानभ्युप गमपक्षे । तथापि सांप्रति त्वदुक्तमाश्रया सिद्ध्यादिदूषणं दुर्वचं, दूषणंहीदं कथायां प्रवृत्तस्यैव वाच्यम् - न पुनराहरतो विहरतो वा । साच कथा कयापि मर्यादया प्रवर्तनीया, तत्र वादिप्रति वादिभ्यां सत्वाभ्युपगमे तादृक्पर्यनुयोगानवकाशः । उभाभ्यामसत्या

---

**णयोगि - अतइदंदूषणेन दूष्यमिदं नेति व्यवस्थास्यात्, स्थापनानां बाधनानांच प्रमाणाधीनासिद्धित्वात्, प्रमाणस्यैवासत्त्वे कथं लक्षणयो गादिनिर्धारणमिति शंकते (प्रमाणादीति) (सत्ताभ्युपगममात्रेण प्र- सिद्धिसिद्धेरिति) व्यावहारिकैरित्यर्थः । व्यवहारे प्रमाणादीनां सत्व मप्रयोजकमित्यभिप्रायेणेष्टसिद्धिग्रन्थं विवृणोति । (यथेति) किंवा दिप्रतिवादिभ्यां उभाभ्यां सत्वाभ्युपगमेन प्रवर्तितायां कथायामिदं- दूषणमुच्यते ? उतो भाभ्यामसत्वाभ्युपगमेन प्रवर्तितायां ? यद्वा - एकेन सत्वमितरेण चासत्वमुपगम्यप्रवर्तितायां ? अथवोभाभ्यामपि प्रमाणादि सत्ताभ्युपगमौ दासीन्येन व्यवहार नियमे - स म- यं बध्वा प्रवर्तितायामिति मर्यादाविभाग मभिप्रेत्य क्वापि मर्या- दायां नास्मान् प्रति दूषणो द्भावन संभव इत्याह । (त- त्र वादिप्रतिवादिभ्यामित्यादिना) प्रतिबन्दिमुक्त्वापरिहारान्तरमा-**

भ्युपगमे परस्येव स्वस्यापि प्रसंगः । एकेन सत्वमितरेणचासत्त्वम भ्युपगम्यप्रवर्तितायामिदं दूषणमुच्यते चेत्; तद्वदेव कथान्तरस्यापि प्रसक्तिरनिवार्या ; कथानियमस्यचोभयाभ्युपगम प्रकारानुरोधित्वात् । अन्यथा कस्य स्वेच्छया त्वदुक्तेपि वाङ्मात्रेणापि दूषणप्रसंगेन जयपराजयव्यवस्थाभंगप्रसंगात् । यश्चैकस्तस्यां कथायां प्रमाणादिसत्त्वमिच्छति तस्यैवैषानियमभरयन्त्रणा । अथोभाभ्यामपि प्रमाणादिसत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमे समयं बध्वा प्रारब्धायां कथायां दूषणमिदमुच्यते । तदा स्वाभ्युपगमविरोधएव त्वयैवापादितःस्यात् । अथ दुर्वैतण्डिकेन कथां बध्वातस्यैव दूषणं न ब्रूमः ; अपितु शिष्यादीन् प्रति तस्य कथानधिकारं दर्शयाम इति चेन्न । शिष्यादीन् प्रत्यपि चार्वाकसौगतमायावादिनामयं दोषइति वक्तव्यम् - सच दोषो निग्रहस्थानात्मा, तस्य कथाप्रवेशाप्रवेशयोः न तद्बाधक्षमः । नच कथामन्तरेण निग्रहः । नापि द्वितीयः; सत्ताभ्युपगममन्तरेणापि प्रमाणादीनां व्यवहारहेतुत्वस्यमाध्यमिकादिषुप्रदर्शितत्वात् । अथव्यवहारहेतुत्वादेव प्रमाणादीनां सत्त्वं, सत्त्वाच्च तदभ्युपगमः; असतोऽभ्युपगमायोगादित्युच्यते तदपिन; अस्याप्यर्थस्यकयापि नियमस्थित्याप्रवर्तितां कथामंतरेणदुस्साधत्वात् । ततश्चसिद्धासत्ताभ्युपगमात्पूर्वं कथाप्रवृत्तिः । नचसा

---

**ह ( कथानियमस्यचेति ) असत्त्वाभ्युपगन्तारं प्रतिवादित्वेनाभ्युपगम्यप्रयुक्तायां कथायामसत्त्वप्रयुक्त माश्रयासिद्ध्यादिदूषणं नोद्भावनार्हमितिभावः । अन्यथा - उभयाभ्युपगमप्रकाराति लंघनेन दोषोद्भावने । कस्य - कस्यचिदित्यर्थः । तस्यां कथायां सत्त्वाभ्युपगमवादिनं प्रत्यपि दोषोद्भावनं नस्यादित्यत्राह ( यश्चैकइति ) ननु व्यवहारहेतुत्वंवदतात्वयैव प्रमाणादीनां सत्त्वंसमर्थितं, हेतुत्वस्य नियतपूर्वसत्त्वरूपत्वात् तेन सत्त्वाभ्युपगमस्सिद्धः । असत्त्वस्यचोक्तौ सत्त्वतदभावाभ्युपगमयोर्व्याघात इति शंकते । ( अथेति ) ननु प्रमाणादीन्ये**

पिनियमस्थिति रसत्ताभ्युपगमगर्भेतिवाच्यम् ; तत्त्वावधारणपरपराजयोप
यिकोभयसम्भावितव्यवहारनियमसमयबन्धमात्रेणसमीहितसिद्धेः । नच
समयबन्धेपि सत्ताभ्युपगमगन्धः; प्रमाणतर्काभ्यां व्यवहर्तव्यं परस्परं
प्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थानं प्रदर्शनीयं, तदुत्पादने तद्वतोभंगो
व्यवहर्तव्यः, अन्यथातदुत्पादनासमर्थस्य, अ (न्य)भग्नस्तुजेतेतिव्यवह
र्तव्यः, प्रामाणिकतयाप्रतीतः पक्षस्तत्वमितिव्यवहर्तव्य इत्येवमादिस्व
रूपेनियमबंधेपिसत्ताभ्युपगम प्रसंगाभावात् । नच समयबंधेऽपिहेतुर्वाच्यः.
सच कथाप्रवृत्तिमन्तरेण नवक्तुं शक्यइति, सत्ताभ्युपगमहेतुत्वाभिधान
विषय प्रत्यवस्थानप्रतिबन्द्यवतारः; तत्त्वनिर्णयविजयमूलत्वेन लोकसि
द्धस्याविचारित रमणीयस्य व्यवहारनियमस्य हेतुमन्तरेण वादिभ्यां द्वा
भ्यामपि स्वेच्छयैवग्रहणात् । नचैवं प्रमाणमूलत्वाभावेन विचार तद्विष
य तत्फलविप्लवप्रसङ्गः; अनादिपारम्पर्यागतस्य लोकव्युत्पत्तिसंवादिनस्त
स्य असंभवान्यथाभावाभावरूपस्वतश्शुद्धिसिद्धत्वात् । नच प्रमाणादिग
त्तापिस्वेच्छयैवांगीकार्या; व्यवहारनियममात्रेणैवान्वयव्यतिरेकवतानिरपेक्षे

---

**वसमयेनिबध्यन्ते नतु सत्त्वमिति कुतइतिन शंकासंभवइत्याह ( न चेति ) यद्येवंशंक्ये तदा दोषमाह ( सचेति ) सहेतुश्चसत्त्वमि त्यर्थः । समयबन्धे प्रमाणाद्यन्वये सत्तान्वयेच कोहेतुः, किमयम यंवेति संशय्य अन्यतरनिर्धारणायावाभ्यां कथाप्रवर्तनीया, तथाचात्रै वकथायामधिकारोदुरपह्नवइति कथान्तरेकथमनधिकारः, ततश्चसत्ता भ्युपगमस्य कथाहेतुत्वसमर्थनविषयकथायां प्रतिवादिनः प्रत्यवस्थानं यथांगीक्रियते तथान्यत्रापीति याप्रतिबन्दी तादृश्येवेहापि प्रतिबन्दीस्या दित्यर्थः । उपसंहरति ( तत्त्वनिर्णयेति ) ग्रहणादित्यनन्तरं नसम यबन्धहेतुर्वाच्यइत्यध्याहारः । तस्य-व्यवहारनियमस्य ( असंभवेति । असंभवान्यथाभावाभावरूप स्वतश्शुद्ध्यासह सिद्धत्वादित्यर्थः । स्वे च्छयैवपूर्वनियमांगीकारवयमपि स्वेच्छयासत्ताभ्युपगमस्य हेतुत्वमंगी कुर्मइत्यत्राह ( नचेति ) ( व्यवहारनियममात्रेणेति ) अनादिव्यव**

ण कथाप्रवृत्ति तत्फलोपपत्तौ तादृशेतरनिरर्थकसत्ताभ्युपगमायोगात् ।
नापि तृतीयः; लोकव्यवहारइतिप्रामाणिकव्यवहारविवक्षायां तस्य वि
चारप्रवृत्तिमन्तरेण दुर्निरूपतया तदर्थमेव पूर्ववत् नियमस्य गवेषणात् ,
पामरादिव्यवहारविवक्षायां निर्मूलव्यवहारशरण्यस्य ते शरीरात्मत्वा
दयोपि स्वीकर्तव्यास्युः; पश्चात्तनबाधात्तत् परित्यागश्चे त्प्रमाणादिसत्ता
पि सामान्यतो विशेषतश्चा स्मदुक्ताभि र्युक्तिभि र्बाध्यमाना परित्या-
ज्या । अथ बाधाभावात्तत्परिग्रहः; तथापि न लोकव्यवहारस्य तत्परिग्राह
कता, बाधाभावविचारेचपुनर्नियमान्वेषणावतारः । नापि चतुर्थः;
प्रमाणादि सत्तामभ्युपगच्छता त्वयेव तत्सत्वासत्वानुसरणोदासीनेन मयापि
तथाविधस्यैव व्यवहारनियमस्यावलंबनात् तस्यच मां प्रति फलातिप्रसंज
कत्वे त्वां प्रत्यपि तुल्य प्रसंगस्स्यात् । यथाचाभ्यवहारादिव्यापारे
ष्वपिसत्तामनिच्छतांमाध्यमिकादीनां तत्फलनियमः, तथात्रापि ।

---

हारसिद्धनियममात्रेणेत्यर्थः । अन्वयव्यतिरेकौ साधनबाधनाभ्यां, नैर
पेक्ष्यं सत्ताप्रतियोगिकं. तादृशेतरः – अन्वयव्यतिरेकवद्भिन्नः ( पूर्व-
मिति ) ततश्चतद्विचारेनसत्ताप्रवेशइतिभावः । पामरव्यवहारएवगृह्य-
त. नच शरीरात्मप्रतिबन्दी, शास्त्रश्रवणानन्तरम् तद्बाधादित्याशंकते
( पश्चात्तनेति ) ( सामान्यतइति ) प्रपंचोमिथ्या दृश्यत्वादित्यादि विव
क्षितम् ( विशेषतइति ) खण्डनोक्तप्रमाणादिखण्डनं विवक्षितं । उ-
द्धाराभिप्रायेणशंकते ( अथेति ) तथापीति ) प्रतिज्ञाभंगइतिभावः ।
दोषान्तरमाह ( बाधाभावेति ) तद्विचारेच न सत्ताप्रवेशावकाश इ
ति भावः ( प्रमाणादीति ) सत्त्वाभ्युपगमवादिनोपि न हेतोस्सत्वमा
त्रेणार्थनिर्णयः, किन्तु साधुहेतुनैव, ततश्च सत्त्वानभ्युपगमेपि नाति
प्रसंगः, एवमप्यतिप्रसंगापादने सत्त्वाभ्युपगमवादेपि तथा स्यादित्य
र्थः । परिहारान्तरमाह ( यथाचेति ) * सत्त्वोपगमसाहित्य तद्धे-
तुत्वाबलात्तथा । अनादिव्यवहाराच्च फलस्यातिप्रसंगतः । सत्त्वानुप-
गमनेन कथायामधिकारिता । प्रातिभासिकतालग्ना मानादौ पूर्व-

ननु व्यवहारनियमसमयबन्धस्य सत्ताभ्युपगमेऽनुप्रविष्टः, व्यवहारो हि क्रिया, साच निष्पादनात्मिका, तच्चासत स्सद्रूपताप्रापणं, प्रमाणादिभि र्व्यवहर्तव्यमित्यत्र प्रमाणादेः करणत्वं नियमान्तर्गतं, तच्च कारणत्वविशेषः, कारणत्वंतु नियतपूर्वकालसत्वं, दूषणसत्वे भंगः, साधनांगभूतव्याप्त्यादिसत्वेच तद्विषय स्तत्वमितिच नियम्यते, अतो व्यवहारनियमसमयबन्धादेव व्यवहारक्रिया तत्कारणदूषणसाधनांगादे स्सत्वं कण्ठोक्तमिति कथं सत्तामनभ्युपगम्य कथारंभइति; मैवं ; एभिरपि सत्तानभ्युपगमबाधकैः कथायां प्रवृत्तायामेव सत्ताभ्युपगमस्य प्रसाधनीयत्वात्, ततश्च पूर्वोक्तबाधाया दुस्तरत्वात् ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां कथानधिकारवादो नवमः ॥

---

साधनात । विस्तरोयमभिप्रेतो विस्तरादिति बुध्यताम् ॥ * ॥ ननु-कथाप्रवर्तकसमवायोहि कथाधिकारः, प्रवर्तिकाच मानादिसाधकता बुद्धिः, साभ्रमः प्रमावेति न निरूपणमर्हति, तथासत्यन्यतरसाधकाना माभासत्वनियमेनान्यतरवादिन स्साधकत्वभ्रमस्यापि नियततया कथायाएवोच्छेदात, सत्त्वानभ्युपगमाभासत्व निबन्धनभ्रमयोरविशेषादिति चेन्न; निजमतिरीतिसिद्ध मसाधकत्व मविगणय्य कथामधिकुर्वन्तश्छिन्ननासाइव न प्रक्षणीया इति मनीषया शिष्यान् प्रत्युपदेशादिति . —

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्व याथात्म्येन तदेकदेव तेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां कथानधिकार वादभंगोनाम नवमः स्कन्धः ॥

श्रीः ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# अथ दशमस्कन्धः ।

विचित्रं यत् स्वेन स्फुरति विषयाकारभिदुरं
तदेव ब्रह्मैकं विगुण मपि साक्षा त्कृतमिति ।
वदन्तो वैयात्या द्बहुविहृति वात्याहत धियो
विधूयन्ते हन्त श्रुतिशत शिरश्शूल वचसः ॥

य एष मन्त्रवादः, यद्यपि प्रमाणानि सर्वाण्यपि सविशेषमर्थ मभि निविशन्ते ; तथापि स्वप्रकाशाध्यक्ष सिद्ध निर्विशेष संवित्सद्भावे नवि मन्तव्यं, अन्यथा धार्ष्ट्यात् सर्वापन्हवस्यापि दुर्निवारत्वात् । किंच संवित्स्वप्रकाशत्वं तावत्त्वय्यन्तविदां सर्वेषा मविगीतं, तत्र प्रकाशात्मता- मात्रेण स्वतस्सिद्धायां संविदि न जडस्वरूपधर्मानुप्रवेशावकाशः । प्र-

---

सर्वेषां प्रत्यक्षादिप्रमाणानां सविशेषविषयत्वा न्निर्विशेषव- स्तुनि न किञ्चि त्प्रमाण मिति वदतः प्रत्याह पूर्वपक्षे ( यद्यपीति ) ( अन्यथेति ) स्वप्रकाशसिद्धेपि विमतौ प्रत्यक्षादिप्रमाणसिद्धे प्यना श्वासात् सर्वापह्नवः स्यादित्यर्थः ( अविगीतमिति ) परन्तु निर्विशेष विषयं सविशेषविषयं वेत्येव विवाद इति भावः। ततः किमित्याशंक्य किं जडरूपधर्मविषयतया सविशेषविषयत्वं , उतजडत्वविषयतयेति , विकल्प मभिप्रेत्याद्ये दोषमाह ( तत्रेति ) स्वाभिन्न प्रकाशात्मकत्वेनैव संवि त्स्वात्मानं प्रकाशयति, न जडमपि प्रकाशयति , तस्य मिथ्या- त्वेन दोषाधीनस्य स्वरूप विलक्षणन प्रकाशविषयत्वायोगादित्यर्थः । द्वितीये दोषमाह ( प्रकाशात्मकाइति ) प्रकाशात्मको धर्मी इत्यत्र्यं

काशात्मकास्तु नतद्भूतो विवेक्तुं शक्यन्ते, अन्यथा तेषां परप्रका-श्यतया प्रकाशात्मत्वासिद्धेः। नच स्वरूपमात्रस्वप्रकाशे अन्यतो धर्मसिद्धिरितिवाच्यं;अनुपलभ्यमानसाधनात् तद्बाधनस्थलत्वात्,निर्विशेषत्वानुभवेन तन्निरासव्याघातात्,सविशेषानुभवानां तदपेक्षया दुर्बलत्वात् तेहि तद्विषयतयैव लब्धसत्ताकाः प्राथमिकेन सर्वसाक्षिणा निरपेक्षेण दुष्टकारणशंकादवीयसा स्वानुभवेन सह न स्पर्धितुमर्हन्ति। तादृशस्वप्रकाशस्यतु भ्रान्तित्वोक्तौ संविदसिद्ध्या सर्वासिद्ध्यापातात्।

---

ते तेषां संविद्भेद एव स्यादित्यर्थः (अन्यथेति) संविदपेक्षया भेद इत्यर्थः। ननु स्वरूपमात्र प्रकाशकतया सिद्धे स्वरूपप्रकाशे विशेषस्यापि विषयत्वं प्रकाशत्वेन हेतुना घटप्रकाशवत् सविशेष विषयत्व साधनात सिद्ध्यतीत्यत्राह (नचेति) प्रकाशे – प्रकाशतयेत्यर्थः। तत्प्रतीति विषयत्वेनानुपलभ्यमानस्य तत्प्रतीतिविषयत्वसाधनादपि तत्प्रतीतिविषयत्वाभावांगीकार एवोचितः, प्रतीतेरधिक विषयकत्वकल्पने गौरवा दित्यर्थः। प्रकाशत्वहेतुश्च प्रतिकूलतर्क पराहतइति भावः। नन्वेव मपि स्वप्रकाशो न निर्विशेषसाधने प्रभवति, प्रकाशमानत्वादिना निर्विशेषत्वाभावस्यैव साधनात इत्यत्राह (निर्विशेषत्वेति) (व्याघातादिति) बाधादित्यर्थः। ननु संविदि आश्रयविषयकृता विशेषाः प्रत्यक्षमेवानुभूयन्ते इत्यत्राह (सविशेषेति) हेतुद्वयेन दौर्बल्य मुपपादयति (तेहीति) तिल्लानुभवप्रकत्वा जडतया मिथ्याभूता एवेति साक्ष्यधीन सत्ताकाः, अतः प्राथमिकेनोपजीव्येन न स्पर्धितु मर्हन्ति। तद्विषयतयैव लब्धसत्ताकत्वोपपादनायाह (सर्वसाक्षिणेति) किश्चानादित्वा त्साक्षिणो न दुष्टकरणजन्यता, विषयप्रकाशांशे दोषापेक्षायामपि न स्वरूपाभिन्न निर्विशेषप्र-काशांशेपि तदपेक्षा, जन्यप्रत्यक्षन्तु तदपेक्षमेव, अतस्सविशेषानुभवः स्वप्रकाशेन बाध्य इत्यर्थः। संविद्विषयताहि संविदभेदेनाध्यासः, तेन न पूर्वोक्त जडधर्माननुप्रवेशोक्ति विरोध इति भावः। ननु स्वप्र-काशो भ्रान्तिरित्यत्राह ( तादृशेति ) बाधकमुक्त्वा साधकाभावादपि

नच बाधकाभावेन भ्रान्तित्वं, नचाननुभवेनैव बाध इति वाच्यं, नचात्र योग्यानुपलंभः; करणाद्ययोग्यत्वेन विशेषणासिद्धेः; स्वयोग्यत्वेपि स्वेनानुपलंभायोगेन विशेष्यासिद्धेः । नच नरविषाणादि सद्भावेपि एवं साधयितुं शक्यइति वाच्यम् ; तस्य स्वसिद्ध्या समर्थने तस्यैवानुभूतित्वात् , अन्यतस्तु तदसिद्धेः , साधनेच बाधात् । यद्यपि जागरस्वप्नयो र्विचित्र बाह्योपलम्भ कलुषितधियोर्न तद्विविक्तावभासः ; तथापि सुषुप्तिमदमूर्छासमाधिमुक्त्याद्यवस्थासु तस्यैव साम्राज्यं । नच सुषुप्त्यादिषु तत्प्रकाशस्य प्रतिबन्धेन प्रतिसन्धान प्रसंग इति वाच्यं; इष्टप्रसंगरूपत्वात । एतावन्तं कालं न किंचि दहमज्ञासिषं. सुख मह मस्वाप्स मिति तादात्विक ज्ञान सुखसाक्षित या तत्प्रतिसन्धानात् । तदेवमात्मसाक्षिक निर्विशेषानुभवस्या रोपितोपराग . विनिवारणमुखेन संवादकतया वानुग्राहक मनुमानागमादिक मप्याद्रियामहे नवेति ॥

तत्रोच्यते । किमसौ निर्विशेषा संवित् स्वप्रकाशसिद्धेति स्वयं-सैव भूत्वा प्रतिपादयति, अथ ततोऽन्यएव तटस्थस्ता मुपलम्भयं ।

---

**न भ्रान्तित्वमित्यत्राह ( नचेति ) यदि स्वप्रकाशेनैव निर्विशेषस्वरूपं सिद्ध मित्युच्यते, नत्वनुभवान्तरेण, तर्हि अननुभवादेव तादृशस्वरूपं बाधितमित्यत्राह ( नचेति ) उपपादयति ( नचात्रेति ) चोद्यार्थः । नह्यनुपलम्भमात्रेण बाधः, किन्तु योग्यानुपलब्ध्या, तत्र किं करण तज्जन्यज्ञानयोग्यता विवक्षिता, उत स्वयोग्यता, आद्ये दोषमाह ( करणेति ) द्वितीये दोषमाह (स्वयोग्यत्वेऽपीति ) आभास समान योगक्षेमता माशंक्य निराकरोति ( नचनरविषाणेति ) पादवत्त्वादिकं नरे विषाणसाधक मस्तीत्यत्राह ( साधनेचेति ) ननु लोकसिद्ध संविद एवहि त्वया निर्विशेषविषयत्व मुच्यते , साच संवित्सविशेषविषयैव दृश्यत इत्याह ( यद्यपीति ) तद्विविक्तावभासः- वाक्यार्थविधुरावभासः ।**

न प्रथमः; तस्यास्स्वयाथाम्यप्रतिपादनादि संरम्भवैमुख्यात् । अन्यथा तस्याएव विषयादिवैशिष्ट्यस्यावर्जनीयत्वेन स्वनिर्विशेषोक्ते रळीक वादत्व प्रसंगात् । विषयादिविशेषाणा मारोपितत्वा न्नाळीकवाद इति चेन्न: तदनुल्लेखे तन्निषेधोक्त्ययोगात् । तदुल्लेखेतु विशिष्टप्रकाशावश्यम्भावात् न स्वेन निर्विशेषप्रकाशः । नापि द्वितीयः; स तु तामुपलंभमानः ततोन्यथावा तथैव वा स्यात् , पूर्वत्रावेद्यत्व विरोधः, अनुव्यवसाय वेद्यत्व पक्षपातात् । उत्तरत्रापि सर्वलोकसम्मतां संविदमेव तथोपलभते ततोऽन्यांवा । आद्ये भ्रान्तित्वापातः, साहि विषयाश्रय स्वगतविशेषै र्विशेषितैव सर्वै स्संदृश्यते । नच - तत्तन्मिथ्यात्वेपि संविद स्तत्प्रकाशरूपत्वापन्हवः । नच योगादिप्रभावात् विशुद्धप्रकाशो जात इति वाच्यम् , योगस्यैव भ्रान्तित्वापातात् । नच शुक्तिकारजतप्रकाश मप्यालम्बनमात्ररहित मितिवदन् योगीश्वरोपि न भ्राम्यति । द्वितीयेपि किमसौ महाभागः स्वस्माएव स्वसुखादिवत् सिद्ध्यन्तीं तां परस्मा उपदिशति, उत प्रतिवादिनोपि तथा सिद्धां । नाद्यः; अविस्रम्भात् , पुळकोद्गमादिवत् लिंगाभावाच्च । नेतरः; स्वप्रत्ययसिद्धस्य परोपदेश

---

( अन्यथेति ) तस्या स्तादृशसंरम्भे प्रतिपाद्यभूतविशेषेण प्रतिपादकेन शब्देन प्रतिपादनसम्प्रदान प्रतिवादिनाच विषयतया वैशिष्ट्यं वाच्यं अन्यथा प्रतिपादना संभवात्, ततश्च निर्विशेषोक्ति रळीकवाद एवेत्यर्थः । ( स्यादिति)उपालंभमानस्स्यादित्यर्थः ( पूर्वत्रेति) स्वभिन्नप्रकाश्यत्वस्यैव वेद्यत्वरूपत्वादिति भावः (उपलभतइति ) निर्विशेषविषयतयेति शेषः। ननु योगाद्वा देवप्रसादाद्वा प्रसिद्ध संविदेव निर्विशेषविषय वगोचरा प्रतीति र्ज्ञायतइति तत्संवादान्नास्यास्संविदो भ्रान्तित्वप्रसंग इत्याशंक्याह ( नचेति ) ( योगस्येति ) योगज्ञानस्येत्यर्थः । तदुक्ता वविस्रम्भपि पुळकोद्गमनादिना हर्षादिवत् केनचिल्लिंगेन तस्य तादृशोऽनुभवोऽनुमीयता मित्यत्राह ( पुळकेति ) किञ्च किमयमुपदेशस्स्वानुभवं

नैरपेक्ष्यात् । नहि सुखादिसद्भावमात्रं परस्मा उपदिश्यते । न च सहृदयः कश्चि त्तथाविधानुभव मपन्होतु मीहते, नापि योग्या नुपलम्भ निराकृत सद्भाव मभ्युपगन्तुम् ।

ननु न कस्मैचि त्सासिध्यति, अतः स्वस्मै परस्मै वेति को वि कल्पावकाश इति चेत : सा तर्हि न सिध्येदेव, सिध्यन्तीवा क स्मैचिदेव स्यात् । सिद्धिमात्र मियमितीति चेत ; कस्य कं प्रतीति व क्तव्यं । न कस्यचि त्कंचि प्रतीतिचेत , न तर्हि सा सिद्धिशब्दा र्थतया व्युत्पतुं शक्या । स्वस्याएव स्वात्मानं प्रतीति चेत्, इदन्तु दावदहनाविवश जरदजगर परिभ्रमणम्, कथमसौवराकः स्वस्या एव स्वात्मानं प्रति सिद्धरूपां तां ततोऽन्य स्तथैवोपलभते । तन्मयाभून-

---

निहुवानं प्रति, उत स्वस्मिन् तादृशानुभवाभाव मुपलम्भमानं प्रति? नाद्य इत्याह ( नहीति ) द्वितीय आह ( नापीति ) उभयत्रापीहमानो वा न त्वदुपदेशेश्रद्धां कुरुत इति भावः ( अतः स्वस्माइति ) स्वस्मा एव स्वसुखादिवत् सिद्ध्यन्तीं परस्मै उपदिशति, उत प्रतिवादिनोऽ पि सिद्धा मित्युक्तविकल्पानवकाश इत्यर्थः . ( नसिद्ध्येदिति ) स्व रूपमेव न स्यादित्यर्थः । व्यवहारानु पपत्त्या सावश्यमंगीकार्येवेत्यत्राह ( सिद्ध्यन्तीवेति ) नहि सर्वोऽपि पदार्थः कस्मैचिदेव, उत्पन्न विनष्ट घटे तदभावादिति शंकते ( सिद्धिमात्रमिति ) सिद्धेः कर्मसापेक्षत्वं आ श्रयसापेक्षत्वंच नियत मित्यर्थः । उभयमप्यसिद्ध मिति शंकते ( नक स्यचिदिति ) ( नतर्हीति ) आश्रय कर्म सापेक्षत्वेनैव सर्वत्र सिद्धे रु पलम्भादितिभावः . ( स्वस्याइति ) कर्मणिषष्ठी । ( इदमिति ) तादृ- शोह्यजगरः पुरतो दहन मुद्वीक्ष्य ततो निवृत्तः पश्चा ज्जिगमिषु स्तत्रा पि तमेव दृष्ट्वा केनचि दवकाशेन गन्तु मशक्तः पुन स्तमेव देश ग त्वा दहने निपतति , तथा पूर्वदोष एव पतिष्यतीत्यर्थः । तदेवोपपाद

त्वा त्तथोपलभत इति चेन्न, प्रागेव दूषणात् । ततो लोकसिद्धा सं विद्विषयाश्रयादिविशिष्टैव स्वतः प्रकाशते, तदुत्तीर्णातु न स्वतो नापि परत इति तस्याः शशविषाणतुल्यतैव ।

ननु लोकोत्तीर्णसंवित्स्वरूपं स्वप्रकाशमिति भवद्भि रपीष्यते, त त्कथ मस्मदुक्ते विरागः । तर्हि समबुद्धिरसि, वयं हि प्रत्यक्षाद्यगोचरं ब्रह्म स्वरूपं, तस्य स्वप्रकाशत्वादि धर्मवर्गंच श्रुतिबलात्स्वीकुर्मः, भवतस्तु प्रमाणपोतं परित्यज्य स्वप्रकाशत्वालाबु परिग्रहेणा पारसाग रं निस्तर्तु मिच्छतो नेदानी प्रभूता श्रुतिः पुरस्कार्या, तत्पुरस्कारेपि सा सविशेषमेव प्रतिपादयतीति वक्ष्यामः । अतो न साम्यमिति ।

यत्पुनरुक्तं, प्रकाशात्मन स्स्वस्यैव स्वतस्सिद्धत्वात्, जडात्मनां केषांचिदपि धर्माणां तदन्तर्भावानुपपत्तिरिति, तदसिद्धस्यासिद्धेन सा धनं, कस्यचित्पुरुषस्य कंचिद्धर्मविशेषं प्रति प्रकाशविशेषरूपतयै व सर्वेषामनुभवानां स्वतस्सिद्धेः । अतः स्वविषयत्वसाश्रयत्व धर्मा भावे तुल्यन्यायतया स्वतस्सिद्धिरपि नस्यादेव ।

---

यति ( प्रागेवेति ) स्वयाथात्म्य प्रतिपादनादि संरंभ वैमुख्यादि त्युक्तत्वादित्यर्थः । कथमित्यस्य प्रश्नार्थमभिप्रेत्याह ( तर्हीति) ( समबुद्धिरिति )नक्वचित्पक्षपाती भवसि, तत्वबुभुत्सुरसीति यावत् (अपारसागरमिति)- संशयो विवादोवा विवक्षितः । किं स्वरूपप्रकाशमात्रेण जडविषयत्वा भावस्साध्यते, उत स्वरूपप्रकाशन इतरविषयाभावस्यापि विषयीकरणात , नाद्यः; स्वरूपप्रकाशेऽपीतरप्रकाशाविरोधात् । नह्येकमेव प्रकाश्यमिति नियमः , व्यभिचारात् क्वापि तददर्शनाच्चेत्यभिप्रेत्य द्वितीयं दूषयति ( तदसिद्धस्येति ) तदेवोपपादयति ( कस्यचिदिति ) घट महं जानामीति किंचि त्पुरुषाश्रयतया घटत्वाद्याश्रयविषयकतया अपरोक्षत्वादि विशेषरूपेणच स्वतस्सिद्धे रित्यर्थः ( अतइति ) एवं स्वरूपाति रिक्तस्यापि प्रकाशमानत्वेस्थिते सविषय वादिनां प्रकाशापह्नवे ,

यत्पुनः प्रकाशात्मकास्तु न ततो विवेक्तुं शक्यन्त इति; तद्प्यसत् , साजात्यमात्रेण तादात्म्येतिप्रसंगात् , ज्ञानरूपो ज्ञानाश्रयश्चात्मा स्माभिरिष्यते, तद्वद्धर्मभूतज्ञानमपि यदि ज्ञानस्वरूप वर्मान्तराश्रयतया उपलभ्यं तदा तदप्यंगीकुर्मः, अनुपलम्भात्तु तदनभ्युपगमः, नच विविच्यमानतामात्रेण स्वप्रकाशात्मता भंगः, सर्वासामपि संविदां स्वयं प्रकाशानामपि संविदन्तरकर्मत्वस्य समर्थयिष्यमाणत्वात् ।

यत्तु स्वरूपमात्रस्यप्रकाशेप्यन्यतो धर्मसिद्धि रित्यनुपलभ्यमानसाधना त्तत्साधनस्य लघुत्वमुक्तं, तदपि चार्वाकसौहार्दं, अनुमानाद्युच्छेदप्रसंगात् । उपलभ्यन्तेच धर्मा इत्युक्तं ।

यदप्युक्तं निर्विशेषस्यानुभवेन तन्निरसनव्याघातः, सविशेषानुभवानान्तु तदपेक्षया दुर्बलत्वमिति; तत्तदा सुन्दरं, यदि द्वयोरपि स्वरूप मुपलभ्य बलाबलचिन्ता वर्तेत, इहतु निर्विशेषस्यानुभव एव नोपलभ्यते ।

यच्च निर्विशेषानुभवैक विषयतया सविशेषानुभवानां सत्ताला भादिकमुक्तं, तदपि प्रस्तुतप्रतीपं, प्रकाशात्मता मात्रतया स्वतस्सि

---

स्वरूपस्यापि तदपह्नव स्सुशक इत्यर्थः । प्रकाशात्मकस्य विशेषस्य किं संविदभेदानुभवा त्तत्तादात्म्यं, उतसाजात्यानुभवात्? नाद्यः; असिद्धेः । ज्ञानात्मक ज्ञातुर्भेदेनैव संविदनुभवात इत्यभिप्रेत्य द्वितीये दोषमाह (साजात्यमात्रेणेति) सर्वेषामपि घटानां एकत्वापत्ते रित्यर्थः । तर्हि ज्ञानस्य ज्ञानाश्रयत्व प्रसंग इत्याशंक्य इष्टापत्त्या परिहरति (ज्ञानरूपइति) यदि ज्ञानस्य ज्ञानाश्रयत्व मिष्यते तर्हि धर्मभूतज्ञानस्यापि ज्ञानाश्रयत्व प्रसंगइत्यत्राह (तद्वदिति) अन्यथा तेषामपि परप्रकाश्यतया प्रकाशात्मकत्वासिद्धेरित्युक्तं दूषयति ( नचेति ) यद्यनुपलभ्यमानस्य कल्पनामात्रमेव गुरु, तदा दोषमाह (तदपीति) यदि ज्ञानस्याधिकविषयत्वकल्पनायां गौरवं तदा दोषमाह ( उपलभ्यन्तइति ) (तदपि प्रस्तुतेति)

द्धायां संविदि कथं विषयाश्रयादि विशेषित सविशेषमनुभवान्तर प्रका शः । कारणाद्ययोग्यत्वात् न योग्यानुपलम्भ इत्येत दनुभूते रनुभू-त्यन्तरविषयत्वस्य वक्ष्यमाणत्वात् निरस्तम् ।

यच्च स्वयोग्यत्वेपि स्वेनानुपलम्भायोगेन योग्यानुपलब्धे विशे ष्यासिद्धिरिति, तत्र कः स्वेनानुपलम्भं ब्रवीति, सविशेषतयातु सं विदुपलम्भं ब्रूमः, ननु निर्विशेषतयेति. स्वेन निर्विशेषतयोपलम्भस्य योग्यानुपलम्भं वदामः, तथाहि — किं जागरदशायामेव निर्विशेषं स्वतः प्रकाशतइति मन्यसे, उत स्वापाद्यवस्थायां, यद्वा सर्वाव-स्थानुपलब्धमपि युक्तिबलात् निर्विशेषतया निष्कृष्यत इति. अथोप लम्भयुक्त्यन्यथात्वेपि शब्देन तथा निर्दिश्यत इति । न प्रथमः, विषयाश्रयस्वगतविशेषैः विशिष्टतयैव तदानी स्वनएव तद्गोचरानुभवा न्तरेणवा संविस्वरूपस्य प्रकाशनानत्वात् । तदेतदाह - “ इदमहम दर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वा संविदा मनुभवाना ” मित्यादिना । नापिद्वितीयः , तत्रापिह्यनुभवोऽस्तिचेत् स विशेष-एव , नचेत् कस्य निर्विशेषतया प्रकाशः । “ स्वापमदमूर्छासुच सविशेष एवानुभव इति स्वावसरे निपुणतर मुपपादयिष्याम ” इति भाष्यं । अयमभिप्रायः, सुषुप्त्यादिदशाया मिदमर्थप्रकाशनं तावत् नास्तीति सर्वसम्मतं . अहमर्थप्रकाशस्तु त्वया नेष्यते , इष्यमाण त्वेपि न तस्य निर्विशेषतया स्फुरणं, प्रत्यक्त्वा नुकूलत्वादिरूपेण -

---

विषयताच नाभेदाध्यासः विशेषमित्थ्यात्वस्येतः प्रागसिद्धे रिति भावः । (सविशेषतयेति) कर्त्रादि विशिष्टतयेत्यर्थः ) (उपलम्भ युक्त्यन्य थात्वे ऽपीति) उपलम्भयुक्त्यो स्सविशेषविषयत्वेपीत्यर्थः । ( विषयाश्रयेति) स्वगतविशेषाः - ज्ञानत्वापरोक्षादयः । ननु भवद्भि र्ज्ञानस्य निराकारा ङ्गीकारात् स्वापादिषु विषयादिभाना नभ्युपगमात् विषय [illegible]

स्फुरणात्, अन्यथा तत्प्रकाशएव नास्तीति । अथ पुनर्जानामीति प्रतीयमानोर्थ स्तदानीं विषयाश्रयशून्यः प्रकाशतइति मन्यसे, तदपि न; तस्य तन्निरूपणीयस्वभावतया तद्विरहेण प्रकाशायोगात् । नहि छेद्यादिविधुर श्छिनत्ति परशुः । वयन्तु - यद्यपि नित्यां संविदं श्रुतिबलादभ्युपगच्छामः, तथापि तस्या न निर्विशेषायाः प्रकाशमिच्छामः, निराश्रयायावा स्थितिं । अत स्सुषुप्तावपि सा साश्रयैव, संकोचादिधर्मवतीच एकदेशिमतेनात्म विषयतया सविषयाच । ततश्च सुखमहमस्वाप्स मिति परामर्शोप्युपपन्नः । तवतु न तथा, अनुपलब्धेः । नहि सुप्तएव तथा परामर्श मर्हति, विषयाश्रयरहितेयं संविद्विवर्तत इति परामर्शे प्रतिसंबन्धितया विषयाश्रय प्रतीत्यवश्यम्भावेन सुषुप्ति व्याघातात् ।

नापि प्रबुद्ध स्तथा प्रतिसन्धत्ते, नहि सुप्तोत्थित एतावन्तं कालं विषयाश्रयरहितज्ञप्तिरूपेणा ह मवस्थित इति परामृशति, अपितु सुप्तोहं नाज्ञासिषमिति ज्ञप्तिनिषेधेनैव । अहंकारविगमात् विषयानुभवाभावाच्च तत्प्रतिसन्धानमितिचेत्, हन्त भवानेव निर्विशेषं हन्ति, त-

---

संवित् तदा प्रकाशत इति वाच्य मित्यत्राह ( वयंत्विति ) (ततश्चेति ) सविशेषाया स्संविद स्सुषुप्ता वनुभवादेव सुप्तोत्थितस्य सुखित्वविशिष्टतया अहमर्थाश्रयतयाच स्मृतिरुपपन्नाहीति परामर्शशब्दौ ज्ञानपरौ । किंच यदि तथा नुभवः स्यात् , तदा सुप्तोत्थित स्तथा परामृशेत् , न तथा परामृशतीत्याह ( नापीति ) प्रत्युत ज्ञानाभावमेव परामृशतीत्याह ( अपित्विति ) ( अहङ्कारेति ) अहङ्कारस्य सुप्तौ प्रलीनत्वात ज्ञप्तिरूपेणाह मवस्थित इति न सुप्तोत्थितस्य परामर्शसंभवः । किंच स्वरूपप्रकाशे सत्यपि विषयानुभवाभावा न्नसुप्तोत्थितस्य परामर्श संभव इत्यर्थः ( हन्तेति )सुप्तोत्थित परामर्शाभावोपपादनेन स्वापदशायां तादृशानुभवे मानाभावस्यैवोपन्यासात् न तदा तादृशानुभ-

दप्रतिसन्धानस्यैवोपपादनात् । किंचान्याभावस्य अन्यानुल्लेखस्यच- दृष्टमात्रस्मृतिप्रतिबन्धकत्वा योगात्, अन्यथा अतिप्रसंगात् । नचा नुभूतस्य स्मरणनियमो नास्तीति वाच्यम् । प्रतिदिवसं चिरका- लमन्यवैमुख्येन प्रत्यक्षेणैव प्रकाशमानस्यार्थस्य निखिलसंस्कारतिर स्कारक मरणवेदनादि प्रबलतरप्रतिबन्धकाभावेपि सावधानेना पि नियमेनास्मरणस्या नुभवाभावपर्यवसानात् ।

यत्त्वेतावन्तं कालं न किंचिदहमज्ञासिषमिति अज्ञानसाक्षित्वे नानुभूतिः प्रकाशत इत्युक्तं, तद्विपरीतफलं, नहि ज्ञानप्रतिषेधएव ज्ञानप्रकाशे प्रमाणं भवितु मर्हति । ज्ञानाभावातिरिक्तंत्वज्ञानं नि- रसिष्यते ।

किंचायं परामर्शोऽहमर्थानुवृत्तिं ज्ञाननिवृत्तिंच परामृश न्नहमर्थनि वृत्तिं ज्ञानानुवृत्तिंच वदत स्ते अत्यन्तप्रतिकूल एव । एवं सुखम- हमस्वाप्समिति परामर्शोप्यहमर्थस्यैव सुखतया प्रकाशं प्रदर्शये न्नपुन- स्सुखसाक्षितया संवित्प्रकाशम् ।

एवं मदमूर्छाद्यवस्थासुच भाव्यं, ततो न स्वापाद्यवस्थास्वपि निर्विशे षप्रकाशसिद्धिरिति ।

नापि तृतीयः युक्तयापि निरालम्बनतया निष्कर्षस्याशक्यत्वात्,

---

**वसिद्धि रित्यर्थः । ( किंचेति ) अहमर्थाभावे माभूत सुप्तोत्थितस्य तत्प्रति सन्धानमपि, तदानीं प्रकाशमान संवित्प्रतिसन्धानन्तु स्यादेव,नह्यन्याभावो ऽन्यानुल्लेखश्च स्पष्टं प्रतिपन्नसंविन्मात्रस्मृतेः प्रतिबन्धक इत्यर्थः ( अन्यथेति ) कस्यचिदभावात् कस्यचिदनुल्लेखाच्च प्रतीतांशस्याप्यस्मृतौ स्मृतिमा त्रोच्छेद प्रसंगइत्यर्थः । अनुभूतस्य स्मरणनियमाभावा न्नानुभूतावपि संवि त्स्मर्यंत इत्यत्राह ( नचानुभूतस्येति ) किं युक्त्या निरालम्बनत- या निष्कृष्यते, उत मिथ्यालम्बनतया? आद्य आह ( युक्तयेति ) द्वि-**

आलम्बनमिथ्यात्वस्य निर्धर्मकत्वस्यच निराकरिष्यमाणत्वात् ।

किञ्च संविन्निर्विशेषा एवंत्वादितिहि निष्कर्षप्रकारः, तत्र हेतुसाध्यरूपधर्मान्वये कथंनिर्विशेषता, तदनन्वयेतु साध्यसमत्वसाध्याभावौ, तन्मिथ्यात्वेऽप्यन्ततस्तथैव; तयोः संवित्स्वरूपैक्ये पक्षहेतुविभागाभावः, सिद्धसाधनताचेत्यादयो दोषा द्रष्टव्या इति । तदेतदभिप्रेत्याह -"स विशेषोऽप्यनुभूयमानोऽनुभवः केनचि द्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाण स्सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषै निर्विशेष इति निष्कृष्टव्य" इत्यादिकं ।

नापि चतुर्थः , निर्गुणवादस्य खण्डवाक्यार्थस्यच वि

---

तीय आह ( आलम्बनेति ) ( तदनन्वयइति ) हेत्वनन्वये साध्यसमता, साध्यानन्वये साध्याभाव इत्यर्थः । नहि साधनस्य तुच्छता, किंतु मिथ्यात्वमेव, मिथ्यात्वेऽपि व्यावहारिकसत्व मस्त्येवेत्यत्राह ( मिथ्यात्वेऽपीति ) हेतोर्मिथ्यात्वे पारमार्थिकतया भिहित निर्विशेषत्व समान सत्ताकत्वाभावात् न तस्य साधकत्वं, साधनयोग्यस्तु-पारमार्थिको हेतुस्साध्यवदसिद्ध एव, साध्यमिथ्यात्वे सिद्धान्तसिद्धपारमार्थिक निर्विशेषत्वा सिद्धि रित्यर्थः । हेतुसाध्ययो स्संविदभेदात् पारमार्थिकत्व माशंक्याह ( तयोरिति ) ( पक्षहेतुविभागाभाव इति ) स्वरूपासिद्धिरिति भावः ( सिद्धसाधनतेति ) पक्षस्य सिद्धत्वादिति भावः । असिद्धावाश्रयासिद्धि रादिशब्दार्थः ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरण परायणेन तत्प्रसादलब्धमहाचार्यपरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां निर्विशेष स्वप्रकाशत्वभंगो नाम

दशमः स्कन्धः ॥

स्तरेण निराकरिष्यमाणत्वात् । सामान्यतोऽपि पर्यानः, शब्दः किं पदरूपेण स्थित्वा निर्विशेषं बोधयति वाक्यरूपेणवा? नाद्यः, अन्विताभिधानवादेतु केवलपदस्यावाचकत्वात । यथोक्तं- "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकं । न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् " इति । अभिहितान्वयवादेऽपि प्रत्येकं-पदानां प्रमाणत्वाभावात , यथाहुः — " पदमभ्यधिकाभावात् स्मारका न विशिष्यते " इति । प्रत्येकपदशक्तिचिन्तायामपि प्रकृतिप्रत्ययरूपेण स्थितस्य पदस्य क्वचि त्प्रकृत्यर्थविशिष्टः क्वचित्प्रत्ययार्थविशिष्टः प्रतिपाद्य इति कथं निर्विशेषबोधकता । स्वार्थिकप्रत्ययविशिष्टेपि पदे पुनः प्रकृत्यर्थविशेषस्य प्रत्ययान्तरेण विशिष्टविषयत्वमेष्टव्यं । अव्ययान्यपि विशिष्ट मर्थमेव द्योतयन्ति अभिदधति वा । निर्विशेषमिति पदेन किं बोध्यतइति चेत? किं केवलेन, उत वाक्यस्थेन, पूर्वत्र वस्तुनो न किंचित, अव्युत्पन्न भ्रान्तोक्त्योरर्थविशेषानपेक्षणात् । प्रतीतिमात्रमपि जायमानं मनसा किञ्चिदुल्लिख्य तन्निर्विशेषमिति परामृशेत्, तत्रापि वाक्यच्छायया वैशिष्ट्यमेवोल्लिख्येत । वाक्यस्थेनतु तेन पदान्तरोपस्थापित विशेषविरोधेन तद्विवक्षितविशेष निषेधएव क्रियते, यथा - नरपतिरद्वितीयः, नगरी निर्विशेषेत्यादिषु । संवित्समस्तविशेषशून्येति भवत्कल्पितवाक्यन्तु भ्रान्तिमात्रजनकमिति न ततोर्थनिष्कर्षः । नापि द्वितीयः, तत्तत्पदोपस्थापितानेक पदार्थविशेषसंसर्गस्य संसृष्टस्य वा बोधेन निर्विशेषप्रसंगाभावात् । तदेतदखिलमभिसन्धायाह-- " शब्दस्यतु विशेषेण सविशेषएव वस्तुन्यभिधानसामर्थ्य " मित्यादि । अतः प्रतीत्यभावात् निष्कर्षलिंगशब्दाद्ययोगाच्च न निर्विशेषस्व प्रकाशत्व सिद्धिरिति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य श्रीवेदान्ताचार्यस्य कृतिषु शतदूषण्यां निर्विशेष स्वप्रकाशभंगवादो दशमः ॥

श्रीः ।
श्रीमते रामानुजाय नमः ।
श्रीमते निगमान्तमहादेशिकाय नमः

## अथ एकादशस्कन्धः ।

सं प्रज्ञातस्थितिमधिगते निर्विकल्पे समाधौ-
शान्तावद्यं स्तिमितबहुळानन्दसन्दोहमन्तः ।
यत्तद्ब्रह्मस्फुरति यमिनांपूर्णषाड्गुण्यरूपं-
सामेनित्यंहृदि हयमुखी देवता सन्निधत्ताम् ॥

यदेतदाहुः अस्तितावन्निर्विकल्पकं नामप्रत्यक्षं, प्रथमाक्षसान्निपातस मनन्तरं अविशिष्टविषयापरोक्षावभासस्य दुरपह्नवत्वात् । अभ्युपेतंचै-तत्सर्वैर्वादिभिः । ननु शाब्दास्तत्रापि शब्दानुवेधमिच्छन्ति, यथाहुः—"न सोऽस्ति प्रत्ययोलोकेयश्शब्दानुगमादृते । अनुविद्धमिवज्ञानं सर्वं शब्देन गृह्यते " इति । सत्यं तैरपि समाधिदशायां तस्यैव शब्दस्य निरस्तसम स्तकल्पनाजालस्य उपलम्भः स्वीकृतः । किंच शब्दानुविद्धत्वं नसर्व-त्रज्ञाने दर्शयितुं शक्यं, बालादिविज्ञानेषु तदसंभवात्, अन्यथा चैषां व्यु त्पत्तिमन्तरेण तत्तद्वाचकपरिज्ञान प्रसंगात् । बालादि विज्ञानान्यपि सू क्ष्मशब्दानुविद्ध विषयाणीतिचेत्? तथाविधस्यशब्दस्यपरैरनभ्युपगमात् । अभ्युपगच्छतामपि तदनुवेधस्य दुस्साधत्वात् । पदज्ञानमेव तावन्नप्रत्यक्षं किं पुनस्तदनुविद्धस्तस्यविषयः । नच सूक्ष्मशब्दानुविद्धत्व व्याप्तं-

---

तत्र हेतुमाह ( अनुविद्धमिति ) सर्वमपि ज्ञानं शब्दगोचरत्वे नैव अनुभूयतइत्यर्थः ( कल्पनाजालस्येति ) ( बालादीति ) सूक्ष्मत्वं— उच्चारणायोग्यत्वं । ( तथाविधस्येति ) वर्ण पद वाक्य व्यंग्यस्फोटा-तिरिक्तस्या नभ्युपगमादित्यर्थः । प्रत्यक्षादिविकल्प मभिप्रेत्य प्रत्यक्षं ताव दूषयति ( पदज्ञानमेवेति ) ततश्च बालादिज्ञानस्य इतरान् प्र त्यप्रत्यक्षत्वात् किंचिद्विशिष्टरूपेण सुतरां प्रत्यक्षत्वेन शब्दानुविद्धवि षयतया नप्रत्यक्षमित्यर्थः । अनुमानं दूषयति ( नचेति ) अनुपलं-

किंपुनस्त[दनुविद्ध]स्य विषयः। नच सूक्ष्मशब्दानुविद्धत्वव्याप्तं किञ्चिल्लिं गमस्ति। अथ व्युत्पन्नपुरुषबोध दृष्टान्तेन बालादिज्ञानेष्वपि प्रत्यय-त्वादिहेतुभिः शब्दानुविद्धविषयत्वं साध्येत, तदप्यशक्यं, पूर्वोक्तप्रसंगा[पाता]त्। अस्तु स्थूलशब्दानुवेधस्य बाधः, तत्सहकृता त्पक्षधर्मताबला त्सूक्ष्मशब्दानुवेध स्सिध्यतीतिचेन्न। वाचकतया नु वेधविवक्षायां सूक्ष्माभिमत शब्दस्या वाचकत्वादेव तदनुवेधासम्भवात्, नहि व्युत्पत्तिपदवीदवीयसस्तस्य वाचकत्व मुत्प्रेक्षणीयं। अव्युत्पन्नोऽपि शब्दः स्ववाचकइतितु परिभाषामात्रं, शब्दवाचकतायामपि शब्दस्य व्युत्पत्तिसापेक्षत्वात्। स्ववाचकत्वसिद्धावपिच न वस्तुन स्तदनुवेधः, तस्य तद्वाचकत्वेना व्युत्पत्तेः। अस्तु रूपादिव दवाचकत्वेनैवा नुवेध इतिचेत्? न-अतन्निष्ठत्वा दारोपासंभवाच्च। सौगतैरपि शब्दाध्यासो व्युत्पत्ति[कल्पित]कलुषित बुद्धा वे[वाद्रियते]वोदाह्रियते, नतु निर्विकल्पके। अत श्चक्षुरादिभि रर्थेषु स्वरूपेणोपलब्धेषु व्युत्पत्तिसमय सहा नुभूतार्थ संदर्शनादुद्बुद्ध संस्कारवशा द्वाचकत्वगतौसत्यां वस्तुन स्संज्ञानविकल्प इति न प्रथमाक्षसन्निपातजेषु ज्ञानेष्वव्युत्पन्न बाल मूक तिर्यगादि बुद्धिषु च

---

भादितिभावः। (पूर्वोक्तेति) व्युत्पत्ति मन्तरेण तत्तद्वाचकपरिज्ञानप्रसंगादित्यर्थः। बाधउक्तः, प्रसंगहेतुः कः, शब्दानुवेधः किंवाचकतया उत रूपादिवत्स्वरूपेण? आद्यआह (वाचकतयेति) शब्दत्वा द्वाचकत्वं कल्प्यतइत्याशंक्याह (नहीति) व्यवहारादेव व्युत्पत्ते र्ग्राह्यत्वादित्यर्थः। व्युत्पत्ति मन्तरेणापि शब्दानां स्ववाचकत्व मस्त्येवेत्याशंक्यपरिहरति (अव्युत्पन्नइति) शब्दानां व्युत्पत्तिमन्तरेण स्व वाचकत्व मभ्युपगम्य अर्थस्य तदनुवेधासंभवमाह (स्ववाचकत्वेति) अर्थे व्युत्पत्तिमन्तरेण वाचकत्वं नसंभवति अतिप्रसंगादितिभावः। द्वितीयंशंकते (अस्त्विति) (आरोपेति) अस्यैव प्राथमिकज्ञानत्वे पूर्वं मधिष्ठानज्ञानाभावात् बाधकज्ञानसत्त्वाच्च नारोपतासम्भवतीत्यर्थः। सौगतै श्शब्दानुवेधोऽङ्गीकृतइत्यत्राह (सौगतैरपीति) संज्ञानविक-

शब्दानुवेधसंभवः । मा भूच्छब्दानुवेध स्तत्र, तथापि,समानेन्द्रियग्राह्य जाति गुणादि विशिष्टमेव सर्वं त्र यं प्रथमाक्ष सन्निपातादप्युपलभ्यते इतिचेत् ? तदपिन; अकारण कार्योत्पत्ति प्रसंगात् , विशिष्टज्ञानस्य सर्वस्य स्वरूपज्ञानपूर्वकत्व दर्शनात्, प्राथमिक स्वरूपज्ञानाभावे विशिष्टज्ञानस्यानुत्पत्ति प्रसंगात् । विमीता बुद्धिःस्वरूपज्ञानपूर्विका, विशिष्टबुद्धित्वात् , संप्रतिपन्नवदित्यनुमानात् । अस्तु स्वरूपज्ञानं,तदेव स्वरूपं जातिगुणादि सर्वात्मकमपि निर्विकल्पे नतथा विविच्यते, विकल्पेतु जातिगुणाद्यात्मना तदेव विकल्प्यते इतिचेत् , तन्न ; जातिगुणादीनां परस्पर माश्रयाच्च भेदसिद्धेः । अभेदोऽपि तद्वत्सिद्ध्यतीतिचेन्न ; साधकाभावात् । प्रथमपिण्डग्रहण मस्तीतिचेत् ? तत्र प्रथमपिण्ड ग्रहणशब्देन किं पिण्डस्य प्रथमं ग्रहणं विवक्षितं? उता नुपलब्धचरं ष्वेकजातीयेषु कस्यचि त्प्रथमस्य पिण्डस्य ग्रहणमिति? न प्रथमः ; प्रथमाक्ष सन्निपात समनन्तरं जात्यभिन्न वस्तूपलम्भे तस्यैव विकल्पत्वापातात् । अनुवृत्तत्वाद्याकाराग्रहणा दविकल्पत्वमितिचेत् ; न तथासति जात्यादि

---

ल्पः - संज्ञानुविद्धप्रत्ययः । ( स्वरूपेति ) विशेष्यस्वरूपज्ञान पूर्वकत्वादित्यर्थः । ( सम्प्रतिपन्नवदिति ) द्वितीयादिविकल्पवदित्यर्थः । प्राथमिकज्ञानस्य जात्याद्यविषयत्वमसहमानः प्रकारान्तरेण निर्विकल्पक मुपपादयन् कौमारिल शङ्कते ( अस्त्विति ) जात्यादेः स्वरूपेभिन्नत्वात् स्वरूपविषयकमपि प्राथमिकज्ञानं जात्यादिविषयमेव प्राथमिकज्ञानेतु नविविच्यते, द्वितीयादिज्ञानेतु विविच्यते, येन न विविच्यतेतन्निर्विकल्पकं, इतरत् सविकल्पकं, ननु - जात्याद्यगोचरं स्वरूपगोचरं निर्विकल्पकं , जात्यादिगोचरंसविकल्पक , मितिविभागइत्यर्थः । किं प्राथम्यं ग्रहणविशेषणं , उतपिण्डविशेषणमिति विकल्पयति ( तत्रेति ) पिण्डस्य प्राथम्यं सजातीयेषु प्रथमगृहीतत्वं ( तथासतीति ) जात्यादेः स्वासाधारणरूपेणा ग्रहणे तदभिन्नत्वेन

स्वरूपस्या ग्रहणे तदभिन्नवस्तूपलम्भासिद्धेः । जात्यादीन्यपि स दात्मना तदेव गृह्यन्तइतिचेन्न ; तथासति सन्मात्रं गृहीतं नतु जात्यादिरित्येवपर्यवसानात् । तथाच तदेवास्माकं निर्विशेषमिति । असद्व्यावृत्तिलक्षणो विशेष स्तत्रापि गृहीतस्स्यादितिचेन्न ; तस्य तत्स्वरूपग्रहणानतिरेकात्, अतिरेकेवा तद्ग्राहिण स्सविकल्पकत्वप्रसंगात् । नापिद्वितीयः ; तत्रापि प्रथमाक्षसंनिपातजन्यज्ञानस्य उक्तन्यायेन त दभेदग्रहणासिद्धेः । तत्समनन्तरभाविनस्तु विकल्पस्य जातिग्रहणे सत्यपि प्रकारप्रकारिभावेन भेदस्यैवग्रहणात् । तदानीं तत्सजातीय वस्त्वन्तरग्रहणाभावात् , जाते र्वस्त्वन्तरानुगतत्वलक्षण आश्रया द्भेदोनगृह्यते, जातिगुणादिविशिष्टेऽपि वस्तुन्येको गौ रित्याद्येकशब्दा नुविद्धप्रत्यया दैक्यमुपलब्धमितिचेन्न; वसनाभरणादिविशिष्टे प्ययेकोय मिति प्रत्ययात् । तत्र पुरुषान्तरव्यवच्छेदार्थ मेकशब्दः, नतु विशेषण-

---

ग्रहो नसंभवतीत्यर्थः । नतु जात्यादिभिन्नत्वप्रकारेण ग्रहणेहि जात्यादे रसाधारणरूपेण ग्रहणापेक्षा , सति गृह्यमाणे जात्यादिकमपि सद- भिन्नं सदात्मनागृह्यते , नच तत्रजात्यादे रसाधारणरूपेण ग्रहणा पेक्षेति शङ्कते ( जात्यादीन्यपीति ) ( तथासतीति ) स्वरूपापेक्षया जाते रभेदे किंप्रमाणमिति पृष्टे सत्स्वरूपविषयकं ज्ञानं सदभिन्नत्वा, जात्यादिकमपि सद्रूपेण गृह्णातीत्युक्तं, ततश्च अन्योन्याश्रयः, अभेदे सि- द्धे सज्ज्ञानस्य सद्रूपेण तदभिन्नजातिविषयत्वसिद्धिः, सद्रूपेणच त- द्ग्रहेसिद्धे अभेदसिद्धिरिति, तथाच सन्मात्रमेव गृहीतम् नतु जात्यादि कमित्येव पर्यवसानात् निर्विशेषविषयं निर्विकल्पकं सिद्ध मित्यर्थः । न- न्वेवमपि ननिर्विशेषनिर्विकल्पकसिद्धिः, असद्व्यावृत्तेः ग्रहणादिति , शङ्कते ( असद्व्यावृत्तीति ) भेदग्रहणासम्भवम् वदन् जातिव्यक्त्यभे- दे प्रमाणञ्च शङ्कते ( तदानीमिति ) ( एकेति ) एकइतिशब्दानुविद्ध- प्रत्ययादित्यर्थः । ( वसनेति ) तत्राप्यभेदप्रसङ्गइतिभावः । (तत्रे- ति ) विशेष्यपुरुषमात्रपरःशब्दानुवेधइत्यर्थः । मानान्तरंशङ्कते

विशेष्यैक्यार्थ मितिचेत्, अत्रापि गवान्तरादिव्यवच्छेदार्थ इत्येवास्तु ।
नन्वभेदरहितेषु विशेषणेषु मत्वर्थीयसापेक्षं सामानाधिकरण्यं दृष्टम्,
जातिगुणादिषु मत्वर्थीयनिरपेक्ष सामानाधिकरण्या दभेदोऽप्यभ्युपग-
न्तव्यइतिचेन्न; अभेदप्रसंगरहितेष्वपि शरीरात्मादिषु देवो हं मनु-
ष्योह मात्मादेवो जातः कर्मभि रित्यादिमत्वर्थीयनिरपेक्षसामानाधिकर-
ण्यदर्शनात् । लक्षणयातत्रसामानाधिकरण्यमितिचेन्न; तत्रापि कैश्चि
त्तथाभ्युपगमात् । अपृथक्सिद्धत्वा दपर्यवसानादिवृत्त्यावा तत्रसामाना-
धिकरण्यमितिचेन्न; शरीरेपि तथा सुवचत्वात् तत्रापि तथासुवचत्वात्,
अपृथक्सिद्धत्वस्य मत्वर्थीयनैरपेक्ष्यप्रयोजकत्वादिति । अस्तुतर्हि अपृ-
थक्सिद्धत्वादेव जातिगुणादे राश्रयतादात्म्यमितिचेन्न; भेदगर्भेण सम्बन्धे
ना भेदसाधने व्याघातात् । नायमभेदो भेदाभावात्मा; नापिभेदविरुद्धोधर्मः
येनव्याघातस्स्यात् अपित्वन्यादृशइतिचेन्न ; तथाविधस्य कस्यचिद
भेदस्या प्रसिद्धत्वात् , भेदाविरुद्धस्य कस्याचित स्वभावान्तरस्य सा
धने स्माक मनिष्टाभावाच्च । एतेन सहोपलम्भनियमा दभेद इत्यपि

---

( नन्वभेदेति ) देवोहमिति व्यवहारस्य भ्रान्तिमूलत्व माशंक्य विवे-
किनां प्रयोग मुदाहरति ( आत्मेति ) ( लक्षणयेति ) देहवाचिनादेहा
दिपदेन तद्विशिष्टात्मलक्षणयेत्यर्थः । ( तत्रापीति ) जातिवाचिपदेऽपि
मीमांसकैकदेशिभि र्लक्षणाभ्युपगमादितिभावः । ( अपृथक्सिद्धत्वा-
दिति) लक्षणामन्तरेण मत्वर्थीयनिरपेक्षसामानाधिकरण्य मभेदप्रयोजकं
तदेवमप्यस्तीतिभावः । ( शरीरेऽपीति ) अपृथक्सिद्ध्यादिना सामाना
दिकरण्यस्य शरीरेऽपि सुवचत्वा त्तत्राप्यभेदप्रसङ्गाद पृथक्सिद्धिः
रपर्यवसानं वा कुत्रापि मत्वर्थीयनिरपेक्षसामानाधिकरण्यप्रयोजकंनेति-
भावः । "सुवचत्वादिति" पञ्चम्यन्त मुत्तरपञ्चम्यन्तहेतुः । मा
नान्तरंशङ्कते ( अस्त्विति) भिन्नेष्वपृथक्सिद्धेरदर्शनादितिभावः । अ
न्वयव्यतिरेक्यनुमानं विवक्षितं । ( अनिष्टेति ) प्राथमिकस्य स्वरूपावि
षयकस्य ज्ञानस्य जात्याद्यविषयतया स्मदभिमतनिर्विकल्पकाविरोधादि

निरस्तं ; सहोपलम्भस्य तन्नियमस्यच तादात्म्यवैरित्वात् । तदेवं भिन्नेष्व भेदसाधकासिद्धौ भेदाभेदयोः प्रतीतिबला दविरोधइ-ति धाष्टर्यमात्रेणोच्यते; अतो जातिगुणाद्यात्मकस्य एकस्यासम्भवा-देव तद्विषयं निर्विकल्प माशांबरसगोत्राणा माशामात्रपरिकल्पितं ।

अस्तुतर्हि परस्पर मत्यन्तभिन्नानां द्रव्यजातिगुणादीना मगृहीतविशेष णविशेष्यभावानां स्वरूपमात्रगृहणं निर्विकल्पकं, ततएवच तत्समनन्त-रभाविविकल्पोत्पत्तिरपि निर्व्यूढाभवति, नह्यगृहीतविशेषणा विशिष्टबुद्धि रुपपद्यते। नच जात्यादीनां विशेषणानां तत्तदिन्द्रियेण ग्रहणयोग्यानां तत्तदिन्द्रियसम्प्रयोगादि सामग्रयां सत्या मग्रहणमुपपद्यते ; अतो विशेषण स्वरूपग्रहणरहितं निर्विकल्पकं नास्तीति , तदप्यसारं, यदि विशे षणविशेष्ययो स्वरूपग्रहणं; कस्तर्हिविकल्पाद्भेदः । समवायाग्रहणमि तिचेन्न ; अपृथक्सिद्धेषु जात्यादिषु वेदान्तविद्भि स्वरूपातिरिक्त-समवायानभ्युपगमात् , तथाच वैशेषिकानिराकरणाधिकरणे सूत्रम् - " समवायाभ्युपगमाच्च साम्यादनवस्थितेः " इति । अस्तुवा सम वायाख्यः सम्बन्धः, स किं तदा न गृह्यते? अयोग्यत्वादिति चे-

---

तिभावः । ( सहोपलम्भस्येति ) सहभावस्य भेदगर्भत्वात्तन्नियमस्य-च भेदनियमसाधकत्वादित्यर्थः । ( आशाम्बरेति ) भेदाभेदवादित-या दिगम्बरसगोत्राणामित्यर्थः । नैयायिकःस्वमतसिद्धं निर्विकल्पक माशङ्कते ( अस्त्विति ) एवमपि न जात्याद्यविषयानिर्विकल्पकसिद्धिरि तिभावः । सविकल्पकव्यावृत्त्यर्थं ( अगृहीतविशेषणविशेष्यभावानामि)त्यु क्तम् । ( ततएवेति ) निर्विकल्पकस्य जात्यादिविषयत्वादेवेत्यर्थः । ( नहीति ) अत्र निष्ठया भूतत्वस्य विवक्षितत्वात् पूर्वं विशेषणज्ञाना भावे विशिष्टबुद्धिर्नस्यादित्यर्थः । अत्रविशिष्टबुद्धित्वेन हेतुना विशि ष्टवैशिष्टयज्ञानव द्विशेषणज्ञानसाध्यत्वं विवक्षितं । एवं कार्यवशात्पू र्वं विशेषणज्ञानं प्रसाध्य इदानीं सामग्रीवशाच्च तत्साधयति ( नचेति) सत्यांसामग्रयाम् कार्यविलम्बो नुपपन्नइतिभावः । ( सकिमिति ) कु

न्न; नित्यं तदग्रहणप्रसंगात् । एवमपि कैश्चिदिष्यतइति चेन्न; त थापि विकल्पाविशेषप्रसंगः । नहि तदा विकल्पेऽपि समवायग्रह णं सम्भवति । तथापि विशेषणविशेष्यभावो गृह्यत इतिचेन्न, तर्हि ततएव ततःपूर्वं विशिष्टप्रत्ययोत्पत्ति र्वक्तव्या, जातेहि विशिष्टप्रत्य ये निष्कर्षकबुद्ध्या विशेषण मिदं विशेष्य मिदमिति विविच्यते, तत श्च प्रथममेव विशिष्टप्रत्यये क्वनिर्विकल्पकम् । माभूत् स्वरूपायो ग्यत्वं " सहकारिवैकल्यात्तु निर्विकल्पके समवायाग्रहण " मिति न्यायाचार्याइतिचेत्? किं तत्सहकारि, अवच्छेदकग्रहणमितिचेन्न, अवच्छेदकयो राश्रयाश्रयिणो स्स्वरूपस्य निर्विकल्पेऽपि ग्रहणात् । अवच्छेदकग्रहणस्य सम्बन्धग्रहणकारणत्वात् पूर्व मवच्छेदकग्रहण- मपेक्षितमिति चेन्न, तस्य कारणत्वे प्रमाणाभावात्, सम्बन्धग्रहणद शायांच येन रूपेणावस्थाय तदवच्छेदक मवच्छिन्द्यात तद्यदि रूपं युगपद्ग्रहणेपि सम्भवति, कि तस्य पूर्वगृहणेन, व्यर्थविशेष

---

तोनगृह्यतइत्यर्थः । (एवमपीति) समवायाग्रहणं कैश्चिदिष्यते तदे व वयमप्यङ्गीकुर्मइतिभावः ।(तथापीति) विशेषणविशेष्यभावग्रहणादे व सविकल्पकस्य निर्विकल्पकाद्विशेषइत्यर्थः (तर्हीति)विशेषणविशेष्य भावोहि विशिष्टप्रतीतिनिबन्धनः, अतः प्रथमतो विशिष्टप्रतीतौ जातायां विशेषणमिदं विशेष्यमिदमिति ज्ञानान्तरेण गृह्यतइत्यर्थः । सहकारिपदेन किं प्रयोजकत्वं विवक्षितं उतकारणत्वमिति विकल्प मभिप्रेत्याद्यदोष माह (अवच्छेदकयोरिति) द्वितीयं शङ्कते (अवच्छेदकग्रहणस्येति) प्रति- योगिज्ञानाभावे संबन्धज्ञानंनदृश्यतइत्यत्राह । (संबन्धेति) येनरूपेण- दण्डत्वादिना ज्ञायमानत्वरूपेण, तद्यदिरूपम्–ज्ञायमानत्वरूपम् विशे- षणस्य युगपद्ग्रहणेपि सम्भवति किं तस्य पूर्वग्रहणेनेत्यर्थः । सम्बन्धिनो ज्ञानविषयत्वमपेक्षितं नतु पूर्व ज्ञानविषयत्वं पूर्वत्वविशेष णस्य व्यर्थत्वादित्यर्थः । सत्यपि पूर्वग्रहणे तादात्विकग्रहणं पूर्वग्रहणं चापेक्षितमिति न शक्यं वक्तुं गौरवात्, ततश्चान्यतरस्यापेक्षणीयत्वे

णत्वात् । सत्यपि पूर्वगृहणे तादात्विकावच्छेदक स्वरूपोल्लेखएवहि अवच्छेद्योल्लेखापेक्षितः , पूर्वगृहणेसत्यपि तादात्विकावच्छेदकोल्लेखा भावे तदवच्छिन्नसम्बन्धोल्लेखासंभवात् । अस्तु सम्बन्धस्यापि स्वरूपग्रहणं, तथापि तस्यावच्छिन्नत्वं न गृह्यतइतिचेन्न, अवच्छेदकयो राश्रयाश्रयिणो रवच्छेद्यस्यच सम्बन्धस्य स्वरूपग्रहणे कथ मवच्छिन्नत्वाग्रहः, अवच्छेदक स्वरूपग्रहणातिरिक्तस्य तदवच्छिन्नत्व ग्रहणापेक्षितस्या सम्भवा दनभ्युप गमाच्च । एतेन समवायस्य निर्विकल्पकैकविषयत्वं वदन्तो भूषणमतानुसारिणोपि प्रत्युक्ताः । अतो यदि विशेषणग्रहणं तदा नकथंचिदपि, निर्विकल्पकत्वासिद्धिः । विशेषणरहितस्वरूपग्रहणेतु तदेवास्माकं निर्विशेषग्रहण मिति । भवतु निर्विकल्पके निर्विशेषग्रहणं, तथापि विशेषाएव स्वलक्षणापरनामानः स्वय मकिंचिन्निश्राः कैश्चिदनाश्रिताश्च तत्रगृह्यन्ते नाद्वितीयमितिचेन्न; प्रमाणाभावात् नीलपीतादिप्रतिनियत विचित्रविकल्पोत्पत्ति रेव प्रतिनियतकारणमन्तरेणा नुपपद्यमाना निर्विकल्पकेपि स्वानुरूपविशेषोल्लेखं व्यवस्थापयतीतिचेन्न; एकस्मिन्नद्वितीये सर्वेषु निर्विकल्पेषु गृह्यमाणे तत्तद्विचित्रवासनादि रूपभ्रमसामग्रीसामर्थ्यादेव प्रतिनियतविकल्पोपपत्तेः । कि मेकस्या

---

सति पूर्वग्रहणोपि तादात्विकावच्छेदकग्रहणाभावे विशिष्टज्ञानासिद्धेः यत्र पूर्वग्रहणमस्ति तत्राप्यव्यभिचारात् तादात्विकग्रहणमेव - प्रयोजकं नतु पूर्वग्रहणमित्याह ( सत्यपीति ) ( अस्त्विति ) निर्विकल्पकइति शेषः ( अवच्छेदकेति ) स्वरूपशब्देन अवच्छेद्यस्वरूपं गृह्यते, अवच्छेदकावच्छेद्यस्वरूपग्रहणंच समानकालीनतया पेक्षितं नतु पूर्ववर्तितयेति भावः । गुरु शिष्यमुपालब्धुमुपक्रमते ( तथापीति )(नाद्वितीयमिति) गृह्यतइतिशेषः । ( स्वानुरूपेति ) तत्तत्स्वरूपविशेषोल्लेखमित्यर्थः । उक्तमेवोपपादयति ( किमेकस्यामिति ) ननु स

मेव रज्जौ गृह्यमाणायां विचित्रा स्सर्पभूदळनाम्बुधारादिविकल्पा: क्रमशो नसन्दृश्यन्ते ; युगपदपिवा? किं मेकस्मिन् गगने गन्धर्व नगरप्राकारतोरणादिविकल्पा: प्रकल्प्यन्ते ; विकल्पानांच भ्रान्ति-रूपत्वं भवद्भिरपीष्यते । विशेषाणामेवाभावे कथंविचित्रवासना दिसंभवइतिचेन्न; विशेषाणां वासनाहेतुत्वाभावात् , तत्तद्विषय विज्ञप्ति बीजान्येव वासनामंकुरयन्ति ; अन्यथा शुक्तिरजतादिविषयमिथ्यात्वेन तदनुभवजन्यवासनाभावात् तदनुस्मरण तन्मूलचेलांचलग्रन्थि विघटनादयो नसम्भवेयु: । नन्वापणादिषु सत्यरजतगृहणा द्रजत-वासना, ततश्च तदेवरजतं वासनावशादेव देशान्तरकालान्तरयो र-सदपि प्रतीयते. तत्प्रतीतिमूलश्च पुन रसंस्काररमृत्यादिप्रवाहइति युज्यते; यस्यतु क्वचिदपि विशेषा नसन्ति तस्य कथं विशेष वासना निर्वाह्या? उच्यते - मिथ्यार्थज्ञानस्यापि तावद्वासनाजनकत्वं भवद्भिरपीष्यतएव, ततश्च पूर्वपूर्वभ्रमविशेषजनित संस्कारविशेषादेव सर्वविकल्पोपपत्तौ किं क्वचि द्विचित्रेणा र्थेन विकल्प वैचित्र्याय प्रत्यक्षतया तदनुमेयतयावा कल्पितेन । अस्यचार्थस्य वैशद्याय समा नसमयाचारा योगाचारादय उपास्यन्तां । तत्रतु भवन्तएव तेषां बाह्याभेदापह्नवन्यायेन आन्तराभेदापह्नवं परानिष्टमुद्घाटयन्तु,

---

र्पादिभ्रमाणां वासनावशात्सम्भवेपि प्रकृते तदसंभवइत्यत्राह ( विकल्पाना मिति) ननु भ्रान्तिज्ञानवैचित्र्यार्थं विचित्रवासनासिद्धये विषयविशिष्टज्ञा-नस्य जनकता वाच्या, विचित्रविषयाभावेच विचित्रवासना नस्यादिति शंकते ( विशेषाणामिति ) विज्ञप्तिबीजानि-विज्ञप्तयएवबीजानि ( अन्यथेति ) विशेषाणां वासनाहेतुत्व इत्यर्थः । ननु तत्तद्विषयविज्ञप्तेः वासनाहेतुत्वेपि-भ्रमरूपविज्ञप्तेरपि वासनाजन्यत्वा त्तन्मूलज्ञानापेक्षायां क्वचित्प्रमाया मेव पर्यवसानं वाच्यम् , अन्यथा - अनवस्थानात , क्वचिदपि विशे-षानंगीकारे कथमेतदिति शंकते ( नन्वापणादिष्विति ) ( उच्यत इ-त्यादि ) आपणस्थरजतानुभवोऽपि भ्रमएव, नच तन्मूलसंस्कारज

अतो विचित्रविकल्पोदयस्य अन्यथासिद्धे निर्विकल्पकेपि विचित्र विशेषग्रहणकल्पना नयुक्ता, तत्कल्पनेऽपिवा लाघवाय विचित्राद्वैतं विश्वविषयमास्थीयतां । नचैकस्या नेकस्वभावताव्याघातः, रूपरसगन्धस्पर्शस्वभावाः पार्थिवाः परमाणवः, रूपरसस्पर्शस्वभावा आप्याः, रूपस्पर्शस्वभावास्तैजसा इति भवद्भि रेकैकस्यानेकस्वभाव कल्पनात् । अतएव नैकस्य विरुद्धस्वभावत्वमपि दत्तोत्तरं, लोक दृष्ट्या परराद्धान्तिभिश्च रूपत्वरसत्वादे रविरुद्धस्वभावतया स्वीकारात्, भवद्भिस्तु शान्त्या सिद्धाश्रमीभवद्व्याळनकुलादेरिव नीलधवळादेरपि वैरस्यस्य शमयितुं शक्यत्वात् । तस्मादस्मदभिमत मद्वैतमेव शुद्धं चित्रंवा निर्विकल्पकपदमिति शत्रुमित्रविभागोदासीनैश्च सौगतैरपि संग्रहणीयं, ततः प्रमाणज्येष्टस्य प्रत्यक्षस्य प्रथममेव निर्विशेषोल्लेखित्वात् विकल्पोल्लीढविशेषाणां भ्रान्त्या निर्वाहात् नशक्यं ' निर्विशेषवस्तुनीदं प्रमाणमिति नशक्यते वक्तु ' मिति ।

अत्रोत्तरमाह - निर्विकल्पकमपि सविशेषविषयमेवेति । अयमभिप्रायः, तत्र यत्तावच्छाब्दकौमारिलादिमतदूषणं तदस्माकमपि सम्मतमेव । तत्र यदुक्तं विशिष्टग्रहणस्य स्वरूपग्रहणं कारणमिति ; तन्न सार्वत्रिकं, भिन्नसामग्रीवेद्येषु सविशेषणविशेष्येष्वेव तथादर्शनात् , एकसामग्रीवेद्येषुतु समानकालीनविशेष्यग्रहणेनैव विशिष्टग्रहणसिद्धेः । उक्तंच त्वयापि तत्कालीनविशेषणग्रहणमेव विशिष्टोल्लेखोपयोगीति । तद्वद्विशेष्यस्वरूपस्य पूर्वगृहीतस्यापि तादात्विकोल्लेखाभावे विशिष्टग्रहणासिद्धेः, सतितस्मिं स्तत्सिद्धेः , पूर्वग्रहणस्यानपेक्षितत्वात ।

---

नकासंभवः; जन्मान्तरीयरजतानुभवस्यैव तन्मूलत्वात् ; नचानवस्थाः प्रवाहानादित्वेनादोषत्वादिति भावः । ( भिन्नसामग्रीति ) अन्वयव्यतिरेकौ भिन्नसामग्रीवेद्य विशेषणविशेष्यगोचर विशिष्टबुद्धिविषयावेव, नतु सामान्यतो विशिष्टबुद्धिमात्रविषयौ; अतो न प्रत्यक्षं स्वरूपग्रहणस्य

अतएव विशिष्टग्रहणत्वात् स्वरूपग्रहणपूर्वकत्वानुमानं प्रत्युक्तं । यच्चोक्तं विशेषग्रहणेसति नकथंचिदपि निर्विकल्पकसिद्धिरिति; तदप्यसत्; निर्विशेषग्रहणरूपनिर्विकल्पके शशविषाणायमाणे यदि विशेषणग्रहणे निर्विकल्पकनाम नकिंचित्स्यात्; नस्यादेव; नह्यप्रामाणिकमवश्यमंगीकुर्मः । योगशास्त्रेषु निर्विकल्पकसमाध्युपदेशा न्नतस्याप्रामाणिकत्वमितिचेन्न; तत्रापि निर्विशेषग्रहणस्य अनुपदेशात्, आगमानांच सविशेषपरत्वस्य स्थापयिष्यमाणत्वात्, समाविलक्षणानुप्रविष्टस्य अर्थमात्रावभासत्वस्य "स्वरूपशून्य" मिवेत्यस्य निर्विशेषग्रहणपरत्वाभावात्; ध्यानमेवहि यथावस्थितध्येयार्थवैशद्यातिशयात् तन्निर्गीर्णस्वरूप मिव भवतीति

---

विशिष्टबुद्धिकारणत्वे प्रमाणमित्यर्थः । ( अतएवेति ) भिन्नसामग्रीवेद्यविशेषणविशेष्यगोचर बुद्धिष्वेव स्वरूपग्रहणपूर्वकत्व दर्शनादित्यर्थः । भिन्नसामग्रीवेद्य विशेषणविशेष्यगोचरत्व मुपाधिरित्युक्तं भवति । ननु – रूपघटशब्दाभ्यां विशेषणविशेष्ययोः पृथग्बोधनात् साधनव्यापकत्वं, – विशेष्येसंयोगः विशेषणे संयुक्ताश्रितत्वमिति प्रत्यक्षेऽपि सामग्रीभेदइति साधनव्यापकत्वमिति चेत्, न; भिन्नसामग्रीपदेन लौकिकालौकिक सन्निकर्षभेदस्य विवक्षितत्वात् । ततश्च स्वजनकेन्द्रियनिरूपित तदानीन्तनालौकिक सन्निकर्षवद्विशेषण गोचरविशिष्टबुद्धित्व मुपाधिरित्युक्तं भवति । अयञ्च प्रत्यक्षत्वावच्छिन्न साध्यव्यापको बोध्यः । ननु विशेषग्रहणे सति कथंचिदपि निर्विकल्पकासंभवात् स्वरूपग्रहणमेव निर्विकल्पकंवक्तव्य मित्युक्त मित्यत्राह (यच्चोक्तमिति) निर्विशेष निर्विकल्पकं तावद्दूषितमेव, नचतस्स्वीकर्तुंशक्यं, विशेषग्रहणात्मकमपि निर्विकल्पकं यदिनसम्भवति माभूत् किन्नश्छिन्नमित्यर्थः । ननु – निर्विकल्पकंताव न्नाप्रामाणिकं, योगशास्त्रसिद्धत्वात्, विशेषणग्रहणेच तन्नसंभवतीति स्वरूपग्रहणमेव तदेष्टव्यमितिशंकते ( योगेति ) ननु – वेदान्ताना मखण्डार्थत्वान्न निर्विशेष निर्विकल्पकस्या प्रामाणिकतेत्यत्राह ( आगमानामिति )

तत्रोपदिश्यते; प्रह्लादवामदेवादि समाधिषु चानन्तविशेषणविशिष्टब्रह्मा- नुभवएव श्रूयते; अतो नशास्त्रा न्निर्विशेषविषयानिर्विकल्पकसिद्धिरिति । अत:प्रामाणिके कस्मिंश्चिन्निर्विकल्पके यथोपलम्भ मंगीक्रियमाणे सं स्कारानपेक्षप्रथमाक्षसन्निपातमात्रसंभवं प्रत्यक्षं निर्विकल्पकं, तत स्तत्सं- स्कारसहकृतेन्द्रियजन्यं तदेकविषयं तज्जातीयपिण्डान्तरविषयंवा प्रत्यक्षं सविकल्पकं, तच्च येनाकारेण पूर्वापरानुवृत्तेन स्वविषयंविशिनष्टि तदाका रविशिष्टस्य पूर्वमपि ग्रहणावश्यम्भावात् प्रथमाक्षसंयोगजस्यापि वि- शिष्टविषयत्वमेव युक्तं, तदाह-" सविकल्पके स्वास्मि न्ननुभूतपदार्थविशि- ष्टप्रतिसन्धानहेतुत्वा " दिति । निर्विकल्पकन्तच्चविशिष्टविषयमितिस्व वचनविरुद्धमितिचेन्न; प्रमाणवला च्छब्दवृत्तिसंकोचे ऽवश्यम्भाविनि प- रामर्शदशाविषयीक्रियमाणविशेषणनिवृत्तिमात्रेण निर्विकल्पकत्वाद्युक्तेरु- पपत्तेः । तदाह-" निर्विकल्पकन्नाम केनचिद्विशेषेण वियुक्तस्या र्थान्त रस्य ग्रहणं नसर्वविशेषरहितस्ये"ति ।

यदुक्तं प्रथमाक्षसन्निपातसमनन्तर मविशिष्टविषयापरोक्षावभासो दुरपह्नव

---

( अतइति ) निर्विशेष निर्विकल्पकस्या प्रामाणिकत्वात् , प्रामाणिकं नि र्विकल्पक मुपलंभसिद्धेष्वेव किञ्चिदंगीकर्तव्यं, ततश्च संस्कारानिरपेक्षस्य न्यूनविषयत्वात्तदेव निर्विकल्पकमित्यर्थः । यत्संस्कारासहकृतेन्द्रियजन्यं- निर्विकल्पकमिष्यते तत्सर्व मविशिष्टविषयमेवास्त्वित्यत्राह(तच्चेति )सविक ल्पकंहि पूर्वानुभूते इदानी मनुभूयमानेचानुवृत्ततया प्रतीयमानधर्मेण स्वयंविशिनष्टि ' अयमपिगौरिति ' सएवायमितिवा, अतःपूर्वमपि गोत्व- विशिष्टानुभव आवश्यकइत्यर्थः । (निर्विकल्पकमिति) विकल्पशब्दस्य वि शेषणवाचित्वादित्यर्थः । परामर्शदशा संस्कारजन्य प्रतिसन्धानदशा विषयीक्रियमाण विशेषणमनुवृत्तिः, 'भाष्येकेनचिद्विशेषेणे' त्यनुद्धर्विवक्षिता, भाष्ये तथाभूतस्य निर्विशेषवस्तुनो यद्ग्रहणं निर्विकल्पकं त- स्यादर्शनादित्यर्थः । कथमदर्शनं, तादृशनिर्विकल्पकस्य स्वप्रकाशवि

इति: तत्राह "तथाभूतस्य कदाचिदपि ग्रहणादर्शना:" दिति । अयमभिप्राय. नताव न्निर्विशेषवस्तुग्रहणं इदमितिवयन्तदुत्तरकाले व्यक्तं परामृशाम', नच तदानीमेव । यद्यपि निर्विशेषवस्तुग्रहणमपि स्वप्रकाशत्वात् स्वतस्सिद्ध-मितिवक्तुशक्यं; तथापि तथाविधा स्वतस्सिद्धिरपि तथाभूततद्गोचरपरामर्शमन्तरेण दुरुपपादेत्युक्तं, अन्यथा शशविषाणग्रहणमपि स्वप्रकाश. सिद्धमिति धृष्टोक्तेरनिस्तारात्, तथाच नकिंचित्प्रतिक्षेप्यंस्यात् , सर्वस्यापि तथातथासिद्धे सुवचत्वादिति । माभूत् तथाभूतस्य ग्रहणम् , उपपस्यानुकल्प्यतइति यदाहु:-तत्राह-"अनुपपत्ते"श्चेति उपपत्त्यभावादित्यर्थ । व्याख्यातमिदं प्रागेव । अदर्शनं विवृणोति -" केनचिद्विशेषणेन इदमित्थ-मितिहिसर्वाप्रतीतिरुपजायत"इति । उपपत्त्यभावंविवृणोति "त्रिकोणसास्ना दिसंस्थानाविशेषेणाविना कस्याचिदपि पदार्थस्य ग्रहणायोगा"दिति । यद्वा " तथाभूतस्य कदाचिदपि ग्रहणादर्शना दनुपपत्तेश्चे " ति योग्या-नुपलब्धिबाधमुपपत्तिबाधंचाह ; तदुभयविवरणं — केनचिदित्यादिग्रन्थद्वयम् । यद्वा पूर्वग्रन्थद्वयम् - साधकाभावपरं ; उत्तरंतु - तद्वयंबाध-

---

द्धत्वादित्यत्राह ( अयमभिप्रायइति ) ( व्याख्यातमिति ) विशिष्टबुद्धित्वं सोपाधिकमित्युक्तमित्यर्थः । ( उपपत्त्यभावमिति ) प्रथमाक्षसन्निपातसमनन्तरविशिष्टज्ञानं विशेष्यज्ञानपूर्वकं - विशिष्टबुद्धित्वात् , सम्प्रतिपन्नवदिति पराभिप्रेतमनुमानं, प्रथमाक्षसन्निपात समनन्तरभाविज्ञानं विशेषणविषयं, बुद्धित्वात् , सम्प्रतिपन्नवदिति अनेन प्रतिरोधादाभासइति 'त्रिकोणे' त्यादि भाष्याभिप्रायइतिभावः । ( उपपत्तिबाधमिति ) इदमेवानुमान मैन्द्रियकत्वाविशेषा दित्यादितर्कसाचिव्या दधिकबलमितिभाव. । ( उत्तरंत्विति ) चक्षुरुन्मीलन समनन्तरमेव सास्नादिविशिष्ट मद्राक्षमिति प्रत्यक्षबाधः " केनचि " दितिभाष्ये ऽभिप्रेतः , उक्तरीत्या नुमानबाध " त्रिकोणे " त्यादिभाष्ये ऽभिप्रेतइति-भावः । ननु "अत " इत्यादिभाष्यं लक्षणपरमिव प्रतीयते , तच्चानुपपन्नं , उत्तरत्र " प्रथमगृहीते " त्यादिभाष्येण लक्षणस्य कथनात्

कपरामितिविभागः । उक्तप्रकारनिर्विकल्पकसविकल्पकविभाग मुदाहरणमुखेन विशेषेणदर्शयति - " अतो निर्विकल्पक मेकजातीयद्रव्येषु प्रथमपिण्डग्रहणं द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यत " इति । निर्विकल्पकसविकल्पकोदाहरणाविशेषभूतयोः प्रथमद्वितीयपिण्डग्रहणयोः केनचिद्विशेषेण वियुक्ति मवियुक्तिञ्चदर्शयति-- "तत्र प्रथमपिण्डग्रहणे गोत्वादे रनुवृत्ताकारता नप्रतीयते , द्वितीयादिपिण्डग्रहणे ष्वेवानुवृत्तिप्रतीति"रिति । ननु - यदि कस्यचिदग्रहणा न्निर्विकल्पकत्वं , तर्हि द्वितीयादिपिण्डग्रहणमपि यत्किंचिद्वस्त्वन्तराग्रहणा न्निर्विकल्पक मेवस्यात् , ततश्च सविकल्पकनिर्विकल्पकयो र्व्युत्पत्त्यनुसारेण विभाजकं लक्षणंवाच्यमिति; तत्राह " प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूप

---

नच्चोभयमपिलक्षणमितिवाच्यंः विरोधात , अनेनहि लक्षणेना नुवृत्तत्वाग्राहिणोऽपि द्वितीयग्रहणस्य सविकल्पकत्वं स्यात् तेनतु नस्यादित्यत्राह ( उक्तप्रकारेति ) ' एकजातीयेष्विति ' –सविकल्पकोदाहरणेपि संबध्यते । प्रथमपिण्डग्रहणमात्रस्य निर्विकल्पकोदाहरणत्वे जन्माद्यग्रहणमेव निर्विकल्पकं स्यादिति ' एकजातीयद्रव्येष्वि ' त्युक्तं । जन्मनि द्वितीयत्ववारणार्थं मनुवृत्तिप्रतीतिस्फोरणार्थंच सविकल्पकोदाहरणे'एक– जातीयपदं' । ननु प्रदर्शितोदाहरणे सविकल्पकनिर्विकल्पकपदप्रयोगनिमित्त प्रदर्शनपरे भाष्ये प्रथमपिण्डग्रहणमात्रं निर्विकल्पकोदाहरणं द्वितीयादिपिण्डग्रहणमात्रं सविकल्पकोदाहरणमिति प्रतीयते , तदनुपपन्नं , निर्विकल्पकलक्षणस्य संस्काराजन्य द्वितीयपिण्डग्रहण साधारणत्वादित्यत्राह ( निर्विकल्पकेति ) उदाहरणविशेषपरंभाष्यं , नतूदाहरणपरिच्छेदपरमितिभावः । ननु " निर्विकल्पकंनामे " त्यादिभाष्ये कस्यचि दग्रहणं निर्विकल्पकपदप्रयोगनिमितमित्युक्तं , ततश्च द्वितीयादिपिण्डग्रहणमपि निर्विकल्पकंस्यादिति शंकते ( नन्विति ) (व्युत्पत्त्य नुसारेणेति ) निर्विकल्पकसविकल्पकपदयो रसंकीर्णार्थत्वेनैव लोके व्युत्पन्न वादितिभावः । " निर्विकल्पकंनामे " त्यादिभाष्यं योगार्थप्र

गोत्वादे रनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेय मिति द्वितीयादिग्रहणस्य सविकल्पकत्वं, सास्नादिवस्तुसंस्थानरूपगोत्वादे रनु वृत्ति नप्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्प-कत्वं, नपुन स्संस्थानरूपजात्यादेरग्रहणा " दिति । अयमभिप्रायः - संस्कारसहकृतेन्द्रियजन्यतया सप्रत्यवमर्शी ज्ञानं सविकल्पकं, संस्कारनि रपेक्षकेवलेन्द्रियजन्यज्ञानं निर्विकल्पकं , तदेतद्दृश्यते प्रथमपिण्डगृहण दशाया मिद मित्येव गृहणा द्वितीयादिपिण्डगृहणेषु तज्जातीयतया सोय मिति परामर्शादिति । ननु - यदि प्रथमपिण्डगृहणे जातिगृह णंस्यात् तदेवंविभागस्स्यात् तत्रैवतु किं प्रमाणं ? नह्यनुवृत्ताकारजा तिग्रहण मेकपिण्डग्रहणे संभवतीत्यत्राह—" संस्थानरूपजात्यादे रप्यै न्द्रियकत्वाविशेषात् संस्थानेनविना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथम पिण्डग्रहणेपि ससंस्थानमेववस्त्वित्थमिति गृह्यत " इति । एतेन वैशे-षिकाद्युक्तं निर्विकल्पकमपि निराचकार । ननूक्तेन लक्षणप्रकारेण विभागे प्रथमपिण्डगृहणेपि सविकल्पकत्वं सम्भवति, यथा प्रथम-पिण्डस्यैव द्वितीयपिण्डगृहणे सोयं गौरिति, द्वितीयादिपिण्डगृहणेष्वपि-निर्विकल्पकत्वंस्यात् , यथाविस्मृतप्रथमपिण्डस्य परामर्शाभावात् द्वि-तीयादि पिण्डेष्वप्ययं गौ रिति, अतो लक्षणोदाहरणयो रसामञ्जस्य-मिवभाति, अनुवृत्तस्वरूपाया जाते ग्रहण मेकपिण्डमात्रग्रहणे न संभ

---

र्शनपरं ' इदंतुलक्षणपरं , तथाच निर्विकल्पकशब्दो योगरूढइत्यभिप्रा यः । प्रत्यभिज्ञाया मव्याप्ति माशंक्याह ( अयमभिप्रायइति )

**इति श्री वाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचिता यां शतदूषणीव्याख्यायां चण्डमारुताख्यायां निर्विशेषविषयनि विकल्पभंगो नामैकादशस्कन्धः ।**

वर्तीति चोद्यंचापरिहृतं; तत्राह - "ततोद्वितीयादिपिण्डग्रहणेषुगोत्वादे र नुवृत्ति धर्मविशिष्टता संस्थानवत् संस्थानिवच्च सर्वदैवगृह्यतइति तेषु सविकल्पकत्वमेवे"ति । अयमाशयः, निर्विकल्पकसविकल्पकविभाग स्तावदुक्तप्रकारमन्तरेण नोपपद्यतइतिदर्शितं, उदाहरणमपि सम्भवलक्षणव्यक्तिविषयम्, अतः प्रथमद्वितीयाद्यनादरएव, येषुतु प्रथमस्यैव पिण्डस्य द्वितीयादिग्रहणेषु प्रतिसन्धानसम्भवः तेषु सविकल्पकत्वमेवास्तु, येषु द्वितीयादिपिण्डग्रहणेषुच प्रथमस्यैव पिण्डस्य द्वितीयादिग्रहणेषुच प्रमुषितसंस्कारस्य प्रतिसन्धानासंभवः तत्रापि निर्विकल्पकत्वमेव, येषु-पुन द्वितीयादिपिण्डग्रहणेषु गोत्वादे रनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यते, तेषु सविकल्पकत्वमेवेति, तद्द्वितीयविकल्पोदाहारणं, योग्यतया संस्थानस्य प्रथममेव स्वरूपग्रहणं आश्रयभेदग्रहरूपसहकारिविशेषस्य अभावादनुवृत्तिरूप धर्माग्रहणं, द्वितीयादि पिण्डेषु गृह्यमाणेषु तथाविध सहकारिसद्भावात् संस्थानस्वरूपस्येव तदनुवृत्तेरपि ग्रहणमिति नसंकटं किंचिदिति । निगमयति - "अतः प्रत्यक्षस्य नकदाचिदपि निर्विशेषविषयत्व" मिति ; "अत" इति साधकाभावात् बाधकसद्भावा त्प्रामाणिकस्य निर्विकल्पकसविकल्पकविभागस्य लोकशास्त्राविरोधेन निर्वाहाच्चेत्यर्थः । "कदाचिदपी" ति सविकल्पकदशाया मिव निर्विकल्पकदशायामपीत्यर्थः ॥

इति श्री कवितार्किक सिंहस्य सर्वतन्त्रस्वतन्त्रस्य **श्रीमद्वेंकटनाथस्य** वेदान्ताचार्यस्य कृतिषु शतदूषण्यां निर्विशेषविषय निर्विकल्पकभंगवाद-

एकादशः ।

---

श्रीः ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः

## अथ द्वादशस्कन्धः ।

यस्य सत्त्वेन विश्वस्य सत्ता सदसदात्मनः ।
प्रत्यक्षाद्यपरिच्छेद्यं तत्सदेकमुपास्महे ॥

यत्तु प्रत्यक्षादिविरुद्धं शास्त्रार्थ मुपपाद्य पुनस्सानुशयैरुक्तं -- प्रत्यक्षादिविरोधे सत्येवहि शास्त्रस्य बलीयस्त्वं वक्तव्यं, विरोधमेव नपश्यामः, प्रत्युतैकार्थ्यं, प्रत्यक्षस्यापि शास्त्रस्येव निर्विशेषसन्मात्रग्राहित्वात् । ननु- यदि सन्मात्रं प्रत्यक्षेण गृह्यते तदा घटोऽस्ति पटोस्ती त्यादि नानाकार वस्तुविषयोपलम्भ व्यवहारयो र्विरोधः, नहि सत्सदित्येव प्रतीतिव्यवहाराविति चेन्मैवं; यथेदं रजत मित्यादिरूपेषु शुक्तिरजतादिभ्रमेष्विदमंशस्याबाधितस्य सर्वत्र प्रत्यक्षेणग्रहणं रजताद्यंशस्य त्वारोपितस्यैव भ्रान्त्यैवेति विविच्यते, तद्वदत्रापि सर्वत्र सन्मात्रप्रकाशव्यवहारयोः प्रत्यक्षोपज्ञत्वं, घटपटादिभेदविषययोस्तु तयो र्भ्रमोपज्ञत्वमिति विविञ्चमः, तथाहि- घटोस्तीत्यादा वस्तित्वं तद्भेदश्चप्रकाशते व्यवहृतेच, तत्र विधिव्यवच्छेदयो र्भावाभावात्मनो रैक्यायोगात् , भेदस्ताव द-

---

( यस्येति ) चिदचिदात्मकस्य प्रपञ्चस्य यदधीनं सत्त्वं तद्रूपमितिभावः । तत्रहेतुः ( प्रत्यक्षेति ) अनेन वादार्थस्संगृहीतः ( सानुशयैरिति ) शास्त्रं शब्दविज्ञाना दसन्निकृष्टेविज्ञानं " असन्निकृष्टवाचात्वद्यमत्रजिहासितं । ताद्रूप्येणपरिच्छित्तिस्तद्विपर्ययतोपिवे " तिन्यायेन प्रत्यक्षबाधिते ऽर्थे शास्त्रस्या प्रवृत्तिं मन्वानैरित्यर्थः । उपलम्भासिद्धिशंकापरिहाराय - व्यवहारग्रहणं । ( शुक्तिरजतादिभ्रमेष्विति ) शुक्तिरजत व्यवहारप्रयोजकज्ञानेष्वित्यर्थः । ( इदमिति ) ज्ञानस्य प्र-

ङ्गीकार्यः, ततश्च स्वरूपभेदयोः सद्घटयोः किं द्वयोरपि ग्राहकं प्रत्यक्षं ? उतान्यतरग्राहीतिविचारणीयं; पूर्वत्रापि किं युगपद्ग्राहकं उत क्रमेणेति? नप्रथमः, स्वरूपग्रहणस्य निरपेक्षतया झटित्युत्पत्तेः, भेदग्रहणस्य स्वाश्रयप्रतियोगिग्रहणसापेक्षस्य जघन्यत्वाच्च यौगपद्यासम्भवात् । नद्वितीयः, क्षणिकस्य ज्ञानस्य निरपेक्षं स्वरूप मवलम्ब्यास्तमितस्य भेदग्रहणाय क्षणान्तरस्थिते रशक्यत्वात् । अन्यतरग्राहित्वपक्षेपि न भेदमात्रग्राहित्वं, निराश्रयभेदग्रहासम्भवात । ततः परिशेषा त्स्वरूपमात्रग्राहिप्रत्यक्षमितिसिद्ध्यति । एवं प्रत्यक्षस्य भेदग्राहित्वासम्भवे तन्मूलानां प्रमाणान्तराणामपि न वस्तुतो भेदसमर्थनसामर्थ्यमिति- कुतस्तत्सिद्धिः । सिद्ध्यन्नपिच भेदः इतरव्यवच्छेदरूपतया स्वयमभावात्मतया षष्ठप्रमाणवेद्यइत्यतोऽपि न तस्य प्रत्यक्षग्राह्यता । एवं प्रत्यक्षे प्रथमाक्षसन्निपातक्षणभाविनि स्वरूपमात्र मवलम्ब्य विलीने प्यविद्या

---

मात्वव्यवस्थापनेन भ्रमस्येदंरजतमितिरूपत्वासिद्धेः । यद्वा लोके भ्रमत्वेन व्यवह्रियमाणेष्वित्यर्थः । प्रकाशः - व्यवहारयोग्यता । तयोः प्रकाशव्यवहारयोः । ( अन्यतरेति ) अन्यतरमात्रग्राहीत्यर्थः । ( क्षणिकस्येति ) अक्षणिकत्वेऽपि विषयसम्बन्धस्या गन्तुकत्वायोगाच्चेति भावः । प्रथमविकल्पे द्वितीयकोटिं दूषयति ( अन्यतरेति ) ननु - प्रत्यक्षस्य सन्मात्रविषयत्वेऽप्यनुमानादिना शास्त्रस्य विरोधस्स्यादित्यत्राह ( एवमिति ) भेदे प्रामाण्याभावात् नतद्विरोधोदोषइतिभावः । पक्षव्याप्त्यादिग्रहणाभावे ऽनुमानस्या प्रवृत्तेः तद्ग्रहस्यच प्रत्यक्षमूलत्वे वाच्ये तस्य सन्मात्रविषयसमर्थनेन प्रत्यक्षस्य तद्विषयत्वाभावे सिद्धे प्रत्यक्षस्थलीयव्यवहाराय क्लृप्तभ्रममूलत्वमेव अनुमानादे र्वाच्यमिति नतेषां भेदे प्रामाण्यं , अतो नतद्विरोधोदोषइत्यर्थः । भेदस्यप्रत्यक्षविषयत्वाभावे हेत्वन्तरमाह ( सिद्ध्यन्नपीति ) ननुसन्निकर्षजन्यत्वाद्भेदज्ञानमपि प्रत्यक्षमेवेत्यत्राह ( एवमिति ) सन्निकृष्टसदारोपितत्वात् प्र

वशा त्तदनन्तरभाविनिर्विकल्पेऽपि सन्निकर्षात् प्रत्यक्षाभिमानमात्रं जायते, नतु साक्षा त्प्रत्यक्षता, इति भ्रान्तिमूलएव भेदव्यवहारइति ।

अत्रब्रमः— ॥ * ॥ भेदापह्नवलोभेन भेदं विधिनिषेधयोः ।
स्वयं समर्थयन् मूर्खः स्ववाग्वज्रेण खण्डितः ॥ * ॥

यदुक्तं-स्वरूपभेदयोर्युगपत्क्रमेणवा ग्रहणमिति, तत्र योग्येषु भेदेषु युगपदेवेतिब्रमः । तदाह- "एकक्षणवर्तित्वेपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणेवस्तुभेदरूपतत्संस्थानगोत्वादे र्गृहीतत्वात् क्षणान्तरग्राह्यं नकिंचिदिहतिष्ठति" इति । स्वरूपवज्जातिगुणादेरपि तत्तदिन्द्रिययोग्यत्वाविशेषात् एकसामग्रीवेद्यत्वं निर्विकल्पकनिरूपणे प्रदर्शितं । नच जात्याद्यतिरिक्तं भेद मिच्छामः । त्वमपिहि घटोऽस्तीत्यादिषु घटत्वादिकमेवात्र भेदतयोदाहरसि, घटत्वादेश्च स्वरूपेण गृह्यमाणस्य न प्रतियोगिज्ञानापेक्षा, आश्रयप्रकाशापेक्षायामपि सहोपलम्भादेव नैराकांक्ष्यं समर्थितं । प्रतियोगिनिरपेक्षस्य कथं भेदत्वमितिचेत् ? यदि तस्य भेदत्वंनास्तीतिसन्यसे, न

---

**त्यक्षत्वभ्रमइत्यर्थः । ( भेदेति ) विधिनिषेधयोर्भेदाभावे निषेधात्मकतया भेदस्य प्रत्यक्षविषयत्वाभावसमर्थनायोगात् तदर्थं विधिनिषेधयो र्भेदसाधनं स्ववाग्व्याहतमित्यर्थः । ( तदाहेति ) स्वरूपग्रहणदशायामेव कथं गोत्वादेर्ग्रहः; गोत्वादे स्स्वरूपाद्भिन्नत्वात् , तथात्वे ऽतिप्रसंगादित्याशंक्य एकसामग्रीवेद्यत्वा युगपद्ग्रह इत्याह ( स्वरूपवदिति ) नन्वेवमपि भेदेकिमायात मित्यत्राह ( नचजातीति ) नहि त्वदनिच्छामात्रेण तत्सिद्धिरित्यत्राह(त्वमपीति)प्रतियोगिज्ञानसापेक्षस्य कथं सहोपलम्भइत्यत्राह( घटत्वादेरिति ) प्रतियोगिज्ञानापेक्षाहि स्वकालीन तया पूर्वकालीनतयावा, स्वरूपेण ग्रहणदशायां नोभयथापीत्यर्थः । ननु - स्वरूपतो ग्रहणे प्याश्रयप्रकाशापेक्षास्त्येवेत्यत्राह ( आश्रयेति ) स्वकालेतदपेक्षाया आवश्यकत्वा ग्रहेतुत्वेनापि तदपेक्षा, गौरवादित्युक्तमित्यर्थः । ( प्रतियोगीति ) प्रतियोगिज्ञाननिरपेक्षस्येत्यर्थः । किं कथं शब्दः क्षेपार्थः, अथप्रश्नार्थइत्यभिप्रेत्याद्यआह ( यदीति ) ततएव भेदत्वाभावादेव ।**

र्हि ततएव आश्रयस्यैव तद्गतघटत्वादेरपि ग्रहणे न कश्चिद्दोषः । तदापि नसन्मात्रग्राहकत्वसिद्धिः,सौहार्देनतुवदामः, जात्यादीनामेव स्वरूपेण गृह्यमाणानां न प्रतियोग्यपेक्षा, तेषामेवतु भेदत्वाख्येन स्वधर्मेण गृह्यमाणानां कदाचि त्प्रतियोग्यपेक्षेति सर्वेषां स्वप्रतीतिसाक्षिक मेतत् । भेदत्वञ्चानन्तरमेव भेदनिरूपणे शिक्षयिष्यामः । बाधाभावेच सेत्स्यति शुक्तिकारजतादिवत् । बाध्याबाध्यांशनिष्ठा वार्तापि निरस्ता ।

यच्चोक्तं प्रत्यक्षस्य भेदग्राहित्वाभावात्तन्मूलाना मन्येषा मपिप्रमाणानां-नभेदसमर्थनसामर्थ्यमिति; तत्र किं तेषां कस्यचिदप्यग्राहकत्वं विवक्षितं ; उताभेदग्राहित्वं,यद्वा भेदग्राहित्वेपि तत्र प्रामाण्यंनास्तीति । नाद्यद्वीतियौ, प्रतीतिबाधापसिद्धांतादिदोषप्रसंगात् । नतृतीयः, भेदबाधकानां निरसिष्यमाणत्वात् ।

---

प्रतियोगिसापेक्षत्वशंकाया अप्यभावादित्यर्थः । ( फलितमाह ) ( तदापीति ) भेदत्वपक्षइव भेदत्वाभावपक्षेपीत्यर्थः । प्रश्नार्थत्वआह ( सौहार्देनत्विति ) ( सर्वेषामिति ) भेदस्य भेदत्वेन ज्ञाने प्रतियोग्यपेक्षा, आकारान्तरेणतु ज्ञाने नतथेत्येतावन्मात्रे संप्रतिपत्तिरुच्यते, अतिरिक्ताभाववादिभिरपि प्रमेयत्वादिरूपेण ज्ञाने प्रतियोगिज्ञानापेक्षा नेष्यतइत्यर्थः । उपसंहरति ( बाधाभावेचेति ) उक्तप्रकारेण बाधाभावे सिद्धेसति बाध्याबाध्यांश विवेकःक्रियत इतिकथापिनिरस्तेत्यर्थः । ( तन्मूलानामिति ) तदनन्तरभाविनामित्यर्थः । ( उताभेदेति ) अभेदमात्रग्राहित्वमित्यर्थः । आदिशब्देन - व्यवहारानुपपत्तिग्रहणम् । किंभेदस्य बाधितत्वा दनुमानादीनां तत्रप्रामाण्याभावः ? उत प्रत्यक्षविषये सन्मात्रएव तत्त्वावेदकत्वात् , स्वविषयभूतेपि भेदे तत्त्वावेदकत्वाभावात् ? यद्वासन्मात्रविषयप्रत्यक्षसहचरितभ्रान्तिमूलत्वाद्वा ? आद्येदोषमाह ( भेदबाधकानामिति ) द्वितीयंशंकते ( यदिचेति ) किंच स्वातन्त्र्येण तत्त्वावेदकत्वंहि प्रामाण्यं, तच्चस्वासाधारणविषयभेदएव वाच्यं, सन्मात्रे प्रत्यक्षवर्तिते स्वातन्त्र्याभावात् , भेदेपि तत्त्वावेदकत्वाभावंवदता त्वया

यदिचप्रत्यक्षचर्वितचर्वणेन तदर्थेऽप्रामाण्यमनुमानादेः,तदातींद्रियस्यक स्यचिदपि कुतश्चित्सिद्धिर्नस्यात् । यदिच स्वविषयभेदे अनुमानादीनांप्रामा ण्यनांगीकृतं;कुत्र तर्हि तेषां तत्स्यात् । नकुत्रचिदितिचेत्, तर्हि प्रत्यक्षैकप्र माणवादिचार्वाक. प्रत्यक्षाप्राप्तविषय प्रमाणान्तरप्रदर्शनेन किं त्वयाप्रतिक्षि प्यते । धर्माधर्मपरतत्वादिगोचर वेदप्रामाण्य प्रत्याशयेतिचेत् ? चार्वाकवदेव व तत्त स्तत्र तत्प्रामाण्यमनिच्छतस्ते किमनयास्वैराचारसुखोपरोधिन्या दुरा- शया । प्रत्यक्षस्य भेदग्राहित्वाभावे लिंगलिंग्यादिभेदोविकल्पसिद्धइति तन्मू लाना मनुमानादीना मप्रामाण्यमितिचेत्, तर्ह्यनुमानादिकं प्रमाणमेव नभव- तीति चार्वाकवद्ब्रूहि, नपुनर्भेदे नप्रमाणमिति । किंच—प्रत्यक्षमूलस्यापि

---

उक्तरूपं प्रामाण्यं नांगीकृतमिति, कुत्रापि तेषा मुक्तरूपं प्रामाण्यंन स्यादित्यर्थः । ( प्रत्यक्षेति ) स्वातन्त्र्येण तत्त्वावेदकत्वप्रदर्शनेन किम- र्थं प्रतिक्षिप्यते, स्वविषये तत्त्वावेदकत्वलक्षण प्रामाण्याभावादित्यर्थः । ननु – तत्त्वावेदकत्वप्रामाण्यसिद्ध्यर्थं नप्रतिक्षिप्यते , किंतु धर्माधर्मा दौ स्वातन्त्र्येण शुक्तिरजतादि भ्रम व्यावृत्त विद्यमानार्थ वि षयत्वरूप प्रामाण्यस्य स्वीकारात , तन्निषेधार्थ मेवे त्याशंकते ( धर्मे ति ) ( चार्वाकवदिति ) यद्यपि व्यावहारिकं प्रामाण्यं त्वयेष्यत इति वैषम्यं, तथापि न तदंगीकारेण प्रयोजन किंचिदस्ति, प्रामाण्यस्य मिथ्या त्वात् , नच मिथ्यात्वस्य व्यावहारिकत्वा त्तद्घटकेनापि व्यावहारिकेण भवितव्यमिति वाच्यम् । भ्रमे शुक्तिरजत विषयत्वस्य व्यावहारि- कत्वेऽपि तद्घटकस्य शुक्तिरजतस्य व्यावहारिकत्वा दर्शनात् । तस्मात् ॥ * ॥ बौद्धागमेन तुल्या स्यान्मानता त्वन्मते श्रुतेः । अर्थाभावे प्यतो नाशा प्रामाण्ये युज्यते तव ॥ * ॥ अतः स्वैरसंचार विरोधेन स्वपरपीडैव तवफलमिति । तृतीयं शंकते ( प्रत्यक्षस्येति ) भेदग्राहित्वा भावे सि- द्धेसतीत्यर्थः । ( नपुनरिति ) ननु – भेदएव प्रसक्तत्वा त्तन्निषेधः सामान्यनिषेधएवच तात्पर्यमितिचेत् , तर्हि चार्वाकनिरासानुपपत्तिः, व्या वहारिक प्रामाण्यांगीकारा त्तन्निरासश्चदूषितः ;। प्रत्यक्षस्य भेदावगा- हित्वा भावान्न तन्मूलानामपि तत्र प्रामाण्य मित्यत्रैव दोषान्तरमाह ( किंचेति ) त्वदेकदेशिना प्रत्यक्षविरुद्धार्थे शास्त्रस्य प्रामाण्यांगीकारा

शास्त्रस्य प्रत्यक्षविरुद्धार्थेपि प्रामाण्यं सम्भवतीति मन्यमानस्य तवानुमानादेरपि तथात्वे कोविरोधः । यच्चाभावरूपस्य भेदस्या भावप्रमाणवेद्यत्वा न्न प्रत्यक्षवेद्यत्वं सम्भवतीति; तदभावाख्यं प्रमाणांतरं प्रमेयान्तरंचा नभ्युपगच्छतां गोष्ठीषु नावतिष्ठते । भवतुवाष ष्ठं प्रमाणं, तथापि तत्रैव भेदग्राहकतयाभ्युपगते क्रमयौगपद्यविकल्पानुपपत्ति स्तदवस्था । प्रत्यक्षेणा धिकरणग्रहणे संस्कारोन्मेषाच्च प्रतियोगिस्मरणेसति क्षणिकेनाप्यभावजन्यज्ञानेन भेदग्रहण मुपपद्यत इतिचेत्: हन्त तर्हि पूर्वप्रत्यक्षेणाधिकरणग्रहणे तथैव प्रतियोगिस्मरणेच्च सति क्षणिकेनापि प्रत्यक्षान्तरेण भेदग्रहणे कानुपपत्तिः । पूर्वोत्तरप्रत्यक्षयोः परस्परवार्तानभिज्ञतया वैशिष्ट्यनसिद्ध्येदितिचेत्, हंत किं प्रत्यक्षस्या भावप्रमाणस्यच परस्परवार्ताभिज्ञता शिक्षिताभवता ? येन तत्र वैशिष्ट्यं बोद्धव्यमितिमन्यसे । प्रथमोदितप्रत्यक्षसंस्कारा द्विशिष्टज्ञानोदय स्तत्रेतिचेत, किं प्रत्यक्षांतरे तथा निर्वाहो राजशासनवा-

---

**दनुमानादे स्तथात्वे कोविरोधः , इह तथा विरोधो ऽपि नास्ति, किन्तु तदगोचरविषयत्वमात्र मित्यर्थः । ( तवेति ) स्वैकदेशिना ऽ भेदोपचारः, अस्यप्रत्यक्षशास्त्रयो र्विरोधवादित्वात । यद्वा विरुद्धपदं विषयपरं, प्रत्यक्षस्य सन्मात्रविषयत्वे ऽपि यथान्वयव्यतिरेकाभ्यां तन्मूलस्य शास्त्रस्य प्रपंचमिथ्यात्वे ऽ पि प्रामाण्यमिष्यते, तथानुमानादे रन्वयव्यतिरेकाभ्यां प्रत्यक्षमूलस्यापि भेदेप्रामाण्य मिष्यतामित्यर्थः । एवं यदि प्रत्यक्षान्वयव्यतिरेकानुविधायित्वस्य तदगोचराविषयत्वे प्रयोजकत्वं मन्येत तदा दोष उक्तइति ध्येयम् । ( क्रमयौगपद्येति ) प्रतियोग्यधिकरणेन विना अभावग्रहणस्या सम्भवादिति भावः । ( परस्पर वार्तानभिज्ञतयेति ) अधिकरणग्राहिप्रत्यक्षस्य उत्तरप्रत्यक्षविषय भेदविषयत्वाभावात भेदग्राहि प्रत्यक्षस्य पूर्वप्रत्यक्ष विषयीभूताधिकरण विषयत्वाभावात् , भेदाधिकरणयो वैंशिष्ट्यं नकेनापि प्रमाणेन सिध्येदित्यर्थः । ( प्रथमोदितेति ) प्रथमोत्पन्न प्रत्यक्षसंस्कार**

रितः । अतएव प्रत्यक्षाभासेन विकल्पेन भेदग्रहण मित्येतदपि दत्तो
त्तरं । एवं प्रत्यक्षस्य भेदग्राहित्वासम्भवे तुल्यन्यायतया षष्ठप्रमाणस्य
प्रत्यक्षाभासस्यच भेदग्राहित्वासम्भवं सिद्धं कृत्वा " अपिचे " त्या-
दिना प्रतीतिविरोधादिक मुदाजहार भाष्यकारः, तद्व्याकुर्मः; यदिस
न्मात्रं प्रत्यक्षग्राह्यं नभेदः तदा तुल्यन्यायतया षष्ठप्रमाणप्रत्यक्षाभा
सादेरपि भेदग्राहित्वासम्भवात् घटोस्ति पटो स्तीति विशिष्टविष-
याप्रतीति विरुध्येत, अश्वार्थिनश्च महिषदर्शने निवृत्तिर्नस्यात, भेद
ग्रहणासम्भवस्य त्वयोक्तत्वात्; सदितिग्रहणस्य चाश्वादिसर्वसाधा-
रणस्य निवर्तकत्वायोगात् । सर्वेषां प्रत्यक्षज्ञानानां सन्मात्रविषयत्वे त-
त्तत्प्रतिपत्तिविषयप्रतिनियतानां सर्वेषां शब्दानां स्मृतिप्रसंगः, ततश्च
तत्प्रयोगोपि यथा विवक्षमेवेति सर्वेषां शब्दानां पर्यायत्वप्रसंगः । स-
र्वेषांच प्रत्यक्षज्ञानानां पूर्वपूर्वगृहीतमात्रग्राहितया स्मृतिवैलक्षण्यन्नस्यात्,

---

सहकारा त्तद्विशिष्टज्ञानं युगपदेवाभावप्रमाणेन भेदाधिकरण विष
यकं जायतइत्यर्थः । संस्कारस्य सहकारित्ववर्णनं ज्ञानस्य क्षणिक-
त्वात्, प्रतियोगिस्मरणकाले विनष्टत्वाभिप्रायेणेति ध्येयम् । इदंच क्वा
चित्काभिप्रायेण, प्रतियोगि स्मरणानन्तरमपि क्वचिदधिकरण ग्रहा
त् ( दत्तोत्तरमिति ) क्रमयौगपद्य विकल्पानुपपत्ते रेवेत्यर्थः । ननुभाष्ये
सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्ति वि
रुध्यत इत्याद्युक्तं, तदयुक्तं-विशिष्टविषय विकल्पांगीकारेण प्रतीति
विरोधाद्यभावादिति शंकायां भाष्यं व्याकुर्वन् दूषणान्तराण्याह' एवं
प्रत्यक्षस्ये' त्यादि ( सर्वेषामिति ) वस्तुतः तत्तदर्थ नियतानामपि श-
ब्दानां त्वदुक्तन्यायेन विशिष्टप्रतीते रसम्भवात्, सन्मात्रएव व्युत्पत्ते
र्ग्राह्यतया सर्वेषां शब्दानां सर्वत्रस्मरणंस्यात् । ततश्च तत्प्रयोगो प्य
र्थविशेषप्रतीति नियतोनस्यात्, किन्तु यथा विवक्षमेवेत्यर्थः । ( स
र्वेषांचेति ) अनुमित्या द्यतिरिक्तत्वेसति गृहीतमात्र ग्राहित्वं स्मृतित्व
प्रयोजकमितिभावः । प्रत्यक्ष पदमाहिम्नाचा नुमित्याद्यतिरिक्तत्वं ल-

नच- तदिष्यते; सर्वेन्द्रियजन्यज्ञानाना मेकैविषयत्वे ऽभ्युपगते रूपश ब्दाद्यग्रहण निवन्धनान्धवधिरादिभेद स्तत्प्रतिनियत विषयबोध जन कत्वहेतुकेन्द्रियभेदक्लृप्तिश्च नस्यात् ।

यत्तु– शास्त्रस्य प्रत्यक्षविरोधपरिहाराय तयो रेकविषयत्वं सा- धितं: तदपि शास्त्रस्य प्रतिपन्नविषयानुवादकत्वापादकं । ब्रह्मणश्च प्र त्यक्षवेद्यत्वं शास्त्रयोन्यधिकरणार्थविरुद्धं, "नसन्दृशेतिष्ठतिरूपमस्य न चक्षुषापश्यति कश्चनैनं", "नचक्षुषागृह्यते नापिवाचा", "मनसातुविशु- द्धेन", "नमांसचक्षुरभिवीक्षतेतं"."नमांसचक्षुषाद्रष्टुं ब्रह्मभूत: सशक्यत" इत्यादि श्रुतिस्मृतिविरुद्धंच । किंच- प्रत्यक्षजन्यक्षणिकज्ञानेन सन्मा त्रस्य ग्रहण मुपपादयता ब्रह्मणएव दृश्यत्वमुक्तंस्यात्, ततश्च तत्प्र युक्ततया त्वदभिमतानि जडत्व नाशित्व मिथ्यात्वादीनि दुर्निवाराणि । अतो जात्यादिलक्षण भेदविशिष्ट ब्रह्मव्यतिरिक्त घटादिसद्विशेषविष- यमेव अस्मदादिप्रत्यक्षं, योगिप्रत्यक्षमपि तत्तद्गुणादिविशिष्टब्रह्मविषय मित्युक्तं । अपिच–सच्छब्दार्थः स्वरूपं घटादिशब्दार्थस्तु भेद इ- तिकेनावधृतं त्वया, घटपटादिषु सदनुवृत्ते स्सतिघटादेश्चमिथोव्यावृत्ते रितिचेत् ; घटादे स्सदनुवृत्ते स्सत्त्वस्यचासतोघटाद्व्यावृत्ते र्विपरीतं किंनस्यात् । असतोऽपि किं घटत्व मितिचेत् मैवं; नहि सन्घट.दिरि ति युष्माभिरेववर्णनात् । यदाच घटोस्ति पटोस्तीति सदनुवृत्त्या

---

भ्यते । नच सिद्धान्ते धारावाहिकज्ञाने द्वितीयादिषु स्मृतित्वप्रसंगः, तत्तत्कालविषयत्वेन गृहीतमात्र ग्राहित्वाभावात् ( इन्द्रियभेदेति ) अने- नविषयभेदाभावे ऽपि करणभेदस्य सत्त्वा च्चक्षुराद्यभावनिबन्धनो ऽन्ध त्वादिव्यपदेश इति निरस्तं । एवं सन्मात्रग्राहित्वे दूषणमभिधाय तत्फ ले शास्त्रप्रत्यक्षैकरस्ये दूषणमाह ( यत्त्विति ) ( स्वरूपमिति ) अधि करण स्वरूपमित्यर्थः । ( केनावधृतमिति ) सच्छब्दार्थ एवभेदः, घट-

सत स्स्वरूपत्व मिष्यते, तदा घटोनास्ति पटोनास्तीत्यसदनुवृत्त्या न स्यापि स्वरूपत्वं किन्नेष्यते । सतितद्व्यावृत्तेरितिचेत; असति सतोपि व्यावृत्ते स्तस्यापि तन्नेष्यताम् । अतो घटत्वादिवत्स त्वमसत्वञ्च तत्तद्वस्तूनां धर्मएव । स्वरूपन्तु घटादीनां घटत्वादेः सत्वादे श्चाश्रयतया परस्परासंकीर्णं प्रत्यक्षेण गृह्यते । अत स्सच्छब्दार्थः स्वरूपंचेद्घटशब्दार्थो पि स्वरूपमेव । घटत्वादे र्धर्मतया निष्कर्षे सत्त्वादेरपि तथेति नस्वरूपत्वं । अतो यत्स्वरूपं घटादीनां प्रत्यक्षग्राह्यं तत्परस्परं व्यावृत्तं सत्ता घटत्वाद्यनन्त विशेषविशिष्टंचेति न तस्य निर्विशेषैकस्वरूपता । अनुवर्त्तमानं चैकं सत्वं घटादिधर्मभूतमिति नतस्यापि सर्वधर्मिभूतब्रह्मता । यश्च प्रतिवस्तुनियतं प्रामाणिकत्वादिकमेव सत्व मिच्छति तस्य पुरतः सत्व मेक मित्यपि दुस्साधम् । अतः प्रत्यक्षस्य सर्वस्य नैकविषयत्वं, नतरां निर्विशेषविषयत्वं, ,नतमां ब्रह्मविषयत्वमिति सिद्धे प्रत्यक्षमूलानां प्रमाणान्तराणामपि प्रत्यक्षागोचरविशिष्टविषयत्वे न कश्चिद्दोषः, प्रत्युत निर्विशेषविषयत्व एव प्रत्यक्षादिबाध इति सिद्धम् ।

इतिश्री कवितार्किक सिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां सन्मात्रग्राहिप्रत्यक्षभंगवादो द्वादशः ।

---

शब्दार्थः स्वरूपमित्यपि वक्तुं शक्यं, विनिगमकाभावादित्यर्थः । किं तर्हि तत्त्वमित्याकांक्षायामाह ( अतोघटत्वादिवदिति )

इति श्री. वाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरण परिचरण परायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां सन्मात्रग्राहि प्रत्यक्षभङ्गो नाम द्वादशस्कन्धः ।

# अथ त्रयोदशस्कन्धः ॥

श्रीमल्लक्ष्मण योगीन्द्र सिद्धान्तेष्वासनिर्गतः।
भेदं विभित्सतां चित्तं भिन्तेतकलिकश्शरः ॥

यदेतत् स्वमर्मघट्टनं - भेदस्स्वरूपं धर्मोवा ? नतावत् स्वरूपं, शुक्तिरजतादिभ्रमानुत्पत्ति प्रसंगात्, इद मित्यधिष्ठानतयाहि शुक्तिस्वरूपमवगम्यते, अन्यथा निरधिष्ठानभ्रमप्रसंगात्, अवगते शुक्तिस्वरूपे तस्यैव रजताद्भेदत्वेन कथं शुक्तिरजतयोर्भेदाग्रहः, कथंतरांच तन्मूल श्शुक्तौ रजताध्यासः, कथंतमांच तदधीनाः कलधौताभिलाषिणः करतलप्रसारण ग्रहण चेलांचलनिबन्धन तद्रक्षणप्रभृतयः, कथंचा ध्यासाभावे नेदंरजत मितिबाधः। किंच नेदं रजत मिति व्यवहारहेतु र्भेदग्रहः पूर्व मस्तिवा नवा? अस्ति चे त्प्रथममेव तथा व्यवहारस्स्यात्; नचे द्भेदस्या ग्रहे स्वरूपस्या

---

(श्रीमल्लक्ष्मणेति) अनेनपद्येन भावान्तराभाव पक्षएव भेददूषणोद्धार स्संभवति, पक्षान्तरेतु परोक्ता नवस्थादिदोषा भवंत्येवेति सूच्यते। परस्मैपदात्मनेपदाभ्यां पूर्वपक्षसिद्धान्तन्यायफलयोः परगतत्वं कर्तृगामित्वंचप्रतीयेते, पूर्वपक्षन्यायफलस्य परगतत्वंच तेनैवन्यायेन जीवब्रह्माभेदखण्डनस्य सिद्धान्त्यभिमतस्यसिद्धेः। (यश्चैतदिति ) एतदित्यनेन दिगित्येतदन्तं परामृश्यते। मर्मघट्टनं – मर्मवेधनं, स्वव्याघातक वचनमिति यावत्। व्याघातश्च-भेदाभावे तदुक्तविकल्पानुत्थानात्, स्वोक्तन्यायेनैव जीवब्रह्मा भेदखण्डन सिद्धेश्च (शुक्तिरजतेति) भेदे भासमाने अध्यस्ताभेद प्रतीत्यसंभवादितिभावः। [निवृत्तिः- अभावः। आदिशब्देन वक्ष्यमाण करतलप्रसारणादि गृह्यते। ] अस्तु स्वरूपग्रहः, तथापि कथं भ्रमासंभवइत्यत्राह ( अवगतइति ) ( कथंचेति ) अध्यासाभावे प्रतिपन्नोपाधौ निषेधरूपो बाधोनस्यादिति भावः ( नचेदिति ) भ्रमात्प्रा क्स्वरूप ग्रहाभावे तदानीमिदमिति व्यवहारो नस्यात्, अधिष्ठानसामान्यग्रहलक्षणकारणाभावेन भ्रमोपि न स्यादित्यर्थः।

व्यग्रहा दिद मितिस्वरूपव्यवहार इदंरजत मित्यध्यासश्च नस्यातां । यदिच घटस्वरूपमेव पटस्यभेदः , तदा घटोभेद इति पर्यायता प्र सज्येत; घटोभिन्नइतिव्यवहारे घटोघटविशिष्ट इत्युक्तंचस्यात् ; भि-न्नशब्दस्य भेदविशिष्टवाचित्वात्, भेदस्यच घटस्वरूपत्वात् । यद्वा घटो भेद इत्येव व्यवहारस्स्यात् । यदिच घटाद्भेदः पटस्यस्वरूपं तदा कुड्ये पटस्वरूपत्वाभावात् कुडयस्य घटाद्भेदाभावे घटकुड्यतादात्म्यं प्रसज्येत इति तेनैव क्रमेण सर्वस्य जगत स्तादात्म्ये स्वरूपभेदवादः सर्वाभेदएव पर्यवस्यतीति जितमायुष्मता । अथैतद्दोषपरिहाराय घट व्यतिरिक्तानां तत्तद्वस्तूनां तानितानि स्वरूपाणि प्रत्येकं घटाद्भेद इति मन्वीथाः , तदा घटव्यतिरिक्तेष्वखिलेषु वस्तुषु परस्परव्यावृत्ते षु घटाद्भिन्न इत्यनुवृत्तव्यवहारस्या नुवृत्तोपाध्यभावा न्निर्विषयव्यवहा रायोगाच्च परस्परस्वरूपाण्येव परस्परानुवृत्तानीति पुनरपि तदेव स-र्वतादात्म्यं प्रसज्येत । किच घटादीना स्वरूपाणि सप्रतियोगिका नि निष्प्रतियोगिकानिवा ? पूर्वत्र प्रतियोगि स्मृत्यभावे घट. पट इ-त्यादिव्यवहारोनस्यात् । उत्तरत्र सप्रतियोगिकभेदरूपत्वं व्याहन्येत ।

---

दूषणान्तरमाह ( घटोभिन्नइति ) घटस्वरूपस्यैव भेदत्वे भिन्न इति व्यवहारस्य घटविशिष्टविषयत्वं वा स्यात् , भिन्न इति व्यवहारोवा नस्यादिति भावः ( यदिचेति ) यदि पटस्वरूपमेव घटाद्भेद. त-दा कुड्यादेः पटान्यस्य सर्वस्य पटस्वरूपत्वाभात घटाभेद स्स्यात् एवं घटस्वरूपस्यैव पटभेदत्वात् कुड्यादीनां पटभेदोपि वक्तव्यः, घ-टपटयो रुभयोरपि तद्भिन्नतादात्म्यात परस्परतादात्म्यं वक्तव्यमिति सर्वतादात्म्यं प्रसज्येतेति भावः ( घटव्यतिरिक्तेष्विति ) सर्वव्यक्ती नां घटभेदत्वे घटभेदइत्यनुगत व्यवहार नियामकस्यानुगत-स्य भेदत्वाख्यधर्मस्य असम्भवात स्वरूपेणैव तेषामनुवृत्तिर्वाच्ये-ति सर्वतादात्म्यं प्रसज्येतेत्यर्थः । ( नचेदिति ) किं धर्मधर्मिणोरैक्या द्धर्मधर्मिभेदो नास्तीत्युच्यते, किंवान्यतरपरिशेषात्, तत्राद्ये स्वरू-

अथ धर्मभेदः तदा धर्मधर्मिणो भेदोऽस्ति नवा ? नचे द्धर्मधर्मिणो रभेदाद्धर्मस्यैवाभावेन धर्मभेदाभावात् पुनरपि सर्वतादात्म्यंप्रसज्येत । यद्वा धर्मिण एवाभावात् कस्य भेदोवर्णनीयः । अथ धर्मधर्मिणो भेदोऽभ्युपगम्यते, तत्रापिभेदः स्वरूपं धर्मोवेति विकल्पे स्वरूप-पक्षस्य दूषितत्वात् धर्मपक्षएव परिशिष्यते, ततश्च तस्यापि धर्मभेदापेक्षयानवस्थास्यात, एवंच स्वरूपधर्मयो रन्यतरकोटिबहिर्भावभावात् अन्योन्याभावपृथक्त्वविशेषाणामपि भेदत्वं पलायितमिति । किंच धर्मधर्मिणो राश्रयप्रतियोगिनोश्च भेदग्रह स्तदाकारग्रहण मन्तरेण स्व-रूपेण गृह्यमाणयो र्नसम्भवति, धर्मधर्मित्वादि तत्तदाकारग्रहश्च त-

---

पपक्षोक्तदोषः । द्वितीये धर्मिपरिशेषोवा धर्मपरिशेषोवेति विकल्पम-भिप्रेत्य दूषयति (धर्मधर्मिणोरिति) (अभेदादिति) भेदाभावादित्यर्थः । (धर्मभेदाभावादिति) धर्मभूतभेदस्याभावादित्यर्थः । द्वितीयंदूषयति (यद्वेति) (किश्चधर्मधर्मिणोरिति) भेदतद्धर्मिणोरित्यर्थः । आश्रय प्रतियोगिनोः—भेदाश्रयप्रतियोगिनोः । धर्मत्वधर्मित्वरूपेणाहि भेदतद्धर्मि-णोर्ग्रहणम्, धर्मत्वधर्मित्वग्रहश्च भेदग्रहेसत्येवेत्यन्योन्याश्रयः । एवं-धर्मितया प्रतियोगितयाच भेदधर्मिप्रतियोगिनो ग्रहण एव भेदग्रहणं भेदग्रहणे सत्येवच धर्मित्वप्रतियोगित्वग्रहणं, ऐक्यग्रहे तदसम्भवादि-त्यर्थः । किंच देशकालव्यवहितवद्भेदस्य स्वरूपतः प्रत्यक्षायोग्य-त्वात् न तत्प्रत्यक्षं संभवति, तथाहि — किं प्रत्यक्षं विधिव्यापारं उतव्यवच्छेदव्यापारं उतोभयव्यापारमिति । आद्ये वस्तुस्वरूपविधिमात्रोपक्षया ह्यन्यव्यावृत्तिरूप भेदमुद्भावयितु मुत्सहते प्रत्यक्षम् । नापि-द्वितीयः, विधिमन्तरेण व्यवच्छेदासिद्धेः । लब्धरूप एव लब्ध-रूपस्य निषेधात् । तृतीये किं विधिपूर्वको व्यवच्छेदः, उत व्य-वच्छेदपूर्वको विधिरिति, अथवा युगपदुभयमिति । आद्येऽनवच्छि-न्नवस्तुस्वरूपविधिना विरोधादनन्तरं व्यवच्छेदासम्भवः । द्वितीये विधिपूर्वकत्वाद्व्यवच्छेदस्य तदभावे सुतरामसम्भवः । नापि

यो भेदग्रहेसतीति परस्पराश्रयणं, वस्त्वन्तरसिद्धा वेकविधि रन्यव्यव च्छेदः व्यवच्छेदसिद्धौ वस्त्वन्तरसिद्धिरितिच । नच भेदग्रहण मन्त रेणापि स्वरूपेण गृह्यमाणयो र्धर्मित्वादिग्रहइतिवाच्यम् । भेदग्रहाभावेहि गृह्यमाणयोरेकत्वग्रहे पर्यवसानंस्यात् , अनेकत्वाग्रहेवा, उभयथापि ध र्मत्वधर्मित्वलक्षणवैलक्षण्यं कथंचिदपि नसम्भवति । कथंतर्हि सार्वलौकि को ऽयं भेदग्रहः ; अविद्यामाहात्म्यादितिभ्रमः । नचाविद्यामूलेपि भे दग्रहे - विचाराः प्रागुक्ताः प्रक्रमन्ते, अविचारितरमणीयतैकवेषत्वा त् । नचैतावता परमार्थत्वसिद्धिः, वस्तुतो विचारासहत्वात् । नच वाच्यम् प्रमाणप्रमेय तदुपकरण तदवान्तरभेदकथक सिद्धान्तसाध

---

तृतीयः, विधिनिमित्तत्वाद्व्यवच्छेदस्य , नहि हेतुहेतुमतो र्युगपत्स- मुद्भवः । तथाच विधिरेव व्यवच्छेद इति परिशिष्यते , तत्रापि यद्वस्तु विधीयते तदपेक्षयैव व्यवच्छेदो विधि रित्ययुक्तम् , प्रती- तिविरोधात् । शब्दार्थविरोधाच्च । अत एकविधि र्वस्त्वन्तरापेक्ष या व्यवच्छेद इति परिशिष्यते । एवंस्थिते दोषमाह ( वस्त्वन्त रेति ) एकविधिरेव अन्यव्यवच्छेदक इति वदता वक्तव्यम् - घट इत्याकारको विधिः पटादे र्व्यवच्छेदः न घटादे रितिकुतः , पटस्य तदन्यत्वादितिचेत् ? तर्हि पटस्यान्यत्वे सिद्धे घट इत्याकारस्य वि- धे स्तद्व्यवच्छेदतासिद्धिः, पटव्यवच्छेदतासिद्धौच घटा त्पटस्य व- स्त्वन्तरतासिद्धि रित्यन्योन्याश्रयतेत्यर्थः । इतिचेत्यनन्तरं परस्पराश्र यणमित्यनुषंगः ( अविद्यामाहात्म्यादिति ) प्रत्यक्ष मुक्तदोषै र्भेदविषय त्वासम्भवा त्सन्मात्रविषयं, अविद्यामाहात्म्यात् सकलदोषमवर्धयोपि भे दभ्रम उत्पद्यत इत्यर्थः । इन्द्रियान्वयव्यतिरेकौतु अधिष्ठानभूतस- न्मात्रग्रहोपक्षीणाविति भावः । ( वस्तुतइति) आपाततो विचारसहत्वे न प्रतीतिमात्रमित्यर्थः । तदुपकरणं- तर्कादि । तदवान्तरभेदः-प्र- माण प्रमेयतदुपकरणावान्तरभेदः । भेदव्यवस्थेति द्वन्द्वः । इदमेव प्रमाणं प्रयोक्तव्यम् - इयमेव कथा प्रवर्तनीया एत एव निग्रहा उद्भावनीया

नदूषणादि भेदव्यवस्थाभंगात् स्ववचनविरोध स्वसाध्यभंगादिरिति, साध्यत्वाभिमत विश्वानुप्रविष्ट स्ववचनस्वसाध्यादिभंगेपि स्वाभिमता द्वैत सिद्धेरवर्जनीयत्वात् । किंचासिद्ध भेदेन केनचि द्भेदसाधन मशक्यं, अन्यथात्वनवस्थैवेत्येषा दिक् ।

---

इत्यादिसमयबन्धो व्यवस्था(स्ववचनेति) प्रमाणादिभेदवचनस्य भेदो नास्तीति वचनेन विरोधप्रसंगः । स्वसाध्यं-भावरूपाज्ञानादि । भेदसाधकत्वाभिमत प्रमाणस्य भेददूषका द्भेदःसिद्धो नवेति विकल्प्य द्वितीये दोषमाह (असिद्धभेदेनेति) आद्य आह (अन्यथेति) भेददूषका द्भिन्नतया सिद्धंहि भेदं साधयेत्, दूषकाद्भिन्नतयाच येन सिद्धिस्तत्राप्येवं विकल्पसम्भवादिति भावः । 'एषादिगि'त्यनेनेदमपि सूचितं, यदाहनवीनः - किमन्योन्याभावो भेदः, उतवैलक्षण्यं, अथवा - स्वरूपं । नाद्यः, तत्प्रतियोगिधर्मिज्ञानानामसम्भवात् । तत्र न तावद्घटः प्रतियोगी घटात्यन्ताभाव घटान्योन्याभावयो रभेदप्रसङ्गात् । सम्बन्धिनिरूप्य स्वभावानां समानकालीनानां संयोगादीनां सम्बन्धिभेदेनैव भेददर्शनात् । किञ्च भेदोह्यभेदविरोधी, तस्माद्भेदोऽभेदस्यैवाभावः स्यात्, न घटस्य । नच घटादेरेव अभेदः, घटाधिकरणे घट भेदाभावप्रसङ्गात । नापि तादात्म्यं प्रतियोगि, तद्घटस्वरूपंवा, घटत्वंवा अभेदोवा, अखण्डधर्मोवा । नाद्यः, परमते घटेऽपि तद्भेदप्रसंगात् । भेदस्य प्रतियोगिसामानाधिकरण्यानुपपत्तेश्च । नद्वितीयः, तद्भिन्नस्य तादात्म्यत्वानुपपत्तेः । घटत्वस्य स्वाभावानधिकरणतया घटत्वे घटभेदानुपपत्तेश्च । अभावस्येव भावस्यापि विरुद्धत्वेन स्वाभावानधिकरणत्वात । नच विरुद्धयोरैकाधिकरण्यमेव विरुद्धं, नत्वाधाराधेयत्वमिति वाच्यम् । अभावे तदभावस्यापि क्लप्तत्वात । किंच अभावाधिकरणत्वयोग्यभूतलस्य घटाधारतादशायां तदभावानाधारत्वं तदधिकरणत्वायोग्यघटाधारत्व प्रयुक्तमेव । एवं घटत्वमिह नास्ति अयंघटो नेति प्रतीत्योर्वैलक्षण्यानुपपत्तेश्च, भेदस्य घटप्रतियोगिकत्वानुपपत्तेश्च, अन्यप्रतियोगिकस्याभावस्य अन्यप्रतियोगिकत्वानुपपत्तेश्च ।

किंच यो यस्य यद्भेदविरोधीसतस्य तस्माद्भेदः ; तथाच घटधर्मि कपटाभेदविरोधीघटस्य पटाद्भेदः , सचाभेदो नवास्तव इति तर्कितो वाच्यः, तथाच यत्र यद्भेदे तर्किते यस्यानुपपत्तिः प्रसज्यते , सतस्य तस्माद्भेदः, नच पटेघटत्वाभावः पटेघटतादात्म्यस्य तर्कितस्य विरोधी, वृक्षस्याग्रत्वाभावप्रसंगात् । नतृतीयः – अभेदतादात्म्ययो रन्योन्यज्ञानाधीनज्ञानतया न्योन्याश्रयात् । न-चतुर्थः – शाब्दघटज्ञानाद्भेदज्ञानाभावप्रसंगात , तादात्म्यस्य शाब्दादनुपस्थितेः, जात्यतिरिक्ताखण्ड तादात्म्याभ्युपगमेतेनैव सर्वव्यवहारोपपत्तौ जातिविलोपप्रसंगाच्च । तादृशाखण्ड तादात्म्यप्रतियोगिकाभावस्य घटाद्यप्रतियोगितया तद्भेदत्वानुपपत्तेश्च । नह्यन्याभावोऽन्य प्रतियोगिकः । एवं धर्म्यपि दुर्निरूपः, तथाहि–यत्र प्रतीयते भेदस्तदेवास्यास्पदं यदि । अप्रतीतौ सुषुप्त्यादौ विश्वमेकं भवेत्तदा ॥ यदा कदाचिद्धिषणा तस्य स्थाननियामिका । इतिचेत् ? पुरुषेऽपि स्यात्तद्भेदस्तत्प्रतीतितः ॥ यत्र प्रतीयते भेदस्तदेवास्यास्पदं मतम् । इति चेन्नूनमायातो दुष्टात्मान्योन्यसंश्रयः ॥ यत्र यस्यास्ति सत्ता तज्ज्ञानं तत्रभवे त्प्रमा । प्रमाधीनार्थसत्तायां नान्योन्याश्रयता कथं ॥ अपि-च यत्रास्ति तत्रास्तीत्युक्तंस्यात्, क्वास्तीति प्रश्ने किमुत्तरम्, तथाचात्माश्रयः । किंच घटेऽपि घटभेदज्ञानं प्रमैव स्यात्, अबाधात् । नहि घटस्य तस्य वा स्वरूपं कश्चि द्बाधते । ननु तादात्म्यभेदज्ञानयो र्द्वयोरपि कथमबाधितत्वमितिचेत्, एवंसति बाधएवाप्रमा, अविनिगमोवा । ननु पटे घटभेदसम्बन्धस्या बाधातत्रतद्धीः – प्रमा , घटेतु सम्बन्धस्य बाधादप्रमेतिचेन्न । पटेपि सम्बन्धान्तरा भावात् । पट स्वरूपमेव सबन्धो न घटस्वरूपं , अतोनाविगमइति चेत् , तर्हि कुड्यादौ घट भेदो न स्यात् , तत्रापि कुड्यादिस्वरूपमेव सबन्धोऽस्तीतिचेत् ; तर्हि भेदप्रमाया विषयवैशिष्ट्यस्याननुगतपटादिस्वरूपविषयत्वे घटेऽपि यथाज्ञानं तदबाधितं , इदंस्वरूपं सम्बन्धइति नियामकाभावात । नच घटातिरिक्त स्वरूपमेव तत्सम्बन्धः , किमतिरेकःस्वयं सम्बन्धबहिर्भूतः सम्बन्ध/

त्मकस्वरूपमुपलक्षयति ; किंवा स्वयमपि सम्बन्धांतर्गत स्वसम्बन्धा त्मकस्वरूपविशेषणं भवति ; आद्ये घटस्वरूपमपि तद्भेदसम्बन्धः स्यात ।

नन्वतिरेकस्स्वसम्बन्धिनमेवोपलक्षयति ; नच घटस्तत्सम्बन्धीति चेन्न ; सम्बन्धस्यैवाद्यानिरूपणात । विशेषणत्वेच न स्वयमेव स्वसंसर्गः, घटेऽपि तत्प्रतीतेरबाधप्रसंगात । अन्यश्चे त्तस्यापि नियताधिकरणसंसर्गौ नस्वयं, उक्तदोषात । नचप्रथमः नियाम्यस्य नियामकत्वायोगात् । अपरश्चेत् भेदानन्त्यं । तत्रच प्रथमस्य कस्यचित्संसर्गाभावे तदधीनसंसर्गाणा मन्येषां न संसर्ग इत्यसंसर्गाएव सर्वे स्युरिति तद्विशिष्टज्ञानं सर्वत्र भ्रान्तिस्तस्यापि वा प्रमास्यात् , सर्वेषां तुल्यत्वात ।

ननु नान्योन्याश्रयादिर्दोषः ; नहि भेदो भेदेनजन्यते , नवा ज्ञायते , नवा तदाश्रयत्वे धर्मिण स्तदपेक्षा, अनादिभेदाश्रयत्वस्यानपेक्षत्वात् ; नच भेदाश्रयत्वज्ञाने पूर्व भेदाश्रयत्वज्ञान मपेक्ष्यत इत्यन्योन्याश्रयादिरिति वाच्यम्, घटादे र्भेदाश्रयत्वज्ञानाभावेपि तन्निष्ठस्य भेदस्य प्रमितत्वात्, नहि भेदज्ञानेघटनिष्ठतदाश्रयत्वज्ञानं हेतुरितिचेन्न । भेदधर्मित्वस्यानिरूपणे इदमस्माद्भिन्नमिदं नेति व्यवस्थाया आकस्मिकत्वप्रसंगात् । भेदाश्रयानिरूपणप्रयुक्तभेदज्ञानप्रमात्वविप्रतिपत्तिर्हि भेदाश्रयनिरूपणेन निरसनीया, तदनिरासे इद मस्माद्भिन्नमिदंनेति व्यवस्थाया अयोगात् । तथाच भेदाश्रयस्य प्रतियोग्यतिरिक्तत्वनिश्चये तत्याश्रयानिरूपणाभावात् भेदज्ञानस्य प्रमात्वनिश्चयः, तन्निश्चयेच भेदाश्रयतया प्रतीतस्य प्रतियोग्यतिरिक्तत्वनिश्चयइति परस्पराश्रयप्रसंगात् भेदस्य प्रामाणिकत्वासिद्धेः ।

किंच यदिप्रतियोगितावच्छेदकात्यन्ताभाववत्त्वमप्यन्योन्याभववत्त्वे न प्रयोजकं तदानियामकाभावात् भेदाधिकरणस्य इदमित्यनुरूपणात तत्प्रमात्वाप्रमात्वयोर्व्यवस्थाया अयोगात सर्वं सर्वतोभिद्येतनभिद्यतेवा । अथतत्प्रयोजकं तदा घटे भेदसत्तांविना अलभमानसत्ताकस्य प्रतियोगिता

वच्छेदकात्यन्ताभावस्य तत्र भेदसत्ताप्रयोजकत्वायोगात्; येन वि-
ना यस्य सत्ता नास्ति तस्य तत्सत्ताप्रयोजकत्वेऽन्योन्याश्रयात, उ-
त्पत्त्यन्योन्याश्रयस्याप्यनेनैवप्रकारेण दोषत्वात् । ननुमाभूद्भेद स्वाश्र
यः, आत्मवदनाश्रितएव सत्यो ऽस्त्विवितिचेन्न; श्रुत्या तादृशभेदस्य-
काप्यसिद्धेः, प्रत्यक्षादिनातु स्वाश्रयस्यैव तस्य प्रतीतेः ।

ननूक्तरीत्याऽऽश्रयानिरूपणादेव स्वातन्त्र्यासिद्धिः सत्तावदितिचेत्; त
स्याश्रितत्ववत्स्वरूपस्याप्यपारमार्थिकत्वेऽपि प्रत्यक्षादितःप्रतीत्युपपत्तेः स्व
तन्त्रभेदस्य जीवब्रह्मैक्याविरोधाच्च । भेदस्य स्वाश्रय एव स्वप्रतियोग्यभेद
विरुद्धत्वात् । किंचाभेदविरोधिनएवभेदत्वात् भेदत्वमस्यपारिभाषिकमेव
स्यात् ।

किंच भेदज्ञानमपि नसंभवति, किमेतौ परस्परं भिन्नावितिवा,
इदमिदं नभवतीतिवा, अस्माद्भिन्नइतिवा ; सर्वथाप्यन्योन्याश्रयः, प्रथ-
मे द्वितीयज्ञानस्य भेदज्ञानाधीनत्वात् दूरस्थवनस्पत्योरपि तद्विज्ञान-
प्रसंगात, अभेदग्रहस्य प्रतिबन्धकत्वे यत्संशयेतिन्यायात् भेदग्रह-
स्यहेतुत्वात् , परस्परभावस्यापि भेदरूपत्वात् । नाद्वितियः भेदेभेदत्व-
ज्ञानंविना तद्विशिष्टज्ञानानुपपत्तेः । अतएव नतृतीयः, प्रतियोगित्वग्र
हस्य भेदग्रहाधीनत्वात्, पञ्चम्याः प्रतियोगितार्थकत्वात् ।

अपिच घटे पटाभेदानुपलब्धे रनन्यथासिद्धत्वनिश्चयं विनानतदभाव
रूपभेदधीः,तन्निश्चयश्च यदि घटःपटस्स्यात तद्वदेवोपलभ्येतेति तर्कावतारा
त्, तद्वदिति सादृश्यगर्भः तर्कश्च भेदज्ञानादित्यन्योन्याश्रयः । अनुपलब्धि
मात्रजज्ञानस्य सत्तानिश्चयरूपत्वे करतलामलकादिज्ञान इव क्वचिदपि
प्रामाण्यसंशयस्य भेदज्ञानेऽनुपपत्तेः, सत्तानिश्चयार्थं तर्क आवश्यक इ-
तिदुस्तरोऽयमन्योन्याश्रयः ।

किंच तस्यैतस्माद्भेदसंशयव्यतिरेकनिश्चयदशायामस्य ततो
भेदनिश्चयोनेति सार्वजनीनमिति तस्यैतद्भेदनिश्चयोऽस्य ततो
भेदनिश्चये कारणं यत्संशयेतिन्यात्, एवमितरत्रापि भेदनि
श्चये सहेतुरित्यन्योन्याश्रयः । नच घटधर्मिकभेदः परमते तत्रत्रलियो

गिकोभवति येन तस्य ग्राह्यतया [illegible]न्धकः स्यात्; अयं सनभवतीति ज्ञानस्य विशेषणतया विशेष्यतया वा तद्गतभेद-विषयत्वायोगाच्च तस्येंद्रियासन्निकर्षात् । नच प्रतियोगिनि धर्मितावच्छेदकाभावनिश्चय एव तद्धेतुः, विनिगमकाभावात् । मूलेऽग्रत्वाभावनिश्चयेप्यग्रवृक्षे मूलवृक्षाभेदनिश्चयेन भेदभ्रमदशायां तस्मिन्–सत्यपि तद्दर्शनात्, धर्मितावच्छेदकीभूत घटत्वाद्यभावनिश्चयस्यापि घटादिभेदज्ञानाधीनत्वात् । पटत्वनिरूपणस्य घटभेदनिरूपणाधीनत्वात, प्रतियोगितावच्छेदकस्यैतद्वृत्तित्वनिश्चयदशायां प्रतियोगिनि धर्मितावच्छेदकाभावस्य अनिश्चयाच्च तत्राप्यन्योन्याश्रयात् ।

एवं भेदनिरूपकप्रतियोगिज्ञानस्यापि भेदज्ञानाधीनत्वादन्योन्याश्रयः । प्रतियोगित्वज्ञानंच विशेषणज्ञानतया कारणं, सन्निकर्षांतराभावाच्च तज्ज्ञानंकारणं, प्रतियोगिनोभेदाज्ञानदशायांच प्रतियोगित्वं नज्ञायतइति भेदज्ञानंतत्रकारणं । अपिच घटात्पटोभिन्न इत्यत्र मत्वर्थो भाति, घटस्य भेदइत्यत्र षष्ठयर्थः । तदुभयज्ञानंच घटाद्भेदज्ञानाधीनं, तदज्ञानदशायां नियमेन तदप्रतीतेः । नचवस्तुसद्भेदसत्तैवापेक्षिता, तदभावे ऽपि ज्ञानदशायां सम्बन्धप्रतीतेः, तत्सत्वेपि तदज्ञानदशायां यमजयोस्तदप्रतीतेश्च । तदज्ञानातिरिक्तस्यच दोषस्याभावात् । एवं भेदंप्रति घटभिन्नः पट इत्यत्र घटो विशेषणत्वेनभाति, पटोविशेष्यतया भाति । इदंप्रतियोगिधर्मिणो विशेषणविशेष्यत्वज्ञानमपि भेदज्ञानाधीनं । अन्यथा एकत्र विरुद्धयो र्ज्ञानासम्भवात् । तथाच भेदज्ञानेपि भेदज्ञानान्तरमपेक्षणीयं, तत्रापि तद्ज्ञानान्तरमित्यनवस्था । एवंच क्लृप्तकारणाभावे ऽपिं कार्यं स्वप्नरथादिव न्मायिकमेव ।

किञ्चास्य प्रतियोगिनस्स्वयं नभेदः स्वावृत्तित्वात्, अभेदस्यन्चासंबन्धत्वात्, भेदो भिन्न इति प्रतीत्योरवैलक्षण्यापाताच्च, स्वस्यैव स्वंप्रति विशेषणविशेष्यत्वायोगाच्च । भेदान्तरंचाधिकरणभेदमात्रादनुपपन्नं, तथात्वेतथात्वेवा अवाधाविनिगमाभ्यां घटेऽपि सःस्यादित्येकत्रैकस्य भेदद्वयं स्यात्, एवं तृतीयोऽपि, अन्यथा द्वितीयस्य वटभेदायोगात् । प्रथमस्यन्च स्ववृत्तिवृत्तित्वानुपपत्तेः । अन्यथैतौ भे

दौ घटाद्भिन्नाविति प्रथमाद्वैतभेदयोः प्रतीत्ययोगात् । नहियुगप त्स्वविशेष्यं प्रति स्वयं विशेषणं भवति । अयमप्यबाधाविनिगमा भ्यां पृथगेव । ततश्चतुर्था द्विरप्यखिलवृत्तिस्स्यादित्येकस्यानन्ताप्रा- माणिकभेदाः । एवं तेषामप्यन्योन्यं द्रष्टव्यम् ।

नापि वैलक्षण्यं भेदः, तद्धि विविधलक्षणकत्वंवा विरुद्धलक्षणयोगि त्वंवा । नाद्यः,एकस्याप्यात्मनः परमते बुद्ध्याद्यनेकलक्षणत्वात् । द्वितीये यदि परस्परात्यन्ताभावसमानाधिकरणत्वं विरोधः, तर्हि सुखादावपि समा नं । अथपरस्परात्यन्ताभावेनैव समानाधिकरणत्वं, सुखादिकंच परस्परेणा पि समानाधिकरणमितिचेन्न , तस्यापि धर्मिभेदाधीनत्वात् । अथ परस्पराश्रयभेदसमानाधिकरणत्वं, परस्पराश्रयात् । नापि स्वरूपं भेदः, भेदस्य विशेषणविशेष्यतयैवप्रतीतेः , एकत्रचतदयोगात् । अपिच अभेदविरोधी भेदस्तस्मिन्सति तदप्रतीतेः । नच घटादिस्वरू- पं भेदः पटादिमात्रात्मतदभेदविरोधी, तदुभयसामानाधिकरण्यध- र्मधर्मिभावयोस्सत्त्वात् । नच पटस्य पटस्वरूपतोऽन्यः कश्चिद्भेदो ऽस्ति, सप्रतियोगिभेदस्य निष्प्रतियोगिस्वरूपत्वानुपपत्तेश्च । घटभे दयोर्धर्मधर्मिभावानुपपत्तेश्च । तस्माद्वास्तवभेदमतेभेदप्रतीतिर्नि - विषयैव । सिद्धांतेतु कथंचित्सासविषया । तथाहि- इदमिदंनेतिप्रतीति स्तदुभयनिरूपिताभेदाभावं विषयीकरोति , पदद्वयसामानाधिकरण्यार्थाभेदस्यैव नञर्थप्रतियोगित्वानुभवात् । संभवतिच तदुभयाभेदः, अस्तिहि घटपटयोस्सदिदंसदिदमित्य नुवृत्तसत्स्वरूपाभासः । सच्च घटाद्यधिष्ठानं 'आत्मैवेदं सर्व ' मि- तिश्रुतिप्रसिद्धात्मस्वरूपम् । नच सत्ता तद्विषयो नात्मेति वाच्यम् । ' सदेवसौम्ये ' त्यादिश्रुतेरात्मस्वरूपातिरिक्तनिषेधात् । सर्वत्र अधिष्ठा नसदात्मानुगमादेवानुगतसद्बुद्ध्युपपत्तेः तदन्यसत्तायां मानाभा - वात् । तस्यैवानुगततया भावप्रत्ययान्तशब्दार्थत्वाच्च । तदेवच सन् घटइत्यादौ घटाद्यात्मकतया भासमानं घटादेः पारमार्थिकं स्वरू- पम् । स्वरूपमेवचाभेदः, परैरपि तथाभ्युपगमात् । अयंच स्वरूपा भेदो वास्तवः । एवंच घटपटादिनिरूपिता भेदात्यन्ताभावो ऽविद्यया

अत्रोच्यते - न तावद्भेदप्रतीत्यपह्नवश्शक्यः; स्ववचनविरोध बा धापसिद्धान्तादिप्रसंगात्, तथासतिहि युष्मदस्मत्प्रत्ययगोचरयो र्विष यविषयिणो स्तमः प्रकाशव द्विरुद्धस्वभावयो रितरेतरभावानुपपत्ति रित्यादिभाषणमपि व्याहन्येतेति । नच भेदप्रतीतिकारणापह्नवश्श क्यः, कार्यस्य कारणावश्यम्भावात् । अन्यथा लोकायतमतापाता-त् । नच भेदप्रतीतेरकार्यत्वं वक्तुं शक्यं, नित्यत्वतुच्छत्वयो स्व येव त्यागात् । नच - दुर्निरूपं तत्कारणमिति वाच्यम्, एतत्कार

---

कल्पतो धर्मिप्रतियोग्याश्रितो घटः पटो नभवतीति प्रतीयते, इमौ भिन्नाविति च । इमौ विभक्ताविर्त्युभयाश्रितत्वे ऽपि अयमस्माद्विभक्त इतिवद् यमस्माद्भिन्नइति प्रतीतिः । सचभेदस्साक्षिभास्यइति नतत्रप्रति योग्यादिज्ञानापेक्षा । नचैवं सर्वदा भेदप्रतिभासप्रसंगः, साक्षिमात्रभा स्यस्याप्यालोकस्य स्वावच्छेदकालोकाकारवृत्त्याभिव्यक्तिसाक्षिणा प्रति भासादिवत् भेदप्रतियोग्यभेदप्रतियोग्यभेदानिरूपकघटपटाद्यसाधारण-स्वरूपोपस्थिताविव भेदस्य साक्षिभास्यतया कदाचित् प्रतिभासोपप-त्तेः । भेदप्रतियोग्यभेदप्रतियोग्यभेदनिरूपकत्वेनच घटादेः प्रतिभासो नभेदप्रतियोगित्वेनचेति नघटादिप्रतियोगिकत्वानुभवविरोधो ऽपीति ।

धर्मधर्म्यादिविकल्पदूषणं पश्चादुद्धरिष्यन् प्रथमतः प्रतीत्या - भेदस्वरूपं साधयति "नतावदि"त्यादिना "एवञ्चे" त्यतः प्राक्तनेन ग्र न्थेन । तत्र भेदप्रतीतितौ परस्पराश्रयस्य प्रागभिधानात् तदुद्धा-रेण विना प्रतीत्या भेदसाधनायोगात् तद्दूषणमुद्धर्तु किमन्योन्याश्रय णोद्भावनेन प्रतीत्यपह्नवोऽभिप्रेतः, उतकारणापह्नवेन प्रतीतेर्मिथ्यात्वं यद्वानिर्वचनीय कारणत्वात्प्रतीते मिथ्यात्वं, किंवानिर्विषयत्वं, अथ वा बाध्यविषयत्वं, इति विकल्पमभिप्रेत्य प्रथमं दूषयति (नतावदि ति) (स्ववचनेति) 'अविद्यामूले भेदग्रह' इति वचनविरोधः । प्रतीत्यभा ववचनमर्थाङ्गीकारि भाष्यव्याहतचेत्याह (तथासतीति) भेदप्रतीत्य पह्नवे सतीत्यर्थः । (नच भेदेति) मिथ्यात्वेऽपि कार्यत्वादेव कारणं

णत्वेनैव सुनिरूपत्वात्, अन्वयव्यतिरेकवशात् इन्द्रियादिविशेषप्रसिद्धेश्च। भवतापि चाविद्याकारणमिति विशेषतो निर्णीतं, अन्यथा परमार्थत्वप्रसंगात्। नचास्य निर्विषयत्वं सुवचम्, प्रतीत्यपह्नवपक्षोक्त दोषावश्यम्भावात्, स्वबाध्यभेदविषयप्रतीत्यभावेन परसिद्धान्तास्थिरीकरणाच्च। अतो बाध्यविषयत्व मवशिष्यते, तदपि दुर्वचं, बाधकप्रमाणस्य भेदग्राहित्वे भेदाभावग्राहित्वे यत्किंचिद्ग्राहित्वाभावेच भेदस्य स्थिरीकरणात्। भेदाभावोपि सिद्ध्यन् भेदाद्भिन्नएव सिद्ध्यति, अन्यथा तदसिद्धेः तत्सिद्धेर्वा भेदासिद्ध्यापातात्। एवंच सामान्यतः स्थापिते भेदे न पृथग्जल्पाना मुत्तरापेक्षा। याचात्र भेदतिरस्करिणी, सापि साध्वसाधुविवेक दिव्यचक्षुपि जने नजागर्ति। तथाहि—स्वरूपं धर्मोवेति विकल्पयन् किं सामान्यतः स्वरूपधर्मयोः भेदमंगीकृत्य विकल्पयत्यनंगीकृत्यवा? न प्रथमः, विकल्पस्य निष्फलत्वात्, अन्यथा भ्युपगमबाधात्। न द्वितीयः, विकल्पस्यानुत्थानात्। न पुनः पर्यायेण विकल्पः। नच - निर्मु

---

वाच्यमिति भावः (स्वबाध्येति) भेदविषयप्रतीत्यभावेन तन्निरास इति भावः। भेदाभावग्राहित्वे कथंभेदस्थिरीकरणं, तथासत्यतिप्रसङ्गादित्यत्राह (भेदाभावोऽपीति) अन्यथा-भेदाद्भिन्नत्वेन सिद्ध्यभावे। तदसिद्धेः-भेदाभावासिद्धेः (तत्सिद्धेर्वेति) यदिभेदाद्भिन्नत्वेनासिद्धावपि भेदाभावसिद्धि स्तदा भेदात्मकतयैव सिद्धेरभेदसिद्ध्यैव भेदसिद्धिस्स्यादित्यर्थः। एवमप्युक्त दूषणानां कः प्रतिक्षेपइत्यत्राह—(एवञ्चेति) (सामान्यतइति) धर्मत्वधर्मित्वविशेषानादरेणेत्यर्थः। अभ्युपगम्यापेक्षामाह (याचेति (निष्फलत्वादिति) भेदाभावसिद्धिलक्षण फलासिद्धेरित्यर्थः। (अन्यथेति) भेदाभावसिद्धिरूप फलसिद्धावित्यर्थः। उपजीव्यबाधोप्यत्र अभिमतः। एकवस्तुविषयत्वमात्रेण - न पदद्वयस्य पर्यायता नीलमुत्पलमितिवादित्यत्राह (नचेति) भेदमात्रनिरासे प्रवृत्तिनिमित्तभेदस्यापि निरासाद्धर्मधर्मिणोः रप्युपाध्यो र्भे-

क्तोपाधिभेदैकवस्तुगोचरयो श्शब्दयो रपर्यायता, प्रातीतिकभेदमूलोयं विकल्पः परमार्थविमर्शभेदमूलं तद् गमिति चेन्न; विमर्शभेदस्यापि पारमार्थिकत्वानभ्युपगमात्, स्वमूलघातायोगाच्च । अ

---

दाभावादित्यर्थः (प्रातीतिकभेदेति) प्रतीतिविमर्शयो रुभयोरप्यपारमार्थ्याविशेषात किं केन बाध्यत इति चोद्यपरिहाराय पारमार्थ्यविशेषणं (स्वमूलेति) विमर्शविशेषमूलंहि दूषणं, नत्वविमर्शमात्राधीनं, विशेषश्च भेदएव, अतो भेदनिरासःस्वमूलघातादनुपपन्नइत्यर्थः । यद्वा भेदविमर्शयो र्भेदाभावा द्दूष्यदूषणभावो नोपपद्यते, यदि भेदविमर्शयोरपि भेदः प्रातीतिकः, तर्हि तन्मूलदूष्यदूषणभावोपि प्रातीतिकएवेति भेदतात्विकत्वं निष्प्रत्यूहमेवेति चोद्यपरिहाराय पारमार्थ्यविशेषणं । विमर्शभेदः - विमर्शाद्भेदस्य भेदः, विमर्शस्य भेदाद्भेदइतिवा । यद्वा, विमर्शस्य प्राबल्ये परमार्थविषयत्वं हेतुरित्यभिप्रायेण पारमार्थ्यविशेषणम् । पारमार्थ्यंच विषयद्वारकं विवक्षितम् । भेदो विशेषः (विमर्शभेदस्यापीति) शुक्तिरजतादिभ्रमनिवृत्ति प्रसंगाद्विरूपाणां विषयाणां पारमार्थ्यं नाभ्युपगतमित्यर्थः (स्वमूलघातायोगादिति) धर्मधर्मिभेदप्रतीतिमुपजीव्य प्रवृत्तो विमर्शो न भेदप्रतीतिं बाधितुं क्षमत इत्यर्थः । यद्वा (प्रातीतिकेति) प्रतीति सिद्ध धर्मधर्मिभेदमवलम्ब्य प्रवर्ततइत्यर्थः, । पूर्वोक्तमभ्युपगमबाधं परिहर्तुमाह (पारमार्थिकेति) विमर्शविषयभूतो भेदो विमर्शभेदः, तन्मूलं तदवलम्बनं- तद्विषयं दूषणं प्रवर्ततइत्यर्थः, पारमार्थिक भेदोदूष्यइति यावत् । तथाचाभ्युपगतस्य प्रतीतिसिद्धभेदस्वरूपस्य अनिरासान्नाभ्युपगमबाध इतिभावः । प्रतीतिसिद्ध भेदस्वरूपादन्यस्यैव पारमार्थिक भेदस्य दूष्यत्वादभ्युपगम विरोधपरिहारः, किंवा प्रतीतिसिद्धभेदएव पारमार्थ्यमात्रनिरासादिति विकल्पमभिप्रेत्याद्यं दूषयति (विमर्शभेदस्यापीति) तथाच पारमार्थिकभेदस्य दूष्यत्वासम्भवात् निर्विषयं दूषणं स्यादित्यर्थः । द्वितीय आह (स्वमूलेति) पारमार्थ्यधर्ममात्रनिरासेहि भेदस्य मिथ्यात्वासिद्धेः पारमार्थ्यरूपेण भेदस्यैव-

तएव परमतसिद्धभेदोपजीव्यपि विकल्पइति प्रत्युक्तं, अनगीकृत मूलघातकेन परमतेन तत्सिद्धेः अन्यथा परमतेनापि तदसिद्धे स्त न्मूलविकल्पासम्भवात् । अतो यदि विकल्पयसि सिद्धो भेदः । यदि न तथापि सिद्धः, विकल्पोपक्रमत्वा त्तद्दूषणस्य । नचानु पलब्धेः किं विकल्पेनापीति वाच्यम्, तथासति तस्यानिर्वचनीय पक्षनिक्षेपासम्भवात, संविदनुपलम्भवाचो युक्ते श्चैव सुलभत्वात्। किंच अभेदःस्वरूपं धर्मोवा? स्वरूपंचेत् भेदभ्रमः क्वचिदपि न- स्यात, भेदविरोधिन्यभेदे दृष्टे तदारोपासम्भवात्, अभिन्नो घट इत्यादेः पर्यायतादि प्रसगश्च प्राग्वत् । अथतु धर्मः, तर्हि सि

---

निरासो वाच्यः, अयमेव तस्य बाधो यदभावप्रमापणं, तथाचोपजी व्यबाधो दुर्वार इत्यर्थः । अभ्युपगमबाधश्च सिद्धइति भावः । येन- परमतेन भेदो निश्चीयते तत्किं स्वघातकासहिष्णु उतसहिष्णु, आ द्यआह ( अनंगीकृतेति ) यद्यनंगीकृतमूलघातकं तदा तेन विरोधा- दाद्विकल्प्य दूषणाप्रवृत्तेः परमार्थतयैव भेद स्सिध्येदित्यर्थः । द्विती य आह ( अन्यथेति ) ननु माभूद्भेदनिश्चयः, परोक्त्या प्रतीतिमात्रं - विवक्षितमित्यत्राह ( तन्मूलेति ) निश्चयमूलोहि विकल्पः, न प्रतीति मात्रादित्यर्थः । अनंगीकृतेत्यादेरेवं वार्थः, मूलभूतस्वघातकासहि- ष्णुनाऽपिपरमतेन भेदस्य निश्चयो भवति . अन्यथा स्वघातकसहिष्णु त्वेन ज्ञातादर्थावधारणानुपपत्तेरित्यर्थः । माभूद्भेदनिश्चयः परोक्तिप्रती तित्वमात्राद्विकल्पः स्यादित्यत्राह ( तन्मूलेति ) पूर्ववदेवार्थः । ननु - नवयंविकल्प्यदूषणं ब्रूमः, येन मूलघातः, किन्त्वनुपलब्ध्यैव भेद- स्य बाधं ब्रूम इत्यत्राह ( नचानुपलब्धेति ) (तदारोपासम्भवादिति ) नच भेदग्रहेपि तस्य तिरोधानात् भ्रम इति वाच्यम्, स्वरूपेभा समाने तिरोधानासम्भवात् । अन्यथा स्वरूपभेदपक्षेपि लोकसिद्ध- दोषेण स्वरूपभेदतिरोधानात् भ्रमोपपत्तिप्रसंगात् । ( पर्यायतादी ति ) ब्रह्माभिन्नमित्युक्ते ब्रह्मब्रह्मवदित्युक्तं स्यात । ब्रह्माभेदइति व्यवहारस्यात । अभेदेन प्रतीतावभेदधर्मप्रतियोगित्वज्ञान

द्वो भेदः, धर्मधर्मिभावस्य तद्व्यासत्वात् । यद्यभेदरूपेणापि धर्मेणा भेदः, सचेत् स्वरूपं सएव दोषः, धर्मश्चेदनवस्थेति त्वदुक्तमर्यादा प्रवर्तने का वार्ता । उपलम्भइति चेत्तुल्यम् ।

---

मित्यन्योन्याश्रयणमित्यादिकमादिशब्दार्थः । एतेन स्वरूपाभेदस्यै व प्रतियोगिघटिततया कल्पितभेदवत्त्वेन विशेषणविशेष्यभावाद्युपपत्तिरि ति निरस्तम् । तथासति ब्रह्मब्रह्मवदित्युक्तंस्यात्, वह्माभेदइतिव्यवहार स्यादित्युक्तत्वात । ननु – ब्रह्मणएव अभेदरूपत्वेपि ब्रह्मत्वाभेदत्व यो र्भेदेन सम्बन्धितावच्छेदक भेदादभिन्नं ब्रह्मेति सम्बन्धव्यवहारः, न तु ब्रह्मब्रह्मवदिति तत्र सम्बन्धितावच्छेदक भेदाभावादिति चेत्तर्हि, सं बन्धितावच्छेदकभेदएव सम्बन्धप्रयोजकोऽस्तु, किं कल्पिताभेदेन, तथाच प्रकृतेऽपि घटभेदयो स्सम्बन्धितावच्छेदक भेदादेव भिन्नइति सम्बन्धव्यवहार स्सिद्धः । किंच स्वरूपभेदवद्भेदस्यापि कल्पितभेदा देव भिन्नइति विशिष्टव्यवहारः किन्नस्यात्, त्वन्मते घटोनास्तीति व- न्नचायमते घटाभावेन घटइतिवत् धर्मधर्मिभावस्येति । ननुएवं तर्हि स्वरूपस्यैव भेदत्वपक्षे धर्मधर्मिभावानधीनोभिन्न इतिव्यवहारः कथ. मितिचेन्न, तस्य तादधीन्यासिद्धेः, व्यवहारश्च भेदाप्रयोज्यसम्बन्धवि षयः ( सएवेति ) भेदभ्रमानुपपत्ति दोषइत्यर्थः । एवकारो धर्मपक्षे वक्ष्य माणदोषस्य तत्र व्यवच्छेदकतयाऽवधारणार्थो नभूतप्रत्यभिज्ञानार्थः, अन्यथाहि धर्मपक्षेपि धर्मभेदपक्षोक्तानवस्थातिदेशार्थं धर्मश्चेदपि स- एवेत्यवक्ष्यत । अवधारणस्यच प्रयोजनं धर्मपक्षे तद्दूषणं दूषणांतरं चा- स्तीतिसूचनमिति,(त्वदुक्तेति)इत्यनेन अभेदःस्वरूपं धर्मोवेत्यारभ्योक्तोऽर्थः परामृश्यते । परेणहि भेदःस्वरूपं धर्मोवेति विकल्पयता - प्रकारान्तरं नास्त्येव, तत्रापि यद्येकत्र स्वरूपं सर्वत्रापि स्वरूपमेव, क्वचि द्धर्मत्वेतु सर्वत्रापि धर्मएवेति, मर्यादाविवक्षिता, अभेदेपि तादृशमर्या दा कल्पनेन दूषणोक्तौ किमुत्तर मित्यर्थः ( उपलम्भ इतिचे दिति) शुक्त्यादि स्वरूपग्रहेपि भेदभ्रमदर्शनात् तत्राभेदोधर्मः, शौक्ल्या-

न काचिदिति-चेत् किमर्थस्तर्हि भेदापह्नवः। अनन्यार्थ एवेति चेन्न; अप्र विष्टमाध्यमिकपक्षेण त्वयातथानभ्युपगमात् । नभेदापह्नवसाध्यमद्वैतं अपि तुस्वतस्सिद्धमितिचेन्न ; अद्वैतमित्येव तत्सिद्धे रन्यथा स्वरूपमात्रस्य भेदाभेदविकल्पसहस्य तत्त्वायोगात । तस्माद्भेदस्वरूप मपह्नुवानै रभेद स्वरूप मप्यपन्हुतं स्यात् ।

---

दिस्वरूप ग्रहे शौक्त्यादौ तद्भेदभ्रमादर्शना त्तत्रस्वरूपं भेदइति य-थोपलम्भं स्वीकारेनदोष इतिचेदित्यर्थः । ( नकाचिदिति ) ना स्माभि रभेददूषण परिहारः कार्यइत्यर्थः । तथाच तद्दूषणे इष्टा पत्ति रितिभावः । ( किमर्थ इति ) जीवब्रह्माभेदसमर्थनार्थमेवाहि भे दापह्नवः, अतोनेष्टापत्तिरितिभावः । ( अनन्यार्थइति ) भेददूषणमभेद समर्थनार्थं नभवति अपितु भेदासिद्ध्यै, तस्माद्भेदापह्नव इष्टापत्तिरेवे-ति भावः । ( अप्रविष्टेति ) माध्यमिकवत् सर्वशून्यत्वानंगीकारादं गीकृतस्य ब्रह्ममात्रस्य स्वात्मकजीवाभेदाभ्युपगमादभेदनिरासो नेष्ट इति भावः । ननु नवयं भेदापह्नवेनाभेदं साधयामः येनभेदवत्तैरेवतर्कै-रभेदस्यापि निरासस्स्यात् किंतु तर्कैर्भेदनिरासमात्रं कुर्मः, न-च तत्राभेदेऽपि भेदपक्षोक्तदोषप्रसंगः, दृढतमप्रमाणसिद्धेऽर्थे तर्का-णामप्रवृत्तेः, इत्यभिप्रायेण शङ्कते ( नभेदेति ) द्वैताभावत्वेन सिद्धि-र्ह्यद्वैतसिद्धिः, स्वप्रकाशश्च नतादृशइतिनाद्वैतस्य स्वतस्सिद्धिरित्य भिप्रायेण परिहरति (अद्वैतमिति ) स्वरूपेण सिद्धिरद्वैतसिद्धिः कुतो नेत्याशङ्कायामाह ( अन्यथेति ) यदि अद्वैतमित्याकारता नस्यात् तदा स्वरूपात्मकप्रकाशमात्रस्य भिन्नमभिन्नंवेति संशयसहस्य अद्वैत सिद्धित्वायोगा दद्वैतमित्याकारेण सिद्धिरेव अद्वैतासिद्धिरित्यर्थः। उपसंहरति "तस्मादि"त्यारभ्य"माध्यमिकतापातादि"त्यन्तेन । तस्मात् – दृढप्रमाणसिद्धत्वाभावात । भेदवद भेदस्यापि तैरेव तर्कैर्निरासप्रसं-गात् , इष्टापत्तेश्च माध्यमिकमतापातेन कर्तुमशक्यत्वात, भेदनिरा-सो शक्य इत्यर्थः । ननु माभूद्भेदवदभेदोपि, नचैतावता माध्यमिक

नचास्त्विति वाच्यम्, माध्यमिकमतापातात् । नचानुभयाकारत्वसिद्धिः, उभयाकारत्ववद्व्याघातात् । नचवय-मेकस्यैवैकस्माद्भेदमभेदंच स्वीकुर्मः, येनास्मन्मते तत्प्रसंगः ; नचाभेदमपि सर्वत्र परित्यजामः येन प्रकारेण भवत इवसर्वाभावः स्यात् ; अतः सर्वं वस्तुजातं स्वव्यतिरिक्तात्सर्वस्माद्भिन्नं स्वस्माच्चाभिन्नमिति सांसिद्धिकीयं तत्त्वव्यवस्था । अथ या त्वसम्भवंच विकल्पितं देवानांप्रियेण धर्मान्तराणां(धर्म्यन्तराणां)स्वाश्रयस्य चस्वरूपधर्मं बहिर्भावाद्व्यावर्तकत्वेन भेदत्वस्य वक्ष्यमाणत्वाच्च उभयं येत्यपि विकल्पः किं नविकल्पितः, सएवहि न स्समयः । यथा सम्भवं स्वरूपधर्मयो र्भेदत्वस्यानुप्रवेशोपलम्भात्, व्यावृत्त व्यवहारहेतुर्हि भेदः ; सच व्यवहारः क्वचित्स्वरूपतः क्वचिद्ध र्मतश्च दृश्यते ।

---

तापातः, भिन्नाभिन्नविलक्षण वस्तुस्वरूपमात्रसिद्धेः, शून्यवादिमते कस्यापि सिद्धेरनभिमतत्वादित्यत्राह (नचेति) अन्यतराभावस्यान्यतर सत्वव्याप्तत्वा दुभयाभावे उभयसत्वप्रसंगः, तथाचानुभयात्म कत्वं व्याहतमित्यर्थः (उभयाकारत्ववदिति) उभयाकारत्वोक्तिराकारयोः परस्परविरहरूपत्वा द्व्याहतार्था, तथा उभयशून्यत्वोक्तिरपि ततएव हेतोर्व्याहतार्थेत्यर्थः । ननु भेदवादिना त्वया अभेदोप्यंगीक्रियते नवा; आद्ये व्याघातः, द्वितीये सएव माध्यमिकमतापात इत्यत्राह (नच वयमित्यादिना) तर्हि कस्माद्भेदः कस्मादभेद इत्याकाङ्क्षाया माह (अतइति) अन्यदपि कोटचन्तरमाह (उभयंवेति) क्वचिद्धर्मः क्वचिद्धर्मीति कल्पः कुतोनोक्तइत्यर्थः (सएवेति) धर्मएवभेदः स्व रूपमेव भेद इति पक्षद्वयं व्यवच्छिद्यते । अनंगीकार हेतुं दर्शयति (यथासम्भवमिति) कथमनुप्रवेश इत्यत्राह (व्यावृत्तेति) ततः किमित्यत्राह (सचेति) शौक्ल्यादिग्रहे सति तद्धर्मिणो धर्म्यन्तरात्तस्य च कार्ष्ण्यादिभ्यो व्यावृत्तिव्यवहारदर्शनात् सएव धर्मिणोधर्म्यन्तरात्स्वस्या

शुक्तिरजतभ्रमादेः शुक्तित्वादिधर्मभेदाप्रतीति निबन्धनत्व स्य न्वयव्यतिरेक सिद्धत्वान्न भ्रमाद्यनुपपत्तिः । नहि शुक्त्यादीनां स्वरूपमेव रजतादिभ्योभेदः । घटोभिन्नइति व्यवहारगत चोद्यान्यपि घटशब्दप्रवृत्तिनिमित्तविलक्षणसार्वत्रिक प्रयोगयोग्यभिन्न शब्दप्रवृत्तिनिमित्तयोगात् परिहृतानि । तच्चनिमित्तं घटत्वादिभेदा नामेव व्यावृत्तव्यवहारहेतुत्वं भ्रान्तिप्रतिपक्षोपलम्भत्व मित्यादिरूपेण ग्राह्यं, अतएव व्यावृत्त्यनुवृत्त्यादि प्रयुक्तव्यवहारसाधनतादात्म्यप्रसंगो ऽपि प्रत्युक्तः स्वरूपशब्दवत् ।

---

न्यस्माच्चभेदः लाघवा दिति भावः । एवंसति स्वरूप भेदपक्षे र भ्रमा नुपपत्ति दोषं प्रागुक्तं परिहरति ( शुक्तीति ) ननु स्व स्यैव भेदत्वा द्धर्माप्रतीतावपि तस्य गृहीतत्वात् कथं नभ्रमाद्यनु त्तिरित्यत्राह ( नहीति ) शुक्तित्वादिकमेव रजतादिभ्यो भेद इति वः । ननु घटत्वादे र्भेदत्वे घटो भिन्न इति पर्यायताप्रसंगः, घट व्यवहारवद्भिन्नइति व्यवहारो ऽपि प्रतियोगिनिरपेक्षः स्यात्, अन पदवैयर्थ्यंच स्यादित्यत्राह ( घटोभिन्नइति ) ( व्यावृत्तेति ) तदि कव्यवहारप्रयोजकत्वं ततोभिन्नत्वं, तदविषयकत्वंच तद्विषयत्वा ( भ्रान्तीति ) बहुव्रीहिरयं । यदिच घटाद्भेदः पटस्य स्वरूपमित ना यत्पूर्वपक्षिणोक्तं तत्रपटादिस्वरूपाणि प्रत्येकं घटाद्भेदइत्यंग त्य तेषां परस्परव्यावृत्तत्वे ऽनुगतव्यवहारस्य निर्विषयत्वेन बाधा अनुवृत्तत्वेसर्वतादात्म्यप्रसंग इत्युक्त दोषमुद्धरति ( अतएवे सार्वत्रिकप्रयोगयोग्यप्रवृत्तिनिमित्तयोगा द्भिन्नेष्वप्यनुगतभेदव्यव पत्तेरित्यर्थः । ( अनुवृत्त्यादीति ) घटभिन्नवस्तुस्वरूपाणां स्परानुवृत्तिर्विवक्षिता, तावन्मात्रेणच तेषांपरस्परतादात्म्यासिद्धाव टतादात्म्यसिद्धेर्न सर्वतादात्म्यप्रसंगः.अतः पटभेदव्यवहारविषयाणांप न्नवस्तुस्वरूपाणांपरस्परानुवृत्तिरादिशब्देनविवक्षिता, तथाचकुड्या घटपटोभयतादात्म्या त्सर्वतादात्म्यप्रसंग इतिभावः । (स्वरूपशब्दवा यथा स्वरूपशब्दविषयाणां परस्परानुवृत्त्यभावे ऽपि नस्वरूपशब्दस्य

घटस्वरूपं पटस्वरूप मितिभेदो ह्लेवैनैवहि स्वरूपशब्दः सर्वत्रप्रयुज्यते । ततएवतत्रापि स्वरूपमात्रतादात्म्य मितिचेन्न ; स्वधीवचनादिविरोधात् । भेदः स्वरूपमित्यनेनाभेदस्वरूपसिद्धिरिति कस्त्वदन्योमन्येत । सप्रतियोगिकत्वाप्रतियोगिकत्वविकल्पोऽपि भिन्नइति व्यवहारमात्रस्य प्रतियोगिनिरूपिताकारे व्युत्पन्नत्वात् प्रतियोगिसाकांक्षतेतिनिरस्तः । स्वरूपधर्मभेदसमर्थनाच्च धर्म धर्मिणो र्भेदोऽनवस्थापरिहारश्चसिद्धः ॥ * ॥ अयमत्रसंग्रहः-यस्मिन् यद्-

---

विषयत्वं तथेत्यर्थः ( दृष्टान्तमुपपादयति ) ( घटस्वरूपमिति ) भेदोक्तिबला न्नस्वरूपशब्दानुवृत्तिरिति भावः ( ततएवेति ) अनुगतव्यवहारस्य निर्विषयत्वप्रसंगादेवेत्यर्थः ( स्वधीति ) समभिव्याहृतपदार्थविशेष्यांश·स्वरूपशब्दार्थइतिनानुगतव्यवहारस्य निर्विषयतापातइतिभावः । दोषान्तरमाह(भेदेति) घटस्वरूपमिति व्यवहारात् तेनापि सर्वतादात्म्यंप्रसज्येत नच तद्युक्तम् भेदस्वरूपस्यैवासिद्धिप्रसंगादित्यर्थः । (यस्मिन्यद्दर्शनइति ) अत्र अध्यासस्तादात्म्याध्यासो विवक्षितः, अन्यथा शुक्तित्वज्ञानेपि शुक्तौरजतसंसर्गाध्याससम्भवादव्याप्तेः । घटात्यन्ताभाववत्तयाऽवगते घटाध्यासासम्भवेन घटस्यापि तादृशघटात्यन्ताभाववत्तया घटाद्भेदप्रसंगादतिव्याप्तेश्च । अध्यासपदं च शुक्त्यादौ शुक्तित्वादिभेददर्शना निवर्त्यस्याभेदज्ञानस्य वस्तुतोऽध्यासस्वरूपत्वाद्वस्तुकीर्तनपरम् । प्रवृत्तिनिमित्तशरीरान्तर्गतन्तुतादात्म्यज्ञानत्वमात्रम् , नतु तदध्यासत्वम् । तद्भिन्नतदैक्यज्ञानस्वरूपं हितादात्म्याध्यासत्वं । तथाच भेदघटितत्वेन भेदपदप्रवृत्तिनिमित्तज्ञाने न्योन्याश्रयप्रसंगात् । नन्वेकास्मिन् घटे क्रमेण श्यामरक्तरूपोत्पत्तौ श्यामिकादर्शनस्य रक्तद्रव्यतादात्म्याध्यासविरोधित्वा द्रक्तभेदत्वापत्तिः । तथाच घटस्यैव घटभेदप्रसंगः , नचत्विष्टापत्तिः , कालभेदेनाविरोधादिति वाच्यम् । "परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैतितद्द्रव्यतां यतः ॥" इति वचनाविरोधादितिचेत् : तात्मस्तत्त्व-

धीने येषामध्यासोनोपपद्यते । तस्यभेदः सतेभ्यस्त्या तदुक्तिस्तु विव क्षया ॥ इति । एवंतर्हि धर्मभेदपक्षएवांगीकृतः स्यात्,नपुनः स्वरूपस्यभेद त्वसिद्धिः; तस्यभ्रमसहत्वात् इतिचेत् ; सत्यं ; तथापि धर्मविशेषाणां धर्म्यन्तरमनपेक्ष्यैव स्वस्मिन्नन्यतादात्म्याध्यास विरोधित्वा त्तेषां स्वरूपमेव स्वेषांस्वधर्मिपर्यन्तेभ्य इतरेभ्यो भेदइत्येष्टव्यं ,

---

रूपभेदस्य तत्रनिषेधात् । ननु विशिष्टभेदस्यापि निषेधः , यथ प्रमाणं विशिष्टभेदस्य विशेषणाभावदशायाम् तस्मिन्नेव सत्त्वात् यद्वा तादात्म्यं तद्व्यक्तित्वरजतत्वादिकं ननु श्यामरूपादि , अतो नश्यामतासंसर्गाध्यासविरोधित्वेऽपि भेदत्वं पीततादेः । ननु यदिघट त्वादिकं भेदः तर्हि तस्मिन् गृहीते घट इति व्यवहारवद्भिन्नइति व्यवहारोऽपिस्यादित्यत्राह ( तदुक्तिस्त्विति) भिन्नशब्दस्यप्रतियोगिनिरू- पिताकारे व्युत्पन्नत्वा तदाकारविवक्षायां तथाव्यवहार इत्यर्थः । ( सत्यमिति ) अवधारणांशोऽनंगीकृतः ( धर्मविशेषाणामिति) -दण्डा- दि पृथक्सिद्धधर्मव्यावृत्तिः । स्वस्मिन्नन्यतादात्म्याध्यासविरोधि- त्वमितियत् तत्सर्वेषां धर्मविशेषाणामिति विवक्षितम् । ननु स्वस्मि न्नन्य तादात्म्याध्यासविरोधित्वं न भेदत्वं, घटत्वादिधर्मस्य स्वस्मि न् घटतादात्म्याध्यासविरोधिनो घटाद्भेदत्वप्रसंगात् । नचेष्टापत्तिः ,त- स्मिन्नेव तद्भेदस्य विरुद्धत्वादिति शंकानिराकरणार्थं "स्वेषां स्व- धर्मिपर्यन्तेभ्य"इति विशिष्योपादानं । अयंभावः – भेदप्रतियोगिनो न भेदाधिकरणत्वं विरुद्धं, परन्त्वनुयोगित्वमेव, घटत्वात्मक घट- प्रतियोगिकभेदस्यचनघटोऽनुयोगो किन्तु घटत्वं । ननु घटत्वात्मकं- घटभेदं प्रत्यनुयोगीच घटो भवत्येवेतिचेत्सत्यं, परस्परनिरूपितभे- दप्रतियोगितानुयोगितयोरेवैकत्र विरोधः । घटनिष्ठप्रतियोगिताच घट त्वनिष्ठानुयोगितानिरूपिता , अनुयोगितातु घटनिष्ठ प्रतियो- गितानिरूपितेति न विरोधः । ननु भेदएवानुयोगी, ननु तद्वा- न् , अतः कथमनुयोगी घट इतिचेन्न , भेदोहि यथा स प्र-

तच्च स्वरूपमाश्रयापेक्षया धर्मोभेदइत्यपिव्यपदिश्यते, स्वपरनिर्वाह कसमाविश्च संवेदनादिषु त्वयापि स्वीकृतः ।

---

तियोगिकः तथा सानुयोगिकोपि, अस्मादस्य भेदइत्येव व्य - वहारात् । तत्रास्मादिति सप्रतियोगिकत्वं, अस्येत्यनुयोगिसम्बन्ध- श्च सिद्धः । नचास्य भेद इति भेदाश्रयत्वमेव प्रतीयत इतिवाच्यं, प्रतियोगिनो वाश्रयाश्रयिभाव विलक्षणस्यैव सम्बन्धस्य तत्र वा च्यत्वात् । अन्यथा अनृतादिव्यावृत्ते ब्रह्मस्वरूपत्वेपि ब्रह्मणोऽनृतादि- विलक्षणत्वं नस्यात् । यश्च सम्बन्धोस्य भेद इति व्यवह्रियते, स- एव अनुयोगितेत्युच्यते । यद्वा सर्वत्र भेदएवा नुयोग्यस्तु, तथापि- नदोषः . स्वप्रतियोगिकत्वेन सम्बध्यमानभेदसत्त्वं स्वस्यविरुद्धं, घट- त्वात्मकश्च भेदः पटप्रतियोगिकत्ववेषावच्छिन्नो घटेनसम्बध्यते, नतु घटप्रतियोगिकभेदत्ववेषेण, तेनतु रूपेण स्वात्मना सम्ब- ध्यते, तथाच घटप्रतियोगिक भेदत्वस्य पट सम्बन्धिता वच्छे- दकत्वान्नविरोधः । अतिरिक्ताभावमतेपि घटनिष्ठस्य पटान्योन्याभाव- स्य घटाद्भेदः स्वरूपमेवेति घटस्य स्वस्माद्भेद प्रसंगे यथोक्तएव परि- हारो वाच्यः । अत्रच 'तेषां स्वरूपमेव स्वेषां स्वधर्मिपर्यन्तेभ्य इतरे- भ्यो भेद' इति वदतां वेदांताचार्याणां 'धर्मभूतजात्यादौ भिन्न इति - प्रयोग औपचारिक ' इत्याचार्यग्रंथो भिन्नइति शब्दस्यभेदाश्रयत्वरू पसम्बन्धे मुख्यताभ्युपगमेन प्रौढवाद इत्यभिप्रायः । ननु यदि घटत्व मेव भेदः, तर्हि तज्ज्ञानमात्रात् स्वरूपव्यवहारवद्भेद इत्यपि व्यवहा रस्स्यादित्याशङ्कां निराकरोति ( तच्चेति ) (धर्मइति ) –दृष्टांतार्थम् । यथा घटइति स्वरूपेण व्यवह्रियमाणं घटत्वं घटेनसह आश्रयाश्रयिभा- वविवक्षायां धर्म इति व्यपदिश्यते, तथा तत्प्रतियोगिकत्वस्य विवक्षा यां घटाद्भेदइति व्यपदिश्यत इत्यर्थः । एवं परनिर्वाहकस्य स्वनिर्वाह- कत्वं नास्माकमेव मतं, किन्तु परेषामपीत्याह ( स्वपरेति ) पूर्वं वि कल्पन्यूनतादोषोद्भावनसमये स्वाश्रयस्य स्वरूपधर्मबहिर्भावादिति

धर्मिस्वरूपस्य नकदाचिद्भेदत्वसिद्धिरितिचेन्न ; अगृहीतभेदेषु केषु चिद्धर्मेष्वाश्रयभेदात् भेदव्यवहारदर्शनात्, सौरभादिषु हि धर्मत्व मवगम्यकस्येदमिति सन्दिहाना स्तदाश्रय विशेषदर्शनादिभि स्त त्सन्निष्ठतामध्यवस्यन्त स्तदन्यनिष्ठादन्यतांमन्यन्ते । अतो ऽस्ति धर्मिणो ऽपि क्वचिद्भेदत्वं सोपिधर्मी स्वधर्ममितरगतधर्माद्भिन्दा नो धर्मान्तरेणभिन्नइति ननिर्भेदेनाभिद्यतइतिशंका, येनभेदासिद्धि रनवस्थादिकंवा प्रसज्येत । यस्यचधर्मस्य धर्मीभेदः सो ऽपि कदा- चित्तस्यैव धर्मिणोभेदस्स्यात्, यदाह्याकारादिसादृश्यमात्रेण तस्यै व धर्मिणोधर्म्यन्तराद्व्यवच्छेदासिद्धिः - यथाविलीनेघृते तैलसन्देहदशा यां गन्धविशेषेणतद्व्यावृत्तिः, अतो ऽत्र नान्योन्याश्रयशंकापि,

---

धर्मिणो ऽपि भेदत्वमुक्तं, तदुपपादयितुं शंकते ( धर्मिस्वरूपस्येति ) ( अगृहीतभेदेष्विति ) स्वरूपतो धर्मतोवेतिशेषः ( सौरभादिष्विति ) सौरभविशेषे गृहीते तदाश्रयेचानवधृते तैलघृतगन्धयो र्वैषम्यमगृही- तवतोपटुकरणस्य भवति संशयः, किमीयो ऽयं गन्धः, किंतैलगत एवायंगंधः, उत ततो ऽन्य इति । तत्र घृतरूपाश्रयविशेषे निश्चि ते सति तैलादिगन्धोनेति भेदव्यवहारात्, तत्संशयनिवृत्तेश्च आश्रय एव भेद इत्यर्थः । ननुधर्म्यपि किंभिन्नएव धर्म भिनत्ति उतानि र्भेदएव ; द्वितीये तादृशेन नभिन्नत्वसिद्धिः । आद्येपि धर्मस्यैव धर्मि भेदकत्वस्य वाच्यत्वात्, तस्यच धर्म्यधीनभेदत्वे ऽन्योन्याश्रयप्रसंगा त्, निर्भेदस्यैव धर्मस्य धर्मिभेदकत्वं वाच्यम्, तच्च नसम्भव- तीत्युक्तं । किंच निर्भेदस्यैव भेदकत्वे भिन्नयोर्यदेकं तस्यापि भेद- स्तत्रापि यदेकं तस्यापि तथे त्यनवस्था स्यात्, तथाच - ए- कस्याप्यसिद्धे श्शून्यतापत्तिश्चे त्यत्राह ( सोपिधर्मीति ) धर्मान्तरेणे- त्यन्योन्याश्रय- परिहृतः, यस्य धर्मस्य धर्मिभेदत्व ततोऽन्यस्य धर्मि भेदकत्वा न्नान्योन्याश्रय इत्यभिप्रायः ( येनेति ) निर्भेदेन भेद्यत्ववचनेने- त्यर्थः । ननुविलीनघृतादौ तैलादि तादात्म्य सन्देहस्य सौरभविशे- षोपलम्भादेव निवृत्तिः, अतएवधर्मिणोभेदकः सएवचे द्धर्मिणा भिद्य- ते ऽयस्तएव अन्योन्याश्रय इत्यत्राह ( यस्यचेति ) ( कदाचिदिति )

अपेक्षानियमाभावात्; गन्धजातिभेदस्य धर्मिभेदाप्रतीतावपि प्रत्यक्षेण प-टुकरणानां प्रतीते रस्फुटरूपधर्मद्वयभेदाभेदचिन्तायाश्च तद्भेदकस्याश्चादिभेदस्य प्रत्यक्षावसिततदाकारान्तरयोगित्वेनैवसिद्धिः । एवं विषय धर्मादिषु विषयादिभ्यो ऽपि भेद उदाहर्तव्यः । यच्चोक्तं - धर्मधर्मित्वादिग्रहो भेदग्रहात्ततश्च सङ्ग्यन्योन्याश्रयइति , तदपिन ; तयोर्भेदान-भ्युपगमात् , धर्मधर्मित्वादिरेवहि भेदइष्यते । तथात्माश्रयापातइतिचेन्न ; तस्यैव तत्रहेतुत्वानभ्युपगमात्, प्रत्यक्षादिसामग्रीवशादेवहि तद्ग्रहः । स-मर्थितएव सच जात्यादिरूपभेदः प्रत्यक्षादियोग्यइति । यच्च - वस्त्वन्तर सिद्धौ एकविधिरन्यव्यवच्छेदः व्यवच्छेदसिद्धौवस्त्वन्तरसिद्धिरिति ; तद पिन, वस्तुनोर्द्वयोरपि प्रतिनियतधर्मविशिष्टतया प्रत्यक्षादिभि र्ग्रहणात्तात तएव व्यवच्छेदग्रहरूपत्वात् । यच्चोक्तमविद्यावशाद्भेदग्रहः तत्रचावि-चारितरमणीयतैकवेषत्वात् वस्तुनोविचारासहत्वात् नकश्चिद्दोषइति ;

---

**यदास्वयं धर्मिणाभेद्यते तदानधर्मिणस्स्वयं भेदक इति तात्पर्यम् । ननु तादृशधर्मस्य नियमतो धर्म्येवभेदक इति कदाचिदपि कथं तस्य धर्मिभेदकत्व मन्योन्याश्रयादित्यत्राह ( अपेक्षेति ) परस्प-रापेक्षानियमाभावादित्यर्थः । तत्र धर्मस्य धर्म्यपेक्षानियमाभावमुपपा दयति ( गन्धजातीति ) धर्मिणोधर्म्यपेक्षानियमाभावमुपपादयति ( अस्फु टेति) प्रागुक्तं धर्म्यन्तराणां भेदत्वमुदाहरति ( एवमिति) विषयि-ज्ञा-नं,तद्धर्मः विषयित्वं;आदिशब्देन विषयोगृह्यते। घटज्ञानस्य घटाविषयक ज्ञा नापेक्षया घटोभेदः, घटविषयित्वस्यापि पटविषयित्वापेक्षया सएवभेदः, त ज्ज्ञानविषयस्य तदविषयापेक्षया तज्ज्ञानंभेदइति क्रमेण उदाहर्तव्यमित्यर्थः । ( तयोरिति ) धर्मधर्मित्वादेर्भेदस्यचेत्यर्थः ( तथेति ) तथासतीत्यर्थः । धर्मत्वधर्मित्वादे र्भेदत्वमभ्युपेत्यैतदुक्तं । वस्तुतोजात्यादेरेवभेदत्वात्तस्य-च वस्तुना सहैवग्रहणात् नान्योन्याश्रय शंकापीत्याह ( सचेति ) ( वस्तुनो द्वयोरिति ) विधिरेव व्यवच्छेदः ; सच न तस्यैव, व्याघा-तात् ; किन्त्वन्यस्यैव, अन्यत्वञ्च तत्तत्प्रतिनियतो धर्मः, तत्तादात्म्यज्ञान-**

तत्रकिंप्रत्यक्षस्यैव शिरसि भारोऽय निक्षिप्यते; तत्प्रामाण्यसिद्ध्यर्थमितिचेत्, तदपिवा किमर्थं नपरित्यज्यते । लोकविरोधादितिचेत्, तुल्य विकल्पेऽपि । तत्सिद्धे स्वरूपमात्रे बाधकाभावादितिचेन्न; भेदेऽपि बाधकाभावस्य उक्तत्वात् । अस्तु तर्हि प्रत्यक्षमप्यप्रमाणमितिचेत्, हन्ततर्हि तत्सिद्धस्वरूपमात्रस्यापि मिथ्यात्वाज्जितं माध्यमिकैः। केनाप्यसिद्धं तत्स्वतस्सिद्धमितिचेत्, तथाभावे तस्य किं त्वया प्रमाणमुपन्यसनीयम्। नाकिंचिदितिचेत, सायुसिद्धान्तम्मर्षितः

---

विरोधि धर्म स्तद्पेक्षयान्यत्वमिति यावत्; तद्यथा –घटादन्यत्वं पटत्वं तच्च प्रत्यक्षेणैव गृह्यत इति नान्योन्याश्रय इत्यर्थ. ( तत्र किमिति) अन्योन्याश्रयादि दोषवर्जन लक्षणो भारः किमर्थं प्रत्यक्षस्य शिरस्यारोप्यते न पुनर्भेदविकल्पस्यापीत्यर्थः । प्रमाणस्यैव विचारत्वं, नान्यस्य; तथाच प्रत्यक्षस्य प्रामाण्यसिद्ध्ये अन्योन्याश्रयादि दोषवर्जनापेक्षेति शंकते ( तत्प्रामाण्येति ) लोकेहि सन् घटइत्यादौ बुद्ध्यै क्यं प्रतीति स्वरसिद्धं, तत्रान्योन्याश्रयादि दोषसहं प्रत्यक्षाद्भिन्नं भेदभ्रमरूपमेकं ज्ञानं, अपरन्तु प्रत्यक्षप्रमात्मकं सन्मात्रविषयं दोषासहमिति कुतो ज्ञानद्वयं कल्प्यते; लाघवादेकमेव प्रत्यक्षकरणैर्भ्रमरूपं ज्ञानमुत्पन्नमस्त्वित्याशयेन परिहरति ( तदपिवेति ) ( तत्सिद्धइति ) बाधात् असदिति प्रत्यक्षन्तावत् प्रमाणं भेदविषयत्वेच तस्यान्योन्यान्याश्रयादि दोषग्रासान्नप्रामाण्यं स्यादित्यतो ज्ञानभेदः कल्प्यतइत्यभिप्रायः। ( बाधकाभावादिति ) नपरित्यज्यत इत्यनुषंगः ( उक्तत्वादिति ) अतो बाध्यविषयत्वमवशिष्यत इत्यारभ्येत्यर्थः ( अस्तुतर्हीति ) प्रामाण्याप्रामाण्य लक्षणवैषम्यहेत्वभावात् एकमेव सत्स्वरूप भेदोभयविषयकं प्रत्यक्षं अप्रमाणञ्चेत्यर्थः ( केनापीति ) ऐन्द्रियकप्रत्यक्षेणेत्यर्थः। तथाभावे – तस्य स्वतस्सिद्धत्वे, किं प्रमाणमित्यर्थ. ।

अथप्रत्यक्षादिकमेव , किमप्रमाणमपि प्रमाणतया उपन्यस्तं कार्यकरं, तथाचसति परपक्षप्रतिक्षेपः कस्यापिनसिध्येत् । परैः प्रमाणतया भ्युपगमात्तदुपन्यासइतिचेन्नतावतानिर्णायकत्वं , तत्त्वव्यवस्थित्यसिद्धेः । किंच स्वयंप्रकाशप्रत्यक्षेणापि सकलेतरव्यावृत्तमेव प्रत्यग्वस्त्ववभासत इत्यतोपिभेदः प्रत्यक्षएष्टव्यः, अन्यथा जडतादात्म्यप्रसंगात्, आकारभेदानभ्युपगमेन सामान्यस्फुरणायोगात्, तावतश्चभ्रमसहत्वेनभेदत्वासिद्धेश्चेति ।

इति श्री कवितार्किक सिंहस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां भेददूषणनिस्तार स्त्रयोदशः ।

---

**(अथेति ) प्रमाणतयोपन्यसनीयमिति शेषः । परिहरति (किन्निति ) प्रमाणतयोपन्यासमात्रा न्न कार्यकरत्वं , येनोक्तदोषः स्यात् किन्तु परैः प्रमाणतया भ्युपगतं कार्यकरमिति शङ्कते ( परैरिति ) ( किञ्चेति ) अत्र सकलेतरव्यावृत्त मित्यनेन व्यावृत्तिवैशिष्ट्यं विवक्षितम् । स्वरूपातिरिक्त भेदविशिष्टमिति यावत् ( अन्यथेति ) स्वरूपस्य भेदाविषयत्वात् , प्रमाणान्तरस्य त्वदुक्तरीत्या असम्भवात्, जडाद्भेदे मानाभावात् , जडतादात्म्यप्रसंगइत्यर्थः । किञ्च स्वरूपातिरिक्तजडभेदस्या स्फुरणे सामान्याकारेण वा प्रत्यग्वस्तुनः स्फुरणं वक्तव्यं, स्वरूपमात्रेणवा, तत्र नाद्यइत्याह ( आकारभेदेपीति ) द्वितीयेपि किं स्वरूपं जडभेदः, उतन तत्राद्ये दोषमाह ( तावतइति ) प्रत्यग्वस्तुस्वरूपमात्रस्येत्यर्थः । द्वितीये जडतादात्म्यप्रसंग उक्तएव । अतः परिशेषादतिरिक्तभेदः प्रत्यक्षएष्टव्यइतितात्पर्यम् ।**

**यदुक्तं अन्योन्याभावस्य घटप्रतियोगिकत्वे घटात्यन्ताभावात् भेदो न स्यादित्यादि, तन्नकिमेकजातीयानां समानकालीनानां सम्बन्धिनिरूप्य स्वभावानां सम्बन्धिभेदादेव भेदइति विवक्षितम् , किं वा समानकालीनानां सम्बन्धिनिरूप्य स्वभावानां सम्बन्धिभेदो वैजात्य**

प्रयोजकइति, यद्वा तादृशानां सम्बन्धिभेदादेव भेद इति । नाद्यः, एकघटगोचर नानापुरुषज्ञानानां भेददर्शनात्, एकस्य पुरुषस्य चरणादि नावयवावच्छेदेन भूतले नानासंयोगदर्शनात् । एकावच्छेदेन विद्यमानानां भेदो न स्यादित्यापादनं विवक्षितमिति चेत ; तर्हि - भिन्नावच्छेदेन विद्यमानानां भेदः कुतइष्यते । ऐक्यासम्भवादितिचेत्त र्हि भिन्नाधिकरणे विद्यमानयोरत्यन्ताभावान्योन्याभावयो रैक्यं सुत रां न सम्भवतीति तयोरपि भेद इष्यताम् । नहि घटाधिकरणे वि द्यमानस्यान्योन्याभावस्य घटात्यन्ताभावेनैक्यसम्भवः । यद्यधिकरण भेदेन वृत्त्यभावएवापद्येत, तर्हि सम्बन्धिभेदाभावे भिन्नावच्छेदेन - वृत्त्यभावः कथं न स्यात । भिन्नावच्छेदेन वृत्तेरुपलम्भादिति चेत, इहापि भिन्नाधिकरणे वृत्ते रुपलम्भादिति तुल्यम् । किञ्चैवमत्यन्ता- भावान्योन्याभावयो रेकजात्याभावएव सिद्ध्येत, कामं सिद्ध्यतु न काचित्क्षतिः । न द्वितीयः, एककालीन योर्भिन्नाधिकरणयो रेकघट- गोचरयो र्ज्ञानेच्छयो र्ज्ञानद्वेषयोश्च दर्शनात । किञ्चैव मत्यन्ताभावा न्योन्याभवयो र्वैजात्याभावएव स्यात्, तदङ्गीकारे कोविरोधः, अधि करणभेदव्यतिरेकेण वैजात्यादर्शनात् । सम्बन्धिभेदाभावे वैजात्येन- विना अधिकरणभेदएव न सम्भवतीतिचेन्न देवदत्तयज्ञदत्तयोरेक- घटगोचरज्ञानदर्शनात । यदि स्वगोचरप्रतीति वैचित्र्यात प्रतिब न्ध्यप्रतीतिवैचित्र्याच्च वैजात्यं सिध्येत, तदा प्रतीतिसिद्धत्वादेव - न तदपह्नवश्शक्यः । एवं कल्पद्वय निरासेनैव कल्पान्तरमपि निरस्तं वेदि तव्यं । प्रतियोगिभेदाभावे अभावभेदोनसम्भवतीतिचेन्न,त्वयाव्यधिकरण धर्मावच्छिन्नाभावाङ्गीकारेण एकप्रतियोगिक समानाधिकरण व्यधिकर- णधर्मावच्छिन्ना भावद्वयाङ्गीकारात् । ननु समानाधिकरण धर्मावच्छि न्न घटाभावो घटमात्रप्रतियोगिकः, पटत्वावच्छिन्नघटाभावस्तु कु- ह्यादिप्रतियोगिकोपीति चेत् ; किंप्रतियोगिनानात्वस्या भावनानात्वप्र योजकत्व मिष्यते ; उतन, आद्ये व्यधिकरणधर्मावच्छिन्नाभावस्यापि- प्रतियोगिनोभिन्नत्वात् एकप्रतियोगिक समानाधिकरणव्याधिकरण धर्माव च्छिन्नाभावद्वयासिद्धिः । द्वितीये प्रतियोगिभेदाभावे प्यभावभेदे न-

क्षतिः । ननु योभावो यदभावापेक्षया भिद्यते सतत्प्रतियोग्यन्य प्रति योगिको दृष्टः, यथा घटाभावात् भिद्यमानः पटाभावः; व्यधिकरण धर्मावच्छिन्नाभावश्च सर्वप्रतियोगिक एकएव इति चेत्; तर्हि ज्ञानेऽपि तत्प्रतियोग्यन्यप्रतियोगिकत्वएव भेददर्शनाद्देशकालभेदेऽपि भेदो न स्यात् । तत्र यदि देशकालभेदे ऐक्यासम्भवात् तत्प्रतियोग्यन्यप्रतियोगिकत्वाभावे ऽपि भेदः , उक्तप्रयोजकं चातन्त्रमित्युच्यते ; तर्हि प्रकृतेऽपि अधिकरणभेदेनैक्यासम्भव स्योपपादितत्वात् भेदः उक्तश्चातन्त्रमिति पश्य । ननु नात्रातन्त्रत्वं ज्ञानइव भिन्नाधिकरणत्वेकप्रतियोगिकत्व निश्चयाभावात्, अस्मदुक्तरीत्या अभेदप्रतियोगिकत्वस्यैव सम्भवात् , इतिचेन्न; तदसम्भवस्य वक्ष्यमाणत्वात् , सम्बन्धिकपदार्थान्तरे प्रयोजकत्वाभाव निश्चयेनात्राप्यप्रयोजकत्व निश्चयाच्च , यत्र क्वचन सहचारदर्शनमात्रेण प्रयोजकत्वकल्पनेतिप्रसंगात् । किञ्च एतद्घटत्वरूपसमानाधिकरण धर्मावच्छिन्नाभावस्य एतद्घटान्यत्वरूपव्यधिकरण धर्मा वच्छिन्नाभावस्यच एतद्घटमात्रप्रतियोगिकत्वेनोक्तप्रयोजकस्य तत्रापि व्यभिचारः, अधिष्ठाने-प्रातिभासिकस्याभावो धिष्ठाना तिरिक्तस्सत्यः ततोन्यत्र प्रातिभासिकइतिमते तत्रापि व्यभिचारः । यद्युक्तव्यभिचारपरिहाराय विशेषणांतरदानेन प्रयोज्यसंकोचः क्रियत , तर्हि अप्रयोजकत्वमेव आविष्कृतं स्यात् । यदुक्तमभेदस्यैव भेदोभावस्स्यात् , नघटस्येति; तत्र किंघटभेदस्य घटान्योन्याभावत्वं , उत घटात्यन्ताभावत्वं , नाद्यः . इष्टत्वात् । नद्वितीयः , हेत्वभावात् । प्रतियोगिविरोधित्वाभावे अभावत्वमेव हीयेतेतिचेत् ? प्रतियोगिविरोधिनोऽभावत्वं कुतः , प्रतियोगिविरोधादेवेति चेत् ? इहापि प्रतियोग्यविरोधादेवाभावत्वं । प्रतियोगिविरोधिनो भावत्वेनोपलम्भादिति चेत् ; प्रतियोग्यविरोधिनो-प्यभावत्वेनोपलम्भादिति तुल्यम् । अतएव प्रतियोगिसमानाधिकरणस्याप्यव्याप्यवृत्ते रत्यन्ताभावत्वसिद्धिः , त्वन्मते व्यधिकरण धर्मावच्छिन्नाभावस्य सिद्धिश्च । नच तत्र प्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिविरोधो स्त्येवेति वाच्यम् ; तादृशप्रतियोगिनोऽप्रसिद्धेः । ननु

व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकेनैव विरोधः, विरोधश्च प्रतियोगितावच्छेदकस्य प्रतियोगिन्यवृत्तिरेवेति चेत्? य द्येवं प्रतियोगितावच्छेदक विरोधात् घटाभावत्वं, कथं तर्हि तादृशविरोधवतो ऽन्योन्याभावस्य घटप्रतियोगिकत्वा सम्भवः। प्रत्युता भावान्तरे क्लृप्तसामानाधिकरण्याभाव लक्षणविरोधस्य परित्यागात्, व्यधिकरधर्मावच्छिन्ना भावस्यैवासम्भवः । अन्योन्याभावस्यतु प्रतियोगितावच्छेदकेन सह सामानाधिकरण्याभाव लक्षणएवविरोधः । अभावान्तरे प्रसिद्धं प्रतियोगिविरोधित्वं, विरोधस्या सामानाधिकरण्यलक्षणत्व श्चोभयंव्यधिकरणधर्मावच्छिन्नाभावे त्यक्तम्, अन्योन्याभावेतु प्रतियोगिविरोधित्वमात्रं त्यक्तम् । प्रतियोगितावच्छेदक विरोधित्वंतु व्यधिकरणधर्मावच्छिन्नाभावे त्वदंगीकृतमेवान्योन्याभावेस्वीकृतम् । त्वदंगीकृतः प्रतियोग्यवृत्तित्वलक्षणविरोध स्त्वन्योन्याभावेपि । न न्वभावसमानाधिकरणे प्रतियोगितावच्छेदकस्यावृत्तिरेवविरोधः, सचसमानाधिकरणव्यधिकरणधर्मावच्छिन्न प्रतियोगिताकाभावमात्र साधारण इति चेन्न ;प्रातिभासिकाभावे तदसिद्धेः . अभावसमानाधिकरणे अभावसमानसत्ताक प्रतियोगितावच्छेदकस्य अभावो विवक्षितइति चेन्न; प्रातिभासिके घटाभावे व्यावहारिकघटत्वस्यैव प्रतियोगितावच्छेदकत याऽ भावसमानसत्ताक प्रतियोगितावच्छेदकस्या प्रसिद्धतया विरोधस्य दुर्वचत्वात् । अभेदेन विरोधात् भेदस्तत्प्रतियोगी त्येतच्चासंगतम्, तथासति गोत्वाश्वत्वयोः परस्परप्रतियोगित्वापत्तेः । तथानुभ वाभावा त्तयोः परस्परप्रतियोगित्वाभावेच तत एव भेदो नाभेद प्रतियोगिकः, घटप्रतियोगिकत्वेनैव भानात । भेदाभावइत्यपि प्रतीतेः इति चेन्न ; घटभेदातिरिक्त घटभेदात्यन्ताभावस्यैव तत्प्रतीतिविषयत्वात् । भेदस्यैव तत्प्रतीतिविषयत्वेपि घटभेदः घटाभेदाभावइति प्रतीतिभ्यां घटं प्रति भेदत्वस्य घटाभेदं प्रत्यत्यन्ताभावत्वस्यच सिद्धेः । किञ्च अभेदाभावस्स्यादिति यदुक्तं ; तत्र किं अन्योन्याभावापादनं विवक्षितम् उतात्यन्ताभावापादनं । नाद्यः प्रतियोगिविरोधिनोऽन्यो

याभावस्य क्वाप्यदर्शनात् । द्वितीये इष्टापादनवादिनं प्रति किमु-त्तरम् । नह्यभेदात्यन्ताभावत्वं घटान्योन्याभावत्व विरोधि । एतेन -तादात्म्यंप्रतियोगीति पक्षोऽपि निर्व्यूढः, एकएवाभावस्तादात्म्य घट प्रतियोगिकः; तादात्म्यस्यायमत्यन्ताभावः घटस्य त्वयमन्योन्याभावः । सम्भवतिहि देवदत्तो यज्ञदत्तस्य पुत्रो विष्णुमित्रस्य पितेति । तच्च तादात्म्यं घटत्वमेवास्तु, तादात्म्यंहि तदात्मनो धर्मः, अतस्तादात्म्यं धर्मिणो भिन्नमेव वाच्यमिति तद्भिन्नस्य तादात्म्यत्वानुपपत्तेरिति वचनं व्याहतार्थं । स्वाभावानधिकरणत्व निबन्धनदोषश्च स्वाभावाधिकरणत्वादेव निरस्तः, तथाहि- किमिदं विरुद्धत्वं विवक्षितम्, किं वैय्यधिकरण्यं, किंवा वध्यघातकभावः अथवा तदात्मत्वाभावः, यद्वा उभयोरन्यतरस्यान्यतरानधिकरणत्वं, तदभावात्मकत्वंवा ; नाद्यः, व्यधिकरणयोर्जातिव्यक्त्यो राश्रयाश्रयिभाव दर्शनात । न द्वितीयः, असिद्धेः । न तृतीयः, आश्रयाश्रयिभावस्यैव तादर्थ्यात । न तुरीयः, घटाभावस्य घटानधिकरणत्वात् घटस्य घटाभावानधिकरणत्वं साध्यते, उत घटस्य घटाभावानधिकरणत्वादेव; नाद्यः, जातिर्व्यक्त्यनधिकरणत्वेपि व्यक्ते जात्यधिकरणत्वदर्शनात । नाद्वितीयः, आत्माश्रयात् । नपंचमः, अभावे प्रतियोग्यनधिकरणताया भावान्यत्व निबन्धनत्वात् । नच भावाभावसाधारण मभावत्वमेव प्रतियोग्यधिकरणत्वे प्रयोजकं ! क्वचित्सहचरदर्शनमात्रेण प्रतीतिबाधमवधीर्य प्रयोजकत्वकल्पनेतिप्रसंगात । दृश्यतेहि घटे घटो नास्तीति प्रतीतिः । किंच भावाभावसाधारणमभावत्वं किमनधिकरणत्वमात्रे प्रयोजकं उत-प्रतियोग्यनधिकरणतायां । नाद्यः, घटादे रूपाद्यनधिकरणत्व प्रसंगात् । न द्वितियः, तथासत्यभावस्य प्रतियोग्यतिरिक्ताधिकरणत्व प्रसङ्गात् । नन्वभावत्वमनधिकरणताप्रयोजकं भावाभावसाधारणमभावत्वंतु प्रतियोग्यनधिकरणताप्रयोजकमिति चेन्न; अवश्यकल्प्येनानधिकरणताप्रयोजकेनैव अभावे प्रतियोग्यनधिकरणत्वस्यापि सिद्धौ प्रयोजकान्तरस्य गौरवेणाकल्पनीयत्वात् । यच्च किञ्चाभावाधिकरणत्वयोग्येत्यादि-तन्न तद्योग्यताया स्तदभावाविरोधित्वात् । नहि दण्डोघटजननयोग्यो

ऽपि सर्वदा घटं जनयति । किंचैवमत्यन्ताभावस्य नित्यतया घटस न्निधानदशायामपि घटात्यन्ताभावस्य तत्र सत्त्वेन तद्दशायां घटाभावा नधिकरणत्वासम्भवात्, तत्प्रतीतेश्च घटाभावानधिकरणत्वं घटोपाधि कं, यथास्फटिके रक्तिमा जपोपाधिकइति कल्प्यते ; अथवा रूमाग तकाष्ठे लवणसम्बन्धाल्लवणान्वयवद्घटाभावानधिकरण घटसम्बन्धाद्भू तले साक्षादेव घटाभावानधिकरणत्वं भवतीति, कल्प्यते । नाद्यः एवमपि घटाभावस्य घटदशायां तत्रसत्वे तद्दशायां घटाभावप्रतीति प्रसंगात । यदि स्फटिकशुक्लताया इवोपाधिसंसर्गादप्रतीतिः कल्प्य- ते, तथापि घटदशायां घटाभावाधिकरणत्वप्रतीति र्भ्रमोनस्यात् । तस्मा दभावस्योत्पत्तिविनाशांगीकारेणाभावसम्बन्धस्य कादाचित्कत्वां गीकारेणदा घटदशायां घटाभावानधिकरणत्वप्रतीते र्निर्वाहः कार्यः, नतूपाधिससर्गेण । अतएव नद्वितीयः ; घटसंसर्गात् घटाभावानधिकर णत्वे सत्यपि घटाभावस्यापि विद्यमानतया घटदशायां घटाभावप्रती तिप्रसंगादेव । किंच घटाभावे विद्यमाने तदनधिकरणत्वं ब्रह्मणापि न तत्र सम्पादयितुं शक्यं । किंच एवसति तृणादौदाह्यत्वानधिकरणे वह्निसम्बन्धाद्दाह्यत्वदर्शनात्, तत्र हेतुतया वह्नेरपि दाह्यत्वप्रसंगः, यदिच वह्ने रदाह्यत्वे ऽपि तत्संसर्गाद्दाहः तदा घटस्य तदभावा- नधिकरणत्वानधिकरणत्वे ऽपि घटसम्पर्काद्भूतले तत्सिद्धिरस्तु । किं च घटाभावाधिकरणे भूतले घटाधिकरणतायां किंनिबन्धनमभिमत- मायुष्मता? घटसामग्र्यां सत्यां तत्सन्निधानादेव घटाभावस्तत्र नतिष्ठ तीति यदि ; तर्हि घटसन्निधाने घटाभावो यतो नतिष्ठति अतए व तदधिकरणत्वमिति पश्य । प्रतीत्यवैलक्षण्यंच नप्रसज्यते, प्रतियो गिवैलक्षण्यात् । अन्यथा देवदत्त पुत्रत्वयज्ञदत्तपितृत्वबुध्द्यो रेकविष्णु मित्रविषययो रवैलक्षण्यप्रसंगात्, नचैकस्योभयप्रतियोगिकत्वानुपप- त्तिः ; लाघवेन एकस्योभयप्रतियोगिकत्वे क्लृप्ते क्वचिद्दर्शनमात्रस्य अ किंचित्करत्वात् । यच्च किंच योयस्येत्यादि तन्न ; घटत्वात्यन्ताभावस्य घटाभेदविरोधित्वेन घटभेदत्त्वात्वदुक्तभेदप्रयोजकानिबन्धस्तु व्यर्थएव ।

अभेदः प्रतियोगीतिपक्षोऽपि निर्व्यूढः, घटत्वस्यैवाभेदत्वात् तत्रच नान्योन्याश्रयशंकावकाशः। एवं प्रतियोगिनिरूपितो धर्म्यपि सुनिरूपः अभावः कुत्रवर्ततइति प्रश्ने कुत्रचिदित्युत्तरस्य सुवचत्वात, भावेऽपि हि तथैव वाच्यम् । अतोऽधिकरणतावच्छेदकनियमस्य अभावे अदर्शनादभावे तन्निबन्धोनिर्निबन्धनएव । यत्र प्रतीयते तत्रेत्युक्तावपि न विरोधः, ईश्वरस्य यत्रप्रतीयते तत्रेत्युक्तेः। यत्र प्रतीयतइत्युक्तावपि नविरोधः, ईश्वरस्य यत्र तदभावप्रत्ययोनास्ति तत्र तदितिविवक्षितत्वात्। मास्तुवाधिकरणनिरूपणं नहानिः। किमधिकरणमिति पृष्टे तत्रोत्तरं वक्तव्यमितिचेत :किमयं लौकिकानां प्रश्नः उतवादिनः, नाद्यः, विवक्षादिना तत्तज्जनैः कुत्र घटोस्तीति पृष्टे कुलालगृह इत्यादि रूपेण तै स्तैरेव पुरुषै रुत्तरदानेन तत्रास्मद्वक्तव्याभावात् । अभावेपि तत्तत्पुरुष प्रश्नस्यतैस्तैरेव पुरुषैरुत्तरदानेनास्माभिर्वक्तव्याभावात । न द्वितीयः घटः कुत्रास्ति कि यत्परमाणुकोयं घट इत्यादि प्रश्नस्योत्तरानुक्तावपि तत्सिद्धिवत् अभाव सिद्ध्युपपत्तेः। किञ्चैव मत्यन्ताभावाधिकरणस्यापि दुर्निरूपतया तस्याप्यसिद्ध्यापत्तेः । भेदबुद्धेरभेदात्यन्ताभाव विषयत्वकल्पनञ्चानुपपन्नं । अतएव भेदवद्घट तदत्यन्ताभावादीनामपि अधिकरणस्य दुर्निरूपतया दूषणमिष्टमेव, कृत्स्नस्यापि मिथ्यात्वादिति निरस्तम् ; भेदप्रतीतेरन्योन्याभाव विषयत्वमधिकरणानिरूपणेन परित्यज्याभेदात्यन्ताभाव विषयत्वकल्पनानुपपत्तेः । यच्चोक्तं घटेऽपि घट भेदज्ञानं प्रमैव स्यादिति तन्न ; तत्र तत्सम्बन्धस्य बाधितत्वात् । नच स्वरूपस्यैव सम्बन्धत्व.त सर्वेषां स्वरूपाविशेषात् इदं स्वरूपं सम्बन्ध इदं स्वरूपं न सम्बन्धइति नियामकाभावः ; सम्बन्धान्तराङ्गीकारेऽपि अत्रायं सम्बन्धो नात्रेति नियामकाभावात्। नायं स्वरूपसम्बन्धपक्षएव दोषः, इदं घटस्वरूपं इदं पटस्वरूपं ब्रह्मस्वरूपमि-

त्यत्रापि नियामकाभावात् तत्स्वरूपाणा मप्यसिद्धिप्रसङ्गात्। प्र-तीतिश्च सर्वत्र समाना। यच्चोक्तं भेदधर्मित्वस्यानिरूपणे इदमस्माद्भिन्न मिदंनेति व्यवस्थाया आकस्मिकत्वप्रसङ्गइति तन्न; निरूपणं यदि ज्ञानं, सिद्धमेव तत। यद्यवच्छेदकोक्ति स्तदा त्यन्ताभावस्य घटादेर प्यसिद्धिप्रसंग, तत्राप्यवच्छेदकानुक्तेः। अतएव तेषामपि मिथ्यात्व मितिचेत्, तर्हि सत्यस्य वस्तुनो ऽनुगतधर्मिनियम्यत्वं कुत्र दृष्टमा युष्मता। प्रतीतिरपि सुनिरूपणा,एतौ परस्परं भिन्नौ इदमिदंनभवति अय मस्माद्भिन्नइत्यादीनां तत्प्रतीतित्वात्। यदुक्तमाद्ये द्वित्वज्ञानं भेदज्ञानाधीन मितितन्न, द्वित्वभेदयोरेकज्ञानविषयतया तज्ज्ञानयोः परस्परकार्यकारणभा वासिद्धेः। नचदूरस्थवनस्पत्योर्द्वित्वज्ञानप्रसंगः, दूरस्थत्वादेव भेदज्ञानाभा ववत्, द्वित्वज्ञानाभावस्या प्युपपत्तेः। यच्च परस्पराभावस्यापि भेदरूप त्वादिति तन्न, घटप्रतियोगिकभेदवान् पटः पटप्रतियोगिकभेदवान् घ-टः इतिहितस्यार्थः। तत्र भेदज्ञानस्य भेदज्ञानाधीनत्वाभावात। यदुक्तं द्वितीयेभेदभेदत्वज्ञानं विनातद्विशिष्टज्ञानानुपपत्तिरिति तत्र किं भेदभेदत्वज्ञानयो र्भेदाविशिष्टज्ञानत्वमभिप्रेतं उततयोर्भेदविशिष्टज्ञा-न विषयत्वं; नाद्यः, असिद्धेः। द्वितीय स्त्विष्टएव, तत्र दोषाभा वात। प्रतियोगित्वज्ञानंच नभेदज्ञानाधीनम् अतोनतत्प्रयुक्तदोषः। अतस्तृतीयोऽप्युपपन्नः। यच्चभेदज्ञानस्य तर्करूपज्ञानाधीनतया दूषणमु-क्तं तत्तर्कस्याभाव ग्रहहेतुत्वाभावादेवनिरस्तं, सत्तानिश्चयार्थ तर्कापे क्षायां घटज्ञानादावपि तर्कसापेक्षत्वप्रसंगः किंच अनवधारणात्मकज्ञा नस्य प्रागुत्पत्तौ पश्चात्तर्कावतारेसत्यवधारणात्मकज्ञानस्य उत्पत्तौको-विरोधः। यच्चतस्यैतस्माद्भेदसंशये व्यतिरेकानिश्चयेच सति एतस्य तस्माद्भेदनिश्चयोनेति सार्वजनीनमतस्तस्यैतस्माद्भेदनिश्चय एतस्य तस्मा द्भेदनिश्चयेहेतुर्वाच्यः, तथाचान्योन्याश्रयः इति; तन्न तत्रसंशयस्य प्र-तिबन्धकत्वात। व्यतिरेकनिश्चयोऽपि न तत्र प्रतिबन्धकः अयंत-

स्माद्भिन्नोनेति ज्ञानानन्तरं समानसंवित्संवेद्यतया अनुमानेनवा सएव तस्माद्भिन्नोनेति प्रतीतौ सत्यां सैवग्राह्यव्यतिरेकनिश्चयत्वात् तस्यैव तस्माद्भेदग्रहं प्रतिबध्नाति । स सम्बन्धिकपदार्थेषु सर्वत्रायमेव निर्वाहः । अतएव देवदत्तस्य पुत्रो यज्ञदत्तइति ज्ञाने सति देवदत्तो यज्ञदत्तपितेति ज्ञानम् । अन्यथा भूतले घटात्यन्ताभावनिश्चयो घटे भूतलवृत्तित्वाभाव व्यतिरेकनिश्चय प्रतिबध्य इति तत्राप्यन्योन्याश्रया दत्यन्ताभावस्यापि साक्षिवेद्यत्वापत्तिः । नचेष्टापत्तिः, षष्ठप्रमाणविलोपापत्तेः । नच संशय पदोपादाना तत्संशयस्यचाप्रतिबन्धकत्वा दत्यन्ताभाव निश्चये न सहेतुरिति वाच्यम् , अन्योन्याभावेपि तथा संभवात । किंच एतत्प्रतियोगिकभेदव्यतिरेकस्य एतन्निष्ठभेदप्रतियोगित्वाभावव्याप्ति ग्रहात सएव प्रतिबन्धकः । किंचास्माकं पटस्य - घटाद्भेदः पटत्वं पटभेदश्च घटे घटत्वं, नच पटे पटत्वव्यतिरेकनिश्चयः घटे घटत्वनिश्चयविरोधी । घटभेदव्यतिरेकत्व प्रकारनिश्चयः पटभेदत्वप्रकारकनिश्चय विरोधीतिचेत् , तन्न ; सर्वघटभिन्नं नवेति संशयदशायां अयंपटोनेति निश्चयदर्शनात । यश्च प्रतियोगित्वज्ञानाधीनोन्योन्याश्रय उक्तः, सोऽपि नास्त्येव, प्रतियोगित्वस्य पूर्वगृहीतस्योपनय सम्भवात् । सम्भवतिहि प्रतियोगिसन्निकर्षदशायां तदव्यवहितदेशे तदभावग्रहणस्थले प्रतियोगिताप्रत्यक्षं, पूर्वजन्मगृहीत प्रतियोगितायाः स्तन्यपानेष्टसाधनतावत उपनयेऽपि न विरोधः । किंच प्रतियोगित्वस्य संसर्गविधयैव भानेन विशेषणतया भानाभावात् न पूर्वज्ञानापेक्षा । नच प्रतियोगिद्वयसन्निकर्षाभावात् सम्बन्धप्रत्यक्षासम्भवः, अभावस्य सन्निकृष्टभूतलाश्रयत्वात् , प्रतियोगिनश्चोपनयात् सन्निकर्षसिद्धेः । भिन्नइत्यत्र मत्वर्थसम्बन्धप्रतीतावपि न तस्य भेदज्ञानसाध्यता , अन्वयव्यतिरेकासिद्धेः । यद्यन्वयव्यतिरेकौ स्यातां तत्कारणत्वं त्वयाप्येष्टव्यमेव । साक्षिणा युगपदेव भेदसम्बन्धयो र्भानांगीकारे जन्यज्ञानेनैव तथातथा भानमङ्गीक्रियताम् । यापि घटभिन्नः पट इत्यत्रानवस्थोक्ता , सापि नास्त्येव, विरुद्धधर्मज्ञानस्य भेद

ज्ञानसाध्यत्वे स्थूलोहं चन्द्रः प्रादेशपरिमाण इत्यादीना मनुदयप्रसं गात् । यच्च भेदज्ञानस्य विरुद्धधर्मज्ञानहेतुत्वे हेतूपन्यासः, विरुद्धयो रेकत्र ज्ञानासम्भवादिति; सचात्यन्तासंगतः, घटः पटाद्भिन्नइत्यत्र - घटपटयोरुभयोरेव विशेषणविशेष्यभावज्ञानात् । विरुद्धयोरेकतया ज्ञा- यमानयो र्ज्ञानासम्भवादिति विवक्षायामपि असंगतिरेव, घटपटयोरेकत याज्ञानासिद्धेः । क्लृप्तकारणाभावेपीत्या द्युपसंहारश्चासंगतः, यदि भे दे भेदज्ञानेवा किंचित्कारणक्लृप्तिः, तर्हि तस्याभावेपि कार्येसति त- स्यैव मायिकतास्यात्, नतु भेदमात्रस्य तज्ज्ञानस्य वा । भेदे भेदव्यवहा रस्यच स्वरूपमेव विषयः; नच स्वेन सम्बन्धासम्भवः, तथासति - घटस्वरूपमित्यादि व्यवहारासम्भवात । आश्रयाश्रयिभावो भिन्नइत्यत्र न विषय., किन्त्वन्य एव सम्बन्धः, सचाभेदेऽपीति नविरोधः । भेदा न्तरांगीकारेवा किं बाधकं, यावत्प्रतीतिवस्त्वंगीकारे बाधकाभावात । घटे पटाद्यनेकभिन्न प्रतियोगिकानन्ताभाववत एकप्रतियोगिकानेकभे दसत्त्वेपि विरोधाभावाच्च । प्रामाणिकस्यार्थस्य मिथ्यात्वकल्पनादपि हि तदनुसार्यर्थान्तरकल्पनमेव युक्तम् ! अन्यथा पीनत्वेन रात्रिभो जनं नकल्प्येत । एवमन्योन्याभावो भेदइत्यत्र न काचिदप्यनुपपत्तिः । वैलक्षण्यं वा भेदः, यत्र भेदप्रतीतिरबाधिता तद्गतो धर्मएव वैलक्ष ण्यं । निर्धर्मकेच कालसम्बन्धादिस्वरूपमेव वा भेदः । अभेदेपि वि- शेषणविशेष्यभावो घटस्य स्वरूपमित्यादाविव नानुपपन्नः । यदुक्तं - पटात्मकपटाभेदविरोधित्वा भावा द्घटस्य घटः पटभेदो न भवतीति, तत्र भेदस्याभेदविरोधित्वं कुत्र दृष्टमायुष्मता, येनैवं ब्रवीषि । विरो धस्य भवाद्भिरेवांगीकारात् अभेदइत्यत्र नञाविरोधप्रतीतेश्च विरो धो वाच्य इति चेत ? तर्हि यथाप्रतीति विरोधोऽंगीकार्यः ; यस्य - यस्माद्भेदः तस्य तस्माद्भेदो विरुद्धोदृश्यते, पटस्वरूपं पटस्य पटा दभेदः, घटस्तु यद्यपि पटाद्भेदः ; अथापि घटस्यैव भेदः, नतु पट- स्य, अतः पटस्य घटाविरोधित्वेपि न दोषः । यस्य यस्माद्भेदस्तस्य तस्माद्भेदो विरुद्धइत्युक्ते स्सम्भवएव, यस्य यस्माद्भेदस्तस्य तस्मा द्भेदस्याप्रसिद्धे विरोधाश्रयानिरूपणादिति चेन्न; तस्य तस्माद्भेदे त

स्माद्भेदस्य तत्प्रतियोगिकत्वाभावस्यैव विरोधरूपतया विवक्षितत्वात् । अतः पटाद्भेदरूपे घटे पटप्रतियोगिकत्वाभाव लक्षणविरोधोऽस्त्येवेति न दोषः । ननु कथं पटप्रतियोगिकत्वाभावः, पटाद्भेदइति प्रतियोगित्वस्यैवाभिधानादिति चेत् ? अस्यैतस्माद्भेदइत्यत्र यष्षष्ठ्यर्थः सप्रतियोगितेति विवक्षितत्वात् । नच सप्रतियोगिभेदस्य निष्प्रतियोगिस्वरूपत्वानुपपत्तिः; सप्रतियोगिपुत्रस्य निष्प्रतियोगि देवदत्तत्वानुपपत्तिप्रसंगात् । नच धर्मधर्मिभावानुपपत्तिर्दोषः; धर्मधर्मिभावस्यैवासिद्धेः । भिन्न इति धर्मधर्मिभावः प्रतीयते । किन्तु ततोऽन्यएव कश्चित्सम्बन्धविशेषः । नचाभेदेसोप्यनुपपन्नइति वाच्यम् , घटस्य स्वरूपमित्यादौ सम्बन्ध दर्शनात् । सम्बन्धितावच्छेदकभेदस्यैव सम्बन्धप्रयोजकत्वात् । यच्च– स्वमतोपपादनं तत्परमतस्यैव साधकं; तथाहि- अधिष्ठानसत्तैव अभेदइति यदुक्तं; तेन घटाद्भिन्नतया घटत्वं तत्तादात्म्यरूपं न सम्भवतीत्येतद्दूषणमुद्धृतम् । अभेदात्यन्ताभावस्यैव घटपटोभयनिरूपित भेदत्वांगीकारेण घटत्वात्यन्ताभावस्य घटान्योन्याभावत्व सम्भव स्समर्थितः । भेदोविभागव दुभयनिष्ठ इति यदुक्तं, अस्तुवा तत्सर्वोभेदएकएवास्तु किंनश्छिन्नं भेदस्यैवोपपादनात् , घटः पटोनेत्यत्र घटः पट इत्यंशस्य घटपटोभयोपस्थापनपरत्वेन घटइत्यंशस्य निषेधाधिकरणानुपस्थापकत्वात् । किंच घटत्वात्यन्ताभाव एवघटान्योन्याभाव इतिव्यावहारिक मर्यादामनंगीकृत्यडुरध्वगमनं बुद्धिविध्वंसादेव । एवंच भेदोऽप्यभेदमेवसाधयतीत्यसंगतं । यच्चाधिष्ठानमेवघटादेः पारमार्थिकरूपमित्युक्तं, तन्न, किमत्रषष्ठीमुख्या उतामुख्या; मुख्यत्वे घटत्वादिकमपि स्वरूपंस्यात् इतितदभावः कुतोभेदोनस्यात् । तदपरमार्थइति- चेत् अपरमार्थस्वरूपप्रतियोगिकएवभेदोस्तु, किंतवच्छिद्यते । किंचायं घटाद्भिन्न इत्युपदेशे नायं घटाद्भिन्नइति बुद्धिर्निवर्तते, अयंघटेन तुल्याधिष्ठानकइति बुद्धिर्ननिवर्तते, अतोनाधिष्ठानंभेदः । पदद्वयसामानाधिकरण्यार्थाभेदस्यैव नञर्थप्रतियोगित्वमनुभूयतइति यदुक्तं तन्न; तथासति- निषेधाधिकरणाप्रतीतिप्रसंगात् । घटः पटोनेत्यत्र घटः पट इत्यंशस्य घट पटाभेदोपस्थापन परत्वेन घटइत्यंश निषेधाधिकरणोपस्था

पकत्वाभावात । किंच इह घटोनेत्यत्राभिहयइति घटभूतल-संसर्गं प्रतिपाद्यतन्निषेधः क्रियतइतिस्यात्, तथाच वायौरूपंनास्ती त्यादावप्रसिद्धसंसर्गनिषेधःस्यात, निरधिकरणानिषेधश्च, अनुवृत्तसदात्म स्वरूपमेव अभेदइत्यप्यसंगतं, घटस्सन् पटस्सन्नित्यभेदज्ञानाविरोधिनो घ टपटौ भिन्नाविति ज्ञानस्यतदभावगोचरत्वानुपपत्तेः । नन्वियमनुवृत्तस-त्तैवाभेदइति लौकिकानां ज्ञानाभावात् अभेदाभाव प्रतीतिरुपपद्यते, य थात्वन्मते घटकलशयोः घटत्वमभेद इतिज्ञानाभावात् घटत्वरूपाभेदज्ञाने पि घटकलशौ भिन्नाविति भ्रमइतिचेन्न ; त्वादृशामप्यनुवृत्तसत्तैव अ-भेदइति ज्ञानवतां घटपटयोर्भेदज्ञानदर्शनात्, घटत्वमेव घटकलशाभेद इति ज्ञानवतांतु घटत्वज्ञानेसति घटकलशभेदज्ञानं नभवत्येव । अपर-मार्थस्य घटादेरात्मसत्तैव स्वरूपमित्यप्यसंगतं, तस्य ततो भिन्नत्वात । किंच दूरस्थ वनस्पत्योरभेदव्यवहारस्य कोविषयः, आत्मसत्तैवचेत् ? तयोरभेदज्ञानं प्रमा, साचदूरत्वदोषजन्या, समीपं गतस्य भेदज्ञानंभ्रमः, सचदोषनिवृत्तौजायतइतिपरिहास्यम् दूरस्थवनस्पत्योरभेदव्यवहारस्य मिथ्याभूत वनस्पतिस्वरूपमेवाभेदोविषयश्चेत् ? सर्वत्रसएवाभेदोऽस्तु । एतत्सर्वमभिप्रेत्यानुगृहीतं "यथासम्भवं स्वरूपधर्मयोर्भेदस्यानु प्रवे-शोपलम्भात् " इति ॥

इति श्री वाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासम धिगत परावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरण परिचरण परायणेन तत्प्रसादलब्ध महाचार्या परनामधेयेन रामानुजदासेन विरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां भेददू-षणनिस्तारो नाम त्रयोदशस्कन्धः ।

श्रीः ।

श्रीमतेरामानुजायनमः ।

श्रीमते निगमान्तमहादेशिकायनमः ।

# ॥ अथ चतुर्दशो वादः ॥

यदात्मानो वेदा यदनुगुणवर्णाकृतिजुषः
प्रमाणं यत्रैते नियतमपरिच्छेद्य विभवे ।
यएषामाहर्ता दनुजमथनो वाजिवदन
स्समेदेवश्श्रीमान्विदळयतु सम्मोहमखिलम् ॥
वेदप्रामाण्यवाङ्मात्र कंचुकच्छन्नमर्मणाम् ।
बुद्धसिद्धांतसुहृदां संतः पश्यंतु बाध्यताम् ॥

अतींद्रियेऽहि धर्मादौ वेदाः प्रमाणमिति साधितं प्रथमकाण्डे । तदुपजीवनेन सिद्धेऽपि प्रामाण्यं शारीरके । अतस्तथा।गता ह्यागम-स्तत्वानुष्ठानयो रप्रमाणामिति सर्वमीमांसकसम्मतं । तदेतत्संविन्मात्रव्य

---

. ( यदात्मानइति ) यदधीनस्वरूपस्थितिप्रवृत्तिका इत्यर्थः । वर्णाः- अक्षराणि । आकृतिः-आनुपूर्वी । यदनुगुणेत्यादिना पदवाक्यस्वारस्यं विवक्षितं । फलितमाह (प्रमाणमिति) अनेन निर्विशेष पदवाक्यस्वारस्यं प्रामाण्यंच नास्तीतिगम्यते । आहर्ता-मधुकैटभहृतानां आहर्ता । मर्म -वेदबाह्यता । नहि प्रपंचमिथ्यात्वमते भेद प्रतिपादकवेदपूर्वभागस्य प्रामाण्यमभ्युपगम्यते, किं त्वद्वैतपरवेदान्तभागस्यैवेत्यत्राह ( तदुपजीवनेनेति ) अ-पौरुषेयत्वादिसिद्धवेदप्रामाण्योपजीवनेनेत्यर्थः । सामान्येन प्रामाण्येसिद्धेहि वेदान्तास्सिद्धे प्रमाणमुतकार्य इति विचारसम्भवः, एवं च अपौरुषेयत्वादिभिः प्रामाण्यसिद्धेः पूर्वभागेऽप्यविशेषात्तस्यापि प्रामाण्यमंगीकार्यमितिभावः ( अत इति ) वेदविरोधादितिभावः । (तदेतदिति) मीमांसक सम्प्रतिपन्नं प्रामाण्याप्रामाण्यव्यवस्थापनं (संवि-न्मात्रेति ) मिथ्याविषयत्वेन वेदाप्रामाण्य प्रसंगात् , अन्यथाबुद्धाग

तिरिक्त मिथ्यात्ववादे नसंगच्छते । तदुक्तमभियुक्तैः, ॥*॥"प्रमाणत्वाप्रमाणत्वे पुण्यपापादितत्फलं । विध्यर्थवादमन्त्रार्थ नामधेयादिकल्पना ॥ सर्वेषु लक्षणेष्वेव स्वप्रमाणगणेस्थितिः । वचनव्यक्तिभेदेन पूर्व सिद्धान्तपक्षता ॥ कर्मभ्यः फलसम्बन्धः पारलौक्यैहलौकिकः । स र्वमित्याद्ययुक्तं स्या दर्थशून्यासुबुद्धिषु ॥*॥"इति । तदिह किंनाम वैषम्य माश्रित्य वेदाः प्रमाणं बुद्धाद्युपदेशानप्रमाणमिति निष्कृष्यते । किं-शब्दस्वरूपसत्यत्वासत्यत्वाभ्युपगमेन, उतपरमार्थभूत प्रामाण्याप्रामा

---

मस्यापि प्रामाण्यप्रसंगादितिभावः । व्यतिरिक्तशब्देन स्वतन्त्रवस्त्वन्तरप्रतीतिःस्यात्, तथाच स्वगतभेदमिथ्यात्वस्याप्रतीते स्सगुणवाक्यस्य प्रामाण्यं सम्भाव्येत, मात्रपदेनतु स्वगतभेदमिथ्यात्वसिद्धे स्सगुण-वाक्यस्याप्यप्रामाण्यं फलितम् (प्रमाणत्वेति) प्रमाणत्वं प्रथमाध्यायार्थः, अप्रमाणत्वं विरोधाधिकरणार्थः स्तृतीयपादार्थोपलक्षणं । प्रामाण्यप्रतियोगितयोपस्थितत्वात् पादान्तरार्थापेक्षया प्रागेतदुक्तम् । वेदप्राण्यसमर्थनसिद्धमर्थमाह( पुण्येति )आदिपदेन मोक्षसाधनपरिग्रहः । "विधी"ति प्रथमपादार्थः । "अर्थवादमन्त्रे"ति द्वितीयपादार्थः । "नामधेयादीति"चतुर्थपादार्थः । आदिपदेन नामधेया पवादपरिग्रहः (सर्वेष्विति)द्वितीयाध्यायादिष्वित्यर्थः । सर्वेष्वेव लक्षणेषु परिनिष्पन्नं तत्तदधिकारिणस्तत्तत्परिकरविशिष्टतत्तत्कर्मभ्यस्तत्तत्फलसिद्धिरूपमर्थमाह ( कर्मभ्यइति ) इत्यादिसर्व-मित्यन्वयः । आदिपदेन लौकिकार्थपरिग्रहः । तत् - तस्मात्, अर्थस्यमिथ्यात्वाविशेषात् । इह -प्रमाणा प्रमाणविप्रतिपत्ति विषययोर्वेदबाह्यागमयोः । किं वैषम्यमाश्रित्यवेदाः प्रमाणं परागमोनप्रमाणमिति स्वय-मध्यवसीयते परं प्रतिचसाध्यते ; नकेनापि स्वयमध्यवसितुं परं प्रतिसाधयितुंचशक्यत इत्यर्थः । किमित्यादि व्यवहारविसंवादा त्प्राचीन विकल्पास्सर्वेऽभ्युपगमभेदपराः, क्वचिदुक्तिरुपलक्षणार्था । अभ्युपगमभेदेनिरस्ते अध्यवसायसाधनयोरुभयोरपि निरासस्सिध्यतीति तन्निरासः । भेदश्च-एकवाद्यभ्युपगमे इतरवादिनासत्यत्वादिशिरसामसत्यत्वादिशिरसांचयोऽयमाश्रयोऽभ्युपेतः तद्विपरीताश्रय

ण्याश्रयत्वेन, उतप्रमातृसत्यत्वासत्यत्वाभ्युपगमभेदेन, यद्वा सत्यभूतप्र मिति हेतुत्वाहेतुत्वाभ्यां, किंवा नित्यत्वानित्यत्वाभ्यां, अथानादित्वसा- दित्वाभ्यां, उतदोपतदभावाभ्यां, अथ व्यवहारविसंवादसंवादाभ्यां, अथ- वा महाजनपरिग्रहबहिष्काराभ्यां, आहोस्वित् वेदत्वावेदत्वमात्रेण, अ- थाविद्याविशेष जनिताभिमानानभिमानमात्रेण, अथवेक्षुक्षीरादिवत्स्वा- त्ममात्र साक्षिकेणा निर्देश्यस्वरूपभेदेनेति । नाद्यः—असिद्धेः, नहियो गाचारादिभिः बुद्धप्रणीतोऽक्षरराशिस्सत्यइत्यभ्युपगम्यते , नापि भव ता वेदरूपः । न वयं वेदस्य शशशृंगादिवदसत्यत्व मभ्युपगच्छामइ तिचेत्? किं तर्हि सत्यत्वमभ्युपेतं । तदपि नेतिचेत्? तर्हि कोविशे षः । व्यावहारिकापरपर्यायकाल्पनिक सत्यत्वाभ्युपगमइति चेन्न तैरपि- संवृति सत्यत्वाभ्युपगमात् । अयमेव तावद्विशेषइति चेन्न ; पर्यायमा त्रस्य वैषम्यानाधायकत्वात् । अन्ततो वञ्चनार्थत्वस्या प्युभयोरविशेषात् । यथाहुः " तुल्यार्थत्वेपिचैतेषां मिथ्यासंवृतिशब्दयोः । वंचनार्थउप

---

तागोचरत्वं, तथालौतिहिपरानिरस्त नमुपपद्यते, नतूभाभ्यां तुल्यरूपत यांगीकारइतिभावः । क्वचिद्वाभ्युपगमभेदविवक्षाया मसाधारणहेत्वभा वात्, दूषणग्रन्थानुसाराच्च अभ्युपगमपरत्वमेषां विकल्पानामवग म्यते, अभ्युपगमभेदस्य विद्यमानत्वात् । सत्यत्वादिवैषम्यमाश्रित्य किन्निष्कृष्यतइतियोजना ( सत्यभूतप्रमितीति ) प्रमितिशब्दोज्ञानप रः । बुद्धप्रणीतः वेदरूप इत्यत्र अवधारणं द्रष्टव्यं (तैरपीत्यादि) उभाभ्या- मप्युभयैकरूपस्य सत्यत्वस्यांगीकारान्न तन्निराकरणसंभवइतिभावः । परेणसर्वेषां तुच्छत्वमेवाभ्युपगम्यप्रामाणिकजनवंचनार्थं सांवृतिकमित्यु च्यत इत्यत्राह (अन्ततइति ) निरूप्यनिर्णयइतिभावः (तुल्यार्थत्वइति) यथापरेण तुच्छत्वमेवाभ्युपगम्यप्रामाणिकजनवंचनार्थं सांवृतिकसत्यमि त्युच्यते तथावैदिकजनवंचनार्थं एवां सांवृतिकशब्दं परित्यज्यतस्यै वार्थस्य मिथ्याशब्देनोपन्यासः, यथालालेत्युक्तेजुगुप्साजायेतेति वक्तव्यास

न्यासो लालावङ्कासवादिवत् ॥ नास्तिक्यपरिहारार्थं संवृतिः कल्पिते तिच " इति । नच युष्माभिः संवृति सत्यत्वस्यावाच्यत्वं संकेतितं । उक्तंच - गूढपाषण्डिगोष्ठीगरिष्ठैः, तदेतत्संवृतिरिति गीयतइति । अस्तु वा तदभ्युपगमेन वैषम्यं, भवतातु निपुणधिया द्वयोरपि व्यावहारिकसत्यत्वमविशिष्टमेष्टव्यम् , व्यवहारानुबन्धित्वमात्रस्य तुल्यत्वात् । अतो भवता परित्यक्तपक्षपातेन न तद्बहिष्कारः कार्यः । यदि चाभ्युपगमसिद्धेन सत्यत्वेन प्रामाण्यसिद्धिः; तर्हि वैभाषिकाद्यागमानां तदभ्युपेतेन तेन तत्सिद्धिरनिवार्या । एतेन द्वितीय तृतीय चतुर्थानिरस्ताः । विशेषतोऽपिभ्रमः--द्वितीयेतावत्प्रामाण्यलक्षणवैषम्यसिद्धिः प्रामाण्याश्रयत्वेनेति वदता साध्यमेवसाधनत्वेनोपन्यस्तं । ननु विशेषणविशिष्टाकारेण साधनत्वं, स्वरूपतस्तु साध्यत्वमितिचेन्न; विशेष्यासिद्धौ विशिष्टस्याप्यसिद्धेः । भवन्मतेविशेषणमप्यसिद्धमेव, वेदप्रामाण्यस्यापि ब्रह्मव्यतिरिक्तस्य पारमार्थ्यानभ्युपगमात् ; तदभिमानमात्रस्य चोभयोरविशेषात् । तृतीयेऽपि सत्यप्रमातृत्वेनकस्ताव

---

वशब्दोपन्यासः । (नास्तिक्येति) (संवृत्तिः कल्पितेतिचेति) नास्तिक्यपरिहारार्थमित्यन्वयः । संवृति रस्माभिरंगीकृतेति बाह्यानामुक्तिरपि वंचनार्थमित्यर्थः । वंचयितु मुद्युक्तैरपि युष्माभि रसर्वै रसंभूया स्माभिस्संवृतिसत्यं संवृतिसत्यशब्देन न व्यवहर्तव्यं किन्तु मिथ्याशब्देनैव व्यवहर्तव्य मित्यसंकेतितत्वात् जाड्यमेव प्रकटीकृतं । असंकेतितत्वादेव त्वदीयैरभेदाभिधानादित्यत्राह( नचयुष्माभिरिति) (गूढेत्यादि )खण्डनकारोविवक्षितः, तत् बहिष्कारः । बाह्यतदागमयोर्दूषणान्तरमाह(यदिचेति )पारमार्थिकत्वातिरेकेण किंचित्सत्त्वमसिद्धमेव त्वदभ्युपगममात्रेण तत्सिद्धौवैभाषिकादिभिः स्वागमे पारमार्थिक सत्यत्वस्यैवांगीकारात्तेन तत्प्रामाण्यसिद्धिरनिवार्यैत्यर्थः ( एतेनेति ) असिद्धेरित्यारभ्यैतावत्पर्यन्तं उक्तेनेत्यर्थः । व्यावहारिकसत्यत्वमभ्युपगतमेवेत्यत्राह ( तदभिमानेति ) त्वदभिमानमात्रेण तत्सिद्धौपरागमेपि तेन सांवृति·

दिष्यते भवता? किं संविन्मात्रमुत तदेवोपहित मुतोपाधिभेदएव । आद्ये व्याहत्यपसिद्धान्तौ । अनन्तरे प्रमातृत्वस्यसत्यतानभ्युपगमान्नेष्टसिद्धिः । तत्रस्वरूपमात्रस्य सत्यता योगाचारैरप्यङ्गीक्रियते । उपाधिमात्रपक्षेतु उपाधिस्वरूपस्य तत्प्रमातृत्वस्याप्यसत्यत्वमेवेति । नापिचतुर्थः, विकल्पासहत्वात् ; तत्र किं प्रमितेस्स्वरूपतः सत्यत्वं विवक्षितमुतविषयतः । न पूर्वः, शास्त्रजन्यायाः प्रमितेर्भवता स्वरूपसत्यत्वानभ्युपगमात् । तेनतु तदभ्युपगमेन तदागमस्यैव प्रामाण्यापातः । तुल्यैस्तुतदापिनेष्यतइति त एवभवतोऽत्रान्तरंगसंबन्धिनः । नाप्युत्तरः, विषयतः सत्यत्वस्यचिद्व्यतिरिक्तांशे भवतायोगाचारेणाप्यनभ्युपगमात् । चिदंशस्यविषयत्वेभ्युपगम्यमानेपि सत्यत्वमुभयसम्मतं; तत्र क्षणिकत्वनित्यत्वादिभेदस्तु दुरुपपा

---

**कसत्यप्रामाण्याभ्युपगमात् तस्यापि प्रामाण्यप्रसंगइत्यर्थः । सांवृतिकत्वव्यावहारिकत्वयो रभेदस्समर्थितएवेति भावः ( व्याहतीति ) निर्विशेषपरमात्रपदप्रमातृत्वोक्त्योः । (प्रमातृत्वस्येति) तदुपाधेरित्यर्थः । तत्र-विशिष्टे । स्वरूपं- विशेष्यस्वरूपं । अपिशब्देन त्वयापीति गम्यते । तदागमप्रमातर्यपि विशिष्टे विशेष्यभूतचैतन्यस्य सत्यताया युवाभ्यामंगीकारात् तदागमस्यापि प्रामाण्यप्रसंगइत्यर्थः । अध्यवसायसाधनयो रुभयोरप्यसम्भवद्योतनाय वादिद्वयग्रहणं (उपाधिमात्रेति) अत्र विकल्पोभिप्रेतः, तेन- योगाचारेण । त्वदुक्तप्रयोजकस्य तेनाभ्युपगमात्तन्मतानुसारेण तदागमस्य प्रामाण्यं स्यादित्यर्थः । वेदेतु तस्य प्रयोजकस्य त्वयानभ्युपगमात्तस्य प्रामाण्यं त्वन्मते नस्यादित्येवकारार्थः ( तुल्यैरिति ) माध्यमिकैरनंगीकारात् उभयत्रापि तुल्यवदेव युवयोरप्रामाण्य सिद्धेरिति भावः ( चिद्व्यतिरिक्तेति ) अत्र स्वातन्त्र्यं विवक्षितं, 'तत्र क्षणिकत्वे' त्याद्युत्तरग्रन्थानुसारात् (चिदंशस्येति) विषयतस्सत्यत्वोक्तेरिति शेषः । यद्वा चिदंशस्य विषयत्वं त्वन्मते नास्त्येव, अभ्युपगम्यमानेपीत्यर्थः । नित्यस्य चैतन्यस्य क्षणिकत्वोक्तेस्तदागमस्य विषयतोऽसत्यत्वं चिदंशेपीत्यत्राह ( तत्रेति) कल्पितनित्यत्वादि विषयत्वे**

द, निर्धूतसमस्त धर्मविद्भवाहि सविद्ववद्भिस्तैश्च परिगृहीतं । नापि चतुर्थः, आविद्यकस्य वेदस्य भवतापि नित्यत्वानभ्युपगमात् ; अभ्युपगमे वा नित्य संसारादिप्रसंगात् ; क्षणिकत्वनित्यत्वादि कल्पन.भेदस्या प्यप्रयोजकत्वा त् । नापि षष्ठः, अविद्याकल्पितत्वाभ्युपगमेनानादित्वासिद्धेः; अनादित्वे नैवेयं कल्पनेतिचेन्न, बाह्यैरपि सर्वज्ञसन्तानान्तरिति धर्मदेशनासन्ता नस्य अनादित्वाभ्युपगमात् ; क्षणभंगतदभावादिकं तु वाक्य.र्थयाथार्थ्ये प्रत्यकिंचित्करमेव । नापि सप्तमः, तत्पक्षेण तदागमस्य दोषमूलत्वाभा वात् ; भवत्पक्षेणतूभयोरपि दोषमूलत्वा विशेषात् ; वक्तृदोषः वेदे नाभ्युपेत इतिचेत् , किं दुष्टेन्द्रियादिपुंसोऽभ्युपेत ? येनतदप्रा माण्यं सिध्येत् । अतो येनकेनापि दोषेणाप्रामाण्यं स्यादित्यनुसन्धत्स्व । अविद्याख्यदोषमूलत्वमपि वेदस्य नेष्टमितिचेदागतोऽसिपन्थानं, अतएव कल्पितत्वादेरपि प्रतिक्षेपात् । अकल्पितत्वेऽपि प्रतीतिबाधाभ्यांमिथ्यात्व मितिचेन्न, ब्रह्मणोऽप्यकल्पितस्य त्वदभिमतयुक्त्याभासैर्बाध प्रसंगात् ;

---

वा द्वयोरप्यप्रामाण्यं स्यादिति भावः (नित्य संसारादीति) सत्यत्वग्रहः । ननु काल्पनिकक्षणिकत्व नित्यत्वाभ्यां विशेषइत्यत्राह (क्षणिकत्वे-ति) काल्पनिकस्यासत्यत्वादप्रयोजकत्वं (अनादित्वेनैवेति) कल्पनाप्रवा हरूपेणानादिरित्यर्थ. । धर्मदेशना–धर्मोपदेशः । तत्र प्रवाहानादित्व मस्त्वेवेतिचेन्न; त्वन्मते वेदेऽपि तस्यासत्त्वात । क्षणभंगविशिष्टं प्रवाहाना दित्वं बौद्धानां, अस्माकं तदभावविशिष्टमिति वैषम्यमाशंक्याह (क्ष-णभंगेति) अर्थयाथार्थ्यप्रयोजकताभिमानेनानादित्वादि कल्पपरिग्रहः, तत्र तदप्रयोजकविशेषण प्रक्षेपोऽनुचितइति भावः । परागमस्य दोष-मूलत्वं वेदस्य तदभावश्च किं तन्मतेनोच्यते उतत्वन्मतेन, इति वि कल्पमभिप्रेत्य दूषयति (तत्पक्षेणेति) (अतइति) नन्वसदर्थजनक-त्वेनाविद्यादोष. नत्वप्रामाण्यापादकत्वेनेति चेत ; एवमपि प्रमाणस्य मिथ्यात्वे तद्विषययाथात्म्येऽनाश्वासात् । नह्यारोपितधूमेन वह्निसि-द्धिः । पन्थानं -खण्डनमार्गं । (त्वदभिमतेति) दृश्यत्वदृश्यसंबन्धनिरासाद्या

अनिर्वचनीय कुसृतेश्च निरसिष्यमाणत्वात् । नाप्यष्टमः, कारणदोषा विशेषेविसंवा अनुदयस्या किंचित्करत्वात् ; दोषज्ञानेनैव बाधसिद्धेः; तथा चाहुः– " दुष्टकारणबोधेतु सिद्धेऽपि विषयान्तरे । अर्थात्तुल्यार्थतांप्राप्य बाधेगोदोहनादिवत् ॥" इति । किंच बाह्यागमेषु नविसंवादस्त्वयासुवचः, अदृष्टस्यातीन्द्रियत्वेन तत्र तदयोगात् ; दृष्टार्थेषु विषहरणाद्युपदेशेषु तत्राप्यविसंवाददर्शनात् ; तत्त्वविषयेतु प्रत्यक्षादिविसंवादस्य तद्विरोध गम निकाकुसृतेश्चोभयतुल्यत्वात् ; वेदाधीनस्य संविन्नित्यत्वादिरूपविसंवादस्य वेदप्रामाण्यसिद्धिसमनन्तराभिधेयत्वात् ; अन्यथा विपरिवर्तप्रसंगात । एतेन

---

**थाविवक्षिताः । ब्रह्मणोदृश्यत्वमन्यत्रसमर्थितमेव । दृग्दृश्ययोस्संबन्धासिद्धौ दृगधीनासिद्धिब्रह्ममिथ्यात्वं जडप्रपंचवदेवस्यात्, सर्वशून्यवादेन ब्रह्मणोऽपि बाधोदृश्यते । शून्यवादस्याप्रमाणत्वात् कथंतेनबाधइतिचेत् ? तदप्रामाण्यं कथमवधृतं त्वया, प्रमाणविरोधादितिचेत् ? हन्ततर्हिततएव प्रपंचमिथ्यात्वमपि नसिध्येत् । अस्तिहि प्रत्यक्षादिभिः पूर्वभागेन उत्तरभागेऽपि सविशेषवाक्यैः प्रपंचनिषेधकस्याविरोधः । अतो वेदान्ताः प्रपंचस्यापि निषेधकानस्युः । प्रतीतिबाधाभ्या मनिर्वाच्यत्वरूप मिथ्यात्वसिद्धिरपि नेति वक्ष्यतइत्याह ( अनिर्वचनीयेति ) (दोषज्ञानेनेति)बाधः-अर्थाभावबुद्धिः । (दुष्टकारणेति) विसंवादेन साक्षादर्थाभावएव परिच्छिद्यते, कारणदोषस्तु यद्यपि नसाक्षादर्थाभावं परिच्छिनत्ति, इदं ज्ञान मप्रमाणं दुष्टकारणजन्यत्वादिति साक्षादप्रामाण्यस्यैवबोधनेन भिन्नविषयत्वात् ; अथाप्यप्रामाण्यस्यार्थाभावाधीनतया तत्परिच्छेदेविषयाभावस्याप्यर्थात्परिच्छेदात् , विसंवादेनतुल्यकार्यत्वादर्थाभावपरिच्छित्तौ नविसंवादमपेक्षते ; यथा प्रणयनार्थतया चमसवदविहितमपिगोदोहनं प्रणयनाश्रितत्वेन प्रणयनयस्य स्वेनावश्यंकर्तव्यत्वात् , अर्थाच्चमसेनतुल्यकार्यत्वात् प्रणयनसिद्धौचं चमसंनापेक्षतइत्यर्थः । बाधः-अनपेक्षत्वं (त्वयेति ) प्रत्यक्षादिविसंवादो ऽस्माभिस्सुवचः ( संविन्नित्यत्वादीति) तद्गोचरज्ञानं विवक्षितम्(एतेनेति) कारणदोषाविशेषमहाजन**

नवमोऽपि दत्तोत्तरः; बहुजनविवक्षायां समानत्वात्; निपुणजन विवक्षायां सर्वेषामप्यज्ञानभ्रमादि कलुषितत्वाभ्युपगमेन त्वत्पक्षे तदसिद्धेः; हेतुदर्शनरहित पुरुषपरिग्रहविवक्षायामपि परमार्थतः कारणदोषे निर्णीते दोषानभिज्ञैः भ्रान्तैरेव परिग्रहइत्यायातं, ततश्च नविशेषः । नापि दशमः, संज्ञावैषम्यमात्रस्या किंचित्करत्वात्; तद्व्यवहारभेदरूपस्य तु किंचित्करस्य प्रस्तुतानुपयोगात । नाप्येकादशः, तथाविधाभिमानस्य पुरुषभेदेनोभयत्रापि सुलभत्वात; ननु वयं प्रामाण्यमभिमन्यामहइतिचे त्तेवा किं वेदे; अतो यस्य कस्यचिदभिमानासिद्धं प्रामाण्यमिति त्वयैव स्थापनीये त्वमेव कथं तत्प्रामाण्यं नाभिमन्यसे । द्वादशस्तु परिशिष्यते; तत्र स्वात्मशब्देन किं सर्वेषां प्रमातॄणां स्वात्मा विवक्षितः, उतभवदन्तरात्मा । नाद्यः, इक्षुक्षीरादिरसभेदवत् "ज्योतिष्टोमेन स्वर्गकामो यजेत" 'चैत्यं वन्देत स्वर्गकाम' इत्यनयोः प्रामाण्याप्रामाण्य लक्षणभेदस्यान्यैरनुपलम्भात्; नेतरः, भवत्स्वात्मानमपिहि वयमितरात्मसमानतयैवोन्नयामः; रत्नतत्वपरीक्षकवदहमतिशयित प्रज्ञइति चेत्, सौगतेनाप्येवमुक्तेकिमुत्तरं; मध्यस्थदृष्टिरिति चेन्न तदसिद्धेः; अस्तु वेदप्रामाण्यमप्यविचारितरमणीयं किं न श्छिन्नमिति चेत्?

---

**परिग्रहस्या किंचित्करत्वादित्यर्थः । दोषान्तरमाह ( बहुजनेति ) (सर्वेषामिति)वेदतदर्थयागस्वर्गसाध्यसाधनभावादिज्ञानस्य त्वयाभ्रमत्वाभ्युपगमादित्यर्थः ( हेतुदर्शनेति ) दृष्टलाभादिरूपहेतुदर्शनवद्भिः परिगृहीतोबौद्धागमः, वेदस्तुतद्राहितैः परिगृहीतइति वैषम्यमित्यर्थः । (परमार्थतइति ) दोषमूलस्यापि परिग्रहो दोषज्ञानेसति दृष्टहेतुदर्शनात् हेतुदर्शनाभावेतु दोषाज्ञानेन प्रामाण्यभ्रमात् , तत्र प्रथमस्याभावाच्चरम परिशिष्यते, ततश्चहेतुदर्शनवत्पुरुषपरिग्रहात अविशेषइत्यर्थः ( संज्ञेति ) अन्यथा परिवर्तप्रसंगादिति भावः । ( अस्त्विति ) वेदं अनिर्वचनीयत्ववादिनामिति हृदयं, अविचारितरमणीयत्वस्य मिथ्यात्वसाधक**

प्रथमं तावद्वैषम्योपपादनाभिमानः, ततो वैदिकत्वविडंबनं, पश्चात्त त्वानुष्ठान व्यवस्थाभंगः, ततश्च स्वर्गापवर्गगमनसरणेः । एवंच सौगतसौहार्दभयपलायिनेन द्वैवर्गिकमत महादुर्गमेवानुप्रविष्टमिति । अत्रच प्रामाण्यादेरप्रयोजका एव केचित्कल्पा मन्दमतिसम्मोहशमनाय-उपन्यस्य निरस्ताः । एतदभिप्रायेण यादवप्रकाशैरुक्तम् —

" वेदोऽनृतो बुद्धकृतागमोनृतः प्रामाण्यमेतस्यच तस्यचानृतम् ।
बोद्धानृतो बुद्धिफले तथानृते यूयंचबौद्धाश्च समानसंविदः " ॥ इति ।

किंच प्रत्यक्षतोऽनुमानतश्च भवद्भिर्निर्विशेषं प्रसाध्यते, त तश्चप्राप्तार्थतयापि शास्त्राप्रामाण्यं, द्वित्रावयवानुमानवाक्यपाठमात्रेण ब्रह्म-विद्यानिष्पत्तौ कःखलुजडः श्रुतिनिकरशिखरपरिशीलन प्रयासादि-कमारभेत । नन्नूमस्तर्ह्यनुमानादिकमस्मत्सिद्धान्तसाधनतयेतिचेत् ? किमि दं श्रुतिप्रामाण्यभंगभीरुतया, उतानुमानादेस्तत्रप्रामाण्यायोगात् । नाद्यः, भवद्भिरनुक्तेपि तत्सद्भावमात्रेण श्रुतिप्रामाण्यभंगस्य दुर्वारत्वात्; संप्लवो दयस्यच शास्त्रयोन्यधिकरणनिरस्तत्वात् । न द्वितीयः, ज्ञानोदयादेवा

---

**त्वात् व्यावहारिकप्रामाण्यं नहीयतइतिभावः । ( प्रथममिति ) एव मविचारित रमणीयत्वे सतितादृशं प्रामाण्यं बुद्धागमेऽपि स्यात् , त न्नैववास्यात् , ततश्च प्रमाणाप्रमाण विभागादिकमनुपपन्नमित्यर्थः ( अ भिमानइति)'च्छिन्न'इति विपरिणामेनानुषंगः । ( सरणेरिति) भंगइत्यनुषं गः ( सौगतेति ) उक्तरीत्यावेदवत्सुगतागमस्यापि प्रामाण्याभ्युपगम-प्रसंगभीत्यावेदप्रामाण्यस्यपरित्यागे चार्वाकमतानुप्रवेशस्स्यादित्यर्थः । अविसंवादादिकल्पानां प्रामाण्याप्रामाण्यप्रयोजकत्वा च्छंकितुं योग्य त्वेऽपि स्वरूपसत्यत्वादिकल्पा स्तदप्रयोजकाः कथं शंकिताइत्यत्राह ( अत्रचेति ) ज्ञानजनकत्वाभावा दप्यप्रामाण्यमित्याह ( द्वित्रेति ) अध्ययनविधिबलादध्ययनमात्र सम्भवेपि अर्थज्ञानार्थं नदर्थविचारादि-प्रयासो नभवतीत्यभिप्रायेण प्रयासादिकमित्युक्तं ( भवद्भिरिति )**

नुपपत्तिलक्षणस्याप्रामाण्यस्यासिद्धेः; एककोटिनियततयाच संशयरूपस्याप्यभावात्; निपुणतर प्रयोगेच प्रयोगदोषाणामभावात् । विपर्ययलक्षणं तु विषयापहारमन्तरेण न सिध्यतीति । तथा चसति तुल्यविषयतया तत एव शास्त्रमप्यप्रमाणमिति वङ्कुट्यां प्रभातं । एवंच सति अद्वैतवाक्यानां नतत्त्वावेदकत्वं द्वैतवाक्यानामेव तत्त्वावेदकत्वमित्यभिमतविपर्यासश्च । अंततः शास्त्राप्रामाण्यमप्यस्माकमिष्टमेवेति चेन्न पूर्वन्यायेन दत्तोत्तरत्वात् । असन्दिग्धाविपर्यस्तबोधोदयस्य दुरपह्नवत्वात् । बोध्यमिथ्यात्वेच वैदिकव्यपदेशकंचुकं मुंचतस्ते बाह्यसमयसुरंगा प्रवेशमन्तरेणकथासमरसीम्निसंशयापत्तेः । तदेतदखिलमभिसन्धाय भाष्येसन्मात्रग्राहिप्रत्यक्षप्रतिक्षेपाय गृहीतमात्रग्राहित्वेन सन्मात्राभिमतब्रह्मस्वरूपपरवेदान्तवाक्यानामप्रामाण्य प्रसंग उदाहृतः । स्थलान्तरेषुवि प्रकीर्णं शेषमवधातव्यमिति ।

इति शतदूषण्यां वेदप्रामाण्यपरिग्रहानुपपत्ति वादः चतुर्दशः ॥ १४ ॥

---

**स्वार्थानुमानादपि तत्सिद्धेरित्यर्थः ( निपुणतरेति ) सन्निर्विशेषं सत्त्वाद्व्यतिरेके घटवदिति प्रयोगो विवक्षितः । नचाप्रयोजकत्वं त्वयाववक्तुं शक्यं, दृग्दृश्यसम्बन्धानुपपत्त्यादि तर्काभावे बाधकतर्कसद्भावेच-सविशेषश्रुतिषु जाग्रतीषु निर्विशेषश्रुत्यापि निर्विशेषासिद्धिप्रसंगात् । ( अन्ततइति ) परिहारान्तरस्यापि कथनात्पौनरुक्त्यं । अविपर्यस्तत्वमसिद्धमित्याह ( बोधेति ) मिथ्यात्वं विषयतो ग्राह्यं ( स्थलान्तरेष्विति ) शास्त्रप्राबल्यनिरूपणभाष्ये -"अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् " इति । अत्रेदमनुसन्धेयम् । किन्तत्प्रामाण्यं यद्वेदे प्रसाध्यते बाह्यागमेषु निषिध्यतेच । नतावदबाधितार्थकत्वरूपं तत्त्वावेदकत्वं, वेदे पूर्वभागे तदभावात् । ननु यस्य यादृशं रूपं तदावेदकत्वमेव तत्त्वावेदकत्वं, ब्रह्मणश्च कल्पितं द्वैतरूपं अद्वैतरूपंचास्ति; तदुभयं सविशेषनिर्विशेषवाक्यैः प्रतिपाद्यते, यागादेश्च स्वर्गसाधनत्वं रूपमिति पूर्वभागे तदावेदकत**

था प्रामाण्यं, क्षणिकत्वादित्वतद्रूपमेव बाह्यागमेनावेद्यतइति न तस्य - प्रामाण्यमितिचेन्न; वेदस्याप्रमाणतया सर्वसम्प्रतिपन्न शुक्तिरजतवाक्य तुल्यत्वप्रसंगात । नच शुक्तिरजतवाक्यमपि प्रमाणमेव ? तद्वाक्यस्या प्रमाणतया सर्वसम्प्रतिपत्तेः । प्रमाणविरुद्धार्थकल्पना साहसम- धिरूढ़ेनापि त्वया तदप्रामाण्यरक्षार्थं सत्तात्रैविध्यं कल्प्यते , तद्भंगमंगीकुर्वतापि तदप्रामाण्यरक्षार्थं भूयसीवैध्याकुल्यनुभूय - ते, तदर्थमेव यथार्थख्यातिवादिभिरख्यातिसंवलनमिष्यते । परोक्षेप्यनिर्व चनीयोत्पत्तिपक्षे बाह्यागमेपि प्रामाण्यप्रसंगश्च । तदनंगीकारेपि किं - यस्य यद्रूपं वस्तुतस्तद्रूतस्य तस्य रूपस्य प्रतिपादकत्वं विवक्षितं, किंवा तस्य तस्मिन् प्रतिपादनं, आद्ये चैत्यवन्दनादि वाक्यस्यापि- वस्तुतो यागादिगतस्वर्गसाधनतादि बोधकत्वात् प्रामाण्यप्रसंगः ; द्वितीये अद्वैतवाक्यानां प्रामाण्यं नस्यात् , तस्य तस्मिन् बोधनमित्य स्य तत्प्रकारक तद्विशेष्यकत्व पर्यवसानात । एतेन तद्वति तत्प्रकारक त्वमपि निरस्तम् , अद्वैतवाक्ये तदसिद्धेः । ननु अबाधितार्थकत्वमेकं प्रामाण्यं, तदद्वैतवाक्ये; तद्वति तत्प्रकारकत्वमपरं, तद्वैतवाक्यइतिचेत् ? किं वेदप्रामाण्येसिद्धे तदुपजीवनेन प्रामाण्यभेदः कल्प्यते, उतासि- द्धे, आद्ये किन्तत्प्रामाण्यं अबाधितार्थकत्वं तद्वति तत्प्रकारकत्वंवा? आद्ये भेदवाक्यसाधारण्येन तत्कल्पनात्तद्वति तत्प्रकारकत्व प्रामाण्यकल्प- नानुपपत्तिः । द्वितीये अद्वैतवाक्यसाधारण्या दबाधितार्थकत्व प्रामाण्यक ल्पनानुपपत्तिः । नापि व्यधिकरणप्रकारकत्वाभावः, तस्य वेदे सिद्धौ त- द्व्यतिरिक्त प्रामाण्यकल्पने प्रयोजनाभावात् । किंचाबाधितार्थकत्वं प- रित्यज्य शुक्तिरजतवाक्यसाधारणं व्यधिकरणाप्रकारकत्वं कथमिव पूर्वं वेदे प्रामाण्यतया कल्प्येत । एतेन प्रातिभासिकार्थकान्यत्व विशे षित मिदमेव प्रामाण्यमिति निरस्तं, एतस्य प्रामाण्यत्वे प्रामाण्यभेद कल्पने मानाभावात् । किंच प्रातिभासिकान्येति विशेषणंच व्यर्थं । व्यधिकरणप्रकारकत्वाभावे सत्यपि बाधितार्थकत्वेन शुक्तिरजतज्ञान- स्याप्रामाण्या तद्वारणात्सार्थकमिति चेत् ; तथासति व्यधिकरणप्रका रकत्वाभावे बाधितार्थकत्वा दप्रामाण्ये ऽबाधितार्थकत्वमेव प्रामाण्यम् ।

ननु प्रमाणपदमुख्यार्थजनकत्वं प्राग्वेदे साध्यते, अनन्तरंच द्वैताद्वैतश्रुत्यनुसारा द्वेधाप्रमाशब्दार्थनिर्णयः क्रियते इति चेत्; नहीयं वैधीकल्पना, येन कल्पनाक्रमनियमस्सिध्येत; किन्तु न्यायाधीना, ततश्च अं निर्वचनीयसिद्धौ तद्भिन्नव्यावृत्तमबाधितार्थकत्वं तद्व्याप्यधर्मोवा कश्चित्प्रमापदप्रवृत्तिनिमित्तमिति कल्प्येत, तदसिद्धौ तद्वति तत्प्रकारकत्वं तद्व्याप्यधर्मोवा कल्प्येत। किंचैवं वेदाधीने प्रमापदार्थावधारणे लौकिकानां प्रमापदव्युत्पत्त्यभावप्रसंगः। अपिच अपौरुषेयत्व स्वतः प्रामाण्याभ्यां हि वेदप्रामाण्यसिद्धिः, तत्रापौरुषेयत्वं भ्रमप्रमादविप्रलिप्साकरणापाटव मूलत्वसम्भावना निरसनमुखेन प्रामाण्यं साधयति, तत्र-भ्रमप्रमादादीना मयाथार्थ्यहेतुत्वनिर्णयपूर्वकं अपौरुषेयत्वेन निर्णीयमानं प्रामाण्यं याथार्थ्यमेव स्यात्, ननु प्रमापदमुख्यार्थजनकत्वमात्रं; प्रामाण्यस्य स्वतस्त्वंच तद्योग्यतत्स्वरूपविशेषनिर्धारण पूर्वकमेवनिर्णीयतेतेन प्रमापदार्थनिर्णयो वेदापेक्षः। अपिच तथा कल्पनायामपि कल्प्यमानं तच्छुक्तिरजतवाक्यव्यावृत्तमेव कल्प्येत, तथाच कथं तद्विरोधात् तत्साधारणं तद्वति तत्प्रकारकत्वं प्रामाण्यमिति कल्प्यते। एतेन स्वरूपार्थगोचरत्वं प्रामाण्यमिति निरस्तं, शुक्तिरजतवाक्यसाधारण्यात।

नच-प्रातिभासिकान्यत्वविशेषणं युक्तं, स्वरूपार्थकत्वे सत्यपि तत्र बाधात्। प्रामाण्याभावे भेदवाक्यानां कथं प्रामाण्यसिद्धिः? ब्रह्मप्रमान्येना बाध्यविषयत्वात प्रामाण्यमितिचेन्न; शुक्तिरजतवाक्यस्य घटज्ञानाबाध्यविषयकत्वात् प्रामाण्यप्रसंगात्। शुक्तिरूपाधिष्ठानतत्त्वज्ञानेन बाध्यत एव रजतं, ततएवा प्रामाण्यमिति, अन्येन बाधो न तन्त्रमिति चेत्; तर्हि द्वैतवाक्यस्यापि तदर्थाधिष्ठान ब्रह्मज्ञानेन बाधोऽस्तीति कथं नाप्रामाण्यम्। किन्च किं बाधोनिवृत्तिः, उतसाध्याभाव प्रमा। आद्येबाह्यागमस्यापि प्रामाण्यप्रसंगः, तदर्थस्य विशेषणविशेष्यसंसर्गात्मकत्वस्य ब्रह्मज्ञानेनैव निवृत्तेः। नद्वितीयः, ब्रह्मप्रमान्येन प्रपञ्चोमिथ्येति ज्ञानेन प्रतीयमानाभाव प्रतियोगिविषयत्वात द्वैतवाक्यानाम प्रामाण्यापत्तेः। ननु वेदप्रामाण्यसमर्थनदशायामेव द्विविधं प्रामाण्यं द्वैताद्वैतवाक्यपर्यालोचनया कल्प्यत इति चेन्न;

एकस्यैव प्रामाण्यस्य लोकसिद्धतया तस्यैव वेदेकल्पनीयत्वात । अन्यदपि किञ्चित् यदिप्रामाण्यमिति त्वयाव्यपदिश्यते कामंघटोऽपि तथाव्यपदिश्यतां, न संकेतं वयंवारयामः ! नद्वितीयः; कल्पकाभावात, भेदविधिनिषेधाभ्यांहि तत्कल्पनं, प्रामाण्यस्यैवासिद्धौ कथं वेदमूलाकल्पना । ननु युक्तिभिः प्रपञ्चमिथ्यात्वे सिद्धेव्यवहारानुरोधात् तद्वति तत्प्रकारकत्वं प्रामाण्यमिति कल्प्यते, निरधिष्ठान भ्रमायोगेन अधिष्ठानेसिद्धे तस्याप्यधिष्ठानान्तरकल्पनायां मनवस्थाप्रसंगेन तस्याबाध्यत्वे तत्प्रतिपादकस्या बाध्यार्थकत्वेचसिद्धे तस्य तदेव प्रामाण्यमितिकल्प्यतइतिचेन्न; मिथ्यार्थस्योपपत्ति सापेक्षत्वाभावस्य युष्माभिरेवाभिधानात्, अनधिष्ठानानवस्थयोरदोषत्वात । अन्योन्याध्यासेऽपि नक्षतिः । श्रुतेरपि प्राप्तार्थतया अनुवादकत्वप्रसङ्गश्च । नचज्ञानानन्दात्मकत्वं न्यायेनासिद्धं श्रुत्याबोध्यत इति वाच्यम् ; मिथ्यावस्तुनोदृश्यधीनसिद्धितया अधिष्ठानातिरिक्त दृश्यङ्गीकारेऽधिष्ठानस्यापि दृश्यत्वान्मिथ्यात्वप्रसङ्गेन तस्यैव दृशित्वसिद्धेस्स्वप्रकाशत्वस्यापि तत एव सिद्धेः; ज्ञानातिरेकेण ज्ञातुर्निरासात् तस्यैवात्मतया निरुपाधिप्रेमास्पदत्वेन आनन्दरूपतायां अपि सिद्धेः । अधिष्ठानान्निवर्तकाभावाच्च त्रिविधपरिच्छेदाभावसिद्धेश्च । अथैवं कल्प्येत, तद्वति तत्प्रकारकत्वं प्रामाण्यं, तदभाववति तत्प्रकारकत्वमप्रामाण्यं, शुक्तिरजतवाक्यन्तु प्रमाणमेव, अद्वैतवाक्यन्तु न प्रमाणं नाप्यप्रमाणं, किन्तूभयविलक्षणं, तत्रप्रमाणव्यपदेशोऽप्रामाण्याभावमात्रेणगौणः, बाह्यागमस्तु अतद्वतितत्प्रकारकएव, अतस्सिद्धः प्रमाणाप्रमाणनिष्कर्ष इति; एवंहि शुक्तिरजतवाक्यं प्रमाणं, वेदान्तवाक्य मप्रमाणमिति साधुसमर्थितः प्रमाणाप्रमाणविभागः । अपिच बाह्यागमः प्रमाजनकान्यत्वाद्वा भ्रमजनकत्वाद्वा अप्रमाणमिति वाच्यम्, अन्यथा तत्राप्रमाणव्यपदेशस्य पारिभाषिकत्व प्रसंगात, एवंच सति आद्ये अद्वैतवाक्यानां बाह्यागमवत अप्रामाण्यमनिवार्यम् । द्वितीये त्वन्मते प्रपञ्चज्ञानस्य भ्रमरूपत्वात् भेदवाक्यादीनामप्रामाण्यं । ततश्च तद्वति तत्प्रकारकत्वं न प्रामाण्यं तदभाववति तत्प्रकारकत्वमपि नाप्रामाण्यं ।

ननु भ्रमजनकत्वादेव बाह्यागमोऽप्रमाणमित्युच्यते, भ्रमश्च तदभाववति तत्प्रकारकः, प्रपञ्चज्ञानं शुक्तिरजतज्ञानञ्च न भ्रमः, तत्र तद्व्यपदेशो बाधसाम्यादौपचारिकः । नचैवंसति प्रामाण्यस्य स्वतस्त्वभंगप्रसंगः, ज्ञानमात्रसामग्रीप्रयोज्यत्वंहि स्वतस्त्वं, अद्वैतवाक्यस्यापि ज्ञानसामग्री त्वात् तज्जन्यज्ञाने प्रामाण्याभावाश्चेति वाच्यम् ; सविशेषणोचर ज्ञान सामग्रीग्राह्यत्वस्यैव स्वतस्त्वरूपत्वात । युक्तंचैतत् , तत्रैव प्रामाण्याप्रामाण्ययोः प्रसंगात् । मात्रपदञ्च कात्स्न्र्यपरं, अपितु प्रयोजकान्तरव्यवच्छेदकं, एवंच प्रामाण्यस्य स्वाश्रयज्ञानसामग्र्यतिरिक्त प्रयोजकानपेक्षणान्न स्वतस्त्वविरोधः । किञ्च कार्यतानवच्छेदकत्वमेव प्रामाण्यस्यस्वतस्त्वं, अप्रामाण्यस्यपरतस्त्वञ्च कार्यतावच्छेदकोटिप्रवेशः, तद्यथा शाब्द-भ्रमत्वस्य योग्यभ्रमजन्यतावच्छेदकत्वे । अद्वैतवाक्यस्य प्रमाजनकत्वाभावेपि न प्रामाण्यस्य कार्यतावच्छेदकत्वप्रसंगः । नच प्रपंचज्ञानस्य शुक्ति रजतज्ञानस्यच भ्रमत्वाभावे दोषजन्यत्वाभावप्रसंगः, बाधितार्थकत्वादेव तदुपपत्तेः । नचैवं सति दोषस्याप्रामाण्यप्रयोजकत्वं न स्यात्; दोषे सत्यप्य प्रामाण्यादर्शनादिति वाच्यम् ; अविद्यारूपदोषस्या प्रामाण्यप्रयोजकत्वा भावात् , परसम्प्रतिपन्नयोग्यताभ्रमादीनामेव तथात्वात् : अविद्याया दोषत्वं चार्थाभासोत्पादकत्वात् इति ।

मैवं - प्रपंचज्ञानस्य भ्रमत्वाभावे " भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः " इत्यादिविरोधात् , भ्रान्तिशब्दस्योपचरितार्थत्वे भेदवादिनां विजयशङ्खोध्मायेत । किंच बाह्यागमस्यापि प्रामाण्यमेव स्यात् , प्रातिभासिकविषयत्वात् । परोक्षे प्रातिभासिकं नास्त्येव, तत्रान्यथाख्यातेरेवांगीकारादिति चेन्न; अनिर्वचनीयासिद्धिप्रसङ्गात्, ख्यातिबाधाभ्यां हि तत्सिद्धिः, तयोः परोक्षे प्यविशेषे तत्र कथं ताभ्यां न तत्सिद्धिः । सन्निकर्षाभावेनापरोक्षेऽन्यथाख्याते रसम्भवादेव तत्रानिर्वचनीयसिद्धिरिति चेन्न ; तथापि शुक्तिरजतापरोक्ष्याभावप्रसंगात , साक्षिभावत्वस्यांगीकारात् साक्षिणश्चानादित्वान्न सन्नि कर्षापेक्षेति चेन्न; घटादिज्ञानइवचैतन्य स्फोरकाविद्यावृत्ते रिदमाकारान्तः करणवृत्तेर्वा सन्निकर्षापेक्षत्वात् । ननु तद्विषयणीवृत्ति स्तत्सन्निकर्षजन्या; इदमाकारवृत्ते रिदमर्थभूत शुक्तिसन्निकर्षएवापेक्षितः

ननु रजतसन्निकर्षइति चेन्न; तत्प्रकाशकचैतन्य प्रतिफलनप्रयोजकत्वातिरिक्त विषयताया मानाभावात् । ननु घटं जानामीत्यनुभूयमाना विषयतातद्गतैवेति चेत् ; तर्हि शुक्तिरजतज्ञाने रजतं जानामीत्यनुभूयमाना विषयतापि वृत्तिगतैव स्यात् । किंचैवंसतिविषतयानुभूयमान वस्तुनएव व्यवहारहेतुत्वावगमात् वृत्तेरेव व्यवहारहेतुत्वे संविदो - निर्विषयत्वव्यवहारा हेतुत्वयोरापत्ते स्साजडैव स्यात् । किंच तस्या वृत्तिविषयत्वे तदेव दृश्यत्वमिति तस्या मित्थ्यात्वमनिवार्यं, तदविषयत्वे च मानाभावादसिद्धिः । अतस्सन्निकर्षाभावा दन्यथाख्यात्यसम्भवो दुर्वचः । ततश्च ख्यातिबाधाभ्या मेवानिर्वचनीयसिद्धिः । तौचपरोक्षेपीति कथन्तत्रनानिर्वचनीयम् । किंचदेवदत्तस्येदमाकारवृत्तिदशायां यज्ञदत्तस्यापि तादृशवृत्त्युत्पत्तौ इदमवच्छिन्न-चैतन्यस्य देवदत्तायज्ञदत्ता चैतन्याभ्यामभेदात् तच्चैतन्याभेदेनोत्पन्नं-रजतं देवदत्तस्यैव भासतइत्ययं नियमो नोपपद्यते , यज्ञदत्तस्यापि प्रसंगात् । अतो रजतवृत्तिरपि रजतविषयेत्यंगीकृत्य तत्प्रमातृसम्बन्धि तदर्थविषयकवृत्ति प्रयुक्तविषयचैतन्याभेदस्यैव तदीयताप्रयोजकत्वात , दुष्टेन्द्रियतया देवदत्तस्यैव रजतविषयकवृत्त्युत्पत्तेः यज्ञदत्तस्याभावाच्च देवदत्तस्यैव रजताभासो न यज्ञदत्तस्येतिवाच्यम् ; अतो - रजतविषयवृत्तेरावश्यकत्वात् सन्निकर्षापेक्षात्वत्पक्षेपि दुर्निवारा । यद्यपीयं कल्पना परैर्नकृता तदीयबहुग्रन्थविरुद्धाच्च, तथापि सर्वतो गतिनिरोधे परेषा मियमेव गतिरिति सापि विरुद्धेति मन्तव्यमिति ॥

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचिता यां शतदूषणीव्याख्यायां चण्डमारुताख्यायां वेदप्रामाण्यनिरासो नाम चतुर्दशस्कन्धः ।

श्रीः ।

श्रीमतेरामानुजायनमः ।

श्रीमतेनिगमान्तमहादेशिकायनमः ।

# अथ पंचदशस्कन्धः ।

अबाधादध्यक्ष प्रभृतिमितिवर्गेष्ववधृतं
शरीरं यस्येदं जगदखिलमन्तर्यमयितु. ।
सने तर्कैरेतैर्निज विमतलुण्टाक मथनैः
प्रसीदत्वासीदन्निगमशतसीमा हयमुख ॥

( अबाधादिति ) मितिवर्गेष्ववबाधात जगदखिलं यस्य शरीरमवधृतमित्यन्वयः, मितिविषयाणामवाधित विषयत्वादित्यर्थः । प्रत्यक्षादीनामवाधितविषयतया प्रपंचस्य सत्यत्वादेवहि लोके सिद्धं नियाम्यत्वाद्यात्मकं शरीरत्वं कृत्स्नस्य श्रूयमाणमुपपद्यते, अन्यथा ब्रह्मव्यतिरिक्तस्य मिथ्यात्वे जीवब्रह्मभेदस्यापि मिथ्यात्वेन जीवस्य ब्रह्माभिन्नतया शरीरत्वासम्भवात " यस्यात्माशरीर" मित्येतद्व्याहन्येत । नच शिलापुत्रकस्य शरीरमितिव निर्वाहः, " यस्य पृथिवीशरीर" मित्यादिना वैरूप्य प्रसंगादिति भावः । नन्वाध्यासिकभेदान्नियमन मुपपद्यतइति चेत ? किमयं बिम्बप्रतिबिम्बभावनिबन्धनः, उतचन्द्रद्वित्वादिव दौपाधिकः, उत घटाकाशवदौपाधिकः । पक्षत्रयेऽपि नब्रह्मणो जीवान्तः प्रवेशसम्भवः; नहि बिम्बस्य प्रतिबिम्बेनुप्रवेशः क्वचिदुपलब्धः, चन्द्रस्य वा चन्द्रे-घटाकाशस्य वा घटाकाशान्तरे । तथा नियमनमप्यनुपपन्नं, स्वरूपात्मकस्य स्वाभाविकाभेदस्य नित्यं प्रकाशमानत्वात् । नन्वभेदे भासमानेपि न नियमनानुपपत्ति , स्वप्रयत्नेन व्यापारोत्पादनरूपस्य नियमनस्य-स्वस्मिन्नपि सम्भवात , इति चेन्न; यत्नस्य यत्नान्तराधीनत्वप्रसंगेन अनवस्थानात आत्मनि यत्नातिरेकेण व्यापारान्तरासिद्धेः । किंच भेदाध्या

यदेतत्सन्मात्रग्राहि प्रत्यक्षदूषणान्तेभाष्यम् "सन्मात्रब्रह्मणः प्रमेयभावश्च, ततोजडत्व नाशित्वादयस्त्वयैवोक्ताः "इति । अनेनपश्यतोहराणां दृश्यत्वानुमानस्यानैकान्तिकत्वमपि सूचितं । उत्तरत्रापि क्वचित्परमतव्याघातप्रसंगं प्रायुङ्क्त-"ब्रह्ममिथ्या ज्ञानविषयत्वात् ", इति । सांख्याधिकरणेच व्याघातमसूचयत्- "दृश्यत्वबाध्यत्वाभ्युपगमा त्सुतरामसंगतम् "

---

सेपि नियन्तृनियाम्ययोर्वयो व्यवस्थाकुतः । कुतस्तर्हि चन्द्रभेदाध्यासे दक्षिणोत्तरत्वव्यवस्था ? न कथंचित् , अयं दक्षिणश्चन्द्रः अयमुत्तरश्चन्द्रइतिव्यवहारस्तु तदवधिकदक्षिणत्वस्य तदवधिकोत्तरत्वस्यच तत्रैव दोषविशेषेणारोपात । नहि प्रतीतिमात्रेण व्यवस्थासिध्यति । अनिर्वचनीयोत्पत्तिपक्षेऽपि भेदस्य दक्षिणोत्तरत्वयोश्च एकत्रोत्पत्तौ कथं व्यवस्था । ननुभिन्नाधिकरणत्वं हि व्यवस्था, अनिर्वचनीयभेदोत्पत्तौ साकथं नस्यादितिचेत्तर्हि दक्षिणत्वशुक्लभास्वरत्वयो रपि व्यवस्थाप्रसंगः, अतस्तदधिकरणानधिकरणत्वं व्यवस्थेति त्वया वाच्यम् , अतो न दक्षिणोत्तरव्यवस्था । तदधिकरणानधिकरणत्वस्य तत्राध्यासाद्व्यवस्थोपपद्यत इति चेन्न; उत्तरत्वे चन्द्रप्रतियोगिक दक्षिणत्वाधिकरणाधिकरणत्वे प्रातिभासिके विद्यमाने तदभावस्य तत्र प्रातिभासिकस्यासम्भवात् । किञ्चेश्वरस्य सर्वज्ञतया काल्पनिकत्वं भेदस्यजानतः कथं नियमनं ; नहि काल्पनिकत्वेन ज्ञातं कार्यकरं, तथासति काल्पनिकतयाज्ञातपीतभ्रमतः पीतार्थिनः शंखे प्रवृत्त्यापत्तेः । एतैः-वक्ष्यमाणैः । नन्वेतच्छ्रुत्यनुसारे अद्वैतश्रुतीनां भूयसीवैयर्थ्याकुलीस्यात् इत्याशंक्य तासामपि विशिष्टाद्वैतएव तात्पर्यमित्यभिप्रायेणाह ( आसीदिति ) आसीदित्यनेनस्वारस्यं सूच्यते । शतपदेन कृत्स्नस्वारस्यं, पक्षान्तरे बहु स्वारस्यंच व्यज्यते । सीमा-पर्यवसान भूमिः । "जडत्वनाशित्वा दय" इत्यादिशब्देन मिथ्यात्वं गृह्यते । तत्र मिथ्यात्वापादनेन तदभावसम्प्रतिपत्तिद्योतनात् । "अनैकान्त्यं सूचितम् " प्रसंगाभिप्रायत्वात प्रयोगस्येति भावः (सांख्येति ) "अपारमार्थिकत्वेतु दृश्यत्वं बाध्यत्वाभ्युपगमात् सुतरामसंगत"

इति । योगाचारोक्तसंवेदन हेतुनिरासेनचेदमपि निरस्तं भाविष्यती त्यमंस्त । तदिहवयं विस्तृणीमहे । विगीतं मिथ्या दृश्यत्वात् , यद्यदित्थं तत्तथा, यथाशुक्तिरजतमित्यादि । तत्र किमिदं मिथ्यात्वमभिप्रेतं? कितुच्छत्वं, उतान्यथाख्यातिविषयत्वं, उतसदसद्विलक्षणत्वं, अथप्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं बाध्यत्वं, अथवा स्वात्यन्ताभाव समानाधिकरणतया प्रतीयमानत्वं , यद्वा सत्यब्रह्मविलक्षणत्वम् , यद्वान्यदेव किंचिदिति । नाद्यः, प्रतीतिविरोधादपसिद्धान्ताच्च । अतएव न द्वितीयः, मिथ्यात्वाध्यासादिविषयतया सिद्धसाधनत्वाच्च : शुक्त्यादिरेवहि रजताद्यात्मनान्यथाख्याते विषयइत्यभ्युपगम्यते ;

---

मिति भाष्यम् । अत्राचार्याः, यद्विद्याविरोधि तदेव तत्साक्षीति वचनमसंगतमित्यर्थइति । तेन दृग्बाध्यत्वंहि मिथ्यात्वं, तद्दृगधीनसिद्धिकस्य नसंभवतीति हेतुसाध्ययोर्व्याघातस्सूचितः । चैतन्यं स्वरूपतः साधकमपरोक्षवृत्त्यवच्छिन्नं निवर्तकमित्यादि निरासस्तु निवर्तकानुपपत्तौ द्रष्टव्यः ( योगाचारेति)जागरितप्रत्ययो निरालम्बनः संवेदनत्वात् स्वाप्नप्रत्ययवदिति बौद्धानुमानं " वैधर्म्याच्च न स्वप्नादिवत " इति सूत्रभाष्ये भगवता दूषितम् । मायिना प्रपंचो मिथ्या दृग्विषयत्वात् शुक्तिरतस्वाप्नाद्यर्थादिवदित्युक्तं , एवंच ज्ञानत्वेन मिथ्याविषयकत्वसाधनस्य ज्ञानविषयत्वेन मिथ्यात्वसाधनस्यचाविशेषात् ज्ञानत्वहेतुदूषणान्येव तद्विषयत्वहेतोरपि भवन्तीत्यर्थः ( यद्वेति ) सत्यं यद्ब्रह्म तद्विलक्षण मित्यर्थः । ब्रह्मविलक्षणत्वमेवात्रकोटिः । ब्रह्मणएव सत्यत्वात तद्वैलक्षण्ये साधिते मिथ्यात्वं पर्यवस्यतीत्याशयेन सत्यपदोपादानम् । (प्रतीतिविरोधादिति) असच्चेन्नप्रतीयेतेति तैरेवाभिधानादिति भावः । अतएव-अपसिद्धान्तादित्यर्थः । मिथ्यात्वादीत्यादिशब्दः क्षणिकत्वपरः । अध्यासादीत्यादिशब्दः शुक्तिरजतादिलौकिकाध्यासपरः, तत्रापि तद्देश तद्धर्मादेरपि विषयत्वात् । अत्रच मिथ्यात्वं घटसमानाधिकरणात्यन्ताभाव प्रतियोगित्वादिकं विवक्षितम् । मिथ्यात्वाध्यासस्य मिथ्यात्वमेव विषयः, प्रपंचस्तु कथमित्यपेक्षायामाह ( शुक्त्यादिरिति ) ननु -

अथारोपितत्वेन विषयत्वमिष्येत , तथापि सिद्धसाधनता , सर्वस्यापि वस्तुनो यत्र क्वचिद्येनकेनचिदारोप्यमाणत्वात् । न तृतीयः, परं प्रत्यप्रसिद्धविशेषणत्वात् ; अर्थापत्तिप्रसिद्धं तदिति चेन्न, तस्याः स्वावसरे दूषयिष्यमाणत्वात् । न चतुर्थः, तद्धि बाध्यत्वं बाध्यमबाध्यंवा ; पूर्वत्र सिद्धसाधनत्वं, तस्य प्रपंचसत्यत्वाविरोधित्वात् ।

---

स्वाभाविकाधिकरणे ऽन्यथाख्यातिविषयत्वं विवक्षितमित्याशंकते ( अथेति ) ( अर्थापत्तीति) ख्यातिबाधान्यथानुपपत्त्या शुक्तिरजतेप्रसिद्धमित्यर्थः । (तद्धि बाध्यत्वमित्यादि) मिथ्यात्वस्य मिथ्यात्वे मिथ्याभूतस्य शङ्खारोपितपीतिम्नः श्वैत्येनेव पारमार्थिकसत्यत्वेना विरोधात् अर्थान्तरमित्यर्थः, नतु यथाश्रुतसिद्धसाधनमेव विवक्षितं, असम्भवात् । न तावत्प्रतिपन्नाधिकरणे निषेधप्रतियोगित्वमात्रेऽयंदोषः, विकल्पवैयर्थ्यात ; अबाध्यत्वकोटौसिद्धसाधनत्वेनाविकल्प्यापि सिद्धसाधनदानसम्भवात ; नच प्रतिपन्नाधिकरणे सर्वत्रेति विवक्षाया मयं दोषः, तादृशबाध्यत्वस्य प्रपञ्चे ऽभावात बाध्यत्वकोटावपि सिद्धसाधनासम्भवात् ; नच बाध्यत्वकोटौ मिथ्यात्वाभावसिद्धेर्नायं दोषः, अधिकरणपदेनाधिष्ठान विवक्षायां प्रपंचस्य तन्मिथ्यात्वस्यच चैतन्यनिष्ठाभाव प्रतियोगित्वेपि प्रपंचे मिथ्यात्वाभावासिद्ध्यासिद्धसाधनाभावात ; आश्रयमात्रविवक्षायां मिथ्यात्वस्य प्रपंचनिष्ठाभाव प्रतियोगित्वेऽपि स्वाधिकरणांशेन प्रपंचस्य मिथ्यात्वस्यापि सिद्धेः, तादृशमिथ्यात्वाभावस्य स्वानिष्टत्वात् । किंच मिथ्यात्वाभावसिद्धौहि सिद्धसाधनशंकापि, अत्रच वस्तुतो मिथ्यात्वस्य मिथ्यात्वेपि तेनरूपेण मिथ्यात्वस्या साध्यत्वात् सिद्धसाधनासम्भवात्; अतोर्थान्तरमेव । एतदभिप्रेत्यैवोक्तं "सत्यत्वाविरोधित्वा"दिति । ननु वियदादिसमान सत्ताकमिथ्यात्वं साध्यं, तथाच प्रपंचस्य तन्मिथ्यात्वस्यच्च पारमार्थ्यस्य विरुद्धत्वात् तस्य धर्मिसमसत्ताकत्वस्य धर्मधर्मिणोर्द्वयोरप्यपारमार्थ्यं विना असंभवान्नार्थान्तरमितिचेन्न; मिथ्यात्वस्य कल्पितत्वे तस्यापारमार्थ्यविरोधितया तदवश्यम्भावे सति धर्मिसमसत्वस्यैवासम्भवात् । अथस्यात्

घटे घटत्वविरोधिधर्मराहित्ये घटत्वस्याकल्पितत्वं न प्रयोजकंकल्पयितुं-युक्तं, तस्य विप्रतिपन्नत्वात् , किन्तूभयाभिमतं धर्मिसमसत्वमेव, एवंच प्रपंचमिथ्यात्वस्य धर्मिसमसत्वसाधनात् तद्विरोधिनः पारमार्थ्यस्य राहित्य स्यादेवेति; तन्न, एवंसति घटत्ववति प्रातिभासिकस्य घटत्वाभावस्य विरहप्रसंगात् । ननु यावद्विरोधिधर्मराहित्ये नेदं प्रयोजकम् , किन्तु विरोधिधर्मस्य राहित्य मात्रे, तथाच व्यावहारिक घटत्वराहित्य प्रयोजकत्वान्नान्वयव्यभिचारइति चेत्तर्हि शुक्तौरजतस्य प्रातिभासिकेन रजताभावेन विरोधाद्व्यतिरेकव्यभिचारः । एतेन धर्मिसम सत्ताकत्वं तद्धर्मसमानसत्ताक विरोधिधर्मराहित्ये प्रयोजकमिति निरस्तम् । किंच तत्स्वरूपमेव तत्समानसत्ताकविरोधिधर्मराहित्ये प्रयोजकमिति कल्पना युक्ता, लाघवात ; तथाच पारमार्थिकत्वस्य कल्पितमिथ्यात्वसमानसत्ताकत्वाभावाद्विरोध्यभावेन तस्यावश्यकत्वाद्धर्मिसमसत्त्वासम्भवएव । यदिच प्रातिभासिकस्य घटाभावस्य भिन्नसत्ताकत्वात् घटेन विरोधएव नास्तीत्युच्येत, तर्हि पारमार्थिकेन सत्त्वेन मिथ्यात्वस्य समसत्ताकत्वाभावान्न विरोधइति तुल्यम् । ननु व्यावहारिकसमानत्वमादाय समानसत्ताकत्वसिद्ध्या न पूर्वोक्तधर्मिसमसत्त्वासम्भवइति चेन्न; पारमार्थिकसत्वे विद्यमाने व्यावहारिकसत्वस्यासम्भवात् । ननु मिथ्यात्वस्य कल्पितत्वादस्तुप्रपंचे तदभावः , तथापि तदभावमात्रं न पारमार्थ्यं, किन्तु मिथ्यात्वासमानाधिकरण मिथ्यात्वाभावः । प्रपंचेच मिथ्यात्वाभावो मिथ्यात्वसमानाधिकरणइति चेन्न, प्रपंचगतमिथ्यात्वाभावे मिथ्यात्वसामानाधिकरण्य तदभावयोस्सत्त्वात् , प्रपंचस्थमिथ्यात्वासमानाधिकरण तदभावस्यसत्त्वात् । ननु मिथ्यात्वाभावनिष्ठ मिथ्यात्वसामानाधिकरण्याभावावच्छेदकत्वेसति मिथ्यात्वाभाववत्त्वं पारमार्थिकत्वं, मिथ्यात्वस्य ब्रह्मावृत्तितया तदवच्छेदेन मिथ्यात्वसामानाधिकरण्याभावेन ब्रह्मणोमिथ्यात्व सामानाधिकरण्याभावावच्छेदकत्वात तत्पारमार्थिकं; प्रपंचस्यतु मिथ्यात्ववत्तया मिथ्यात्वाभावस्य तदवच्छेदेन मिथ्यात्वसामानाधिकरण्यस्यैव सत्त्वेनसामानाधिकरण्याभावस्य तदवच्छेदेनासम्भवान्नासौ परमार्थइतिचेन्न; मिथ्यात्व सामानाधिकरण्यस्य-

मिथ्यात्वेन तदभावस्य प्रपंचावच्छेदेनापिसत्त्वात् । ननुमिथ्यात्वाभावस्य प्रपंचावच्छेदेन यन्मिथ्यात्वसामानाधिकरण्यं तत्समसत्ताकस्तद्विरोधेन तदभावोब्रह्मावच्छेदेन वक्तव्यः, अन्यथाब्रह्मावच्छेदेनापितस्य मिथ्यात्वसामानाधिकरण्य प्रसंगात् , प्रतियोगितदभावयो विरोधिनोरन्यतराभावेऽन्यतरस्य सत्त्वनियमात् ; तथाच मिथ्यात्वसामानाधिकरण्य समसत्ताक मिथ्यात्व सामानाधिकरण्याभावावच्छेदकमिथ्यात्वाभावाधिकरणत्वं पारमार्थिकत्वं । प्रपंचावच्छेदेनापि यद्यपिमिथ्यात्वाभावस्य मिथ्यात्वसामानाधिकरण्याभाव स्तथापि नायं सामानाधिकरण्य समसत्ताक इति न प्रपंचः परमार्थः, ब्रह्मावच्छेदेन सामानाधिकरण्याभाव स्तथैवेति ब्रह्मपरमार्थ इति चेन्न; समसत्ताकभावाभावयोरन्यतराभावेऽन्यतरसत्त्वनियमस्य तवासिद्धेः, घटेघटतदभावयोर्द्वयोरप्यवृत्तेः । किंचमोक्षे अविद्याया असत्त्वेऽपि तत्समानसत्ताकाभावा प्रसिद्धेर्व्यभिचारः । नचव्यवहारदशाया मयंनियमः, अप्रयोजकत्वात । अविशेषित एव ह्ययं नियमः औपपत्तिकः, नियमविरोधि शंकाया एव अनुत्थानात् । भावाभावयोर्विरोधिनोरेकस्यासत्त्वे इतरसत्त्वनियमः कुतः ? उभयमपिमाभूदिति नाशंका, उभयाभावोऽप्यन्यतरप्रतियोगिकएवेति ननियमविरोधः; तस्माद्विशेषितनियमएवाप्रयोजकः । एवंचाविद्यानिवृत्ते ब्रह्मस्वरूपातिरेकपक्षे अविद्यायां स्तत्समसत्ताकाभावस्य चाविद्यानिवृत्तावनंगीकारादपिव्यभिचारः । किंच यद्येतत्पारमार्थिकत्वं तदाप्रपंचेमिथ्यात्वाभावस्य पारमार्थिकत्वंनस्यात् , मिथ्यात्वस्य मिथ्यात्वाभावाभावत्वेन मिथ्यात्वाभावस्य प्रपंचरूपस्वाधिकरणनिष्ठात्यन्ताभाव प्रतियोगित्वस्य सत्त्वात् मिथ्याभावगतस्य मिथ्यात्वाभावस्य मिथ्यात्वसामानाधिकरण्यात् । ननुमिथ्यात्वसामानाधिकरण्यान्यत्वं विवक्षितम् , अत्रचसामानाधिकरण्यात्यन्ताभावे सत्यपि नसामानाधिकरण्यान्योन्याभावः , नच तदत्यन्ताभावे तदवच्छिन्नान्योन्याभावनियमः, अप्रयोजकत्वादितिचेन्न ; प्रतियोगिताभिन्नसत्ताकत्वेनात्यन्ताभावस्यैव प्रतियोगितावच्छेदकाभिन्नसत्ताकतयाऽ

न्योन्याभावस्य विरोधाभावेन तद्व्यावृत्तेरावश्यकत्वात । किञ्च यथा शुक्त्यादौ शुक्तिरजततुल्यस्य मिथ्यात्वस्यारोपेपि तदधिकसत्ताकस्य त दभावस्य सत्त्वाद्व्यावहारिक सत्यत्वम् , तथाप्रपंचेऽपिव्यावहारिकमिथ्यात्वसत्त्वेऽपि तदधिकसत्ताक तदभावस्य सत्त्वात्पारमार्थिकत्वमविरुद्धं । ' ननुस्वसमसत्ताको मिथ्यात्वाभावः पारमार्थिकत्वं, ब्रह्मणिमिथ्यात्वाभावो ब्रह्मसमसत्ताकः, प्रपंचगतस्तुमिथ्यात्वाभावः परमार्थत्वात् धर्मिभिन्नसत्ताक इतिचेन्न ; पारमार्थिकसत्तामेवादाय-धर्मिसमानसत्ताकतावक्तव्या, ततश्च पारमार्थिकत्व घटकीभूतं पारमार्थिकत्वं किं स्वयमेव उतान्यत् । नाद्यः, आत्माश्रयात । नान्त्यः, अनवस्थितेः । एवं प्रपंचगतस्य मिथ्यात्वाभावस्य पारमार्थिकस्य धर्मिसमसत्ताकत्वाभावो धर्मिणः पारमार्थ्याभावात् , तत्त दभावश्च मिथ्यात्वाभावस्य धर्मिसमसत्ताकत्वाभावादिति प्रपंचे पारमार्थ्याभावज्ञाने आत्माश्रयः । एतेन धर्मिसमसत्ताकत्वं धर्मिसमानसत्ताक विरोधि धर्मराहित्ये प्रयोजकं, एवंच मिथ्यात्वाभावस्य पारमार्थिकस्य प्रपंचे सत्त्वेपि नतत्प्रपंच समसत्ताकं, तत्समसत्ताकेन मिथ्यात्वेन विरोधात् , अतः प्रपंचा पारमार्थ्यसिद्धिः; धर्मिसमसत्ताकस्य मिथ्यात्वाभावस्य पारमार्थिकत्वरूपत्वादिति निरस्तम् ;-घटत्वाघटत्वयोर्विरोधस्य लाघवेन परस्परसमानसत्ताकत्वनिबन्धनत्व कल्पनस्यैवोचितत्वात्प्रातिभासिकयोरपि विरोधस्यावश्यकत्वाच्च । वस्तुतस्तु विरोधेभावा भावात्मकत्व मेव प्रयोजकम् , तत्र तद्विरुद्धधर्मराहित्येच तत्र तद्विद्यमानत्वमेव प्रयोजकम् । नचैवं सति प्रपंचमिथ्यात्वस्य मिथ्यात्वेतदभावापादनं नस्यादिति वाच्यम् , प्रपंचेसति ब्रह्मणिप्रपंचाभावस्यायोगात् । किंच घटत्वादावघटत्वादि धर्मविरोधित्वे सत्त्वमात्रं प्रयोजकम् , नतु धर्मिसमसत्त्वमपि तत्र प्रवेश्यं, गौरवात ; तथाच मिथ्यात्वस्य मिथ्यात्वं ब्रह्मणिमिथ्यात्वाभावेन निर्वाह्यम् ; तत्र च मिथ्यात्वकल्पनाया असम्भवात् कल्पितमपि मिथ्यात्वं प्रपंचे नस्यात् । एवं प्रपंचाभावाधिकरणे ब्रह्मणि प्रपंचो नस्यात् । धर्मिसमसत्ताकत्वस्य विरोधिधर्मराहित्ये-

प्रयोजकत्वेऽप्ययं दोषः समानः, अधिष्ठानातिरिक्तत्वे भावस्य तत्सम-सत्ताकत्वात् । अधिष्ठानात्मकत्वेऽपि अधिष्ठानातिरिक्ताभाव कार्यकारित्वात् । अन्यथा ब्रह्मणि प्रपंच. पारमार्थिक एव कुतो नस्यात, ब्रह्मणितादृशप्रपंचविरोधिधर्माभावात् । किञ्च शुक्तिरजतस्य सत्ताया एवाभावात् कुतस्समानसत्ताकत्वं । ननुतथापि प्रातिभासिक-सत्तास्तीतिचेन्न, बाधायोग्यत्वं हिसत्वं, तस्यचाभावे तद्विशेषासम्भवात । ननुबाधमात्रायोग्यत्वं नसामान्यम् ; किंतु बाधनिरूपितायोग्यत्वमात्रम् ; एवंचबाधमात्रायोग्यत्वं पारमार्थिकसत्वं, ब्रह्मज्ञानेतरबाधायोग्यत्वं व्यावहारिकसत्त्व, ब्रह्मस्वाधिष्ठानज्ञानेतरबाधायोग्यत्वं प्रातिभासिकसत्त्वमितिसम्भवत्येवं सत्ताविशेषत्वमेतेषा मितिचेन्न; प्रपंचस्यब्रह्मवत्पारमार्थिकत्वेऽपि शुक्तिज्ञानाबाध्यत्वस्य प्रपंचे तत्र साध्यमिथ्यात्वेच्चा विशिष्टतयार्थान्तरत्वात् । ननूक्तत्रितयान्यतमसत्तया समानसत्ताक मित्थ्यात्वं साध्यमितिचेन्न ; प्रातिभासिकेऽपि रजतेमित्थ्यात्वस्य सम्प्रतिबाधादर्शनेन रजतत्वव-द्व्यावहारिकत्वोपपत्तेः साध्यवैकल्यं । किंच प्रपंचस्यपारमार्थिकत्वेऽपि तस्यब्रह्मज्ञानेतराबाध्यत्वेन मित्थ्यात्वसाम्योपपत्तेरर्थान्तरं । ननुसत्त्वेनहि साम्यंविवक्षितं, ब्रह्मज्ञानेतराबाध्यत्वमात्रं नव्यावहारिकसत्त्वं, ब्रह्मण्यतिप्रसंगात् ; किन्तु ब्रह्मज्ञानबाध्यत्वेसति तदितराबाध्यत्वं, तेनांकारणसाम्प्रसिद्धौ नप्रपंच पारमार्थ्यसंभवइतिचेन्न; ब्रह्मज्ञानबाध्यत्वस्याप्रसिद्धत्वात्, बाध्यत्वमात्रविवक्षायामपि विशिष्टाप्रसिद्धेः, एतादृशसत्त्वपरिकल्पनस्य-प्रपंचमित्थ्यात्वसिद्ध्युत्तरकालीनत्वाच्च, एवं साध्यानिर्देशासम्भवात् । ननु स्वाबाधकाबाध्यत्वं मित्थ्यात्वं समानसत्ताकेत्यादिना विवक्षितमितिचेन्न, अनुदितबाधकस्थलेशुक्तिरजतयोर्द्वयोरपि ब्रह्मज्ञानबाध्यत्वेनशुक्त्यबाधकाबाध्यस्यापि रजतस्य शुक्तितुल्यं रजताभावं प्रत्यव्यावर्तकत्वात्, प्रपंचेऽप्युक्तसाध्यसिद्धावपि प्रपंचतुल्यमित्थ्यात्वाभावाव्यावर्तकत्वेनार्थान्तरत्वात् । किञ्चबाध्यत्वस्य ज्ञाननिवर्त्यत्वरूपत्वे स्वाबाधकाबाध्यत्वं स्वानिवर्तकज्ञानानिवर्त्यत्वं, इदंच प्रपंचे सतिसत्यत्वेपि मित्थ्यात्वस्य ज्ञानानिवर्त्यत्वा भावमात्रादुपपन्नं । तथापि मित्थ्यात्वस्य प्रप

चेत्तत्तुल्यमिथ्यात्वाभाव विरोधित्वाभावादर्थान्तरं । यद्यभावप्रमाबाधः , तदास्वस्य यदभावप्रमापकं तेनप्रमीयमाणाभावकत्वं साध्यंस्यात् , तथाच दृष्टान्तस्साध्यविकलः; शुक्तिरजतभ्रमदशायान्नेदं रजतं मिथ्यैव भाति अपितु वस्तुतोरजतमेवे त्यनुभवेन मिथ्यात्वे बाध्यमानेऽपि रज तस्याबाधात् । यदपि परिहारान्तरमुक्तं; योयस्यस्वाभाविको धर्मस्सतत्र स्वाभावविरोधी, मिथ्यात्वंचकल्पितमपि प्रपंचस्य स्वाभाविकमिति स्वा भावविरोध्येव. स्वाभाविकत्वन्तु तत्साक्षात्कारनिवृत्त्ययोग्यत्वमेवेति–तदपि घटत्वस्यप्रातिभासिका घटत्वाविरोधित्वात् प्रातिभासिकरूपस्य प्राति भासिकतदभाव विरोधित्वाच्च निरस्तम् । किंचैवं ब्रह्मसाक्षात्कारनिव र्त्यत्वात् स्वप्रकाशत्वं नस्वाभाविकमिति तद्ब्रह्मणि अस्वप्रकाशत्वाविरोधिन स्यात् ।नचस्वप्रकाशत्वविशिष्टस्यात्मन स्स्वप्रकाशत्वं स्वाभाविकं, स्वप्र- काशइति साक्षात्कारानिवर्त्यत्वादिति विशिष्टे तदस्वप्रकाशत्वविरोधीति वाच्यम् ; तर्हि स्वप्रकाशत्वविशिष्टे अस्वप्रकाशत्वं माभूत् , स्व रूपेस्यादेव , स्वप्रकाशत्वस्यास्वप्रकाशत्वेन विशिष्टस्वप्रकाशस्यात्रु त्याविशिष्टेऽपि नस्वप्रकाशत्वं अस्वप्रकाशत्वविरोधिस्यात । इदमि ति साक्षात्कारनिवर्त्यं च रजतमिदमर्थस्य स्वाभाविकमिति तत्र तद भावोनस्यात । नन्विदमर्थे रजतविरोधादेवनरजताभावः , इदं त्वेन तस्य रजतात्मकत्वयोग्यत्वातः ; किंतु शुक्तित्वेन रजतात्म- त्वायोग्यत्वा द्रजतत्वं शुक्तेर्नस्वाभाविकमिति शुक्तावेवरजताभाव इ- ति चेन्न; इदमर्थस्यैव शुक्तितया रजतस्य स्वाभाविकस्य इदमर्थेऽपि- रजताभावाविरोधित्वात् । ननु रजताभावस्य पारमार्थिकत्वात् स्वाभाविकमपि रजतं नविरोधि, भिन्नसत्ताकत्वादितिचेत् ; तर्हि समानसत्ताकत्वमेव विरोधप्रयोजकमितिस्वाभाविकत्वस्य तत्प्रयोज- कत्व कल्पनमयुक्तम् । किंच इदं शुक्त्योरभेदादिदं नरजतं किं न्वि य शुक्तिरितिबाधकसाक्षात्कारस्य इदमर्थगोचरत्वस्य अविवादाच्च तन्निवर्त्यं रजतं नेदमर्थस्यापि स्वाभाविकं । यदपि परिहारान्तरम् , यत्र यस्य वैशिष्ट्यमबाधितं सएव तत्र स्वाभावविरोधी नतु पर- मार्थः , मिथ्यात्व वैशिष्ट्यस्य नप्रपञ्चेऽस्तीति तन्नबाधः, प्रपंचेन स- हब्रह्मण्येव भानात् ; ब्रह्मणिमिथ्यात्वस्यानभ्युपगमात् [illegible] सत्ताविष

उत्तरत्रकिं ब्रह्मस्वरूपमुत ततो भिन्नं । आद्ये सिद्धसाधनत्वं, ब्रह्मसम्बन्धस्या स्माभि रिष्यमाणत्वात् ; बाध्यत्वधर्मयोगोहि प्रपंचस्य साध्यते, बाध्यत्वंच ब्र

---

यत्वात् न प्रपंचमिथ्यात्वबाधिकेति - तदपि घटत्व रजतयोर्घट-शुक्त्योः प्रातिभासिकाघटत्व रजताभावाविरोध प्रदर्शनेन निरस्त मिति । किंच बाधोयद्यभावः तत्प्रमावा, तदा कथं प्रपंचेमिथ्या-त्वस्य मिथ्यात्वेन तदभावापादने मिथ्यात्ववैशिष्ट्यस्य बाधितत्वे-न परिहारः, आत्माश्रयात् । अथ ज्ञानेन निवृत्तिर्बाधः, तदाब्रह्मणिस्व-प्रकाशत्वस्य अस्वप्रकाशत्वविरोधिता नस्यात । यदपि परिहारा-न्तरं - अविद्यातिरिक्तदोषाजन्यत्वं स्वविरोधिधर्मराहित्येप्रयोजकमिति; तदपिघटत्वस्य प्रातिभासिकाघटत्वाविरोधित्वात , प्रातिभासिकस्या पि प्रातिभासिकस्वाभावविरोधित्वाच्च निरस्तम् । किंच प्रपंच-स्याविद्यातिरिक्त दोषाजन्यत्वात् ब्रह्मणि प्रपंचाभावोनस्यात । ननु ब्रह्मणि प्रपंचाभावोभिन्नसत्ताक इतिद्विविरोधी प्रपंच इतिचेत् । तर्हि समानसत्ताकत्वप्रयुक्त एव विरोधइति किमन्येन । कथंचिदस्मा-भिः प्रपंचे आपाद्यमानस्य पारमार्थिकाभावस्य कल्पितं मिथ्या-त्वं व्यावर्तकमुक्तविरोध प्रयोजकमुक्तविरोध प्रयोजककल्पनयापि स्यात् । किंचा विद्यातिरिक्तदोषाजन्यत्वं घटादेरपि नास्ति, भेद-संस्कारजन्यत्वात । ब्रह्मसाक्षात्कारप्रतिबन्धकतया विपरीतकार्यज-नकतया च भेदवासनाया अपिदोषत्वाविशेषात् । संस्कारएव हि-वासना ! प्रातिभासिकव्यावर्तने च न किंचित्प्रयोजनमुभयोरपि समानस-त्ताकविरोधित्वात , भिन्नसत्ताकाविरोधित्वाच्च । किंच शुक्तिरजतव-त्तन्मिथ्यात्वमपि प्रातिभासिकं त्वयावाच्यम् , अन्यथा स्वसमान-सत्ताकमिथ्यात्ववत्त्वे साध्ये तस्य दृष्टान्तत्वा सम्भवात् ; तत्र-च मिथ्यात्वस्य रजतसत्यताव्यावर्तकत्वं नोक्तविधयासम्भवति, रजत वन्मिथ्यात्वस्य प्रातिभासिकस्या विद्यातिरिक्तदोषजन्यत्वात् । बा-ध्यत्वांगीकारेसत्यत्वं गतमेवेत्यत्राह (तस्येति) बाध्यबाध्यत्वस्येत्यर्थः । बा ध्यत्वं साध्यते बाध्यत्वसम्बन्धोवेति विकल्पमभिप्रेत्यान्त्येदोषमाह (आद्यइ-ति ) आद्यआह ( बाध्य वे[illegible] ततश्चव्याहद्रि ब्रह्मणस्स्वमाहिमप्रतिष्ठ-

ह्मस्वरूपनित्यमिथ्यत्वे । द्वितीये तेनैव दृश्यत्वहेतोरनैकान्त्यं । तेनव हेतुना तत्सिद्ध्यसिद्ध्योर्नानैकान्त्यमिति चेन्न ; तेनैव तत्सिद्धावनैकान्त्यप्रसंगः, तदसिद्धौ हेतोरसाधकत्वमिति प्रसङ्गपर्यवसितत्वात् । तेनैव तत्सिद्धौ तत्साधनस्य सतः कथमनैकान्त्यम् , नहि तत्साधकत्वे तदसाधकत्वप्रसंगइत्युन्मत्तोपि ब्रूयादिति चेन्न ; अभिप्रायानभिज्ञानात्, नहि ततएव तत्सिद्धिमभ्युपगम्यानैकान्त्यं ब्रूमः अपितुबाधिते बाध्यत्वे

---

स्यानन्याधारत्वादित्यर्थः । तदुक्तं सत्यमिथ्यात्वं ब्रह्मात्मकमिति कोटिनिराकरणे सर्वार्थसिद्धौ - 'ब्रह्मस्वरूपस्य सत्यस्य निराधारस्या सत्यवृत्तित्वव्याघाता'दिति । बाध्यत्व धर्मयोगः पक्षसाध्यत्वसम्बन्धात्मको विवक्षितः । साध्यतइति सिद्धिविषयत्व मात्रंविवक्षितं नतु साध्यतावच्छेदकावच्छिन्नत्वं ( तेनैव हेतु नेति) तेनैव हेतुनामिथ्यात्वसिद्ध्यनन्तरज्ञातमनैकात्यं मिथ्यात्वसिद्धावप्रतिबन्धकत्वान्नदोषः, असिद्धिदशायां त्वनुपस्थितत्वादेवेत्यर्थः ( तेनैवेति ) अयंचानिष्टप्रसंगस्सिद्धेः प्रागेवास्तीतिसिद्धि प्रतिबन्धइतिभावः । शंकते ( तेनैवतदिति ) (नहीति) अनैकान्त्येनासाधकत्वं फलितमित्यभिप्रायः । आपाद्यापादकव्याघातेन प्रसंगानुपपत्ते र्नसिद्धेः प्रतिबन्धइत्याशयः ( नहि तत एवेति ) यद्येन साध्यंसिद्ध्ये तदानैकान्तिकमिति नापादयामः, यतव्याघातः किंतु तेन हेतुनासाध्यासिद्धे स्तत्रसाध्याभाव हेत्वोश्च त्वयांगीकारात् त्वन्मतेनैव न्त्यप्रसंगइति ब्रूमइत्यर्थः । नन्वेवमपि नानुमिति प्रतिबन्धइ[illegible] प्रपंचेबाध्यत्वंवा तदभावोवावाच्यः, तृतीयप्रकारासम्भवात् । तथाच बाध्यत्वे तत्रेवव्यभिचारः । तदभावेतु प्रपंच एवेति सर्वथायं व्यभिचायैवेति निश्चयस्य प्रागेवसत्त्वान्नानुमितिरित्याशयात् । ननु कथं सिद्ध्यसिद्धि व्याघातशंकोत्थानं, प्रपंचेमिथ्यात्वासिद्धावपि शुक्तिरजते तस्य सिद्धत्वेन तत्र व्यभिचारोद्धा[illegible] ; कथंच तदंगीकारिण[illegible]रग्रन्थः ; इत्थं, मिथ्या

दृश्यत्वहेतुर्वर्तत इति भवता ऽभ्युपगतत्वेन तथाभ्युपगमेऽन्यतरा नैकान्त्यप्रसंग इति। तर्हि तत्र दृश्यत्व हेतु र्नवर्तत इत्यभ्युपगम्यानैकान्त्यं परिहरिष्याम इतिचेत्तदादृश्यत्वानुमानेन तत्साधनं न शक्यते, तज्जनित ज्ञानविषयत्वे तस्य दृश्यत्वावश्यम्भावात्, अतोऽनुमानमेव परित्यज्यानैकान्त्यं परिहर्तुमर्हसि । ननुबाधितस्याबाधितस्य च साधारणं बाध्यत्वमात्रं साध्यत इति चेन्न; तथापि सिद्धसाधनत्वस्य दुष्परिहरत्वात्; बाधितबाध्यत्वमभ्युपगच्छ त· साधारणाकारस्याभ्युपगमात्; पक्षधर्मताबलादस्मदभिमतविशेषलाभ इति चेन्न, तस्या स्तद्विरुद्धत्वात्। अविरोधेऽपि पूर्वोक्तानैकान्त्यस्यास्थितत्वात्,

---

त्वेदृयभिचार इति सामान्ये नोद्भाविते प्रपंचगतमिथ्यात्वेऽव्यभिचार उद्भावितइति भ्रान्त्याचोदितं, तदभ्युपगमेन परिहार उक्तः । अभ्युपगम्यपरिहारस्य च प्रयोजनं दृष्टान्तेऽपि द्रष्यत्वेन व्यतिरेकिणामिथ्यात्वे साध्यमानव्यभिचारोद्भावन प्रकारप्रदर्शनं ( नन्विति)बाधितार्थस्याबाधितार्थस्य च साधारणं बाध्यत्वमात्रं साध्यम्, नतु बाधितासाधारणं अबाध्यबाध्यत्वं, एवंच प्रपंचेसामान्यरूपेण सिसाधयिषितस्याबाध्यबाध्यत्वरूपविशेषस्य प्रागसिद्धेः नसिद्धसाधनं; साध्येच बाधितबाध्यत्वरूपविशेषमादाय बाध्यत्वसामान्यस्य सत्त्वान्नानैकान्त्यमित्यर्थः । ( तथापीति ) त्वदभिमतविशेषासिद्धावपि बाधितबाध्यत्वमादायसाध्यतावच्छेदकावच्छिन्नस्य सिद्धत्वा त्सिद्धसाधनमित्यर्थः । ननु पक्षधर्मताबलादबाधित बाध्यत्वरूप विशेषएव प्रपंचे सिद्ध्यति, अन्यथा जडस्य दृशिकल्पितत्वं स्वाभाविकमन्तरेणा परोक्षत्वानुपपत्तेः, नच सोपि विशेषः साध्यतावच्छेदकरूपेण न सिध्यति भिन्नविषयापि तत्समानाकारसिद्धिः प्रागेवास्तीत्युक्तमिति वाच्यम्; पक्षधर्मताबलादेवा बाधितबाध्यत्वत्वेनैव सिद्धेः, विशेषाकारसिद्धेश्च पूर्वमभावान्नसिद्धसाधनमिति शंकते ( प[illegible]ति ) ( तस्या इति ) दृगधीनासिद्धिकस्य दृश्यत्वस्य दृग्बाध्यत्वे[illegible]त्वादित्यर्थः ( अविरोधइति ) पक्षधर्म-

न पचमः प्रत्यक्षाद्यैः तद्विधायकै स्तदभावग्रहासम्भवात् । श्रुतीनामपि निषेधिकानामन्यत्र व्यवस्थापनात् । अतएव योग्या नुपलम्भ निराकृतसद्भावस्य तदभावस्यानुमानेन साधयितुमशक्यत्वात् ।

---

तावत्ताद्बाधित बाध्यत्वंहि प्रपंचे सिद्धयति, अत्राबाधितेति बाध्यत्वं विशेषयतस्तत्रापि बाध्यत्वे बाध्यत्वाभावसम्प्रतिपन्ने ईश्वरत्वस्यापि स त्त्वात अनैकान्त्यमित्यर्थः । ननु प्रपंचस्याबाधितबाध्यत्वमेव, तच्च बाध्यत्व वदिति न व्यभिचारः, नचाबाधितत्वविशेषणविरोधः. बाध्यत्वगतबाध्यत्व स्य बाधितत्वेन अबाधितत्वस्य परमार्थतस्सत्वादिति चेन्न; तस्मिन्नेव- तृतीयवाक्येव्यभिचारात । नच तस्यापि बाधितत्वं, प्रपंचबाध्यत्वस्य- असत्यत्वप्रसंगात । ननु चतुर्थबाध्यत्वस्यापि बाधितत्वं, एवं मुत्तरो त्तरस्यापीत्यनवस्था , अतः कुत्रापि नानैकान्त्यं, प्रथमादिपूर्वपूर्वायुग्म बाध्यत्वस्य तृतीयाद्युत्तरोत्तरा युग्मबाध्यत्वेन परमार्थतया स्थापितत्वा त् सत्यमेव प्रपंचबाध्यत्वं, अतो न सिद्धसाधनमपीतिचेन्न, एवंसति द्वितीयचतुर्थादि युग्मबाध्यत्वादिपरंपरया प्रपंचस्यापि परमार्थ तया स्थपनप्रसंगात् । (प्रत्यक्षाद्यैरिति) स्वात्यन्ताभावसमानाधिकरणत- या प्रतीयमानत्वंहि स्वात्यन्ताभावसामानाधिकरण्य प्रकारकप्रतीतिवि षयत्वं । साच प्रतीतिर्नसम्भवति प्रतियोगिग्राहिकया प्रतीत्या तत्रैव तद भावग्रहासम्भवादित्यर्थः । ननु प्रपंचविधायकनिषेधक श्रुतिभ्यां तादृशप्र- तीतेस्सम्भवस्तत्राह ( श्रुतीनामिति ) ( व्यवस्थापनादिति ) विहित- व्यतिरिक्तविषयतया स्थापनादित्यर्थः । ननु स्वात्यन्ताभाव समाना- धिकरणत्व प्रकारकप्रमितिविषयत्वं साध्यम् , तच्च स्वात्यन्ता भावसमानाधिकरण विशेष्यकस्वात्यन्ताभाव समानाधिकरणत्व प्रका रक प्रतीतिविषयत्वं , साच प्रतीतिरेतदनुमान जन्यानुमितिरेव, स्वा- त्यन्ताभावसमानाधिकरण विशेष्यकेत्यंशे स्वात्यन्ताभाव सामानाधि करण्यस्य प्रकारतयाऽवगाहनादित्यत्राह ( अतएवेति ) प्रतियोगिसमा नाधिकरणतया ऽभावप्रत्यक्षस्यासम्भवत्वेनिरस्ततया प्रतियोगिसामाना धिकरण्यावच्छिन्ना भावानुपलम्भेन तादृशाभावस्य निरस्ततया तत्साध

कृत्स्नप्रत्यक्षोपरोधेच निर्मूलतया ऽनुमानप्रामाण्यस्यैवासम्भवात् । तदभ्युपगमेच स्वोक्तिविरोधात्, परसिद्धान्तस्थिरीकरणाच्च । अप्रमाणेन साधितस्यापि सत्यत्वे ऽस्मदुक्तिमात्रेणापि तदपगमस्य दुर्वारत्वात् । नापि षष्ठः ; सिद्धसाधनादेव । सर्वं ब्रह्मात्मकमिति भास्करादिभिरिव त्वयापीष्यत इति चेन्न : तदपृथक्सिद्धिमात्रेणाऽस्माभिस्तदुक्तेः । तथापि सत्य भूतब्रह्मव्यतिरेक साधना दसत्यत्वं फलतीति चेन्न;— स्वयमपि सत्यस्य सत्यान्तरव्यतिरेकमात्रेणा सत्यत्वप्रसंगाभावात्, स्वयं घटस्य घटान्तरव्यतिरेकेऽपि नह्यघटत्वं । ब्रह्मैकमेव सत्यमिति सिद्धे तद्व्यतिरेकसाधनेनैवासत्यत्वं सिद्ध्यतीति चेन्न;- आत्माश्रयप्रसगात्, अवधारणेन हि प्रपंचासत्यत्वं विवक्षितं, ततएवच तत्सिद्धिरिति । श्रुतिसिद्धब्रह्ममात्र सत्यत्वोपजीवने अनुमानैरर्थक्य प्रसंग, अन्तत. श्रुतेरेव पुरस्करणीयत्वात, तस्याश्च निरपेक्षत्वात् । विप्रतिपन्नं प्रत्यनुमानं सप्रयोजनमिति चेन्नः-श्रुतिप्रामाण्यम-

---

नस्यानेनानुमानेना सम्भवादित्यर्थः । (कृत्स्नेति) अनेनानुमानेना भावसाधने एतद्बाधिततयाकृत्स्नप्रत्यक्षस्याप्रामाण्या त्पक्षहेतुव्याप्त्याद्दीना मसिद्ध्यानुमानप्रामाण्यासम्भवाच्चेत्यर्थः । अनुमानाप्रामाण्यप्रसंगइष्टइत्यत्राह ( तदभ्युपगमइति ) एतदनुमानप्रयोगविरोधादित्यर्थः ( परेति ) बाधकाभावात् सत्यत्वस्यैव सिद्धिप्रसंगइत्यर्थः । प्रामाण्यप्रयोजकव्याप्त्याद्याकारविरहिणापि लिंगेन साधितस्य सत्यता यादृच्छिकसंवादस्थले दृष्टा, तद्वदिहापि स्यादित्याशंक्य तथा सत्यस्मदुक्तिमात्रेण तदभावोऽपि सत्यं स्यादिति परिहरति ( अप्रमाणेनेति ) ( ततएवेति ) अनेनानुमानेन प्रपंचासत्यत्वसिद्धावेव प्रपंचासत्यत्वसिद्धिरित्यर्थः । ननु श्रुतिवदनुमानस्यापि प्रामाण्यान्नान्यतरेणा न्यतरानर्थक्यमित्यत आह ( अन्ततइति ) अनुमानात्पूर्वं नियमेन श्रुतेः प्रवृत्तेस्त यानुमाननैरर्थक्यं श्रुतेस्त्वनुमाननिरपेक्षत्वात् तेनात्र नतस्यानैरर्थक्यमिति । विप्रतिपन्नंप्रति-श्रुतिप्रामाण्यविप्रतिपन्नं प्रतीत्यर्थः । ननुब्रह्मैक

निच्छतस्तदुपजीवनासम्भवात , इच्छतस्तयैव तत्सिद्धेः । श्रुतेश्च प्रत्यक्षाद्यविरोधिविषयत्वे सिद्धे साकथं प्रत्यक्षादिबाधकानुमानस्योपजीव्या । ननु सत्यमिति केनचित्सामान्यतो निश्चित्य तद्व्यतिरेकः साध्यतइति चेन्न;- प्रत्यक्षादिभिस्तन्निश्चये प्रपंचस्यैव सत्यतया तस्य तद्व्यतिरेकसाधनायोगात् । ततश्च शास्त्रनिश्चित सत्यव्यतिरेक साधनेपि तस्य सत्यान्तरत्वमात्रं सिध्येत । सत्यत्वात्यन्ताभावः साध्य इति पक्षेप्येवमेव दोषोग्राह्यः । नापि सप्तमः, तत्किंलोकतः शुक्तिरजतादिषु विधातुमापणिकरजतादिषु निषेद्धुं च शक्यं किंचिदथाशक्यमिति; न प्रथमः, प्रत्यक्षादिभिर्बाधस्य दुर्निवारत्वात । नद्वितीयः , तस्याप्रसिद्धत्वात् । तथाविधस्य कस्यचिदन्यस्य साधने तेनाप्युपहितस्य प्रपंचस्याक्षतत्वेना निष्टाभावात । एवं प्रत्यक्षबाधे निरूपिते सत्यर्थापत्यभावयोः पृथक्प्रामाण्यमिच्छतां ताभ्यामपि बाधः सिद्धः । अबाध्यत्वलक्षणव्यवहारा विसंवादान्यथानुपपत्त्या सत्यत्वसिद्धिः । अभावोपि प्रपंचस्य बाध्यत्वाभावाख्यं सत्यत्वं प्रकाशयन् मित्थ्यात्वानुमानं बाधत एव । नचात्र योग्यानुपलब्धि र्नास्तीति वाच्यः- योग्यत्वस्योपपादितत्वात् । नहि लोकसिद्धमिथ्यात्वा दन्यत् किमप्ययोग्यं मिथ्यात्वमस्ति । नचानयोः श्रुतिबाधः;- तदान्यपर्यस्थापनात् ।

---

मेव सत्यमिति निश्चित्य नसत्यवैलक्षण्यं साध्यते, येन मिथ्यात्वश्रुति रुपजीव्येत, किन्तु सत्यमस्तीति निश्चित्येति शंकते ( नन्विति) ( प्रत्यक्षादिभिरिति ) तेषां विशेषविषयत्वनियमादिति भावः (एवमेवेति ) प्रत्यक्षादिबाधो ग्राह्यः ( प्रत्यक्षादिभि र्बाधस्येति )सत्यत्वग्राहिप्रत्यक्षादिनेत्यर्थः । तथाविधस्य-उक्तविधिनिषेधाशक्यस्य । अन्यस्य- प्रपंचादन्यस्य । एवंच प्रपंचमपजिहीर्षताधिकमपि साधितमिति भावः ।( प्रत्यक्षबाधे निरूपितेसतीति)तद्वदितिभावः (योग्यत्वस्येति)चरमविकल्पदूषणे शुक्तिरजतादिप्रसिद्धातिरिक्तस्यकस्यचिन्मिथ्यात्वरूपतानिषेधान्मिथ्यात्वस्ययोग्यत्वमुपपादित मिति भावः । तदेव स्मारयति (नहीति) ननूक्त·

ननु सत्यत्वे सिद्धेबाधः, तदेव न किञ्चित्पश्यामः; किं सत्तासामान्यं, उतस्वरूपसत्वं, अथवा भावत्वं, यद्वा प्रामाणिकत्वमात्रं, अथवा किञ्चिदिति । नाद्यः, सामान्यमनिच्छतस्तदयोगात्, इच्छतोपि समान्यादिषु मिथ्यात्वसाधनस्य निरुपद्रवत्वप्रसंगात् । न द्वितीयः, तत्रापि किं स्वरूपमेव सत्वं, उतस्वरूपस्य सत्वं ; पूर्वत्रमिथ्याभूतस्यापि स्वरूपंस्वरूपमेवेति नकिञ्चिद्व्यतिरिक्तं भवति। निस्स्वरूपंतदितिचेन्न; तेनैव रूपेण तत्स्वरूपनिर्णयात् , अन्यथा प्रातिस्विकवस्त्वंतरस्वरूपाभावे सर्वेषां निःस्वरूपत्वप्रसंगात् । उत्तरत्र तत्सत्वस्य सत्वान्तराभावे मिथ्यात्वं दुर्वारं, ततश्च विश्वमिथ्यात्वं । न तृतीयः, अभावस्य मिथ्यात्वप्रसंगात् । इष्टमिदमितिचेन्न; अविशेषाद्भावस्यापि तत्प्रसंगात् । भावान्तराभाववादेतुभावानामेवाभावत्वात् तत्प्रसंगः । न चतुर्थः, दृश्यत्वानुमानमनपोद्यतदसिद्धेः ।

---

स्सत्त्वग्राहिप्रत्यक्षेण बाधो न सम्भवति प्रपञ्चे सत्यत्वस्यैवानिरूपणादिति शङ्कते ( नन्विति ) ब्रह्मणितु प्रामाणिकत्व रूपं सत्वं सम्भवतीति भावः ( न किञ्चिदिति ) मिथ्यावस्तुव्यावृत्तं किंचित्सत्यत्वं नोक्तं भवतीत्यर्थः ( निःस्वरूपमिति ) सत्यत्वानंगीकारेतुच्छत्वपर्यवसानादिति शंकितुर्भावः ( तेनैवेति ) असद्विलक्षणत्वस्याभ्युपगमात् मिथ्यात्वाश्रय स्वरूपेणैव सस्वरूपत्वमित्यर्थः (अन्यथेति)यत्किञ्चित्स्वरूपे सत्यपि यत्किञ्चित्स्वरूपाभावेन निस्स्वरूपत्वइत्यर्थः ( वस्त्वन्तरस्वरूपाभावइति ) सतीतिशेषः । प्रातिस्विकरूपाभावस्य सत्त्वादित्यर्थः ( उत्तरत्रेति ) सत्त्वान्तरांगीकारे त्वनवस्था, सत्वस्याद्याप्यनिरूपणा दात्माश्रयश्चेत्यपि द्रष्टव्यं ( इष्टमिति ) अभावत्वादेव तत्र मिथ्यात्वमिष्टमित्यर्थः ( भावस्यापीति ) प्रमाणासिद्धत्वाविशेषेप्यभावस्य मिथ्यात्वे-भावस्यापि तत्प्रसंगइत्यर्थः । ( भावान्तरेति ) अभावत्वस्य मिथ्यात्वप्रयोजकत्वे इष्टे पर्यवसानादिति भावः । दृश्यत्वे मिथ्यात्वानुमान प्रवृत्तिसममेव प्रपंचग्राहिप्रतीतेः प्रामाण्यसन्देहात् प्रामाणिकत्वासिद्धेः

न पंचमः, तस्य सर्वत्र प्रमाणबाध्यत्वे शशविषाण वदसिद्धेः । योग्यत्वेऽनुपलम्भ बाधादिति ॥

तदेतदसारं;—प्रामाणिकत्वमेव हि सर्वत्र सत्वमभ्युपगच्छामः । तदुक्तं भाष्ये—" व्यवहारयोग्यतासत्त्व " मिति । नचैतद्बाधकानुमाने जीवति न सिद्ध्यतीति वाच्यम्, कालात्ययापदेशस्य निर्मूलत्वप्रसंगात् । यथा वह्न्यनुष्णत्वानुमानं प्रतियोगिभूतोष्णत्वग्राहिणा बाध्यते, तथेहापि सत्यत्वव्यतिरेकानुमानं प्रतियोगिविशेष सत्यत्वग्राहिणा बाध्यते । नच तन्नगृह्यतइति वाच्यम्, तद्व्यतिरेकासिद्धिप्रसंगात् । ब्रह्मणि तद्ग्रहाद्व्यतिरेकसिद्धिरिति चेन्न; ब्रह्मण्यपि सत्त्वस्य-त्वदुक्तयुक्तिभिः खण्डनात् । तत्राखण्डितत्वे तदेव विश्वस्यापि सत्व

---

न सत्त्वग्राहि प्रत्यक्षबाधइत्यर्थः ( सर्वत्रेति ) ब्रह्मणि ततोऽन्यत्रचेत्यर्थः (प्रामाणिकत्वमिति) एतेन जगत्सत्त्वानुपपत्तिरेव विपक्षे बाधिकेतिनवीनोक्तं निरस्तं ।

यदुक्तं प्रमात्वं यदि तद्वति तद्वैशिष्ट्यज्ञानं तदा शुक्तिरजतस्येव प्रपंचेपि न तादृशं सत्त्वं निवार्यं, मिथ्यात्वाविरोधित्वात्; तन्न-लाघवेन प्रतियोगिमात्रस्य अभावविरोधित्वेन उक्तसत्त्वस्य मित्थ्यात्वविरोधित्वात्, अतएव शुक्तिरजतस्याप्यनिर्वाच्यत्वायोगात् ( कालात्ययेत्यादि ) प्रपंचविषयं ज्ञानं स्वप्रकाशं स्वतः प्रमाणश्च, अतो घटादिविषयकत्व प्रमात्वग्राहिणाप्रत्यक्षेण प्रमाणविषयत्वं घटादौ गृहीतमिति उष्णत्वप्रत्यक्षेणा नुष्णत्वानुमानस्येव मित्थ्यात्वानुमानस्यापि बाधः । उष्णत्वग्राहि प्रत्यक्षस्येवास्यापि बलवत्तया नात्रानुमानमात्रेण प्रत्यक्षविषये प्रामाण्ये सन्देहइति भावः ।

ननु प्रपञ्चे सत्यत्वस्यैवाग्रहणात्कथं प्रत्यक्षबाधइति पूर्वोक्तभावानभिज्ञ शंकां निराकरोति ( नचेति ) ( तद्व्यतिरेकेति ) क्वचित्प्रसिद्धस्यैव-निषेध्यत्वादित्यर्थः ( त्वदुक्तेति ) दृश्यत्वादीनां ब्रह्मण्यपि प्रवृत्तेरिति भावः ( तत्रेति ) दृश्यत्वादीनां ब्रह्मण्यबाधकत्वे प्रपंचेप्यबाधकत्वात्

मिति पश्य । स्वतस्सदेव ब्रह्मेतिचेत् ? किमहेतुकत्वं विवक्षितमुतस्वयं प्रकाशत्वं, यद्वा सत्वाभावेऽपि सदिति । पूर्वत्र ब्रह्मव्यतिरेकात्प्रपंचस्य कार्यत्वमेव साधितं स्यात् । ततश्चांशतस्सिद्धसाध्यता । द्वितीयेपि परप्रकाश्यत्वसाधना त्सएव दोषः । तृतीयेतु प्रपंचस्यापि तद्वत्सत्वे को विरोधः । एतेन सत्त्वस्य सत्त्वान्तराभावादसत्त्व प्रसंगोऽपि प्रत्युक्तः । अतस्सत्वमात्रप्रतिक्षेपे शून्यवादावतारः । क्वचित्तदभ्युपगमे-प्रामाणिकेषु सर्वेषु तत्सिद्धिरनिवार्येति । नचैवं मिथ्यात्वासत्त्वादौ तस्य सामान्यतोऽस्माभिरप्रतिक्षेपात् सत्यस्यैवहिरजतत्वादेः -

---

तत्र सत्यादिवाक्येनेव प्रपंचेपि प्रत्यक्षेण तदेव सत्त्वं सिद्ध्यतीति भावः ( स्वतइति ) ब्रह्मणो निर्विशेषत्वात् ज्ञानत्वानन्दत्वादिशून्यस्यापि ज्ञानानन्दादिस्वरूपत्ववत् सत्यत्वशून्यत्वेपि सत्यस्वरूपत्वं संभवति, अतो मदुक्तयुक्तिभि र्ब्रह्मण्यपि धर्मभूतसत्त्वखण्डनेऽपि न दोषः, प्रपंचेतु सधर्मके सत्त्वखण्डने सत्स्वरूपत्वमेव नस्यादित्यर्थः । शब्दार्थसम्भवमात्रेण विकल्पयति (किमिति) (तृतीयेत्विति ) प्रत्यक्षादिना सदिति प्रतीतं वस्तुतस्सत्यत्वधर्मनिषेधेपि सत्स्वरूपमेव स्यादित्यर्थः । ननु यदि मिथ्यात्वं सत्त्वंच क्वचिदिष्यते, ततोऽन्यत्र सर्वत्रापिस्यात ; अन्यत्र नचेच्छुक्तिरजतशशशृंगादावपि नस्यादित्याशंक्याह (नचैवमिति) मिथ्यात्वासत्वादिशब्दार्थमात्रं न प्रतिक्षिप्यते, किन्तु त्वदभिमतः तच्च नकुत्रापि, मदभिमतेतु मिथ्यात्वासत्वे सर्वत्रापीत्यर्थः (सत्यस्यैवहीति )

ननु रजतत्वस्य सन्निकर्षाभावात्कथं तज्ज्ञानं, सन्निकर्षाभावेऽपि प्रतीतावतिप्रसंगः; ज्ञानंच नसन्निकर्षः; तस्मान्नान्यथाख्यातिसम्भवः; अतो निर्वचनीयमेव रजतं स्वाभावाधिकरण उत्पद्यते , तदेव भ्रमविषयइत्येष्टव्यम् , अतोऽनिर्वचनीयत्वमेव मिथ्यात्वमिति । उच्यते , यद्यन्यत्र क्लृप्तकारणं नास्ति, तर्हि यथाचक्षुषा घटाभावं पश्यामीत्यनुभवे सत्यपि त्वयापि क्लृप्तप्रत्यक्षकारणाभावादभावाख्यंप्रमाणान्तरमंगीक्रियते, इन्द्रियान्वयव्यतिरेकयोश्चाधिकरणग्रहे-

णोपक्षयः, पश्यामीतिप्रतीतिश्च तावन्मात्रादितिकल्प्यते; तथेहापिदोषाख्यं अन्यद्वा किंचित् कारणान्तरं कल्प्यतां। यदि रजतंपश्यामीत्यनुभवानुसारेण तज्ज्ञानस्य प्रत्यक्षान्तर्भाव इष्यते, तदा अभावोपळब्धौ प्रत्यक्षबाह्मिर्भावाङ्गी-कारस्तव विरुध्येत, घटाभावं पश्यामीत्यनुभवस्य तत्रापि सत्त्वात्। वस्तुत स्तु नात्र प्रत्यक्षसामग्रीविरहः, विशेष्य सन्निकर्षस्यैव विशेषणे प्रत्यक्ष हेतुत्वात्। नच विशेषणसन्निकर्षस्याकारणत्वे उष्णीषाच्छन्नकुण्डले - कुण्डलीति बुध्यापत्तिः; तवापि कुण्डलसंयोगमादाय संयोगीति प्र-त्यक्षापत्तेः। नच संयोगप्रत्यक्षेप्रतियोगि प्रत्यक्षस्य तत्सन्निकर्षस्य वा हे-तुत्वात् तदभावइति वाच्यम्; ममापि तुल्यत्वात्। कुण्डलीतिप्रत्य-क्षस्य संसर्गविधया संयोगप्रत्यक्षत्वात्। अव्याप्यवृत्तिप्रत्यक्षे तद्विशेषणक तत्संसर्गक तद्विशेष्यकौदासीन्येन इन्द्रियसंयोगप्रदेशावच्छेदेन समवा यस्य हेतुत्वाच्च। ननु त्वया प्रतियोगिप्रत्यक्षाभावेपि दण्डयमासीदि ति दण्डिप्रत्यभिज्ञारूप दण्डसंयोगप्रत्यक्षांगीकारा न्न तौल्यमिति चे न्न; संस्काराजन्य संयोगप्रत्यक्षे प्रतियोगिप्रत्यक्षस्येन्द्रिय संयुक्तदेशाव-च्छेदेन समवायस्यच हेतुत्वात्। ननु संयुक्तसमवायाभावात् कथं-द्रव्यगतजातिप्रत्यक्षमिति चेन्न; द्रव्यगतजातिविशेष्यक प्रत्यक्षएव-तस्य हेतुत्वात्। विशेष्यसन्निकर्षत्वेन विशिष्टप्रत्यक्षत्वेन सामान्यतः कार्य कारणभावेन यत्सामान्ययोरिति न्यायेन तद्विशेषयोरेव कार्यकारण-भावौचित्यात्। किंच गुणकर्मादिग्रहाव्यापकत्वात् संयुक्तसमवायंप्रति न द्रव्यजातिप्रत्यक्षत्वं कार्यतावच्छेदकं; शब्देसत्ताजाति प्रत्यक्षानुपप त्तेश्च। ततएव न द्रव्यसमवेत प्रत्यक्षत्वं, शब्दग्रहणानुपपत्तेश्च। अत-स्संयुक्तेतरसमवायमात्राविषय संयुक्तसमवेत प्रत्यक्षत्वं संयुक्तसमवा यजन्यतावच्छेदकं, अतो नाप्रसंगातिप्रसंगौ; तथाच भ्रमस्थले रजतत्वस्य संयुक्तसमवेतत्वाभावात् न प्रत्यक्षासम्भवः। नचासन्निकृष्टरूपादिप्रत्य-क्षापत्तिः, विशेष्यसन्निकर्षाभावात्। नचासन्निकृष्टरूपविशेषणकसन्निकृष्ट रूपनिष्ठरूपत्वविशेष्यकप्रत्यक्षापत्तिः, रूपेतरावृत्तित्वेसति सकलरूप-वृत्तित्वभाने तद्धानस्येष्टत्वात्। क्वचिद्विशेषणज्ञानाभावात् त-त्स्मरणेसति तद्विशिष्टज्ञानमिष्टमेव। नन्वतीतश्यामतादिविशिष्टप्रत्यक्षप्र-

संग इतिचेन्न ; लौकिकप्रत्यक्षस्य वर्तमानकालावच्छेदेनविषयग्राहकत्व नियमात , तस्यात्रबाधाद्दोषाभावाच्चाभावात् । लौकिकप्रत्यक्षेच वर्तमानका लावच्छेदेन विषयोल्लेखित्वं नियतम् । अतः प्रत्यक्षस्यायं स्वभावः । तथाच तत्सामग्रीविशेषसामग्री, न तया विना सामान्यसामग्र्या कार्यमितिनातीतश्यामताविशिष्टलौकिकप्रतीतिप्रसंगः । नचैवं वाच्यम् सामग्रीसन्निधानप्रयुक्तोऽयं नियमोनस्वभावादिति;विशेषणसन्निकर्षहेतुत्वेऽपि श्यामता दशायामपी दानीमयंश्यामोनेति भ्रमेसतिश्यामतामात्रधीप्रसंगात् । समानप्रकारकंप्रत्येव प्रतिबन्धकत्वात् तत्कालावच्छेदेन श्यामताभावं बोधयन्दोषोऽपि तद्विपरीतस्यतत्कालावच्छिन्न श्यामताध्यक्षस्यैव प्रतिबन्धकः । यथाच शाब्दत्वस्य शब्दजन्यतावच्छेदकत्वे ऽपि तज्ज्ञान-स्यान्वयविषयतानियमात् योग्यताज्ञानं शाब्दज्ञानकारणं, प्रतियोग्यर्थज्ञानमात्रे तदपेक्षाबीजाभावात , तथावर्तमानकालावच्छेदार्थं तत्सामग्रीविशेषतो लौकिप्रत्यक्षसामग्री । किंच संयुक्तसमवेतप्रत्यक्षत्वं कार्यताव-च्छेदकं नतु तत्कालीनसंयुक्तसमवेतप्रत्यक्षत्वं, गौरवात् ; अतइदानीं संयुक्तसमवायाभावात् नातीतश्यामताप्रत्यक्षं । नन्वेवं घटे रक्तता दशायां अतीतश्यामतारोपो नस्यादितिचेन्न; इष्टापत्तेः, श्यामान्तरस्यैव तत्रारोपात , अगृहीतश्यामान्तरस्यापि सामान्यप्रत्यासत्त्या श्यामान्तर ज्ञानसंभवात् । पूर्वकालीनरूपवानयमित्यारोपः कथमितिचेन्न ; तत्रापि रूपे तत्कालीनत्वस्यारोपात् अलौकिकमतीतश्यामतादिविशिष्टप्रत्यक्षं तत्सामग्र्यां सत्यामिष्टमेव । किंच द्रव्यसमवेतप्रत्यक्षे संयुक्तसमवायस्य हेतुत्वे त्वन्मते रजतत्वस्यैव शुक्तित्वरूपत्वात् तदेव शुक्त्यैव रजतत्वात्मनाभि व्यज्यतां, दोषादिति नान्यथाख्यातिविरोधः । ननु सामान्यतोपि विषयसन्निकर्षत्वेनैव हेतुतास्तु, लाघवात्, नविशेष्यसन्निकर्षत्वेन, गौरवादिति चेन्न , तत्सन्निकर्षस्य तत्प्रत्यक्षहेतुत्वे द-ण्डचयमासीदित्यादिप्रत्यभिज्ञा प्रत्यक्षोच्छेदप्रसंगात् । दण्डादिसन्नि-कर्षाभावात् । ननु तत्सन्निकर्षस्तदवच्छेदेन प्रत्यक्षकारणं, अतः प्र-त्यभिज्ञा देवदत्तेसन्निकर्षसत्त्वात तदवच्छेदेन प्रत्यक्षं, दण्डादौ स-

न्निकर्षाभावात् तदवच्छेदेन स्मृतिरितिचेत्तर्हि घटे सन्निकृष्टे-पटेचा सन्निकृष्टे तदुभयविषयकं घटांशेग्रहणात्मकं पटांशेस्मरणात्मक मेकं ज्ञानं स्यात् , अतस्त्वयापि तत्परिहारार्थं विशेष्यसन्निकर्षो ऽपि कारणमिति वाच्यम् , अतः कारणंतदेवेत्युचितं आवश्यकत्वात् ; ननु त्वत्पक्षेपि विशेष्यसन्निकर्षस्य हेतुत्वात्सएवातिप्रसग इतिचेन्न ; मयातद्विशेष्यकप्रत्यक्षे तत्सन्निकर्षःकारणमित्यङ्गीकारात । ननुममापि संस्कारोविशेषणांश एवहेतुरित्यंगीकारान्नातिप्रसंगइतिचेन्न, विशेष्यस्मृत्यभावप्रसंगात् । ननु प्रत्यक्षसामग्रीं प्रतिविशेषणांश एव सहकारी संस्कारइतिचेत् ; किं सहकारित्वं दण्डस्येवचक्रं प्रति, किंवा घटपट-सन्निकर्षयो स्समूहालम्बनइव संस्कारप्रत्यक्षसामग्र्योस्समाहारमात्रं । नाद्यः, प्रत्यभिज्ञायां ज्ञानप्रत्यासत्तिस्वीकारप्रसंगात । विशेष्य सन्निकर्षस्य विशेषणांशे हेतुत्वस्वीकारप्रसंगाद्वा । ननु नप्रत्यक्षसामग्रीविशेषणांश हेतुः, किंत्विन्द्रियं, तथाच तज्जन्यमपि विशेषणांश ज्ञानं नतत्सन्निकर्षापेक्षं मनोजन्यानुमिति वदितिचेन्न; इन्द्रियत्वेनेन्द्रिय जन्यस्य ज्ञानस्य प्रत्यक्षत्वनियमात । नान्त्यः, सन्निकृष्टा सन्निकृष्टविशेष्यकप्रत्यक्ष स्मृत्यात्मक ज्ञानप्रसंगतादवस्थ्यात् । ननु प्रत्यक्षान्तर्गत विशेष्यांश भिन्नस्मृतित्वं कार्यतावच्छेदकं संस्कारं प्रति, अतोनाय मतिप्रसंगः; नचा सन्निकृष्टविशेष्यज्ञानांशे प्रत्यक्षत्वाभावात् तत्राप्युक्तकार्यतावच्छेदक सम्भवादति प्रसंग एवेतिवाच्यम् ,प्रत्यक्षत्वाधिकरणज्ञानान्तर्गत विशेष्यांशत्वस्य प्रत्यक्षत्वानधिकरणेऽप्यंशेऽनपायात् , इति चेन्न; गौरवात , लाघवेन स्मृतित्वस्यैवकार्यतावच्छेदकत्वात् । ननु ममापि विषयसन्निकर्षस्य कारणत्वाल्लाघवं, तवतु विशेष्यसन्निकर्षस्य कारणत्वात् गौरवमितिचेन्न; दण्ड्यासीदीत्यादौ दण्डादेरपि प्रत्यक्षत्वाश्रयं तदेव ज्ञानं प्रतिविषयत्वेन तत्सन्निकर्षकल्पनाप्रसंगात् , अंशविवक्षायांतु यद्विषयकत्वावच्छेदेन प्रत्यक्षत्वं तत्सन्निकर्षत्वं पर्यवस्यति,इदंच विशेष्यसन्निकर्षत्वापेक्षया गुरु तुल्यंवास्यादित्य स्मत्पक्षे गौरवं, सत्यपि गौरवेऽस्मिन् प्रत्यक्षान्तर्गतविशेष्यांशभिन्नस्मृतित्वरूपत्वदभिमतकार्यात-

वच्छेदकापेक्षया लाघवं विशेष्यसन्निकर्षस्यस्पष्टम् । किंचास्तितावद्देवद-त्ते दण्डितयानुभूते यज्ञदत्ते ऽयमेव पूर्वं दण्ड्यासीदिति भ्रमः प्रत्य-भिज्ञारूपः, एवं पूर्वमयं श्यामआसीदिति; तत्र नदण्डीत्यंशे स्मृतिः, तस्य पूर्वं दण्डितयाननुभवात् , अतो परोक्षभ्रमएव वाच्यः, तत्रचनानिर्वच नीयोत्पत्तिसम्भवः, अतीतत्वानुभवानुरोधेन इदानीं दण्डस्य तद्ध्वंसस्या प्युत्पत्ते र्वाच्यत्वात् तस्यच विरोधेन असम्भवात् ; अतो ज्ञानस्य प्र-त्यासत्तित्वं विशेष्यसन्निकर्षमात्रस्य हेतुत्वंवा स्वीकृत्य अन्यथाख्याति रेवस्वीकार्येति तत्र क्लृप्तसामग्र्या सर्वत्रान्यथाख्यातिसिद्धिः ।

ननु दण्डतत्संसर्गयो स्स्मृतिः विशेष्यांशेऽत्वनुभवइति नप्रत्यक्षान्यथा ख्यातिरिति चेत; तथासति रजतादिभ्रमस्यापि रजतत्वाद्यंशे स्मृतिरूपत्व संभवादन्यथाख्यातिः कारणबाधाभावात् सिद्ध्येत् । नचारोप्यांशे साक्षा त्कारत्वानुभवविरोधः; स्मर्यमाणस्यापि रजतस्य साक्षात्क्रियमाणशुक्त्य भेदारोपात् , जातेस्तु साक्षात्क्रियमाणसंसर्गारोपात्तादृशानुभवोपपत्तेः । किंच शुक्तिरजतविपरीतसमूहालम्बने सन्निकर्षस्य विद्यमानत्वाद-न्यथाख्यातिर्दुर्वारा । नच यद्रूततया गृह्यते तद्घटितसंयुक्तसमवायोहेतु रितिवाच्यम् ; गौरवात् । नचैवं सत्येकघटे सन्निकृष्टे सति घटान्तरे घटत्वग्रहापत्तिः; घटान्तरसन्निकर्षइष्टापत्तेः, असन्निकर्षेच विशेष्यसन्नि कर्षाभावेनैव तदभावात् । एतेन विशेषणसन्निकर्षस्याकारणत्वे पर्वते परा मर्शानन्तरं वह्निविशिष्टप्रत्यक्षंस्यादितिनिरस्तं, प्रतियोगिप्रत्यक्षाभावात , तत्संयोगावच्छेदेन सन्निकर्षाभावाच्च । किंच तवमते पर्वतो वह्निमा-निति ग्रहणस्मरणात्मकं ज्ञानं कुतो न स्यात् , पर्वतस्य पूर्वं वह्निमत्वेन अननुभवादिति चेत् ? तथासति अदण्डिनि दण्ड्यासीदिति ग्रहणस्मरणा त्मकं ज्ञानं नस्यात् । यदि तत्र दण्डिसदृशधर्मदर्शनमात्रात् तत्रानुभवाभा वेपि तस्यैव दण्डितया स्मरणं, तर्हीहापि धूमवत्वेन सादृश्यदर्शनाद्वह्नि वि शिष्टत्वेन स्मरणापत्तिः । अननुभूत विषयस्मृति सामग्र्यपेक्षयानु मिति सामग्र्या बलवत्त्वादनुमितिरितिचेत् ? तर्ह्यनुमिति सामग्र्याः प्राब ल्यात अनुमितिरित्यस्तु । ननु संशयोत्तरपुरुषप्रत्यक्षं न स्यात्,यदिसमानैवि षये प्रत्यक्षसामग्रीप्रबला-तर्हि पर्वते वह्न्यनुमिति र्न स्यात्, प्रत्यक्षंचस्यात्।

उपनीतप्रत्यक्षसामग्र्यपेक्षयानुमिति सामग्रीप्रबलाचेत, संशयोत्तर प्रत्यक्षभ्रमस्तर्हि नस्यात् । दोषाघटितोपनीत प्रत्यक्षसामग्रीतो नुमितिसामग्रीबलवतीतिचेन्न - पर्वते वह्निभ्रमानुमित्यनुपपत्तेः, तत्र विशेषभ्रमरूपदोषस्य सत्त्वात् । प्रत्यक्षमात्रप्रयोजक दोषाघटितोपनीतप्रत्यक्षसामग्र्यपेक्षया नुमितिसामग्रीप्रबला, संशयोत्तर प्रत्यक्षभ्रमेच सादृश्यस्य तत्प्रत्यक्षस्यच प्रत्यक्षासाधारणदोषस्यसत्त्वात्, पर्वते तदभावात्; भ्रमविशेषदर्शनस्यानुमिति साधारणत्वा त्सादृश्य तत्प्रत्यक्षयोः कथंचिदत्रापि सम्भवेपि तस्य वह्निभ्रमंप्रति दोषत्वे मानाभावादिति चेन्न; - सौरभ्यव्याप्यदर्शनाभावदशायां चन्दनत्वभ्रमात् सौरभ्यप्रत्यक्षभ्रमो जायत इत्यवच्छेदक भ्रमोदोषइति सिद्धम्, तथाच व्याप्यदर्शन दशाया मप्यनुमिति नस्यात, अवच्छेदकदर्शनरूप प्रत्यक्षमात्रप्रयोजकदोषसत्त्वात्; नचेष्टापत्तिः, प्रमास्थलेऽ वच्छेदकदर्शनकालीनेनापि व्याप्यदर्शनेनानुमिते स्स्वीकर्तव्यत्वात्, त्वदुक्तप्राबल्यप्रयोजकस्यापि तत्रसत्त्वात् । स्वकल्पितप्रयोजकमात्रानुसारेण प्रमास्थलेऽनुमितिरेव भ्रमस्थले प्रत्यक्षमेवेति वैषम्यकल्पनस्यानुचितत्वात, अनुमिति भ्रमविषपर्वतेप्यवच्छेदकदर्शन सत्त्वात् ।

यदपि संशयानुत्तर प्रत्यक्षसामग्रीतः अनुमितिसामग्रीप्रबला, तेन संशयोत्तरपुरुषप्रत्यक्षोपपत्तिरिति; - तदपि न, सन्दिग्धवह्नौ पर्वते प्रत्यक्षापत्तेः । असन्दिग्धपुरुषत्वे सन्निकृष्टे पुरुषे व्याप्यदर्शना दनुमित्यापत्तेश्च । नन्व सन्निकृष्टद्रव्यविशिष्ट प्रत्यक्षसामग्रीतो ऽनुमितिसामग्रीबलवती, तेन पुरुषप्रत्यक्षं वह्निप्रत्यक्षाभावश्चसिद्धः । नच घटे पच्यमानत्वेन भाविरक्तिमानुमाना नुपपत्तिः, अवर्तमानविशेषणकप्रत्यक्षसामग्रीतो बलवत्त्वादितिचेत्; - एवमपिकरभ्रमात पुरुषतादात्म्यारोपानुपपत्तेः । किंच सौरभ्यव्याप्यदर्शने ऽपि सौरभ्यानुमिति नस्यात्, सौरभ्यस्य वर्तमानत्वात, अद्रव्यत्वाच्च । नचेष्टापत्तिः, यत्र प्रत्यक्षत्वं नानुभवसिद्धं तत्र प्रत्यक्षत्वस्य मानान्तरासंभवनिबन्धनतया मानान्तरासम्भवे तज्जन्यत्वस्यैव वाच्यत्वात् ।

अथ प्रत्यक्षजनकसन्निकर्षानाश्रयविशेषणकप्रत्यक्षप्रमासामग्रीतो-ऽनुमितिसामग्रीबलवतीति पुरुषप्रमाभ्रमयोरुपपत्तिः, सौरभ्याप्रत्यक्षतोपपत्तिश्च, चक्षुस्संयुक्तसमवायस्य गन्धाग्राहकत्वात्; एवं पर्वतेनवह्निप्रत्यक्षापत्तिरितिचेत् ? पर्वते वह्निभ्रमानुमित्यनुपपत्तेः । नचासन्निकृष्टद्रव्यविशिष्ट प्रत्यक्षंसामग्रीतोपि बलवत्त्वान्न दोषइति वाच्यम् ; -अचन्दने चन्दनत्वेन गृह्यमाणे सौरभ्यव्याप्यभ्रमात् सौरभ्यानुमित्यनुपपत्तेरितिचेत ॥-

उच्यते; वर्तमानकालावच्छेदेन विशेषणावगाहिविशिष्टप्रत्यक्षसामग्रीतोऽनुमितिसामग्रीबलवती, अतो सन्निकृष्टस्य वह्नेर्वर्तमानकालावच्छेदेन प्रत्यक्षासम्भवात् पर्वते वह्न्यनुमितिसामग्री बलवती । ननुवर्तमानकालावच्छेदेनैव वह्नेः प्रत्यक्षं पर्वते स्यात् , प्रत्यक्षसामग्र्या स्सत्त्वात् , इतिचेन्न;-वर्तमानकालस्यायोग्यत्वेन तद्भासनासामर्थ्यात । नच वर्तमानकालोपस्थितिमात्रं तत्कालावच्छेदेन विशेषणवैशिष्टयप्रत्यक्षे सहकारि; गृह्यमाणजम्बूफलादौ श्यामिकोपनये कालोपनयेऽपि तज्जन्यप्रत्यक्षेणवर्तमानत्वाग्रहात । अतोयस्मिन् काले यत्र यत्सत्तापादनमात्रेण तद्विशेष्यकप्रत्यक्षापादनसम्भवः सकालःस्वावच्छेदेन तत्र तद्विशेषणावगाहने हेतु', नचानुमितिकाल स्ताहश । ननु चन्दनमिदानीं सुरभीति चन्दनत्वावच्छेदेन ज्ञाते चन्दनविशेषे सदा दृष्टे इदानीमिदं सुरभीत्य - स्त्युपनीतसौरभ्यप्रत्यक्षं, तथाच यदा तत्प्रत्यक्षसामग्रीकाले तद्व्याप्यचन्दनत्वादिपरामर्शोपि तत्र स्यात् , सदा तत्रानुमितिर्नस्यादितिचेन्न ; तादृशकालप्रयुक्तवर्तमानकालीन विशेषणावगाहिताकप्रत्यक्षान्यप्रत्यक्षसामग्रीतो बलवत्त्वस्यविवक्षितत्वात् । यद्वा-साक्षात्कारत्वसन्देहयोग्यप्रत्यक्षसामग्रीतोऽनुमितिसामग्री बलवती, उपनयाद्यपेक्षसाक्षात्कारश्च तत्सन्देहयोग्यः । असाक्षात्कारत्वभ्रमयोग्य प्रत्यक्ष सामग्रीतइतिवा, अचाक्षुषत्वादिभ्रमयोग्यप्रत्यक्षसामग्रीतइतिवा, योग्यसन्निकृष्टग्रहप्रतिबन्धकदोषाघटितोपनीतप्रत्यक्षसामग्री तइतिवास्तु; -तथाप्यननुभूतविषयस्मृत्यपेक्षया नुमितिसामग्रीप्राबल्यस्य वाच्यत्वात । तत्रच नाननुभूतविशिष्टस्मृतित्वं प्रतिबध्यतावच्छेदकं, संशयानन्तरमपि विशेषदर्शनात् सोऽयं पुरुषइति भ्रमप्रत्यभिज्ञोच्छेदापत्तेः । दोषाघटित

त्वविशेषणेच भ्रमानुमित्युच्छेदापत्तेः । योग्यसन्निकृष्टग्रहप्रतिबन्धकत्वादि ना दोषविशेषणेच कुतो गौरवं, तवतु विशेषणांशे सन्निकर्षस्य का रणत्वमधिकं कल्पनीयं । किंचत्वन्मते संशयानन्तरं पुरुषभ्रमस्थलेऽनुमितिरेव स्यात्, प्रत्यक्षसामग्र्याः प्रतिबन्धिकाया स्तत्राभावात्, तत श्च प्रत्यक्षसामग्रीसम्पत्त्यर्थं विशेषणसन्निकर्षस्य हेतुत्वंवा त्याज्यं ज्ञानप्रत्यासत्तिर्वा स्वीकार्या । नचानिर्वचनीयोत्पत्ति सामग्र्यपि प्रतिबन्धिकाकल्प्यतइति वाच्यम्, तथासति प्रतिबन्धकान्तरकल्पनागौरवात् । किंचार्थसामग्र्याः प्रतिबन्धकत्वे पर्वते वह्निभ्रमानुपपत्ति दोषस्तवापि तुल्यः, अर्थसामग्र्यास्सत्त्वेन पर्वते वह्निमदुत्पत्तिप्रसङ्गात्, स्थाणौपुरुषवत् । नच तत्रार्थजनकदोषो नास्तीतिवाच्यम्, तथासति तादृशदोषा घटित प्रत्यक्षसामग्र्यपेक्षयानुमिति सामग्र्याः प्राबल्यसम्भवेनपर्वते भ्रमप्रत्यक्षापादनायोगात् । किंचार्थसामग्र्याः प्रतिबन्धकत्वेऽनुमित्सया पुरुषभ्रमानुमितिर्नस्यात, तथाच तत्रापि सिषाधयिषा विरह सहकृतार्थसामग्र्याः प्रतिबन्धकत्वस्य वाच्यतया पुनरपि गौरवं । तत्रैव सिसाधयिषा सहकृतानुमिति सामग्र्या अर्थप्रतिबन्धकत्वं च कल्प्यमित्यपिगौरवं । अस्तुवाविशेषणसन्निकर्षः कारणं, अस्तुप्रमायामेव, नतु भ्रम इतिकल्प्यतां । ननु लाघवा जन्यप्रत्यक्षत्वं कार्यतावच्छेदकं, नतु प्रमात्वपर्यन्तं गौरवादितिचेन्न ; भ्रमेव्यभिचारोपस्थित्या लोके सामान्येन कारणत्व ग्रहासम्भवात । नच भ्रमस्साक्षिरूपत्वान्न जन्यइतिवाच्यम्, लोकेप्रमाया इव भ्रमस्यापि उत्पत्तिप्रतीतेस्सामान्यकारणत्व ग्रहपरिपन्थिव्यभिचारोपस्थिते रावश्यकत्वात् । नच परीक्षकाणां साक्षिरूपभ्रमे उत्पत्तिप्रतीते रर्थोत्पत्त्युपाधिकत्व ग्रहाद्व्यभिचारज्ञानाभावात् सामान्येन कारणत्वग्रह इतिवाच्यम्, तथा सति चक्रकप्रसंगात्, जन्यप्रत्यक्षत्वावच्छेदेन कारणत्वे निर्णीते भ्रमस्थले कारणाभावेनान्यथा ख्यात्यसंभवेऽनिर्वचनीयोत्पत्तिसिद्धौ तद्भ्रमरूपसाक्षिणि उत्पत्तिप्रतीते रर्थोत्पत्त्युपाधिकत्वे सिद्धे जन्यप्रत्यक्षत्वाभासा, द्व्यभिचारग्रहनिवृत्तौ तदवच्छेदेन कारणत्वग्रहइति । अस्तु

षाविशेषणसन्निकर्षः प्रत्यक्षमात्रकारणं , नचात्रतदनुपपत्तिः, ज्ञानस्यै-व प्रत्यासत्तित्वात् । ननु ज्ञानस्य प्रत्यासत्तित्वे काशीस्थंपदार्थंवा-क्याज्जानतस्तम्पदार्थं शब्दतोजानामीत्यनुभूतवतो ऽपरोक्षतोजानामी-त्यनुभवप्रसंग इति चेत्तर्हि शुक्तिरजतादिस्थले ऽपरोक्षतो जाना-मीत्यनुभवाद्स्तु तत्र प्रत्यासत्तित्वम् । यत्र तथानुभवो ना-स्ति तत्रमाभूत्प्रत्यासत्तित्वं । त्वन्मते प्रत्यभिज्ञायां तत्तांश इव-काशीस्थपदार्थं जानामीत्यनुभवस्य विषयांशे स्मृतित्वोपपत्तेश्च ।

वस्तुतस्तु तत्सन्निकर्षजन्यतावच्छेदकं तद्विषयप्रत्यक्षत्वं नतु तदंशप्रत्यक्षत्वं गौरवात । तथाच दण्डयासीदित्यत्र दण्डांशेस-न्निकर्षापेक्षायां ज्ञानप्रत्यासत्तिसिद्धिः । किंच कवीनामौत्प्रेक्षिक-ज्ञानसिद्धये संशयाद्यर्थंच ज्ञानप्रत्यासत्ति स्स्वीकार्या, तदनुरोधा द्दो षविशेषासहकृत ज्ञानप्रत्यासत्ति जन्यप्रत्यक्षेषु वृक्षशिलादौ पृथि-वीत्ववदभिव्यञ्जकाभावान्नोपलभ्यते इतिकल्प्यताम् ।

नच-संशयादेर्ज्ञानाभासत्वं, तत्रैव पुरुषाभासत्वत् । ज्ञानत्वेनानु भवात् । अतएवहि त्वयापि ज्ञानाभासत्वमुच्यते । नचज्ञानेक्लृप्तकारणा भावादज्ञानत्वं , कार्यानुसारेण कारणस्य कल्पनीयत्वात् । अन्यथा रजतभ्रमस्यापि प्रत्यक्षक्लृप्तकारणाभावेन प्रत्यक्षाभासत्वा-पत्तेः । चक्षुर्जन्यत्वाभावेन स्पर्शज्ञानस्य ज्ञानत्वापरोक्षत्वयोरभाव-प्रसंगाच्च । ज्ञानस्य प्रत्यासत्तित्वे पर्वते वह्न्यनुमित्यभाव प्रसंग स्तु अनुमितिसामग्रीप्राबल्यसमर्थनेन परिहृतः ।

नन ज्ञानस्य प्रत्यासत्तित्वेऽनुमानप्रमाणोच्छेदः , तत्र ज्ञानप्रत्या-सत्तिसम्भवेन वह्निज्ञानस्य प्रत्यक्षरूपत्वसम्भवात् । नचानुमितित्वोपलंभात् प्रत्यक्षत्वाभावः; अनुमितेः प्रत्यक्षविशेषत्वसम्भवादिति चेन्न;- अनुमितौ प्रत्यक्षत्वाभावोपलम्भादेव नप्रत्यक्षान्तर्भावः । अयं दण्डयासीदित्यत्रापि दण्डज्ञानप्रत्यक्षत्वाभावस्यानुभवसिद्धत्वा त्तस्यप्रत्यक्षान्तर्भावो नस्यादिति चेन्न;- तत्रकारणान्तराभावात । नचोपनय एवकारणमस्त्विवतिवाच्यम् , भ्रमेरजतं साक्षात्करोमीति प्रत्यक्षत्वस्यानुभवसिद्धतया एतत्कालीनतया घटं साक्षात्करो मिचन्दनेसौरभ्यं साक्षात्करोमीत्युपनीते प्रत्यक्षत्वस्या

नुभवसिद्धतयाच स्वविषयविशिष्टप्रत्यक्षत्वावच्छेदेन उपनयस्येन्द्रिय सहकारित्वकल्पनान्नतस्य प्रमाणान्तरत्वम् । क्वचित्प्रत्यक्षत्वाभाव-ग्रहस्तु चक्षुरादिसम्बन्धाग्रहेण तच्चक्षुस्सन्निकर्षजन्यत्वाभावविषयो भ्रमएव । व्याप्तिज्ञानस्यतु प्रत्यक्षसहकारित्वं नक्लृप्तमिति तस्य प्रमाणांतरत्व सम्भवान्नानुमितौ प्रत्यक्षत्वाभावग्रहस्य भ्रमत्वकल्पनमुचितं । यद्यपि संशयोत्तरप्रत्यक्षेविशेषदर्शनस्य हेतुत्वमस्ति ; तथापि अवच्छेदकज्ञानत्वे न संशयोत्तरप्रत्यक्षहेतुत्वं, व्याप्तिज्ञानाभावेपि अवच्छेदकज्ञानात्, संशयो त्तरप्रत्यक्षदर्शनात् । व्याप्यज्ञानस्थलेऽपि अवच्छेदकग्रहणस्यावश्यकत्वात् । व्याप्यत्वपरामर्शस्य हेतुत्वेपि संशयोतरप्रत्यक्षत्वावच्छेदेनैव तस्य-हेतुत्वात । अनुमितेश्च संशयोत्तरत्वनियमाभावात् करणान्तरत्व कल्पनमा वश्यकं, तस्यच सम्भवत्येव प्रमाणान्तरत्वं, विशेषदर्शनस्य कोट्यन्तरप्रति बन्धकत्व पक्षे सहकारित्वाभावाच्च । अपिच प्रत्यक्षस्थले सिसाध यिषायां सत्यां प्रत्यक्षाभावस्सिसाधयिषा सहकृतानुमिति साम-ग्र्या प्रतिबन्धत्वात् । तत्र प्रतिबध्यतावच्छेदकं प्रत्यक्षत्वमेव लाघवात् नचानुमिति भिन्नप्रत्यक्षत्वं गौरवात । तथाच स्वकार्यस्य स्वेनैव प्रतिब-न्धायोगादनुमितेः प्रत्यक्षभेदसिद्धिः ।

ननु-अनुमित्सासहकृतानुमिति सामग्रीप्रतिबध्यशाब्द ज्ञानादिक-मपि न प्रत्यक्षमात्रं , ततश्च अनुमिति भिन्नज्ञानत्वं प्र-तिबध्यतावच्छेदकं अनुगतत्वात् , न प्रत्यक्षत्वं न्यूनवृत्तित्वात् , अतो नानुमितेः प्रत्यक्षत्वेपि तत्सामग्र्याः स्वकार्यप्रतिबन्धक-त्वापत्तिरिति चेन्न, प्रत्यक्षान्येन जानीयामितीच्छायां सत्यामपि शाब्दादि सामग्रीसत्त्वे तज्ज्ञानोत्पत्ते स्ताद्दशानुमित्सासहकृतानुमिति साम ग्रीप्रत्यक्षं प्रत्येव प्रतिबन्धिका तत्रच प्रतिबध्यतावच्छेदकं , प्रत्यक्षत्व मेवेतिलाघवावतारात् ।

किंच यदवच्छेदेन यद्धर्मदर्शनं तत्सामानाधिकरण्येन त द्धर्मग्रहे उपनयस्य सामग्रीत्वं । अतः पर्वतो वह्निमानित्यनु-मितिः सिद्धिप्रत्यक्षरूपा नस्यात् । नन्ववच्छेदकदर्शनवत व्याप्यदर्श

नमपि ज्ञानप्रत्यासत्ते नियामकमस्तु, तथाच कारणे फलेवा किमव-च्छेदकोल्लेखेने ति चेत् ? तथाप्यनुमिति स्थले सत्यवच्छेदकपुरस्का रेणोपनीत प्रत्यक्षसामग्रीधूमाद्यवच्छेदकगदात् , अनुमितिस्तुनावच्छेदक गोचरा, नचान्यत्तदानीं तादृशज्ञानमस्तीति तादृशस्यावश्यमनुमिति सा-मग्र्या प्रतिबन्धो वाच्यः , तत्रच न प्रतिबध्यतावच्छेदकमनुमिति - भिन्नप्रत्यक्षत्वं गौरवात् , किन्तूपनीत प्रत्यक्षत्वं , तथाच स्वकार्यस्य स्वेनाप्रतिबन्धादनुमानं पृथक् । लिंगोपहित भानाभ्युपगमेऽपि प्रत्य-क्षेण वह्निव्याप्यधूमस्य धूमाभावव्याप्यस्यच परामर्शे पर्वतो वह्निमा नित्यनुमिति जायते , तत्र धूमाभावव्याप्य परामर्शेन धूमज्ञानासम्भ वात् नोपनयनसामग्रीसम्भवः , एवं पित्तोपहतनयनस्य श्वेताश्वे पीतत्वभ्रमदशायां श्वैत्याभावव्याप्यत्वेन पीतत्वस्य पीतत्वाभावव्याप्य त्वेनच कस्यचित्परामर्शे श्वैत्याभावानुमिति जायते , तत्र पीतत्वाभा वव्याप्यपरामर्शस्य सत्त्वेन पीतत्वस्य श्वैत्याभावानुमिति विषयत्वासं म्भवात् नोपनयसामग्रीत्यनुमान पार्थक्यं ।

वस्तुतस्तु अनुमितौ क्वापि न लिंगभानं, मानाभावात् । ननु पक्षतावच्छेदकावच्छिन्ने साध्यसिद्धिरनुमाने फलं , तत्रच पक्षतावच्छेदकं परामर्शविषयीभूत धर्ममात्रं नतु लिंगान्यत्व विशेषितं गौरवात् ; अतो लिंगभानमनुमिताविति चेन्न ;- धूम-सामानाधिकरण्येन वह्नेस्सिद्धत्वेन सिद्धसाधनात , लाघवेन स्वसमानप्रकारकानुमितिं प्रत्येव सिद्धेः प्रतिबन्धकत्वात् । किंच पर्वतो वह्निव्याप्यवानिति शाब्दज्ञानादनुमिति दर्शनात्तत्रच धूमाद्य वच्छेदकविशेषा ज्ञानादुपनयसामग्र्यभावादनुमानं पृथक् । किंच - अनुमितेर्ज्ञानप्रत्यासत्ति जन्यत्वे परामर्शाविषयीभूत मपि सन्निकृष्ट-सर्वं प्रतीयेत, चन्दने उपनीतसौरभ्य ज्ञानस्य तत्कालसन्निकृष्टरूपा-दिविषयकत्व दर्शनात् ।

यदुक्तं -- कैश्चिदनुमिते रुपनीतान्तरवैलक्षण्यमुभयसिद्धं , तथा चानुमितिस्थले तादृशप्रत्यक्षानुत्पत्ति रनुमितिसाम ग्र्या प्रतिबन्धाद्वाच्या , तत्रानुमितिसामग्रीप्रतिबध्यतावच्छेदक मुप

नीत प्रत्यक्षत्वं नत्वनुमिति भिन्नत्वविशेषितं गौरवा -
त् ; तथाचानुमिति सामग्र्यानुमितेः प्रतिबन्धा सम्भवात् -
अनुमितिःप्रत्यक्षभिन्ने त्यनुमानं पृथगिति । तन्न, तयोर्हि वैलक्षण्यमनुमि
तित्वतदभावावेव, अन्यस्यादर्शनात्, तथाचानुमितित्वाभावविशिष्टप्रत्यक्षा
नुत्पत्ति रनुमितिसामग्र्याः परामर्शस्य सत्वात्, विशेषसामग्रीसहिताया
एव सामान्यसामग्र्या जनकत्वात् ; ततः किं प्रतिबन्धककल्पनया ।

यच्चोच्यते - अनुमितित्वस्यानुभवत्वव्याप्य प्रत्यक्षत्वव्याप्यमानसत्व
व्याप्यत्वकल्पनापेक्षया लाघवादनुभवत्वव्याप्यत्वमेव कल्प्यतामिति । त-
न्न , प्रत्यक्षत्वव्याप्यत्वाभावमानसत्वव्याप्यत्वाभावकल्पनापेक्षया तदुभ-
यव्याप्यत्वकल्पनस्यैव लघुत्वात् ॥

यदप्युक्तं -- अप्रसिद्धाभावसाध्यके अयं वह्नित्वाभा -
ववद्विशेष्यकोन दाहसमर्थप्रवृत्तिजनकत्वादित्यादिव्यतिरेकिणि साध्यस्य
पूर्वाज्ञाततया उपनयनासम्भवात् पृथगनुमानमिति तन्न ; साध्यस्या
प्रसिद्धतया तद्विशिष्टानुमिते रसम्भवात् ।

नच पक्षविशेषणिकैव सास्यादिति वाच्यम् ; अनुमितेः पक्षविशे-
ष्यकत्वनियमात् , अन्यथा वह्न्यनुमाने ऽपि वह्निविशेष्यकवह्निविशेषण
कोभयाकारानुमितिप्रसंगात् । ननु दण्डविशिष्टप्रत्यक्षादिष्विव अदृष्टव
शादेव प्रकारविशेष्यव्यवस्थेतिचेत् ? प्रसिद्धसाध्यके सर्वत्र साध्यप्रका-
रतानिर्वाहकादृष्टनियमकल्पनेमानाभावात् । वेदान्ताचार्यास्तुन्यायपरिशु
द्धौ व्यतिरेकिदूषणप्रस्तावे " प्रकृतस्य व्यतिरेकित्वपरामर्शाभावे कथं
[illegible]करिष्यती " ति अनुगृह्णन्ति । तेषा मयमाशयः,- साध्यांशे
[illegible]दकप्रकारकव्यतिरेकव्याप्तिज्ञानंहि साध्यतावच्छेदक-
प्रकारकानुमितौ कारणं, एवंचाभावसाध्यके स्वप्रामाण्याभावत्वादे स्सा
[illegible] अप्रामाण्या भावाभावत्वेन व्यतिरेकव्याप्तिज्ञानमे-
[illegible]त्वप्रामाण्यत्वेन, प्रकृतेचाप्रामाण्याभावाप्रसिद्धेः ता
दृश[illegible]नासम्भवान्नानुमितिरिति ।

ननु तस्य साध्यांशे साध्यतावच्छेदकप्रकारकत्वमपि प्रयोजकमिति वाच्यम् । यत्र उष्णस्पर्शवदभाव स्तत्र धूमाभावइतिव्यतिरेकव्याप्तिग्रहेपि तेजस्त्वप्रकारकानुमित्यभावात् ।

नच यद्रूपेण व्यतिरेकव्याप्तिज्ञानं तदवच्छिन्नाभावत्वप्रकारकानुमिति रित्येव नियमः । तथाचा प्रामाण्यत्वे नव्यतिरेकव्याप्तिज्ञानादप्रसिद्धा प्रामाण्याभावत्वप्रकारकानुमिति र्युक्तेति वाच्यं,- तथासति यत्र वह्न्य भाव स्तत्र धूमाभावइति व्यतिरेकव्याप्तिज्ञानाद्वह्न्य भावाभावत्वप्रकारका नुमिति स्स्यात् , नतु वह्नित्वप्रकारिका, नचेष्टापत्तिः , इष्टतावच्छेदकाप्रकारकत्वेन वह्न्यर्थिप्रवृत्त्यनुपपत्तेः । नच वह्निमानित्यनुमानान्तरात्प्रवृत्तिः , तादृशप्रमाणाङ्गीकल्पने मानाभावात् । किंचान्वयव्यतिरेक्यनुमितौ वह्नित्वप्रकारकत्व मुभयसिद्धं , तत्रान्वयव्याप्ते र्व्यतिरेकव्याप्तिज्ञानप्रयोज्यवह्न्यभावाभावत्व प्रकारकानुमिति प्रतिबन्धकता कल्पनागौरवं स्यात् । किंच संयोगव्यक्तिविशेपानुमानं विभागविशेषणव्यतिरेकव्याप्तिपुरस्कारेण नस्यात । तत्र नतत्संयोगाभावमात्रव्याप्ति रुपयोगिनी , तथासति तद्विभागविरुद्धसंयोगस्याप्यनुमानप्रसङ्गात् ; किन्तु प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्न संयोगाभावव्याप्तिः; तादृशसंयोगाभावाभावश्च नसंयोगः, संयोगाभावप्रदेशे ऽपि प्रतियोगिवैयधिकरण्यावच्छिन्नसंयोगाभावस्याभावात् । इतरभेदानुमानंच न स्यात् , भेदस्य तादात्म्याभावत्वाभावात् । तादात्म्याभावेन भेदानुमानस्याप्युक्तरीत्यैवासिद्धेः । येन रूपेण व्यतिरेकव्याप्तिज्ञानं तद्विरोधिनो ऽनुमितिः, अतो भेदस्याप्यनुमितिः विरोधित्वादिति चेत् ; किंविरोधिविषयानुमितिमात्रं, उत विरोधित्वेनानुमितिः किंवा विरोधितावच्छेदकरूपेण । नाद्यः , भ्रमाद्यत्राभिधेयत्वाभावः तत्र प्रमेयत्वाभावइति व्याप्तिग्रहे प्रमेयत्वेना भिधेयत्वानुमानाभावप्रसङ्गात् । नद्वितीयः, अप्रसिद्धसाध्यक व्यतिरेक्यसिद्धेः , अभावस्य विशेष्यत्वा दभावत्वस्य च पूर्वज्ञातस्य प्रकारत्वादेव ह्यभावसाध्यको ऽप्रसिद्धसाध्यकोपिसम्भवेत्, तद्विरोधित्वंचज्ञातं नप्रकारइति नतत्प्रकारकाप्रसिद्धसाध्यकसम्भव ।

न तृतीयः , व्याप्याभाववत् व्याप्यावच्छिन्नप्रतियोगिकभेदस्यापि सर्वत्र व्यतिरेकिणि सिद्ध्यापत्तेः ; धूमस्य व्यतिरेकित्वदशायां वह्नित्ववह्न्यभावाभावत्व वह्न्यभाववद्भेदत्वत्रितयप्रकारकानुमित्यापातात्; गन्धात्यन्ताभावस्य पृथिवीत्वाभावव्याप्तिग्रहात् तत्र गन्धत्व तत्प्रागभावत्व तद्ध्वंसत्व गन्धाभाववद्भेदत्व गन्धात्यन्ताभावाभावत्व प्रकारकानुमिति प्रसंगाच्च ; सुरभिधूमस्य चन्दनवह्निव्याप्तिग्रहे धूमाभावमात्रस्या प्यनुमानापत्तेः ; यत्र नित्यद्रव्यत्वं तत्र समवेतत्वाभावइति व्याप्तिग्रहे समवेतत्वेन नित्यत्वाभावद्रव्यत्वाभावयो स्सिद्धिप्रसंगाच्चेति ।

किंच व्यतिरेक्यनुमाना सिद्धे नोक्तविधयानुमानपार्थक्य सम्भवः । तथाहि – व्यतिरेकसहचाराद्यत्रान्वय व्याप्ति गृह्यते सव्यतिरेकीत्येकं मतं, व्यतिरेकव्याप्त्यैवयत्रानुमिति स्स व्यतिरेकीत्य परं मतं । तत्र नाद्यः , तत्सहचारस्य तद्व्याप्तिग्राहकत्वात् । ननु – प्रमेयत्वेन सहचारग्रहे व्याप्त्यग्रहात् यस्मिन्नधिकरणे सहचारो गृह्यते तन्निष्ठव्यभिचारज्ञानविरोधि सहचारज्ञानं व्याप्तिग्राहकं वाच्यं, तादृशंच व्यतिरेकसहचारज्ञानमपि, नचात्र तत्सहचारित्वमपि विशेषणं प्रवेश्यं गौरवादिति चेन्न ; धूमस्यान्वयव्यतिरेकित्वा नुपपत्तेः, वह्न्यभावधूमाभावयोः क्वचिद्ग्रहणे तत्रैव धूमो भविष्यतीति वा भूतइति वा ज्ञानस्य अविरुद्धत्वात् व्यभिचारज्ञानाविरोधात् । ननु यत्कालीनतया सहचारग्रहः तत्कालीनतया व्यभिचारज्ञानविरोधित्वं विवक्षितं, तच्चात्रापीतिचे तर्हि यत्र धूमस्तत्राग्निरिति कालाविषयसहचारग्रहाद्धूमस्य वह्निव्याप्तिर्नगृह्येत । किंच सहचारज्ञानेऽपि प्रमेयत्वेन व्यभिचारज्ञान सम्भवान्नतस्य कारणतावच्छेदकत्वं । नच व्यभिचार ज्ञानेऽपि व्याप्तिज्ञानविरोधित्वं विशेषणं, प्रमेयत्वेन व्याप्तिज्ञानं प्रति तस्याप्यविरोधित्वात् । नच यद्व्याप्तिज्ञानविरोधि यद्व्यभिचारज्ञानं - तद्विरोधिसहचारज्ञानं तद्व्याप्तिग्रहे हेतुरिति वाच्यम् । अनुमित्यौपयिकधर्मत्वेन यद्व्याप्तिज्ञानं तस्य विरोध्यनुमित्यौपयिक धर्माभावत्वेन व्यभिचारज्ञानं तद्विरोधिचानुमित्यौपयिक धर्मत्वेन सहचारज्ञानमि

ति तस्य तादृशव्याप्तिज्ञान हेतुत्वापत्तेः । नच व्याप्तिज्ञानेऽनुमिति जन कत्वं विशेषणं , फलोपधानस्य असार्वत्रिकत्वादनुमिति जननस्वरूप- योग्यत्वस्य विशेषणज्ञानत्वादिना नुमिति जनके तस्मिन्नपि सत्त्वात । अनुमितित्वावच्छिन्न जनकतावच्छेदकावच्छिन्नत्वं विवक्षितमिति चेन्न, अनुमित्यौपयिकधर्मवत्पक्षके परामर्शे विषयतया तत्सत्त्वात् ; तत्रानुमित्यौपयिक धर्मत्वेन व्याप्तेरवगाहनात तद्विरोधिव्यभिचार- ज्ञानविरोधि सहचारज्ञानत्वेन अनुमित्यौपयिकधर्मवानिति सहचार ज्ञानस्य हेतुत्वापत्तेः ।

एतेन यस्मिन् ज्ञाने यस्याव्याप्तेर्विषयतया अनुमिति जनकतावच्छेदक त्वं तद्व्याप्तिज्ञानविरोधि व्यभिचारज्ञानविरोधित्वं विवक्षितमिति निरस्तम्, व्याप्तेः पक्षतावच्छेदकतया तद्विषयताया अपि तत्रावच्छेदकत्वात । ननु- र्लिंगेव्याप्तिप्रकारकत्वेन यज्ज्ञानमनुमिति हेतुः तद्विरोधित्वं व्यभिचारज्ञाने विवक्षितमितिचे द्व्याप्तिप्रकारकत्वस्य प्रमेयवानिति ज्ञानसाधारण्येना नव च्छेदकत्वात् । अतो व्याप्तौ व्याप्तित्वातिरिक्त धर्ममात्राप्रकारक व्या प्तिप्रकारकत्वेनानुमिति हेतु र्यद्व्याप्तिज्ञानं तद्विरोधित्वं वाच्यम् , तथाच सहचारत्वातिरिक्त धर्ममात्राप्रकारक तत्सहचारज्ञानंहेतुर स्तु लाघवात् । अवृत्तित्वव्याप्यतावच्छेदकयो रभावसामानाधिकर ण्याभाव व्याप्यतावच्छेदकयोश्च सहचारज्ञाने त्वदुक्तावच्छेदकम- ति प्रसक्तम् । व्यतिरेकव्याप्त्यैवानुमिति रिति पक्षोप्ययुक्तः ; त- न्निरूपितव्याप्तिज्ञानस्य तदनुमिति हेतुत्वात । नच प्रमेयत्वेन व्या प्तिज्ञाना दनुमित्यदर्शना द्व्यभिचारज्ञानविरोधिव्याप्तिज्ञानं हेतुः, तच्च व्यतिरेकव्याप्तिज्ञानमपीति वाच्यम् । व्याप्तिज्ञानेपि प्रमेयत्वेन व्यभिचारज्ञानसम्भवात् , धूमो यत्किंचिद्व्यभिचारीति ज्ञानसम्भवाच्च तस्य व्यभिचारज्ञानाविरोधित्वात् । नच यस्यकस्यचिद्व्यभिचारज्ञान स्य विरोधीति विवक्षितं, वह्निव्याप्यइति ज्ञानंच वह्निव्यभिचारीधूमइत्या कारकज्ञानविरोधीति वाच्यम् , वह्न्यनुमित्यौपयिकधर्मत्वेनव्याप्तिज्ञानस्य वह्न्यनुमित्यौपयिकधर्मशून्यइत्याकार व्यभिचारज्ञानविरोधितया तिप्रसं गात । तस्मादनुमितौ साध्यं यदवच्छिन्नप्रकारताकं तदवच्छिन्नप्रकारताकं

व्यभिचारत्वान्यधर्ममात्राप्रकारकंयत्तन्निरूपितव्यभिचारज्ञानं तद्विरोधिव्याप्तिज्ञानत्वेनानुगमो वाच्यः । तथाचानुमितौ साध्यं यदवच्छिन्नप्रकारताकं तत्साध्यांशे तदवच्छिन्नप्रकारताकं तन्निरूपितव्याप्तौ व्याप्तित्वातिरिक्तधर्ममात्राप्रकारकं तन्निरूपितव्याप्तिज्ञानमनुमितिहेतुरस्तु लाघवात् । किंच-एवंसति पर्वतो वह्निव्याप्यवानिति परामर्शा दनुमित्यभ्युपगमविरोधः, तस्य व्यभिचारज्ञानाविरोधित्वात् । किंच व्यतिरेकिणि साध्यसन्देहस्य साध्याभावरूपव्याप्यसन्देहरूपत्वाद्धेतुनिश्चयस्य व्यापकाभावनिश्चयरूपत्वात् व्यभिचारसंशयाद्व्याप्त्यग्रहा दनुमित्यसम्भवात् । नच व्यतिरेकव्याप्तिग्रहेनेदं प्रतिबन्धकं, किन्त्वन्वयव्याप्तिग्रहएवेति वाच्यम् - धूमवह्निव्याप्तेरपि धूमवह्न्योः स्वाभावव्यतिरेकतया व्यतिरेकव्याप्तित्वा दन्वयव्याप्तावपि प्रतिबन्धकत्वाभावापत्तेः । नच व्यतिरेकत्वेन व्याप्तिग्रहं प्रति नप्रतिबन्धकत्व मन्यत्रतु प्रतिबन्धकत्वमिति वाच्यम्, तथा सति वह्न्यभावाद्धूमाभावानुमानं कृतकत्वेनानित्यत्वानुमानं चान्वयव्यतिरेकिनस्यात् । धूमत्वनित्यत्वत्वाभ्यां व्याप्तिग्रहाद्व्यतिरेकत्वेना ग्रहाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धात । नचैतदर्थं व्यतिरेकत्वेनैव व्यतिरेकव्याप्तिग्रहः कारणमिति वाच्यम्, तथा सत्यप्रसिद्धसाध्यकव्यतिरेक्यनुपपत्तेः । नच तत्र स्वरूपेणैवाप्रसिद्धसाध्याभावस्य व्याप्तिग्रहादनुमिति रिति वाच्यम्, तथा सत्यनुमानचातुर्विध्यप्रसंगात् । नच साध्याभावस्य यत्र व्याप्तिग्रहः स व्यतिरेकी, सच्चस्वरूपेणवा साध्याभावत्वेनवेति नविशेषः अतो नचातुर्विध्यमिति वाच्यम्, यत्राभिधेयत्वाभाव स्तत्र प्रमेयत्वाभावइत्यत्यन्ताभावे प्रमेयत्वप्रतियोगिकत्वभ्रमाद्व्याप्ति ग्रहादभिधेयत्वानुमानस्यासंग्रहापत्तेः, साध्याभावाप्रसिद्धेः । किंच यदि व्यतिरेकत्वेन व्याप्तिग्रहं प्रति नप्रतिबन्धकता तदा यत्र व्यतिरेकव्याप्तिपुरस्कारेण वह्न्यभावेन धूमाभावो ऽनुमीयते तत्र धूमाभावसंशये ऽपि धूमाभावाभावत्वेन व्याप्ते र्ग्रहणंधूमत्वेना ग्रहणंच स्यात् । वस्तुतस्तु गौरवेणानवच्छेदकत्वान्न धूमाभावाभावत्वेन व्याप्तिग्रहः व्यभिचार-

संशयाच्च नधूमत्वेन व्याप्तिग्रहइत्यनुमानमेव तत्र नस्यात । तस्मा दस्मदुक्तरीत्या नुमानपार्थक्यं नान्यथा ।

वेदान्ताचार्यैस्तु न्यायपरिशुद्धौ " नापिसंस्कारादिप्रत्यासत्त्या मानसते " ति मानसत्व माशंक्य, " बाह्येन्द्रियग्राह्येष्वपि तत्तत्प्रत्यासत्त्या मानसत्वप्रसंगात् । नचैतदिष्टं बाह्यान्तरप्रत्यक्षविभागायोगात्, बाह्यार्थेषुच मनस स्स्वातन्त्र्यादर्शनात् . यत्परतन्त्रता मनसः तत्पृथक्प्रमाणमित्युच्यते । " इति पार्थक्यं साधितं । तत्र शंकाग्रन्थे संस्कारादीत्यादिशब्दाज्ज्ञानप्रत्यासत्ति विवक्षिता । परिहारग्रन्थस्यायमाशयः, बाह्यप्रत्यक्षस्य मानसत्वप्रसंगपरिहारः चक्षुरादीनां मनः प्रतिसहकारित्वात् यदसाधारणं सहकार्यासाद्यमनोवहिर्गोचरप्रमांजनयति तदेव प्रमाणान्तरमितिन्यायात्कार्यः; तदनु मानेपि तुल्यमिति । नचानेन प्रकारेणालोकस्यापिपृथक्प्रमाणतापत्तिः, प्रमाणान्तरमित्यनेन प्रमित्यन्तरकरणत्वस्य विवक्षितत्वात् । प्रमित्यन्तरमितिच मानसभिन्नप्रमिति विवक्षिता । एवं न्यायानुगृहीतंवचनमपि तत्रैव वेदान्ताचार्यै रुदाहृतम्- "तथाच- भगवता मनुनोक्तम् ' प्रत्यक्ष मनुमानं च शास्त्रं च विवि धागमम् । त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥ ' इति, शौनकेनाप्युक्तं -'दृष्टानुमानागमजंध्यानस्या लम्बनन्त्रिधा ' 'इति "इति ॥

यत्तु यत्रयदनुभूतं तत्रैवज्ञानं प्रत्यासत्तिर्भवदपिभवेत, अन्यथापूर्वं दण्डिनिदण्डवत्तया विज्ञातेऽपि पश्चात्सन्निकृष्टे स्मृतदण्डवैशिष्ट्यानुभवप्रसंगादिति । तदयुक्तम् - काव्यादिमूलभूतोत्प्रेक्षिकज्ञान प्रतियोगिविशिष्टाभाव प्रत्यक्षादीनां विशेषणोपनयमात्रेण दर्शनात् ज्ञानमात्रस्य प्रत्यासत्तित्वकल्पनात् ।

नचैवमुक्तातिप्रसंगः, तत्रावच्छेदकज्ञानदोषोत्प्रेक्षादीना मन्वयव्यतिरेकाभ्यां सहकारित्वकल्पनात् । सामान्यकारणमात्रात्कार्यानुत्पत्तिस्थले विशेषकारणकल्पनस्य युक्तत्वात् । अन्यथा त

वापि तत्रग्रहणस्मरणात्मक दण्डविशिष्टज्ञानप्रसंगात् , तदर्थमवच्छेदकज्ञानस्य स्मृतिसामग्रीसहकारित्वकल्पनस्य तवाप्यावश्यकत्वात् । अथवास्तु दोषएव प्रत्यासत्तिः । यदुक्तं दोषस्य प्रत्यासत्तित्वेन कारणत्वे अप्रामाण्यस्य परतस्त्वं नस्यात् , प्रत्यक्षसामान्यहेत्वतिरिक्तहेत्वभावात् , दोषान्वयव्यतिरेकयोः प्रत्यासत्तिविषयत्वेन दोषत्वेन कारणत्वकल्पने मानाभावात् , यथार्थरजतादिविशेषणांशज्ञाने तस्या जनकत्वाच्च नदोषः प्रत्यासत्तिरिति । तत्रदोषविधयापि कारणत्वान्नाप्रामाण्यस्य स्वतस्त्वापत्तिः ।

नच-तथाकारणत्वकल्पकाभावः, अनुमिति भ्रमादौ दोषस्य कारणत्वदर्शनात् , प्रमात्वाप्रमात्वयोरुभयोरपि स्वतस्त्वेज्ञानमात्रस्या प्रामाण्यप्रसंगाच्च दोषविधयापि कारणत्वावश्यम्भावात् ।

नच-यथार्थरजताद्यंशस्य दोषजन्यत्वानुपपत्तिः, रजतस्यशुक्तौबाधितत्वेन तदंशज्ञानस्या यथार्थत्वात् । नहि स्वरूपेण बाध्यं यत्तद्विषयत्वमयथार्थत्वं, तवापिपरोक्षभ्रमस्य दोषजन्यत्वानुपपत्तेः ।

एतेन सत्यरजतस्थले रजतांशज्ञानस्य दोषाजन्यत्वाद्व्यभिचारेण भ्रमेऽपि रजतांशज्ञानस्य नदोषजन्यत्वमितिनिरस्तं । किंच तवापि प्रमास्थलीयरजतस्य दोषाजन्यत्वा द्व्यभिचारेण भ्रमस्थलेऽपि दोषजन्यता नस्यात् । अप्रमात्वस्यैव दोषजन्यतावच्छेदकत्वा न्नोक्तव्यभिचारः, तच्चाप्रमात्वं तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वात्मकम् , तच्च प्रकारविशेष्यसंसर्गरूपांशत्रयघटित मित्युक्तरूपांशत्रयसमुदायो दोषविधया दोषजन्यः, विशेषणांशवैशिष्ट्यांशौ प्रत्येकं प्रत्यासत्तितया तज्जन्यौ, तत्प्रत्यक्षस्य तत्सन्निकर्षजन्यत्वादिति विवेकः ।

यत्तु प्रत्यासत्तिविधयाप्रमाजनकजातीयस्यैव विशेष्यांशे सन्निकर्षत्वदर्शनात् विशेषणांशेपितादृशस्यैव सन्निकर्षत्वमिति कथं दोषः प्रत्यासत्तिरिति । - तन्न, कथंचित्साजात्यस्यात्रापि सत्वात् । प्रत्यासत्तिनिष्ठविशेषकारणतावच्छेदकरूपेण साजात्यं विवक्षितम् , तच्च संयोगत्वदोषत्वादि-

कमितिचेन्न । - अप्रयोजकत्वात्, अन्यथा संयोगस्यैव प्रत्यासत्तित्वमित्य पि निर्बन्धो दुर्निवारस्स्यात् ।

यच्चोक्तमन्यथाख्यातिमते रजतएव प्रवृत्तिस्स्यात् नशुक्तौ, ज्ञानस्य स्वविषये प्रवर्तकत्वात् । ननु नरजतं विषयः शुक्तिरेवेतिचेत ; अन्याकार ज्ञानमन्यालम्बनमिति संविद्विरोधइति । तन्न – रजताकारज्ञानस्य शुक्त्या लम्बनतया स्वविषयएवप्रवर्तकत्वात् । नच संविद्विरोधः,आकारशब्देन प्र कारविवक्षायां सप्रकारकज्ञानासिद्धिप्रसंगात । विषयविवक्षायामपि तथा । अन्यमात्रविषयत्वं त्वसिद्धं । एवंच नसंविद्विरोधः, नवा प्रवृत्त्यनुपपत्तिः, यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयी क्रियते तत्र ज्ञानस्य प्रवर्तक-त्वात् । नन्विदं रजतमिति ज्ञानं पुरोवर्त्तिनो रजतत्वविशिष्टाभेदं वि-षयीकरोति , नरजतत्वसंसर्गं, रजतमिति स्मृतावुपसर्जनस्य तस्या रोपासम्भवात् , स्वातन्त्र्येणानुपस्थितस्याप्यारोपे संसर्गाभावधीनियाम कप्रतियोग्यारोपसमये तादात्म्यारोपप्रसंगइतिचेन्न ।–त्वया मया वारो-पभेदस्याभावधीभेदनियामकत्वानंगीकारात् । किंचारोपहेतूपस्थितौ स-त्यामपि तद्धेतुदोषाभावान्न स आरोपः, दोषस्य फलकल्प्यत्वात् । वस्तुतस्तु तादात्म्यसंसर्गकः प्रतियोग्यारोपएव अन्योन्याभावधीनियामकः, यदि तादात्म्यस्यैव संसर्गारोप स्तदा घटत्वात्यन्ताभावघटान्योन्याभा वयो र्युगपत्प्रतीतिनियमापत्तिः , तन्नियमाभ्युपगमे भूतलनिष्ठाभ्यां घ टान्योन्याभावघटात्यन्ताभावाभ्यां किमपराद्धं । तदुभयारोपेच दोषादेव व्यवस्था । ननु तथापि लाघवादिष्टज्ञानं स्वविषये प्रवर्तकमस्तु , न-त्विष्टतावच्छेदकवैशिष्ट्यज्ञानं स्वविशेष्येप्रवर्तकं, कार्यतावच्छेदकका-रणतावच्छेदकयो र्गौरवात् , तस्माद्रजतत्वविशिष्टज्ञानान्नैव प्रवृत्ति-स्स्यात्, रजताभेदारोपात्तु इष्टस्य पुरोवर्त्तिन्यभावादापणएव प्रवृत्तिप्रसंगइ-तिचेन्न ।-इष्टशब्देन किमिच्छाविषयो विवक्षितः इष्टतावच्छेदकाश्र योवा? आद्ये न शुक्तौ प्रवृत्त्यनुपपत्तिः, तस्या इच्छाविषयत्वात् । द्वि-तीये तत्रापि शुक्तौ प्रवृत्त्यनुपपत्तिः । रजतएव प्रवृत्तेः इष्टापत्तिरिति चेन्न ।-अस्ति तावच्छुक्तौ रजतेच्छा जन्याप्रवृत्तिः रजतप्रकाश शु

क्तिविषय शुक्तौ प्रवर्तकत्वादित्यादिस्वोक्तिविरोधात् । किंच परोक्ष-भ्रमे तवाप्ययमतिप्रसंगस्समानः , तत्रान्यथाख्यात्यंगीकारात् । किञ्च दर्पणादिषु पृष्ठभागस्थरजतादिप्रतिबिम्बभ्रमदशायां विशेषादर्शनेसति पुरतः प्रवृत्ति र्नस्यात् । पृष्ठभागएवतुस्यात् । दूरस्थवनस्पत्यादे र्विंप्र कृष्टपर्वतसंसर्गभ्रमे सति पर्वते प्रवृत्ति र्नस्यात् । किंच तवापि क-थं रजतस्मृतिमात्रान्नापणे प्रवृत्तिः । तत्स्थतया ज्ञानाभावादिति चेतुल्यं ममापि । किंच इष्टज्ञानस्य प्रवर्तकत्वे रजतभ्रमदशायां शुक्त्यर्थिन शुक्तौ प्रवृत्त्यापत्ति इष्टतावच्छेदकप्रकारकत्व मप्यपेक्षितमिति चेत्तर्हि रजतशुक्त्यो शुक्तिरजते इमे इति भ्रमेरजतभ्रमाविषयशुक्त्यंशे प्र वृत्त्यापत्तिः । इष्टतावच्छेदकप्रकारकज्ञानं तत्प्रकारांश विशेष्येप्रव र्तमिति चेन्न । कार्यतावच्छेदके इष्टप्रवेशेगौरवात् । वस्तुतस्त्विष्टसाध नता ज्ञानमिच्छाद्वारा प्रवृत्तिहेतुः , एवंचेदं रजतमंगुळीय कसाधनं रजतत्वादित्यनुमाने रजतज्ञानं पक्षज्ञानतयोपयुज्यते , तथाच शु-क्तौरजतत्वे ज्ञाते तेन हेतुना इष्टसाधनताज्ञानं तत्र सम्भवतीति-न तत्र प्रवर्तकतावच्छेदकचिन्तावकाशः ।

ननु शुक्तिरजतत्वसंसर्गस्य शून्यतया सन्निकर्षाभावात् , अ-पूर्वतया तस्य ज्ञानप्रत्यासत्तिविरहाच्च , तत्प्रतीतेरसिद्धे र्नान्यथा-ख्यातिसम्भवः ।- नैवं, सत्यस्यैव रजतत्वसम्बन्धस्य ज्ञानेन प्रत्यासन्नस्य प्रतीतिसम्भवात ।

ननु सत्यस्यैव प्रतीतौ कथमन्यथाख्यातिः । तत्राविद्यमानस्य संस गस्य तत्र प्रतीतिरन्यथाख्यातिरिति चेत् ; केयं तत्र प्रतीतिः, न-तावत्तत्र विद्यमानस्य प्रतीतिः, तत्राविद्यमानस्य तत्र विद्यमानत्वासंभ वात । नापि तत्र विद्यमानतया प्रतीतिः, संसर्गे विशेषणाप्रतीतेः । शुक्ति विशेष्यकरजतत्वविशेषणक प्रतीतौ रजतत्वसंसर्गस्सत्यएव संसर्ग-विधया भासते , तस्यच संसर्गस्य तस्मिन् शुक्तिलक्षणविशेष्ये ऽवि-द्यमानत्वादन्यथाख्यातिरिति चेन्न; समूहालम्बनमात्रस्य भ्रमत्वप्रस ङ्गात, घटपटसमूहालम्बनं हि घटरूप विशेष्याविद्यमानसंसर्गविषयमिति । उच्यते , विशिष्टज्ञाने तावद्विशेषणविशेष्यसम्बन्धानां भासमानता

सर्वलोकप्रसिद्धा दुरपह्नवा, एवं समूहालम्बने विशेषणादिव्यवस्था दृश्यते , किंचित्प्रत्येव किंचिद्विशेषणं नान्यं प्रतीति; इयमपि व्यवस्था सर्वप्रसिद्धा नापह्नवमर्हति । ततश्च घटपटसमूहालम्बने घटविशेष्य·तावच्छेदेन घटत्वं विशेषणं, तत्सम्बन्धस्संसर्गः, घटत्व विशेषणक-त्वावच्छेदेन घटो विशेष्यः । एतदुक्तं भवति - अस्ति तावज्ज्ञाने वि-षयितासर्वलोकप्रसिद्धा , साच विशेष्यविशेषण संसर्गनिरूप्या, घट विशेष्यिका घटत्वविशेषणिका तत्संसर्गिकाचेति । ततश्च विषयितांप्र त्येव विशेष्यताविशेषणताच , अतएव विशेषणविशेष्यभावोज्ञानकृत – एव नतु वस्तुकृतइत्युच्यते, एवंच विषयितांप्रति विशेषणविशेष्ययोः तादृशस्वभावनिबन्धनएव परस्परविशेषणविशेष्यभावव्यपदेशः, साच विषयिता समूहालम्बने विशेष्यभेदेन नाना , तत्र यत्र विषयितायां येषां विशेषणविशेष्यसंसर्गाणां निरूपकत्वं तेषामेवेदमस्यविशेषण--मित्यादिरूपेण परस्परसम्बन्धित्वं नान्येषां । किञ्चिद्विषयितायां विशेष णभूतं यदा समानाधिकरणसमानकालीनविषयितान्तरे विशेष्यं भ-वति तदा विशिष्टवैशिष्टयज्ञानव्यपदेशः, यज्ज्ञानविषयिताया विशेष्या वृत्तिविशेषणसम्बन्धो निरूपकः सान्यथाख्यातिः ।

ननु सिद्धान्ते ज्ञातु रेकस्य ज्ञानमेकमेव , विषयिता भेदादेव ज्ञानभेदव्यपदेशो वाच्यः, तत्र विषयिताभेदे कथं समूहालम्बनमेकं ज्ञानं । उच्यते, प्रसरणात्मिकावस्था एकाज्ञानैक्यव्यपदेशप्रयोजिका । नच परोक्षे प्रसरणाभावः, तत्राप्यान्तरस्य प्रसरणस्य सत्त्वात् । यद्वा वि-षयत्वमेवावस्था । नच समूहालम्बनासिद्धिः, विषयितानां समूहीभूयैक तामापन्नानां ज्ञानैक्यव्यपदेशनिबन्धनत्वात् । समूहीभावश्चैककालावच्छे देन एकज्ञानगततयेति । एवंच संसर्गस्य सत्त्वेऽपि विशेष्यासंसर्गि-प्रकारकत्वादन्यथा ख्यातिसिद्धिः ।

यत्तु -- विशिष्टज्ञानं विशेषणविशेष्यो भयसंसर्गविषयं, अभेदज्ञानंच स्वप्रकारीभूत धर्मद्वयाश्रयाभेद विषयमिति नि-यमात् कथं नासत्ख्यातिरिति । तन्न ; तादृश नियमे मा-

नाभावात् । विशिष्टज्ञानत्वंतु सप्रकारकत्वमेवेति नतदनुपपत्तिस्तत्र मानं। नन्विह प्रतीतस्य रजतस्यान्यत्र सत्त्वं विना नान्यथाख्याति स्सिध्यति, तच्च नभ्रान्त्या बाधेन वा सिद्ध्यति, तयो रिह स दसद्भावमात्रविषयत्वात् । नच भ्रान्तेः पूर्वजन्यत्वात अनुभवस्य दे- शान्तरे वाच्यत्वात् भ्रान्त्यनुपपत्त्या न्यत्र सत्त्वं सिद्ध्यति, भिन्न विषयादपि समानप्रकारकपूर्वानुभवात् भ्रान्त्युपपत्तेः । नचासतो नि षेधायोगात् त्रैकालिकनिषेधविषयस्य चात्रसत्त्वायोगात् बा- धानुपपत्त्या तत्सिद्ध्यति -- तत्र रजतस्या प्यनु - भूयमानतया त्रैकालिक तदभावस्यैवा सिद्ध्या पातात् । सदसद्विलक्षणरजतस्य त्रैकालिकाभावेऽपि सत्त्वोपपत्ते श्चेति चेत्, न, रजतत्वस्यैव शुक्तौप्रतीयमानतया तस्यान्यत्रसत्त्वे आपण रज तानुभवस्यैव मानत्वात् । रजतस्य तत्र प्रतीयमानत्वेऽपि क्लृ- प्तविषयत्वकल्पने लाघवम् । तत्र रजतस्य विद्यमानत्वे सर्वैरु पलभ्येत । सामग्र्यभावाच्च नतत्र रजतसम्भवः । वह्निभ्रमादौ च दाहादिप्रसंगइत्यादि तर्कसहकृतेन शुक्तिप्रवृत्तिप्रयोजिका रज- तबुद्धिस्सत्य रजतविषया रजतबुद्धित्वात्, संप्रतिपन्नवदित्यनुमा नेन अन्यत्रसत्त्वसिद्धेः । ख्यातिबाधान्यथानुपपत्तिश्च तत्रमानं । ख्या त्यनुपपत्ते स्सत्त्वसिद्धिः, बाधान्यथानुपपत्ते स्तत्रासत्त्वसिद्धिः ।

नच-तत्र सत्त्वप्रतीतिबलात् त्रैकालिकाभावस्यैवासिद्धिप्रसंगः, दोषजन्यत्वेन निषेधप्रतीत्यपेक्षया तस्यादुर्बलत्वात् । अन्य था तवापि निषेधस्य सत्यत्वं रजतस्य मिथ्यात्वंच कथं सिध्ये त । यदुक्तंत्रैकालिकाभावसत्त्वेऽपि सदसद्विलक्षणप्रतियोगिनितत्रैवोप पद्यते इति । तन्न - वक्ष्यमाणदूषणग्रासात् । तस्मात्त्रैकालिकनिषेध- एव अन्यत्रसत्त्वे प्रमाणं । क्वचिन्मदीयमिदं रजतमितिभ्रमानन्तरं गेहं गतस्य तत्र तद्दर्शनेसतीदमेव रजतं मयातद्देशस्थतया ज्ञातमितिप्रतीतिः तत्र स्थितमेवेदं रजतं इह गेहेतिष्ठतीति भ्रमश्च तत्रमानं । "वाचंधे नुमुपासीते" त्यादिश्रुतिः " अधर्मं धर्ममिति यामन्यते तमसावृता" इत्या

द्धि स्मृतिश्चान्यथाख्यातौ प्रमाणं, अनिर्वचनीयख्यातौ च नमानं, भ्रमविषय रजतस्य सद्वैलक्षण्येमानाभावात् ।

यदाहुः सद्रजतमिति प्रत्यक्षं तत्रमानं । तत्र नतावद्रजतस्वरूपमेव सत् , सच्छब्दस्य पर्यायत्वेनाप्रसिद्धेः । सत्ताजातेस्सर्वत्रासिद्धेश्चैतन्यातिरिक्तसत्तायां मानाभावाच्च । बाधायोग्यतायाश्च सत्ताया आत्मनोऽन्यत्रमानाभावात् । तस्माद्धिष्ठानसद्व्यक्तितादात्म्यमेवेदं ज्ञानं विषयीकरोति । तस्यचभिन्नत्वेसत्यभिन्नसत्ताकत्वरूपतया सद्भेदघटितत्वात् सदन्यद्रजतं प्रत्यक्ष विषयइति । तन्न, सद्भेद विषयत्वे प्रवृत्त्यनुपपत्तेः ।

नचतादात्म्यस्य संसर्गविधयाप्रतीतेः प्रवृत्त्युपपत्तिः , संसर्गमर्यादयाभेदज्ञानस्य प्रवर्तकत्वे सदन्यद्रजतमिति प्रकारतयाऽतज्ज्ञानात् प्रवृत्तिप्रसंगात् । इदं रजतं रजतत्वसमवायीतिज्ञानयो रविशेषेण प्रवर्तकत्वात् । संसर्गमर्यादया भानेसद्वैलक्षण्येनप्रतिपन्नंप्रति प्रमाणतया सद्रजतमिति प्रतीते रुपन्यासायोगाच्च ।

ननु तादात्म्यांशभूतं अभिन्नसत्ताकत्वं प्रत्यक्षविषयः, तस्य चांशान्तरमन्तरेणानुपपत्तेः सद्भिन्नत्वमपि सिध्यतीतिचेत् । किंते न सदेकसत्ताकं तदभिन्नसत्ताकं, उततदभिन्नसत्तायस्य तत्तदभिन्नसत्ताकं । आद्येसत्तादात्म्यानुपपत्तिः , सत्सम्बन्धसत्ताया असिद्धेः । द्वितीयेकार्यगुणादेः कारणगुण्यादितादात्म्यानुपपत्तिः । किंचसद्रजतमितिप्रतीते स्सत्ताधर्मोविषयः, साचत्वयाभ्युपगता चैतन्यातिरिक्ताविद्यमानतैव, अस्तिविद्यत्योरेकार्थत्वात । बाधायोग्यत्वं वा विषयोऽस्तु, आत्मनोऽन्यत्रसत्वाभावेऽपि प्रतीतिमात्रोपपत्तेः । प्रमाणाभावश्चासिद्धः, सद्रजतमिति सत्सामानाधिकरण्यप्रतीतेरेव मानत्वात् ।

नच-रजते सद्बुद्धेर्ब्रह्मसत्तायान्यथासिद्धिः, ब्रह्मसत्ताया रजतेप्रतीतावन्यथाख्यातिप्रसंगात , सदभेदप्रतीतावपि सएव दोषः । ननु अनिर्वचनीयस्सद्भेदोरजते उत्पद्यते, तत्प्रतीतिरेव सामानाधिकरण्य-

व्यवहार निमित्तमितिचेन्न; विशेषणद्वयसंसर्गस्यैव नीलमुत्पल मित्यादौ सामानाधिकरण्यव्यववहारनिमित्तत्वदर्शनात् । तत्राप्यभेदएव-निमित्तामितिचेत् , तथापि विशेषणस्यैव तद्भेदाभावरूपतया तत्संसर्गस्यैव सामानाधिकरण्यव्यवहारनिमित्तत्वानपायात् । नह्यभेदइति नामकरणमात्रेणतत्कार्यसिद्धिः , तथासत्यपांवह्निनामकरणे ततो दाहप्रसंगात् । अन्यत्रक्लृप्तभेदाभावा विलक्षणतया तस्य नाममात्रमेव । लाघवेन सएवहिततद्भेदाभावः । भेदाविरोधित्वाच्च नायमभेदः । अंगीकृतोहि रजतस्य तद्वैलक्षण्यमंगीकुर्वतात्वया सद्भेदः ।

यदप्याहुः बाधान्यथानुपपत्तिः सद्वैलक्षण्येप्रमाणमिति, तत्रकिं रजतस्यसद्वैलक्षण्यं विना नेह रजतमिति निषेधोऽनुपपन्नः, उत नेदं रजतमिहेति, अथवानेदं रजतमिति । नाद्यः, देशान्तरनिषेधस्य देशान्तरसत्त्वेन विरोधाभावात् । नद्वितीयः, तादृशस्य बाधस्यासिद्धेः । नतृतीयः, इदं पदार्थगतरजतान्यत्वस्य रजतसत्त्वेन विरोधाभावात् , नहि घटस्य पटान्यत्वं पटसत्त्वविरोधि । इदं रजतमेव नसदिति प्रतीतिस्तु बाधिका स्यात , सातु नास्त्येव । ननु बाधायोग्यत्वं सत्वं, तत्कथं बाधे स्यादि-तिचेत् । कोऽत्र बाधः यदयोग्यत्वं सत्त्वं । किं प्रतिपन्नोपाधौनिषेधः, उत स्वाधिकरणे निषेधः । आद्येपि किंप्रतिपन्नोपाधि रधिकरणतया प्रतिपन्नमुताधिष्ठानं । आद्येऽपि किं प्रतिपन्नाधिकरणे क्वापि निषेधायोग्यत्वं सत्त्वं, उत प्रतिपन्नाधिकरणे क्वचिन्निषेधायोग्यत्वं । नाद्यः, तस्य लोकरीत्या त्वद्रीत्याच सच्छब्दार्थत्वाभावात् , लोकेहि गेहे देवदत्तो वर्ततइति ज्ञानानन्तरं गेहे भ्रान्त्या देवदत्तः प्रतिपन्नः तत्र नासौ किन्तु आपणे अस्तीतिहीदानीमपि सत्वं प्रतीयते । लोकव्यवहारानुसारादेवास्माकमपि नतत्सच्छब्दार्थः । त्वन्मतेप्यनाप्तवाक्यादिना क्वचिद्ब्रह्मणि प्रतीते सति तत्र निषेधसम्भवात् । नद्वितीयः, क्वचिन्निषेधायोग्यस्याप्यन्यत्र निषेधयोग्यत्वात् । प्रतिपन्नाधिकरणे क्वचिन्निषेधा योग्यस्याप्यन्यत्र क्वचित्प्रतिपन्नाधिकरणे निषेधसम्भवात् । नद्वितीयः, अधिष्ठानं किं भ्रमे धर्मी उताध्यस्यमानाभिन्नं अध्यासाधिकरणं । नाद्यः, पूर्वोक्तरीत्या-लोकरीत्यादिविरोधे नाधिकरणतया भ्रमाविषये निषधायोग्यत्वस्य सत्व-

रूपत्वाभावात् । द्वितीये एतत्सत्वाश्रयवैलक्षण्यं यद्बाधानुपपत्त्या सबाधः किं भ्रम विषया धिकरणे निषधधी मात्रम् , उता ध्यस्य मानाभिन्न तदधिकरणे निषेधधीः । नाद्यः, तत्र प्रतियो ग्यधिकरणताया निषेधानुपपादकत्वात् । नाद्वितीयः , तथासति कल्पका सिद्धेः । स्वाधिकरणे निषेधोबाधइत्याद्यद्वितीयेपि कल्पकासिद्धिरेव ।

यदपि प्राक्कार्यस्य सत्त्वे कारकव्यापारवैयर्थ्य, उपलम्भप्रसंगश्च, असत्त्वे निःस्वरूपत्वेन शशविषाणवदुत्पत्त्ययोगात् , सदसद्वैलक्षण्यसि द्धिरिति । तत्तुच्छं, प्रागसत्त्वंहि प्राक्कालीनाभावः, सच नकालान्तरस त्वविरोधी, स्वदेशे सत्येव घटे देशान्तरनिष्ठाभावप्रतियोगित्ववत् । दृष्टान्तासिद्धिश्च, गगनकुसुमे गगनारोपितं कुसुमंवा गगनकुसुमश- ब्दार्थः, तत्र चोत्पत्ति रस्त्येव । किञ्च पूर्वं विद्यमानत्वे सदसद्वि- लक्षणत्वे वा कारकव्यापारवैयर्थ्य, तदभावेच खपुष्पवदेव नोत्पत्ति- सम्भवइति त्वदभिमतासद्विलक्षणत्वविद्यमानत्वोत्सादप्रसंगः ।

यच्च विमतं सदन्यद्बाध्यत्वात्, व्यतिरेकेणात्मवदिति । तन्न, स्वाधि करणे त्रैकालिकनिषेधप्रतियोगित्वप्रमाविषयत्वायोग्यान्यत्वं यदिसाध्यंतदा साध्याप्रसिद्धेः । स्वाधिकरणतया प्रतिपन्ने त्रैकालिकनिषेधप्रतियोगित्व प्रमाविषयत्वायोग्यान्यत्वे साध्ये सिद्धसाधनप्रसंगात् । एवमनिर्वचनीय ख्यातौ नकिञ्चित्साधकं । बाधकानिच भूयांसि। तथाहि बाधानन्तरमपि इह पूर्वं रजतमासीदिति धीप्रसंगः । नचाभावज्ञानेन प्रतिबन्धा त्प्रति योगिज्ञानमितिवाच्यम् । अर्थयोर्विरोधप्रयुक्तोहि ज्ञानयोर्विरोधः अन्यथा व्यधिकरणधर्मावच्छिन्नाभावप्रतीतावपि प्रतियोगिप्रतीत्यभावप्रसंगात् - नच त्वन्मतेऽर्थयो र्विरोधः । रजतज्ञानमुत्पन्नं रजतज्ञानं नष्टमिति प्र तीते रर्थ विषयत्वांगीकारेणाभावज्ञानासम्भवश्च । शुक्तिगतत्रैकालिक रजताभावविरोधाच्च नतत्र प्रतियोगिसम्भवः । ननु प्रतियोगिसत्तयैव- विरोधात् सद्विलक्षणरजतस्य नाभावविरोधइति चेन्न , लाघवेन प्रतियोगिनैव विरोधात् । घटाद्यभावानां प्रतियोगिनैव विरोधात् , तत्रा पि प्रतियोगिसत्त्वस्य त्वया निरासात् । अधिष्ठानात्मिका या घटादे स्स त्तातयैवाभावो विरुध्यतइति यदि तदा इहाप्यधिष्ठानात्मिकया रजत

सत्तया विरोधादेव नाभावसम्भवः । नन्वधिष्ठानसत्तातिरिक्तैव शुक्तिरजते घटादौच प्रतिभासिकी व्यावहारिकीच सत्ता, भावाभावयोश्च समानसत्ताकयो विरोधः, अतो रजततदभावयोः प्रातिभासिकव्यावहारिकयो र्नविरोधइतिचेत्; किं सत्ताभेदेपि विरोधाभावः क्वचिद्दृष्टस्त्वया । इहैव कल्पने किं सत्ताभेदकल्पनागौरवेण; सत्यैक्येप्यविरोधकल्पनोपपत्तेः, अव्याप्यवृत्ते भिन्नावच्छेदेना विरोधकल्पनव त्प्रतीतिबला देकावच्छेदेना प्यविरोधकल्पनस्य सम्भवात् । यत्तूच्यते अस्ति तावच्छुक्तौ रजतं , तच्च तत्रैव त्रैकालिकनिषेधप्रतियोगिप्रतीतं, रजतमिह नास्तीति तस्य त्रैकालिकनिषेधात ; नच रजतस्य स्वात्यन्ताभाव सामानाधिकरण्यं विरुद्धमिति वाच्यम् , विषमसत्ताकयो र्भावाभावयो रविरोधात्, विषमसत्ताकत्वंच रजतवदभावयोरनन्यथासिद्ध विधिप्रतिषेधप्रत्यक्षाभ्यामंगीव र्तव्यम् । तत्रापि रजतस्येव तदभावस्य बाधाभावा त्सत्त्वमिति । तत्र यद्यभावबुद्धिर्बाधस्तदा रजतबुद्धिरपि बाधः प्रसजेत् । यदिविरहैकस्वभावस्य अभावस्य बुद्धिर्बाधः, यदिवाभावत्वेन बुद्धिः, तदाघटाभावप्रमानन्तरं घटबुद्धिर्बाधोनस्यात् । एतेन त्रैकालिकाभावधीर्बाध इतिनिरस्तं, घटस्य भूतलेत्रैकालिकत्वाभावात् । यदिच पश्चात्तनाभावबुद्धिर्बाधः । तदाघटप्रमोत्तरभावि घटाभावभ्रमेण घटप्रमायाबाधस्स्यात् । यदिचा भावप्रमाबाधः तदाप्रमात्वं यद्यबाधितार्थगोचरत्वं , तदाऽऽत्माश्रयः । यदितत्संसर्गवति तत्प्रकारकत्वं तदासिद्धैवान्यथाख्यातिः । रजतज्ञानबाध्यत्वार्थ इति निरुक्तप्रमात्वाभावे वाच्ये सप्रकारके तस्मिन् रजतत्वसंसर्गवद्विशेष्यकत्वरूपविशेषणाभाव ध्रौव्येण रजतत्वसंसर्गाभाववति रजतत्वप्रकारकत्वपर्यवसानात । यदिच ज्ञानेननिवृत्तिर्बाधः, तदा उत्तरकालं सत्त्वाभावेऽपि स्वकालेसत्त्वाभावः कुतः; नहि मुद्गरनिवृत्तस्य घटस्य स्वकालेप्यसत्त्वं दृष्टमिष्टंवा, प्रत्युत निवृत्त्यनुपपत्त्या सत्त्वमेवसिध्येत् । ज्ञाननिवर्त्यस्य सद्विलक्षणत्वनिर्बन्धोऽपि निर्णिबन्धनः । यदिच मित्थ्यात्वबुद्धिर्बाधः , तदामित्थ्यात्वस्य स्वसमानाधिकरणात्यन्ताभाव प्रतियोगित्वरूपताया स्त्वदभिमतत्वात्

बाधस्यासिद्धिरेव । प्रमाणबलात्तत्सिद्धौ चाविशेषात् प्रतियोगित-दभावयोर्द्वयोरपि सत्यत्वं सिध्येत् । सत्ताभेदादविरोध इत्यपि न । य-दि व्यवहारदशायां अबाध्यत्वं व्यावहारिकसत्त्वं प्रतिभासदशायामबा ध्यत्वं प्रातिभासिकसत्त्वमिति रजततदभावसत्त्वयो भेदोभिमतः, तदा· रजतप्रतिभासदशायां तद्व्यवहारस्यापि सत्त्वात् तदानिमबाधितस्य कथं नव्यावहारिकत्वं । ब्रह्मज्ञानेतराबाध्यत्वं व्यावहारिकसत्त्वं प्रतिभासदशा-याम बाध्यत्वं प्रातिभासिकसत्त्वमित्यपि न, बाध्यत्वस्य स्वाधिकरणवृत्त्य-भावप्रतियोगित्वात्मकत्वे दशाविशेषणवैयर्थ्यात । निवर्त्यत्वात्मकत्वेऽपि नाविरोधसिद्धिः, कालह्रासदैर्घ्यमात्रस्य अविरोधाहेतुत्वात । तथासति ध्वं सप्रागभावाभ्यां पटादेरविरोधप्रसंगात् । सत्ताभेदमनादृत्य सत्त्वमिथ्यात्वा भ्यामेव विरोधपरिहारे आत्माश्रयः । स्वाधिकरणवृत्त्यभावप्रतियोगित्वेनैव अभावसामानाधिकरण्य रूपाविरोधसमर्थनात ।

किंच क्लृप्तकारणाभावान्न रजतोत्पत्तिसम्भवः । ननु सत्यरज ते यत्कार्यतावच्छेदकं रजतत्वं न तदिहास्तीति कथमसम्भवइति चेत्, तर्हि यदेव सत्यरजत गतं रजतत्वं तदवच्छेदेनेष्टसाधनत्वं गृहीत-मिति तद्रहिते प्रातिभासिकरजते प्रवृत्ति र्न स्यात् । शुक्तिरजते तार्द्दशरजतत्वासंसर्ग ग्रहाद्वा रजतयोर्भेदाग्रहाद्वा यदि प्रवृत्तिः तर्ह्यनिर्वचनी यख्या तिर्दत्तजलाञ्जलि स्स्यात । शुक्तिरजतं सत्यरजततादात्म्ये नोत्प द्यत इति तत्तादात्म्यग्रहात् तत्र प्रवर्ततइति चेन्न, सत्यरजतावच्छिन्नसद धिष्ठानकत्वाभावेन तादात्म्यासिद्धेः । अभेदएवानिर्वचनीय उत्पद्यतइति-चेत्; किं तेन, तस्येष्टसाधनतावच्छेदकत्वेनाग्रहात् तद्ग्रहेऽपि प्रवृ त्त्यनुपपत्तेः । किंच ज्ञानकारणाभावाच्च न प्रत्यक्षभ्रमसम्भवः । न-हि ज्ञानात्प्रागविद्यमानेनार्थेन सन्निकर्षसम्भवः, तदभावादेव प्रत्य क्षानुत्पत्तिः । ननु – अविद्यावृत्तिरेव हि भ्रमः, नान्तःकर णवृत्तिः, अतो न सन्निकर्षापेक्षेति चेन्न; अविद्यावृत्तेरपि साक्षात्कार रूपत्वे तदपेक्षा ध्रौव्यात् । तदभावेचान्यथाख्यातिपक्षेपि तथा सुवच त्वात् । अनुभवविरोधकरणान्तर कल्पनाप्रसंगयोस्साम्यात । किञ्चेय

मविद्यावृत्तिरन्यथाख्यातिरूपेति कुतो नेष्यते । तथासति ह्यर्थोत्प त्तिकल्पनागौरवं न प्रसज्येत् । अथ स्यात् साक्ष्येव भ्रमः , सचाना दिरिति न सन्निकर्षापेक्षेति , तन्न , इदमाकारवृत्त्यवच्छिन्न चैतन्यस्यै व रजतावभासकत्वाभिमानात् तद्वृत्तेश्च जन्यतया तत्सन्निकर्षावश्यम्भा वात् । नन्वभिव्यक्तचैतन्याभेदोभिभासमानता, तस्यचेदमाकारवृ- त्त्यवच्छिन्न चैतन्याध्यासादेव सिद्धेः रजताकारवृत्तेरनपेक्षितत्वात् रजतावभासस्यान्यथासिद्धे र्नसन्निकर्षापेक्षेति चेत् । यद्येवं तद्विषयजन्यप्र त्यक्षस्य तत्सन्निकर्षजन्यत्वनियममनादृत्य अन्यथासिद्धिरवलम्ब्यते तर्हि दोषेणैवान्यथासिद्धिरस्तु, नियमसंकोचस्य उभयत्रतुल्यत्वात् ।

नच-चैतन्याभेदाभावे प्रकाशानुपपत्तिः । परोक्षवदुपपत्तेः । नह्य- तीतादौ तत्सम्भवः । रजतस्यापरोक्ष्यव्यवहारश्चा परोक्षधर्माभे- दाध्यवसाया दुपपन्न इति नापरोक्ष्यसिद्ध्यर्थमपि चैतन्याभेदसिद्धिः ।

वस्तुतस्तु परोक्षज्ञानाभेदो यथा नपारोक्ष्यनिमित्तं तथा अपरो- क्षज्ञानाभेदोपि नापरोक्ष्यनिमित्तं, किन्तुसामग्रीभेदएवेति । किंच यद्यु त्पद्यते रजतं नश्यति च तदुभयं प्रतीयेत । ननुरजतज्ञानमुत्पन्नं वि नष्टमिति प्रतीतिरेवरजतोत्पत्तिविनाशयोः प्रतीतिः, साक्षिरूपज्ञानस्य उत्प त्तिविनाशयो रसम्भवेन सविशेषणेहि विधिनिषेधौ विशेषणविशेष्य- यो रन्यतरबाधे एकतरमुपसंक्रामत इति न्यायेन तस्याः प्रतीते र जतरूपविशेषणविषयत्वादितिचेन्न,- तस्य न्यायस्य वाक्यविषयत्वा- त् , प्रतीतेर्व्याख्याना नर्हतया तद्विषयाभावात् , अन्यथा इदं रजमिति प्रतीते रबाधितं शुक्तित्वमेव विषयइतिगंगापदवत् व्याख्यानप्रसंगा त् । ततश्चोत्पत्त्यादिशून्ये ज्ञानेउत्पत्त्यादिकं विषयीकुर्वदिदं ज्ञानं अन्यथा ख्याति रूपं स्यात् । रजतोत्पत्त्यादिप्रतीतौ च रजतमुत्पन्नं र- जतं विनष्टमित्यपि व्यवह्रियेत । किंच यत्रचाकचक्यादियुक्तवस्तु ज्ञा नानन्तरं व्यासंगादिना बहुकालं विळम्बेसति अनन्तरंदोषात् रज- तभ्रमोजायते तत्र इदं रजतं इहपूर्वमेव बहुकालंतिष्ठति ममत्विदानी मेव तद्विषयज्ञानमुत्पन्नं इतिप्रतीतिर्दृश्यते, नचेयंप्रतीति विंशेषणवि-

षयावक्तुं शक्या, रजतं प्रागेव वर्ततइतिज्ञाने विद्यमाने इदानीमेवोत्प-न्नमिति तद्गोचरप्रतीते रसम्भवात्। किंच ज्ञानस्यानुत्पत्तिश्चनसम्भवति, इद माकारवृत्त्यवच्छिन्नज्ञानस्यैववा अविद्यावृत्त्यवच्छिन्नज्ञानस्यैव वा रज तभासकत्वेन त्वदभिमततया रजतज्ञानानुत्पत्तेः दुर्भणत्वात्। त्वयैवप्रातिभा सिकविषयाविद्यावृत्तिभंगस्थले इदमाकारान्तःकरणविनाशादेव तदुपहि तसाक्षिविनाशात् संस्कारोत्पत्ते र्नैतदर्थमप्यविद्यावृत्तिरित्युक्तत्वाच्च । रज तज्ञानस्याजन्यत्वाभिनिवेशे घटादिवच्चैतन्यमात्रेऽध्यासोवाच्यः, तथाचदे-वदत्तस्य रजतभ्रमकाले यज्ञदत्तस्यापीदमाकारवृत्त्युत्पत्तौ इदमधिष्ठानचैत न्यस्यदेवदत्त वृत्त्येव यज्ञदत्तवृत्त्यापि व्याप्ततया तस्य देवदत्तप्रमातृचैत न्यत्ववत् यज्ञदत्तप्रमातृचैतन्यत्वस्यापि सत्त्वाद्रजतस्य देवदत्तप्रमा तृचैतन्येनेव यज्ञदत्तप्रमातृचैतन्येनाप्यभेदाद्देवदत्तस्येव यज्ञदत्तस्या-पि तद्रजतव्यवहारप्रसङ्गः । ननु वृत्तेः प्रत्यक्षरूपायास्सन्निकर्षस्सा-मान्यसामग्री, तदाकारवृत्ते स्तत्सन्निकर्षो विशेषसामग्री, इहचेद माकाराया वृत्तेरिदमर्थे न्द्रियसन्निकर्षसत्त्वात् नानुपपत्तिरितिचेत् । उच्यते, शब्दजन्यापरोक्षवृत्तौ त्वन्मते सामान्यविशेषसामग्र्यो र्व्यभिचा रान्नेदं युक्तं । नन्विन्द्रियजन्यप्रत्यक्षत्वस्य सन्निकर्षजन्यतावच्छेदकत्वा त् न व्यभिचारइति चेन्न, उक्तव्यभिचारादेवेन्द्रियजन्यत्वेपि जन्यप्र-त्यक्षत्वमात्रस्यानवच्छेदकतया सन्निकर्षजन्यप्रत्यक्षत्वस्य अवच्छेद कत्वप्रसंगेन विनिगमकाभावेन अन्यतरस्यान्यतरानवच्छेदकत्वात्, अत स्तत्संसृष्टतदाकारापरोक्षवृत्तौ तत्सन्निकर्षोहेतुः, शाब्दापरोक्षत्वान्तर-त्वात् न विषयसंसृष्टमित्येवं वाच्यं, रजतभ्रमस्यापि विषयासन्निकृ ष्टतया सन्निकर्षापेक्षेति न हेत्वभावादन्यथा ख्यातिनिरास शक्यः । ननूक्तकार्यतावच्छेदकं दशमस्त्वमसीत्यत्रापरोक्षेति प्रसक्तं, अत-श्शाब्दाजन्यापरोक्षत्वमेवावच्छेदकं, अस्तिचैतद्रजतभ्रमेऽपीतिचेन्न । लाघवेन बहिः प्रसृतत्वस्यैवा वच्छेदकत्वात्, शाब्दाजन्यत्वस्यापि-प्रत्यक्षदृष्टवह्नौ सिसाधयिषानुमितौ सत्त्वात्, अनुपलब्धज्ञानेपि स-त्त्वात्, शाब्दानुमानानुपलब्ध्यजन्यत्वेन विशेषणीयत्वात् गौरवात्, प्र-त्यक्षाजन्यत्वस्य गुरुत्वात्, प्रत्यक्षपदस्य प्रत्यक्षप्रमाकरणार्थकत्वेन

शब्दस्यापि तथात्वेन शाब्दापरोक्षेऽप्रसंगतादवस्थ्याच्च ! किञ्च यथा शब्दाजन्यत्वेन विशेष्यते तथा भ्रमान्यत्वेनापि विशेष्यतां , जन्यत्वापरोक्षत्वयोरिहापि – प्रतीत्य विशेषात् । यदिचावच्छेदक लाघवादरेणार्थोत्पत्ति कल्पनया जन्य साक्षात्कारत्वबुद्धेरन्यथा सिद्धिक ल्पनं तदा शाब्दापरोक्षेपि अन्यथा सिद्धिप्रसंगः, स्वाप्नरथादिवदन्तः कर णावच्छिन्न साक्षिणि घटाद्यर्थोत्पत्तिसम्भवात् , भ्रमस्थलीयज्ञानकार णानामिवज्ञानकारणत्वाभिमतशब्दादीनामर्थोत्पादकत्वसम्भवात्,यच्चक्षुषा द्राक्षन्तमेवेदानींशब्देन जानामीतिप्रत्यभिज्ञापि यद्रजतमापणेपूर्वमद्राक्षं त-देवात्रपश्यामीतिभ्रमस्थलीयप्रत्यभिज्ञावदुपपाद्यतां । किंच भ्रमान्यत्वेनैव संकोचोयुक्तः, अन्यथा वह्निजलपृथिवीभ्रमेषु अर्थोत्पत्तौ "वायोरग्निः । अग्ने रापः । अद्भ्यः पृथिवी"ति श्रुतिबाधप्रसंगात् । अतोरजतं नोत्पद्यते-नापिनिवर्तते । किंच रजतत्वव्यापकद्रव्यत्वाद्यभावात् कटकमकुटा द्ययोगाच्च नतत्रानिर्वचनीये रजतत्वमिति तत्रतत्प्रतीतावन्यथाख्याति-रनिवार्या ।

ननुतत्रभावत्वद्रव्यत्वादिकमप्यस्त्येवेतिचेत्, नतावत्संसर्गःप्रातिभा सिकः तत्प्रतीत्यसिद्धेः । नचव्यावहारिकः, तथासति द्रव्यत्ववदेवव्यावहा रिकगुरुत्वप्रसंगेन तत्कार्यपतनाद्यापत्तेः । वह्न्यारोपेव्यावहारिकोष्णस्पर्शा पत्त्यादाहाद्यापत्तेः । स्वाप्नार्थेषुतु श्रुत्यैव सत्यत्वप्रतिपत्तेः रथत्वाद्यव्य-भिचरितं पृथिवीत्वादिकं सिध्यति मानान्तराविरोधात् । गुरुत्वादि व्याप्तिस्तु श्रुतिप्रत्यक्षाभ्यामेव संकोचमर्हति । नचेहरजते तादृशीश्रुति-रस्ति । अपि चार्थक्रियायोग्यताविरहेऽपि तद्बुध्यैवप्रवृत्तिरिति अनिर्वच नीयोत्पत्तावपि कुतोनान्यथाख्यातिरिति । तद्योग्यतापि तत्रानिर्वचनीयो त्पद्यतइति चेन्न, योग्यताज्ञानं फलोपधानदर्शनात्तत्साधनतावच्छेदकद र्शनाद्वा भवति, नैवोभयमिहास्तीति कथं योग्यताप्रतीतिः । अवच्छेदकप्र तीतौचान्यथा ख्यातिप्रसंगः । नहि सत्यरजते यदवच्छेदकं गृहीतं–तदिहास्ति , सत्त्वेच प्रागेव दोषउक्तः ।

ननु सिद्धान्ते स्वाप्नप्रतीतिर्नान्यथाख्यातिरिष्यते , त-त्र रथादीनामुत्पत्तिश्रवणात् , अतएव तेषांनासत्वं, नापिस-

त्वंबाधात् , अतस्तत्रानिर्वचनीयोत्पत्तिरंगीकार्या , अतः क-थमनिर्वचनीय निरासः । उच्यते-स्वाप्नार्थास्सत्या एव । यदि सुप्तोत्थितो मया स्वप्ने दृष्टाः पदार्थालौकिकविजातीयाः क्षणिकाः-कार्यक्षमा नभवन्तीति जानाति तर्हि नपदार्थस्वरूपबाधः । यदितुपदार्थाएव नसन्तीति जानाति सतर्हि भ्रान्तएव । तथाहि- न तावदयमेवं प्रत्यक्षेणजानाति,अतीतत्वात् । किन्त्विदानीं दर्शनाभावादिना नुमानेन जानाति, तच्चानुमानं श्रुतिबाधितमिति ।

ननु 'नतत्र रथा' इतिश्रुत्यैवबाधात कथं सत्त्वमितिचेन्न; 'अथरथा'इत्यनन्तरकाले सृष्ट्यभिधानेन प्राक्नास्तितया एवाभिधानात । यदुक्तं मिथ्यारजतमभादितितस्यामिथ्यात्वमनुसन्धीयते, नचतन्मिथ्यात्वं सर्वदेशीयसर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वं तस्य बाधकप्रत्यक्षा विषयत्वादित्युक्तं; नापि विशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वं, मिथ्यारजतमभादित्यनुभूतधर्ममात्रतया तस्यानुसन्धानात्; देशान्तरीयादेस्तदसम्भवात ; अतस्स्वसमानाधिकरणसमानकालीनात्यन्ताभाव प्रतियोगित्वमेव तत्वमिति । नतावदिदं मिथ्यात्वं भ्रान्तिदशायामनुभवितुं शक्यं, दोषेणप्रतिबन्धात् । तदनुभवेबाधदशायामिव रजतप्रतीत्यनुपपत्तेश्च । नापि-बाधदशायां, तदानीं रजतानुभवाभावात् । बाधदशायां ग्रहणस्मरणात्मकमिथ्यात्वज्ञानमितिचेत् ; घटनाशेसति यथापूर्वं घटःस्थितइति व्यवहारः तथापूर्वमिहरजतं स्थितमितिव्यवहारप्रसंगात । तस्माच्छुक्तीरजततया ज्ञातेतिप्रतीते स्सुप्रसिद्धत्वात् तदनुसारेण रजतशब्दोभावप्रधानः मिथ्यात्वं च विशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वं । यत्रत्वापणस्थरजतं अपवरकनिष्ठतया ज्ञातमिति प्रत्ययः तत्र स्थलेमिथ्यैव रजतमभादिति अपवरकनिष्ठात्यन्ताभाव प्रतियोगित्वरूपं मिथ्यात्वं रजतस्यैवोच्यत इतिरजत पदंमुख्यमेव । यद्वा मिथ्यारजतं रजत्वाभाववत्त्वेसति रजतवदवभासमानमित्यर्थः, अतएव कृत्रिमपटमृगादौ मिथ्यामृगो मायामृगइत्यादिप्रयोगः । नहि तत्रानीर्वचनीयमृगोत्पत्तिस्सम्भवति, कृत्रिमत्वपरिज्ञाने तदसम्भवात् । अतएव भग-

सतिमिथ्यागोदइत्यादिप्रयोगश्च । स्वानधिकरणानधिकरणात्यन्ताभाव-प्रतियोगित्वमपि दुर्ज्ञेयमेव, अधिष्ठानमेवाध्यस्ताभावइतित्वदीय प्रलपनं शृण्वतामेवं विधदुर्बुद्धेरसम्भवात । प्राक्तच्छ्रवणेपि ह्युन्मत्तः कोऽपि नैवमध्यवस्यति । बाधकज्ञानविषयोऽप्यभावः । बाधकज्ञानंच नेदं रजत मितिवा नात्ररजतत्वमिति वास्यात् । ननुनास्मिन्रजतमितिशुक्तौ रजताभावावगाहि, इदं रजतमिति भ्रमकालेऽपि विद्यमानस्य तस्य बाधकत्वायोगात् । एतेन स्वानधिकरणावृत्ति स्वाभावत्वंमिथ्यात्वमिति-निरस्तं तदनधिकरणावृत्तित्वतदभावत्वयोव्याघाताच्च ।

ननु संविदतिरिक्तस्यापरोक्षत्वाभावात् तदभेदादेवार्थस्याप-रोक्ष्यं वाच्यम्, तत्रच संविदभेदमात्रस्य साधारणत्वात् अना-वृतसंविदभेदोवाच्यः, सचानिर्वचनीयोत्पत्ता वेवसितस्यर्तातिचेन्न । अपरोक्षसंविदभिन्ने दमर्थाभिन्नतया वभासादेवरजतस्य आपरोक्ष्य व्यवहारोपपत्तेः रजतोत्पत्तिर्नकल्पनीया । किंच किमभेदशब्देन अ-भिन्नसत्ताकत्वं विवक्षितं, उताभेदएव । नाद्यः, अनयोस्सत्ताएकेति ज्ञानेसति समानाधिकरणव्यवहारादृष्टेः । भेदाग्रहसहिता सत्त्वैक्यधीस्स मानाधिकरणव्यवहारनिमित्तमितिचेत् । एवं तर्हि आवश्यकभेदा-ग्रहादेव समानाधिकरणव्यवहारोपपत्तौ किं व्यभिचरितेन सत्त्वैक्य ज्ञानेन । द्वितीयेप्रपंचस्यापरोक्ष्यंनस्यात्, व्यावहारिकसंविद्भेदस्य सत्त्वे-न तत्समसत्ताकतदभावासम्भवात ।

नच-संविद्भेदः पारमार्थिकः, तथासति त्वदभिमत वस्त्वपरि-च्छेद परानन्त्यश्रुतिविरोधात् । प्रपंचस्य सत्यत्वे तद्भेदस्यापि सत्यतया अभावाप्रतियोगित्वरूपा नन्त्यविरोधइति हिप्रपंचस्या स-त्यताभेदासत्यत्वार्थं त्वयाभिहिता । नित्यापरोक्षे ब्रह्मणि आपरोक्ष्यस्य सं-विद्भेदाभावस्य ब्रह्मरूपत्वेन स्वानधिकरणानधिकरणात्यन्ताभावप्रति-योगित्वरूपस्य मिथ्यात्वस्य संविद्भेदरूपे ब्रह्मणिप्रसंगाच्च ।

नच संविद्भेदाभावएव प्रपंचस्य परमार्थः, जडाजडयोर्वास्तवैक्या योगात् इति त्वदुक्तिविरोधात्, वस्तुविरोधाच्च । किंचा खण्डार्थ-

समर्थनेत्वयैव, चन्द्रस्वरूपे प्रत्यक्षेणभासमानेऽपि नज्ञाननिवृत्तिः ; तस्य चन्द्रस्वरूपप्रत्यक्षस्य अनवधारणात्मकत्वात् , अतः कश्चन्द्र इति स्वरूपप्रश्नोपपत्तिरिति ज्ञाननिवृत्त्यभावेऽपि प्रत्यक्षमुक्तं कथमनावृतसंविदभेदापरोक्ष्यम् । अपि च अनिर्वचनीयेविवदमानं प्रतिकथमनिर्वचनीयसंविदभेदमुपजीव्यानिर्वचनीय समर्थनमिति नविदुः ।

ननुप्रकारान्तरेणापरोक्ष्यासम्भवात् पारिशेष्याद्नेनैव प्रकारेणापरोक्ष्यं वाच्यमिति आपादनेन प्रातिभासिकोत्पत्ति स्समर्थितेति चेन्न, प्रातिभासिकसमर्थनदशायामेव प्रपंचस्यापि मिथ्यात्वसिद्धौ सिद्धसाधनप्रसंगात । नन्विदानीं ब्रह्माभेदमात्रमेव प्रपंचस्य सिध्यति नमिथ्यात्वमितिचेन्न,- ब्रह्मभिन्नतयासंप्रतिपन्नस्य तदभेदसाधनेतत्सिद्धेः । भिन्नस्याभेदसाधनमभेदमात्रमिथ्यात्वादपि उपपद्यनइति न प्रपंचमिथ्यात्व सिद्धिरितिचे सर्हिशुक्तिरजतस्यापिनमिथ्यात्वसिद्धिः, तत्रापि सत्यरजतस्यैव संविदभेदारोपसिद्धेः ।

ननु रजताज्ञानस्या निवृत्तत्वेन अनावृतसंविदभेदोनास्तीतिचेत् ; न-भ्रमानन्तरं प्रमास्थलइव रजतज्ञानेन रजताज्ञानं निवृत्तमित्यनुभवानुसारेण तत्राप्यज्ञाननिवृत्तेरेव कल्पनीयत्वात् , इहोत्पत्तिचायमनुभवो बाधते, त्वयास्य रजतस्य अज्ञानविषयत्वानंगीकारात् भ्रमप्राक्काले रजता सिध्यातदावारकज्ञान निवृत्त्यसंभवाच्च । ननु सत्यरजतस्यतावत्पर्यन्तमन्तः करणवृत्ते. प्रसरणाभावेन प्रमातृचैतन्यादेरसिद्धेः कथं भानमितिचेत् ; परोक्षवदितिब्रूम. । आपरोक्ष्यंचा ज्ञाननिवृत्तेरुपपन्नमित्युक्तं । वृत्तिरस्पृशन्ती कथमज्ञानं निवर्तयतीति चेत् ; स्पृशन्तीवाकथं । नहि लवित्रवदन्तः प्रविश्यावयवशैथिल्यं कुर्वन्ती निवर्तयति । ननु नहि तादृशव्यापारेण निवर्तकत्व मस्माभिरिष्यते, अतएव नाज्ञानसंबन्धापेक्षापि । नन्वति प्रसंगवारणार्थं विषयसंबन्धो ज्ञानसंबन्धो वेष्यतइतिचेन्न ; परोक्षवृत्त्यवच्छिन्न चैतन्येनाज्ञाननिवृत्तौ अतिप्रसंगाभावात । अपिच्च वृत्तेस्संबन्धांगीकारेवाकानाम क्षतिः, स्फटिकादेः, चक्षुःप्रतीव सर्वस्य वृत्तिव्यवधायकत्वकल्पनोप

पत्तेः। अतीतादौ कथमितिचेत्, तदुत्पत्तिवदिति ब्रूमः। नचायंतत्रातीता द्युत्पत्तिभ्रमः किन्तुभ्रमस्थले किंचिदनिर्वचनीयं रजतमुत्पद्यते तत्रातीताभे दोऽपि तादृशउत्पद्यतइतिचेत्; तर्हि सर्वत्राभेदएवोत्पद्यतइति कल्प्यतां किंरजताद्युत्पत्तिकल्पनया। नन्वपरोक्षार्थविषत्वमेव वृत्तेरपरोक्षत्वं, अर्थस्य तु यद्यनावृतसंविद् भेदएवापरोक्षत्वंतदानावरणस्य अपरोक्षवृत्त्यधीनत-यार्था परोक्ष्यवृत्त्या परोक्ष्ययोरन्योन्याश्रयापातात्, अतस्तत्प्रमातृचैतन्याभे दस्तं प्रत्यक्षापरोक्ष्यं, घटादिचैतन्यस्यच प्रमातृचैतन्याभेदोवृत्त्य वच्छेदाधीनइति विषयसंबन्धापेक्षितइतिचेत्; तथासति धर्माधर्मगु रुत्वादिकं अपरोक्षंस्यात्। अनावृतप्रमातृचैतन्याभेदोऽपरोक्षत्वमितिचेत; तर्हि घटादावनावरणस्य अपरोक्षवृत्त्यधीनत्वात् सएवान्योन्याश्रयः। तस्मा द्वृत्तावपरोक्षत्वं विलक्षणकारणप्रयोज्यज्ञाननिवर्तकतावच्छेदकमन्यदेव, अ र्थस्यतु तंप्रत्यनावृत संवित्तादात्म्यमापरोक्ष्यमितियुक्तं। वस्तुतस्तूक्तविध या ज्ञानापरोक्ष्यस्यार्था प्रयुक्तत्वात् नतदर्थमनिर्वचनीयोत्पत्ति रंगीकार्या। यच्चेदमुच्यते शुक्तिरजतं सोपादानं भावकार्यत्वात् संप्रतिपन्नवदिति सोपादानत्वे सिद्धे पारिशेष्याच्छुक्त्यज्ञाने सति रजतं नोचेन्नेत्य न्वयव्यतिरेक सिद्धकारणभाव मज्ञानमेवोपादानं, शुक्तिज्ञानेसति - नियमेन निवर्त्यमानरजतस्य नियमेन तन्निवर्तनीयाज्ञानोपादानकत्व स्यैव युक्तत्वाच्चेति - तन्न, रजतत्वेन पृथिव्युपादानकत्वस्यापि प्र-संगात। त्वदुक्तान्वयव्यतिरेकप्रतीतिश्चा सिद्धैव। यदितु क्वचित्तथा-व्यवहारः तदा शुक्तित्वेन जानतः पश्चाद्रजतभ्रमेसति रजताज्ञानेसति शु-क्तिर्नोचेन्नेतिवत् ज्ञानविषयतयान्यथा सिद्धेः। ननु तत्रार्थोत्पत्तेर्बाधा तथा सिद्धिरिति चेन्न, इहापि तत्र रजतं नोत्पन्नमिति प्रतीत्या बाधित त्वात्। ज्ञानोत्पत्तिस्तु न बाधिता, ज्ञानं नोत्पन्नमिति प्रतीतेरभावात् प्रत्युत रजतं नोत्पन्नं ज्ञानमुत्पन्नमित्येव हि प्रतीतिः। यद्यपि तव ज्ञा-नानुत्पत्त्युत्प्रेक्षा वर्तते, तथापि नसा लौकिकप्रतीतिविरोधिनी, यस्या पि त्वदीया दुर्बुद्धिस्तस्यापि न साविरोधिनी, यौक्तिक बुद्धेः प्रत्यक्षबुद्ध्यविरोधित्वात् । अन्यथातव प्रपंचानवभास प्रसंगात्,

असो ज्ञानस्योत्पत्तिरस्तु वा मावा, सर्वथैवेयमन्वय व्यतिरेकप्रतीति र्ज्ञा-
नोत्पत्तिविषयैव । तस्मादिहान्वयव्यतिरेक बुद्धौ भ्रमत्वप्रमात्वयो-
रेव विप्रतिपत्तिः, न ज्ञानविषयत्वइति न सात्वदभिमतसाधिका । किं-
चेयं प्रतीतिश्शुक्तिज्ञानाभाव विषयैव, तत्त्वज्ञान प्रतिबन्धकत्वात् । न
च दोषादिघटितसाममग्रीकाले रजतोत्पत्तिनियमात् न तस्य प्र-
योजकत्वं, सामग्रीकालीनकार्यानुत्पादप्रयोजकस्यैव प्रतिबन्धकत्वा
दिति वाच्यम् । तथासति दोषाभावादेव कार्याभावसम्भवात् स्व
तन्त्रान्वयव्यतिरेकाभावात् भावरूपाज्ञानस्यापि कारणत्वासिद्धेः ।
किंच सादृश्यादिर्दोषः, सच तत्त्वज्ञाने प्यनुवर्तते, तदानीं च रजत
भ्रमाभावश्शुक्तिज्ञानेन प्रतिबन्धादेववाच्यः । नन्वज्ञानस्य कारणत्वा
भावनिश्चयात तत्रचाज्ञानस्याभावात सामग्र्यास्सन्दिग्धत्वात क-
थं प्रतिबन्धकत्व सिद्धिरितिचेत् , एवमप्यनन्यथा सिद्धत्वनिश्चयाभा
वात न कारणत्वावधारणसम्भवः । किंच तत्राज्ञानस्यापि सत्वात्
कथं त्वदभिमतसामग्र्याअपि विरहः, बाधकज्ञानेनाविद्यानिवृत्तावपि त
त्रैव अनन्तरदिने रजतभ्रमदर्शनात तत्राविद्यान्तरं तिष्ठतीतिहि -
त्वदीयाकल्पना । अथ स्यात् , आवरणं भ्रमकारणं, भ्रमविद्यायां भ्रमका
रणतावच्छेदकं वा, इहचावरणाभावात् सामग्री नेति चेन्न । -
नदीतीरस्थवनस्पता वूर्ध्वाग्रत्वेन साक्षात्क्रियमाणएव जले प्रतिबि
म्बिते तस्मिन्नधोग्रत्वदर्शनेन तत्र विक्षेपमात्रमेव नत्वावर
णमिति त्वयैवावरणस्य विक्षेपप्रयोजकत्व भंगात , आवरणयो-
ग्यतात्विहापीति कथं सामग्र्यभावः । किंच शुक्तिज्ञानोत्पत्तिक्षणे ऽज्ञान
घटितसामग्र्यास्सत्वात शुक्तिज्ञानेन प्रतिबन्धादेव कार्याभावः ।
किंच तत्र शुक्त्यविज्ञानस्य कारणत्वकल्पनादपि शुक्तिज्ञानस्य प्रति
बन्धकत्वकल्पनैव लघीयसी, अज्ञानस्य ज्ञाननिरूप्यत्वात् ।

नच ज्ञानाभावस्य कार्यप्रयोजकत्वकल्पनादपि भावत्वादेव -
भावरूपाज्ञानस्य कारणत्वकल्पनं लघ्विति वाच्यम् । अभावेहि गौर
वं प्रतियोगिनिरूप्यत्वात् , तच्चाज्ञानस्य भावरूपत्वेपि तुल्यमेव, प्रयोज

कत्वादप्यनन्यथासिद्धत्वगर्भे कारणत्वस्य गौरवं स्थितमेव । किंच कार्याभावप्रयोजकत्वं शुक्तिज्ञानस्यैव कल्पनीयं लाघवात्, ननु-शुक्त्यज्ञानाभावस्य गौरवात । यदुक्तं शङ्खपीतभ्रमो विशेषादर्शनजन्यः कादाचित्कभ्रमत्वात् सम्प्रतिपन्नवत्, तच्च विशेषादर्शनत्वव्याप्य दर्शनाभावः, श्वैत्यव्याप्य शङ्खत्वज्ञानात्, नापि ग्राह्यनिश्चयाभावः तदनुमिते स्सत्त्वात्, नच ग्राह्यप्रत्यक्षाभावः-यस्य यस्मिन् शङ्खे कदापि न श्वैत्यप्रत्यक्षं तस्य तत्पीतभ्रमे प्रतियोग्यप्रसिध्या भावासम्भवात्, अस्य-विशेष्यक श्वैत्यप्रत्यक्षाभावस्तु न भ्रमकालनियतः-समाननविषयकयोरेव भ्रमाज्ञानयोः कार्यकारणभावाच्चेति । तत्र, विशेषदर्शनस्येश्वरादौ प्रसिद्धत्वात् । नच विशेषदर्शने सत्यपि पुरुषांतरीय विशेषदर्शनाभावात्कार्यप्रसंगः, तस्यापि विशेषदर्शनस्य प्रतिबन्धकतया तदभावविरहादेव कार्यविरहात् । अन्यथा व्यभिचारज्ञानानुपलब्धेः व्याप्तिग्रहाभाव ज्ञानकारणता न स्यात् । तद्विशेष्यक व्यभिचारज्ञानस्य त्वदुक्तरीत्या प्रसिद्धेः, अन्यविषयक व्यभिचार ज्ञानस्य तदानीमपि सत्त्वात् । नच - तत्रापि भावरूपमेव तदज्ञानं हेतुः परोक्षव्यभिचारज्ञानेपि तत्सम्भवाद्व्याप्तिग्रहाप्रसंगात् । एवं वायौ-रूपाभावग्रहे रूपोपलब्ध्यभावमात्रं नहेतुः । घटरूपोपलब्धे स्सत्त्वात्, तदधिकरणीयरूपोपलब्धे स्त्वदुक्तरीत्याप्रसिद्धेः तदभावायोगात् । रूपावच्छिन्न वायुचैतन्याज्ञानस्य विषयाप्रसिद्ध्या अप्रसिद्धेः । अस्तु-वा कथंचि दविद्याया भ्रम हेतुत्वं, उपादानत्वन्तु कुतः । नच शुक्तिज्ञानानन्तरं रजतनिवृत्तिस्तन्निवृत्त्या ज्ञानोपादनकत्वादेवेतिवाच्यम्, अज्ञाननिवृत्त्या तदनुपादानकस्यापि जीवेशभेदाध्यासादे स्तादधीन्यमात्रात् निवृत्तोपायानुदयस्थले वृत्तिरूपकारणविनाशा द्रजत विनाशस्यत्वया प्युक्तत्वात् । पारिशेष्यादुपादानत्वमित्यप्ययुक्तम्-आत्मन एव सद्रजतमिति कार्यानुवृत्तस्यमृदइवोपादानत्वसम्भवात् । नन्वात्मनोऽधिष्ठानतयोपादानत्वेऽपि नपरिणामधर्मित्वं निर्विकारत्वश्रुतिविरोधादितिचेत् ' रूपान्तरापत्तिः परिणामः, तत्वतोनिर्विकारस्यापि कल्पितरूपान्तरमविरुद्धमेव । समानसत्ताकरूपान्तरापत्तिः परिणामइतिचेन्न, एतादृशपरिणाम्यपेक्षा नि

यमेमानाभावात, अज्ञानस्यापि तदसंभवाच्च । नह्यज्ञानं प्रातीतिकं, तथा त्वे प्रपंचोपादानभिन्नप्रातिभासिकाज्ञानस्य प्रतिभाया असिद्धया असिद्धेः । यदिच अधिष्ठानसत्तैव सर्वत्रसत्तेतिकल्प्यते नसत्ताभेदइतिमतं, तदासमा नसत्ताकोपादानकल्पने मानाभावादिति प्रागेवोक्तोदोषः । शुक्तीदमंशस्य वोपादानत्वमस्तु तस्यकार्यसमानसत्ताकत्वात्, इदं रजतमिति मृदइवकार्या नुवृत्तेश्च । नच सर्वकार्याननुवृत्तिर्दोषः, अधिष्ठानावच्छेदकतयानुगति सम्भ वात् । किंच नहि सर्वकार्यानुगतत्वमुपादनत्वे प्रयोजकं, निमित्तवदननुग तस्य उपादानत्वसम्भवात । तथासति मृदादीनां अनुपादानत्व प्रसंगाच्च । अतएवानुगतसंभवे तदेवग्राह्यमितिनिरस्तं, मृदादीनामनुपादानत्वप्रसंगा- त् । तत्राप्यविद्याया अनुगतत्वात् कार्यानुवृत्तिस्तुल्या । मृदादीनामनुपा दानत्वेच " यथासोम्यैकेन मृत्पिण्डेन सर्वंमृण्मयं विज्ञातंस्यादि"ति श्रु तिवैयर्थ्यं । किंच ज्ञानसामग्र्या अर्थोत्पादकत्वे चक्षुषारजतं पश्यामी त्यनुभवविरोधः । नन्विदमाकारचक्षुर्जन्य वृत्त्यभिव्यक्तसाक्षि भास्यत्वाद्रजतस्य तथा नुभवइतिचेत् । तर्हि चक्षुषानीलं नभः पश्यामीत्यनुभवोनस्यात , तत्राधिष्ठानाकाशगोचर चाक्षुषवृत्तेरभावा त् । यदुक्तं सर्वगताकाशे प्रसृतप्रकाशाकारान्तः करणवृत्त्यभि- व्यक्तसाक्ष्यवभास्य' माकाशं प्रकाशाश्रयचैतन्यस्यैवा काशावच्छि- न्नत्वादिति । तन्न, तद्देशस्थवायोरपि ग्रहप्रसंगात् ।

नच-गुरुत्वादिवदयोग्यत्वा न्नदप्रकाशः , आकाशस्या प्ययो ग्यत्वात् । अतएवहितदाकारापरोक्ष्यवृत्त्यभावः । अयोग्यत्वेऽप्याका शः कारणं नावृतत्वा द्रजते, तदाकाशावच्छिन्नचैतन्यस्या प्या- वृतत्वात सोपि नप्रकाशेत । यदिचाकाशमनावृतं तदा अहमि- त्यादिभानेऽपि तत्प्रकाशप्रसंगः । किंच सत्यरजते व्यभिचारात् नदोषादिकं रजते हेतुः । यदुक्तं स्वोचितार्थक्रियाप्रत्ययोग्य- त्वाद्रजतत्वं नजन्यतावच्छेदकमिति । तन्न, रज्जुसर्पस्य सत्यसर्पसाध्य भयजनकत्वस्या सत्यात्सत्यसिद्धिं वर्णयता त्वयैवोक्तत्वात , स्व- ध्वंसप्रतिहेतुत्वाच्च, रंगरजते नकटकोत्पत्त्यै रजतेन कटकमुत्पद्य

तद्इतिप्रतीतेः । किंच स्वोचितत्वं यदितद्व्यक्तियोग्यत्वं तर्हि तद् प्युक्तमेव । यद्यारोप्यजात्यवच्छिन्नकारणकत्वं तदामिथ्यारजतवृत्तेरति प्रसक्तस्य रजतत्वस्य कटकजनकतावच्छेदकत्वात् असम्भवए व । किंचशुक्तौ रजताभावोनकल्पितः समानस्वभावयोः प्रति योग्यभावयोरेकत्राभावात् । नापि पारमार्थिकः, ससम्बन्धिकपदार्थस्य प्रतियोगिसमानस्वभावत्वनियमात् । प्रतियोगिनश्च सद्विलक्षणत्वात् ।

अत्राह नवीनः -- प्रतियोगितावच्छेदकसमानस्वभावएवा भावः, प्रतियोगिसमानस्वभावत्वे श्रुतिप्रमितप्रपंचाभावस्य वास्तवत्वा- नुपपत्तेः । श्रुतेश्च तत्वावेदकत्वमौत्सर्गिकं । अत्रच सत्वमेव प्र तियोगितावच्छेदकं । नच - तस्यप्रतियोगिताव्यधिकरणत्वादवच्छेदक त्वासम्भवः , व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्याभ्यु - पगन्तव्यत्वात् । अन्यथागविशशश्रृंगंनास्तीति बुध्यनुपपत्तेः ।

नच - प्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रमाया अभावाद - भावधीसामग्रीविरहः, प्रतियोगिप्रतियोगितावच्छेदकयोर्ज्ञानस्यैव अभा- वधीहेतुत्वात् । अस्तुवा प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानमेवा भाव धीहेतुः , प्रमात्वपर्यन्तस्य गुरुत्वात् , तच्च प्रकृते प्याहा - र्य सम्भवति । तादृशाभावानभ्युपगमे यस्यकदापि रजतं नास्त्येव तस्यानाप्तवाक्यान्मदीयं रजतमितिज्ञाने आप्तवाक्यान्मदीयं रजत- मिदं नभवतीति ज्ञानंप्रमानस्यात् ।

नच-तत्र मदीयत्वस्य निषेधः ; तस्य तत्रसत्वात , प्रतियो गिविशेषणत्वानुभवाच्च । अतएव नरजतत्वस्य निषेधः , मदीयत्वा- भावाद्वा रजतत्वाभावाद्वा आप्तेनेत्थमुक्तमिति जिज्ञासाभावप्रसंगाच्च । यत्रविशिष्टाभावतात्पर्यज्ञानं श्रोतुस्तत्रतस्यैवा वश्यकत्वात् । ननु - व्यधिकरणधर्मावच्छिन्नाभावो नस्वाधिकरणे प्रतियोगिसत्वविरो- धीतिचेन्न ; सत्वावच्छिन्नाभावस्य स्वाधिकरणे प्रतियोगिसत्त्वविरोधि त्वादिति । अथवा प्रतियोगितावच्छेदकस्य प्रतियोगिसम्बन्धोऽपेक्षितः , नतद्धर्मत्वमपि, अन्यथा घटत्वघटरूपादिनिषेधायोगात् । अस्तिच

रजते अधिष्ठानसत्तावैशिष्ट्यं प्रतियोगिसमानस्वभावं, अतः प्रतियोगितावच्छेदकसमानस्वभावो रजताभावः परमार्थइति ॥

तदनुपपन्नं, लाघवेनाभावस्य प्रतियोगिसमानस्वभावत्वात् । नच श्रुतिप्रमितप्रपंचाभावपारमार्थ्याय गुरुभूतमपि प्रतियोगितावच्छेदकसमानस्वभावत्वं कल्प्यमितिवाच्यम् ; एवं श्रौतप्रपंचमिथ्यात्वोपजीवनेन दृष्टान्तसमर्थनस्य व्यर्थत्वात् सिद्धसाधनात् । किंच श्रुतेस्तत्त्वावेदकत्वमौत्सर्गिकमित्येतदपि चिन्त्यं, तद्वतितत्प्रकारकत्वस्यैव बाह्यागमेषु बाधापोद्यस्य कर्मकाण्डसाधारणस्यौत्सर्गिकत्वात् । किंचौत्सर्गिकं हि बाधकापोद्यं, अतः कॢप्तप्रतियोगिसमानसत्ताकस्वभावत्वानुपपत्त्या प्रपंचाभावश्रुतेस्तत्त्वावेदकत्वमेव त्यक्तुमुचितं । निरूपकसमसत्ताकस्वभावत्वमभावस्य, तथाच नगौरवं, निरूपकंच प्रतियोगितावच्छेदकमपीतिचेत्तथापि सप्रतियोगिकत्वस्वभावस्याभावस्य प्रतियोग्यसिद्धौ स्वभावासिद्ध्या स्वरूपहाने दुर्वारत्वात् । किंच यत्किंचिन्निरूपकसमसत्ताकत्वमधिकरणमादायैव सिद्धम् । सद्व्यामभावो निरूप्यतइत्युक्तं । यावन्निरूपकसमसत्ताकत्वं तु प्रतियोगिनोमिथ्यात्वान्नैव सम्भवतीति सर्वथा व्यधिकरणधर्मावच्छिन्न प्रतियोगिताकाभावानुसरण मनर्थकं । किंच प्रपंचस्येव प्रपंचाभावस्यापि ब्रह्मस्वरूपसत्तावच्छिन्न प्रतियोगिकाभावस्य ब्रह्मणिसत्त्वात्प्रपंचाभावस्य - मिथ्यात्वमनिवार्यं । नन्वबाध्यत्वावच्छिन्न प्रतियोगिताकाभाव प्रतियोगित्वमेव मिथ्यात्वम् , तच्च प्रपंचाभावस्यासिद्धमेव, तस्याबाध्यत्वादितिचेन्न; बाध्यत्वस्याबाध्यत्वगर्भत्वे ऽन्योन्याश्रयात् । किंचैवं पारमार्थिकाभावांगीकारे सम्बन्धिखण्डन मनुपपन्नम् । नच - तत्रापि सम्बन्धो मिथ्या , अद्वैतश्रुते रतत्त्वावेदकत्व प्रसङ्गात् । भेदखण्डनं - चानुपपन्नं, ब्रह्मप्रपंचाभावयोरिव तदुपपत्तेः । किंच कथं तस्याभावस्य अपरोक्षत्वं, अध्यस्तत्वेनापरोक्षतादात्म्याभावात् , तदभावेप्यापरोक्ष्य इदन्तृश्यसम्बन्धखण्डन मनुपपन्नं । ननु प्रपंचाभावस्यापरोक्षत्वाभाव इष्ट एव; नच - शुक्तिरजतनिषेधस्य प्रत्यक्षत्वाभावप्रसङ्गः, शुक्तिरजता-

भावस्य व्यावहारिकसत्त्वावच्छिन्न प्रतियोगिताकत्वात ; व्यावहा
रिकत्वेनाध्यस्तत्वा द्ब्रह्मरूपापरोक्ष तादात्म्यमुपपद्यतइति चेन्न -
तथासति ब्रह्मणस्सर्वज्ञत्व भंगप्रसंगात् । किंचात्र रजतमस्तीति भ्र
मः किं व्यावहारिकसत्वाविषयः उतप्रातिभासिक सत्वविषयः । आद्येत्व-
न्यथाख्यातिप्रसंगः । द्वितीये रजतनिषेधोपि प्रातिभासिकसत्वावच्छिन्नप्र-
तियोगिताका भावविषयएवेति कथं व्यधिकरणधर्मावच्छिन्नाभाव -
विषयता । भ्रमाविषयधर्मावच्छिन्न प्रतियोगिताकाभाव विषयस्यापि -
निषेधस्य बाधत्वे घटत्वावच्छिन्न रजतं नास्तीति बुद्धिरपि बाधः
स्यात् । नन्वभावस्य प्रत्यक्षत्वाभाव इष्टएव, तस्यानुपलब्धिगम्यत्वात ,
अतो ब्रह्मरूपसत्त्वमेव भ्रमगृहीतं तदवच्छिन्न रजताभावएव -
निषेध विषय इति न भ्रमनिषेधयो भिन्नविषयत्वमिति चेन्न,-
अभाव प्रतीतौ साक्षात्त्व बुद्धि विरोधात् । आपरोक्ष्ये सत्येव कारणांत
रमात्रमनुपलब्धि स्स्यात् । परोक्षत्वे ऽ पि ब्रह्मप्रतिपारोक्ष्या सि-
द्धेः ब्रह्मणोसर्वज्ञत्व प्रसङ्गःस्थितएव । किञ्च रजतं नास्तीति प्रतीते-
रजतत्वमपि प्रतियोगितावच्छेदकंवाच्यम् , ततश्च तस्यापि निरूपक
त्वात तत्समसत्त्वमप्यभावस्य प्रसज्यते । नचरजतत्वं प्रतियोगिताव-
च्छेदकमेवनेतिवाच्यम् ; उपलब्धि विरोधात , प्रत्युतसत्त्वस्यैवप्रतियोगि
तावच्छेदकत्व मुपलम्भविरोधादनुपपन्नं । नहि सद्रजतं नेति प्रतीयते
किन्तु रजतं नास्तीति, तथाच यथा रजतमुत्कण्ठा मुत्पादयती
त्युक्ते रजतत्वं कारणतावच्छेदकं प्रतीयते तथा रजतं-
नास्तीत्युक्ते रजतत्वं निषेधप्रतियोगितावच्छेकं प्रतीयते । अतएवनेत्ये
तत्समानार्थतयानास्तीति पदप्रयोगः । अतोनास्तीत्यंशो निषेधमात्र-
मेव । रजतमित्यंशएव प्रतियोगितावच्छेदकविषयः । अपिचेदं रजतमिति
भ्रमस्यनेदं रजतमिति मितिरेवहि बाधिका, तत्रचेदमर्थ रजतत्व तदव-
च्छिन्न रजतभेदातिरेकि किमपि नभासते, अतोप्रतीतं सत्वं कथम
वच्छेदकं । किंच यथा रजतमिति प्रतीते स्तत्र रजतत्वं विद्यते त-
थासदिति प्रतीतेस्सत्त्वमपि विद्यतइति कथं सत्त्वं व्यधिकरणं । ब्र-
ह्मगतसत्त्वभानाद्वैयधिकरण्ये अन्यथाख्यातिः । ननुसद्भेदेन रजतं प्रती-

यते ननु सत्त्व प्रतीतिरस्ति तेननान्यथाख्यातिः, सद्भेदप्रतीतिं प्रत्यपि निषेधधियो विरोधित्वात बाधकत्वंच युज्यतइतिचेन्न;- सद्भेदस्य सद्भेदाभावरूपस्य सत्त्वात्मकत्वात् । व्यधिकरणधर्मावच्छिन्नाभावश्चासिद्धः । यदुक्तं मदीयमिदं रजतं नभवतीति आप्तवाक्यजन्यज्ञाने मदीयत्वावच्छिन्न रजताभावो विषयइति । तन्न, अन्यदीयरजतवतिविद्यमानेपीह मदीय रजतवन्नास्तीति बुद्धेर्व्यधिकरणधर्मावच्छिन्नावच्छेदकताकस्याप्यभावस्य सिद्ध्यापत्तेः । एवमेवोत्तरोत्तर व्यधिकरण धर्मानादाय निषेधेऽनन्ताभाव वैजात्यकल्पनाप्रसङ्गः । तथाच प्रतियोगितावच्छेदकावच्छिन्न विरोधोऽपि भज्येत । यच्चाधिष्ठानात्मक सद्वैशिष्ट्यस्य प्रतियोगिनिसत्त्वात् सत्त्वावच्छिन्न रजताभावः संसृष्टावच्छिन्न प्रतियोगिकएवेति प्रतियोगितावच्छेदकसत्त्व समानस्वभावोभावः परमार्थइत्युक्तं । तदपि न, यथा प्रपंचाभाव पारमार्थिकत्वा नुपपत्ते र्लाघवात्क्लृप्तमपि प्रतियोगिसमानस्वभावत्वं त्यज्यते तथा गुरोरव्यावर्तकस्य प्रमेयघटत्व वदवच्छेदकत्वा योगेन सदभिन्न रजतत्वस्यावच्छेदकत्वानुपपत्तेः प्रतियोगितावच्छेदक समानस्वभावत्वस्यापि कल्पयितुमशक्यत्वात् । तत्कल्पनेऽपि क्लृप्तप्रतियोगि समानस्वभावत्वस्यात्यागे इष्टासिद्धेः । तत्त्यागेतु प्रतियोगितावच्छेदक समानस्वभावत्वाकल्पने पीष्टसिद्धेः । यच्चेदं मतं-शुक्तिरजताभावो रजतत्वावच्छिन्न प्रतियोगिताकएव, सचपरमार्थः, अतः प्रतियोगिसमानसत्तानेति नतेन विरोधः; नच घटे सोऽप्यभावो रजतविरोध्येव दृश्यतइति वाच्यम्, रजतसादेश्यसदभावात्मक विरुद्धधर्माध्यासेन तदुभयवृत्त्यभावयो र्भेदात्; एवंच घटाभावः प्रातिभासिकः; नच प्रतियोगिनः कल्पितत्वे सप्रतियोगिकत्व स्वभावविरोधः, प्रतियोगिविद्यमानतामात्रेण तदुपपत्तेः; प्रतियोगिकल्पितत्वस्यै वा भावसत्यतापादकत्वाच्चेति । तन्न, प्रतियोगिनो ऽभावा द्भिन्नसत्ताकत्वेपि प्रतियोगित्वाभावस्वरूपयोः प्रयोजकत्ववत् विरोधेपि प्रयोजकत्वस्या निवार्यत्वात् । अनन्यथा सिद्धप्रतीतिबाधाभ्यां भिन्नसत्ताकत्व मविरोधप्रयोजकं कल्पनीयमितिचेन्न, अन्यथासिद्धे रुक्तत्वात् । विरुद्धधर्माध्यासादभाव

भेदइत्यपि तुच्छं, घटस्यापि पटसादेश्य तदभावाभ्यां भेदप्रसंगात् । अधिकरणभेदेन विरोधपरिहारश्चोभयत्र तुल्यः । घटादौ शुक्तिरजताभावस्य प्रातिभासिकत्व मित्यप्ययुक्तं, अबाधा त्सत्यत्व सम्भवात् । नच समसत्ताकस्यैव विरोधित्वात्तदभावात्प्रतियोगिसत्व प्रसंगः , तत्राप्यभाव प्रतीति दशायां घटे रजतसत्व प्रसंगात् । ननु कारणाभावादेव न तत्र रजतं तदभावोवा प्रातिभासिक इतिचेत् ,- तर्हुभयसत्वप्रसंगः, परस्पराभावात्मकत्वात् उभयशून्यत्वाभ्युपगमे रजताभावाभ्युपगमाच्च । यद्पी दम्मतान्तरं- रजताभावो-नाधिष्ठाना द्भिद्यते अधिकरणभिन्नसत्ताक प्रतियोगिकाभावस्यैवा-धिकरणाद्भेदात् । नच लाघवादधिकरणभिन्नप्रतियोगिकत्वमेव तत्प्रयोजक मितिवाच्यम्, तत्वावेदका द्वैतश्रुतिविरोधात् । नचभावाद्वैतपरात्ता, संकोचकाभावात्; ब्रह्मणोऽनन्तत्वानुपपत्तेश्च । सत्याभावस्यचिद्विषयत्वे दृश्यत्वस्य व्यभिचारः; नचेद्ब्रह्मा सर्वज्ञं स्यात । अभावश्च न सिद्ध्येत । प्रतियोगिसमानस्वभावत्वा योगाच्च न विरुद्धात्माभावः सत्यस्सम्भवति । प्रतियोगितावच्छेदकं सत्वं तत्समानस्वभावो भावइतिच गौरवं, रजतमिह नास्तीति स्वरूपतो निषेधविरुद्धंच । अतो रजतमिदमिति सत्तैक्यानुभवात् अधिकरणैकसत्ताकस्य रजतस्याभावोधिकरणात्मैव । घटादौ तूक्तभेद प्रयोजकसत्वात प्रतियोगिसमानस्वभावोन्यएव रजताभावः । नचाभावद्वै विध्यानुपपत्तिः, यथा घटात् घटभेदस्यभेदःस्वरूपं पटादौत्वभावः तथात्रापि सम्भवात् । एवं ध्वंसोपि-द्विविधः, अधिष्ठाने अधिष्ठानात्मा, अन्यत्रतु तदर्थयत्नदर्शनेनाधिकरणाद्भिन्नः । नच प्रतियोगिनो ध्वंसकालीनत्वा सम्भवः, अधिष्ठानेतत्कालीनाभावस्यावश्यकत्वेन तदतिरिक्तध्वंसएव तथा नियमात् । प्रपंचान्योन्याभावोपि ब्रह्मैव । नचैव मभावसांकर्यदोषः, क्वचित्तस्यप्रामाणिकत्वात् । घटस्य प्रागभावध्वंस ध्वंसप्रागभावात्यन्ताभावात्यन्ताभावत्वस्य परैरप्यभ्युपगमात् । नच वाच्यं शुक्तिनिष्ठतया प्रमितो रजताभावो नाधिष्ठानात्मकः, भ्रमत्वे त्वभावएव न सिद्ध्येदिति । घटाभावे घटो नास्तीति बुद्धिवद्वैशिष्ट्यांशे भ्रमत्वेप्यभावस्वरूपे अभ्रमत्वात् । वस्तुतो भूतलादावपि घटाद्य

भावश्चैतन्यमेव, भेदेमानाभावात् । अन्यथा भूतले घटसत्वानुपपत्तेः तत्कालेपि तत्र तदभावस्यावश्यकत्वात् । अस्तिहि घटानयनात्पूर्वं भूतले तदभावः, सघटकालेपि तत्र वाच्यः, नित्यत्वाक्रियत्वाभ्यां गतिनाशयो रयोगात् । नच सम्बन्धस्तयो स्तदा नेति वाच्यं, पूर्वोत्तरकालयोरपि तदभावापातात् । जननविलयशील सम्बन्धस्याभावे ऽसम्भवात् । स्वरूपद्वयस्य सर्वदासत्वात । एतेन समयविशेषमपेक्ष्य स्वरूपद्वयं सम्बन्धइति निरस्तं, स्वरूपयोः तत्समयाजन्यत्वात्तदनपेक्षत्वात् । नच प्रतियोगिदेशान्यदेशत्वं सम्बन्धइति वाच्यम्, तस्याप्यभावात्मकतया कदाचित्सत्वे सर्वदा तत्र सत्वात् । घटदेशस्य तद्भेदायोगाच्च । अतएव भूतलाभावयोर्विशिष्टप्रतीति जननयोग्यत्वंसम्बन्ध इत्यपास्तम्, घटकालेपि यावद्वस्तुभाविन्यायोग्यताया-स्सत्वात । दुर्निरूपश्चाभावत्वं, विरहैकस्वभावत्वे चात्यन्ताभाव-प्रागभाववत्प्रतियोगिकालीनो न स्यात्, अनित्यश्च स्यात्, जन्याभावप्रतियोगित्वस्य तत्पदार्थत्वात, स्वजन्यत्वघटितत्वे गौरवात्, नियता नन्यथासिद्धतया ऽत्यन्ताभावस्यापि जनकत्वसम्भवाच्च ।

ननु-ब्रह्मणोप्यत्यन्ताभावत्वे प्रतियोगिनोघटादेरपि तदभावत्वाज्जन्यत्वाच्चा नित्यतास्यादितिचे दारोपितस्य जन्याभावप्रतियोगित्वस्य नित्यमात्रे सुलभतया धर्मिसमसत्ताकस्यैवतस्या नित्यत्वात्मकत्वात । तस्माद्विरहैकस्वभावशून्यंचैतन्यमेवाभावः । नास्तीतिबुद्धे रेक ब्रह्मविषयत्वे लाघवाच्चनानन्ताभावाःकल्प्याः । प्रतियोगिसत्वाविरोधिनो भावत्वस्य पारिभाषिकत्वाच्च । यद्यपि रजतवत् घटस्य त्रैकालिकनिषेध स्तत्प्रतिबन्धके सत्यपि कार्यंच प्रसज्यते, तथापि तस्योभयसमाधेयत्वात नदोषः । श्रुतिरपि " प्रपंचोपशमश्शिवोद्वैतःस्वप्रकाशमानन्दं शून्यमभवत् " "यत्रत्वस्यसर्वमात्मैवाभू"दित्याद्या प्रपंचाभावात्मत्वन्दर्शयति । तथाच स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वं भवति । नचैतत्पारिभाषिकं, सतो वृत्तिमतःस्वानधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वात् । सत्यसम्भावितस्यैव

मित्थ्याशब्दार्थत्वात् । अत्यन्ताभावप्रतियोगित्वमात्रं सत्यमतेप्यस्तीति द्वितीयानधिकरणविशेषणं । परमतेपि भवत्यन्ताभावेसिद्धसाधनतातः स्वानधिकरणपदं । नच स्वानधिकरणं स्वाभावः तदधिकरणकाभावश्च सएवेति तत्प्रतियोगित्वात् घटादे स्सिद्धसाधनमिति वाच्यम् , स्वानधिकरणाधिकरणकत्वाभावस्य विवक्षितत्वात् , घटाभावस्यच पटवृत्तित्वात्। स्वानधिकरणावृत्तित्वं वामित्थ्यात्वमस्मिन्मते ग्राह्यं । स्वाभाववृत्तित्वं परमते घटाद्यभावेसिद्धमित्यवृत्तिविशेषणं । परमते गगनाद्यभावे सिद्धसाधनमित्यतः स्वानधिकरणेति । पृथिवीत्व घटान्यत्वादिव्यावृत्त्यर्थं द्वितीयस्वपदं । तदधिकरणपटाधिकरणस्य घटान्यत्वपृथिवीत्वानियमादिति सिद्धान्तरहस्यमिति ॥

तत्तथैव सदस्युक्तौ सद्भिरुपलम्भात् । तथाहि- नेह नानास्तीत्यभावाधिकरणतया ब्रह्मणः प्रतीते नाधिष्ठानप्रभावः । नचा द्वितीयश्रुतेः संकोचो दोषः, एतच्छ्रुत्यनुरोधा त्तस्य न्याय्यत्वात् । सप्तम्यर्थबाधादपिहि संकोचमात्रंन्याय्यं। वस्तुतस्तु नसंकोचः , नद्वितीयं यस्मिन्निति सप्तमीबहुव्रीह्याश्रयणे ब्रह्मणि द्वितीयं नास्तीति निषेधे एकत्वाविरोधात् प्रत्युततदाक्षेपात् । षष्ठीबहुव्रीहित्वेपि द्वितीयावधिप्रतियोगिविशेषे पेक्षिते एकमेवेति ननानाइतिच विहितस्याभावस्यैव प्रतियोगित्वेनान्वयात् । नचानन्त्यश्रुतिविरोधः, देशकालपरिच्छेदाभावमात्रपरत्वात्। यच्च विरहैकस्वभावो भावः प्रतियोगिसमानस्वभावस्स्यात् अतोधिष्ठानमेवाभावइति । तन्न, ब्रह्मणोप्येवं प्रपंचविरहत्वानुपपत्तेः। योहि विरहस्वभावोन्यस्वभावश्च तस्य कथं प्रतियोग्यभावे तत्प्रतियोगिकस्वरूपलाभः ! नहि स्वभावान्तरमात्रे तत्स्वभावोपपत्तिः, तथासति देवदत्तस्य द्रव्यत्वादिस्वभावसत्वा द्वन्ध्यासुतपुत्रत्वस्यापि प्रसंगात । तस्मा त्प्रतियोगिनो विद्यमानता मात्रेण विरहैकस्वभावस्यापि सत्यत्वंवा स्यात । प्रतियोगिनस्सत्वाभावेन ब्रह्मणः प्रपंचविरहत्वाभावोवा स्यात् । ब्रह्मणोपि विरहत्वांगीकारे तदेकस्वभावमेव ब्रह्मस्यात् ; निर्धर्मकत्वेन स्वभावां

सत्ताभावात् स्वरूपाद्भेदाभावाच्च । किंच घटवति भूतले प्रातिभा-सिकघटाभावस्य विरहस्व भावत्वेपि न प्रतियोगिसमानस्वभाव - त्वम् । नच सत्ताभेदो नास्तीति वाच्यम्, सामानाधिकरण्यविरोधा त् । एतेन प्रतियोगिस्वरूपाधीन स्वरूपसत्ताको भावः प्रतियोगि-समानस्वभावइति निरस्तम् , प्रतियोगिस्वरूपमात्रस्याभाव स्वरूप लाभप्रयोजकत्व सम्भवे अभावसमानस्वभाव प्रतियोगिस्वरू पस्य गुरुत्वेनाप्रयोजकत्वात । तस्माद्रजतावच्छिन्नाभावः पारमार्थि-कएवाधिकरणात् भिन्नोंगीक्रियतां । एवं सति लाघवमधिष्ठान त-दितरयोरेकत्वादभावस्य । इह रजतन्नास्तीति अधिष्ठाने प्रतीतिसत्वे तदनुग्रहश्च । तदभावेतु नाधिष्ठानस्वरूपस्यात्यन्ताभावस्य सिद्धिः ।

यच्चोक्तम् अधिकरणभिन्नसत्ताकप्रतियोगिकाभावोधिकरणा - द्भिद्यते, अन्यस्त्वधिकरणात्मेति । - तन्न, भूतले रजतन्नास्तीति बा-धावतारकालीन ज्ञानविषयस्याभावस्य भूतलभिन्नसत्ताक रजतप्रति योगिकतया भूतलाद्भिन्नस्य विरहैकस्वभावतया प्रतियोगिसमान स्व भावस्य प्रातिभासिकत्वापत्याभूतले तद्रजततदभ.वबुद्धयोः भ्र-मत्वप्रमात्वविभागाभावप्रसंगात । शंखेश्वैत्याभावभ्रमे तस्या भाव-स्य शंखात्मत्वप्रसंगात् , गुणगुणिनोरभिन्नसत्वात । किंच घ-टादीनां ब्रह्मणि कल्पिततया तदभावोब्रह्मणि कल्पितोनस्यात्, घ-टादेरधिष्ठानब्रह्मसत्ताकत्वाभावात् । किंच घटेघटाभावोघटाद्भिद्येत-घटे घटाभावो नास्तीतिहि त्वदीयप्रलापः । अपिच घटाभावे घटा-भावोधिकरणा द्भिद्येत, घटाभावभिन्नसत्ताक घटप्रतियोगिकत्वात् । गौरवादेव न ध्वंसद्वैविध्यमपि । प्रतियोगिसमानकालीनत्वाच्च नाधि ष्ठानं ध्वंसः । प्रपंचनिवृत्तेर्यत्नसाध्यत्वाच्च । अभावद्वयकल्पनैागारवा देवनाधिष्ठानमन्योन्याभावः । सर्वत्राभावश्चैतन्यमेवेत्यपितुच्छं , घ-टेविद्यमानेतदभावबुद्धेरभ्रमत्व प्रसंगात् । अविरुद्धस्य वा भावत्वं

यदन्यथाऽनुमानंभवेत् , घटकालेपि तत्र घटाभावस्या वश्यकत्वा त्तस्य ब्रह्मातिरिक्तत्वे समानसत्ताकत्वेन घटासिद्धिप्रसंगात् । ब्र- ह्मस्वरूपमेवा भावइत्यनुपपन्नम् , घटदशायां तद्देशेघटाभावस त्वे मानाभावात् , विपरीतमानसद्भावाच्च । न प्राक्तत्र स्थितस्य प- श्चादप्यावश्यकता , अभावांतरपक्षे कालविशेषरूपाभावसम्बन्धाभावस्य- भावान्तरपक्षे कालविशेषसम्बन्ध रूपाभावस्य वक्तुं शक्यत्वात ।

नच विरहैकस्वभावत्वे प्रागभाववत्प्रतियोगिकालीनत्वानुपपत्तिः, विरह-स्वभावत्वेपि तुल्यत्वात् । तद्विरहत्वमेव हिलाघवात्तत्र प्रयोज कं । प्रमाणबलात्तत्परित्यागे ततएव विरहैकस्वभावत्वमपि नप्रयोजकम् । अत्र घटस्तत्रनेत्यबाधितप्रतीतेः । नापि विरहैकस्वभावत्वे प्रागभाव- वदनित्यत्व प्रसंगः , सर्वकालसत्वरूपनित्यत्वस्य बाधाभावात् । पारिभाषिकानित्यत्वे प्यविरोधात् । स्वजन्याभावप्रतियोगित्वस्यैवा नित्यत्वरूपत्वाच्च । लोकानुसाराच्च गौरवं नदोषाय; प्रामाणि- कत्वात् । अन्यथासिद्धत्वाच्च गन्धं प्रतिरूपप्रागभाववन्नात्यंताभावः प्रतियोगिजनकः । प्रपंचोपशमंशिव इत्यत्र उपशमशब्दस्य लोक व्युत्पत्यनुसारे परत्वमेव, प्रतियोग्यसमानकालीन प्रतियोग्युत्तरका- लीनाभावे व्युत्पत्ते ब्रह्मणितदभावात् । तदननुसारेचा भावत्वमेव नासिद्ध्येत् ।

यत्तु –स्वानधिकरणानधिकरणात्यन्ताभाव प्रतियोगित्वम्मिथ्या- त्वमिति निर्वचनं, तन्नाकाशा यन्ताभावस्य स्वाधिकरणस्वावृत्याकाशरूपा त्यन्ताभावस्य सत्यत्ववादिभिरप्यंगीकारात्तदविरोधित्वादर्थांतरं । ब्रह्मणि ब्रह्मनास्तीति बुद्धेस्त्वन्मते ब्रह्मविषयत्वात् , ब्रह्मणःस्वानधिकरणभूतस्वा नधिकरणक स्वात्मकाभाव प्रतियोगित्वादतिव्याप्तिः । संयोगसंब न्धावच्छिन्न घटात्यन्ताभावे चातिव्याप्तिः । अवृत्त्यभावमादायार्थांत-

स्वात्यन्ताभावाश्रयनिष्ठतया प्रतीयमानत्ववेषेण मिथ्यात्वं, तत्तन्निष्ठात्य न्ताभावप्रतियोगित्वमेव तस्यासत्त्वमिति यथालोकमभ्युपगमात् । किंच यएष विश्वं विचारासहमळीकमनिर्वचनीयं चेत्यादिरूपं व्याहतप्रतिज्ञा नमाद्रियते , सकिं स्वपक्षं किंचित् स्थापयति नवा, स्थापने पि प्रमाणतो ऽप्रमाणतो ऽपिवा । नेतिपक्षे परपक्षं दूषयतो ऽयमेव

---

रंच । ननुब्रह्मव्यतिरिक्तोभावो वृत्तिमानेवेति नतमादायार्थान्तरं, ब्रह्मरूपाभाव प्रतियोगित्वसिद्धौ चेष्टसिद्धिरेवेति चेन्न ; ब्रह्मातिरिक्ताभावस्य वृत्तित्वनियमः कुतः । नचसंसर्गाभावत्वस्य वृत्तिमत्वव्याप्ति बलात्तन्नियमः, ब्रह्मणोप्येवमत्यन्ताभावत्वासिद्धेः । ननुब्रह्माधिकरणक तयैवब्रह्मातिरिक्तस्य कृत्स्नस्यअत्यावगमात्ब्रह्मातिरिक्ताकृत्यभावासिद्धिः बाधादेव न सम्भवतीति चेत्तर्ह्यनुमानमेव बाधितं स्यात् । ब्रह्मरूपा भावप्रतियोगित्वसिद्धौ नबाध इतिचेत्तर्हि ततएवार्थान्तरता, तत्सि द्धावपि सत्यत्वाविरोधात् । अप्रतियोगिनो भावरूपस्य ब्रह्मणः प्रपं चाध्यासाधिष्ठानत्वेनैवाभावत्वसिद्धिर्ना न्यथेतिचेन्न;- अधिष्ठानतया- अभावत्वानुपपादकत्वात् । शुक्तौ रजताभावत्वं दृष्टमिति चेत् , का सौदृष्टिः । बाधदशायां नेह रजतमितिप्रतीतिरिति चेत , अस्याभ्रमद शाया नेह रजतमितिप्रतीतेर्विशेषाभावात् । यदपि स्वानधिकरणावृ- त्ति स्वाभाववृत्तित्वम्मित्थ्यात्वमिति लक्षणं, तदप्युक्तरीत्या अर्था न्तरेणैव निरस्तम् । अवृत्तिस्वभावस्य ब्रह्मातिरिक्तत्वे ब्रह्मरूपत्वेपि- सत्यत्वाविरोधात् । किंच परैर्द्रव्यात्यन्ताभावस्य स्वानधिकरणतन्तु कपालाद्यवृत्ति स्वाभाववृत्तिगगनात्मक स्वाभाववृत्तित्वांगीकारात्स- त्यत्वाविरोधाद्र्थान्तरमिति ।

( व्याहतप्रतिज्ञानमिति ) साध्यस्य कृत्स्नमित्थ्यात्वस्य सिद्धौ पक्षहेत्वादीना मसिद्धिः, तेषां सिद्धौ साध्यासिद्धिरिति व्याघातइत्यर्थः ।

विकल्पः । तत्र प्रमाणतइतिपक्षे तत्प्रमाणं तथात्वेन विचारसहं नवा । पूर्वत्र कथं विश्वमिथ्यात्वं । तस्यापि तदन्तर्भावात् उत्तरत्र कथं तत्प्रमाणं । प्रमाणताभ्रमेणेति चेत्तथापि किंतेन, अन्यथा हेत्वाभासाना मप्रतिक्षेपे सर्वसमयसाम्राज्यप्रसंगात् । लोकव्यवहारासिद्धमिति चेन्न ;

---

यदाह नवीनः , अविद्यातिरिक्त दोषाजन्यत्वं पक्षहेत्वादेः साधकत्वे प्रयोजकं , तेन कल्पितैरपि हेत्वादिभिर्मिथ्यात्वादि सिद्धिरिति । तन्न, शुक्तिरजतस्य दृष्टान्तत्वेन त्वयोक्तत्वात् , शुक्तिरजतं पक्षीकृत्य त्वया सोपादानत्वानुमानात्, तदेव-पक्षीकृत्य सच्चेन्नबाध्येते त्याद्यर्थापत्ति प्रवर्तनात् , तदेव पक्षीकृत्य – मिथ्यात्वसाधक व्यतिरेक्यनुमानाभिधानात , प्रतिबिम्बेन बिम्बानुमानस्य स्वाप्नार्थे शुभाशुभानुमानस्यच त्वत्कूटस्थैरभिधानात , गगनंदिगादिव्यावृत्तं रूपित्वादित्यनुमानसम्भवस्य त्वयाभिधानात् । यद्वा विचारासहत्वप्रतिज्ञयालीकत्वप्रतिज्ञानं व्याहतम् , विचार्यैवालीकत्व निर्णयात् । अलीकत्वेन निर्वचनादेव तदनिर्वचनीयत्व प्रतिज्ञया व्याहन्यते । तथा प्रथमेन मतमपि व्याहतम् , विचारस्यैवानिर्वचनीयत्व स्थापनात । एवं व्याहतप्रतिज्ञादरोक्त्या स्वपक्ष स्थापनाभावकोटे रप्रमाणेन स्वपक्षस्थापनकोटे रप्रमाणेन परपक्ष दूषणकोटेश्चात्र पराभिमततयानूद्यदूषणमयुक्तमिति शंका निराक्रियते । एवं वदतो व्याहतान्तरभाषणे केयमसम्भावनेति भावः । तथात्वेन- प्रमाणत्वेन (तथापीति ) (किंतेनेति) भ्रममात्रेणप्रमाणता अस्तुवा, तथापि न-किंचित्प्रयोजनमित्यर्थः (अन्यथेति) तादृशेनापि प्रयोजनसिद्धावित्यर्थः । (लोकव्यवहारेति) स्वपक्षसाधकत्वेनाभिमतं प्रमाणत्वेन लोकव्यवहार सिद्धं , नतु हेत्वाभासास्तथेत्यर्थः । ( नेति ) सपरिकरस्य प्रमाणस्य-

तस्य सपरिकरस्य परिग्रहे लोकास्थिरीकरणात । प्रमाणान्तराविरोधादे-
श्च तत्परिकरत्वात्, अन्यथा लोकतोप्यसिद्धेः । त्रिचतुरकक्ष्या विमर्शाव-
स्थापितमिति चेन्न ; तथैवविश्वानुग्राहकप्रमाणाना मप्यवस्थापनाद । त-
त्वाद्विमर्शबाधस्य विश्वद्वेषिण्यपि निवारकाभावात । तस्यतु प्रथमकक्ष्या
यामेव स्फुटप्रतीतिव्याघातादिभि र्विलयइति विशेषइति । नचापच्छेद-
निमित्तनैमित्तिकशास्त्रयोः प्रामाण्याविशेषइव अप्रामाण्याविशेषे ऽपि
परत्वात्प्राबल्यं; नमित्थ्येत्यस्मदुक्ते स्ततोपि परत्वात् । अविश्रम स्तर्हीतिचे
न;- स्वदोषस्य परत्रारोपात । परत्वमात्रेण प्राबल्यं भवत स्तवैवासौ
दोपः । किंच यद्यप्रमाणं परं स्वविषयं नावस्थापयेत् कथं प्र

---

परिग्रहे प्रमाणान्तराविरोधानुकूलतर्कादे स्ततपरिकरतया तादृशप्र
माणेन प्रपंच सत्यत्वमेव सिद्ध्येत, प्रपंचमित्थ्यात्वसाधक
प्रमाणस्य प्रमाणान्तरविरोधादनुकूलतर्काभावाच्च तेन वि -
श्वमिथ्यात्वं नसिद्ध्येदित्यर्थः ( अन्यथेति ) अपरिग्रहस्य
परिग्रहे लोकतोपि नतस्य प्रामाण्यसिद्धिरित्यर्थः । यद्वा
लोकव्यवहारासिद्धमित्यत्र लोकव्यवहारः किं सपरिकरः सा -
धकपरिगृहीतो परिकरो वेति विकल्प्याद्ये दोषमाह ( तस्येति )
लोकव्यवहारस्येत्यर्थः ( अन्यथेति ) अपरिकरस्य लोकव्यवहारस्य
साधकत्वेन विवक्षितत्वे ( अवस्थापितमिति ) प्रमाणमिति शेषः । वि-
श्वानुग्रहो विश्वसत्यत्वस्थापनम् । ननु सत्यत्वविचारस्य बाधो दृ-
श्यते , नतु मिथ्यात्वविचारस्येति वैषम्यमस्तीत्यत्राह ( तत्त्वादिति )
विश्वद्वेषिप्रमाणम् । उक्तदोषं परिहरन्नप्रमाणत स्साधनन्दूषणमिति वि-
कल्पद्वयीं युगपदुत्थापयति(नचेति) अपच्छेदनिमित्तक नैमित्ति कशास्त्रयो
रित्यर्थः । परं स्वविषयं स्थापयति नवेति विकल्पमभिप्रेत्याह ( किंचेति )

बलं, स्थापयतोवा कथमप्रामाण्यं । ननु प्रमाणत्वे कथं बाध्यत्वं तस्मिन् वा कथं तदित्यपच्छेदेपि प्रसज्यत इति चेन्न; अनियतविरोध पौर्वापर्यतया ऽन्यतरोदयसम्भावनयाच प्रयोगान्तरेषु प्रामाण्योपपत्तेः । किंच त्वदुक्तप्रमाणस्यापि दुष्टकारणप्रसूतत्वं त्वयैवाभ्युपगम्यतइति अदोषप्रसूततयापि न प्राबल्यदौर्बल्यविभागः । अन्यथा माध्यमिकयुक्तीनां सर्वसिद्धान्तजीवितास्वादिनीनां सर्वतः परत्वेन प्राबल्यप्रसंगात् । तदेवं सिद्धं न कथंचिदपि विश्वमिथ्यात्वप्रतिज्ञानं शक्यमिति ।

दृश्यत्वंच किमभिप्रेतं; किंचाक्षुषत्वं, उतप्रत्यक्षज्ञानविषयत्वं , यद्वा ज्ञानविषयत्वमात्रं, उतदृग्व्यतिरिक्तत्वं, अथवान्यत्किंचिदिति । नाद्यः, भागासिद्धत्वात् । अतएव नद्वितीयः, व्यर्थविशेषणत्वाच्च । ब्रह्मव्यवच्छेदार्थं विशेषणं सार्थकमिति चेन्न; तस्य ज्ञानविषत्वानभ्युपगमात् । अभ्युपगमेवा योगिप्रत्यक्षादिविषयतया सन्मात्रग्राहिप्रत्यक्ष वर्णनाच्च हेतोस्तत्र वृत्तेः । नच तृतीयः, अनैकान्तिकत्वादेव । ज्ञानविषयत्वमात्रमपि

---

( अनियतेति ) अनियतविरोधतयानियतपौर्वापर्यतया चेत्यर्थः । एकैकापच्छेदसम्भवा दनियतविरोधिता ( अन्यतरोदयेत्यादि) युगपदपच्छेदे विकल्पेनानुष्ठेयत्वात तत्रान्यतरशास्त्रानुष्ठानसम्भवादित्यर्थः । परस्य प्राबल्यं वदतापि दुष्टकारणजन्यत्वतदभावाभ्यां वैषम्यं वाच्यम् , तच्च नत्वन्मते सम्भवतीत्याह ( किंच त्वदुक्तेति ) ( अन्यथेति)परत्वमात्रेण प्राबल्यइत्यर्थः । मिथ्यात्वनिर्वचनासम्भवात् पक्षहेत्वादिभि र्व्याघातात् साधकासम्भवाच्च नविश्वमिथ्यात्वप्रतिज्ञा शक्येत्युपसंहरति) (तदेवमिति) (व्यर्थेति) प्रत्यक्षत्वविशेषणं व्यर्थमित्यर्थः ( ब्रह्मेति ) तत्र व्यभिचारवारणार्थं विशेषणमित्यर्थः ( अनैकान्तिकत्वादेवेति)

यदाहनवीनः, चिद्विषयत्वं, दृश्यत्वं, तच्च ब्रह्मणि नास्त्येव, विषयत्वस्य भेदाधीनत्वा न्मानाभावाच्च । ब्रह्मजानामीत्यनुभवस्यावश्यकवृत्तिवि

षयतयोपपत्तेः, व्यवहारस्यच स्वरूपात्मकप्रकाशादुपपत्तेः,अविद्यानिवृत्तेर पि स्वप्रकाशमात्रादुपपत्तेः, अविद्यासमानविषयप्रकाशाभावेपि समान-विषयापरोक्षवृत्ते स्सहकारित्वेनातिप्रसंगनिरासात्, आत्मविषयकसं-स्कारस्यापि वृत्त्यादिविशिष्टात्मरूपप्रकाशस्य वृत्त्यादिविनाशे विशिष्ट रूपेण विनाशादेवोपपत्तेः , विज्ञातारमरेकेन विजानीयादिति श्रुतिः स्पष्टं साटोपमाह, तस्मान्नात्मास्वगोचरइति । इदमप्यनेन निरस्तम् तथाहि- संविन्नानात्वसमर्थनेन ब्रह्मस्वरूपान्यज्ञानस्य सत्वात्तद्विषय-त्वमविरुद्धम् । मानं च ब्रह्मजानामीति प्रतीतिरेव घटादिवत् । नच- वृत्तिविषयतयान्यथासिद्धिः , घटादावपि तथा प्रसंगात् । वृत्य न्वयव्यतिरेकानुविधानस्य तुल्यत्वात् । जीवकर्तृकब्रह्मविषयकव्यव हारोपि मानं, ब्रह्मणः स्वप्रकाशत्वेपि तस्य जीवभेदस्यवा तत्स-मवायस्य वाभावेन जीवस्य तद्विषयज्ञाना भावेन तद्व्यवहारासम्भवा त् । एवं जीवब्रह्मणो र्भेदादेवाविद्यानिवृत्तिसंस्कारावपि तत्र मानम् । किंच किंजीवब्रह्मज्ञानाना मभेदसमर्थन मुपजीव्य इदमनुमानं प्रवर्त ते , उतानुपजीव्य । द्वितीये उक्तरीत्या व्यभिचारः तत्सन्देहोवा दुर पह्नवः । आद्ये सार्वलौकिकस्य श्रुतिप्रतिपन्नस्य भेदवाद्युक्तोपपत्तिसि-द्धस्यच भेदस्य मिथ्यात्वसमर्थनं विना जीवब्रह्मविज्ञानाना मभेदा सिद्ध्या मिथ्यात्वोपजीवनावश्यम्भावे आत्माश्रयो दुष्परिहरः । विज्ञाता रमरे केनेत्यादिश्रुतौहि प्रत्यक्षश्रुत्युपपत्तिभि र्जीवस्य ब्रह्मज्ञानाश्रयत्व-प्रतीते र्विशुद्धमनोग्राह्यत्वोक्त्या केन विजानीयादिति ज्ञानकरणव्यु-दासस्वारस्याच्च दुष्टकरणग्राह्यत्वनिरासपरत्वंवार्थान्तरमेववाप्रतीये-तेति भेदमिथ्यात्वसमर्थनमन्तरेण श्रुतितोपि ब्रह्मणो नज्ञानाविषयत्व सिद्धिः । कल्पितभेद मादाय ज्ञानविषयत्वसत्वाच्च ब्रह्मणि व्यभि-चारः । तत्र यदुक्तं, स्वसमानसत्ताकभेदप्रतियोगिज्ञानविषयत्वं दृश्यत्व मिति, तत्र किं ब्रह्मणि ज्ञानप्रतियोगिकभेदस्य मिथ्यात्वं सिद्धम् ,

ब्रह्मणो नास्तीति चेन्न; "आत्मावारे द्रष्टव्य.श्रोतव्यो मन्तव्यो नि दिध्यासितव्यः" "ब्रह्मवेदब्रह्मैवभवति" "अथातोब्रह्मजिज्ञासे" त्यादि स्वपराभ्युपगत श्रुतिसूत्रादिविरोधात् , सन्मात्रग्राहिप्रत्यक्षमिति वाद स्यापि प्रहाणप्रसंगाच्च । व्यावहारिकं ब्रह्मणो दृश्यत्वं नतु पारमार्थि कमितिचेत्? हन्तकिं प्रपंचदृश्यत्वं पारमार्थिकं , येन तस्मिन् मि थ्यात्वं सिध्येत् । तथाच सति पारमार्थिकं दृश्यत्वं ततएव दृश्य मपारमार्थिकमिति भ्रान्तजल्पितायेत । अतः प्रपंचस्यापि व्या वहारिकं दृश्यत्वमभ्युपेयं, तच्च ब्रह्मणोप्यविशिष्टमिति । तस्यापि मि थ्यात्वप्रसंगस्था विशेषेऽपि सत्यत्वे प्रपंचस्यापि सत्यत्वप्रसंगः । यदिच व्यावहारिकमपि दृश्यत्वं ब्रह्मणो नास्तीत्युच्येत तदा ब्रह्म विज्ञानान्मोक्षइति वेदान्तसिद्धान्तविरोधश्च । किंच ब्रह्मणो दृश्यत्वं नास्तीत्यत्र ब्रह्मशब्दः किं कस्यचिदप्यबोधकः, उताब्रह्म बोधकः , अथवा ब्रह्मबोधकइति । नाद्यः, ब्रह्मशब्दप्रयोग नैरर्थक्य प्रसंगात् । न द्वितीयः, अब्रह्मणस्तेनाभिधाने तस्यैव दृश्यत्वनिषेधात् ततः प्रपंचे हेतोरसिद्धेश्च । न तृतीयः,ब्रह्मणो दृश्यत्वस्य दुस्त्यजत्वात् ।

---

**उतासिद्धम् । आद्ये प्रपंचे ज्ञानप्रतियोगिकभेदस्यापि भेदत्वाविशेषेणमिथ्या त्वसिद्धयास्वसमानसत्ताकत्वाय प्रपंचेपि मिथ्यात्वंसिद्धमितिसिद्धसा धनम् । द्वितीये ब्रह्मणिसन्दिग्धानैकान्त्यं । किंच किं चिद्विषयत्वं स्व- रूपसम्बन्धधर्मान्तरयोरन्यतरत् , उदचिद्भेदः, उताचिद्विषयत्वं । ना- द्यः, तत्रासिद्धेः । नद्वितीयः, धर्मासिद्धेः । नतृतीयः, ब्रह्मणि- व्यभिचारात् । उच्यतेहि तत्वविदा ब्रह्मचिद्विषयइति ( भ्रान्तेति ) धर्म्य सत्वात् हेतोर्विश्रान्तभावाच्च हेतूच्छेदइतिभावः । दूषणान्तर माह ( अतइति ) प्रपंचस्यैवा ब्रह्मत्वादितिभावः । ननु ब्रह्मणःस्वप्रका- शत्वात् नदृग्विषयता,तदेव दृश्यत्वं विवक्षितं, ब्रह्मपदेन चतदा- कारवृत्युत्पत्तिमात्रं; नचैवमपि वाच्यत्वप्रसंगेनापसिद्धान्तः , लक्ष-**

स्वयं प्रकाशस्य ब्रह्मणो यथाकथंचिल्लक्षणया ब्रह्मशब्देन प्रतिपादनमिति चेत्? तथापि लक्षणया वृत्त्या शब्दजन्यप्रतीतिविषयत्वं सिद्धं, तावतैव दृश्यत्व मवर्जनीयं। ब्रह्मशब्देन ब्रह्मणो लक्षणाचानुपपन्नेत्यादावेवोक्तम्। एतेन सर्वशब्दागोचरत्वं ब्रह्मणो वदन् प्रत्युक्तः, ब्रह्म न शब्दप्रतिपाद्यमित्यत्र पूर्ववद्विकल्पदूषणयो रवर्जनीयत्वात्। "यतो वाचो निवर्तन्त" इत्यत्रापि यच्छब्देन ब्रह्मानुवादोऽवर्जनीयः। उपहितमनूद्यत इति चेत्तथापि ज्ञानविषयत्वं सिद्धं। उपहितानुवादे नानुपहिते तन्निषेधश्चाशक्यः। एवमनुभूतिः स्वयं प्रकाशेत्यादिभिर्वेद्यत्व प्रतिपादनमपि तन्निराससमये निरस्तं द्रष्टव्यं। न चतुर्थः, पारमार्थिकव्यतिरेकस्य शुक्तिकारजतादौ प्रपंचेप्यनभ्युपगमेन साधनविकलत्वासिध्यादिदोषात्। अपारमार्थिकव्यतिरेकस्य ब्रह्मण्यपिविद्यमानत्वेनानैकान्त्यादेव। अतएव प्रातिभासिकव्यतिरेक पक्षोपि निरस्तः। किंच घटोस्तिपटोस्तीत्यादिषु सत्त्वमनुभूतिविषयतयैव प्रतिभासते।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य

वेदान्ताचार्यस्य कृतिषु शतदूषण्यां दृश्यत्वानु

माननिरासः पंचदशः ॥

---

**णांगीकारादिति शंकते ( स्वयंप्रकाशस्येति ) ( तावतैवेति ) ज्ञानातिरिक्तवृत्तौ मानाभावात लक्ष्यत्वेपि ज्ञानविषयत्व मवर्जनीयमित्यर्थः ( प्रतिपाद्यमितीति ) इत्यत्रेत्यर्थः ( तथापीति ) उपहितेस्वरूपस्यापि प्रवेशादित्यर्थः। यद्वा तथापि अनुपहितस्य निषेधरूपज्ञानविषयत्वं सिद्धमित्यर्थः। ननु प्रत्यक्षप्रतिभाससिद्धौ दृग्व्यतिरेकोहेतुः, अतोन पूर्वोक्तदोषइत्यत्राह ( अतएवेति ) ब्रह्मण्यनैकान्त्यादेवेत्यर्थः। ( अनुभूतिविषयतयेति ) घटोस्तीत्यादौ व्यवहारहेतु ज्ञानं**

स्वप्रकाशं प्रति विषयभूतत्वेन सत्तारूपस्य ब्रह्मणः प्रतिभासाद्विषयत्वस्य च भेदगर्भत्वादिति भावः ।

वृत्तिविषयत्वस्योक्तदूषणेनैव निरासात् पंचमपक्षोनपृथक् दूषितः । तत्र यदुक्तं स्वसमानसत्ताकवृत्तिविषयत्वं दृश्यत्वमिति । तत्रापि कृत्स्नमिथ्यात्वसिद्धेः प्राक् ब्रह्मणिसन्दिग्धानैकान्त्यं दुर्निवारम् । साधनवैकल्यंच, रजत विषयवृत्ते स्त्वयानंगीकारात् । शुक्तिगोचरेदमाकारवृत्त्यवच्छिन्नचैतन्यमेव रजतप्रकाशइतिहि त्वत्प्रलापः । वृत्तिप्रतिफलितचैतन्यप्रकाश्यत्वमेव वृत्तिविषयत्वमिति विवक्षायामपि वृत्तेः प्रातिभासिकत्वाभावात् साधनवैकल्यं । सत्तात्रैविध्याभावपक्षेपि वृत्तिनिरासादेव साधनवैकल्यं । किञ्च वृत्तेर्मिथ्यात्वं सिद्धं नवा । आद्ये समानसत्ताकत्वाय प्रपंचेपि मिथ्यात्वसिद्धे र्वाच्यतया सिद्धसाधनम् । द्वितीये उक्तएव व्यभिचारः । किञ्च वृत्तौच नांकिंचिन्मानं पश्यामः । ननु उत्पत्तिप्रतीति र्मानं, ज्ञानस्य नित्यतया इदानीं घटं जानामीति प्रतीते र्ज्ञानविषयत्वासम्भवात्, तस्मात् ज्ञानाभिन्नतया प्रतीयमानवृत्तिविषयैवोत्पत्तिप्रतीतिः । एवं ब्रह्मजानामीत्यनुभवोपि तत्र मानम् , ज्ञानाभिन्नस्य ब्रह्मणो भेदघटितविषयत्वासम्भवात् । मैवम् , इदानीं घटज्ञानामीति प्रतीते र्ज्ञाने घटविषयितोत्पत्तिविषयत्वेप्युपपत्तेः । एतेन ब्रह्मजानामीत्यनुभवोपि निर्व्यूढः । अभेदेप्यविद्यकभेदविषयितोत्पत्ते रविरोधात् । विषयितयैवाविद्यानिवृत्तिसम्भवे नतदर्थमपि वृत्तिकल्पना ।

नन्व परोक्षज्ञानेनह्यज्ञाननिवृत्तिः, वृत्तिपक्षेच करणविशेषेणापरोक्षवृत्ति रुपपद्यते । विषयितापक्षे कथम् परोक्षापरोक्षविभागः । नच करण विशेषजन्याविषयिताविशेष एवापरोक्ष्यमिति वाच्यम् , ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वाभावप्रसंगात् ; तत्र विषयिताया श्शब्दजन्यतया इन्द्रियजन्यत्वाभावेना परोक्ष्यरूपत्वाभावात् । नच मनस एवापरोक्षहेतुता, तस्यानिन्द्रियत्वात् । वृत्तिपक्षे त्वपरोक्षार्थविषयत्वमेव वृत्ते रापरोक्ष्यं । अर्था

परोक्ष्यं चापरोक्षसंविदभेदात। अत श्शब्दजन्याया ब्रह्मगोचरवृत्तेरपरोक्ष विषयत्वादापरोक्ष्योपपत्तिरिति ।

उच्यते । अपरोक्षज्ञान मज्ञान निवर्तकमिति परिभाषांगीकारेपि ज्ञान स्य स्वनिरूपितमापरोक्ष्यं स्वतइत्यस्तु । अन्यनिरूपितंत्वापरोक्ष्यमिन्द्रिया धीन मित्यस्तु । ब्रह्मापरोक्ष्ये स्वाभाविकेसत्यप्यविद्या निवृत्ते रदर्शनात् करणाधीनविषयिता सहकारित्वेनेष्यतां । घटाज्ञाननिवर्तके घटज्ञाने घटविषयत्वमापरोक्ष्यञ्च निवर्तकताप्रयोजकंदृष्टमिति तदुभयमपि ब्रह्मज्ञाने नाविद्यानिवृत्तावप्यपेक्षितमेव । इयांस्तु विशेषः, एकत्र तदुभयं कारणा-धीनमन्यत्रा न्यतरदिति ।

किंच यदि अपरोक्षसंविदभेदेनार्थस्यापरोक्ष्यं, तद्विषयतया-वृत्तेरापरोक्ष्यात ब्रह्मविषयकापरोक्ष्य वृत्तिस्सम्भवतीति वृत्तिकल्पनं; तदात्माश्रयः, संविदभेदस्य मिथ्यात्वाधीनत्वात् । व्यवहारस्यापि तथैव सिद्धेः न तदर्थमपि वृत्तिकल्पना ।

यदाह । अयं-घटइति ज्ञाने ज्ञानाकारता यथावगम्यते एवं जानामी ति ज्ञानेपि ज्ञानाकारता वगम्यते, तदाकारत्वञ्च तद्विषयत्वमेवेति । - तन्न-इच्छां जानामि सुखं जानामि दुःखमनुभवामीत्यत्र वृत्त्यभावेन ज्ञान-स्य विषयत्वासम्भवात् स्वप्रकाशमात्रं यथा जानामीति व्यवहार-विषयः तथैव सर्वत्रोपपत्तेः ।

यच्चोक्तम् - ज्ञानपदवाच्यत्वार्थं वृत्तिः कल्प्या, स्वरूपज्ञानमा त्रस्य ज्ञानपदवत् सत्यादिवाक्यार्थस्य तदेकदेश ज्ञानपदवाच्यत्वा योगादिति । तदप्यखण्डार्थवादे निर्विशेषस्य वाक्यार्थत्व निरासादेव निरस्तम् । किञ्च वृत्तिविशिष्टं वृत्त्युपहितं वाचैतन्यं ज्ञानपदार्थ इति हित्वत्प्रक्रिया, तत्र पदार्थस्य वाक्यार्थत्वमसहमानः पदार्थै-कदेशस्य वाक्यार्थत्वं कथमनुमन्यसे । अपिच ज्ञानत्वविशिष्टे ज्ञानपदशक्तिसम्भवात् किं वृत्तिकल्पनया ।

यदप्युक्तं जानामीति विशेषणविशेष्यभावो ऽनुभूयते, तच्चैकस्य न सम्भवतीति वृत्तिकल्पनमिति। तन्न, विषयताविशिष्टस्य स्वरूपमन्तःकरणावच्छिन्नं प्रति वा विशेषणत्वात् ।

यदाह-घटं जानामीति ज्ञाने सविषयताप्रतीयते. स्वस्य स्वविषयत्वासम्भवात् अन्यंप्रति विषयतावाच्या, यदेवान्यत् सैव वृत्तिरिति। -नैतत्, घटं जानामीति घटस्य हि ज्ञानविषयतानुभूयते न ज्ञानस्य । ज्ञानविषयकव्यवहारस्य समानविषयकज्ञानाभावे असम्भवा दवश्यं ज्ञानविषयतावाच्येति चेत्, समानविषयकज्ञानस्य व्यवहारहेतुत्वं कुत्र दृष्ट मायुष्मता। घटज्ञानइति चेत्तर्हि यथा दर्शनं कल्पने ज्ञानमेव कल्पनीयम्-ननु तदसम्भवाद्वृत्तिः। नहीदमदृष्टार्थं, येन प्रतिनिधिरुपादीयेत। ज्ञानाभेदाज्ज्ञानकार्यं वृत्त्या भवतीति चेन्न, आध्यासिका भेदमात्रात्तत्कार्यासम्भवा तथासति शुक्तिकार्यप्रसंगात् । किंच वृत्तेर्हि घटादिगोचराया ज्ञानावच्छेदकत्वन्तवाभिद्धान्तः, तस्याः कथं ज्ञानगोचरत्वं। तथात्वेपि वा इच्छां जानामि सुखं जानामि दुःखं जानामीति व्यवहारः कथं? तत्रेच्छादिगोचरवृत्ते रभावात्। तत्र स्वप्रकाशादेव ज्ञानव्यवहारे घटज्ञानेन किमपराद्धम् ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्व याथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां दृश्यत्वानुमान भंगोनाम दशमः स्कन्धः ॥



# शतदूषणी ।

( द्वितीयभागः- षोडशादित्रिंशस्कन्धान्तः । )

कवितार्किकसिंहेन सर्वतन्त्रस्वतन्त्रेण

श्रीवेदान्ताचार्येण विरचिता,

श्रीमहाचार्यापरनामधेय श्रीरामानुजाचार्यविरचितया

चण्डमारुताख्यया व्याख्ययासह,

श्रीकाञ्ची प्रतिवादिभयंकरानन्ताचार्येण

परिशोधिता

श्रीसुदर्शनमुद्राक्षरशालायाम्

अमुद्र्यत

॥ कांची ॥

१९०४

अस्य मुद्रणादिविषये मुद्राशालाधिपस्यैवाधिकारः ।

इदानी मेतन्मूल्यम् रूप्याणि ३ - ० - ०

श्रीमत रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

शास्त्रमुक्तावळी ।

श्रीमद्वेदान्ताचार्यविरचिता

# शतदूषणी ।

## अथ षोडशो वादः ।

विश्वं व्यावर्तमानत्वा निवर्तयितु निच्छतः ।

निवर्तयामः कुमतान् कथासम्रामसीमतः ॥

यथा - घटादयो ऽपरमार्थाः, व्यावर्तमानत्वात्; यदुक्तसाधनं तदुक्तसाध्यं, यथा - रज्ज्वाद्यधिष्ठान सर्प भूदळना म्बुधारादि, यत्सन्न तद्व्यावर्तते, यथा - सर्पाद्यधिष्ठानभूता रज्जुः । यद्वा - सर्वाधिष्ठानं ब्रह्म । यदि व्यावर्तमानस्यापि सत्त्वं, तदा सत्यमिथ्यार्थांशभागाभावप्रसंग इति तर्कानुग्रहः । इति ।

---

श्रीः ।

श्रीमते रामानुजाय नमः ।

दृष्टान्तान्तरमाह ( यद्वेति ) यद्वेत्यनन्तरं यथेत्यनुषंगः । अधिष्ठानत्वं अधिकरणत्वं । ( यदीति ) व्यावर्तमानत्वस्य मिथ्यात्वाप्रयोजकत्वे प्रयोजकान्तराभावा च्छुक्तिरूप्यमपि सत्यं स्यादित्यर्थः । आदिपदेन कालो गृह्यते । ननु ब्रह्मणि युष्मदर्थान्यत्वं निश्चैन, नहि [illegible]

तत्र किमिदं व्यावर्तमानत्वं ? किं यतःकुतश्चिदन्यत्वं, अथ यत्र चेद्देशादावसत्वं, यद्वा प्रध्वंसवत्त्वं, उत प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं, किंवा कदाचित् क्वचिदेव प्रकाशमानत्वं, अन्यद्वा किंचित्।

नाद्यः, युष्मदर्था दन्येन ब्रह्मणैवा नैकान्त्यात्। " युष्मदस्मत्प्रत्ययगोचरयो र्विषयविषयिणो स्तमःप्रकाशव द्विरुद्धस्वभावयो रितरेतरभावानुपपत्ति " र्भवतां भाष्यारम्भे भाषिता। यदि ब्रह्मण स्तदन्यत्वं मिथ्या - तर्हि परमार्थत स्तयो रैक्यप्रसक्तिः, यथा घटस्य स्वरूपा दन्यत्वे मिथ्याभूते तदैक्यम्। ततश्च मिथ्याभूतप्रपंचैक्या द्ब्रह्मणोपि मिथ्यात्वम् - सत्यब्रह्मतादात्म्या त्तस्यापि सत्यत्वं वा - स्यात्। किंच ब्रह्मनिष्ठ मन्यत्व मिथ्याभूतमिति वदता किंप्रपंचनिष्ठ मन्यत्वं सत्य मभिमतं? तर्हि तेनैवान्यत्वेन परमार्थतो ब्रह्मणोऽन्येना नैकान्तिकत्व सद्वितीयत्वापसिद्धान्ताः। यदि तन्मिथ्या: तथाविधान्यत्वस्य ब्रह्मण्यपि त्वयैवाभ्युपगमा द्दुस्तर मनैकान्त्यम्।

नद्वितीयः, तस्यमिथ्यात्वंप्र त्यप्रयोजकत्वात्। नहि शुक्तिरजतादे र्देशान्तरादा वभावा न्मिथ्यात्वं, अपि तर्हि प्रतिपन्नदेशादा वभावात्। अन्यथा येनाप्याकारेणा सत्त्वात् ब्रह्मणोपि मिथ्यात्वं स्यात्।

---

भूतधूमस्य इदन्त्वमात्रेण धूमस्य वह्निव्यभिचारः, इति शंका मनूद्य परिहरति (यदीति) (तदैक्यमिति) परमार्थत इत्यनुषंगः। उक्तबाधकभया न्मिथ्यात्वपरिग्रहमनूद्य दूषयति (यदीति) तर्हि शुक्तिरजतादे मिथ्यात्व न्नस्यादि त्यत्राह (नहीति) (अन्यथेति) यथाकथंचि दसत्त्वमात्रेण स्वरूपस्यैव मिथ्यात्व इत्यर्थः। नन्वेकस्यैव सत्त्वासत्त्वे विरुद्धे कथ मुपपद्येते, इतिचे न्न, कालभेदेन विरोधपरिहारात्।

नहि ब्रह्माऽसद्रूपेणवा सदसद्विलक्षणरूपेणवा सादितिभवन्तो प्यभ्युपगच्छन्ति । अथ यत्रदेशे कालेवा तदभाव स्तत्रैव मिथ्यात्वं साध्यम्? तदासिद्धसाधनं । नहि वयं काचित्कस्य कादाचित्कस्यच सर्वत्र सर्वदा सत्त्वं ब्रूमः । तथा स[त्यापणस्थरजतस्य सर्वदेशवृत्तिकत्वा विरोधे न] शुक्तिरूप्यादेरपि सत्यत्वापातात् । कार्यकारणभावविलोपप्रसंगाच्च ।

नतृतीयः, दृष्टांतस्य साधन विकलत्वात् । नह्यध्यस्तं सर्पादिकं बाधदशायामपि प्रध्वस्तमिति कश्चिद्वदति,

---

यदाह नवीनः, सत्त्वासत्त्वे पदार्थधर्मौ स्वरूपंवा, नाद्यः, असत्त्वकालेपि पदार्थसद्भावप्रसंगात , अनित्यधर्मस्याश्रयादृते ऽनवस्थानात् , सधर्मत्वे - असत्त्व व्याघाताच्च । न द्वितीयः, एकस्य सदसदात्मकत्व विरोधात । ननु कालभेदेना विरुद्धमिति चेन्न; धर्मस्य कालभेदेन हेतुसमाजा द्व्यत्ययः , नतु स्वरूपस्य , तथासति स्वरूप भेदापत्तेः । न ह्यभावः कालभेदेन भावो भवति । इतःपूर्व मसदि त्यसतो ऽवध्यनुपपत्तेश्च , तस्य निस्स्वभावस्या वच्छेदककालासम्बन्धात् । तस्मा द्य त्किञ्चित्काल मस त्त त्सर्वदाऽसदेव , यत्स त्तत्सर्वदा सदेव, नत्वुभयात्मकं किंचिदस्तीति ।

अत्र - ब्रूमः , सत्त्वासत्त्वे पदार्थधर्मौ स्वरूपमेववा , यथेच्छा[स्]तु , पक्षद्वयेपि न कश्चिद्दोषः , तत्कालासत्त्वंहि तत्कालीना[भावप्रति]योगित्वं , अभावप्रतियोगिनोरेव भिन्नकालता, न सत्त्[वस्य] , अन्यथा विद्यमानत्वाऽविद्यमानत्वयो रेवं विकल्पदूष[णे] स्ते निस्तारः । यद्वा - कालान्तरीय सत्वस्[य] [कालान्त]रीय सदन्यत्वं वा असत्वं । किंच निस्स्वभावस्[य] ...देति वदन् य त्किंचित्काल मस त्त त्सर्वदा अ[स]... ...लज्जसे । कदाचि त्कस्य सर्वदा सत्वे दोष ...ाति ) ननु विद्यमानस्या र्थस्य नव्यवहारानि... ...देति ) अस्य कस्यचि द्यदाकदाचि द्व्यवहा[र]...

बाधविनाशयो र्विविक्ततयैव व्युत्पत्तेः । प्रतिपन्नस्य नेति निषेधो बाधः । विनाशस्तु लब्धसत्ताकस्य स्वरूप प्रच्युतिः । दण्डादिना निहतेषु सत्येषु हि सर्पादिषु प्रध्वस्तबुद्धिः । तत एव चेदं प्रध्वंस प्रतियोगित्वं देशकालसत्यत्वेन व्याप्त मुपलब्धमिति विपरीतसाधकत्वम् ।

नापि चतुर्थः, असिद्धेः । नहि स्वदेशादौ घटादयो न सन्तीति बाध्यन्ते । नेदं रजतमितिव न्नायंघट इत्यादि स्वारसिक बाधादर्शनात् । ननु - सर्वानुवृत्तस्य सतएव सर्ववस्तु देश (शि) त्वेनाव भासा त्तत्रैव चास्ति पट इति पटादिविधौ तद्विरोधि घटादे र्निवृत्ति दर्शना न्मिथ्यात्वं स्यादितिचेत् ; मैवं - सतोत्र पटादिस्वरूपस्य देशत्वाभावात , अननुवृत्तेश्च । घटोस्तिपटोस्तीत्यादि प्रतीतौ सत्त्वं

---

ननु बाधव्यवहारएव ध्वंसव्यवहार इत्यत आह ( बाधेति ) ( निषेधइति ) नश्चेति शेषः । ( ततएवेति सत्येष्वेव सर्पादिषु प्रध्वस्तबुद्धे रित्यर्थः । किमुपाधिपदेन दे[illegible] कालरूपाधिकरणं विवक्षित मुताध्यस्ताधिष्ठानमिति विकल्प्याद्य आ[illegible] ( नहीति ) द्वितीय आह ( नेदमिति ) पञ्चम्या " नचतुर्थ [illegible]त्यनेनान्वयः । द्वितीयकल्पमेवोपोद्धलयति ( नन्विति ) सदे[illegible] [illegible]धिष्ठानतया भासते ; नच तद्भानासिद्धिः - सन्घट स्सन्पट [illegible]र्वत्रानुवृत्तेः । तत्रैव सति सन्पटइति पटविधिदशायां [illegible]टएव नतु घटइति निषेधदर्शना द्धेतुसिद्धे मिथ्यात्वं स्या[illegible] मैवमिति ) देशत्व मत्रा धिष्ठानत्वं । मिथ्यात्वसिद्धेः प्र[illegible] [illegible]तिरिक्त सतो ऽसिद्धत्वादिति भावः । ( अननुवृत्ते[illegible] [illegible]दिवेति भावः । ननु [ ब्रह्मस्वरूपं सत्ता , [illegible] [illegible]त्रा नुवृत्ता भासते , अतो ] ब्रह्मरूपं सदेवा[illegible] [illegible]गीति ) आश्रयत्वं - अधिष्ठानत्वम् । स्वतन्त्रस्य [illegible] [illegible]सम्भवा न्न सत्ताया अधिष्ठानत्वसम्भवइति [illegible]

घटादिधर्मत्वेनैव प्रतीयते, नतु घटादीना माश्रयत्वेन, घटश्चलति पटश्चलति घटोमहान् पटोमहा नित्यादिषु क्रियागुणादिवत् । अतोनुवृत्त्या त्सत्तो देशत्व मित्यपि निरस्तं । ब्रह्मतु सर्वानुवृत्तं सदपि नघटोस्तिपटोस्तीत्यादिधीविषयः ।

नपञ्चमः, अप्रयोजकत्वात्, यत्रकुत्रचि [ क्वचि ] त्प्रमितत्व मात्रेणैव सत्यत्वसिद्धेः । कालान्तरादौ प्रकाशानुत्पत्ते स्तत्सामग्रयभावप्रयुक्तत्वात् । नचा प्रकाशमानत्वेन विरुद्धत्वा त्प्रमितत्वमेवात्र नास्तीति वक्तुं युक्तं, देशकालादिभेदेन विरोधपरिहारात् । अन्यथा विपरिवर्तस्यापि दुर्वारत्वात् । यदिच यथाकथंचि दप्रकाशना [ मानत्वा ] न्मिथ्यात्वं, तदा ब्रह्मणोपि तत्प्रसंगः, तस्या प्यामोक्षा दविद्यावशेना प्रकाशमानत्वस्य भवद्भिरेव स्वीकारात् । अन्यथा कथ मप्रकाशितार्थप्रकाशकत्वा दित्यस्य भवदुक्तीतभावरूपाज्ञानानुमानहेतो स्त्र सिद्धिः ?

---

ननु त्वन्मतेपि ब्रह्मणः सत्तारूपेणा नुवृत्त्यभावेपि स्वरूपेणै नुवर्तमानत्वा त्तदेवाधिष्ठानंस्या दित्यत्राह ( ब्रह्मत्विति ) अ मात्रा त्राधिष्ठानत्वं, अपि त्वद्धयस्यमानगोचरप्रतीतिवि भावः । ननु कालान्तरादौ प्रकाशमानत्वाभाव श्शुक्ति द्वैलक्षण्यप्रयुक्तएवेत्यत्राह ( कालान्तरादाविति ) ( प्र काशमानत्वविशेषत्वा त्प्रमितत्वस्य विरोधइति भाव र्तस्येति ) कदाचित्प्रमितत्वेन तद्विरुद्ध मप्रकाशम दित्यर्थः । ( यथाकथंचिदिति ) देशकालविशेषा प्र अत्रेति ) ब्रह्मणीत्यर्थः । प्रमाणज्ञानस्या प्र ादिति हेतुसिद्धि ब्रह्मविषये कथमि भूदत्र हेतु सिद्धिः, घटादिगोचर प्रमाण

कथंच ब्रह्माज्ञानसाधनं तिरोधानवाचोयुक्तिश्च ? तिरोहितस्वरूपस्यापि तस्य सर्वदा कथंचि त्प्रकाशमानत्वम प्यस्तीतिचेत्; त [ द्व ] द्घटादे रप्यस्तीति नकश्चिद्भेदः। स्वकालावच्छिन्नस्य तत्प्रकाशस्य कालान्तरे प्यनपायात्। घटादिप्रकाशस्य कादाचित्कत्वा द्रस्ति भेदइति चेन्न; " नित्यो नित्याना " मित्यादिशास्त्रसिद्ध नित्येश्वरबुद्धि विषयत्वेन घटादेरपि नित्यं प्रकाशमानत्वात्, भ्रान्तबुद्धिविषयतया शुक्तिरजतादेश्च। वयन्तु तथा नजानीम इति चेन्न; अस्माभि रपि तथांगीकारात्। [ इशास्त्रेण तथा ज्ञायमानत्वात्। ] अस्माकं नित्यं घटादिप्रकाशो नास्तीति विवक्षितमितिचेत्; तुल्यम्। न ह्यस्मदर्थनिष्ठो ब्रह्मप्रकाशो नित्यइति त्वयापि स्वीकृतम्। नित्यस्तु ब्रह्मप्रकाशो नास्मत्प्रतिसम्बन्धिकः॥ किंच -किं प्रकाशस्य

---

भावरूपाज्ञान सिद्धे रित्यत्राह ( कथश्चेति ) ( सर्वदाकथंचिदिति ) देशविशेषेवा कालविशेषेवा कथंचिदपि प्रकाशमानत्वाभावो हेतुरिति-[illegible]वः। ( तद्घटादेरपीति ) तथाच स्वरूपासिद्धिरितिभावः। घट[illegible]दाचित्कत्वा त्कथमविद्यमानकाले प्रकाश इत्यत्राह ( स्वका-[illegible]स्येति ) स्वकाले विद्यमानता विषयस्येत्यर्थः। ( शुक्तिर-[illegible] ) " नित्यंप्रकाशमानत्वा " दित्यनुषंगः। तथाच दृष्टा-[illegible]विकल इतिभावः। सर्वदा ईश्वरबुद्धि विषयत्व म-[illegible]प्त, ईश्वरस्या नित्यत्वा दित्यभिप्रेत्याह ( वयंत्विति ) [illegible] अस्माभिरपिवा तथांगीकारादित्यर्थः। तथाच [illegible]शमानत्वहेतौ स्सन्दिग्धासिद्धि रित्युक्तम्भवति। अस्मदीय नित्यप्रकाशाभावो हेतुरितिभावः [illegible]यन्त्वि " त्यत्र वाक्य इतिशेषः। ( तुल[illegible]कान्त्यमितिभावः।

नित्यत्वं वस्तुसत्यत्व व्यवस्थापक मुताबाधितत्वं ? आद्ये निर्दोषत्वादिमात्रेणैव प्रामाण्यसिद्धौ तन्नित्यत्वस्य प्रामाण्यंप्र त्यनंगता । दोषे सतिच प्रकाशानुवृत्तेर [ प्रयोजकत्वं । ] किंचित्करत्वम् । द्वितीयेतु कादाचित्कस्यापि घटादिप्रकाशस्य तदस्तीति घटादिस्-त्यत्व मकामेनापि स्वीकार्यम् । ततश्च - ॥ * ॥ व्यावृत्ति रनुवृत्तिर्वा नमिथ्यात्वादि साधिका । नबाधो जगतोऽध्यक्षा ब्रह्मणो प्यस्ति यौक्तिकः ॥ * ॥ अयमत्र विभागः ॥ * ॥ बाध श्शुक्त्यादिधीरत्र व्यावृत्तिर्भ्रमसंशयः । मिथ्यात्वं रजताद्यर्थ स्वरूपाभाव उच्यते ॥ * ॥

नापिषष्ठः, तस्य बाधपर्यायस्य तत्फलभूतभ्रान्तिविषयत्व निवृत्तिलक्षणस्यवा ऽनुपलम्भादिनिरस्तत्वात । इतरस्यत्वप्रयोजकत्वात् । व्यतिरेकासिद्धिश्च बहुधा द्रष्टव्या । यन्नमिथ्या तन्नव्यावर्तत इतिहि व्यतिरेकः । ब्रह्मतु नमिथ्या , सर्वतो व्यावर्तते , सर्वान्यत्वात् , सर्वत्र स्वय् मवर्तमानत्वाच्च ।

एवमनुवृत्त्यनुमानेपि द्रष्टव्यं ।

एतेन व्यावर्तमानत्व विकल्पदूषणन्यायेन ' भिन्नत्वात् ' 'कादाचित्कत्वात् ' ' बाध्यत्वात्, " जडत्वात् ' इत्यादिप्रपंचमिथ्यात्वहेतु

---

'व्यावृत्ति' रित्यादिश्लोके व्यावृत्तेर्मिथ्यात्वाप्रयोजकत्वं बाधमिथ्यात्वयोस्साध्यसाधकभावश्च प्रतीयते, कथमेतदुपपत्तिः ? त्रयाणां भेदानुपलम्भादित्यत्राह ( अयमत्र विभागइति )( नापिषष्ठइति ) सहि बाध नियतधर्मोवा बाधफलंवा वाच्यः , अन्यस्य मिथ्यात्वंप्र त्यप्रयोजकत्वात् । बाधनियतधर्मो नदृश्यते, तत्फलमपिहि भ्रमनिवृत्ति र्व्यवहारनिवृत्तिश्च, नच तयोर प्युपलम्भ इत्यर्थः । बाधपर्यायः - बाधतुल्य', बाधनियत इतियावत् । ( एवमिति ) व्यतिरेका, सिद्धिरित्यर्थः । यन्नस न्नतदनुवर्त्तत इत्यसिद्धमेव , सुश्लिष्ट बहुतन्तु व्यापिताया मेकस्यां रज्जौ व्यभिचारात् । ( एतेनेति ) भिन्नत्वं ब्रह्मणि व्यभिचारि, क्वाचित्कत्वकादाचित्कत्वे विरुद्धे, बाध्यत्वमसिद्धं , जडत्वं

जालं समूलोन्मूलितमिति तेपूदासि भाष्यकारैः । तर्कश्च [ मन्दः ] दुष्टः, बा [ध्या] धाबाधादिभिरेव सत्यमित्थ्यार्थ विभागसिद्धेरिति ।

इति कवितार्किक सिंहस्य सर्वतन्त्र स्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदांताचार्यस्य कृतिषु शतदूषण्यां व्यावर्तमानत्वानुमानभंगवाद षोडशः ।



---

दृश्यत्वानुमाने दृग्व्यतिरिक्त [ रेक] कल्पदूषणे निरस्तम् । आदिपदेन परिच्छिन्नत्व गृह्यते ।

एतेनेदं निरस्तं, यदाहनवीनः – जडत्वं – ज्ञानान्यत्वं, अन्तःकरणातिरिक्तोहमिति व्यवहारगोचरान्यत्वंवा । परिच्छिन्नत्वं च देशतः कालतोवस्तुतश्च, देशपरिश्चेदश्च स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं । कालपरिच्छेदश्च ध्वंसप्रतियोगित्वम्, वस्तुपरिच्छेदश्च स्वसमानसत्ताकभेदवत्त्व, मिति न ब्रह्मणि व्यभिचारइति ।

नच – स्वसमानसत्ताकत्व विवक्षया व्यभिचारोद्धारः, यथा कथंचि त्साम्यविवक्षायां ब्रह्मगतान्यत्वस्यापि ब्रह्मणा समानसत्ताकत्वात् । अस्तिहि सत्तापदबोध्यत्वेन साम्यं ब्रह्मान्यत्वसत्तयोः । सत्ताविभाजकोपाधिना साम्यविवक्षाया मसिद्धिः, नहि मिथ्यात्वसिद्धेः प्राक् व्यावहारिकादि भेदसिद्धिः । ज्ञानान्यत्वं यदि ज्ञानपद मुख्यार्थान्यत्वं, तर्हि ब्रह्मणि व्यभिचारः । यदि तल्लक्ष्यार्थान्यत्वं । तर्हि तत्पदलक्ष्य व्यवहारान्यत्वात् ब्रह्मण स्सएव दोषः । यदि तत्पदलक्ष्य यावदन्यत्वं, तर्हि स्वरूपासिद्धिः ; ज्ञानपदेन विषयलक्ष्य सम्भवात् ।

एतेन द्वितीयोपि कल्पः प्रत्युक्तः, व्यवहारेपि मुख्यामुख्यविकल्पे उक्तदूषणसाम्यात । स्वाधिकरणवृत्त्यत्यन्ताभाव प्रतियोगित्वमपि ब्रह्मण्यनैकान्तिकं । नच ब्रह्म निरधिकरणं, तथा

सिद्धेः। ब्रह्मैव हि घटाद्यभाव इत्यभिधत्से, तच्च निरधिकरणमिति ब्रूषे। नचैवमपि ब्रह्मण स्सर्वत्र विद्यमानतया स्वाधिकरण वृत्त्यभाव प्रतियोगित्वासिद्धिः, घटवति घटाभावो नास्तीति प्रतीत्यनुसारेण प्रतियोगिन स्तदन्यस्य वा तदधिकरण वृत्त्यभावस्या सिद्धेः। ध्वंसप्रतियोगित्व मपि ब्रह्मणि व्यभिचारि, घटाभावो ध्वस्तइति प्रतीतेः। स्वकालावृत्ति ध्वंसप्रतियोगित्वविवक्षाया मसिद्धिः, ब्रह्मणएव घटादिध्वंसत्वांगीकारात्।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवा-
समधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन
तच्चरण परिचरणपरायणेन तत्प्रसादलब्ध
महाचार्या परनागधेयेन रामानुज-
दासेन विरचितायां शतदूषणी
व्याख्यायां चण्डमारुताख्यायां
व्यावर्तमानत्वानुमान भंगः
षोडश स्कन्धः॥



श्रीरस्तु ।

श्रीमते रामानुजायनमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ शतदूषणी ॥

## ॥ सप्तदशवादः ॥



विभ्राणमात्मनि सदा महतीं विभूति
देहेन तन्मय निदर्शित भूपणास्त्रम् ।
आलिंगितं कमलया मम चित्तवृत्ते
रालम्बनं भवतु दैवत मद्वितीयम् ॥

यत्तु - आत्मख्यातिवादिभि रर्जितं ग्राह्यलक्षणायोगाख्यं तर्क भिक्षित्वा दृग्दृश्ययो स्सम्बन्धानुपपत्तिरिति नामान्तरेण पठन्ति । तदपि सम्बन्धस्या बाधितप्रत्यक्षसिद्धत्वादेव निरस्तम् ।

आहुश्च – उक्तन्तु सौगतैर्ग्राह्यलक्षणाभाव लक्षणम् ।
अन्ये दृग्दृश्यसम्बन्धाभाव माहु र्निरासि तत् ॥ इति ।

---

वाधूलश्रीनिवासार्य गुरवे कुर्महे नमः ।
यत्प्रभावेन निर्विघ्नं कार्यसिद्धिः क्षणाद्भवेत् ॥

( विभ्राणमिति ) महतीं विभूति मात्मनि सदा बिभ्राणं, तन्म निदर्शित भूषणास्त्रं - देहेन सदा बिभ्राणम् । " आलिंगितं कमल या-" अत्रापि सदेत्यनुषज्यते । ( तन्मयेति ) विभूतिमयत्वेन अस्त्रभू णाध्याये प्रतिपादितं भूषणास्त्रम् । ' जातिरप्रमाणिना ' मित्येकवद्भ वः । 'सदे'त्यनेन सत्यत्वं फलितम् । " चित्तवृत्तेरालम्बन " मित्यने

ननु – कोसौ सम्बन्धः? न तावत्संयोगः, दृशे रद्रव्यत्वात्। द्रव्यत्वाभ्युपगमेपि गुणादिभिस्सह तत्सम्बन्धस्य संयोगत्वायोगात्। नापि समवायः, आत्मधर्मस्य ज्ञानस्या'र्थे तदयोगात्। नचार्थानामेव ज्ञाने समवायः, तेषां बाह्यत्वात्; अतद्धर्मतयैव प्रतीयमानत्वाच्च। नच रूपरसयोरिवै_कार्थसमवायः, उभयाश्रयैकस्यानुपलम्भादिनिरस्तत्वात्। नाप्येकान्तःकरणसंक्रमः, निर्विकारायाश्चिते स्संक्रमाख्यपरिणामायोगात्। विवर्तपक्षेतु दृग्दृश्यसम्बन्धस्य मिथ्यात्वावश्यम्भावात्। नत्व (चा) र्थस्याप्यन्तःकरणे संक्रमः, बहिरेवोपलभ्यमानत्वात्। अन्तःकरणस्य विषयस [स्व] रूपवृत्तियोगो विषयसंक्रान्तिरिति व्यपदिश्यत इति चेन्न; - विषयविधर्मिण्या वृत्ते र्विषयसारूप्यस्या नुपलम्भ निरस्तत्वात्। गौरिति ज्ञानं गौरित्यर्थ इत्यर्थ सारूप्यं प्रत्यक्षसिद्धमितिचे 'न्न; तयोः पृथगर्थत्वात्। गोत्वविशिष्टमर्थ म्प्रकाशय ज्ज्ञानं गौरितिज्ञानमिति व्यपदिश्यते। गोत्वविशिष्टार्थस्तु गौरि_त्यर्थइति। अन्यथा गौरिति शब्दइत्यत्रापि शब्दस्या र्थसारूप्यप्रसंगात्। तथाचे_दमर्थसारूप्यवादिनो वैताळस्य वैरूप्यायैव जायते। विषयोपरागापरनामक सम्भिन्नवृत्तिमदन्तःकरणभेदाग्रहजनितातात्विकधर्मयोगाभिमानएवो पलब्धिनामा-

---

सत्यम्ये दृश्यत्वसम्भवसूचनेन वादार्थस्सूचितः। प्रत्यक्षस्याबाधितत्व मसिद्धमि त्याशयेन शंकते (ननु कोसाविति) (द्रव्यत्वेति) नच तत्र संयुक्तसमवायादि स्सम्बन्धः, अननुगमात्। चक्षुस्सम्प्रयोग दशायां स्पर्शस्यापि व्यवहारप्रसंगाच्च। (आत्मधर्मस्येत्यादि) (तेषां बाह्यत्वादिति) घटादीनां ज्ञानव्यवहित देशवर्तित्वेन ज्ञानवृत्तित्वाभिवादि त्यर्थ। (अनुपलम्भादीति) आदिशब्देन प्रमाणान्तरस्याप्यभाव उक्तः। (निर्विकारायाइति) (नत्विति) तुशब्दो निर्विकार प्रयुक्तानुपपत्ते रभावं द्योतयति। (विषयविधर्मिण्य इति) विषय

चिते विषयविषयसम्बन्ध इति चेन्न ; प्रत्येकं सार्वत्रिकाणां चैतन्य स्वरूपाणा मनन्तान्तःकरण सन्निधाना भ्युपगमेन पुरुषबहुत्व स्थापक भोगप्रतिनियमादिभंगप्रसंगात् । नच प्रत्यात्मसमवेत मदृष्टादिकं नियामकं किमपि तैरिष्यते, अन्तःकरण [ गत ] स्य तु साधारण्यं दुष्परिहरम् , अनादिसामग्रीस्वभावादेव कश्चिद्भोगप्रवाहः कंचित्प्रति भवतीतिचेन्न; -- पूर्वपूर्वसामग्र्याअपि सर्व सम्बन्धित्वेन साधारण्ये तदधीनोत्तरनियमासिद्धेः । नच तादात्म्यं दृशो दृश्यसम्बन्धः , जडत्वाजडत्वादिविरुद्धधर्मप्रतिहतत्वात् । एकस्याश्च संविदो ऽनेकविषयत्व दर्शनेन परस्परविरुद्धानेकतादात्म्ये तेषामपि मिथ स्तादात्म्यप्रसंगात् । ततश्च विरोधएव जगति न स्यात् । इदं सर्वमिति सर्वावलम्बि बुद्धितादात्म्येना न्तत स्सर्वैक्य प्रसंगेन विचित्रव्यवहार विलयप्रसंगात् । तथाच पुनरेकस्या प्यर्थस्य नर्तकीभ्रूलतादर्शनादिष्वि वैकविषय संविदैक्यप्रसंगेना स्म दिष्टापाताच्च । नच चित्राद्वैतं , स्ववचनविरोधात् , नानात्वं -

---

वैधर्म्यं वृत्तौ प्रत्यक्ष सिद्धमिति भावः। ( अनादिसामग्रीति ) सामग्र्या स्तदीयत्वा द्भोगस्य तदीयत्वं , सामग्र्यपि पूर्वसामग्र्या स्तदीयत्वा त्तदीयेत्यर्थः । ( परस्परविरुद्धेति ) परस्परारमत्वा योग्येत्यर्थः । ( ततश्चेति ) सर्वत्र विरुद्धविषयक समूहालम्बन सम्भवादिति भावः। ( तथाचेति ) एकेनाभिन्नयोः परस्परम भेदा दित्यर्थः । नर्तकीभ्रूलता दर्शनादिषु एकस्य भ्रूलतारूपस्यार्थस्य तै र्दर्शनै रैक्यव देकस्य सर्वसंविद्विषयत्वे तेन विषयेण सर्वसंविदा मैक्य प्रसगेन संविदामैक्य मस्मादिष्टं प्रसज्येतेत्यर्थः। नर्तकीदर्शनस्थले संविदा मैक्यं पूर्व मा द्य तत् दृष्टान्तीकृतमिति ध्येयम् । नानारूधानां स्वतस्सिद्धचित्रत्वावि रोधेनैव एकज्ञानतादात्म प्रयुक्त मैक्यमस्तु , एवं ज्ञानानामप्यर्थैक्य मस्तु, यथा नीलत्वपीतत्वादि वैचित्र्ये सत्येव चित्ररूपस्यैक्यमिति शकां निराकरोति ( नच चित्राद्वैतमिति ) रूपादे रव्याप्यवृत्तित्वाभा

चित्रत्वं तत्प्रतिषेधस्त्वद्वैतमिति । चित्ररूपन्तु नानारब्ध [मितिस्थ] मेकमिति न विरोध इति निर्वहन्ति । एवं चित्ररसादिष्वपि । नानारूपसमुदायएववा । नचात्रारम्भ स्समुदायो वा, अनभ्युपगमात् । नच चित्रत्वं मिथ्या, अस्मन्मतप्रसंगात् । निराकारमपि - ज्ञानं वासनावैचित्र्या देकाकार मनेकाकारमिव भातीति चेत्; तथापि मिथ्याभूतस्याकारस्य सत्यज्ञानेन तादात्म्य मनुपपन्न मिति ज्ञानाकारस्य बाह्यत्व मेष्टव्यम् । तथापि ज्ञानएवाय माकाराध्यास इत्यांतरत्वमितिचेन्न; - एतावदात्मख्याते रस्माभिरपीष्यमाणत्वात् ।

---

मतेनाह (चित्ररूपं त्विति) तथाच नैकस्य रूपस्य नीलत्वादिवैचित्र्यमिति भावः । व्याप्यवृत्तित्वनियमाभाव मतेनाह (नानारूपेति) भिन्नावच्छेदेन एकाधिकरणे नीलादीनां वृत्तित्वसम्भवात् समुदायभावइति भावः । ननु विजातीयरूपै श्चित्ररूपाख्यरूपान्तरव दत्रा प्यर्थभेदज्ञानैकत्वाभ्यां ज्ञानभेदार्थैकत्वाभ्यांवा चित्राद्वैतमिति किंचिदारभ्यतां, तत्समुदायएववा चित्राद्वैत मस्त्वित्यत्राह (नचात्रेति) भेदाभेदारब्धः कश्चिद्धर्मो ऽनभ्युपगतएव, भेदाभेदयो रवच्छेदकभेदे नैकत्र वृत्त्यभावा देकाधिकरण सम्बन्धप्रयुक्त स्समुदायभावो प्यनभ्युपगत इति भावः । (अस्मन्मतेति) अर्थानां भेदस्य दृश्यत्वांद्दि नवस्तुनोदृशि तादात्म्य[illegible], सत्यमिथ्याभूतयो स्तदयोगात्, अत स्तत्रा ध्यासिकएव सम्बन्धो वाच्य इति सर्वत्रापि तथैवस्यादित्यर्थः ।

ज्ञानस्वरूप आत्मैवा र्थाकारेण ख्यायते, अत स्सर्वोप्यान्तर इति [ज्ञा]नानुपपत्तिरिति योगाचारमतेन शंकते (निराकारमपीति) [ए]तावदिति ) ज्ञानभेद एवार्थस्य नेष्यते ज्ञानेऽध्यासस्त्विष्यत एव [अ]यः । तथाचाध्यासाधीन एव ज्ञानार्थयोस्सम्बन्ध इति मदिष्ट[सि]द्धिरितिभावः ।

नच स्वजन्यज्ञाने स्वाकारसमर्पकत्वमेव ग्राह्यत्वं, अन्याकारस्यान्यत्र समर्पयितु मशक्यत्वात् । मृगमदवासनासंक्रमेपिहि द्रव्यसंक्रमएव । अनेनैवन्यायेन " यस्मिन्नेवहिसन्तान " इत्यादिकमपि निरस्तम् । कार्पासरक्तादिषु पाकजगुणान्तरा रम्भः । कथंच विनश्यतार्थेनानुत्पन्ने ज्ञाने स्वाकारसमर्पणम् ? नचाकारः स्थिर स्त्वयेष्यते, येना कारिण्यतीतेपि परस्मि न्वर्तेत । तत्तत्स्वरूपमिथ्याकारयोगएव तत्संक्रमइत्युच्यत इतिचेन्न;, मिथ्याकारेणसह सत्यस्य सम्बन्धायोगात् । एव मालम्बनस्य स्वाकारसमर्पकत्वायोगा त्तद्धेतुत्वमात्रेण ग्राह्यत्वेधिपति प्रभृतीनामपि ग्राह्यत्वप्रसंगः । नच ज्ञानस्वरूपमेवार्थस्य तत्सम्बन्धः। सम्बन्धसम्बन्धित्वलक्षण विरुद्धधर्माध्यास प्रसंगात, विषयविशेषनियामकाभावाच्च । नहि त त्कांचि त्प्रत्यज्ञान मस्वरूपंवा । नहिनीलं कं

---

॥ * ॥ भिन्नकालं कथं ग्राह्य मितिचे द्ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञा ज्ञाना नाकारार्पणक्षमम् ॥ * ॥ इतिसौत्रान्तिकमत माशङ्क्य-निराकरोति ( नचेति ) क्षणिकवादिभिः स्वपक्षेपूर्वज्ञानक्षणे कथं फलोदयः अन्यकर्मणो न्यत्र फलजनकत्वेति प्रसंगात , इत्येतद्दोषपरिहारार्थं " {यस्मिन्नेवहिसन्तान आहिताकर्मवासना । फलंतत्रैव बध्नातिकार्पासेरक्ततायथा } " इत्युक्तम् , तत्प्रसंगान्निराकरोति- ( अनेनैवेत्यादि ) ( कथंचेति ) विनश्यतार्थेन समर्पणं वक्तव्यम् , अर्थस्य क्षणिकत्वात् । तथाचानुत्पन्न एव ज्ञाने समर्पणं वक्तव्यम् । तच्च न सम्भवति, आश्रयाभावादित्यर्थः । तप्तायः पिण्डे वह्नेः स्वरूप समर्पकत्वदर्शनेना र्थस्य ज्ञाने स्वाकार समर्पकत्वं परेणोक्तम्, तत्र च समानकालीनएव समर्पण दर्शना दनुत्पन्ने ज्ञाने समर्पणं नसम्भवतीतिभावः । ननु - अर्थाकारस्य ज्ञाने वर्तनमेव समर्पणं विवक्षितं तच्चार्थे नष्टेपि सम्भवतीत्यत्राह ( नचाकार इति ) ( सम्बन्धायोगादिति ) सत्यसम्बन्धायोगादित्यर्थः । मिथ्याभूतसम्बन्धस्याभ्यु

चित्प्रत्यनीलं । नच हेतुत्वमात्रमेव नियामकं, इन्द्रियादेरपि विषय-
त्व प्रसंगात्; अतीतादे रविषयत्वप्रसंगाच्च । अदृष्टादिवशा त्कर्म-
कारकं विषय इतिचेन्न;- नित्यतया कारकशून्यस्ये श्वरज्ञानस्य निर्वि
षयत्वप्रसंगात्, अस्मदादिज्ञानस्या प्यतीतानागते रसत्वादकारकै रस-
म्बन्धप्रसंगात्, भ्रान्तिविषयस्या सत्त्वा दकारकत्वेन भ्रांते र्नित्यनिर्विषयत्व
प्रसंगाच्च । मुक्तस्य च विधूत पुण्यपापस्या ज्ञानमिच्छतो ऽदृष्टादे
र्नियामकस्या सम्भवात् । नचा र्थगतप्राकटय जननमेवा
र्थ सम्बंधइति युक्तम्: ज्ञानातिरिक्तस्यार्थप्रकाशस्य ानुपलम्भाद्यभावात्,
तज्जननेचे ज्ञानस्यार्थसम्बंधांतर मन्तरेणासामर्थ्यात्, अन्यथा ऽन्यत्रापि

---

गमे स्वाकारसमर्पकत्वरूप ग्राह्यत्वं तस्यमिथ्याभूताकारस्य नास्ति,
अत स्तस्याग्रहा दनुमानं बाह्यार्थस्य नस्यात, अतो न स्वाकारसम-
र्पकत्वं ग्राह्यत्वमितिभावः । ननु-कर्मकारकेणैव ज्ञानसम्बन्धः, इन्द्रि
यादिच न कर्मकारकमिति नाति प्रसंगः, अतीतादिकन्तु कर्मैव,
अतीतंज्ञानमित्यादिव्यवहारादिति तस्य विषयत्वमिति शंकते-
( अदृष्टादीति ) अदृष्टशब्देन पुण्यमुच्यते । आदिशब्देन दुरदृष्टमुच्यते ।
( नित्यतयेत्यादि ) द्वितीयाच तत्र ज्ञानजन्यव्यवहारफलयोगिता-
भिप्रायेति भावः । अन्यज्ञानएवायं नियमः,-कर्मकारकमेव विषय
इति, ईश्वरज्ञानस्यतु सर्वमेव विषय इती श्वरज्ञानस्य सर्वै स्सम्ब-
न्धइत्यत्राह ( अस्मदादीति ) ( भ्रान्तीति ) भ्रान्तिज्ञानस्य ज-
नने कर्मकारकेणैव सम्बन्धनियमा दकर्मकारकेण रजतादिना संब
न्धाभावा न्निर्विषयत्वापत्तिः, अकर्मकारकेणापि सम्बन्धे नत्वीश्वर
स्येव न्नित्यत्वं स्यात, ज्ञानस्वरूपस्य [ स्वरूपज्ञानस्य ] उपलभ्य
त्वेन तत्र जन्यत्वस्यैव निवृत्ते र्वाच्यत्वादित्यर्थः ।

तदारम्भप्रसंगात्, अतीतादिपुनिराधारप्राकट्यजनना योगाच्च । नच विषय विषयिभावाख्योय मपर स्सम्बंधः, तस्यापि नियामकान्तराभावे सार्वत्रिकत्व प्रसंगाच्च । तस्यापि द्रव्यादिषट्कान्तर्भावे सामान्यादिभि स्सह तत्संवेदनस्या सम्बधप्रसगात् । बहिर्भावे त्वभावत्वादिप्रसंगात् । भूषणकारव्यतिरिक्ताना मपसिद्धान्तापाताच्च । एवं प्रकारान्तरेष्वपि दूषण मविनाभूतम् । सर्वथा ऽप्यतीतानागतयो र्वर्तमानज्ञानसम्बन्धस्य दुर्निर्वहत्वात् । नहि निराधार स्सम्बन्ध स्सम्भवति । अन्यथा भविष्यद्वृष्ट्यादिभि रिदानीमपि सस्यादिपोषणप्रसंगात् । यश्चासौ विषयविषयिभावात्मा दृग्दृश्ययो स्सम्बन्ध इष्यते, किं ताभ्या मसम्बद्धः ? उत सम्बद्धः ? उतोभयात्मा ? आहोस्वि दनुभयात्मा अन्या [illegible]कारो वा ? पूर्वत्र तयो स्सम्बन्धो नस्यात् । तदसम्बन्धस्यापि तत्सम्बन्धत्वे सर्वस्यापि सम्बन्धस्य सर्वसम्बन्धत्वप्रसंगात् । उत्तरत्रापि सम्बन्धान्तरेण - न वा ? आद्येऽनवस्था । द्वितीयेत्वसम्बद्धत्वम् । नहि सम्बन्धरहित मपि सम्बद्धमिति सभस्ति । स्वतो मिळितोयं सम्बन्ध इतिचेन्न; सम्बन्धिनोरेव स्वतो मेळनस्य लघुत्वात् । नामांतरेणच मेळनमेव नास्तीत्युक्तिः स्यात् । संबधिनएव स्वसंबंधात्मकत्वे व्याघातस्य

---

विषयतापदार्थान्तरमिति मत माशंकते ( नच विषये[illegible]ति ) ( अभावत्वादिप्रसंगादिति ) आदिशब्देन प्रागभावाद्यन्तर्भाव प्रयुक्[illegible]ताना दित्वादयो दोषा विवक्षिताः । पदार्थसप्तकातिरिक्त स्तर्हि स्यादित[illegible]त्राह ( भूषणेति ) एवमित्युक्तदूषणं विशदयति ( सर्वथेत्यादिना ) ( [illegible] थेति ) जलाभावेपि जलसम्बन्धसम्भवादिति भावः । " उभ[illegible] त्मा-" सम्बन्धासम्बन्धात्मेत्यर्थः । ( अन्यात्मेति ) सम्बन्धादि[illegible] ष्कोटिविलक्षण इत्यर्थः ( तयोरिति ) विषयविषयिभावो विषय[illegible] षयिणो स्सम्बन्धो न स्यादित्यर्थः । ( मिळितइति ) सम्बन्ध इत्य[illegible] (व्याघातस्येति) सम्बन्धसम्बन्धित्वलक्षणविरुद्धधर्माध्यासस्स्या दित्य[illegible]

पूर्वोक्तत्वाच्च । उभयानुभयादिपक्षास्तु व्याघातादिनिरस्ताएव । अनुभयपक्षे चास्मदिष्टा निर्वचनीया [ यतावादः ] पातः स्यात् । किंच विषयविषयिभावाख्यसंबन्धो द्विष्ठ एकनिष्ठोवा? नाद्यः, अन्योन्यस्मि न्नन्योन्यत्वाभावेन द्वयोरपि तस्यासिद्धेः । सिद्धौवा द्वयोरपि विषयत्वविषयित्वयोः प्रसंगात् । अतएव नद्वितीयः, संबन्धरूपताव्याघाताच्च । येनात्मनासौ संबन्धः क्वचि द्वर्तते किं तेनैवा त्मना न्यत्रापि, उततोन्येन? आद्ये द्वयोरपि विषयत्वादिप्रसंगः । द्वितीये कथ मेकस्य द्वयात्मकता? द्वयो [ तयो ] रप्यात्मनो र्द्वित्वाभावात् । संबन्धरूपतात्यागे तदात्मनोपि संबन्धस्य तत्त्वं नस्यात् । एव मन्यान्यपि संबन्धसामान्यविकल्पदूषणा न्यत्रा नुसन्धेयानि ।

---

( अनुभयेति ) सर्वस्यापि सतो विषयविषयिभावसम्बन्धाभ्यां सम्बन्धासम्बन्धान्यतरत्वा त्तद्वैलक्षण्ये सद्वैलक्षण्यसिद्धे रनिर्वचनीयत्वसिद्धि रित्यर्थः । यद्वा-सम्बन्धासम्बन्धवैलक्षण्यवत् सदसद्वैलक्षण्यस्यापि व्याघाताभावा त्तदपि सिद्ध्येदित्यर्थः । ( अतएवेति ) यत्रैकस्मिन् वर्तते तत्र विषयत्वविषयित्वयोरपि प्रसंगादित्यर्थः । ( येनात्मनेति ) विषयविषयिणो र्यस्सम्बन्धः, स विषयविषयिणो र्मद्ध्ये अन्यतरस्मि न्येनात्मना विषयत्वात्मना विषयित्वात्मनावा वर्तते, ततोन्यस्मिन्नपि तेनैवात्मना वर्तते - उतान्यात्मनेति विकल्पार्थः । ( कथमेकस्येति ) विषये विषयित्वात्मना विषयिणिच विषयत्वात्मना ज्ञानार्थसम्बन्धस्य वृत्त्यभावो विषयत्व विषयित्वयो र्भेदादेव वाच्यः, तथाच ज्ञानार्थ सम्बन्धस्य [illegible] उभयात्मकत्वासंभवा द्विषयेपि विषयत्वात्मना विषयिण्यपि विषयि[illegible] त्वात्मना वृत्ति र्नसंभवतीत्यर्थः । ( द्वयोरपीति ) [ ( तयोरपीति ) ] [illegible] त्वस्य विषयित्वस्य चैकैकमात्रवृत्तित्वेन संबंधलक्षणाभावात्, [illegible] न्नस्यापि दृग्दृश्ययोस्संबंधस्य संबंधत्वं नस्यादित्यर्थः । ( संबंधसा[illegible] [illegible]ति) समानानां भाव स्सामान्यं, संयोगसमवायसाधारणधर्माः, सबं[illegible] [illegible] द्रतदुभयाश्रितत्वैकत्वानि ।

ननु - किं सम्बन्धांतर गवेषणेन, स्वतएव किंचिज्ज्ञानं कस्य चिदेवेति नियत स्वभाव मुपलम्भसिद्धमिति चेन्न;- नियामकमन्तरेण नियमे तिप्रसंगात् । कस्यचिदिति सम्बन्धविभक्ते र्मिथ्या विषयत्व प्रसंगाच्च । [तन्निरूप्यस्वभावतया स्वसामग्र्या जन्यतइति चेन्न;- ईश्वरज्ञानस्य तदभावेन निर्विषयत्वप्रसंगात् । सामग्र्याहि स्वरूप मुत्पादयितुं शक्यं, नतु [त्व] सम्बन्धिनिरूप्यत्वापादनं , सर्वाकारै स्सर्वनिरूपणापादन प्रसंगात् । सम्बन्धरहितयोरपि भावाभावयोरिव विषय विषयिणो र्निरूप्य निरूपकभाव इति चेन्न;- सम्बन्धरहितयोर्भावाभावयोरपि तात्विकस्य निरूपणस्या स्माभि रभ्युपगमात् । तथापि दोषादि सामग्री वैचित्र्यादेवा सम्बन्धविषयनिरूप्यत्वं शुक्तिरजतादिज्ञानोत्पत्तौ दृष्टमिति सर्वत्रापि तथाभ्युपगम्यत इति चेत् ;- आगतोसिपन्थानं । विषयमिथ्यात्वादेवहि तत्र विषयसंबंधाभावः, तथात्रापि स्वीकर्तव्यमिति । अतएकस्यैव संविदात्मनोऽनाद्यविद्यादोषवैभवा दविचारित रमणीयसंबंधे तदाकारावभासोऽभ्युपगन्तव्य इति ।

---

एतदुक्तंभवति , किमयं द्रग्दृश्यसम्बन्धः सम्बन्धिभ्यां भिन्न उतन ? द्वितीये सम्बन्धत्वमेव हीयेत, आद्ये किमनाश्रितो न्यतराश्रित उभयाश्रितोवा- आद्यद्वितीययो रसम्बन्धत्वं । अन्त्ये, किमयं नाना-उतैकः । आद्ये नसम्बन्धता । अन्त्ये अतीतानागतयो स्सम्बन्धाभाव प्रसंगः । एषां दूषणाना मुक्तप्रायत्वात् सामान्येनोक्तिः । ( मिथ्याविषयत्वप्रसंगादिति )ज्ञानस्वरूपस्य सम्बन्धिरूपतया संबंधत्वानुपपत्तेरितिभावः । साम ग्र्येव नियामिके त्याशंकते ( तन्निरूप्येति ) ( ईश्वरज्ञानस्येति सामग्र्या स्तत्तादर्थनिरूप्यत्वप्रयोजकत्वे प्रयोजकाभावा दीश्वर[illegible] निर्विषयस्यादित्यर्थः । दोषान्तरमाह ( सामग्र्याहीति ) नहि [illegible] न्धाधीनस्य तन्निरूप्यत्वस्य तदभावस्यापादने सामग्रीसमर्[illegible] तु कार्यस्वरूपस्य उत्पादन इत्यर्थः । रजतादि भ्रमस्या सद्वि[illegible] दि स्वमतावष्टम्भेन शंकते ( तथापीति ) ( असम्बन्धेति ) असत्[illegible] सम्बन्धाभावादितिभावः । (अविचारित रमणीयसम्बन्धइति )" [illegible]

अत्रोच्यते-

किं दृग्दृश्ययो स्संबंधानुपपत्त्या तदुपपादनार्थं दृश्यमिथ्यात्व कल्पनमित्यर्थापत्ति विवक्षा? यद्वा- विकल्पासहत्वेन संबंधाभावं सिद्धंकृत्वा तेनैव संबंधिनो प्यभाव साधनं? उत दृश्यसत्यत्वे तस्य संवेदन संबंधाभाव प्रसंग इति प्रपंचमिथ्यात्व साधकानुमाने शुल्याद्यनुग्राहक तर्कविवक्षा? इति ।

नाद्यः, अन्यथैवोपपत्तेः, परिदृश्यमानार्थस्यानुपपत्तौ प्रसज्यमानाया मुपपादककल्पनं ह्यर्थापत्तिः । नच दृग्दृश्य संबंधस्योपपादकं दृश्यमिथ्यात्वं, अपितु तत्प्रतिक्षेपकमेव । अत उपपादककल्पनापदेशेना नुपपत्तिकल्पनमेवेत्यायातं । मिथ्याभूत संबंधस्योप पादकमेवेतिचेन्न ; — तथाविधस्य तस्यादर्शनेन तदुपपादकान्वेषणा योगात् ।

नापि द्वितीयः; सम्बन्धाभावेपि मेरुमन्दरयो श्शशविषाणयो श्शाखाचन्द्रमसो रिव च सम्बन्धित्वाभिमतयो स्सत्वा विघातात् । अन्यथा दृश्यवं दृशोपि तस्या एववा मिथ्यात्वं किं न कल्प्यते । दृगधीनसिद्धे दृश्यस्य दृगभाव इव तत्सम्बन्धाभावेच मिथ्यात्वं सिध्यति, दृशेस्तु स्वसंवेदनसिद्धतया दृश्यसम्बन्धाभावे, नासत्यत्व व न; यथा दृशो दृशिकर्मत्वाभावेपि स्वसंवेदनेन सिद्धि स्त द्धेश्वस्यापीतिवदतः कः प्रतीकारः । स्वात्मनि क्रियाविरोधइति चेत् ; तुल्यं । संवेदनेपि स्वव्यवहारे स्वगोचर संविन्नैरपेक्ष्यमात्र विवक्षायां नत्राव इतिचेत् ; घटादावपि तथास्तु । संविद्विषयत्वं

---

..षः । ( दृग भावइति ) दृष्टांततयोक्तं । ( तत्सं- न्धाभावइति ) असम्बन्धस्य दृशा सिद्धा वतिप्रसंगादितिभावः ।

घटादेः प्रतीयत इतिचेत् ; किमतः । स्वव्यवहारे ऽन्यसापेक्षत्व मितिचेन्न ; - संवित्सम्बन्धस्य त्वयैव प्रतिक्षिप्तत्वेन तदधीन व्यवहार त्वायोगात् , ततश्च परिशेषात् घटादे रन्यनिरपेक्षव्यवहारत्वासिद्धे - स्तावन्मात्र रूपं स्वसंवेदनं फलितमेव । घटादिस्वरूपवत्तस्य स्व संवेदनमपि नोपलभ्यत इतिचेत् ? संविदोवा किं स्वत स्स्वयंप्रका शत्व मुपलभ्यते ? । अनुभूतित्वाद्यनुमानादिभि स्साध्यतइतिचेन्नः - घटत्वाद्यनुमानैरपि विश्वस्वप्रकाशत्वसाधनप्रसंगस्या प्यवेद्यत्व नि- राकरणे स्थापनात् ॥ किंच - अनुमानविषयत्वांगीकारे कथं विषय विषयिभावसंबन्धं विघटयसि ? तद्विघटनेवा कथं स्वप्रकाशत्वमेव साधयसि ? अतो दृग्दृश्ययो स्संबन्धानुपपत्त्या दृश्यमिथ्यात्वे दृ- शोपि मिथ्यात्वप्रसंगो दुर्वारः ॥ स्वतस्सिद्धतया तत्सत्यत्वे विश्व- स्यापि ततएव सत्यत्व मवर्जनीयं, अविशेषात् ॥ ननु भव- तोपि संविद स्स्वयंप्रकाशत्वं घटादे र्दृगधीनसिद्धित्वं चाभिमतं , अतः कथं प्रतिबन्द्यवतारः ? इत्थं - अस्माभि स्संवित्स्वयंप्रकाशत्व स्य संविदन्तरवेद्यताभ्युपगमात् । यदि त्वयापि तथेष्यते, तत स्त त्रैव विषयविषयिभाव रिसद्धः । यदि तत्रापि विषयमिथ्यात्वं, तत स्स्वयंप्रकाशत्वमेव नस्यात् । धर्मरूपत्वा त्तदापि माभूदिति चेन्न ; - तत्परित्यागे स्वसंवेदनेन संवित्सत्यत्वस्थापनानुपपत्तेः । धर्मता मपहाय संवित्स्वरूपतया तदेव तिष्ठतीतिचेत् ; तर्हि स्व-

---

**(घटादिस्वरूपवदिति) व्यतिरेकदृष्टान्तः । (अतइति) स्वप्रकाशत्वस्य सं विदन्तरवेद्यत्वे दोषस्योक्तत्वात् , प्रमाणाभावेपि स्वप्रकाशत्वांगीकारे विश्वस्यापि स्वप्रकाशत्वं स्यादित्यर्थः । " यदि त्वयापि तथेष्यत**

रूपमेव स्वप्रकाशत्वसाधकसंविदन्तराविषय इत्यायातम् । तथासति विषयभूताया स्संविदोपि त्वदुक्तानुपपत्त्यैव घटादिवन्मिथ्यात्वमवर्जनीयम् । तन्मिथ्यात्वेपि तद्विषया संवि दन्या स्वसंवेदनगुप्ता तिष्ठतीति चेन्न ; - तत्संवेदने प्युक्तदोषानतिलङ्घनात् । अत स्संविदन्तरकर्मतागन्धरहित संवि त्स्वयंप्रकाशत्वे विश्वस्यापि तथात्वेन सत्यत्वप्रसंगो दुर्वारः। सविदोपि यथाकथंचित् दृश्यत्वाभ्युपगमेपि तन्मिथ्यात्वप्रसगेन दृश्यमित्थ्यात्वकल्पन मशक्य [ शक्यं स्यात् ) मिति ।। किंच – यदि परिदृश्यमान स्सम्बन्धोऽनुपपन्न स्तदा सम्बन्धान्तरमेव दृष्टबाधेन कल्प्यताम् । न पुन स्सम्प्रतिपन्न स्वारसिकबाधरहित दृश्यबाधो युक्तः सम्बन्धान्तरमपि कल्प्यमान मनुपपन्नमिव भातीतिचेत् , किंदृश्यमिथ्यात्वं कल्प्यमान मुपपन्नमिव भाति ? यत्ते-स्ववचनव्याघातादिक मापादयति । अनुपपन्नमपि गत्यभावा दवलम्ब्युत इति चेत् ? सम्बन्धसत्यत्वम प्यनुपपन्न मपि किं नावलम्ब्यते? । अनुपपन्नत्वमेव सत्यत्वाभावइति चेत् ; मिथ्यात्वेनुपपन्ने तदभावस्यावर्जनीयत्वात् । यथा सम्यग्रजतस्य मिथ्यारूपत्वा नुपपत्तौ सत्यत्वं । अत स्सम्बन्धोपि तथाभूतः

---

दितेऽर्थे दोषान्तरमाह ( संविदोपीति ) ( यथाकथञ्चिदिति ) स्वशत्वादि विशिष्टरूपेण दृश्यत्वाभ्युपगम इत्यर्थः । (अनुपपन्नमिवभाते ) तथा सम्बन्धान्तरस्य कल्पयितुमशक्यत्वा त्सम्बन्धाभावेन- त्यात्वमेव कल्प्यतइत्यर्थः ( स्ववचनेति ) विश्वम्मिथ्येत्यत्रमिथ्यात्वस्यापि मिथ्यात्वावश्यकतया प्रपञ्चसत्यत्वसिद्धे विश्वमिथ्यात्वं व्याघात मावहतीत्यर्थः । आदिशब्देन प्रत्यक्षादि विरोध उच्यते । अनुपपन्नत्वमेवेति ) तथाच सत्यत्वस्याभावा त्संबन्धस्य मिथ्यात्वं स्यतीत्याभिप्रायः । ( मिथ्यात्वइति )" दृश्यस्ये " तिशेषः । ( अति ) यतोदृश्यस्य सत्यत्व मवर्जनीय मत इत्यर्थः । यद्वा – यतो–

कश्चिदिति । नित्यमुपलम्भानुरोधेन तत्सत्यत्वस्थापने दृश्यस्या प्युपलब्ध सत्यत्वाबाधोपपत्तेः , मिथ्यात्वस्यच स्वयमेवानुपपन्नत्वा-भ्युपगमा दस्माक मनायासेने ष्टसिद्धिप्रसंगात् । अनुपपन्नत्वाभिमत पर पक्षाणामपि प्रतिषेधायोगाच्च । यथारुचि परिग्रहइति तु स्यात् । तथाच कृतं वैदिकत्व कंचुकवहन वृथाप्रयासेन ।

नच तृतीयः, असत्यत्वपक्षेपि संबंधानुपपत्तिप्रसंगेन प्रति तर्कपराहतत्वात । असत्यत्वेपि शुक्तिरजतादि ष्वारोपितसंबंधेन व्य वहारः प्रतीयतइतिचेत ; सत्यत्वे प्यनुभूते स्तद्विषयज्ञानान्तरस्या रोपित संबन्धेन व्यवहारइति तुल्यम् । अत स्संबन्धमात्रस्य विकल्पास-हत्वाभिमतस्या रोपितत्व मिष्यतां । किन्ततो दृश्यमिथ्यात्वकल्पन प्रयासेन । किंच प्रसंगस्य विपर्यये पर्यवसानम प्येगम । अत्रच दृश्य स्य सत्यत्वे संबन्धानुपपत्ति प्रसंगइत्यस्य विपर्यय उपपद्यतेचायं संब-न्धइत्येवं रूपस्स्यात् । तथाच संबन्धोपपत्त्या दृश्यमिथ्यात्व कल्पन

---

मिथ्यात्वे ऽनुपपन्ने तदभावो ऽवर्जनीयः, अत स्सम्बन्धोपि मिथ्या पपत्तेः सत्य स्स्यादित्यर्थः । ननु सत्यरजतस्य सत्यत्वं न रजतत्वानुपपत्त्या , किन्त्वन्यतएवेत्याशंक्य निराकरोति ( नित्यादिना ) सत्यरजतस्य नित्यमुपलम्भात् सत्यत्वं, मिथ्यारज तदभावा न्न सत्यत्वमिति व्यवस्थापने विश्वस्यापि नित्यमुपलम्भानु सारेण सत्यत्वप्रसंगा न्नोक्तव्यवस्था सम्भवतीत्यर्थः । उक्तदूषण न्निष्कृष्य प्रदर्शय न्नुपसंहरति ( मिथ्यात्वस्यचेति ) अनुपपन्नस्याभ सिद्धौ मिथ्यात्वस्या नुपपन्नत्वा विशेषेपि स्वेच्छा [ स्वरुचि ] त्रा न्मिथ्यात्वपक्षपरिग्रह इत्यगतिकस्य शङ्का न्निराकरोति (यथारुचीति ) ( तथाचेति ) रुच्या परिग्रहे प्रमाणस्यानपेक्षणा दि भावः । (असत्यत्वेपीति ) मिथ्याभूतसंबन्धस्यच नानुपपत्तिः, उक्तानुपपत्तीनां तन्निरासासामर्थ्याभावादितिभावः । ( सत्यत्वेपीति ) यः

मितिस्यात् । ततश्च सम्बन्धिपरित्यागेन सम्बन्धस्वीकार प्रसंगः। नह्यस्ति सम्भव स्सम्बन्धिनमन्तरेण सम्बन्धस्येति । अनुपपन्न [ विशेषेण ] वेषेणोपपन्नं विपर्यय इति तत्स्वीकारइतिचेन्न; प्रसंगतद्विपर्यययो रविशेष प्रसंगात् । तथाच प्रसंगविपर्यया सिद्धिः । अन्यथेष्टप्रसंग इतिस्यात्। उपलभ्यतेचायं सम्बन्धइत्येव विपर्यये न दोषइतिचेत् ; तर्हि दृश्यसत्यत्वे सम्बन्धोपलम्भ भंगप्रसंगइति [ प्रति ] तर्क स्यात् । अहो! संबन्धिसत्यत्वे सम्बन्धोपलम्भ भंगइति कुत्रेयं व्याप्ति गृह्यते। तथा प्यारोपितत्सम्बन्धो दृश्य सत्यत्वे न स्यादितिप्रसंग इतिचेत् ? तर्हि नारोपितोयं सम्बन्धइत्यास्थीयतां । अनारोपितस्तु विकल्पासहत्वान्नासिद्ध्यतीतिचेत् ; तथा प्येकस्यारोपितत्वे तदनुबन्धिनोन्यस्याप्यारोपितत्वमिति वृथानिर्बन्धः । तथाहि सति सम्बन्धिनो ब्रह्मणोपि विलयप्रसंगात् । अनारोपितयोरेवा रोपित सम्बन्धस्य परकीयस्वकीयत्व भ्रमादौ दृष्टत्वाच्च ।

---

**मिथ्याभूतस्या रोपितसम्बन्धेन व्यवहारो दृश्यते, एवं सत्यस्या प्यारोपित सम्बन्धेन व्यवहारो दृश्यत इत्यर्थः । ( प्रसंगतद्विपर्ययो रिति ) अनुपपन्नत्ववेषेणोपपत्तिमत्त्वं हि अनुपपत्तिविशिष्ट रूपेणोपपन्नत्वं वा- इत्यनुप न्न रूपोपपत्तिमत्वं वा? उभयथा प्यनुपपन्नत्वस्यैव पर्यवसाना प्रका भः । ( तथाचेत्यादि ) प्रसंग तद्विपर्ययो रविशेषे प्रसंगस्या - ती र्या तद्विपर्ययो प्यसिद्धस्स्यात् , तथाच विपर्यये पर्यवसाना तः , विपर्ययसिद्धौ तु तदभिन्नस्य प्रसंजनीयस्यापि सिद्ध इष्टप्रसंगस्स्यादित्यर्थः । ( तथाप्येकस्येति ) दृश्यसत्यत्वे- पितसम्बन्धो न स्यादिति प्रसंगो ह्येकस्य मिथ्यात्वे तदनुबन्धि यस्यापि मिथ्यात्वमिति नियमावलम्बनेन वाच्यः, सचाप्रयोजक म्बन्धिनइति)आरोपितत्वाभिमतसम्बन्धं प्रति सम्बन्धिन इत्य- स्वकीयत्व भ्रमादाविति ) आदिशब्देन दूरस्थवनस्पत्यो स्संयोग**

एतेन दृश्यसत्यत्वे सम्बन्धउपपद्येतेति विवक्षापि निरस्ता, इष्टप्रसंगात् । विषयविषयिभावस्य भ्रांत्याविशेषेण सर्ववादिसम्मतत्वात् । अतएव त्रिपर्ययापर्यवसानंच ।

यत्त्वतीतानागतादिभि स्सह सम्बन्धो न सम्भवतीति । तत्र पृच्छामः वर्तमानैर्वाकथं सम्भवतीति । स्वरूपस्य विद्यमानत्वादिति चेन्न; - विद्यमानयोरेव शशविषाणयो रसम्बन्धदर्शनात् । तथापि कचिद्दर्शना दभ्युपगम्यत इतिचेत् ; अत्रापि तथा भ्युपगम्यतां । संयोगादि लक्षण स्सम्बन्धोऽतीतादिभि र्नदृष्टइतिचेत् ? अयन्तु दृष्टत्वादंगीक्रियतां । दृष्टत्वेपि निराधारत्वेन प्रतिक्षिप्यत इतिचेन्न; वर्तमानयोरिवा तीतादेरपि

---

भ्रमादिक मुच्यते । ( एतेनेति ) सत्ययोर प्यारोपित सम्बन्ध दर्शनेनेत्यर्थः । प्रशिथिलमूलत्वमुक्त्वा इष्टप्रसंगत्व माह ( इष्टेति ) तदुपपादयति ( विषयेति ) ( भ्रान्तीति ) भ्रान्तिस्थले ऽर्थ स [त्य]त्वे प्यबाधा त्सम्बन्धउपपन्नो वाच्यः, किमुता भ्रान्तिस्थल इत्यर्थः । ( सर्ववादीति ) ततश्चोपपन्नत्व मेष्टव्यमिति भावः । ( विद्यमानयोरिति ) विद्यमानत्वस्य प्रयोजकत्वेन विवक्षाया मिदं दूषणं । ( तथापीति ) प्रयोजकत्वाभावेपीत्यर्थः । ( अतीतादेरपीति ) विषयविषयिभावोहि विषयत्वं विषयित्वंच, तत्र विषयत्वे ज्ञानं निरूपकम् , आश्रयो[illegible] विषयित्वेविषयो निरूपकः,आश्रयो ज्ञानं । यद्यपि संयोग उभयोरपि [illegible] कत्व माश्रयत्वंच , तथापि प्रमाणबला दत्रा न्यतरस्याश्रयत्व मन्[illegible] रस्य निरूपकत्वं चेष्यते । स्वस्वामिभावादा वप्ययमेव [ न्यायः ] यमः । ततश्च निरूपकाभावेपि भाविज्ञाननिरूपितं विषयत्व मतीते[illegible] षये तत्काले सम्भवत्येवेत्यर्थः । यद्वा - अखण्डएकएव कश्चि[illegible] यविषयिणो स्सम्बन्धोस्तु , सचोभयनिरूप्यः , उभयाश्रितश्च । [illegible] युगपदुभयाश्रितत्वाभावे सम्बन्धत्वहानिः , अप्रयोजकत्वात् । त[illegible] तत्तदाश्रयकाले तत्तद्वृत्तित्वसम्भवा न्नातीतवर्तमानयो स्सम्ब[illegible] पत्तिरित्यर्थः । आश्र[illegible] द्भिन्नकालस्यापि निरूपकत्व मुपपाद[illegible]

तेषा मनारत्वोपपत्तेः । यथाचाभिन्नदेशयोरिव भि-
न्नाराधेयभावतयो स्संयोग इष्यते, तथा भिन्नकालयोरपि प्रतिनियत
विषयत्वसामर्थ्याद्वा नित्यज्ञाने नित्य_न्तत्प्रवणस्वभावत्वाद्वा विषयविष-
यिभावइति किंनोपपद्यते । व्यवधानाव्यवधानाभ्यां विशेषइतिचे-
न्न; - तद्विशेषमात्रस्या किञ्चित्करत्वात् , अन्यथातिप्रसंगात् ; तथा
प्यव्यवहितत्वलक्षणसम्बन्ध स्तत्र नसम्भवतीतिचेन्न, सम्बन्धमात्रस्या
व्यवहितत्वलक्षणाभावात् । गोमानित्यादौ तद्दर्शनाभावात् । तल्ल-
क्षणस्यात्रा निष्यमाणत्वात् । ननु " ज्ञानमपिहि द्रव्यमेव , सम्बन्धश्च
संयोगलक्षणः" इतिभाष्यं वः [ष्यवचः] कथमितिचेन्न; सम्भवद्विषयस्य

---

( यथाचेति ) यद्वा-भिन्नकालयोरपि सम्बन्धाश्रयत्व मुपपादयति ( य-
थाचेति ) यथैकदेशस्थयो र्घटाकाशयोरिव भिन्नदेशयोरपि घटयो स्सं
योग इष्यते, तथा ऽभिन्नकालयोरिव भिन्नकालयोरपि सम्बन्ध इष्य-
ता मित्यर्थः । वाशब्दो व्यवस्थितविकल्पार्थः । भिन्नदेशत्वे प्यव्यव
धानाद् घटयोस्संयोग उपपद्यते , भिन्नकालयो स्त्वभिन्नकालव द्व्यव
धानाभावा न्न सम्बन्धसम्भव इति वैषम्यं शंकते ( व्यवधानेति ) ( अ-
न्यथेति ) यत्किञ्चिद्विशेषमात्रा त्सम्बन्धासम्भवे भिन्नदेशत्वरूप वि-
शेषात् घटयोरपि सम्बन्धो न स्यादित्यर्थः । ( तथापीति ) अव्यवहितत्वं,
[illegible] णं नियामकं, यस्य सः, अव्यवहितत्वप्रयोज्य स्सम्बन्ध इत्यर्थः ।
[illegible] तल्लक्षणस्येति ) अव्यवहितत्वप्रयोज्यस्य संयोगसम्बन्धस्य सर्वत्र -
[illegible] नार्थयो र्विषयविषयिभावरूपत्वेना निष्यमाणत्वात् , क्वचिदेवाङ्गी-
[illegible] क्रियत इत्यर्थः । एवंच नातीतादिविषयत्वानुपपत्तिरिति भावः । न-
[illegible] न्विदमनुपपन्नं , भाष्ये सामान्येन ज्ञानार्थसम्बन्धमात्रस्य संयोगरूपता
[illegible] तीतिरिति शंकते ( नन्विति ) ( सम्भवद्विषयस्येति ) अन्यथा रूपा-
[illegible] सम्बन्धाभाव प्रसंगादिति भावः । ननु कोयं ज्ञानार्थयो स्सम्ब
[illegible] ( इति प्रश्ने सर्वव्यक्तिसंग्राहक धर्मपुरस्कारेणोत्तरं वक्तव्यम् ,

तस्य संयुक्ताश्रितत्वादेर प्युपलक्षण परत्वात् । सर्वत्र स्ता, इष्टप्र-
पतत्वात् ।
चेत् ? तत्तत्स्वभाव विशेषादेव ।

---

यथा गविपृष्टे सास्नाद्याश्रय इति, इहच तथोत्तरं न सम्भवतीति शं-
कते (सर्वत्रेति) माभूदेकेन धर्मेण सर्वसंग्रहः, किन्नश्छिन्नं, जिज्ञा-
सानिवृत्ति र्ह्युत्तरस्य प्रयोजनं- सामान्येनोत्पन्नसर्वविषयजिज्ञासानिवृ-
त्तिश्च सर्व व्यक्त्युपस्थापनेन भवति, सर्वोपस्थापनंच व्यक्तीनामान-
न्त्या तत्तद्व्यक्तिप्रतिनियत शब्देन न सम्भवतीति सर्वव्यक्तिसंग्राह
कैकधर्मपुरस्कारेण वा - तत्तत्कतिपयव्यक्ति संग्राहका नेकधर्मपुर
स्कारेणवा कर्तव्यमिति क्वचित्संयोगः क्वचित्संयुक्ता [श्रित] श्रयत्व
मित्युक्तौ जिज्ञासानिवृत्तौ कथं नोत्तर मित्यभिप्रायेणो त्तरमाह (तत्त-
दिति) संयोगत्वादिस्वभावविशेषादेव संग्रह इत्यर्थः । यद्वा - संयोग
संयुक्ताश्रयत्वादेः प्रत्यक्षस्थले सम्भवेपि परोक्षे तदसम्भवात् तद्वि
षयस्य कथं संग्रह इति शंकते (सर्वत्रेति) तत्र प्रतियोगिस्वरूपमेव
विषयत्वमिति परिहरति (तत्तदिति) स्वरूपस्य सम्बन्धत्वेन संग्रह
इति शेषः ।

यदाह नवीनः - यदि सम्बन्धिस्वरूपमेव सम्बन्ध स्तदा घट
ज्ञाने विश्वमेव प्रकाशेत, अविशेषात । नच प्रतीयमानघटस्वरू
सम्बन्धः, प्रतीयमानत्वस्यैवा निरूपणात् । नच घटस्वरूपं मन्
घटज्ञाने पटस्याविषयत्वप्रसंगात । नच घटज्ञाने घटस्वरूपं सम्बन्
घटज्ञानत्वस्यैव सम्बन्धं विना दुर्निरूपत्वादिति ।

तदसत्, आद्धयासिकेनवा तात्विकेनवा यज्ज्ञानं
ज्ञानत्वे नोभयसिद्धं तत्स्वरूपस्य घट स्वरूपस्य च सम्बन्धत्वात
तच्चस्वरूपद्वयं तदेव रूपद्वयंप्रति सम्बन्ध इति नातिप्रसङ्गः
नच पटज्ञाने पटस्याविषयत्व प्रसंगः, तदुभय स्वरूपस्याद्
तदुभयस्वरूपंप्रति सम्बन्धत्वात । एवमन्यत्रापि ।

तेषा मनुवृत्त्यादि व्यपदेशः कथमिति चेत् ; न । अत्राधारधेयभावादिव दुपपत्तेः । तथापि - विविक्तव्यवहारे ऽभिव्याप्त माकारान्तर मन्तरेण कथमिति चे न्न; व्यवहारानुगुण्यापादनरूपत्वस्य प्रतीतिसिद्धत्वात् । अन्यथा भवताम प्यवेद्यत्वे सत्यपरोक्षव्यवहारानुगुण्यादिकथन म [ सं ] बद्धप्रलापएव स्यात् । एतेन - भविष्यद्वृष्ट्यादिना सस्यादिपोषण प्रसंगोऽपि प्रत्युक्तः, सम्बन्धस्वभाव विशेषाणां प्रतिनियतसामर्थ्यात् ।

---

घटमात्रानुगतस्य घटत्वस्या घटव्यवच्छेदकत्वदर्शना दिह क- [illegible] ज्ञानार्थसम्बन्धमात्रानुगतस्य तदन्यव्यवच्छेदकत्वमिति शंकते ( तेषामिति ) तद्व्यवच्छेदकत्वे तदवृत्तित्वमेवहि प्रयोजकम् . नतु तदितरयावद्व्यक्तिवृत्तित्वं, नथात्व त्याधाराधेय भावस्य सम्बन्धमात्राननुगतस्य सम्बन्धाव्यावर्त्तकत्व प्रसंगात् । नीलघटत्वस्याघटव्यावर्त्तकत्वाभावप्रसंगाच्चेतिपरिहरति ( नेति ) विविक्तः-अन्यूनानतिरिक्तः । अभिव्याप्तः - अन्यूनानति प्रसक्तः । ( व्यवहारेति, [illegible] रस त्व [illegible] गुण्येनभवति, तदानुगुण्यंच तत्र तत्र सं [illegible] ज्ञानार्थ सम्बन्धाद् औपपत्तिकप्रतीतिसिद्धत्वादित्यर्थः । ( अन्यथेति ) एतदनंगीकारे संविदि अवेद्यत्वेस त्यपरोक्षव्यवहारानुगुण्यकथनं विषये ज्ञानविषयत्वापादित व्यवहारानुगुण्य कथनंचानुपपन्नं स्यादित्यर्थः । वेद्यत्वेन ह्यपरोक्षव्यवहारानुगुण्यं दृश्येष्यते, वेद्यत्वंच वृत्तिसम्बन्धएव । ( एतेनेति ) अव्यवधान [illegible] क्षण सम्बन्धस्य क्वचिदेवांगीकारात् । अन्यत्रचा न्यस्यांगीकार इत्यर्थः । तदेवविवृणोति ( सम्बन्धेति ) कस्यचित्संयोगेन संनिधापकस्वभाव स्तस्याभावे परस्मि न्संयोगित्वापादन समर्थः , विषयत्वेन सम्बन्धित्वस्वभावे विषयाभावेपि विषयिणि विषयित्वापादनसमर्थः । नन्विदमेन सामर्थ्यवैचित्र्यं किन्निबन्धनमित्यनाह

सामग्रीवैचित्र्यादेव च वर्तमान तत्प्रातिनियत विषयत्वोपपत्तेः । तथापि कोसौसम्बन्ध इति सौहार्देन पृच्छाम इतिचेत् ? वयमपि परमसौहार्देन प्रतिब्रूमः । कोसाविति किं संज्ञाविशेषः पृच्छयते, उतस्वरूपविशेषः, यद्वा लक्षणम्, उतप्रकारान्तरं, अथवा संयोगादिपु कुत्रान्तर्भाव इति, उतान्यः कश्चित् । आद्ये तमन्तरेणापि सामान्यतएव व्यवहार निष्पत्तेः किन्तद्विचारक्लेशेन । विषय विषयिभाव इत्येववा विशेषनाम निर्दिश्यतां । संकेत्यतांवायथारुचि नामान्तरं । द्वितीयेपि सएवसः नत्वसु अन्यथाव्याघाता दिप्रसंगात् । तृतीयेपि लक्षणमन्तरेणापी क्षुक्षीरादि रसवैषम्यवत्स्फुटप्रतीति सिद्धं दुरपह्नवतरम् । अतिपीडायान्तु व्यवहारा [विशेषा] नुगुण्यापादनं ।

---

( सामग्रीति ) संयोगस्य ह्युभय मपृथक्सिद्धाश्रयतया सामग्री । अथ एकाश्रयाभावेपि संयोगासम्भवः । विषयित्वेहि ज्ञान मेवाश्रयः, विषयस्तु निरूपक एवेति विषयाभावेपि ज्ञानविषयितासम्भ " वर्तमानतत्प्रातिनियतविषयत्वे " ति निर्देशः ' अस्मिन्नर्थे येमितिवत । एवंच सामर्थ्यस्य वर्तमानमात्रविषयत्वोपपत्ते रित्य एवं संयोगादे विषयसम्बन्ध त्वकथनं [illegible] रोक्षे रसम्भवेन तत्रान्यस्यैव वक्तव्यतया [illegible] व सः षयसम्बन्धत्वोपपत्तेः ; चन्द्रज्ञानदशायां मान्तरालिक कृत्स्नसू ग्रहप्रसंगात ; रूपग्रहदशायां स्पर्शादेरपि ग्रहणापत्त्या करण स्थाभावप्रसंगात ; शुक्तिग्रहणावश्यंभावेन प्रत्यक्षभ्रमोच्छेदप्रसंग व्यासंगाद्यभावप्रसंगात् ; स्वप्ने बाह्यार्थप्रत्यक्षप्रसंगात् ; सर्वेषा ब्रह्मापरोक्ष्यप्रसंगात ; सर्वै रपीन्द्रियै स्तद्ग्रहणप्रसंगाच्च । एवं सिद्ध न्त्याशयं पूर्वपक्षी स्वयमेवावधार्य, यद्यपि भवान् यं कंचना प्रसाध्य परमोटनं कर्तुं समर्थः, अथापि सुहृद्भावेन पृष्टवन्तं प्रति तत्वमेव वक्तव्य मित्यभिप्रायेण पृच्छति ( तथापि कोस विति ) प्रकारान्तरं लक्ष्यातिरिक्त स्तद्धर्मः । अन्यः - निरुक्त वंकोटिबहिर्भूतः कश्चन पदार्थः । ( व्यवहारानुगुण्यापादनमिति ) ह्न नगतव्यवहारजनकत्वयोग्यतेत्यर्थः ।

अतएव चतुर्थेपि दत्त मुत्तरम् । पंचमेतु नकुत्रचिदि तिवा क्वचिदन्तर्भावदर्शने तत्रैवेतिवा वक्तव्यम् । बहिर्भावेपि ना भावत्वप्रसंगः ; स्वेच्छापरिसंख्यातद्वित्रादिबहिर्भावे ऽ न्येषा मभा-वत्वप्रसंगात् । अन्यस्तु व्यवहारांगतया प्रतीयमानत्वे स्वयमेवावग-म्यताम् । अनंगत्वेतु किंतन्निरूपणेनेति ॥

२ यत्तु 'सम्बन्धपरिग्रहे सम्बन्धान्तरानवस्था, अन्यथा तत्स-म्बन्धत्वपरित्याग' इति । तदपि किं सम्बन्धमात्रापह्नवार्थ मुच्यते? ज्ञानार्थनिरूपित सम्बन्धविशेषापह्नवार्थंवा ? आद्ये स्वव्याघातः, दूष्य दूषण वाच्यवाचकादिसम्बन्धप्रतिक्षेपे त्वदुक्तदूषणस्यैवा किंचित्करत्व प्रसंगात् । तदभ्युपगमेचास्माकं प्रतिक्षेपासिद्धेः । स्वपरप्रतिक्षेप

---

ननु योग्यताहि वस्तुस्वरूपानुबन्धिनी, अतो ज्ञानस्य नि-त्या योग्यतापि नित्यैवेति ज्ञानस्य घटसम्बन्धो नित्य स्स्यादिति [illegible] - सहकार्यन्तरसमवधाने यादृशविषयितारूपातिशयविळ-[illegible]त्कार्यविळम्बः सा योग्यतेतीह विवक्षितत्वात् । ( दत्तमुत्तरमिति ) [illegible]तीतिसिद्धं दुरपह्नवतर" मित्यनेनेत्यर्थः । ( क्वचिदन्तर्भावदर्शन [illegible] ) प्रौढोक्तिः । ( दूष्यदूषणेति ) मिथ्याभूतसम्बन्धांगीकारेपि [illegible]मिथ्यात्वमिति भावः । " तदभ्युपगमे " - अकिंचित्करत्वा-[illegible]गमे । यद्यपीदं सम्बन्धदूषणं, स्वसम्बन्धस्यापि प्रतिक्षेपा[illegible] कं, तथापि स्वपरानिर्वाहक समाधिना परमपि प्रतिक्षिपत् किंचित्करत्वमिति शंकायामाह ( स्वपरेति )

अयं भावः - स्वनिर्वाहकत्व परनिर्वाहकत्वयो र्नविरोधः, प्रतिक्षेपकत्वेतु मिथो विरुद्धे, स्वप्रतिक्षेपे न स्वयं दूष्यं प्रतिक्षि[illegible] पति, यदि दूष्य प्रतिक्षिपति - तदा स्वयं समीचीनं दूष[illegible] ति न स्वप्रतिक्षेपसम्भवः । ननु - भवता सम्बन्धमात्रप्रति[illegible] [illegible]ह्नि स्वप्रतिक्षेप उक्तः, अत्र स्वपरप्रतिक्षेपकत्वं त्वयैव

सामर्थ्यस्या प्यन्यत्र प्रतिक्षेपात् । द्वितीये त्वनंगांगीकारः, सम्बन्ध-स्य सतोपि विशिष्टव्यवहारे सम्बन्धान्तर मपेक्षित मित्यनंगस्यैवस्वी-कृतत्वात् । यु [उ] क्तांगत्यागोवा, अंगस्यापि स्वपरपरित्राणस्य प-रित्यागात् । अन्यसम्बन्धस्य चांगत्वे दूष्यदूषण सम्बन्धादावपि प्रसंगात । सम्बन्धांतराभावे सम्बन्धत्वहानि रित्यपि ततएव दत्तो त्तरं । अन्यथा स्वपरनिर्वाहकमात्रभंगे स्वयम्प्रकाशस्यापि निरास प्रसंगात् । स्वव्यवहारस्य नैरपेक्ष्य मन्यत्रा दृष्टं तत्रहि स्वीक्रियते. तद्वदत्रापि स्वप्रतिसम्बन्धि व्यवहारे सम्बन्धांतर नैरपेक्ष्यमिति स-माधि स्सम एव ।

---

हितमिति चेन्न ; [ सम्बन्धमात्राभावोक्तौ ] सम्बाधान्तराणा मन-वस्थानि रत्राभावोक्तौ दूषणसम्बन्धस्.। प्यन्तर्भावेन प्रतिज्ञाहेत्वोः परस्परव्याघातस्य विवक्षितत्वात् ।

( द्वितीयेत्विति ) ज्ञानार्थसम्बन्धस्यैव निराकरणात सम्बन्धा न्तराणा मनवस्थाभिया स्वपरनिर्वाहकत्व स्वीकारावश्यंभावात् अ-नंगांगीकारादिदोषोद्भावनं । ( अनंगांगीकारइति ) विशिष्टव्यवहारग्रह गहस्य तदंगतया स्वीकार इत्यर्थः । ( सम्बन्धस्येति ) विशिष्ट हारविषयस्य सम्बन्धस्य सत्वेपि व्यवहारविषयभूतं यदि सम्ब स्यापि सम्बन्धान्तरं स्वीक्रियते तदानंगस्वीकार इत्यर्थः । ( युक्ते वाशब्दोत्र चार्थः, सम्बन्धपरिग्रहे सम्बन्धान्तरानवस्थेत्येतद्दूष न्या — अन्येषा तत्सम्बन्धपरित्याग इत्येतद्दूषयति ( सम्बन्धत्व इति ) ( अन्येति ) सम्बन्धान्तराभावेन दृग्दृश्यसम्बन्ध नर्पदी त्यर्थः ।

यद्यप्यत्र प्रागेव " दूष्यदूषणसम्बन्धादावपि प्रसंगा " [illegible] ग मुक्तं, तथापि दूषणान्तराभिधानार्थं " मन्यथे " [illegible] थः । यद्वा - ज्ञानार्थसम्बन्धमात्रापह्नवे सम्बन्धान्तरप्रतिबन्धा ते सम्बन्धान्तरापह्नवपक्षं प्राग्दूषितम प्यगत्या कश्चित् स्व शादिति पुन स्तं पक्ष मुत्थाप्य दूषयति ( अन्यथा [illegible] ते ) ( तद्वदत्रापीति ) यथा दृश्ये दृग्विषय

यत्तु–सम्बन्धस्य स्वतोमेळने सम्बन्धिनोरेव स्वतो मेळन प्रसंगइति । तदपि दृश्यमाने सम्बन्धे नावतरति, कल्प्यमानेतु वयमपि तथा भ्युपगच्छाम इति क्वानिष्टप्रसंगः । इद मप्यसूत्रयत्- " समवाया भ्युपगमाच्च साम्या दनवस्थितेः " इति । नच तत्र मेळनमेव नास्तीति प्रसंगो दोषः, तदभावेपि विशिष्ट व्यवहार जननस्वभावतयैव तत्तत्स्वरूप सिद्धेः । नच स्वयमेव संबन्धात्मकं स्वसम्बन्ध्यात्मकं चेति स्वरूपभेद मंगीकुर्मः, येन व्याघातादि प्रसंगस्स्यात् । अतो यत्रवस्तुनो विशिष्टव्यवहारजननस्वभावत्वं दृष्टं, तत्र तत्तत्स्वरूपमेव विशिष्टव्यवहार जनकत्वमात्रेण संबन्धइति व्यपादिश्यते, यत्रतु सम्बन्धएव स्फुट स्तत्र तदभ्युपगमेन तदुपरि संबन्धांतर नैरपेक्ष्य मंगीक्रियतइति सर्वत्र विशिष्ट व्यवहारे निरूह्यमाणे स्ववचन विरोधादि नरकपात मनुमत्य किं विश्वमिथ्यात्व वृथाग्रहेण ?।

---

तत्सदृक्सम्बन्धित्वव्यवहार स्तत्सम्बन्धेन क्रियते, तथा तस्मिन् सम्बन्धे दृक्सम्बन्धइति प्रतिसम्बन्धित्वव्यवहारोपि स्वेनैव क्रियत इत्यर्थः । ( इदमपीति ) सम्बन्धस्य कल्प्यमानत्वे स्वरूपातिरिक्त सम्बन्धाकल्पन मसूत्रयादित्यर्थः । ( नच तत्रेति ) स्वरूपातिरिक्तसंबन्धाभावस्थले मेळनाभाव प्रसंगदोषो नास्तीत्यर्थः । ( तदभावेपीति ) स्वरूपातिरिक्तमेळनाभावेपीत्यर्थः । ( विशिष्टेति ) सम्बन्धोहि विशिष्टव्यवहारजनकोभवति , अत्रच तत्तत्स्वरूपमेव विशिष्टव्यवहार जनकतया दृष्टमिति तत्तत्स्वरूपमेव सम्बन्धइत्यर्थः । नन्वेकस्य सम्बन्धत्वसम्बन्धित्वांगीकारे स्वरूपभेद प्रसंगा द्व्याघात इत्यत्राह (नचस्वयमिति ) सम्बन्धस्सम्बन्धीचेत्येतावता न स्वरूपभेदः , [illegible] तत्रा प्रयोजकत्वादितिभावः । ( विशिष्टव्यवहारजनकत्व मात्रेणेति ) एतावन्मात्रं सम्बन्धइति व्यपदेश निमित्तम् , नतुसम्बन्धत्वेसति विशिष्टव्यवहार जनकत्व पर्यन्तं , गुरुत्वा दितिभा[वः] ( सम्बन्धएवेति ) सम्बन्धिभिन्नसम्बन्धइत्यर्थः । (स्ववचनेति)

यत्तु - विषयविषयिभावो द्विष्ठ एकनिष्ठो वेति । तत्रविषयत्वं विषयित्वं चैकैकनिष्ठ मितरेतर प्रतियोगिकमिति निष्कर्षः । ताभ्यामेवच विषयाविषयिणो र्विशिष्टव्यवहारसिद्धेः । तदुभयसंमाहारा द्विषय . विषयिभावाख्यसम्बन्ध इत्युच्यते ।

---

सम्बन्धदूषणस्य दूष्यासंस्पर्शित्वेन सम्बन्धस्य स्थिरीकरणा त्स्ववचन विरोध इत्यर्थः । स्वरूपस्यैव सम्बन्धत्वमतेनैवं व्याख्यातम्।

यद्वा - ( तदभावेपीति ) मेळनाभावेपि तत्तत्स्वरूपस्यैव विशिष्टव्यवहार प्रयोजकत्वेन सिद्धे र्न कश्चि द्दोषः, नहिसम्बन्धएव विशिष्ट व्यवहार प्रयोजकः, किन्तुप्रतियोगि निरूप्यम्, तच्च क्वचित्स्वरूपमेवेति यथाप्रमाण माधारादा वंगीक्रियते , विशिष्टव्यवहारश्च न सम्बन्ध व्यवहारः, किन्तु-सप्रकारकव्यवहारः , अत स्सम्बन्धाभावेपि विशिष्टव्यवहारस्य स्वरूपादेव सिद्धे र्नकश्चिद्दोषइत्यर्थः । एवं स्वरूपस्य सम्बन्धत्वांगीकारादेव नव्याघात प्रसंग इत्याह ( नचस्वरूपमेवेति ) तर्ह्याधारादौ सम्बन्धव्यपदेशः कथमित्यत्राह (अतइति) तर्हि स्वरूपातिरेकेण संयोगविषयतेवा किमर्थ मंगीक्रियेते , तदंगीकारेवा तयोरपि सम्बन्धान्तरं कथ न्नेष्यत इत्यत्राह ( यत्त्विति ) विषयतायाः स्वरूपातिरिक्तत्वं दृश्यत्वानुमानभंगे समर्थितं । (नैरपेक्ष्यमिति ) स्वपर निर्वाहकत्वादिति भावः ।

एकैकनिष्ठत्वे कथं ताभ्यां - विशिष्टव्यवहारः , सम्बन्धस्यैव विशिष्टव्यवहार प्रयोजकत्वात् , अनयोश्च एकैकगतत्वेन सम्बन्धासिद्धेरित्यत्राह ( ताभ्या मिति ) संयोगातिरिक्तस्सर्वोपि एकनिरूप्य एवेति न सम्बन्धत्वहानिः , संयोगव त्सम्बन्धप्रतं विशेषात् । एकैकस्य सम्बन्धत्वे - मिळितयो स्सम्बन्धत्वेन व्यप कथ मित्यत्राह ( तदुभयेति ) सम्बन्धसमाहारत्वात सम्बन्धव्य इत्यर्थः । एवं विषयताया स्संबन्धत्वमतेन व्याख्यातम् ।

यद्वा - पूर्ववदेवाकांक्षाया माह ( ताभ्यामिति ) सम्बन्ध भावेपि ताभ्यां विशिष्टव्यवहार उपपद्यत इत्यर्थः । तर्हि स व्यपदेशः कथमित्यत्राह ( तदुभयेति ) समुदायस्य उभयनिरू

अतएव येनात्मनाऽसौ क्वचिद्वर्तत इत्यादिकमपि दत्तोत्तरं, यानि चान्यानि सम्बन्धसामान्यदूषणानि तान्यपि दूष्यदूषणादिसम्बन्ध सत्त्वासत्त्वयो स्स्वव्याघातकानीति न ततोपि दृग्दृश्यसम्बन्धभंगः ।

तदेत त्सर्वं योगाचारोक्तग्राह्यलक्षणायोगनिरासे फलिष्यतीति मत्वात्रोदास्ते । इहाप्यसूचयत् 'अनुभूति तद्विषययोश्च विषय विषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वात्' इत्यादिना सदनुभूतिभेदभाष्येण ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु
शतदूषण्यां दृग्दृश्यसम्बन्धानुपपत्ति-
परिहारवाद स्सप्तदशः ।

---

तथा व्यपदेशइत्यर्थः । (अतएवेति) अन्यत्र वृत्तिविशेषचिन्ताया अनवकाशा दित्यर्थः ॥

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवा
समधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन
तच्चरण परिचरणपरायणेन तत्प्रसादलब्ध
महाचार्या परनामधेयेन रामानुज
दासेन विरचितायां शतदूषणी
व्याख्यायां चण्डमारुताख्यायां
दृग्दृश्यसम्बन्धानुपपत्तिपरिहारभंगः

सप्तदश स्स्कन्धः ॥

श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषणी ।

## अथ अष्टादशो वादः ।

---

अज्ञानसन्तमसमाश्रयगोन्मुखानां संवित्प्रदीपमहसा सहसानिरुन्धन् ।
विद्यास्वयंवरपतिर्व्यपहन्त्वविद्यां सर्वानुभूस्सभगवान्पुरुषोत्तमोनः ॥

यत्तत् - भावरूपाज्ञानदूषणसमये " नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च नसम्भवती " त्यादिभाष्यं, तत्र बाह्यप्रकाशे परपक्षे न सम्भवती त्यभिप्रेतं । तद्व्याकुर्मः ।

---

(अज्ञानेति) अज्ञानजन्यं सन्तमस मज्ञानसन्तमसम् । अज्ञानेन ज्ञानविरोधि प्राचीनकर्मोच्यते । सन्तमसशब्देन भगवद्व्यतिरिक्तविषयप्रावण्यं पूर्वाभ्यस्त मुच्यते । ( संविदिति ) संवित्प्रदीप[illegible] महः - भगवद्विषयीकरणम् । " विद्या स्वयंवर पतिः " - [illegible] याः स्वयंवरणेन पतिः, विद्या स्वयमेवा वृणो दित्यर्थः । सर्वा[illegible] कल्याणगुणां श्चाविष्कुर्वन् विद्याविषयतया स्थितइत्यर्थः । "अविद्या[illegible] त्यज्ञानसन्तमस मुच्यते । अनेन " तेषामेवानुकंपार्थ मह म[illegible] जं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता " [illegible] श्लोकार्थः स्मार्यते , अस्य श्लोकस्य गीताभाष्ये - " तेषामेवा[illegible] हार्थमहं , आत्मभावस्थः - तेषां , आत्मभावे - मनोवृत्तौ , विषय[illegible] [illegible]स्थितः । मदीयान् कल्याणगुणां श्चाविष्कुर्वन् , मद्विषयज्ञाना[illegible]

यदुच्यते- नित्यमुक्तं ब्रह्मैव स्वगतानाद्यविद्या मनुभवतीति । कथ मिदमुपपद्यते ? बन्ध न स्या नाद्यविद्यातत्कार्यानुभवात्मकत्वा न्मोक्षस्यच तन्निवृत्तिरूपत्वात ।

॥ * ॥ नित्यमुक्तस्य बन्धश्चे न्नित्यमुक्ति र्न सम्भवेत् ।
बन्धस्यापिचनित्यत्वा द्बन्धाभावेत्वमुक्तता ॥ * ॥

ननु - भवन्मते प्यज्ञानमस्त्येव , तच्च सर्वज्ञेनानुभूयते, सचनित्य मुक्तइति कोविशेष इतिचे न्न; पराज्ञानादिदर्शनस्य बन्धरूपत्वानभ्युप

---

भास्वता दीपेन , ज्ञानविरोधि प्राचीनकर्मरूपं ज्ञानजं मद्व्यतिरिक्त- विषयप्रावण्यरूपं पूर्वाभ्यस्तं तमः, नाशयामि " इति भगवतानुगृ- हीतत्वात् । " ब्रह्मसर्वानुभूरि " ति श्रुति प्रत्यभिज्ञापकेन सर्वानुभू- रित्यनेन परमते ब्राह्मप्रकाश तन्निवृत्तिरूपत्वादिति ) ततश्च ब्रह्मणो विनाशप्रसंगादिति । दूषणान्तरमाह ( नित्यमुक्तस्येति ) " नित्यमुक्तस्ये " ति भाव ामि निर्देशः । प्रसज्यस्या निष्टत्वद्योतनाय नित्यमुक्तत्वनिर्देशः । श्चे " दि त्यापादकम् । अयंच नित्यमुक्तत्वरूपविशिष्टे विशे- सम्भवे हेतुः । विशेष्यासम्भवे हेतु माह ( बन्धस्यापिचेति ) द्यानुभवः खलु बन्धः, सच नित्यं ब्रह्मैवेति भावः । नित्य- शे क्तस्य ब्रह्मणो बन्धोस्ति नवेति विकल्प्य प्रथमं शिरो दूषितम् न तीयं शिरो दूषयति ( बन्धाभावइति ) ( अज्ञानमस्त्येवेति अज्ञानजं तमः " " ज्ञानेनतु तदज्ञानं " मित्यादिविषयः क दस्तीत्यर्थः । स्वमतइव सिद्धान्ते प्यज्ञानानुभवो बन्ध इत्यभि ानः । सत्य मविद्यानुभवो बन्धः , सच ब्रह्मस्वरूपमेव , तथा र ब्रह्मविषयकाज्ञानस्य परगतत्वा त्तदाश्रयस्यैवाय मज्ञानानुभवो ब , नब्रह्मण इति ब्रह्मणो नित्यमुक्तत्व मुपपद्यतएवेति शंक

गमात् । ब्रह्माज्ञानमेव परगतं ब्रह्मणा नुभूयत इतिचेन्न; - तथापि पर गतत्वादेव तस्य बन्धरूपत्वप्रसङ्गाभावात् । तर्ह्यस्माकम प्यहंकारापर पर्यायान्तःकरणगतमज्ञानं भवतु, तच्च संविदधीनसिद्धित्वा त्तदात्मक ब्रह्मणानुभूयत इति कोदोष इतिचेन्न; सुषुप्तिमरण मूर्च्छाद्यहंकारविलय दशाया मज्ञानानुभवभंग प्रसंगात् । नहि तदानीं निराश्रयाज्ञानस्थितिस-म्भवः, निरधिष्ठानभ्रमानुज्ञान प्रसंगात् । ब्रह्माश्रयत्वेतु स्वगताज्ञाना नुभवावश्यम्भावः । भवत्वज्ञानानुभवः , सतु मिथ्याभूतानुभवत्-इति न नित्यमुक्तत्वविरोधइति चेन्न; मिथ्याभूतस्यैव तस्य बन्धतयोप

---

( ब्रह्माज्ञानमेवेति ) ब्रह्मणः परस्या चेतनत्वा दज्ञानस्य तद्गतत्वे ब-न्धकत्व मोपपद्यत इति परिहरति ( तथापीति ) ननु -अस्त्वन्तःकरण गत मज्ञानं; नचैव मन्तःकरणस्यापि जडत्वा द्बन्धाभावप्रसंगः, अहमित्यन्तःकरणाभिन्नेन ब्रह्मणा स्वगततया अज्ञानानुभवात् ; त-स्मा दन्तःकरणावच्छिन्ने बन्धः, तदनवच्छिन्नेतु नित्यमुक्ततेति शंकते ( ...पीति ) नन्वन्तःकरणस्या... न निरधिष्ठान-त्वं ब्रह्मणएवाधिष्ठानत्वात् , इत्यत्राह ( सम्भवतीत्यामप्रत । तद्व्याकर्मः । ) वा नस्य निराश्रयावस्थानायोगात् , सुषुप्त्याद्यवस्थासु ब्रह्मणएवाश्रय-श्यम्भावात् , स्वगताज्ञानानुभावाद् ब्रह्मणो बन्धप्रसंगो दुर्वार इत्यर्थ

अज्ञानस्य स्वाश्रयं प्रति स्वविषयतिरोधानं हि प्रयोजनं, ...धस्यैव तत्प्रयोजन मन्तःकरणाश्रयत्वे सिद्ध्यति , तस्य जडत्वेन ब्रह्मबन्ध-रूप प्रकाशाप्रसंगात् , नचा विद्या न्तःकरणावच्छिन्नस्य जी... ब्रह्मस्वरूपप्रकाशतिरोधानं स्वाश्रयैक्याध्यासा त्करोतीति वाच तर्हि सुहृद्दर्शनादिना शरीरे सुखोत्पत्तिप्रसंगात् ; स्वाश्रयैक्याध्... स्य शरीरे सत्त्वात् । किञ्चाज्ञानस्या न्तःकरणाश्रयत्वे बन्धमोक्ष... रपि तद्गतत्वप्रसंगः । तस्मा द्ब्रह्माश्रयत्वमेव वाच्यमिति भावः ।

अविद्यानुभवसत्वे प्यविद्याया मिथ्यात्वा त्तात्त्विकबन्धाभावा न्नित्यमुक्तत्वाविरोधइति शंकते ( भवत्वज्ञानानुभवइति ) ( मिथ्या-भूतइति ) मिथ्याभूतविषय इत्यर्थः । ( मिथ्याभूतस्यैवेति ) मिथ्या

पादनात । अन्यथा तन्निवृत्त्यर्थं शास्त्रारम्भानुपपत्ति प्रसगात् । ततश्च तथाविधनिवृत्तिरूपे मोक्षे नित्ये कथं तत्प्रतियोगिन स्तस्य सम्भवः ? ततश्च नित्यं ब्रह्म ण्यविद्याविमुखे स्वयमेव वि लीयमाना सा कथ महं कारादी न्यपत्यानि प्रसूतां? कथंवा तेषु ब्रह्मणो दृष्टि पात इति न बाह्यानुभवसम्भवः ।

सएष प्रथमोहेतु र्ब्रह्माश्रयाज्ञाना नुपपत्ति कथनेन व्याख्यात प्रायः तृतीयश्च साक्षित्वशोधने प्रदर्शित एवेति कृत्वा मध्यमं हेतुं विवव्रे " स्वानुभव स्वरूपत्वा " दित्यादिना ।

अनुभूति स्वरूपमपि ब्रह्म स्वानुभवैकतानमिति ह्यभ्युपगम्यते। तस्य स्वरूपातिरिक्ता विद्यानुभवः किं स्वत उतान्यतः ? नाद्यः ; स्वानुभवैकतानत्वव्याघातात् ; अनिर्मोक्ष प्रसंगाच्च । मोक्षेवा स्वाभाविकरूपव्याघातप्रसंगात् । किंच — यत्र शुक्तिरजतादौ विपयमिथ्यात्वं तत्र ... अविद्यानुभवस्य तत्र ... निर्व्य तिरे

---

...स्य जीवे बन्धतयोपपादनात, पारमार्थिकबन्धाभावस्य जी-
चेन्न ...शेषात , जीवब्रह्मणो स्सावद्यत्व निरवद्यत्व श्रुतिविरोधात।
द्यात् ...द्यया उपाधित्वेन प्रतिबिम्बपक्षपातित्वात जीवएव शो-
व ...नर्थहेतुत्वं , न ब्रह्मणीति न ब्रह्मणो निरवद्यत्वनित्यमुक्तत्ववि-
...इति चेन्न ; तस्यान्यत्र निरस्तत्वात । ( तथाविधेति ) मिथ्याभूता
ता ...नुभवात्मक बन्धप्रतियोगिक निवृत्तीत्यर्थः । यद्यपि - अविद्या
...णो ब्रह्मरूपत्वान्नित्यः , तथापि - अविद्यानिवृत्त्या विशिष्टरूपेण
...नुभवनिवृत्तिरिति भावः । ( सएषइति ) " नित्यमुक्तस्वप्रकाश
...न्यैक स्वरूपस्ये " ति भाष्ये नित्यमुक्तपदेन विवक्षित
...भावः । ( तृतीयश्चेति ) चैतन्यैक स्वरूपपदेन विव-
...ः । मध्यमः- स्वप्रकाशत्वे । ( अनिर्मोक्षेति ) कल्पिताविद्यायाः

ज्ञानेन सविषयवृत्ति स्वरूपबाधइतिहि त्वन्मतं । ततश्च यदि मिथ्याभू ताविद्यानुभव [स्वभावता] स्स्वभावतो ब्रह्मण स्तदा तस्यापि मिथ्या त्वेन बाधकज्ञानेन निवृत्तिरेव स्यात ॥ नापि द्वितीयः, अविद्याब्र- ह्मातिरिक्तस्या न्यस्या नभ्युपगमात् । अभ्युपगमेवा तत्सत्यत्वमि- थ्यात्वविकल्पेन सद्वितीयत्वानवस्थयो रन्यतरप्रसंगात् । माभूदविद्या ब्रह्मस्वरूपातिरिक्तमन्यत्, अविद्यैवतु ब्रह्मस्वरूपं तिरोधत्ते , तन्निबन्ध नोय मविद्यानुभव इति चेन्न ; - प्रकाशमात्रस्य ब्रह्मण स्तिरोधाने त- त्स्वरूपनाशप्रसंगादे रन्यत्र प्रपंचनात् । किंच- तिरोहिते ब्रह्मणि - तस्या विद्यानुभवः, अनुभूतायां चाविद्यायां लब्धस्वरूपया तया तिरोधान मि त्यन्योन्याश्रयणं । अनुभवनिरपेक्षं तिरोधानमिति चेत् ; तथास- ति तदज्ञानं काचादिव त्स्वसत्तया ब्रह्म तिरस्करोतीति संविदधीन सत्ताकत्वाभावेन स्वतस्सिद्धतया संविद्रूपज्ञानबाध्यत्वं न स्यात् । तेन च तदुपात्तः प्रपंचोपि तथाविधएवेति सत्यस्स्यात् ।

काचादिवा[illegible] [illegible] वाचामगोचरः ।

---

कल्पनारूपानुभवेसति निवृत्त्ययोगादितिभावः । ( निवृत्तिरेवस्[illegible] यद्य प्यविद्यानुभव रूपमपि ब्रह्म नवृत्तिः, तथापि वृत्तित्वं वप्रयोजकम् । किंच तन्मते तादात्म्यातिरिक्त विविधविषयिभा[illegible] कारात्, अविद्यानिवृत्तौच तत्तादात्म्यस्य चावश्यं निवृत्तेः, तत[illegible] त्म्यस्य स्वाभाविकत्वे तन्निवृत्तौ तत्स्वभावब्रह्मणोपि निवृत्ति[illegible] ज्यतेतिभावः । ( अनवस्थयोरिति ) अविद्यानुभवोपाधेरपि मिथ्य[illegible] नुभवाधीनसत्ताकत्वे सति अनुभवान्तरानभ्युपगमेन ब्रह्[illegible] तदनुभवत्वात् , तदनुभवे प्युपाध्यन्तरांगीकारे तत्राप्येवंप्रसंगा स्थेत्यर्थः । ( तिरोधत्तइति ) ततश्च स्वयं प्रकाशे प्यद्वयात्म[illegible] पद्यत इतिभावः । अनुभवनिरपेक्षमेवा विद्यया ब्रह्मतिरोधा नान्योन्याश्रय इति शंकते ( अनुभवेति ) "वाचामगोचर"

ज्ञानबाध्यत्व हानिस्स्या त्स्यात्प्रपंचस्य सत्यता ॥ " इति ।

अस्तु त ह्यविद्यानुभवाधीनं तिरोधानं , अनुभवस्तु निरपेक्ष इति नान्योन्याश्रयणामितिचे न्न; - अनिर्मोक्षप्रसंगादे रुक्तत्वात् । किंच अतिरोहित स्वरूपस्यैव लाघवेना भ्युपगन्तु मुचितत्वात् । ननु भव-तामपि ब्रह्मस्वरूपं स्वानुभवैकतानं, तदेवच सर्वज्ञ मित्यभ्युपगतमिति कोविशेष इतिचेन्नः अस्माकं ब्रह्मस्वरूपस्य स्वानुभवैकतानत्वेपि गुण भूतेन ज्ञानेन सविषयत्वस्वभावेन स्वेतरसमस्तविषयीकरणात् । एतेन

---

मेव दोषमाह ( ज्ञानेति ) ( अनुभवइति ) अविद्यानुभवइत्यर्थः । ( अनिर्मोक्षइति ) अननुभूयमाना विद्याया अविद्यानुभवहेतुत्वे पूर्वव त्सत्यत्वप्रसंगः, अनुभूयमानाया हेतुत्वेऽ नुभवस्यानादित्वा दनिर्मोक्षप्रसंग इत्यर्थः । अनुभूयमानाविद्यैवा नुभवान्तरंप्रति हेतुः, सोप्यनु-भवो ऽनुभवान्तरविषयाविद्ययेतिचेन्न; – अविद्यानुभवात्मक ब्रह्मस्वरू-पे भेदाभावात् । ( किंचेति ) अविद्यानुभवस्य तिरोधाननिरपेक्षत्वे तिरो धानमेव न कल्प्यं गौरवादित्यर्थः ।

नन्वविद्यातिरोधानानुभवाना मनादित्वा न्नान्योन्याश्रय इति चेन्न ; अविद्यानुभवस्या नादित्वे ऽविद्याधीनत्वासिद्धेः । अवि-द्यातादात्म्य मेवा विद्याविषयत्वं, तज्ज्ञानाद्य प्यविद्याधीन मविद्यासं व... देति चेन्न ; – परोक्षज्ञानादिसाधारणस्य तादात्म्यातिरिक्त-... विषयिभावस्य वाच्यत्वात् , तस्य परोक्षज्ञानइव विष-... पिक्ष... नादे स्स्वाभाविकत्वेना निर्मोक्षप्रसंगात् । नच- उपाधि ...त्व यावदाश्रयभावित्व रूपौ पाधिकत्व स्वाभाविकत्व रहितमिदं ...यत्वं , तथाचा नादित्वेपि निवर्तकसन्निधाने निवर्ततइति वाच्यं। ...ज्ञानस्या विद्यानिवर्तकत्वे प्येतदनिवर्तकत्वात् । अविद्यानिवृ-...पि न तद्विषयत्वनिवृत्तिः , तस्या नादे रविद्याधीनत्वात ।

... सिद्धान्तेपि ब्रह्मण स्सर्वज्ञत्वं सर्वानुभवरूपत्वमेवेति भ्रान्त्या ...ते ( ननु भवतामिति ) ननु भवतामपि ज्ञानस्य सर्वविषयत्व

मुक्तोपि व्याख्यातः । बद्धस्यतु सर्वविषयीकरण स्वभावमपि ज्ञान मौपाधिकान् संकोचविकासा न्भजतीति नविरोधः । उपाधय श्च प्रवाहानादिरूपेणोपस्थिताः कर्मादय इति ना नवस्थादयो दोषाः ।

अतो यदि बाह्यानुभवमिच्छसि, तदा स्वरूपमात्र प्रकाशस्वभावा दात्मस्वरूपा दतिरिक्तं तद्धर्मभूतं ज्ञान मभ्युपगच्छवा- त्यजवा बाह्यानु भवव्यसनमिति ।

त्यजाम स्तर्हि बाह्यानुभवं , नह्यत्र वस्तुबाह्यं किंचि दनुभूयत इति चेन्न; - विकल्पासहत्वात् । किमत्र बाह्यतया प्रतीयमानाना मनुभूति स्वरूपत्व मभिमतं , उत स्वरूपातिरिक्ताना मवस्तुत्वं, अथ वस्तूना मवस्तूनांवा बाह्याना मनुल्लेखः, उत बाह्यानुभवस्यैवा वस्तुत्वमिति । नाद्यः, आत्मख्यातिवादस्य त्वयैव दूषणात् , तदभ्युपगमस्य चान्यत्र- दत्तोत्तरत्वात् । नद्वितीयः, प्रपंचापह्नवनिर्मूलनात् । अवस्तुत्वेपि तदुल्लेखस्य दुरपह्नवतया बाह्यप्रकाशावश्यम्भावात् । नतृतीयः;

---

**स्वाभाव्यात् , बन्धावस्थायामपि सार्वज्ञ्ये ऽ संसारएव स्यादिति - शंकायामाह ( बद्धस्यत्विति ) सर्वविषयीकरण योग्यतायाएव स्वाभाविकत्व मिति भावः । " कर्मादय " इत्यादिशब्देना विद्यादे र्ग्रहः । ( नानवस्थादयइति ) अविद्यया कर्म, ततो वासना, ततो रुचिः, ततः प्रकृतिसम्बन्धः , ततश्चाविद्ये त्यात्माश्रया न्योन्याश्रयचक्रक [illegible] यः । यद्य प्यविद्या प्रकृतिसम्बन्धान्तरमूला, तथा प्यनवस्थ[illegible]दोष भवन्ति , प्रवाहानादित्वांगीकारादिति भावः । बाह्यवस्त्वनुभवा रूपो विशिष्टाभावो बाह्यत्ववस्तुत्वतद्विषयत्वरूप विशेषणाभावे भवरूप विशेष्याभावेनच भवतीति क्रमेण ता न्विकल्पयति ( कि न्नेति ) ( त्वयैव दूषणा दिति ) तथाचा पसिद्धान्तइति भा[illegible] आत्मख्यातिवादस्य दूषितत्वाच्च नैव मित्याह ( तदभ्युपगमस्यचेति ( अवस्तुत्वेपीति ) सत्यत्वाभावेपि मिथ्यात्वमेव त्वयाभ्युपगतं, न[illegible]**

सर्वलौकिकपरीक्षक हृदयविसंवादात्, सर्वसंरंभ विलयप्रसंगाच्च। नचतुर्थः, माध्यमिकवादावतारात्। अस्तु बाह्यानुभवस्यैवा वस्तुत्व मितिचेन्न: तस्यैव विशोधितस्य त्वयाब्रह्मत्वाभ्युपगमात्। तदतिरिक्तस्यतु त्वदभिमतस्य कुतश्चिद प्यसिद्धेः। सिद्धावपि तस्यैव बाह्यानुभवाभावे तद्व्यतिरिक्तानामपि बाह्यानुभवभेदाना मसम्भवे पुनरनुल्लेखपक्षपरिशेषात्।

अतो बाह्योल्लेखस्ते हातुमुपादातुंवा न शक्य[तइति] मिति दुरन्तमिति।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां बाह्यप्रकाशानुपपत्तिवादो ऽष्टादशः।

---

तुच्छत्वं, तथाच तत्प्रकाश आवश्यक इति भावः। (सर्वसंरम्भेति) स्वपरसिद्धान्तस्थापनदूषणादिप्रवृत्तिरपि न स्यात्, स्वपराद्यस्फुरणात्। किं बहुना प्रवृत्तिमात्रं न स्यात्, तस्या स्तद्विषयस्फुरणसाध्यत्वा दित्यर्थः। (माध्यमिकेति) प्रकाशस्वरूपसत्यत्वं तन्मता द्विशेषः, तदवस्तुत्वे सोपि न स्यादित्यर्थः। ननु प्रकाशमात्र न्नावस्तु, अपितु बाह्यप्रकाशः, एवंच ब्रह्मरूपप्रकाशस्य सत्यत्वा द्विशेष इति शंकते (अस्त्विति) (तस्यैवेति) "पराग्र्थप्रमेयेष्वि" त्यादिकूटस्थ वचनादिति भावः। विषयोपरागभेदनिवृत्ति श्शोधितत्वं। (तदतिरिक्तस्येति) बाह्यप्रकाशातिरिक्त प्रकाशो ज्ञात्रात्मकएव प्रमाणसिद्धः, नतु त्वदिष्टज्ञानमात्ररूप इत्यर्थः। अस्तुवाऽतिरिक्तोपि सत्यः कश्चित्प्रकाशः, तथापि तस्य पूर्वोक्तस्वतस्त्वौपाधिकत्व विकल्पायोगा द्बाह्यानुभवा योगः, तदभावेच प्रतिभाधीनसत्ताका न बाह्यानुभवलक्षणभेदाः, तदभावेचानुल्लेखपक्षः परिशिष्यते, सच दूषित इति शेषः (सिद्धावपीति) "दुरन्तं" - व्यवसनमिति शेषः॥

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरण परिचरणपरायणेन तत्प्रसादलब्ध महाचार्या परनामधेयेन रामानुज दासेन विरचितायां शतदूषणी व्याख्यायां, चण्डमारुताख्यायां बाह्यप्रकाशानुपपत्तिः

अष्टादश स्स्कन्धः॥



श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषणी ।

## एकोनविंश वादः ।

अनन्यचेतसां पुंसा मज्ञान मवधुन्वते ।
निरस्ताज्ञानगन्धाय नित्यं सर्वविदे नमः ॥

अहंकाराभि व्यंग्यत्वं दूषयद्भि र्भाष्यकारै रज्ञानाश्रयत्व मपि संविदो निरस्तं- " नच संविदाश्रयत्व मज्ञानस्य " इत्यादिना । अविद्याश्रय विकल्पेचोक्तं- " नापि ब्रह्म श्रित. तस्य स्वप्रकाशज्ञानरूपत्वेना विद्याविरोधित्वात् " इत्यादिना । प्रदेशान्तरेषुच सर्वज्ञत्वनिर्दोषत्वादिश्रुतिशते र्विरोधो दर्शितः । तत्सर्वं संकलय्य व्याकुर्मः ।

---

**मंगळ माचर न्वादार्थं संगृह्णाति ( अनन्यचेतसामिति ) ग्रहः । स्मिन् श्चेतो येषां ते - अन्यचेतसः । " सप्तमीविशेषणे बहु विति बहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातविधानलिंगात् रणपदोप्ययं बहुव्रीहिः कण्ठेकाळादिव त्साधुः । नविद्यते विषयो यस्येतिवा । भगवदेकान्तधिय इति भावः । अ कदेन ब्रह्म न जाना [ ती ] मी त्यादिप्रतीतिविषयो विवक्षितः । नन्यचेतसा मज्ञान " मित्यनेना ज्ञानस्य ज्ञात्राश्रयत्वप्रतीतेः , यत्तदज्ञानं ज्ञाननिवर्त्यं न्तज्ज्ञातयैव भवितु मर्हतीति वक्ष्यमाण स्सूच्यते । अहमज्ञइति धर्मिग्राहकमानबाधश्च । स्वाश्रिता प्यज्ञाननिरासकस्य सत्यसंकल्पस्य कथं स्वस्मि न्नज्ञानसहिष्णुत भावः । अज्ञानगंधः - अज्ञानलेशः । ब्रह्माज्ञान मितरा**

यद्यसौ परमात्मा त्वदुक्तप्रकारेण संविन्मात्रस्वरूपः, यदिवा यथाश्रुति सर्वज्ञः, नोभयथापि तस्या ज्ञानाश्रयत्वं सम्भवति । तथाहि-'नतात्र द्धटादिवत् ज्ञातृत्वात्यन्ताभावलक्षण मज्ञान मिह विवक्षितं, तस्य त्वद-भिमते ब्रह्मण्यपि घटादाविव यावत्स्वरूपभावितया स्वरूपे सति नि-

---

नास्तीत्यर्थः । अत्र निरवद्यत्वादि श्रुतिविरोधो विवक्षितः । यद्वा-अज्ञानंच तद्गन्धश्च - अज्ञानगन्धौ । अत्र स्वतएवा ज्ञाननिरसनस्य विवक्षितत्वात् स्वप्रकाशत्वविरोधो ब्रह्मविषयाज्ञानस्य सूच्यते । गन्धशब्दः कार्यपरः, कार्यस्य हेतुसूचकत्वात् । सच संसारएव । अज्ञानकार्यसंसाररहिते कथ मज्ञानम् । अन्यथा ब्रह्मणएव संसा-रित्वप्रसंगादिति भावः । ( यदीति ) मात्रचा संविदाश्रयत्वं व्यावर्त्यते ।

अत्र स्वप्रकाशत्वात् ज्ञानानाश्रयत्वात् तदुक्तरीत्या सर्वविषय त्वरूप सार्वज्ञ्याच्चा ज्ञानाश्रयत्वासम्भवोऽभिप्रेतः । ननु- संविन्मात्ररूप-त्वे कथ मज्ञानाश्रयत्वासम्भवः, अज्ञानं हि ज्ञानविरोधि, अत स्सं-विदनाश्रयत्वं तद्विरोध्यज्ञानाश्रयत्वोपपादक मेवे त्याशंक्य यादृशं-ज्ञानाभावात्मकं ब्रह्मणि सम्भवति, न तत्त्वया सिसाधयिषितम्, तद्धि त्वया ज्ञाननिवर्त्यत्वेना भिमतम् । नचात्यन्ताभावादिकं ज्ञानानि-वर्त्यं, प्रागभावध्वंसौतु तत्र जन्यप्रतियोग्यनंगीकारादपि न सिसा-[illegible] ज्ञाननिवर्त्यस्याज्ञानस्य भावरूपत्वोक्तेरपि नाभावरू-[illegible] सिसाधयिषितम्, यच्च भावरूपाज्ञानं ब्रह्मणि सिसाधयिषितं [illegible]न सम्भवत्येवे त्यभिप्रायेणाह ( तथाहीत्यादि ) ज्ञानाभावलक्षण-[illegible]भाक्ते ज्ञानान्तराविरुद्धो ज्ञानविशेषाभावो गृह्यतेति 'ज्ञातृत्वात्य-[illegible]ाावलक्षण' मित्युक्तम् । "त्वदभिमते ब्रह्मणि" - संविदना-[illegible] । ( यावत्स्वरूपभावितयेति ) व्यावहारिक ज्ञातृत्वाभावांगीकारेपि [illegible]न साक्षा ज्ज्ञाननिवर्त्यत्व मिति भावः ।

वर्तयितु मशक्यत्वात् । नापि ज्ञानप्रागभावप्रध्वंसौ । ब्रह्मणि धर्मभूतस्य ज्ञानस्य कदाचि [ कस्यचि ] द प्यनभ्युपगमात् ।[3] नापि ज्ञानान्योन्याभावः, ज्ञानान्तरानभ्युपगमात् ; स्वप्रतियोगिक भेदायोगाच्च । वृत्तिज्ञाना दध्यस्तज्ञानाद्वा भेदस्य सत्यत्वेन [ नित्यत्वेन ] तस्यापि निवर्त्यतया भिमताज्ञानत्वायोगात् । भावरूपाज्ञानत्वाभ्युपगमादेव च नाभावान्तरमपि ।

अतो यत्तदज्ञानं ज्ञाननिवर्त्य मभिमतं, तज्ज्ञातर्येव भवितु मर्हति, ज्ञानस्य स्वाश्रयएवा ज्ञाननिवर्तकत्वव्याप्तेः । नहि देवदत्तगतेन ज्ञानेन यज्ञदत्तगत मज्ञानं निवर्तते ।

ननु -- ईश्वरादिगतेन ज्ञानेन कथं तदनुग्रहविषयजीवगताज्ञान- निवृत्ति स्तवेति चेन्न; - तत्र शक्तिविशेषोपबृंहितत्वेन तदुपपत्तेः । नहि प्रकाशाकारतामात्रेण तत्र परगताज्ञान निवर्तकत्वं , तथासति नित्यं तन्निवृत्तिप्रसंगात् ।

---

(नापीति) द्विवचनतया परिणतं विवक्षित पदमनुषज्यते । (कस्यचिदिति ) नित्यव दनित्यस्या प्यनभ्युपगमादित्यर्थः । ( नापीति ) विवक्षित इत्यनुषंगः । उत्पादविनाशशील तुरीय संसर्गाभावांगीकारेपि न तस्याप्यत्राभिमतत्वमित्याह ( भावरूपेति ) यद्वा- व्यावहारिकात्यन्ताभावस्या प्येववा निरासो बोद्धव्यः । एवकारेणायं सर्वत्र हेतु रिति सूच्यते । अत्रापि पूर्वव दनुषंगः । यत एव मभावरूप मज्ञान न्न विवक्षार्ह मतो भावरूपाज्ञानमेव विवक्षितं पर्यवस्यती ह ( अतइति ) " तदि " ति भावरूपत्वं विवक्षितम् । ततः त्यत्राह ( तदिति ) यथा सिद्धान्ते ईश्वरयोगिगतेन ज्ञानेन तदनुग्रहविषय जीवगताज्ञानं त्वदभिमतं निवर्तते, तद्वन्ममापि जीवगतेन न्तःकरणगतेनवा ज्ञानेन ब्रह्मगताज्ञान म्मदभिमतं निवर्तता मिति कते ( नन्विति ) ( नेति ) "शक्तिविशेषः" तदीय संकल्परूपता । काशाकारतामात्रेणेति ) समानविषयक ज्ञानत्वेनेत्यर्थः । ( तथ सतीति ) ईश्वरस्य नित्यसर्वज्ञत्वादितिभावः । व्यधिकरणज्ञानस्या ज्ञा भावः

अतो जीवगतेना न्तःकरणगतेनवा तत्वज्ञानेन ब्रह्माज्ञाननिवृत्ति रिति प्रत्युक्तम् ।

ततश्च यत् ज्ञाननिवर्त्य मज्ञानं, न तत् ज्ञातृत्वप्रसक्तिशून्ये ब्रह्मणि भवितु मर्हति । तदेत द्भावरूपाज्ञानदूषणे प्रसंगाभिप्रायेण प्रायुङ्क्त " विवादाध्यासित मज्ञानं न ज्ञानमात्रब्रह्माश्रयं अज्ञानत्वात ; शुक्तिकाद्यज्ञानवत; ज्ञात्राश्रयं हितत् " इति,

---

निवर्तकत्वमुपपादित मुपसंहरति ( अतइति ) यद्वा - प्रतिबन्दि मुखेन जीवादिगतज्ञानस्य निवर्तकत्वशंका परिहृता, इदानीम् " जीवगतज्ञानस्यैव निवर्तकत्व मस्तु , नचैव मतिप्रसंगः , विशेष्यविशिष्टभावस्यवा विशेषणभावस्य वा नियामकत्वात " इति या शंकासापि निरस्तेत्याह ( अतइति ) समानाधिकरण ज्ञानस्यैवा ज्ञान निवर्तकत्वादिभावः । नच विशेषणविशेष्यभावो नियामकः, देवदत्तज्ञानेन देवदत्ताज्ञाना निवृत्तिप्रसंगात । नच तत्रा भेदएव नियामकः, तथासति तदतिरिक्तविशेषणविशेष्यभावादे र्नियामकत्व कल्प नायोगात्त । ननु-तत्रापि विशिष्टविशेष्यभावएव नियामकः , अज्ञानस्य विशेष्यब्रह्मस्वरूप गतत्वा दितिचेन्न;- देवदत्तगतज्ञानेन यज्ञदत्त गताज्ञान निवृत्तिप्रसंगस्य दुर्वारत्वात् । एतेन "विवादाध्यासित" मित्यादिना भाष्योक्तस्तर्कोऽपि समर्थितइ याह ( तदेतदिति) (प्रसंगाभि प्रायेणेति ) तदभिमतस्य ज्ञानत्वेन ज्ञाननिवर्त्यत्वलक्षणाज्ञानत्वस्य हेतो रनुमाना संभवादितिभावः । परोक्तं भावरूपाज्ञानं ज्ञानमात्रब्रह्मस्व- [illegible]भ्युपगम्य तर्कः प्रयुज्यते । ( विवादाध्यासितमिति) ब्रह्माश्रयत्ववे वाद्विवादविषय इत्यर्थः । यदज्ञानं त न्न ब्रह्माश्रयमिति व्याप्ते श्शुक्ति- [illegible]ज्ञाने दर्शनेन ब्रह्मविषयाज्ञानं न ब्रह्माश्रयं , तथात्वे ऽज्ञानत्व- सिद्धिप्रसंगात् । नच व्याप्त्यसिद्धिः , अज्ञानस्य ज्ञात्राश्रय , ब्रह्मणश्च ज्ञातृत्वाभावेन शुक्त्याद्यज्ञानानां तद्गतत्वासम्भवात् । [illegible]भिप्रायेणोक्तम् ( ज्ञानमात्रेति ) ( ज्ञात्राश्रयं हि तदितिच ) - ज्ञात्राश्रयत्वनियमो प्यसिद्ध इति वाच्यम् , व्यधिकरणस्यापि

निवर्त्तकत्वप्रसंगेन समनाधिकरणज्ञानत्वेनैव निवर्त्तकत्वे वाच्ये ज्ञान-निवर्त्यतया ऽभिमताज्ञानस्य ज्ञात्राश्रयत्वावश्यंभावात् ।

ननु विपर्ययापर्यवसानात् कथ मयं तर्क इतिचेत्; अत्राहुः - द्विविध स्तर्कः, साधको दूषकश्च । तत्राद्यस्य विपर्ययपर्यवसाना-पेक्षा, तद्विना तस्य साध्यासाधकत्वात् । इतरस्यतु न तदपेक्षा, पराभ्युपगममात्र मादाया निष्टप्रसञ्जनेन दूषणत्वसम्भवादिति ।

ननु- शुक्त्याद्यज्ञानमपि शुक्त्याद्यवच्छिन्न चैतन्यगतमेव, नतु देवदत्ताद्याश्रयम् । नचैवं व्यधिकरणतया देवदत्ताश्रयज्ञाना न्निवृ-त्त्यनुपपत्तिः, विषयचैतन्यस्या ज्ञानाश्रयस्य वृत्तिमदन्तःकरणावच्छे-देन प्रमातृचैतन्याभिन्नस्य; तत्र क्षणमात्र मज्ञानस्य ज्ञानसमानाधिकरण-त्वात । अतः कथं " ज्ञात्राश्रयंहि तदि " त्युच्युतइतिचेत्?

अत्र केचित्, शुक्त्यज्ञानं न शुक्त्यवच्छिन्नचैतन्यस्थं, अहं जा-नामी च्छामीतिवत् अहंनजानामीति ज्ञातृस्थत्वानुभवात । इत्याहुः ।

अत्र नवीनः-घटाद्यज्ञानं घटादिचैतन्यनिष्ठमेव, अन्यथा तत्र विक्षे-पायोगात् ।

नचैवम् तस्य साक्ष्यसम्बन्धा दह मिदं [ न ] जानामीति प्र-तीतिः कथमिति वाच्यं, अवस्थावस्थावतो रभेदात् - मूलाज्ञानस्या वस्थावतो हंकारसमानाधिकरणत्वा त्तदवस्थं ज्ञानमपि तदनुरक्ततर भातीति केचित् । अन्ये त्वज्ञानानुभवे तदधिष्ठानचैतन्य प्रमातृचै-न्ययो र्वास्तवाभेदएव प्रयोजक इत्याहुः । अपरेतु - शुक्तिं [ न ] जानामीत्यनुभवो मूलाज्ञानविषयः, शुक्त्यादे रपि तद्वि-भिन्नतया तद्विषयत्वानुभवात । रजताद्युपादान मज्ञानन्तु कार्यो-पपत्तिगम्यं, कार्यंच रजताद्यध्यासः, ज्ञानेनाज्ञानं निवृत्त मित्यनु-बोधा, इत्याहु रिति ।

तन्न- अन्तः करणाश्रितस्यैवा ज्ञानस्य वृत्त्यासह निर्ग तदुपादानत्वसम्भवात्, विषयगत विक्षेपार्थं विषयगतत्वस्या न

श्यकत्वात् । किंच - प्रतीतिबला द्घटाद्यावारकाज्ञानस्या हमर्थे नि ष्ठत्वेपि घटोपादानमूलाज्ञानस्यैव तत्र वाल्मीकादि विक्षेपहेतुत्वस-म्भवात् । किञ्च-शुक्त्याद्यज्ञानाना मनादित्वांगीकारेणा वस्थात्वा सं भवात्, तेन कथमहं ( न ) जानामिति प्रतीत्युपपादनम् । यच्चान्तः करणावच्छिन्नचैतन्यस्या ज्ञानाश्रय विषयचैतन्यस्यच वास्तवा भेदा त्प्रतीत्युपपादनम्, तदपि न, तथासति घटादौ वृत्तिनिर्गमन कल्पन वैयर्थ्यापत्तेः । तत्रा प्यन्तःकरणावच्छिन्न विषयावच्छिन्न चैतन्ययो वास्तवा भेदस्य सत्वात् । व्यवहित स्सन्नपि भासतेतिचेत? तर्हि-देवदत्तीयाज्ञानं यज्ञदत्तस्य कुतो न भासते । तंप्रत्यावारकाज्ञानंत-स्य भासतइतिचेत? तदिन्द्रियसन्निकृष्ट स्तस्य भासतइति नासन्नि-कृष्ट घटभानप्रसंगः। यच्च - मूलाज्ञानमेव घटं न जानामीति प्र-तीतिविषयइति । तत्र विषयगताज्ञानमेव न सिद्ध्येत्, रजताद्य-ध्यासस्यमूलाज्ञानादेवोपपत्तेः । नन्व ज्ञातेना ज्ञानं निवृत्तमित्यनुभव-बला त्तत्सिद्धिः, एतावन्तं कालं घटं ना ज्ञासिषं - इदानीम् घटज्ञानेन मयिघटाज्ञानं नष्टमि त्यनुभवेना ज्ञान निवृत्त्यनुभवस्या हं जानामीति प्रती-ता. ज्ञानविषयत्वावगमाच्च, विषयाज्ञानस्या प्रत्यक्षत्वे तन्निवृत्तेः प्र-त्यक्षत्वायोगाच्च । किंच - किंमूलाज्ञानस्य विषयावच्छिन्न चैतन्या वारकत्वम् - उतन ? आद्ये तत एव विक्षेपस्योपपत्तौ विषयगताज्ञाना न्तरे मानाभावः । द्वितीयेतु तद्विषयत्वानुभव विरोधः । अज्ञान विषयाभिन्नतया तद्विषयत्वानुभवे घटज्ञानदशायामपि घटस्याज्ञान-विषयत्वानुभवप्रसंगः । ननु-घटानुभवः प्रतिबन्धकस्तत्रेति चेन्न;-

त्वेन सामान्यरूपेण ज्ञाने विशेषाकारेणा ज्ञानदशाया मिदं न जाना यननुभवप्रसंगात् । अत स्तत्प्रकारकज्ञानं तत्प्रकारावच्छिन्नावा वार[illegible]णानानुभव प्रतिबन्धकं वाच्यम् । मूलाज्ञानंच नावच्छिन्न चैत-भा[illegible]कगामिति न तदनुभवप्रतिबन्धः ।

[illegible]त - शुक्त्याद्यज्ञानस्या हमर्थचैतन्य माश्रयः, शुक्त्यवच्छिन्न-[illegible] विषयः, रजतादिकंचा ज्ञानचैतन्यविवर्तो नत्वज्ञानविवर्त्त [illegible] तम्; यच्च शुक्त्याद्यज्ञानं शुक्त्याद्यवच्छिन्नचैतन्यनिष्ठ मई-[illegible]

"ब्रह्म ना ज्ञानास्पदं, ज्ञातृत्वविरहात्, घटवत्" इतिच ।

ननु - कल्पितं ज्ञातृत्वं ब्रह्मणोप्य [स्ति, तेनास्या] स्तीति तस्या ज्ञानाश्रयत्वोपपत्ति रिति चेन्न; अहंकारोपहितत्वेनैव तस्य ज्ञातृत्वकल्पनाभ्युपगमात्, सुषुप्तिमरणादि ष्वहंकारप्रळयेपि संविदात्मन एवा ज्ञानाश्रयत्वाभ्युपगमाच्च । ततश्च शुक्तिकाज्ञानव द्ब्रह्माज्ञान मप्यह मर्थनिष्ठ मितिवा कल्पय, त्यजवा सर्वत्र ब्रह्माज्ञानं । उभयथापि नत्वा मुपद्रवामः ।

यश्च वस्तुतो ज्ञातृत्वं परिगृह्या ज्ञानमपि ब्रह्मणि स्थापयेत, सोपि नित्यसर्वज्ञत्वानुपपत्त्या निरसिष्यते ।

---

**कारावच्छिन्नचैतन्यनिष्ठंच, शुक्त्याद्यवच्छिन्न चैतन्यनिष्ठत्वा तत्राध्यास उपपद्यते, अहंकारावच्छिन्न चैतन्यनिष्ठत्वा दहं जानामीति प्रतीति श्चोपपद्यत इति मतम्; तत्र मतद्वयेपि ज्ञात्राश्रयत्व मस्त्येवेति न दोषः ।**

**( ब्रह्मणाज्ञानेति ) ब्रह्म यद्यज्ञानास्पदं स्यात - ज्ञातृस्यादिति तर्कोत्र विवक्षितः । किमहं जानामीति प्रतीयमानं यज्ज्ञातृत्वं तदेव ब्रह्मगततया विवक्षितं, उतान्यत्, नद्वितीयः, अनभ्युपगमादित्यभिमेत्या द्यं दूषयति ( अहंकारेति ) अन्तःकरणावच्छिन्न एव ज्ञातृत्वाद्ध्यासा न्न चिन्मात्राश्रयं ज्ञान मित्यर्थः । ननु चैतन्यस्यैव जीवेश्वररूपेण विभक्तत्वा ज्ज्ञातृत्वसामानाधिकरण्य मज्ञानस्यास्तीति चे त्तर्हि देवदत्तगतज्ञानेन यज्ञदत्ताज्ञाननिवृत्ति स्स्यात् । ननु दत्तस्य यज्ञदत्तापेक्षया न्तःकरणभेदेन भिन्नत्वा न्न समानाश्र अत्रतु जीवस्य चैतन्यापेक्षया भेदस्या प्रतीते स्समानाश्र ति चेन्न; - जीवे चैतन्यभेदस्यैव प्रतीयमानत्वात् । अहं किन्तु ज्ञानाश्रय इत्येवहि प्रतीयते । तर्हि ज्ञातृत्वाश्रये य हित एवा ज्ञान मस्त्वित्यत्राह ( सुषुप्तीति ) उपसंहरति (न्यं " सर्वत्र " - जीवे ब्रह्मणिच्च । यथा जीवे त्यजासि । म**

स्वप्रकाशत्वाच ब्रह्मप्रकाशबाध्यंहि ब्रह्माज्ञान मभिमतं, ब्रह्मच नित्यस्वप्रकाशरूपं, तत स्तेजसीव तिमिरं कथं तत्र तत्स्यात्? तच्चे त्स्वस्मिन्नज्ञानं सहेत, कस्तस्य निवर्तकः? ब्रह्मविषयं ज्ञानं निवर्तकमितिचेत्? अनुभाव्यत्वे घटादिव दननुभूतित्वप्रसंग इति त्वदुक्तं किंनस्मरसि? प्रस्मरवा । तथापि विशेषाभावा न्न तस्यापि निवर्तकत्वं । निवर्तकानुपपत्तौचा स्य विस्तरो ग्राह्यः ।

---

ण्येपि त्यजेत्यर्थः । ( तेजसीवेति ) तेजसि सतीत्यर्थः । दीपेन प्रकाशमाने ऽपवरके यथा तमो न सम्भवति, तथा स्वरूपेण भासमानेपि चैतन्ये ऽज्ञानं न सम्भवतीति यावत् । ननु स्वरूपज्ञानस्या धिष्ठानज्ञानतया ऽज्ञानाद्ध्यासहेतुत्वा न्न तस्य तद्विरोधित्व मित्यत्राह ( तच्चेदिति ) ( कस्तस्येति ) ज्ञानान्तरानंगीकारादिति भावः । वृत्तिरेव निवर्तिकेति शंकते ( ब्रह्मेति ) यद्वा - चैतन्यमेवा ज्ञाननिवृत्तिप्रतिबन्धकावरणे अखण्डाकारापरोक्षवृत्त्या निवृत्ते तादृशापरोक्षवृत्तिप्रतिबिम्बितमेव चैतन्यात्मना निवर्तक मिति शंकते ( ब्रह्मविषयमिति ) घटादे रनुभाव्यत्वंहि वृत्तिविषयत्वंवा वृत्तिप्रतिबिम्बित चैतन्यप्रकाश्यत्वंवा स्यात्, ब्रह्मण्यपि तत्सत्वे घटादिव दननुभूतित्वं दुर्वारमेवे त्यर्थः । नन्वनुभाव्यत्व मनुभवविषयत्वमेव, तद्घटादेरेव न ब्रह्मण इतिचेत्? अनुभवविषयत्वं ह्यनुभवभिन्नत्वेस त्यनुभवप्रकाश्यत्वं तच्च तेनाननुभवत्वसाधने साध्याविशेषः । ननु नोक्तरूपं वि-
इच्छादे रप्रकाशतया तद्विषये ऽभावात्; किन्तु ज्ञानेच्छा वारण मन्यदेव किञ्चि द्विषयत्वं, तच्च भेदव्याप्त मित्यननुभवभावकमिति चेन्न; - स्वप्रकाश्यत्वव्यावृत्त तादृशविषयत्वकल्पनामानाभावात् । ( प्रस्मरवेति ) संस्मरवेत्यपि विवक्षितम् । वा त्वदुक्तं संस्मृत्यवा स्वातिरिक्तानुभवप्रकाश्यत्वमेवा नुभाव्यत्व वा कल्पयेत्यर्थः । ( विशेषाभावादिति ) प्रकाश्यवैलक्षण्यस्या प्रलक्षणवैलक्षणस्य वा ऽभावादित्यर्थः ।

ननु - भवतोपि जीवस्वरूपं स्वप्रकाशं, तदेवचा ज्ञाना श्रयतया ऽभिमत मितिचेत् ? सत्यं, तथापि न तत्र विरोधः । नहि स्वप्रकाशांशाप्रत्यनीक मप्रका [शांशं] शं प्रत्यगात्मनो ब्रूमः, अपितु तस्यैव देहेंद्रियादिविधर्मिणः स्वप्रकाशत्व नित्यत्व स्वादुतम-त्वादि धर्म विशिष्ट रूपा ज्ञानं । तच्च तदात्मगतेन विशिष्टविषयेण ज्ञानेन निवर्तते । यथाच शबरसंवर्धितस्य राजकुमारस्य शबरतया

---

अत्र प्रतिबन्धनिवृत्तिलक्षणविशेषाभावो विवक्षितः । नच ज्ञाने सति प्रतिबन्धा दज्ञानानिवृत्ति र्दृष्टा, तच्चोपपादितं जिज्ञासा-नुपपत्तौ । किंचेदानीं माश्रयासम्भवा दज्ञानं निराचिकीर्षितं, तत श्चाज्ञाने सिद्धे तदनिवृत्तये तन्निवृत्तिप्रतिबन्धककल्पनं, तस्मिंश्च कल्प्ते ब्रह्मण स्तदाश्रयत्वोपपत्त्याऽज्ञानसिद्धि रि त्यन्योन्याश्रयः । अपिच व्यवहारायोग्यता ह्यावरणं, मूकादिभि र्ज्ञायमाने घटे व्यवहारायोग्य-तायाम प्यज्ञाननिवृत्ते रानुभविकत्वा न्नावरणस्या ज्ञाननिवृत्तिप्रति बन्धकत्वं सम्भवति । किंच - अधिष्ठानतत्वसाक्षात्कारे विद्यमाने कुतो ऽविद्या? कुतश्च तदधीनावरणं? कुतस्तरा मावरणस्या ज्ञान-निवृत्तिप्रतिबन्धकत्वकल्पनम् ? ।

ननु किं स्वप्रकाशस्या ज्ञानाश्रयत्वमेव विरुद्धं, किंवा स्व-विषयाप्रकाशाश्रयत्वं? नाद्यः, घटादिज्ञानस्या ज्ञानान्तरसामानाधिक-रण्यव ज्ज्ञानात्मवादे ऽन्याज्ञानाश्रयत्वाविरोधात , द्वितीयेच त्वमेव विरुद्धमिति वक्तव्यं, नाश्रयत्वमितिचेन्न; - विषयत्वस्य विरुद्धत्वात्, एकविषयकज्ञानाज्ञानयो र्भिन्नाश्रययो र्दर्शनात् । यो यत्प्रकाशवान् तस्य तदज्ञानाश्रयत्वं विरुद्धं, तथाच प्रकाशव ह्मण स्तदज्ञानाश्रयत्वं विरुद्धमिति तद्विषयप्रकाश स्तद्विषयाज्ञान-र्तकइति विवक्षितत्वात् । (अज्ञानाश्रयतयेति) ज्ञानविरोध्याश्रयतये-त्यदभिमताज्ञानाश्रयतयेतिवा । ( नहीति ) स्वरूपमात्रस्यैव स्व शत्वांगीकारा त्तस्या ज्ञानविषयत्वानंगीकाराच्चे ति भावः ।

एतेन -

यदाह नवीनः, भासमाने प्यात्म न्यज्ञानं सर्वै रेवो पगन्तव्यम्, अन्यथा शरीराद्यभेदभ्रमानुपपत्तेः । किंच घटादौ प्रमेयमिति ज्ञानेन घटत्वादि वैशिष्ट्यप्रतीताव प्यात्मनि तदज्ञानं दृश्यते, अन्यथा तत्सं-शयाद्ययोगात् । नचान्वयव्यतिरेकाभ्यां तत्प्रकारकज्ञानमेवा ज्ञान-विरोधीति वाच्यं, अनभ्यासदशापन्नजलादिज्ञाने सत्यपि तत्संशया-नुरोधेन तत्राज्ञानस्य स्वीकर्तव्यत्वात् । तर्हि सत्तानिश्चयरूपज्ञान मज्ञानविरोधीतिचेत्? तर्हि ज्ञानमात्रस्य सत्तानिश्चयरूपत्वाभावेन स्वरूपज्ञानमपि पूर्व सत्तानिश्चयरूपं न भवतीति न तस्या ज्ञानाश्र-यत्वं विरुद्धमिति ,

तन्निरस्तं । देहेन्द्रियादि वैलक्षण्यस्या ज्ञानात । " विशिष्टविषये-ण ज्ञानेन निवर्त्तत " इत्यनेना त्मज्ञाने विशिष्टविषयत्वाभावादेवा ज्ञा नानिवर्तकत्वं, नत्वनवधारणत्वात् ,- एककोटिकज्ञानमात्रस्यैवा वधारण-त्वा दित्यभिप्रेतम् । यथाचै ककोटिकज्ञानस्या नवधारणत्वासम्भव स्तथोक्तं जिज्ञासानुपपत्तौ ।

किंच - ब्रह्मस्वरूपस्या नवधारणत्वे आवरणकल्पनं व्यर्थम्, अधिष्ठानतत्वनिश्चयादेवा ध्यासासम्भवात । नन्वावरणाधीनमेव तदिति चेन्न;- आवरणस्या स्तिप्रकाशत इति व्यवहारयोग्यत्वाभावरूपतया ऽऽवरणस्यैवा नवधारणत्वाधीनत्वात् । नन्वनवधारणत्वमेवा वरण-[त्वमस्तु]? एवमपि स्वरूप मवधारणात्मक मुतानवधारणात्मकम् ? [आद्ये आवरणाभावः], कदा प्यनिवृत्तिप्रसंगात् । अविद्याधीनत्वानुपपत्तेश्च । न-[द्वितीयः, स्वरूपस्याव]धारणात्मकत्वात् । ... मनवधारणमेव वृत्त्यापादितावधारणताकंस दविद्यां नि-[वर्तय]तीतिचेत्; तर्हि तादृशावधारणत्वदशायामेव ज्ञानस्या ज्ञानवि-[रोधित्वेन अविद्य]या तदभावदशाया मविरोधादेवा ध्यासासम्भवात् किम-[ज्ञा]नावरणकल्पनया । आद्येतु - अज्ञान तत्कार्यासम्भव एव, [स्वरू]पस्या ज्ञानविरोधित्वात् । नन्ववधारणत्वे प्यनवधारणत्वं

कल्पितं प्रतिबन्धकमिति चेन्न ; - इदानी मवधारणरूपकारणाभावा दविद्यानिवृत्तिरूपकार्याभावप्रतिपादनस्यो पक्रान्तत्वात् ।

किंच - संशयनिवृत्त्यनुकूलरूपत्व मवधारणत्वं तदविरोधित्व मनवधारणत्वमिति त्वयैवोक्तं, तथाच संशयविरोधि स्वरूपे कथं संशय विरोधि स्वरूपत्वं । स्यादप्येतत्, यदि पारमार्थिकसंशयंप्रति विरोधित्वं व्यावहारिक संशयंप्र त्यविरोधित्वमिती ष्येत, नच तथेष्यते ।

किंच - यदि स्वरूप मनवधारणं, तर्हि प्रकाशस्या वृततया जगदांध्य प्रसंगः । आनन्दांशएवा नवधारणत्वमितिचेन्न ; अंशाभावात् । नच प्रकाशानन्दयोर्भेदारोपा त्तत्सम्भव इतिवाच्यम्, भेदस्याप्यवधारणत्वव दारोपे प्यनवधारणत्वप्रयुक्त जगदान्ध्यस्य दुर्वारत्वात् । आनन्दत्वेऽनवधारणत्वमिति चेन्न; - तस्य स्वरूपाभेद उक्तदोषानपायात् । भेदे तस्य जडत्वेना वरणानुपपत्तेः । ननु - आनन्दत्वकोटिक संशयाविरोधिस्वरूपत्व मानन्दानवधारणत्वमितिचेत ; किमिद मानन्द स्वरूपस्या नवधारणं? उतानन्दत्व विशिष्टस्य? नाद्यः, प्रकाशस्या प्यनवधारणप्रसंगात । नचेष्टापत्तिः, तथासति प्रकाशावरणे- जगदान्ध्य प्रसंगात् । नद्वितीयः, विशिष्टानवधारणत्वे जडे प्यावरणप्रसंगात् ।

यदप्युक्तं - साक्षिणो प्यज्ञानविषयीभूतात्मांशे परोक्षत्वा न्ना ज्ञान विरोधइति । तदपिन, अज्ञानविषये प्यापरोक्ष्यस्य त्वयैवांगीकृत त । नजानामीति प्रतीतेः प्रत्यक्षाभावविषयत्व माशंक्य चं नामीत्यादौ चन्द्रस्य प्रत्यक्षतया चन्द्रं नजानामीति प्रतीते त्यक्षाभाव विषयत्वासम्भवेन भावरूपाज्ञानविषयत्वमेव वक्त स्करत्वात । परोक्षज्ञानेना प्यज्ञाननिवृत्ते रवर्जनीयत्वस्यो पपा ञ्च । परोक्षज्ञानस्या प्यज्ञानानुभवप्रतिबन्धकत्वांगीकारेणा ज्ञ वा सम्भवाच्च । आपरोक्ष्यस्य स्वरूपतया तस्मि न्भासमाने

द्व्यासा सम्भवाच्च । किञ्च - सत्यज्ञानादिपदाना मपर्यायत्वाय सत्यत्वादिधर्माणा माद्ध्यासिकानामिव " यत्साक्षादपरोक्षा द्ब्रह्मे " त्यादा वपर्यायत्वाया परोक्ष्यस्या प्याध्यासिकस्य सत्त्वा त्कथं पारोक्ष्य-स्या ध्यस्तस्य सम्भवः । नन्वानन्दांशे परोक्षत्वं चैतन्यांशएवा प-रोक्षत्वमिति नविरोध इतिचे न्न; अंशभेदासिद्धेः । काल्पनिकभेदा द्व्य-वस्थायाश्च निराकरणात् । " यत्साक्षादपरोक्षा द्ब्रह्मे " त्यत्र स्क-मान्यना परोक्ष्योक्तेश्च । प्रत्युता "परोक्षाद्ब्रह्मे " ति समभिव्याहारबलात् ब्रह्मांश एवा ज्ञानविषयत्वाभिमत आपरोक्ष्यावगमाच्च । ननु-ज्ञानत्वानन्द-त्वापरोक्षत्वादिकं वृत्तिगतमेव न चैतन्यगत मित्युक्तं, अतः कथं पारोक्ष्यासम्भव इति चेन्न; - कारणत्वव देषाम प्याध्यासिकानां स्वरू-पएव सम्भवात।

किञ्च - यदि ज्ञानत्वादिकं वृत्तिगतमेव, तर्हि ज्ञानादिपदप्रवृत्ति निमित्तीभूत ज्ञानत्वादिसम्बन्धितया वृत्तेरेव ज्ञानादिपदार्थत्वात ब्रह्मस्व-रूप ज्ञान मपरोक्षं च न स्यात्। ज्ञानादिपदै र्लक्षणया ब्रह्मस्वरूपोप-स्थिते र्ब्रह्मज्ञान मानंद मपरोक्षंचेति चेत ; तर्हि गंगापदलक्ष्यं तीरम-पि गंगा स्यात्।

किंच - घटादिज्ञानस्या परोक्षत्व मपरोक्षार्थ विषयत्वं, अर्थेचा परोक्ष्यं, ब्रह्मणि स्वतः, - घटादौ तत्तादात्म्यमिति हि त्वयोच्यते; तत श्चापरोक्ष स्वभाव ब्रह्मगोचर प्रकाशरूपतया अपरोक्षत्वस्या व-र्जनीयत्वा न्न तत्र पारोक्ष्यं।

किञ्च पारोक्ष्ये सत्यपि स्वरूप मपरोक्षमेवे त्यज्ञाननिवृत्ति रनि वार्या। नच पारोक्ष्यं प्रतिबन्धकमिति, अपरोक्षज्ञानलक्षण कारणा भावेन कार्याभावस्यो पपादयितु मुपक्रान्तत्वात्।

यच्चोक्त मविद्याया मनुपपत्ति रलंकारइति ज्ञायमाने प्यज्ञानम-विरुद्धमिति, तत्र ना विद्यात्वादेव तदनुपपत्ते रलंकारता, अपितु

ऽऽत्मान मभिमन्यमानस्य प्रकाशमानएव स्वात्मनि क्षत्रियत्वाज्ञानं, तच्चोपदेशादिजन्यराजत्वज्ञानेन निवर्तते, तद्वदत्रापीति स्वय मेव परिभावय ।

नित्यमुक्तत्वाभ्युपगमाच्च । न ह्यज्ञानाश्रयत्व मनन्तर्भाव्य कश्चिद्बन्धो

---

मिथ्यात्वात् , ततश्चाहमज्ञइतिप्रतीतेः कथं ज्ञानाभाव विषयत्वासंभवः, तस्य मिथ्यात्वादेवा ज्ञानव द्विरोधस्या लंकारत्वात् । किं न्निमित्तंच मिथ्यात्वा नुपपत्त्या तदुपपादना ज्ञानकल्पनं ? कुतश्चा नुपपत्त्या अज्ञानस्या न्तःकरणाश्रयत्व निरासः ? किं बहुना – एवंसति कृतं परस्परव्याहत स्वमतसामंजस्य प्रत्याशया श्रमैकफल कुतर्क चिन्ता व्यवसनेन ।

किंच - अनुपपत्ते र्मिथ्यालंकारत्वं, सत्यालंकारत्वन्तु नेति क्वदृष्टं त्वया पण्डितमानिना ? प्रातिभासिकव्यावहारिकयो र्दृष्ट मिति चेत् ? तर्हि प्रातिभासिका ध्यासार्थ मज्ञानकल्पन मावरणकल्पनं च व्यर्थं-स्यात । अविद्यायाश्च व्यावहारिकत्वा दनुपपत्ति रलंकारो न स्यात । ब्रह्मणि परमार्थस त्युपपत्ते रावश्यकतया ऽनुपपत्ते रलंकारत्वं दृष्टमि-तिचेत् ? त्वत्कुमति कल्पित कुतर्कापादितानुपपत्त्याभासानां प्रपंचइव ब्रह्मण्यपि प्रवृत्तेः । संभवतिहि तत्रापि अभेदाद्वितीयत्वादीनां स्वरूप तदतिरेकयो र्भेदव दनुपपत्तिः । किंच प्रमाणस्य वेदान्तस्य मिथ्या-त्वेन तत्प्रमेयस्य ब्रह्मण स्सुतरा मनुपपत्ति रेवेति ।

( नित्यमुक्तत्वाभ्युपगमाच्चेति ) ननु – ब्रह्मणो ऽज्ञानाश्रयत्वे न नित्यमुक्तत्व विरोधः, तत्कार्यसंसाररूपबन्धस्य जीवनिष्ठत्वा दित्यत्रा ह ( नहीति ) अज्ञानंहि स्वाश्रयएव भ्रान्त्यादिहेतु र्दृष्टः, ततस्त-स्यापि तं प्रति हेयत्वात् सोपि बन्धशब्दार्थएवेति ब्रह्मणोऽज्ञानाश्रयत्वेन तत्कार्यभ्रान्त्यादिनाच नित्यमुक्तत्वं विरुद्धमित्यर्थः । अज्ञत्वं यथा पा-षाणकल्प मुक्तिवादिमते मुक्त्या नविरुद्ध्यते, एवं नित्यमुक्तत्वेनापी-

नाम, नच बन्धाभावा दन्या मुक्तिः। येच मुक्तिदशायां पाषाणादिव दज्ञत्व मिच्छन्ति, न तेपि तदानीं संसारबीजभूत मज्ञान मनुमन्यन्ते ।

---

त्याशंक्याह ( येचेति ) यद्यपि ते ज्ञानाभावलक्षणाज्ञानं तदानी-मंगीकुर्वन्ति, तथापि संसारबीजभूततया स्वाभ्युपगत म्मिथ्याज्ञानल-क्षण मज्ञानं नेच्छन्ति, त्वन्मतेत्वा ज्ञानस्यैव बन्धनिदानत्वा त्तदाश्रयत्वे सति कथं तत्कार्य भ्रन्त्याद्यभावः ? तत्सद्भावेच कथं नित्यमुक्तत्वं ? ।

न न्वज्ञानस्य चैतन्यमात्राश्रितत्वेपि जीवस्य तत्कार्यभ्रान्त्याद्याश्र-यत्वेपि नतयो स्सामानाधिकरण्याभावः, चैतन्यस्य जीवेश्वररूपेण वि भक्तत्वात ; नहि जीवेश्वरविभागानाक्रान्तं किंचि दिदानीं चैतन्य मस्ति -

नन्वेवं जीवेशविभागा नाक्रान्त चिन्मात्राभावे कथं चिन्मात्राश्रय मज्ञान मित्युच्यत इतिचेत्; सत्यं, जीवेशविभागानाक्रान्तचैतन्य मिदा-नीं न्नास्त्येव, तथा प्यज्ञानं भेद मनपेक्ष्यैव चैतन्येन सम्बध्यते , नच दैवगत्या तत्रस्थितिमात्रेण भेद स्तदाश्रयत्वादौ प्रयोजकः, अतिप्रसंगा-त् , अत श्चैतन्यमात्राश्रयत्व मज्ञानस्योच्यते -

ननु तर्हि ब्रह्मणोपि जीवव दज्ञानाश्रयत्वा त्तत्रापि तत्कार्यभ्रा-न्त्यादिकं स्यादितिचेन्न, अज्ञानंहि यंप्रति वाक्यार्थ ब्रह्मस्वरूप मावृ-णोति, तत्रैव भ्रमं जनयति , ननु - धर्मिद्वये, सत्येवं व्यवस्थायु ज्यते, नैकधर्मिणीतिचेन्न; - दर्पणव दज्ञानोपाधिना चैतन्यएव जीवेश विभागापादनात् , नचैवं ब्रह्मण स्यावरणं तत्र भ्रान्त्यादि हेतुश्च स्यादितिवाच्यम् , उपाधेः प्रतिबिंबपक्षपातित्वात् । दृश्यतेहि दर्पणाद्युपाधिभिः प्रतिबिंबएव मालिन्याद्यद्ध्यासः । ततश्च नित्यमु-क्तत्व श्रुति र्बिंबस्थानीय ब्रह्मपरेतिचेत् ;

अत्र केचित्, उपाधेः प्रतिबिंबपक्षपातित्वं किं तत्र स्वधर्मं प्रतिभासकत्वं ? स्वकार्यप्रतिभासकत्वंवा ? - स्वकार्यनिष्ठ धर्मप्रतिभासकत्वंवा ? प्रतिबिम्बंप्रति स्वविषयाच्छादकत्वंवा ? नाद्यः, मालिन्यादे र्दर्पणनिष्ठत्ववद विद्यास्वरूपस्या विद्यावच्छिन्नस्या विद्याप्रतिबिम्बितत्वस्य कर्तृत्वादिर्वा बन्धस्या ज्ञानधर्मत्वाभावात् । अविद्यास्तमघोमोऽस्त्वितिमते अविद्याया बन्धकत्वमेव नतुबन्धत्वम् । नद्वितीयः, विच्छेदादे रुपाधिकार्यस्य बिम्बेप्रतिबिम्बेच दर्शनात । संसारस्याना दित्वेनोपाद्यकार्यत्वाच्च । नतृतीय चतुर्थौ, दर्पणघटादा वदृष्टेः । तस्मा द्व्यवस्था नुपपन्नैवेति वदन्ति ।

अत्र नवीनाः । अविद्याया जीवेश भेदेसति त्वदभिमत मायाया इव पुरुषभेदेन एकस्या प्यज्ञानस्या वारकत्वानावारकत्वे अविरुद्धे, कार्यदर्शनस्य च श्रुतिप्रमाणस्य चोभयत्रापि तुल्यत्वात् । तस्य स्वभावसर्वज्ञत्वा न्न मायावरणमित्यपि तुल्यम् । उपाधेः प्रतिबिम्बपक्षपातित्वञ्च दर्पणाद्युपाधिना स्वनिष्ठमालिन्यस्य स्वनिष्ठपरिमाणविशेषस्य च नियमतः प्रतिबिम्बएव भासनात् । भ्रमविशेषस्य प्रतिबिम्बनैय त्यमेव । ततश्च तद्वदावृतस्वरू[परूपा]पा ज्ञत्वादिकमपि जीवएव भवति । ततश्चाज्ञत्वप्रयुक्त कर्तृत्वादिकमपि तत्रैव युज्यत इति । अथवा-दर्पणाद्युपाधे राभिमुख्यमालिन्यादेः प्रतिबिम्बएवा धायकत्वनियमा दुपाधे रज्ञानादेः प्रतिबिम्बएव स्वधर्मासंजकत्वं प्रतिबिम्बपक्षपातित्वगिरोच्यते । तत्र जीवस्य स्वरूपावारकाज्ञानोपाधिप्रयुक्तो धर्मो भेदएव । कर्तृत्वादिकन्तु बुद्ध्याद्युपाधिप्रयुक्तम् । नचोपाधिप्रयुक्त धर्मस्य भेदस्य बिम्बेपि मुखे प्रतीते नाय न्नियम इतिवाच्यम्, दर्पणेहि मा ग्रीवास्थमुखमात्रप्रतियोगिको भेदो वर्तते । नचातंभेदं

बिम्ब आसंजयति · बिम्बमुखं ग्रीवास्थमुखं नभवती त्यप्रतीतेः । यस्तु तस्मिन् प्रतिबिम्बमुख प्रतियोगिको भेदो ऽनुभूयते, स दर्पणधर्म स्सन् तेन प्रतिबिम्बेना सज्यते, दर्पणबिम्बयो र्युगपदेव तद्भेदानुभवात् । प्रतिबिम्बेतु स्वनिष्ठमेव ग्रीवास्थमुखभेद मासंजयति । एव मज्ञान-मपि नित्यमुक्तवाक्यार्थ ब्रह्मभेदं स्वनिष्ठं सर्वज्ञे नासंजयति, किन्तु-जीव एवेति नैतन्नियमबाध इति ।

अत्र ब्रूमः - जीवब्रह्मणो रभेदेन जीवंप्र स्यावरणं ब्रह्मप्रत्य-पि भवत्येव । नन्वविद्याकल्पितभेदेन ब्रह्मापेक्षया भिन्नजीवं प्रत्या-वरणमितिचेत्; किं भेदंप्रत्यावरणं? उत भेदाश्रयं प्रति? - नाद्यः, तस्य जडत्वेन तंप्रति प्रकाशाप्रसक्त्या आवरणायोगात । द्विती-येतु ब्रह्मस्वरूपं प्रत्येवा वरणमिति पर्यवसन्नमिति तत्र भ्रमादि र्दु-र्वारएव । कथं तर्हि लोके बिम्बप्रतिबिम्बयोः प्राङ्मुखत्वप्रत्यङ्मुख-त्वव्यवस्थेति चेन्न; - कथंचि त्प्राङ्मुखएव प्रत्यङ्मुखत्वारोपात् । बिम्बप्रतिबिम्बयो रिदं प्राङ्मुख मिदं प्रत्यङ्मुखमिति प्रतीतिः पर-मवतिष्ठते, अनुभवबलात । नच प्रकृतेपि प्रतीतिव्यवस्थैव नार्थ-व्यवस्थेति वाच्यम्, तथापि सर्वज्ञत्व किंचिज्ज्ञत्वयोः परस्परविरुद्ध-त्वेना न्यतरोच्छेदापत्तेः ।

ननु कथ मर्थव्यवस्थाभावः, कस्यचि द्धर्मस्य बिम्बवृत्तित्वे सति प्रतिबिम्बवृत्तित्वाभावः - अन्यस्य प्रतिबिम्बवृत्तित्वे सति बि-म्बवृत्तित्वाभावश्च - इतीयमेवहि व्यवस्था, अस्तिच प्राङ्मुखत्वा-वदातत्वादौ प्रतिबिम्बावृत्तित्वं, प्रत्यङ्मुखत्वमालिन्यादौच बिम्बावृ-त्तित्वम् । ननु - तत्र बिम्बप्रतिबिम्बयो रैक्या त्प्राङ्मुखत्वादीनां बिम्बवृत्तित्वस्य प्रत्यङ्मुखत्वादीनां प्रतिबिम्बवृत्तित्वस्यच सत्त्वेन कथं तयो स्तद्विरुद्ध तदवृत्तित्वाभाव स्स्यादिति चेन्न; - वस्तुत स्तद्वृत्तित्वस्य सत्त्वेपि प्रातिभासिकस्य तदवृत्तित्वस्या विरोधात् । तद्व त्सर्वज्ञत्वाकिंचिज्ज्ञत्वयो र्व्यवस्था स्यादेव ।

ननु तद्वदत्रापि प्रातिभासिकी व्यवस्था स्यादिति चेन्न; - भेदस्य स्वसमानसत्ताक व्यवस्थाहेतुत्वात् । तत्रच भेदस्य प्रातिभासिकत्वाद्व्यवस्थापि तथा, अत्रतु भेदो व्यावहारिकइति व्यावहारिकी व्यवस्था सिद्ध्यतीति चेन्न; - जीवब्रह्मणो वस्तुतो भेदेन किंचिज्ज्ञत्वसर्वज्ञत्वयो रुभयोरपि बिम्बप्रतिबिम्बवृत्तित्वस्य व्यावहारिकस्य सत्त्वेन तद्विरुद्धस्य तद्वृत्तित्वाभावस्य व्यावहारिकस्या सम्भवात ।

ननु भेदस्य व्यावहारिकतया तत्प्रयोज्यस्य व्यवस्थैकदेशस्य सार्वज्ञ्यनिष्ठजीवाश्रयत्वाभावस्य किंचिज्ज्ञत्वनिष्ठ ब्रह्माश्रयत्वाभावस्य च स्वप्रयोजकभेदसमानसत्ताकतया व्यावहारिकत्वं भवतु, सार्वज्ञ्यस्यजीवनिष्ठत्वं किंचिज्ज्ञत्वस्यब्रह्मनिष्ठत्वंच प्रातिभासिकमेवास्त्विति चेन्न; सार्वज्ञ्यस्य जीवाभिन्न ब्रह्मवृत्तित्वे व्यावहारिके सति जीववृत्तित्वं नव्यावहारिक मित्यस्या सम्भवदुक्तिकत्वात् । नहि ब्रह्मवृत्तित्वं जीववृत्तित्वा द्भिद्यते, देवदत्तस्य यज्ञदत्तपितृत्वे सति देवदत्तसंयोगस्य यज्ञदत्तपितृसंयोगा द्भेदाभावात । परन्तु ब्रह्माश्रयत्वे भासमाने कदाचि त्तत्प्रतियोगिनि ब्रह्मत्वं विशेषणतया भासते, कदाचि ज्जीवत्वं, यथा - राजपुत्रः कदाचि द्राजत्वविशेषितपुत्रतया भाति, कदाचि त्सौन्दर्यविशेषितपुत्रतया, कदाचि द्राज्यविशेषित पुत्रतया, कदाचि त्सेनाविशेषितपुत्रतया । नच राजपुत्रो भिद्यते । नचै तद्घटकारणत्व मेतद्द्रव्यकारणत्वा द्भिद्यते ।

किञ्च-त्वद्रीत्या ऽवदातत्व श्यामत्वादिव द्बिम्बवृत्तित्व प्रतिबिम्बावृत्तित्वा द्युपपादाने प्यैकाधिकरण्यस्य विद्यमानत्वा त्कुतो व्यवस्था । नच भिन्नाधिकरणत्वादिकमेव व्यवस्थेति वाच्यं, अव्यवस्थाविरोधिन्या एव व्यवस्थात्वेन एतस्य परिभाषामात्रत्वात ।

एतेन किंचिज्ज्ञत्वादिबन्धाधिकरणतावच्छेदकं जीवत्वं, नतु ब्रह्मत्वं, सार्वज्ञ्याधिकरणतावच्छेदकन्तु ब्रह्मत्व मित्यपि पारिभाषिकव्यवस्था निरस्ता ।

एतेनैव भ्रमविशेषस्य प्रतिबिम्बनैयत्यं प्रतिबिम्बपक्षपातित्व मित्यपि निरस्तम्, व्यवस्थाया दुर्घटत्वात्।

एतेनैव प्रतिबिम्बएव स्वनिष्ठधर्मासंजकत्वं प्रतिबिम्बपक्षपातित्व मित्यपि निरस्तम्, व्यवस्थाया दुर्घटत्वादेव।

किंच किमिदं स्वधर्मासंजकत्वं? किं स्वनिष्ठभेदस्या न्यत्र संक्रामयितृत्वं, उत स्वनिष्ठभेद सजातीयभेदाध्यासहेतुत्वं, आहोस्वित स्वनिष्ठभेदज्ञानसहकारेण तादृशभेदाध्यासहेतुत्वं? नाद्यः, असम्भवात्। नाद्वितीयः, बिम्बेपि स्वगतप्रतिबिम्बभेद सजातीयभेदाध्यास हेतुत्वात। नतृतीयः, अद्ध्यासे पूर्वसंस्कारस्यैव हेतुत्वेन दर्पणनिष्ठ बिम्बभेदज्ञानस्या हेतुत्वात।

किंच - प्रतिबिम्बना त्मा नदर्पणे बिम्बभेदग्रहनियमो ऽसिद्ध एव, पृष्ठभागावस्थितपदार्थानां प्रागगृहीतानां प्रतिबिम्बस्यैव प्रथमं ग्रहणात्। स्तनबिम्बप्रतियोगिकभेदस्यापि युगपदेवा भयत्र ग्रहणाच्च। प्रत्युत दर्पणे गृहीतएव प्रतिबिम्बभेद स्तदुत्तरकालम् बिम्बे गृह्यते।

किंच -यत्र प्रतियोगिज्ञानाभावेन दर्पण ग्रीवास्थमुखभेदज्ञानाभावेपि प्रतिबिम्बे दृष्टे तदानीं प्रतिबिम्बभेदो गृह्यते, तत्र व्यभिचारः, यत्र-च बिम्बोपाधिप्रतिबिम्बानां युगपदेव ग्रहणं, तत्र तेषां परस्परभेदस्यापि युगपदेव तत्र ग्रहणा द्व्यभिचारः।

किंच - नित्यमुक्तवाक्यार्थश्च न सर्वज्ञत्वाद्वितीयत्वादिविशिष्टः, किन्तु स्वरूपमात्रं, नच - तद्भेदो जीवे प्रतीयते।

किंच - अविद्या यथा जीवे स्वगतबिम्बभेद सजातीय भेदाद्ध्यास प्रयोजिका, तथा बिम्बेपि स्वगतजीवभेद सजातीय भेदाध्यास प्रयोजिकैव, अद्ध्यासमात्रस्या विद्याधीनत्वात्। नहि दर्पणे प्राग्ग्रीवास्थमुखभेदे दृष्टे पश्चाद्भाविप्रतिबिम्बे तद्भेदाद्ध्यासप दिह सम्भवति, जीवब्रह्मणोः परस्परभेदस्या नादित्वात्।

अस्मन्मतेतु यद्यपि सार्वज्ञ्य मात्मनां स्वरूपप्रयुक्तं, त थापि त दुर्पाधिवशा न्निरुद्ध मिदानीं नविद्यत इति बन्धमोक्षयोः काल-भेदा न्न विरोधः ।

अस्माकम प्यविद्यातन्निवृत्त्योः पौर्वापर्या न्नविरोध इतिचेत् ; तर्हि नित्यमुक्तत्व [ व्याघातः ] विरोधः । अविद्यायाः स्वकालेपि वस्तुतो निवृत्तत्वा न्नित्यमुक्तत्व मुपपद्यत इतिचेत् ; कथं तर्हि पौर्वापर्य । प्रतिभासभेदाधीन मितिचेन्न; प्रतिभासयोरपि नित्यानिवृत्त

---

ननु सिद्धान्ते सार्वज्ञ्यस्य स्वाभाविकत्व मिष्यते, तस्य नित्यमुक्तत्वव्याप्तत्वञ्च, अतः कथं त्वन्मतेपि नित्यमुक्तस्य बन्ध इत्याशंक्याह ( अस्मन्मतेत्विति ) ननु नवयं जीवब्रह्मविभागेन बन्धमोक्षौ व्यवस्थापयामः - किं त्व विद्यया, ब्रह्मणएव जीवत्वं ,

॥ * ॥ राजसूनोस्स्मृति प्राप्तौ व्याधभावोनिवर्त्तते ।
यथेवमात्मनोज्ञस्य तत्वमस्यादिवाक्यतः ॥ * ॥

इति ब्रह्मैव स्वाविद्यया संसरति , स्वविद्यया मुच्यत इतिकेनचिदंगीकारात् , तन्मतानुसारेण शङ्कते ( अस्माकमपीति ) नित्य मुक्तत्वं च नेष्यत इतिभावः । ( तर्हीति ) ब्रह्मणो नित्यमुक्तत्व प्रतिपादकश्रुतिविरोध इत्यर्थः । ननु-न वयं कालभेदेन बन्धमोक्षयो र्व्यवस्थां ब्रूमः, नाप्यौपाधिकभेदेन, किन्तु तयो स्सत्यत्वमिथ्यात्वाभ्यामिति शङ्कते ( अविद्यायाइति ) एव न्तर्हि सर्वाभ्युपगतं बन्धमोक्षयोः पौर्वापर्य भज्येतेत्याह ( कथं तर्हीति ) स्वरूपतः पौर्वापर्याभावे प्यौपाधिकं पौर्वापर्य स्यादिति शङ्कते ( प्रतिभासेति ) प्रतिभासयोरपि किंसत्यत्व मुतमिथ्यात्वमिति विकल्प मभिप्रेत्य – मिथ्यात्वपक्षस्ताव न्न सम्भवति, अपरत्वंहि नध्वंसकालीनोत्पत्तिकत्वं , संसारप्रतिभासस्य मोक्षप्रतिभासस्य च निवृत्ति र्ब्रह्मस्वरूपमेव, मोक्षकालीननिवृत्त्यंगीकारेपसिद्धान्तात् , अत उभयनिवृत्तिसमानकालीनत्व मुभयोरिति कथं पौर्वापर्यव्यवस्थेति तं पक्षं दूषयति ( नेति ) तदुत्तरत्वं याव त्तदधि

स्वरूपतया तत्रापि पौर्वापर्यासिद्धेः । एवंच तत्तत्प्रतिभासपारम्पर्यगवेषणेपि न निस्तारः। नच सत्यस्ते प्रतिभासभेदः, येन निरुपाधिकं तत्र पौर्वापर्यं स्यात् । निवृत्त्यनुपपत्तिहेतवश्चात्र संचारणीयाः।

सर्वज्ञत्वाच। नहि सर्वं जानाति यत्किंचि त्सर्वमेववा नजानातीति सम्भवति । माभू त्सार्वज्ञ्यं ब्रह्मण इतिचेत्ः नतावदयं शापः। ना प्यनभ्युपगम मात्रप्रकाशनं, अकिंचित्करत्वात् । नापि प्रमाणानुधावनं, वैपरीत्यात् । श्रूयतेहि - "य स्सर्वज्ञ स्सर्व वित्" इत्यादि। स्वयंच ब्रवीति "वेदाहं समतीतानि वर्तमानानि चार्जुन। भविष्याणिच भूतानि मान्तु वेद नकश्चन" इति । स्मरन्तिच "सर्वज्ञ स्सर्ववि त्सर्वशक्ति र्ज्ञानबलर्धिमान्" इत्यादि।

---

करण कालवृत्ति प्रागभावप्रतियोगित्वं, पूर्वत्वञ्च तत्प्रागभावानधिकरण कालवृत्तित्वम्, तथाच नित्यनिवृत्तत्वेपीदं पौर्वापर्यं सम्भवत्येवेतिचेत; मोक्षप्रतिभासस्य मोक्षकालीनस्य स्वरूपातिरिक्तस्य सम्भवात्, स्वरूपस्यचा नादेः प्रागभावा प्रतियोगित्वात्, तन्ना प्यौपाधिकमेव पौर्वापर्य मिति न वक्तुं शक्यं, अनवस्थानादित्याह (एवंचेति) प्रथमकल्पे यद्यपि निरुपाधिकं पौर्वापर्यं युज्यते, प्रतिभासयो स्सत्ययो स्तद्विरोधिभूताया निवृत्तेरपि सत्याया वाच्यत्वात्; नतु त्वया स वक्तुं शक्य इत्यत्राह (नच सत्यइति) ननु बन्धस्य-मिथ्यात्वा त्तद्भावरूपनिवृत्ते र्नित्यत्वे प्यखण्डापरोक्षसाध्य बन्धनिवृत्तिमादाय बन्धमोक्षयोः पौर्वापर्यं युज्यत इत्याशंक्याह (निवृत्तीति)

यत्किंचित्तु - यादृशः कल्पितो प्यनर्थरूपो ज्ञानेनोच्छेतव्यो बन्ध स्तदभावस्यैव तच्छत्यर्थत्वेन कल्पितेनापि संसारेण स्पृष्टचैतन्याभावे नित्यमुक्तत्वश्रुते र्निर्विषयत्वापातः, तात्त्विकबन्धाभावस्य जीवब्रह्मसाधारणत्वात, इत्याहुः।

अत्र केनचि न्मन्दजीवितेन यज्जल्पितं, तत्स्वदूष्याभिमतं नमात्रमपि स्पृशतीति नात्र तन्निरासे यतामहे।

न नित्यं तस्य सार्वज्ञ्य मितिचेत्; अस्यकोऽर्थः? किं कदाचिदपि सार्वज्ञ्यम् नास्तीति, उत सद प्यनित्यमिति । नाद्य', श्रुतिविरोधात ; गुणनिषेधश्रुतीनां श्रुतिविहितगुणव्यतिरिक्तविषयत्वस्थापनात् । नाद्वितीयः, स्वाभाविकसार्वज्ञ्यश्रुतिविरोधादेव । नहि स्वाभाविकसार्वज्ञ्यस्य विनाश स्सम्भवति । नापिचोत्पत्तिः, प्रागभावाभावात् । विस्तर स्त्वन्यत्र ।

अतो नित्यसर्वज्ञत्वा द्ब्रह्मणो नकदाचिदपि तस्या ज्ञानाश्रयत्व सम्भवः ।

---

**किं नित्यत्वं मभावविशेषण मुताशतियोगिविशेषण मित्याभिप्रायेण पृच्छति (अस्यकोऽर्थइति ) ननु सार्वज्ञ्ये प्रमाणस्यानुपदमवो क्तत्वा त्कथं प्रथमकल्पोत्थितिरिति चेन्न; - गुणनिषेधश्रुतिबला त्सार्वज्ञ्यश्रुते रन्य-परत्वमेवेति पूर्वपक्ष्यभिप्रायोन्नयनेन प्रथमकल्पोत्थानसम्भवात । अत एवाह ( गुणनिषेधश्रुतीनामिति ) ( स्वाभाविकेति ) " स्वाभाविकी ज्ञानबलक्रियाच " इत्यादि प्रमाणानि विवक्षितानि । ( नहीति ) स्वाभाविकस्य यावत्स्वरूपभावित्वात स्वरूपस्यचो त्पत्ति विनाशयो रभावादिति भावः । उत्पत्त्यभावे हेत्वन्तरमाह ( प्रागभावेति ) सार्वज्ञ्यश्रुते स्सर्वविषयक ज्ञानविषयत्वा [परित्यागा] ङ्गीकारेपि ब्रह्मणि भासमानत्वा न्न तस्य तदज्ञानाश्रयत्वं सम्भवतीत्यपि विवक्षितम् ।**

अत्र · नाज्ञानाश्रयत्वं सार्वज्ञ्यविरुद्धम् , सर्वाधारे ब्रह्मणि वियदादि प्रपंचव त्तस्यापि स्वीकार्यत्वात, नच तावता जीवव [illegible]स्याज्ञत्वापत्तिः , अज्ञत्वं ह्यज्ञानावृतस्वरूपत्वं, अज्ञानंच जीवं प्रत्येव ब्रह्मस्वरूपादिक मावृणोति, ब्रह्म तु प्रति न किञ्चि दावृणोतीति ब्रह्मणोऽज्ञत्वाभ वोपपत्तेः , अन्यथा त्वम्मतेपि ब्रह्मण स्सार्वज्ञ्य सर्वाधारत्वन्यतरत्यागप्रसंगादिति नवीनः । तन्न, जीवब्रह्मणो रावरणानावरणव्यवस्थायाः पूर्वोक्तरीत्या निरस्तत्वात् ।

किंच - सर्वाधारे ब्रह्मणि दुःखाधारत्वसत्वेपि येन सम्बन्धविशेषेण दुःखाधारता जीवे तदतिरिक्तेनैव सम्बन्धेन ब्रह्मणो दुःखाधारत्वा द्यथाजीवो दुःखी नतु ब्रह्मेतिव्यवस्था, नतु दुःखस्य कार्यान्तरहेतुत्वा हेतुत्वाभ्यां, एवमज्ञानमपि येन सम्बन्धेन जीवे वर्तते तेन सम्बन्धेन ब्रह्मणि नत्येव तयो स्सर्वज्ञत्वा ज्ञत्वव्यवस्था वक्तव्या, नत्वावृतस्व रूपत्व तदभावाभ्यां; दुःखित्वादुःखित्वादि व्यवस्थापकतया क्लृप्त सम्बन्धभेदेनैव तद्व्यवस्थोपपत्तौ तदन्यस्यापि व्यवस्थापकत्वकल्पना योगात्। नच सम्बन्धभेदं विनाऽऽवरणानावरणव्यवस्थाच युज्यते। नच प्रतिबिम्ब पक्षपातित्वा दीश्वरे बन्धककर्माभावाच्च तद्व्यवस्थेति वाच्यम्, अज्ञानवदेव वियदादिसाधारणसम्बन्धेन सर्वाधारे ब्रह्मणि कर्मप्रतिबिम्बत्वादेरपि वक्तव्यत्वेन व्यवस्थाया अयोगात्। नियामकत्वाभिमत कर्मप्रतिबिम्बत्वयोरपि व्यवस्थाहेतुत्वेन सम्बन्धभेदस्यैवा नुसरणीयत्वात्।

किंच -- अहमज्ञो देवदत्तस्तु जानातीत्यत्र व्यवस्थितव्यवहारे यएवाज्ञानसम्बन्धो विषयः - सएव "ज्ञाज्ञौ द्वावजा वीशनीशा" वित्यादिव्यवहारेपि विषयो वाच्यः। नचाहमज्ञ इत्यत्रा ज्ञानजननीययोग्यता, प्रतियोग्यसत्वाप्रकाशाव्यवहार कर्तृत्वं, अन्यद्वा एवं जातीयकं विषयः, अनुभवविरोधात।

किंचा हमज्ञइत्यत्र ज्ञानाश्रयत्वप्रतीता वज्ञानस्य चैतन्यमात्रा श्रयत्वमेव न सिद्ध्येत्, वेदान्तप्रतिपाद्यं मा मह नजानामीति अहमर्थाश्रयत्वं प्रतीयते, तत्रच द्विरूपे कल्पितानात्मरूपान्तःकरणा श्रय त्वासम्भवात् प्रमाणाभूता इयं प्रतीति श्चैतन्याश्रयत्वं विषयीकरोतीति हि प्रमाणं तत्रोपन्यस्यम्। साचे दावरण निरूपकत्वमात्रं विषयी कुर्या त्कथं तत्र प्रमाणं स्यात्।

ननु स्वं प्रत्यावारकाज्ञानाश्रयत्व मह मज्ञ इत्यत्र भासत इति तस्य प्रामाण्य मुपपद्यत इति चेन्न;-- चिन्मात्राश्रयत्वस्य विषयत्व व च्चिन्मात्रं प्र त्यावरणत्वस्यैव विषयत्वप्रसंगात्। ततश्च ब्रह्मप्रत्यप्याव·

एतेन समस्तदोपनिषेधक वाक्यशतबाधोपि स्थापितः ।

ननु - कएव माह- 'अज्ञानाश्रयभूतं ब्रह्म' इति, यम्प्रति तन्नि-

---

रणं प्रसज्येत । अज्ञानाश्रयचिन्मात्रस्यैव जीवब्रह्मरूपेण द्विधा वि-भागे अज्ञानस्य उभयाहितत्ववत् तत्सामान्यंप्र त्यावरणस्य जीवब्रह्मणी उभे प्रत्य प्यावरणत्वात । उक्तंहि त्वयैव अज्ञानस्य ज्ञातृत्वभ्रान्त्यादि सामानाधिकरण्यमुपपादयता - " अज्ञानाश्रयचिन्मात्रस्यैव जीवरूपेण विभक्तत्वा दज्ञानस्य जीवे भ्रान्त्यादि सामानाधिकरण्यमस्ती " ति ॥

ननु - तर्हि त्वदुक्तरीत्या सम्बन्धभेदेनैव जीवब्रह्मवृत्तित्वमङ्गी-कुर्मः, तथापि ब्रह्माश्रयत्वासिद्धे रक्षतएव नः पक्ष इतिचेन्न;-त्वया चै-तन्य मात्राश्रयत्वांगीकारा त्तस्यैव जीवब्रह्मरूपेण विभक्ततया जीव वृत्तित्वांगीकारा त्तस्यैव ब्रह्मण्यपि सत्वा त्तस्याज्ञत्वापत्त्या सर्वज्ञत्व-विरोधात् ।

ननु - ब्रह्मणो जीवाभिन्नत्वात " ज्ञाज्ञा " वित्यादिश्रुतेश्च बन्ध प्रयोजक सम्बन्धविशेषेण जीववृत्तित्वं सम्बन्धान्तरेण चित्सामान्यवृ त्ते रज्ञानस्य ब्रह्मवृत्तित्वं च कल्प्यत इतिचेत ? त अहमज्ञ इति प्रती-ते स्तादृशसम्बन्धविशेषेण प्रतिबिम्बभूत जीवाश्रयत्व सम्भवे चि-न्मात्राश्रयत्वस्या प्रामाणिकत्वप्रसंगात् ।

किंचैवं साक्षादेव ज्ञानस्य जीवगतत्वे भ्रान्त्यादिसामानाधिकर-ण्यात् ज्ञानाश्रयचिन्मात्राभेदा ज्जीवस्य तद्गतभ्रान्त्यादिसामानाधिकर ण्य मित्येव तदुपपादन मनुपपन्नम् ।

( एतेनेति ) जीवं प्रतिब्रह्मस्वरूपावारकत्वेन दोषत्वं ब्र प्रतितु नकिंचिदावृणोतीति ब्रह्माश्रयम प्यज्ञानं न तत्प्रति दोष इति र्वीनो-क्त मनन्तरोक्तेनैव निरस्तम् । ननुब्रह्म ना ज्ञानाश्रयं, किन्तु चैत न्यमात्रं, अतो ब्रह्मणो निरवद्यत्व श्रुतिविरोध इति शङ्कते ( नाबेति )

षेधसम्भवः, इति चेत् ; हन्त किमस्मदुक्तयुक्त्या प्रयुक्तो भवान् ब्रह्मा-ज्ञानं निषेधति? उत स्वमनीषिकासिद्ध वृषळोद्वाहमन्त्रन्यायेन? । पूर्वत्र त्यजाम स्संरम्भम् । उत्तरत्रापि न ताव न्निरुपाधिकयो रेकत्र सम्भवः, उपाधिभेदापादितयो रपि न त्वदुक्तयुक्त्या सिद्धिः, नहि देशकालादिभेदेन तयो र्निर्वाहं पश्यसि, तथा दर्शनेपि प्रागुक्तयुक्तयः प्रतिस्पर्धिन्यः । 'प्रातिभासिको विधिः, पारमार्थिको निषेध' इत्यपि न [ पालयितुं ] पलायितुं शक्यं, निषेधस्या प्यन्तत स्त्वदुक्तरीत्या प्रातिभासिकत्वात् ।

---

( प्रयुक्तइति ) प्रेरितइत्यर्थः । ( स्वमनीषिकेति ) वृषळानामुद्वाह-मन्त्रस्यन्यायः , वृषळोद्वाह मन्त्रन्यायः । संबन्धसामान्य षष्ठ्या मन्त्रसादृश्यं लभ्यते । तत्सादृश्यं च स्वव्याहतिः । किं ब्रह्मव्य-तिरिक्तस्यैवा ज्ञानाश्रयत्वा द्ब्रह्म नाज्ञानाश्रय इत्युच्यते ? उताज्ञाना-श्रयभूतं ब्रह्मैव नाज्ञानाश्रय इत्युच्यत इत्यर्थः । ( निरुपाधिकयोरिति ) उपाध्द्यनवच्छिन्नवृत्त्यो रित्यर्थः । ( उपाधीति ) परस्परविरुद्धयोरुपाधि भेदा देकाधिकरण वृत्तित्वस्या न्यत्र सम्भवेपि नाज्ञानतदभावयोः प्रति-बिम्बोपाधिना त्वदुक्तरीत्या व्यवस्थासम्भव इत्यर्थः । असम्भवश्च प्रा-गेवोपपादितः । तर्हि संयोगतदभाव घटतदभावादीना मुपाधिभेदा-द्व्यवस्था नस्या दित्यत्राह ( नहीति ) ( तथादर्शनेपीति ) कालभेदेन व्यवस्थांगीकारेपी त्यर्थः । " प्रागुक्त युक्तयः " – नित्यमु-क्तत्वविरोधादयः । देशभेदेनतु व्यवस्था नशंकार्हा. देशभेदस्यैवा सिद्धेरितिभावः । (प्रातिभासिकोविधिरिति )अज्ञानसम्बन्धो मिथ्येत्यर्थः । (पारमार्थिकइति) अज्ञानाभावः पारमार्थिकइत्यर्थः । (त्वदुक्तरीत्येति) व-क्ष्यमाणयुक्त्या । यद्वा–प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपत्वदुक्तलक्षण योगादित्यर्थः ।

अविद्यास्वरूप तदाश्रयत्व तद्विषयत्वादे र्दुर्निरूपतया अविद्याया मि-थ्यात्वात्, तत्समानसत्ताकस्य तदभावस्या विद्याश्रये ब्रह्म ण्यसम्भ-

नचा विद्यास्वरूप तदाश्रयत्वादे र्दुनिरूपतया तन्निषेधः पारमार्थिक इति युक्तं, तन्निषेधस्य दुर्निरूपतया तत्स्वरूपादिपारमार्थिकत्व प्रसंगेन विपरिवर्तस्य सुशकत्वा [च्च] त् । भवतूभयमपि दुर्निरूपत्वा दपारमार्थिकं, का नः क्षति रिति चेन्न;- " परस्परविरोधेहि न प्रकारान्तरस्थितिः " इति न्यायस्य सुस्थितत्वात् । ननु गगनकुसुम व देतत्स्यात्, तद्धि नसुरभि ना प्यसुरभीति चेन्न;—तत्र स्वरूपस्यैवा भावेन विधिनिषेधयो रनवकाशात्, अत्रपुन स्स्वरूपसद्भावात् । अत्रापि तदभावे माध्यमिकविजय [प्रसंगात्] स्स्यात् । ततश्चा न्यतर परिशेषे प्रामाणिकेना त्मना निषेधस्यैव स्थितौ विधे रसम्भवः ।

---

वात्, तन्निषेधः पारमार्थिकएवेति शंका मनूद्य दूषयति ( नचेति ) ( दुर्निरूपतयेति ) अज्ञानस्येवा भावस्या प्याश्रयप्रतियोग्यादि सापेक्षत्वा त्तस्यच दुर्निरूपत्वा दित्यर्थः । अभावस्य दुर्निरूपत्वेपि नाज्ञानस्य पारमार्थ्यं, तदपेक्षिताश्रयादे र्मिथ्यात्वादिति नच वाच्यम्, अभावस्य दुर्निरूपत्वादेवा ज्ञानस्य तदपेक्षिताश्रयादेश्च पारमार्थिकत्वापादना दित्यभिप्रायेणाह ( विपरिवर्तस्य सुशकत्वादिति ) ( सुस्थितत्वादिति ) समानसत्ताकयो र्विरोधस्य त्वयाप्यंगीकारादिति भावः । नच प्रातिभासिकव्यावहारिकत्वेन सत्ताभेदः, तत्रापि नियामकाभावेन विपरिवर्तस्य दुर्निवारत्वात । ( स्वरूपसद्भावादिति ) ब्रह्मस्वरूपसद्भावादित्यर्थः । ( माध्यमिकेति ) निरधिष्ठानभ्रमसिद्धेरिति भावः । एवं विपरिवर्तप्रसंगेन सत्यत्वमिथ्यात्वाभ्यां अविरोधो नसम्भवतीति स्थितम्, इदानीं " परस्परविरोधेही ' त्यादिन्यायमुपजीव्य युक्त्यन्तर माह ( ततश्चेति ) " परस्परवि[illegible] इत्यादिन्यायेना न्यतरपरिशेष आवश्यके सति निरवद्यत्वा दृश्रुतिबला दज्ञानाभावांगीकारे तद्विरुद्ध मज्ञानं ब्रह्मणि न सम्भवती त्यर्थः । तात्त्विकनिषेधप्रमाणविरुद्धं व्यावहारिकं सत्त्व मज्ञानस्य ब्रह्मणि

प्रमाणा [ण] विरुद्ध स्तु तत्सम्भव स्त्वादृशां भ्रमेणैव स्यात् । तथाचा दित्येऽन्धतमसमपि कश्चि दल्पजीवितः कल्पयतीति न प्रामाणिकतत्व स्थिति विरोधः ।

एवंच क्षणभंगादिवादाना मपि यथेष्टं परिग्रहः कार्यः, अर्थ स्थिति मनादृत्या कास्मिकपरिग्रह मात्रेण वेदान्तार्थस्थापनस्य तत्रचात्रच विशेषाभावात् । युक्तीनांच यथाभिमानं त्रिचतुरकक्ष्या स्थायित्वस्य समानत्वात् । अन्यथा कथ मेकैकशो ऽनन्तस्या त्मवर्गस्य तत्तत्सैद्धान्तिक तर्केन्द्रजालव्यामोहवंशवदत्वमिति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां ब्रह्माश्रयाज्ञाननिरासवाद एकोनविंशः ।

---

स्यादित्याशंक्याह ( प्रमाणविरुद्धस्त्विति ) तत्र त्वादृशां तत्सत्वभ्रम मात्रमेव, नतु सत्व मस्ति, नहि त्वद्भ्रममात्रा त्तत्रा र्थसत्वं स्या दित्यर्थः । एवं भ्रमस्थले ऽर्थस्या भावादेवा दित्ये ऽन्धतमसकल्पनेपि न तत्सिद्धिः, किन्तु तदभावस्यैव सिद्धिः, अन्यथा तत्रा प्यन्धतमसं सिद्ध्येदित्यभिप्रायेणाह ( तथाचेति ) युक्त्यन्तरमाह ( एवञ्चेति ) भ्रम मात्रा दर्थसत्त्वे क्षणभंगादीनामपि कस्यचि द्भ्रमे विषयतया सत्त्वेसति तेषामपि परिग्रहः कार्य इत्यर्थः । नित्यत्वश्रुतिविरोधा न्न तत्परिग्रह-इत्याशंक्य, यथा आत्मनो ज्ञानाश्रयत्वश्रुते भ्रान्तिसिद्धार्थ परत्वेन प्रामाण्यं वदसि, तथा क्षणभंगवादेपि स्थिरत्वश्रुते स्तद्वादिभ्रमसिद्धस्थैर्य विषयत्वेन वेदप्रामाण्यसमर्थनसम्भवादित्याह ( अर्थस्थितिमिति ) ननु ब्रह्मणोज्ञानाश्रयत्वसाधकयुक्तीनां त्रिचतुरकक्ष्यास्थायित्वा त्तस्य व्यावहारिकसत्त्वमुच्यते, क्षणभंगादीनान्तु तदभावा त्तदपि सत्त्वं नेष्यतइत्याशङ्क्याह ( युक्तीनामिति ) क्षणभंगादियुक्तीनां त्रिचतुरकक्ष्या स्थायित्वाभावे बाधकमाह ( अन्यथेति )

यद प्यनुमानमुच्यते - अज्ञानं स्वविषयाश्रयं , कारणानाश्रयप्रत्यक्षत्वेस त्यावारकत्वात ; तमोनीहारवदिति । तत्र किं कारणविघटकसाधारणं ज्ञानप्रतिबन्धकत्व मावारकत्वं विवक्षितम्? उतसाक्षात्कारप्रतिबन्धकत्वम् ? व्यवहारप्रतिबन्धकत्वंवा? अस्तीत्यादिव्यवहारयोग्यताऽभावापादकत्वंवा ? नास्तीत्यादि व्यवहारयोग्यतापादकत्वंवा ? । नाद्यः , कुड्यादौ व्यभिचारात् । नद्वितीयः, असिद्धेः, अज्ञानस्य ब्रह्मस्वरूपात्मकप्रकाशे तद्विषयवृत्ता वन्यविषयवृत्तौचा प्रतिबन्धकत्वात । किञ्च नीहारस्य साक्षाज्ज्ञानप्रतिबन्धकत्वे सूर्यावारकनीहारे व्यभिचारः । कुड्यादिव दिन्द्रियसन्निकर्षविषयत्वेन तत्त्वे दृष्टान्ततया तदुपन्यासासांगत्यम् । किञ्च - नक्षत्रादि साक्षात्कार प्रतिबन्धक सूर्यालोकव्यभिचारः । किंच कारणानाश्रयेत्यत्र कारणत्वमेव विवक्षितम् ? उतकारणतावच्छेदक गोळकम् ? आद्ये काचादौ व्यभिचारः । द्वितीये मंदसाक्षात्कारप्रतिबन्धकतारशब्दे व्यभिचारः । नतृतीयः, दृष्टान्ते साध्यवैकल्यात; अन्धकारेसत्यपि सतिघटादिज्ञाने व्यवहारात् ; व्यवहारप्रतिबन्धकामपातादौ व्यभिचाराच्च । नचतुर्थः , अन्धकारे सत्यपि तत्प्रकारक प्राक्कालिकज्ञानेना न्धकारसमकालमेव व्यवहारस्य दर्शनात्, त्वगादिना घटादिज्ञाने परोक्षज्ञानेवा तद्दर्शनाच्च । नपंचमः, दृष्टान्तस्य साध्यवैकल्यादेव ॥

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरण परिचरणपरायणेन तत्प्रसादलब्ध महाचार्या परनामधेयेन रामानुज दासेन विरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां ब्रह्माश्रयाज्ञाननिरास

## एकोनविंश स्स्कन्धः ।



श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषणी ।

## अथ विंशो वादः ॥

श्रुतिगण शिरो निष्णातानां स्वसत्वमभीप्सतां
श्रवणमननध्यानै रध्यक्षतश्च चकास्तियत् ।
अमतमिति य द्भूम्ना मन्तव्यता मवगाहते
भवभयतमः प्रत्यासेधं भजेमहि तन्महः ॥ * ॥

---

प्रतिष्ठा साक्षा द्यो जगति विदित स्सर्ववचसां
समस्तान्तर्यामी गुणविभवसंख्योज्झिततया ।
अवेद्यः कार्त्स्न्येन श्रुतिभि रुदित स्तत्र मनसः
प्रतिष्ठा स्मे दद्यु श्श्रुतिगणशिरो देशिकगिरः ॥

गुणै रगणितै र्भव न्स्वय मचिन्त्यवाचः पदम्
निदर्शन मवेद्यताश्रुतिपदस्य यो ब्रह्मणः ।
वधूलकुलभूषणे गुरुवरे परं तत्र मे
रमानिधिगुरौ मुदा विहरतां सदा मानसम् ॥

( श्रुतिगणेति ) शेषभूतस्वरूपस्य ना किंचि त्कुर्वत श्शेषत्वमि-ति न्यायसिद्धं य त्कैंकर्यरूपं सत्त्वम् । यद्वा – स्वाभाविकरूपं, गु-णाष्टकाविर्भावः । तस्य संकोचोहि कर्मनिबन्धनः । य..। – सत्त्वं-ब्रह्मज्ञानम् । " अस्ति ब्रह्मेतिचेद्वेद " इत्याद्यनुरोधात् । 'अम-त' मित्यादिश्रुते रवेद्यत्वप्रतिपादकत्वेन पराभ्युपगताया स्तात्पर्य माह ( अमतमिति ) एषाश्रुति रित्यर्थः । 'यद्भूमामन्तव्यता' मिति

यदाहुः— अनुभूति स्स्वय म्प्रकाशा, अनुभूतित्वात् , अनुभूते रनुभाव्यत्वे घटादिव दननुभूतित्व प्रसंग इति ।

तत्रताव दनुभूतिशब्दस्या र्थावगतिहेतुत्वे व्याघातः, अहेतुत्वेपि पुनर्व्याघात इ त्याबालगोपाल मुपलभ्यम् ।

स्वयं प्रकाशेत्यनेन -- किं स्वव्यवहारे स्वाश्रयस्य कदाचि त्स्वगोचरानुभूत्यन्तर नैरपेक्ष्यमात्रं साध्यते ? उत सर्वदा सर्वस्य स्वगोचरानुभूतिविरहः ? (1) नाद्यः, (२) सिद्धसाधनात् । वयमपि संविदो विषयप्रकाशनवेळायां स्वाश्रयंप्रति संविदन्तरकर्मतामन्तरेण प्रकाश मंगीकुर्मः । तदिदं सिद्धसाधनत्व मभिप्रेत्याह " यत्त्वनुभूते स्स्वयं प्रकाशत्व मुक्तं, त द्विषयप्रकाशनवेळायां ज्ञातुरात्मन स्तथैव " इति ।

---

पाठे - भूम्नः, अमन्तव्यतां - अपरिच्छेद्यता मित्यर्थः । ' भूम्ना मन्तव्यता ' मिति पाठेतु - यस्य - ब्रह्मणो भूम्ना, तस्या मन्तव्यता मवगाहत इत्यर्थः । ' भूम्नो मन्तव्यता ' मिति पाठ स्सुगमः । ( व्याघातइति ) अवेद्यत्वमेव स्वप्रकाशत्वमिति तै रभिधानादिति भावः । अनुभूतिपदस्य बोधकत्वे सिसाधयिषितावेद्यत्वविपरीत वेद्यत्वसिद्ध्या प्रतिज्ञाया व्याघातः, अबोधकत्वेच तेन वाक्येना नुभूते रवेद्यत्वाबोधना दिष्टासिद्ध्या प्रतिज्ञाया व्याघात इत्यर्थः । ननु- " यत्त्वनुभूते " रित्यादिसिद्धसाधनपरं भाष्यं - तदनुपपन्नमिव, प्रकाशान्तरविषयत्व सामान्याभावस्या सिद्धेः ; विषयप्रकाशनवेळाया मपि यज्ञदत्तीयज्ञानस्य देवदत्तादिज्ञानान्तरविषयत्वात् , किंच [illegible]मान्याभावस्य सत्त्वे ऽसत्त्वेच " ज्ञातु रात्मान " इत्यनुपपन्नम् , नहि किंचि द्वस्तु कंचित्प्र त्यस्ति कंचित्प्रति नास्तीति सम्भवति; इत्याशंक्य - उक्तप्रकारेण विकल्प्य दूषणपरं ' यत्त्वि ' त्यादिभाष्य मित्याह (तदिदमिति) उपसंहारभाष्ये " वक्तुं नशक्यत " इत्युक्ते-

अत एव येनाम स्वयम्प्रकाशत्वनिवृत्ता वनवस्थादिप्रसंगा स्ते भवन्तु सम्यंचो नवेति तत्रा स्माभि रिहो दासि ।

नापि द्वितीयः ; प्रत्यक्षविरोधात् । तदाह — " परानुभवस्य हानोपादानादिलिंगका नुमानज्ञानविषयत्वात् , स्वानुभवस्याप्यतीत स्या ज्ञासिषमिति ज्ञानाविषयत्वदर्शनाच्च " इति स्ववचनविरोधमभिप्रेत्याह - " अतो नुभूतिश्चे त्स्वतस्सिद्धेति वक्तुं न शक्यते " इति ।

तथाहि -- ' अनुभूतिस्स्वयम्प्रकाशे ' त्यत्रा नुभूतिशब्दः कस्यचिद्बोधको नवा ? बोधकत्वेप्यनुभूतिरूप ब्रह्मस्वरूपबोधक स्तदन्यबोधको वा ? ब्रह्मस्वरूपबोधकत्वे सिद्धं तस्य तज्जन्यसंवित्कर्मतया प्रकाशमानत्वं । प्रकाशमानं स्वरूप मनेना नूद्यत इतिचेन्न ; - तथा प्यनुवादात्मक संवित्कर्मतया प्रकाशमानत्वस्य दुरपह्नवत्वात् । अन्यथा तदनुवादत्वस्या सिद्धिप्रसंगात् । ततश्च प्रतिज्ञापदयोः फलप्रतिपादनाभ्यां व्याघातः । तदन्यबोधकत्वेतु तस्यैव स्वयम्प्रकाशत्वं प्रतिज्ञातं स्यात् । ततश्च सिसाधयिषिता सिद्धि रर्थान्तराख्यं निग्रहस्थान मपसिद्धान्तश्च प्रसज्येरन् । कस्यचि द-

---

स्तात्पर्यमाह (स्ववचनेति) स्ववचन विरोधमेवो पपादयति (तथाही ति) (प्रकाशमानमिति) ' स्वत ' इतिशेषः । अनुवादपदजन्यज्ञानंच वृत्तिरूपमेवेति तद्विषयत्वेपि न स्वप्रकाशत्वभंगइतिभावः । (तथापीति) अनुवादपदजन्य ज्ञानपर्यंतस्य संवित्त्वस्य प्रत्यक्ष सिद्धत्वा न्न तस्य संविदन्यत्वमिति तद्विषयत्वे स्वप्रकाशत्वभंगएवेतिभावः । (अन्यथेति) अनुवादजन्य संविदभावे तस्यानुवादत्वमेव नस्यात ; प्रकाशितार्थ प्रकाशकस्यैवा नुवादत्वात् , ज्ञानजनकत्वस्यैवा भावे तदसंभवादिति भावः । (ततश्चेति) फलपद मवेद्यत्वरूपसाध्यपरं । प्रथमपदेनानुभूतिविष-

प्यन्बोधक इति पक्षे त्वन्वाचकप्रयोगा निरर्थकनिग्रहस्थानप्रसंगः ।
हेतोश्चा श्रया सिद्धिः ।

एवं हेतुसाध्यप्रतिपादकशब्दावपि संविदन्वित हेतुसाध्यप्रति पादकावि त्यभ्युपगन्तव्यम् । अन्यथा त्वप्रतिपादकत्वेवा ऽन न्वितप्रतिपादकत्वेवा निरर्थकापार्थक निग्रहस्थानापातात् । अत स्तदन्वित हेतुसाध्यप्रतिपादने तयोर प्यनुभूति विशेषकत्वा त्ताभ्या मपि वेद्यत्वं फलितं । अत स्साध्यहेतुवाचिपदयोः फलप्रतिपादनाभ्यां- विरोधः ।

अतो नुभूते रनुभाव्यत्वे घटादिव दननुभूतित्व प्रसंग इति तर्कोपि स्ववधाय कृत्योत्थापनं । प्रागुक्तप्रत्यक्षेण तत्रत्यानुभूति शब्देनैवचा नुभूते रनुभाव्यत्वस्थिता वननुभूतित्व प्रसंगात् ।

एतेना वाच्यत्वमपि ब्रह्मणो निरस्तं मन्तव्यम् ।

---

**यक ज्ञानजननात् द्वितीयपदेनच तन्निषेधा त्प्रतिज्ञास्थपदयोः परस्पर व्याघातइत्यर्थः । (हेतोरिति) प्रतिज्ञावाक्येन पक्षस्याप्रतीतेर्ज्ञा [रज्ञा] नासिद्धिरित्यर्थः । (अन्यथेति) " अनन्वित प्रतिपादकत्वेवे " त्यत्र· विशेषणाभावे विशेष्याभावेवेत्यर्थः ।**

**ननु-संविदन्वित हेतुसाध्यप्रतिपादनेपि विशिष्टस्यार्थांतरत्वेन संविदः प्रतिपादनाभावा न्न दोष इत्यत्राह (तयोरपीति) विशेषकं-तत्संसर्गप्रतीतिजनकं । विशिष्टं न पदार्थांतरं, तथात्वेच संविदो नस्व[illegible]काशत्व सिद्धिरितिभावः । (अतइति) 'स्व' पदं हेतुपरं । हेतुसहकारित्व[illegible]भिमत तर्केण हेतोरेवो त्सादः प्रसज्येतेत्यर्थः । प्रसंगादाह(एतेनेति) अ[illegible]स्थापकपदैः पक्षीभूतानुभूतिप्रतिपादनादित्यर्थः । नच लक्षण[illegible]पि तत्प्रतिपादन संभवा त्कथ मवाच्यत्वसिद्धि रिति वाच्यम् । अवेद्य[illegible]त्ववाचि-**

किञ्च ---- यदनुभाव्यं [तदननुभूति] न तदनुभूतिरूपं, यथा घट इति व्यतिरेकदृष्टान्तेपि त्वदुक्तन्यायेना नुभाव्यत्वप्रति क्षेपस्य शक्यत्वा त्साध्याव्यावृत्तो दृष्टान्त स्स्यात्। घट स्स्वयं प्रका शो घटत्वात्, घटस्यानुभाव्यत्वे पटव दघटत्व प्रसंग इति वियात जल्पस्य दुर्वारत्वात्। एवंच क्रमेण सर्वस्यापि स्वयम्प्रकाशत्वमाया तमिति तदनुविधायि सत्यत्वादिप्रसंगश्च दुस्तरः। घटो ऽनुभूयते पटोनुभूयत इत्यनुभाव्यतयैव घटादिः प्रकाशत इति चेत्? अनु- भूतिरपि परगता स्वगताचा तीता नागतकालयो रनुमान शब्दसं- स्कारादिजन्य संविदन्तरकर्मतयैव भातीति तुल्यम्। अनुभूते रनुभाव्यत्व प्रतीति र्भ्रान्तिरिति चेत्; किं घटादे रनुभा- व्यत्वप्रतीति र्भ्रान्ति र्न देवानां प्रियस्य?। ततश्च परमार्थानुभाव्यत्व प्रतिक्षेपे घटादेरपि परमार्थानुभाव्यत्वरहितत्वा द्व्यतिरेक दृष्टान्ता

---

स्वप्रकाशादि पदानां लक्षकत्वे ब्रह्मणो वेद्यत्व प्रसंगात्। (एवञ्च- क्रमेणेति) एव मावाभ्यां ब्रह्मघटयो स्स्वप्रकाशत्वसाधनव दन्येन केनचि त्कुडचं व्यतिरेकदृष्टान्तीकृत्य पटस्य स्वप्रकाशत्वसाधने तदन्येनापि केनचि त्कुसूलं व्यतिरेकदृष्टान्तीकृत्य कुडचस्यापि स्वप्रकाशत्वसाधने एवन्तत्तदन्यैः पुरुषै स्तत्तद्दृष्टान्तानां तथैव सा- धनं सुशकमित्यर्थः। अनेना भाससमानयोगक्षेमत्व कथनेना प्रयो जकत्वं फलितं। (देवानां प्रियस्येति) 'देवानांप्रियइत्यत्रच षष्ठ्याअ लुग्वक्तव्य' इत्यलुक्, मूर्खस्येत्यर्थः। देवशब्दो मूर्ख वाची, "मूर्खाणांच प्रियो मूर्खएव भवती" ति कैयटेभिधानात्। यद्वा-शास्त्रान- भिज्ञस्येत्यर्थः। "अथवा सुखसक्ततया शास्त्रानभियोगो नेन प्रतिपाद्यत" इति कैयट एवा भिधानात्। (ततश्चेति) घटादे रपि पारमार्थिकानुभा- व्यत्वस्याभावाद् ब्रह्मणि तदभावसाधने व्यतिरेक दृष्टांतासिद्धिरि- तिभावः। तत्परिहारार्थ मपारमार्थिका नुभाव्यत्व व्यतिरेक साधने दूष-

सिद्धिः । निषेद्धव्यस्य क्वचिद प्यप्रसिद्धे निषेधासिद्धिश्च । अपरमार्थानुभाव्यत्वप्रतिक्षेपे सिद्धसाधनत्वं स्वपक्षाविरोधश्च । अन्यथा तद्विषयशास्त्रानुमाना द्यनारम्भप्रसंगात् । ततएवा नुभाव्यत्वमात्र निषेधो प्यशक्यः ॥

किञ्च — यदि परगतानुभूति र्नानुभूयते, कथं शब्दार्थसम्बन्धग्रहः ? परबुद्धिविशेषानुमानेनैव हि सर्वत्र सिद्धे कार्ये वा व्युत्पत्तिः । एवंच व्युत्पत्ते रशक्यत्वा च्चेष्टाशब्दयोः प्रमाणकोटिनिक्षेपएव न स्यात्, परस्पराभिप्रायानभिज्ञतया वादिनो श्शुष्ककलहएव स्यात् । परस्पराशयपरिज्ञानादेवच सर्वो लौकिको व्यवहारः, त्वत्समानानां च पशुमृगादीनां भयाद्युत्पत्तिश्च । तदेत त्सर्व मभिप्रेत्योक्तं - " परानुभवानुमानानभ्युपगमेच शब्दार्थसंम्बन्धग्रहाभावेन समस्तशब्दव्यवहारोच्छेदप्रसंगः " इति । " आचार्यस्य ज्ञानवत्ता मनुमाय तदुपसत्त्यादिच क्रियते " इति भाष्यं " शिष्यस्यच व्यवहारविशेषादिभि

---

णमाह ( अपरमार्थेति ) अनुभूते रेकत्वेपि व्यावहारिकभेदांगीकारा त्तद्विषयत्वेना पारमार्थिका नुभाव्यत्वं घटादाविवा भ्युपगतमेवेति भावः । ( अन्यथेति ) नच वृत्त्यर्थतया शास्त्रस्सार्थक्यं, तथासति वृत्त्यवच्छिन्न चैतन्य विषयत्वेना वेद्यत्वापत्तेः । चैतन्याविषयत्वेच तदवच्छेदक वृत्त्यर्थ मपि शास्त्र मनर्थकंस्यादितिभावः । सामान्यतोऽनुभाव्यत्वमात्र निषेधसाध्यवदादौ व्यतिरेकव्याप्तिग्रह सम्भवेपि उक्तबाधा न्न तत्साधन सम्भवइत्याह(ततएवेति)(व्युत्पत्तेरिति) ज्ञानसम्बन्धस्येत्यर्थः । शब्दस्य ज्ञा[illegible]काशत्वत्वं ज्ञानेन सम्बन्धः, चेष्टायाश्च ज्ञानजन्यत्वं । चेष्टायाः प्रमाणको[illegible]भिमतपोज्ञानानुमापकत्वं । "भयाद्युत्पत्तिश्च" त्यनन्तरं नस्यातामितिशेष[illegible]पवाक्यस्थ क्रियाया बुद्धिस्थतया नस्याता मित्यध्याहार स्सुखेन[illegible]पि त[illegible]तीत्यभिप्रायेण तदप्रयोगः । वेद्येपि वेद्यत्वे वेद्यत्वा नंगीकारा[illegible]ववाचि-

रन्यथाज्ञानादिक मनुमाय तस्मै तत्वमुपादिश्यत " इत्यस्योपलक्षणम् । तदेव मनुभूते रन्यस्यवा वेद्यत्वं नास्तीति प्रतिज्ञानं स्वव्याघातकत्वा न्नसाधनांग मिति ॥

ननु - वेद्यत्वं वेद्यं नवा? आद्ये वेद्यत्वस्य वेद्यत्वान्तराश्रयत्वेनानवस्था । अन्यथा वेद्यत्वाभावे वेद्यमेव नस्यात् । उत्तरत्रावेद्यत्वं क्वचित्त्वयापि प्रतिज्ञातं स्यात् । इतिचेत्? हन्त किं [ तर्हि ] वेद्यत्वस्य वेद्यत्वांतरप्रतिक्षेपेणा वेद्यत्व समर्थनार्थ मयं प्रयासः? उतवेद्यत्वमेव किमपि नास्तीति तत्स्वरूपप्रतिक्षेपार्थं? अथान्यार्थं? अनर्थकोवेति । आद्ये त्वदुक्तानुमानस्य सपक्षेसति, तत्रावर्तमानत्वा त्सर्वानुमता साधारणाख्याभासत्वप्रसंगः । तत्र साध्यवृत्तिर्मिथ्याभूतेति परिहारइतिचेत्? तर्हि तस्य वेद्यत्वमेवाघातमिति निरर्थका स्सन्नाहाः । अनुभूतावपि च भवता मवेद्यत्वलक्षण साध्यवृत्ति र्मिथ्याभूतैव, निर्धर्मकत्वाभ्युपगमात्; तस्य स्वरूपत्वाभ्युपगमेच विवादएव नस्यात्; इत्यादिक मन्यत्र ग्राह्यम् । नापि द्वितीयः, वेद्यत्वस्वरूपापह्नवेन सर्वस्यापि वेद्यत्वप्रतिक्षेपे पुनरप्यसाधारणत्वप्रसंगात् । भ्रान्तिसिद्धं वेद्यत्वं तत्र विद्यतइतिचेत्? तद-

---

स्थेत्याशंक्य-तथासति वेद्यत्वं वेद्यमेव नस्यादित्याह( अन्यथेति ) (उत्तरत्रेति ) ततश्चा ननुभाव्यत्वस्य क्वचि त्त्वया प्यंगीकारात् ब्रह्मणो मया तत्साधने कः प्रद्वेषइत्यर्थः ।

( आद्यइति ) " सर्वानुमते " त्यनेन व्यतिरेक्यनुमान मस्माभि " मूल- तमिति सूच्यते । साधकतया तवाभिमत मस्माकं न सम्प्रति- ज्ञिस्य अस्मदुक्तबाधक न्तूभयसम्प्रतिपन्नमिति भावः । ( तर्हीति ) इति कै वेद्यत्वमिथ्यात्वे तस्य वेद्यत्वं सत्यमिति वेद्यत्वस्य वेद्यत्व द्यत्वस्य र्थंप्रयासो व्यर्थ इत्यर्थः । ( अनुभूताविति ) तथाच तादृशसाध्य तिभाव त्त्वेपि सत्वा दसाधारण्यं स्थिरमेवेति भावः । ( तस्येति )

नुभूतावपि समानमेव । तत्प्रतिक्षेपे ह्यपसिद्धांत प्रतीतिविरोधादयः । नतृतीयः, अन्यस्य कस्यचि दनुपलम्भात । चतुर्थस्तु परिशिष्टोऽस्मादिष्टइति ।

एतेन - वाच्यत्वं वाच्य मवाच्यं वेत्यादि प्रलापोपि प्रत्युक्तः ।

यच्चा प्रसिद्धविशेषणत्व परिहारार्थं - वेद्यत्वं किंचिन्निष्ठात्यन्ताभाव प्रतियोगि, धर्मत्वात्, घटत्वव दिति सामान्यत स्साध्यप्रसिद्धि साधकत्वेनोक्तमनुमानम् ; तदपि प्रत्युक्तं, किंचिच्छब्देन तत्रैव तस्य वेद्यत्वापादनात्, किंचित्त्व धर्मेणानैकान्त्य प्रसंगाच्च । नहि किंचि च्छब्दवाच्यस्य किंचित्वं नास्तीति वक्तुं शक्यं, वेद्यत्वादेरपि तथा पह्नवप्रसंगेनाश्रयासिद्ध्यादि प्रसंगात् । किंचित्त्वाभावेच न किंचिदेव भवेदिति तुच्छत्वमेव प्रसज्येत । तथाच तन्निष्ठात्यन्ताभाव प्रतियोगित्वसाधने भवतो न विवक्षितविशेषसिद्धिः ।

किंच – सामान्यतः कस्यचि द्वेद्यत्वं नास्ती त्येतावति साधितेपि किंचिच्छब्दार्थोनुभूतिरिति कुतो वसीयते? । पूर्वोक्ताविगीतहेतुवैभवादिति चेत् ? तर्हि - घट स्स्वयम्प्रकाशो घटत्वा दित्यादिहेतुनापि घटादिविशेषपरिग्रहो दुर्वारः । अनुभाव्यत्वप्रतीति सदस-

---

स्वरूपस्योभयसम्प्रतिपन्नत्वादिति भावः । ( तत्रैवेति ) तत्रैव प्रयोगइत्यर्थः । "तस्य"– किञ्चिच्छब्दार्थस्य । " वेद्यत्वादे"रित्यादिपदेन धर्मत्वं हेतुर्गृह्यते । " आश्रयासिद्ध्यादी " त्यादिपदेन स्वरूपासिद्धि गृह्यते । ( विवक्षितेति ) तुच्छव्यावृत्त किंचिन्निष्ठात्यन्ताभाव प्रतियोगित्वमेव साध्यतया विवक्षितमिति भावः । टि

किंच - किं प्रपंचमिथ्यात्वे सिद्ध एतदनुमानं ? उतासिद्धे ? । नाद्यः, सिद्धसाधनात् । द्वितीयेपि-किं वेद्यत्वं नाना ? उतैकं? । नाद्यः, सिद्धसाधनादेव । एकाधिकरणनिष्ठ यावद्विशेषाभावप्रतियोगित्व सि-

द्धये ऽ नुमानमितिचेत्; प्रत्येकं सर्वेषां भिन्नभिन्न किंचित्पदार्थनिष्ठा त्यन्ताभावप्रतियोगित्वसिद्ध्यापि साध्याभावाना मैकाधिकरण्य स्या सिद्धेः । नच वेद्यत्वत्वमेकाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वानतिरिक्तवृत्तीति साध्यते; प्रमेयत्वादौ व्यभिचारात् । प्रमेयत्वस्या ननुगतत्वे प्रमेयत्वत्वादौ व्यभिचारात् । प्रत्येकप्रसिद्धानां वेद्यत्वाभावानां समुदायस्य ब्रह्मणि साधनसम्भवेनो क्तानुमान वैयर्थ्या च्च । उक्तव्यभिचारादेव वेद्यत्वत्वस्याभावप्रतियोगितावच्छेदकत्व साधनेन सामान्याभाव साधनमपि निरस्तं । न द्वितीयः, प्रमेयत्वादौ व्यभिचारात् ॥

यदाह नवीनः - प्रमेयत्वादेरपि स्वस्मिन् सम्बन्धाभावेन स्व वृत्त्यत्यन्ताभाव प्रतियोगित्व मस्त्येव, प्रमेयत्वं [त्वे] प्रमेय [त्व] मिति धीस्तु प्रमेयत्वान्तर विषयेति । तन्न - तथासति वेद्यत्वस्यापि ना नात्वेन पूर्वोक्तसिद्धसाधनात् ॥

यदप्युक्तं प्रमेयत्व स्यैकत्वेपि भेदो भिन्नः, घटाभावे घटोनास्ती ति बुद्धिवत् प्रमेयत्वस्वरूपमेव प्रमेयत्वं प्रमेयमिति धीविषय इति । तन्न - स्वरूपस्यैवा भावव्यवहारालम्बनत्वव द्यावदभावकार्यकारि तया स्वस्मिन् घटाभावा भावात्मक घटविरोधित्वव त्प्रमेयत्व विशि ष्टव्यवहारालम्बनस्य स्वरूपस्य स्वस्मि स्तदभावविरोधित्वात् । अन्य- था "नेहनाने" ति ब्रह्मणि प्रपंच निषेधेपि ब्रह्मणएव प्रपंचाभाव तया ब्रह्मणि पारमार्थिक प्रपंचाविरोध प्रसङ्गात् । तथाच प्रमेयत्वे व्यभिचारएव ।

किंच - व्यधिकरण धर्मावच्छिन्नाभावस्य केवलान्वयिन स्त्व- यैव साधना त्तत्रापि व्यभिचारः । किंच अवेद्यत्वस्य ब्रह्मस्वरूपताभि- धाना त्तस्यचा वृत्तित्वा द्बाधः ।

द्भावाभ्यां वैषम्यन्तु परिहृतम् । तर्कानुग्रहसदसद्भावाभ्यां वैषम्यमिति चेत् ? कोसौ तर्कः ? अनुभूते रनुभाव्यत्वे घटादिव दननुभूतित्व प्रसङ्ग इत्युक्त रूप इतिचेन्न; - घटादावपि तथाविध तर्कस्यो दाहृतत्वात् । किंच - यदि घटादिव दनुभूते रनुभूतिलक्षण विरहस्स्यात्तदा ननुभूतित्वं युक्तं , नपुन रनुभाव्यत्वमात्रेण तत्सिद्धिः; तस्य तदप्रयोजकत्वात् । नचानुभाव्यत्वे नुभूतिलक्षणविरहस्स्यादिति वक्तुं शक्यं , अनुभवान्तरा नुभाव्येपि परानुभवादौ स्वसत्तयैव स्वविषय भासकत्व रूपस्य स्वसत्तयैव स्वाश्रयम्प्रति प्रकाशमानत्वरूपस्य वा कस्यचि दनुभूतिलक्षणस्य स्वानुभवसिद्धस्या नपगमात् । तद्वस्थानेचा नुभूतित्वस्या नपायादिति । तदिदमुच्यते - " नचान्यविषयत्वेऽननुभूतित्वं " इत्यादिना ।

किंच योय मनुभाव्यत्वे निष्टप्रसंग स्सोननुभाव्यत्वेपि समान इति प्रतितर्कप्रतिघातः । अनुभूते रननुभाव्यत्वे गगनकुसुमादिव दननुभूतित्वप्रसंगइति । तुच्छत्वात्तत्राननुभूतित्वं, नत्वननुभाव्यत्वादिति चेन्न; -- साध्यसमव्याप्त्यभावेनो पाधित्वायोगात् । नह्यनुभूतिव्यतिरिक्तेषु तुच्छत्वं त्वयाभ्युपगम्यते । तत्रत्य मननुभूतित्वं तत्प्रयुक्तमित्येतावन्मात्रं विवक्षित मिति चेत् ? तर्हि घटादिगत मप्यननुभूतित्वं तत्तद्वस्तुप्रतिनियत घटत्वादिप्रयुक्तं नत्वनुभाव्यत्वनिबन्धनमिति स्यात् ।

---

**(घटादावपीति) तर्कस्या भाससमान योगक्षेमतोक्त्याऽनुभाव्यत्वस्याननुभूतित्वे ऽ प्रयोजकत्व मुक्तम् , इदानीं तर्कस्य सोपाधिकत्व माह ( किंचेति ) अत्र लक्षणविरहो लक्ष्यतावच्छेदकाविरह प्रयोजकतयाभिमतः । ( साध्यसमव्याप्त्यभावेनेति ) घटादौ व्यभिचारेण साध्यव्यापकत्वाभावादित्यर्थः । खपुष्पत्वाद्यवच्छिन्ना ननुभूतित्वव्यापकं तुच्छत्व मुपाधि स्स्यादिति शंकते ( तत्रत्यमिति ) नन्वस्तुत्वस्य।**

आश्रयाभावो धर्माभावे प्रयोजकोभवितु मर्हति - निराश्रयधर्मसिद्ध्य योगात्; नपुन राश्रयगत धर्ममात्रसद्भाव इति चेत्? तर्ह्यनुभाव्यत्व मपि घटत्वादिव न्नाननुभूतित्वप्रयोजकमिति स्यात्, धर्ममात्रत्वाविशेषात्। व्याप्तयाविशेष इति चेन्न; – सहचारमात्रस्य व्याप्तित्वाभावात्। नह्यननुभाव्यत्वानुभूतित्वयोः कश्चि द्विरोधो दृष्टः, येन नियम-स्सिद्ध्येत्, साहित्यमेव परगतानुभवादिषु दृष्टम्।

किंच – अनुभूतेरेवा नुभाव्यत्वे ऽवश्यम्भावि न्यननुभू तित्वंप्रति कथमनुभाव्यत्व स्योपाधित्वं? अनुभाव्यत्वस्या भावेपि स्वप्रकाशत्वादेवा नुभूते रसत्वं नप्रसज्यतइति युष्माभि रभ्युपेतव्य मिति चेन्न; --- तथापि स्वप्रकाशसिद्धेय मनुभूति रित्येवं रूपा नुभूति विषयतामन्तरेण तत्सत्वस्य व्यवस्थापयितु मशक्यत्वात्। इदमखिल मभिसन्धायोक्तम् ---- "घटादेरप्यज्ञानाविरोधित्व मेवा ननुभूतित्व निबन्धनं, नानुभाव्यत्व मित्यास्थीयतां" इति। नचास्य साधनव्यापकत्वं, अनुभाव्यतया भ्युपगन्तव्ये परानुभव स्वरूपे

---

**ननुभूतित्वव्यापकत्वेनो पाधित्वं नोच्यते, किन्त्वसत आश्रयत्वा सं भवा न्न तत्रा नुभूतित्व मित्येतावदेवो च्यत इति शङ्कते (आश्रया भाव इति) (किंचानुभुतेरिति) अनुभाव्यत्वाभावे नुभूतेस्तुच्छत्वेन सर्वशून्यत्वप्रसंगइति भावः। "अनुभूतेरनुभाव्यत्वएवे" ति योजना। एवकारविवरणं "अवश्यम्भाविनी" ति। यद्वा - त्वया ननुभाव्यत्वेन सिषाधयिषिताया एवेत्यर्थः। अथवा- अनुभूतेरेवानुभाव्यत्व मावश्यकम्, नत्वन्यस्य कस्यचित, तस्यान-नुभाव्यत्वेन शून्यत्वेपि दोषाभावात्; अनुभूते स्त्वननुभाव्यत्वे सर्व-शून्यत्व मवर्जनीयमिति भावः। (युष्माभिरिति) सिद्धान्तेपि स्वप्रकाश त्वांगीकारादिति भावः। (अस्येति) अज्ञानाविरोधित्वस्येत्यर्थः। सा-**

तदभावदर्शनात् । नच साध्यसमव्याप्ति हानिः, अनुभूति व्यतिरिक्तेषु सर्वेष्वपि साक्षा दज्ञानविरोधित्वाभावात् । अनुभाव्यत्वे नुभूते रज्ञानाविरोधित्वमपि प्रसज्यतइतिचेत् ? अननुभाव्यत्वेपि गगनकुसुमादिव त्तत्प्रसङ्ग स्तदवस्थः । असत्त्वप्रयुक्तं तत्राज्ञाना विरोधित्वमिति तु दत्तोत्तर प्रायमेव ।

एवं --- ' अनुभूति रनन्याधीन स्व धर्मव्यवहारा, स्व सम्बन्धा दर्थान्तरे तद्धर्म व्यवहारहेतुत्वात् ',

---

धनम् - अननुभूतित्वप्रसंजकं वेद्यत्वम् । ननु - आलोकादावज्ञानविरोधिनि साध्याव्यापकतेत्याह ( नचेति ) साक्षा दज्ञानविरोधित्वमुपाधिः । नचालोकादि स्साक्षादज्ञानविरोधी , ज्ञानद्वारैव तथात्वात् । ज्ञानस्यैव साक्षादज्ञानविरोधित्वस्य तैरेवाभिधाना दिति भावः । ( दत्तो [उक्तो] त्तरप्रायमिति ) तत्रत्य मननुभूतित्वं तत्प्रयुक्तमित्यादे दूषणेनेत्यर्थः । ( एवमनुभूति रित्यादि ) अत्रानुमानद्वयं विवक्षितम् । अनुभूति रनन्याधीन स्वधर्मा , स्वसम्बद्धा दर्थान्तरे तद्धर्महेतुत्वात् ; रूपवत , परत्र चाक्षुषत्व हेतुर्हि रूपं - स्व चाक्षुषत्वे सजातीयानपेक्षं । अनन्याधीन स्व व्यवहारा , स्व सम्बन्धा दर्थान्तरे तद्व्यवहारहेतुत्वात , रूपवदिति ।

अत्रेत्थ मनुगृहीत माचार्यैः - अनुभूतिरित्यादिना ऽनुमानद्वयं ग्रन्थलाघवार्थं मविभागेनोक्तम् । अनुभूति रनन्याधीन स्व धर्मा , स्व सम्बन्धादर्थान्तरे तद्धर्म हेतुत्वात् ; अनुभूति रनन्याधीन स्व व्यवहारा- स्व सम्बन्धा दर्थान्तरे तद्व्यवहार हेतुत्वात् ; इत्येवं विभागः । अत एवाह - " परत्रव्यवहारविशेषहेतो स्स्वस्मिन्नपि तद्व्यवहारहेतुत्वं " इत्युत्तरत्र वक्ष्यति । प्राकट्यमभ्युपगम्य तदुपजीवनेन प्रथमानुमानमुक्तं । तदनुपजीवनेन द्वितीयं । प्राकट्याभ्युपगमस्य नस्वप्रकाशता वि-

रोधित्वं, तस्य ज्ञानानुमापकत्वा नभ्युपगमात्, धर्मवत्त्वे ऽनन्याधीन धर्मवत्त्वेच साध्ये सिद्ध साध्यता स्यात्, अनुभूतित्वादिधर्माणां हेत्वंतर नैरपेक्ष्यात्। नह्यनुभूतित्वजाति र्हेत्वधीना, नित्यत्वात्। जात्यनभ्युपगमे प्यनुभूतित्वस्या नुभूति सामग्री व्यतिरिक्त हेत्वनपेक्षत्वा त्सिद्ध साध्यता। अतोनन्याधीन स्वधर्मेत्युक्तं। स्वस्य धर्मः-स्वोत्पाद्यतया सम्बन्धी धर्मः स्वधर्मः, परत्र स्व साध्य धर्मात्यंत सजातीय धर्म इत्यर्थः। अर्थांतरे तद्धर्म हेतुत्वादिति हेतूक्तेः। स्वधर्मशब्दनिर्दिष्टधर्मोहि तच्छब्दोक्तः। परत्र स्वसाध्य धर्मात्यंत सजातीय स्स्वस्मिन्नवश्यम्भावि धर्म स्स्वधर्मत्वेन विवक्षितः। अतएव स्वस्मि न्नपित्वानापादना द्रूपस्य दृष्टान्तस्य साध्यविकलत्व शंका व्युदस्ता स्यात्। दण्डान्तर निरपेक्षं स्वस्मिन् दण्डित्व मनापादयति दण्डे-व्यभिचारश्च परिहृत स्स्यात्। अन्य शब्दश्च स्वात्यन्त सजातीयान्यपरः, अन्यथा हेतुमात्र निरपेक्षत्वे दृष्टान्तस्य साध्य विकलत्व प्रसंगात्। चक्षुराद्यपेक्षंहि रूपस्य चाक्षुषत्वं। तादृश हेत्व पेक्षा नियमराहित्य मनन्याधीन शब्देन विवक्षितं। अन्यापेक्षा मात्र विरहे साध्ये परज्ञानस्या नुमेयत्व दर्शनेन बाधितत्व प्रसंगात्। नहि ज्ञानान्तरा गोचरत्व मेतदनुमानसाध्यं। अपितु स्वात्यन्त सजातीया नपेक्ष प्रकाशार्हत्व मात्रं। तच्च परज्ञाने सम्भवतीति न बाधितविषयत्वं। अनन्याधीन स्वव्यवहारेत्यत्रापि व्यवहारवत्त्वे साध्ये सिद्धसाध्यता। अतोनन्याधीन शब्दः। अन्यशब्दस्या त्यन्तसजातीयान्यपरत्वा द्रागाद्यपेक्षया बाधितत्व शंका परिहृतास्यात्। घटादीनां हानादि व्यवहारे स्वात्यन्त सजातीयानपेक्षो हेतुरनुभूतिरिति सिद्धसाध्यत्वव्युदासाय स्वशब्दः। सच परत्र स्वसाध्य व्यवहारात्यन्त सजातीय परः। व्यवहारस्या त्यन्त सजातीयत्वं नामा भिन्नप्रवृत्ति निमित्तकत्वं। व्यवहारानुगुण्यमात्रंहि प्रकाशत इति व्यवहारस्य निमित्तं। परज्ञान व्यवहारे कालात्ययापदेश परिहाराया पेक्षा नियमराहित्यं विवक्षितं। हेतुमाह "स्वसम्बन्धा" दिति। धर्महेतुत्वे व्यवहारहेतुत्वेच

हेतौ विवक्षिते ऽ नैकांत्यंस्यादिति तत्परिहाराय तच्छब्दः । स्वस्ययो धर्मो व्यवहारश्च तदत्यन्त सजातीयो धर्मो व्यवहारश्च तच्छब्द विवक्षितः । स्वस्याग्निसम्बन्धा त्स्वस्मि न्पूर्वरूप सजातीय रूपांतर तद्व्यवहारहेतु र्घटोग्निसापेक्षइति तत्र व्यभिचार परिहाराया र्थांतरइत्युक्तं । किंचा र्थांतर शब्दो निर्दिष्ट जातीया द्विजातीयपरः । तेन परस्मिन् द्रव्ये संयुक्तत्व व्वहार हेतो द्रव्यस्य परद्रव्यसापेक्षतया ऽनैकांत्यं परिहृतंस्यात् । द्रव्यंहि द्रव्यस्या त्यंत सजातीयं । ननु घटोहि घटे संयुक्तत्वादिक मापादयन् स्वस्य तथात्वे घटांतर सापेक्षइत्य नैकांत्यं नैवं, सजातीयापेक्षानियमविरहरूपस्य साध्य धर्मस्य तत्र विद्यमानत्वात् । नहि घट स्स्वस्य संयुक्तत्वादौ स्वात्यन्त सजातीयं घटमेवापेक्षतइति नियमोऽस्ति । पुत्रे पुत्रत्व व्यवहारहेतौ पितरि स्वस्य पुत्रत्व तद्व्यवहारयोः पित्रन्तर सापेक्षे व्यभिचार परिहाराय स्वसंम्बन्धादित्युक्तं । विद्यमान स्सम्बन्धो विवक्षितः । परत्र स्वसम्बन्ध तुल्यकाल स्वगतधर्मात्यन्त सजातीयधर्म तत्सापेक्षव्यवहारहेतुत्वा दित्यर्थः । नहि पित्रादिप्रवासनिधनयोः पुत्रादौ पुत्रत्वं तद्व्यवहारश्चापगच्छति । अतएव स्वस्मि न्नन्यापेक्ष द्वैधीभाव मनापादयति परद्वैधीभाव हेतौ द्रव्ये व्यभिचारश्च दूरोत्सारितः । ननु सिद्धान्तिनोप्यभिमतमिद मनुमानं, चेतनस्स्वसम्बन्धतुल्यकालं शरीरत्वं शरीरे जनयन् स्वस्मिन् शरीरत्व तद्व्यवहारयो र्नान्यानपेक्षः, अपितु परमात्मसापेक्षः, परमात्माच चेतनत्वा दत्यन्तसजातीयः ; अत स्तत्रानैकान्त्यमिति । नैवं, स्वव्यापकधर्महेतुत्वस्य विवक्षितत्वात् । नहि चेतनत्वव्यापकं शरीरत्वं, ईश्वरस्य चेतनस्य शरीरत्वाभावात् । अत स्स्वधर्मशब्दाभिमेतेन स्वावश्यम्भावित्वेन परिहारः ।

एतदुक्तं भवति - धर्मशब्दः प्रकाशपरोवा धर्ममात्रपरोवा, अन्यशब्दश्चा न्यमात्रपरोवा स्वात्यन्त सजातीयान्यपरोवा । तत्र हेतुमात्रानपेक्ष प्रकाशत्वे [ साध्ये ] दृष्टान्तस्य साध्यविकलत्वं । रूपंहि चक्षुराद्यपेक्षप्रकाशं । स्वात्यन्तसजातीयानपेक्ष प्रकाशत्वे साध्ये व्यर्थ-

विशेषणार्थं, हेतौ हेतुत्वमात्रेण साध्यासिद्धेः । नहि यस्य कस्यचिद्धेतुस्सन् घटादि स्स्वप्रकाशे घटान्तरादिक मपेक्षते । हेत्वनपेक्षधर्मत्वे साध्येऽनुभूति-त्वादिना सिद्धसाध्यता । परश्वधादि ष्वनैकान्त्यश्च, काष्ठद्वैधीभावहेतोःपर श्वधस्यस्वद्वैधीभावे हेत्वन्तर सापेक्षत्वात् । स्वात्यन्त सजातीयानपेक्ष धर्म त्वेचानुभूतित्वादिना सिद्धसाध्यता । विषय प्रकाशके परज्ञानेपि लिंगापेक्ष प्रकाशकत्व दर्शना द्बाधश्च । रूपस्य रूपान्तरानपेक्ष स्वगतरूपित्व हेतु-त्वाभावाद्दृष्टान्तस्य साध्य विकलता । पुत्रगत पुत्रत्व हेतौ पित्रन्तर सापेक्ष पुत्रत्व धर्मे पितर्यनैकान्त्यंच । परद्रव्यगत संयुक्तत्वहेतौ द्रव्यान्तरसापेक्ष संयोगे द्रव्येचा नैकान्त्यं । अत एवमादिदोष परिहारार्थं मित्थंप्रयोक्त-व्यं । अनुभूति स्स्वजन्य परगत धर्मात्यन्तसजातीयधर्म भाक्त्वे स्वा-त्यन्त सजातीया पेक्षानियम रहितेतिप्रतिज्ञा । स्वविजातीये स्वावश्य-म्भाविधर्मा त्यन्त सजातीय स्वसम्बन्ध तुल्यकाल धर्महेतुत्वा दितिहेतुः । तथानुभूति स्स्वजन्य परगत व्यवहारा त्यन्त सजातीय व्यवहार भा-क्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा । स्व विजातीये स्वावश्यम्भावि व्यवहारात्यन्त सजातीय स्वसम्बन्ध तुल्यकालव्यवहार हेतुत्वादिति हेतुः । व्यवहारस्य स्वावश्यम्भावित्वंनामा वश्यम्भाविधर्म निबन्धनत्वमिति ।

सुखबोधनार्थ मेत द्व्याचक्ष्महे-"धर्म वत्त्व"इति । यद्यपि याव-त्त्व घटितमेव साध्यं व्यवस्थास्यते , तथापी दानीं धर्ममात्रे ऽनन्या-धीनधर्ममात्रेवा साध्ये यावत्त्व विशेषणे बाधप्रसंगा त्तन्नविवक्षार्ह मित्युक्तमात्रस्यैव विवक्षणीयतया सिद्धसाधनोद्भावनमिति मन्तव्यं ।

ननु - जात्यनभ्युपगम पक्षे कथमनुभूतित्वेन सिद्धसाध्यता ? अनुभूतित्वस्य जन्यतया हेतुसापेक्षत्वेनानुभू त्यतिरिक्ताधीनतया ऽन-न्याधीनत्वा सिद्धे रित्याशंक्य - अनुभूति व्यतिरिक्तानपेक्षत्व साधने सर्वस्यापि कार्यस्या नुभूत्यतिरिक्त तत्तत्स्व कारणापेक्षतया बाधइति तद्वारणार्थं मनन्याधीन पदेन सजातीयानपेक्षत्वं विवक्षणीयं, ततश्चा-

नुभूतित्वस्यानुभूति सजातीया नपेक्षत्वा त्सिद्ध साध्यतैवेत्याह "अनुभूतित्वस्यानुभूति सामग्री" ति अनुभूतित्वं ह्यनुभूति सामग्र्यैव जन्यते, नतु तदतिरिक्तेन केनापि, अतोऽनुभूतित्वस्या नुभूति सजातीया नपेक्षत्वा त्सिद्ध साधनमिति भावः । "परत्रे" ति । धर्मे वक्ष्यमाण न्यायेन यावत्त्व विशेषणस्या वश्यकत्वा दद्रव्ये रूपादौ चाक्षुषत्व प्रयोजकस्यालोकादेर्द्रव्यस्य संयोगे द्रव्यान्तर सापेक्षत्वा द्व्यभिचारस्स्यादित्युक्त विवक्षयैव तत्परिहारइति भावः । ननु आलोकादेस्संयोग जनने स्व विजातीय घटाद्यपेक्षाया अपि सम्भवात्सजातीयापेक्षा नियम विरहोस्त्ययेवेति कथं व्यभिचार इतिचेन्न; – यद्रूपेण स्वोत्पाद्योधर्म स्तेन रूपेण सजातीया नपेक्षत्वस्य विवक्षितत्वात् । द्रव्यत्वेन स्वस्मिन् संयोगजनकस्या लोकस्य द्रव्यत्वेन सजातीयापेक्षणा द्व्यभिचारात् यद्रूपावच्छिन्नं धर्मोत्पादकत्वं तद्रूपेण परत्वं विवक्षितं, अतोनव्यभिचारता दवस्थ्यम् । उक्तविवक्षाया अभ्युच्चय हेतुमाह "अर्थान्तर" इत्यादिना । "स्वधर्मे " ति । तच्छब्दस्य प्रकृत परामर्शित्वा दनन्याधीन स्व धर्मवत्त्वमात्रे साध्ये तेन स्व धर्मस्यैव परामर्शः स्यात , तथाच परत्र स्व धर्मोत्पत्ते रसम्भवा त्स्वरूपासिद्धो हेतुस्स्यात् ; निरुक्तविवक्षायान्तु परगत धर्मस्यापि प्रकृतत्वात्तस्य तच्छब्देन परामर्शो युज्यतइति भावः । यद्यपि निरुक्त विवक्षाभावेपि स्व धर्मस्य परत्रोत्पत्त्य सम्भवादेव तत्पदेन स्वधर्मसजातीय परामर्शो युज्यते , निरुक्त विवक्षायामपिहि तच्छब्देन परत्रोत्पद्यमान धर्म परामर्शे पूर्वोक्त व्यभिचारएव हेतुरिति हृदयम् । स्वस्मिन्नित्यंश तात्पर्यमाह " अत एवे" ति । नियम तात्पर्यमाह – "दण्डान्तरे" ति । "अन्यशब्दश्चे" ति । यद्रूपेण परत्र स्वेन धर्म उत्पाद्य स्तद्रूपावच्छिन्नान्यपर इत्यर्थः । " तादृशे " त्यादि । नन्वनु मित्यधीन प्राकट्यस्य सजातीयापेक्षत्वेपि स्वाधीनप्राकट्यस्य सजातीयानपेक्षत्वा त्सजातीया नपेक्षधर्म मात्रस्य च साध्यत्वात्कथम् बाधइति चेन्न; -- स्वावश्यम्भाविनि यत्किञ्चिद्धर्ममात्रे सजातीयानपेक्षत्व साधने परत्र दण्डीति विशिष्ट ज्ञानविषयत्व प्रयोजकस्य दण्डज्ञानस्य स्वस्मिन् दण्डज्ञानमिति दण्डविशिष्ट

ज्ञानविषयत्वे सजातीयापेक्षाविरहा त्सिद्धसाध्यतेति स्वावश्यम्भावि यावद्धर्मेषु सजातीयापेक्षा राहित्यं विवक्षणीयं ।

ननु - ज्ञाने - उक्तविशिष्टज्ञानविषयत्वे विशिष्टज्ञानापेक्षास्त्येवेति कथं सिद्धसाधनमिति चेन्न ;- स्वस्य येन रूपेण परत्र धर्मप्रयोजकत्वं तद्धर्मजातीयस्य स्वस्मिन्नुत्पादे तेन रूपेण सजातीयापेक्षाविरहस्य विवक्षितत्वात् । अन्यथा घटरूपे चाक्षुषत्वस्या लोकरूपसापेक्षत्वा दृष्टान्तस्य साध्यवैकल्यप्रसंगात् । आलोकरूपस्य दृष्टान्तत्वे घटरूपे व्यभिचारात् । ईश्वरज्ञानापेक्षत्वेन बाधाच्च । उक्तविवक्षायांच न दोषः, आलोकरूपत्वेनैव विषयचाक्षुषत्व प्रयोजकत्वात्, घटरूपस्य विषयगतोद्भूतरूपत्वेनैव विषयचाक्षुषत्वप्रयोजकत्वात् । यावत्त्वाविवक्षा चा चार्यस्य 'अतएव स्वस्मिन्नपित्वानापादना द्रूपस्य दृष्टान्तस्य साध्यविकलत्वशंका व्युदस्तास्या' दिति वाक्या दवगम्यते । अन्यथा रूपस्य स्वस्मिन् चाक्षुषत्वे सजातीयापेक्षाविरहेण दृष्टान्ते साध्यसत्त्वात् । 'नहि ज्ञानान्तरागोचरत्व मेतदनुमानसाध्य' मिति वाक्याच्चेयं विवक्षावगम्यते । तथाहि - 'नही' त्यादिना नियमपदे दत्ते बाधनिरास उपपाद्यते, 'अतो न बाधितविषयत्व' मि त्युपसंहारात् । ततश्च नहि ज्ञानान्तरागोचरत्व मेतन्नियमपदघटित साध्यकानुमान साध्यमित्यनेन नियमपदाघटित साध्यकानुमानेन ज्ञानान्तरागोचरत्वमेव साध्यमिति प्रतीयते । तच्च स्वावश्यम्भावि यावद्धर्मेषु सजातीयानपेक्षत्व विवक्षायामेव सिद्ध्यति । नियमश्च - येन रूपेण साजात्यं तद्रूपावच्छेदेन विवक्षितः । तद्विरहश्चात्राबाधित- एव, स्वाधीन प्राकट्यस्य स्व सजातीया पेक्षा विरहात् । "परज्ञान व्यवहार" इति । अत्रापि पूर्ववदेव परत्र - दण्डसम्बन्धीति व्यवहारजनकस्य दण्डज्ञानस्य स्वस्मिन् तादृश व्यवहारे सजातीयापेक्षाविरहा त्सिद्धसाध्यतेति व्यवहारे यावत्त्वं विवक्षणीयं । ततश्च परकीयज्ञान व्यवहारस्या नुमित्याद्यधीनत्वा द्बाधवार-

णीय नियमोविवक्षणीय इत्यर्थः । नच स्वस्मिन्विशिष्ट व्यवहारस्य विशिष्टज्ञान साध्यत्वा न्न सिद्धसाधनमिति वाच्यं । अत्रापि पूर्वव द्येन रूपेण परत्र व्यवहार हेतुत्वं तेन रूपेणा नपेक्षत्वस्य विवक्षितत्वात् । ततश्च ज्ञाने दण्डसम्बन्धीति व्यवहारस्य समान विषयक ज्ञानत्वेन विशिष्ट ज्ञानापेक्षायामपि न समान विषय ज्ञानजनक विशेषण ज्ञान त्वेन तदपेक्षा । अन्यत्रतु तेनैव रूपेण दण्डसम्बन्धीति व्यवहारं प्रयोजयतीत्यदोषः । " अनैकान्त्यंस्या"दिति । परत्र संयोग जनकेषु कर्मादिषु-अयं घट इत्यादि व्यवहार प्रागभावेच परत्र स्वोत्पाद्यमान धर्म सजातीय धर्मस्य तादृश व्यवहारस्यचा नुत्पत्ते रित्यर्थः । तत्प्रागभावत्वेन परत्र जननीय जातीयस्या यं घट इति व्यवहारस्य प्रागभावेऽभावात् ,यद्यपि प्रागभावत्व सामान्येन प्रतियोगी परत्र स्वोत्पाद्यः, तत्सजातीय व्यवहारश्च स्वस्मिन् सम्भवति ; तथापि तेन रूपेण सजातीयापेक्षत्वा द्व्यभिचारः । " स्वस्याग्नि सम्बन्धा " दिति । पूर्वोक्ताभ्युच्चया नुसारेण हेताव र्थान्तर पदाभावे साध्येपि परत्रेति पदाभावं, तदभावेच यद्रूपावच्छिन्ना पेक्षया परस्मिन् कार्यं जनयति तद्रूपेण साजात्य विवक्षाभावंचा,भिप्रेत्यैतं द्व्यभिचारो द्भावनमिति ध्येयं । हेतावर्थान्तर पदस्य साध्ये परत्रेति पदस्यच सत्वेपि व्यभिचारःस्यादिति तत्परिहाराय निर्दिष्टजातीया द्विजातीयत्वस्य विवक्षणीयतया तत्परमर्थान्तरपदं सार्थ मित्याह - " किंचे " ति । अर्थान्तरपदस्य निर्दिष्टजातीया पेक्षया र्थान्तरपरत्वाभावे साध्ये परपदस्यापि निर्दिष्टजातीया पेक्षया परपरत्वं न विवक्ष्यत इति भावः । साध्ये येन रूपेण परस्मिन् कार्यमुत्पादयति तेन रूपेण सजातीयानपेक्षत्व विवक्षाया मुक्तव्यभिचारा सिद्धेः । नंहि घटो घटत्वावच्छिन्ना पेक्षया परस्मि न्पटादौ संयोगजनने घटत्वेन सजातीयमेवा पेक्षत इति नियमोस्ति , पटेनापि संयोगात् । निर्दिष्टत्व विशेषणेनच यद्रूपावच्छिन्नापेक्षया र्थान्तरेकार्यं जनयति तद्रूपेण सजातीयानपेक्षं, तद्रूपा

वच्छिन्ना पेक्षया ऽ र्थान्तरे तद्धर्महेतुत्वादि त्युक्तं भवति । निर्दिष्ट त्वविशेषणे प्यनैकान्त्यमेवे त्याशंक्य नियमविवक्षायाः प्रागेव समर्थि तत्वा न्न दोष इति परिहरति - " नन्वि " त्यादिना । " पुत्र " इ-ति । अत्रा पुत्रः पुत्रो विवक्षितः, तेन तस्य पितृत्वाभावा त्पितृत्वरूपा वच्छिन्नापेक्षया परत्र तस्मिन् पुत्रत्वहेतौ पितरि पुत्रत्वस्य पितृत्वेन सजातीयापेक्षत्वेन तत्र साध्याभावा त्पितृत्वाद्यच्छिन्नापेक्षया ऽर्थान्त रे तस्मिन्पुत्रे पुत्रत्वहेतुत्वेन हेतुसत्त्वा द्व्यभिचारः । यत्तएव मपुत्रः पुत्रो विवक्षितः, अतएव यदि पितुस्स्वासाधारण तद्व्यक्तित्वादिरूपाव च्छिन्नापेक्षया ऽ न्यस्मिन्पुत्रे कार्योत्पादकत्वं विवक्ष्यते तदा तस्मिन् पितरि पुत्रत्वाद्यतद्रूपेण सजातीयापेक्षाभावा त्साध्यसत्त्वा न्न व्यभि चारः ; यदिच पितृत्वरूपावच्छिन्नापेक्षया परस्मि न्कार्यहेतुत्वं विव क्ष्यते, तदा पुत्रस्यापि स्वपुत्रापेक्षया पितृत्वात्पुत्रस्य पितृत्वरूपाव-च्छिन्नापेक्षया ऽर्थान्तरत्वाभावेन हेत्वभावान्न व्यभिचार इति निरस्तं । "तद्व्यवहार हेता"विति तच्छब्दः पुत्रत्वपरः । तत्कीर्तनंच व्यवहार साजात्य प्रदर्शनाय । समान प्रवृत्ति निमित्तकत्वंहि व्यवहारस्य सा-जात्यं विवक्षितं । "परत्रे"ति । स्व सम्बन्ध तुल्य कालत्वं-स्व शून्य-कालानुवृत्ति रहितत्वं । "तत्सापेक्षे"ति । परत्र स्व सम्बन्ध तुल्यकाल स्वगत धर्मात्यन्त सजातीय धर्म विषय व्यवहार हेतुत्वादित्यर्थः । ननुस्व सम्बन्ध तुल्यकालत्वं यथा धर्मस्य विशेषणं तथा तद्व्यवहारस्यैव विशेष ण मस्त्विति चेन्न;-दृष्टान्तस्य साधन वैकल्य प्रसंगात् । नहि रूपसंबन्ध दशायामेव घटादौ चाक्षुषत्व व्यवहारः, नष्टेपि घटे घटश्चाक्षुष इति व्यव हारात् । "नही"ति । सम्बन्ध शब्देन जन्य जनक भावातिरिक्त सम्बन्धो विवक्षणीयः । अथवा न विवक्षणीयः, तत्र जन्य जनक भावादे र्जन्यत्व जनकत्वो भय समुदाया त्मकत्वात । पितु र्निधने तद्धर्मभूतस्य जनकत्वा देरप्यभावात। जन्यजनकभावाद्य सिद्धावपि न पुत्रत्व मपगच्छति। अतिरि क्तसम्बन्धश्च सहा वस्थानमेवेति पितृ प्रवासे पुत्रत्वं नापगच्छती त्यर्थः ।

"तद्व्यवहार श्चापगच्छती" ति । तादृश पुत्रत्व धर्मविषयत्वं नापगच्छतीत्यर्थः ।यद्वा- सम्बन्ध तुल्य कालत्व विवक्षाधर्म घटितहेताविव । 'तत्सापेक्ष व्यवहार हेतुत्वा' दित्यस्य तत्सम्बन्ध सापेक्ष व्यवहार हेतुत्वादित्यर्थः । ननु-तत्सम्बन्ध सापेक्षत्वं पुत्रत्वे व्यवहारस्या स्त्येव, विषयस्य पुत्रत्वस्य तदा यत्तत्वा दितिचेन्न;-व्यवहार पदेन वर्तमान विषयक व्यवहारस्य विवक्षितत्वात् । तादृशश्च पुत्रत्वव्यवहारो न पितृसम्बन्ध सापेक्षः, पित्रनन्तरमपि वर्तमानविषय पुत्रत्व व्यवहार दर्शनात् । अतएव पितृकालीन पुत्रव्यवहारोपि न तत्सम्बन्ध सापेक्षः । "तद्व्यवहारश्चे"ति । वर्तमान विषयक पुत्रत्वव्यवहार इत्यर्थः । "ननु सिद्धान्तिनोपी" ति । हेतौ तद्धर्मपदस्य स्वावश्यम्भावि परत्वाभावे साध्येपि स्व धर्मशब्दोन तत्परइति पूर्वोक्ताभ्युच्चय मूलकमेवेदं व्यभिचारो द्भावनं । वस्तुतस्तु दण्डे परत्र स्वोत्पाद्य धर्मात्यन्त सजातीय स्वावश्यम्भावि धर्मः कोपि नास्तीति दण्डे व्यभिचारा द्धेता ववश्यम्भावि पदं व्यापकपरं द्रष्टव्यं । " स्वव्यापकेति "। स्वपदं स्वनिष्ठधर्मपरं । यद्रूपावच्छिन्ना पेक्षया न्यस्मिन् कार्यं जनयति तद्धर्म व्यापकत्वं विवक्षितं । " तत्र हेतुमात्रे " ति । अत्र बाधोपि द्रष्टव्यः । अनन्याधीन धर्मवत्वमात्रे साध्ये पूर्वोक्त रीत्या नुभूतित्वादिना सिद्धसाधनात्, अनन्याधीन यावद्धर्मवत्वस्य बाधात्, अनन्याधीन तद्धर्मवत्वं वाच्यमित्यभिप्रेत्य तत्र दोषमाह - " रूपस्य रूपान्तरानपेक्षे " ति । शरीरे शरीरत्वहेतौ चेतने स्वस्य शरीरत्वे परमात्मसापेक्षत्वा द्व्यभिचारः, तद्धर्मपदेन प्रकृतस्वधर्मस्यैव परामर्शयोग्यत्वा त्स्वरूपासिद्धिरित्यादिक मादिशब्देन विवक्षितम् । " स्वजन्यपरगते " ति । तद्रूपावच्छिन्न सजातीयापेक्षत्व व्याप्यतारहित तद्रूपावच्छिन्नप्रतियोगिका न्योन्याभाव समानाधिकरण तद्रूपाधिकरणजन्य धर्मवृत्ति तद्धर्मव्यापकतावच्छेदक धर्माधिकरण तद्रूपावच्छिन्नप्रतियोगिकान्योन्याभाव समानाधिकरण तद्रूपाधिकरणजन्य वृत्ति तद्रूपव्यापकतावच्छेदक धर्माधिकरण याव त्स्वधर्माधिकरणं तद्रूपावच्छिन्न सजातीयापेक्षत्वं तेन रूपेण सजातीयापक्षत्वं । त-

द्रूपावच्छिन्न प्रतियोगिकान्योन्याभाव समानाधिकरणश्चासौ तद्रूपाधिकरणजन्यधर्मश्च । सएव धर्म स्तद्धर्मः । तन्निरूपितव्यापकतावच्छेदको धर्म स्तद्धर्मव्यापकतावच्छेदक धर्मः । तद्रूपावच्छिन्नप्रतियोगिकान्योन्याभाव समानाधिकरण तद्रूपाधिकरणजन्य धर्मवृत्तिश्चासौ तद्धर्मव्यापकतावच्छेदकधर्मश्च । तद्रूपावच्छिन्न सजातीयापेक्षत्व व्याप्यतारहितश्चासौ तद्रूपावच्छिन्नप्रतियोगिकान्योन्याभाव समानाधिकरण तद्रूपाधिकरणजन्य धर्मवृत्ति तद्धर्मव्यापकतावच्छेदक धर्मश्च। तद्रूपावच्छिन्न प्रतियोगिकान्योन्याभाव समानाधिकरणंच तत तद्रूपाधिकरणजन्यंच । तादृशजन्यवृत्तिश्चासौ तद्रूपव्यापकतावच्छेदकधर्मश्च । अवच्छेदक धर्माधिकरणेत्यन्तस्य यावद्धर्मान्तेन कर्मधारयः । अत्रच साध्ये घटादिवृत्तिप्राकट्यस्या नुभूतावभावा त्तादृश यावद्धर्माधिकरणत्वं नास्तीति बाधवारणाय स्वपदं यावद्धर्मविशेषणम् । ननु प्रमेयत्वादिकमादाय सिद्धसाधनं, अनुभूतित्वव्यापकता वच्छेदकत्वात ; अनुभूतिभिन्नघटादिवृत्त्यनुभूतिजन्य प्राकट्यवृत्तित्वाच्च; प्रमेयत्वस्य प्राकट्यस्य चानुभूतिवृत्ते स्तदधिकरणत्वात । नच तद्रूपाधिकरण जन्यवृत्ति जन्यतावच्छेदक धर्मो विवक्षित इति वाच्यम्, एवमपि यत्किञ्चिज्जन्यतावच्छेदकं तद्वृत्तिजन्यत्वमादाय सिद्धसाधनादिति चेन्न; – तद्रूपावच्छिन्न कारणताप्रतियोगिक कार्यतावच्छेदकत्वस्य विवक्षितत्वात् । "स्वविजातीय" इति । स्वविजातीयत्व विशेषणाभावे दण्डे परत्र स्वावश्यम्भावि संयोगसजातीय कार्यहेतौ परत्र स्वोत्पाद्यमान स्वावश्यम्भावि धर्माभावा द्व्यभिचार इति तद्वारणाय स्व विजातीयत्वविशेषणम् । धर्मे हेतुतावच्छेदक रूपेण वैजात्यं विवक्षितम् , अन्यथा दण्डे स्वविजातीये पट संयोगजननेन व्यभिचारतादवस्थ्यात । दण्डे परत्र दाण्डित्वापादके स्वजन्यपरगत धर्मसजातीय स्वावश्यम्भावि धर्माभावाद्व्यभिचार इति स्वावश्यम्भावित्व विशेषणम् । तच्च प्रागिव स्वव्यापकपरं, इतरथा स्व-

वृत्तित्वमात्रस्य दण्डित्वेपि सत्वेन व्यभिचारानुद्धारात । स्वव्यापकत्वं च स्ववृत्तिहेतुतावच्छेदक धर्मव्यापकत्वं विवक्षितम् । स्ववृत्तिधर्म व्यापकत्वमात्रस्य तद्दण्डत्वव्यापके दण्डित्वेपि सत्वात । परत्र स्वो त्पाद्यप्रकृत धर्महेतुतावच्छेदकत्वमेव च विवक्षितं, अन्यथा तद्दण्ड ध्वंसहेतुतावच्छेदक तद्दण्डत्वव्यापके दण्डित्वे व्यभिचारानुद्धारात् । देवदत्ते कस्यचि त्पितरि पितृत्वानधिकरणे क्वचित्पुत्रे पुत्रत्वजनकत्वा- द्व्यभिचारवारणाय स्वसम्बन्धतुल्यकालविशेषणं । ततश्च तद्रूपावच्छिन्न प्रतियोगिकान्योन्याभाव समानाधिकरण तद्रूपाधिकरणजन्य तद्रूपानधि करणकालावृत्ति धर्मवृत्तिधर्मावच्छिन्न व्यापकतानिरूपित व्याप्यताश्रय तद्रूपाधिकरणत्वादिति हेतुः । " स्वजन्य परगतव्यवहारे " ति । तद्रूपावच्छिन्न सजातीयापेक्षत्व व्याप्यतारहित तद्रूपावच्छिन्न प्रति- योगिकान्योन्याभावाधिकरणविशेष्यक तद्रूपाधिकरणजन्य व्यवहारप्र- वृत्तिनिमित्त प्रवृत्तिनिमित्तकव्यवहारताक तद्रूपावच्छिन्न प्रतियोगि- कान्योन्याभावव द्विशेष्यक तद्रूपाधिकरणजन्य व्यवहारप्रवृत्तिनिमि- त्त तावच्छेदकावच्छिन्न तद्रूपव्यापकताक तद्रूपाधिकरणानधिकरण कालावृत्तिधर्मप्रवृत्तिनिमित्तक यावद्व्यवहार इति साध्यम् । " स्व- विजातीय " इति । स्वसम्बन्धतुल्यकाले त्यनेन स्वसम्बन्धतुल्य- कालएव विद्यमानत्वं विवक्षितम् । तेन वर्तमानचाक्षुषत्वविषय व्यवहारादे रूपिद्रव्यादौ रूपादिसम्बन्धतुल्यकाल एवा भावा द्वर्त- मान विषयक व्यवहार हेतुत्वमेव विवक्षितं पर्यवस्य ति । एवंच तद्रू- पावच्छिन्न प्रतियोगिका न्योन्याभावाधिकरण विशेष्यक तद्रूपाधिकरण जन्य तद्रूपाधिकरण सम्बन्ध व्यतिरेक प्रयोज्य व्यतिरेक प्रतियोगि वर्तमान विषयताक व्यवहार प्रवृत्ति निमित्ततावच्छेदकावच्छिन्न व्या- पकताक धर्मनिरूपित व्याप्यताश्रय तद्रूपाधिकरणत्वादिति हेतुः प- र्यवस्यति । स्वावश्यम्भावित्वं व्यवहारस्यानुपपन्नं, विद्यमानस्यापि प्रा- कट्यादेः कदाचि दव्यवहारा दित्यत्राह "व्यवहारस्येति "। अत्रच प्र-

योगद्वये हेतुसाध्ययोः कारणजन्यपदे प्रयोजक प्रयोज्यपरे । यद्वा-अनुभूतिः स्वान्य स्ववृत्ति तद्धर्म यावत्कारण वृत्त्यभाव प्रतियोगि तद्धर्मवृत्ति स्वव्यापक योग्यताप्रतियोगितावच्छेदकावच्छिन्न स्वावच्छिन्नकारणता प्रतियोगिककार्यताक धर्मसमानाधिकरणाभाव प्रतियोगि यावद्धर्मिका । स्ववृत्तिश्चासौ तद्धर्मश्चेति कर्मधारयः । अयं तद्धर्मशब्द स्तद्धर्मवृत्ती त्यत्र तद्धर्मशब्देन तुल्यार्थः । ततः स्ववृत्तितद्धर्मस्य याव त्कारणानीति षष्ठीसमासः । तेनच स्वान्यशब्दस्य कर्मधारयः । इदंच स्वपदद्वय मनुभूतिपरम् । तद्धर्मवृत्ती त्यव्यवहितोक्त स्ववृत्तिधर्म उच्यते । स्वस्य व्यापिका या योग्यता तस्या यत्प्रतियोगितावच्छेदकं, तत्स्वव्यापकयोग्यता प्रतियोगितावच्छेदकम् । अस्यच पदस्य तद्धर्मवृत्ती त्यनेन कर्मधारयः । तद्धर्मवृत्तिस्वव्यापकयोग्यता प्रतियोगितावच्छेदकावच्छिन्ना स्वावच्छिन्नकारणता प्रतियोगिककार्यता यस्येति बहुव्रीहिः । सचासौ धर्म श्चेति कर्मधारयः । तत स्तादृशधर्मेण समानाधिकरण इति तृतीयासमासः । तत स्तस्याभावपदेन कर्मधारयः । तत स्तस्य प्रति योगी त्यनेन षष्ठीसमासः । यावन्तश्च ते धर्माश्चेति कर्मधारयः । तेन प्रतियोगीत्यन्तस्य तद्धर्मवृत्तीत्यादिकस्य कर्मधारयः । तत स्तद्धर्मवृत्तीत्यादे स्सर्वस्य पूर्वेणा भावप्रतियोगीत्यन्तेन सर्वेण बहुव्रीहिः । तत्रा नुभूतौ प्राकट्यस्या नुभूत्यन्तराजन्यत्वेपि स्वाश्रयजन्यत्वा द्व्याप्ति वारणाय स्वान्यपदम् । अनुभूतिप्राकट्यस्या नुभूत्यन्तराजन्यत्वेपि तत्कारणकालादे रननुभूतित्वा दर्थान्तरवारणाय याव त्पदम् । अयं घट इत्याद्यनुभव स्स्वयमेव घटादिविशेषणज्ञानं भवन् स्वस्मिन् तद्विशिष्टज्ञानस्य घटज्ञान मित्याद्याकारस्य जनकः, तत्रच विशिष्ट ज्ञाने स्वाश्रयीभूता दयं घट इत्याकारका द्विशेषणज्ञाना दन्य त्सर्वं कारण मननुभूति रिति कृत्वा ऽनुभूतित्वे तादृशविशिष्टज्ञान याव त्कारणवृत्त्यभावप्रतियोगित्वसत्त्वा त्सिद्धसाध्यतेति तद्धर्मपदम् । शरीरचेष्टावृत्तिनियमनादि धीन व्यापारविशेषत्वावच्छिन्न चेतनत्वावच्छिन्न

कारणताप्रतियोगिक कार्यताक प्रसिद्धलौकिकशरीराक्रियात्मक धर्म समानाधिकरणाभाव प्रतियोगित्वा श्चेतनस्य तन्निष्ठक्रियायांच नियमनाधीनव्यापाररूपाया मीश्वररूपचेतनान्तरापेक्षणात् , घटादौ चेतनत्वेना नित्यज्ञानत्वात्मक चेतनत्वव्यापक तावच्छेदकावच्छिन्नजनकत्वा द्धेतुसत्त्वा द्व्यभिचार इति तद्वारणाय स्वव्यापकेत्यादिविशेषणम् । दृष्टान्तीभूतो द्भूतरूपादावपि चाक्षुषज्ञाननियमाभावा त्साध्यवैकल्यव्युदासाय योग्यता प्रतियोगितावच्छेदकेति । तादृशयोग्यता प्रतियोगितावच्छेदकावच्छिन्नत्वं स्वावच्छिन्नकारणता प्रतियोगिककार्यताकत्वंच धर्मविशेषण मेवास्तु , किन्तेन कार्यताविशेष्यत इति चेन्न ; चेतने व्यभिचारात् । जन्यत्वावच्छिन्नकार्यस्य चेतनमात्रे योग्यता स्तीति शरीरादिक्रिया तादृशजन्यत्वावच्छिन्ना, स्वावच्छिन्नकारणतेत्यादि विशेषणंच प्राग्व दस्तीवि तत्परिहारायैव तेन कार्यता विशेष्यते । स्वसमानाधिकरणकारणते त्यनुक्त्वा स्वावच्छिन्नकारणते त्युक्ति रपि - अनुभूतित्व समानाधिकरणेश्वर ज्ञाननिष्ठकारणताप्रतियोगिक कार्यतावच्छेदक जन्यत्वाश्रय घटविशिष्ट ज्ञानसमानाधिकरणाभाव प्रतियोगिनि स्वस्मिन्ननुभूत्यन्तरानधीन घटविशिष्टज्ञानजनकत्वादनुभूते रनुभूतित्वेन सिद्धसाधनतावारणाय । ननु- तादृशकार्यताक धर्मसमानाधिकरणत्वं यावद्धर्मविशेषणमेवास्तु, कृत मभावादिपदेन, समानाधिकरणान्तस्यच तद्विशेषणत्वेन, इतिचेन्न;- संयोगवृत्तिस्वव्यापकयोग्यता प्रतियोगितावच्छेदकावच्छिन्न कारणताप्रतियोगिक कार्यताक संयोगसमानाधिकरणं द्रव्यत्वं, नच तत्र स्वान्येत्याद्यंशोस्ति, अतो द्रव्यत्वमादाया लोके व्यभिचारः । तस्यहि स्वव्यापकं चाक्षुषज्ञानं परस्मि न्नालोकभिन्ने - आलोकत्वेनैव जन्यत इति हेतु रस्ति , तदर्थ मभावविशेषणम् । संयोगरूपप्राकट्यान्यतरत्वं द्रव्यत्वव्यापक योग्यताप्रतियोगितावच्छेदकं, तदवच्छिन्न समानाधिकरणाभाव प्रतियोगीचालोकः, तत्र हे-

तुश्च पूर्ववदस्तीति व्यभिचारवारणाय स्वावच्छिन्न कारणतेत्यादि-विशेषणम् । स्वव्यापकयोग्यता प्रतियोगितावच्छेदकावच्छिन्न स्वाव च्छिन्नकारणताप्रतियोगिक कार्यताक धर्मसमानाधिकरणाभाव प्रति-योगिधर्मवत्त्वात, उद्भूतरूपवत् । उद्भूतरूपंहि घटादौ चाक्षुषत्वप्रयो जकं स्वचाक्षुषत्वे तदपेक्षारहितम् ॥

आदिपदेन - अनुभूतित्वं स्वानधिकरण वृत्त्यधिकरण स्वावच्छिन्न-कारणताप्रतियोगिक कार्यतावच्छेदकावच्छिन्न स्वव्यापकयोग्यताप्रति योगिकताक स्व समानाधिकरण किंचिद्धर्माश्रयान्य तत्फलोपहित याव-न्निष्ठात्यन्ताभाव प्रतियोगि, स्वव्यापक योग्यता प्रतियोगितावच्छेदकाव-च्छिन्न कारणता प्रतियोगिक कार्यताश्रय समानाधिकरणाभाव प्रतियो-गित्वात, महत्व समानाधिकरणोद्भूत रूपवत्त्ववत् । प्राकट्यमनुभू-तित्वा नधिकरण स्वाधिकरणातिरिक्त यावत्स्वकारण वृत्त्यनुभूतित्वाव-च्छिन्न कारणता निरूपित कार्यतावच्छेदका धिकरणं, अनुभूतित्वाभाव समानाधिकरण वृत्त्यनुभूतित्वावच्छिन्न कारणता प्रतियोगिक कार्यता-वच्छेदका वच्छिन्नानुभूतित्व व्यापक योग्यता प्रतियोगिताकत्वात् ; य-दभाव समानाधिकरण वृत्ति यदवच्छिन्न कारणता प्रतियोगिक कार्य-तावच्छेदकावच्छिन्न यद्व्यापक योग्यता प्रतियोगिताकं यत्तत्तदनधि-करण स्वाधिकरणातिरिक्त यावत्स्वकारणकवृत्ति तदवच्छिन्नकार णतानिरूपित कार्यतावच्छेदकाधिकरणम् । यथा रूपचाक्षुषज्ञानं । प्राकट्यत्वं स्वावच्छिन्नकार्यतानिरूपित कारणतावच्छेदकाभावाधिक रण यावत्स्वाधिकरणा धिकरणातिरिक्त कारणकवृत्ति, स्वाधिकरण समानाधिकरणाभाव प्रतियोगिधर्मावच्छिन्न कारणताप्रतियोगिक का र्यतावच्छेदकत्वे सति तद्धर्मव्यापक योग्यता प्रतियोगितावच्छेदक-त्वात, चाक्षुषज्ञानत्व वदित्यादि गृह्यते ।

इत्याद्यनुमाने ष्वप्यवेद्यत्वविवक्षायां पूर्ववद्दोषो भाव्यः । आगमबाध श्च । यदि ह्यनुभूतिरूपं ब्रह्म न वेद्यं, कस्तर्हि तत्वावेदकशास्त्रस्य विषयः । प्रपंचामिथ्यात्वमात्रमिति चेन्न ;– " अथातो ब्रह्मजिज्ञासा ।" "आत्मावा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " " ब्रह्मविदाप्नोतिपरं " " अस्ति ब्रह्मेति चेद्वेद सन्तमेनं

---

( अवेद्यत्व विवक्षायामिति ) यद्यप्युक्तानुमाने स्स्वप्रकाशत्व मात्रं सिद्ध्यति, तथापि तत्र तत्र किञ्चिद्विशेषणावापो द्वापाभ्या मवेद्यत्वं साद्ध्यतचे दित्यर्थः । प्रथमसाध्ये व्याप्यतारहितेति स्थाने ऽभावव्याप्येति विशेषणावापात्, व्यवहारघटित साध्यकेपि तथा तद्विशेषणावापात्, तृतीये तद्धर्मयावत्कारणेत्यत्र तद्धर्मसजातीय यत्किञ्चिद्व्यक्ति यावत्कारणेति - सजातीयविवक्षायां स्वप्रकाशत्वमात्रसिद्धावपिसजातीय यत्किंचिदिति विशेषणोद्धापात्, अनुभूतित्वपक्षके किंचिद्धर्माश्रये त्यत्र किंचिद्विशेषणोद्धापात ,प्राकट्यपक्षकेपि यावत्स्वकारण वृत्तीति स्थाने यावत्स्वकारणका न्यानुभूति वृत्त्यवृत्तीति विशेषणानावापे स्वप्रकाशत्वमात्र सिद्धावपि तदावापात, प्राकट्यत्वपक्षकेपि स्वाधिकरणाधिकरणातिरिक्त कारणकवृत्तीति स्थाने स्वाधिकरणा धिकरणातिरिक्त कारणकेतर तत्कारणतावच्छेदक समानाधिकरणा वृत्तीति विशेषणानावापे स्वप्रकाशत्वमात्रसिद्धावपि तदावापात्, अवेद्यत्वं सिद्ध्यति ।

( आगमबाध इति ) आगमेन बाधः । " ब्रह्मविदाप्नोति " " वचसां वाच्य मुत्तमम् " इत्यादि रागमः । यद्वा - अवेद्यत्वे बाधकतर्क माह ( आगमेति ) आगमस्य बाधः । तदुपपादयति ( यदिहीति ) ( तत्वावेदकेति ) वेदान्तशास्त्रस्येत्यर्थः । पूर्वभागस्य धर्मावेदक शास्त्रत्वात ( नेति ) " शास्त्रयोनित्वात् " " तत्त्वौपनिषदं " इत्यादिना ब्रह्मणः प्रमाणान्तरवेद्यत्वनिषेधा द्वेदान्तवेद्यत्वपरत्वमेवोक्त श्रुतिसूत्राणां वक्तव्यम्, तथाच तदभावे तेषां नैरर्थक्यं

सतो विदुः" इत्यादीनां समुद्रघोषत्वप्रसंगात्। ब्रह्माद्ध्यस्तोपरागमा त्रनिवर्तनार्थं ब्रह्मानुवादो यमिति चेत्? तथापि तै स्तै श्शब्दै रनुवाद-रूपै रप्यनुभाव्यत्व मवर्जनीयमेव। मिथ्याभूत मिद मनुभाव्यत्वमिति चेत्? घटादेरपि समान मित्युक्तमेव। उपहितं ब्रह्मशास्त्रवेद्यमिति चेन्न; - अतत्वावेदकत्वप्रसंगात्। तस्या प्युपाधेर्विलयान्नदोषइति चेन्न; -- तत्प्रतिक्षेपकेणापि केनचिदुपहित रूपेणानुपहिताकारेणवा ब्रह्मस्वरूप स्पर्शनस्यावर्जनीयत्वात्। अतउप हितरूपं वेद्यमनुपहित रूपन्तु नव्यवहर्तुं शक्यमिति तस्य वेद्यत्व प्रतिक्षेपोपि दुश्शकः।

---

स्यादिति भावः। ननु ब्रह्मणस्स्वप्रकाशत्वेपि तस्या ज्ञानाविरोधित या ऽध्यासनिवर्तकत्वाभावेन तन्निवर्तकापरोक्षवृत्ते र्वेदान्तसाध्यतया वेदान्तानां सार्थकत्वं, वेदान्तजन्यवृत्त्यधीनाज्ञान निवृत्तिकत्वमेव जिज्ञासासूत्रादे र्विषय इत्याशंकते (ब्रह्माध्यस्तेति) स्वप्रकाशतया सर्वदा भासमान ब्रह्मविषयत्वाद नुवादतोक्तिः। वृत्तेरप्रकाशात्मकत्वा त्तद वच्छिन्नचैतन्याभावत्वस्या वश्यकत्वात्तत्र व्यावहारिकभेदस्यापि सत्त्वा द्वेद्यत्वमवर्जनीय मेवे त्याह (तथापीति) (उपाधेरिति) मिथ्यात्वेनैव प्रतिपादना न्न तत्वावेदकत्वहानिरिति शंकते (तस्यापीति) विलयो - निषेधः। किंच - कि मुपहितस्य वेद्यत्वनिषेधः, उतानुपहितस्य? नाद्यः, उपहितस्येदानीमेव वेद्यत्वांगीकारेण तन्निषेधे बाधात्। न द्वितीयः, अनुपहितस्य व्यवहारानर्हतया तत्रावेद्यत्व प्रतिज्ञादेरप्यसम्भवा दित्यत्राह (अत इति) उपहितवेद्यत्वस्यानुपदमेव त्वयां गीकारादित्यर्थः। ननु -ब्रह्म वेदान्तजन्य ज्ञानविषयत्वाभावेपि तज्जन्यज्ञानेन भासमाने जीवब्रह्माभेदे ब्रह्मव्यतिरिक्त मिथ्यात्वे च स्वेनैव भासमानं तटस्थमेवावच्छेदकं स्यात्। इदमेवच्चा वच्छेदकत्वं दृष्टव्यइत्यादिनोच्यते, नतु ज्ञानविषयत्वमिति शंकते।

ननु — अवेद्यत्वेपि स्वप्रकाशत्वेनैवा वस्थाय ' तत्वमस्या ' दिवाक्यजन्यस्य स्वेतरनिषेधवाक्यजन्यस्य ' द्रष्टव्य ' इत्यादि विहितज्ञानस्यचा वच्छेदकं ब्रह्म भवेदितिचेन्न; - अवच्छेदकमिति बुद्ध्यै चा त्रापि विषयीकारात् । अन्यथा [ स्वयम्प्रकाशा नुवादादि ] स्वप्रकाशानुमानादि नैरर्थक्य प्रसंगाच्च । तस्मा दवच्छेदकत्वावेद्यत्व प्रतिपादकमपि वाक्यमन्ततोवेद्यत्वमेवो पस्थापयति ।

ननु - " यस्यामतं तस्य मतं मतं यस्य न वेदसः । अविज्ञातं विजानतां विज्ञातमविजानतां ॥ " " विज्ञातारमरेकेनविजानीयात् " " येनेदं सर्वं विजानातितं केन विजानीयात् " " यतो वाचो निवर्तन्ते, अप्राप्य मनसासह " " न शब्द गोचरो यस्य योगिध्येयं परम्पदं । " इत्यादिकं कथं निर्वहणीयमितिचेत् ? भवतोवा कथं ? । स्वरसप्रतीत मवेद्यत्व मंगीकुर्वता मयां किन्नाम दुर्निर्वहमितिचेन्न; - मतत्वविज्ञातत्वादे रपि तत्रैव

---

( नन्विति ) ज्ञानावच्छेदकत्वं ज्ञानविषयीभूता भेदादिव्यावर्तकत्वम् । नन्ववच्छेदक मिति बुद्ध्यापि ब्रह्म नाविषयीक्रियते, तज्ज्ञानाविषय भूतमेव ब्रह्म स्वेनैव भासमानं तटस्थं सदवच्छेदकत्वं व्यावर्तयती-त्यत्राह ( अन्यथेति ) स्वप्रकाशपदेना नवच्छेदकपदेनच ब्रह्मणो प्रतिपादना त्तत्पदद्वयं व्यर्थ मित्यर्थः । किंच - स्वप्रकाशादिपदानां ब्रह्मबोधकत्वस्योक्तत्वा त्तन्न्यायेना वेद्यत्वप्रतिपादक वेदान्तवाक्यस्थ पदानामपि ब्रह्मबोधकत्वा त्तदपि वाक्यं स्वावैयर्थ्याय वेद्यत्वमेव साधयती त्याह ( तस्मादिति ) नन्वेवं सत्यवेद्यत्वश्रुतेः कथं निर्वाह इति शंकते (ननु यस्यामतमिति) (नशब्दगोचर इति) अत्र शब्दप्रतिपाद्यत्वमे

स्वरसप्रतीतत्वात् , अमताविज्ञातादि शब्दै रपि तत्रैव तत्स्वरूप प्रतिपादनात् । अन्यथा प्रागुक्तनयेन परस्परविरोधेन चानन्वयादि प्रसंगात् । अमतत्वोपहित रूपेण मतत्व मंगीकुर्म इतिचेत् ! किमतः ! तावतापि ज्ञानविषयत्वस्य दुस्त्यजत्वात् । अमतत्वं सामान्यत स्त्वानुविद्धं मतत्वमपि प्रतिक्षिपतीतिचेत् ? तथा स त्यमतत्व

---

वनिषिद्ध्यते, नतु मुख्यवृत्तिविषयता, तेन प्रमाणान्तरावेद्यस्य ब्रह्मण शब्दवेद्यत्वस्यापि निषेधे ऽवेद्यत्वमेव पर्यवस्यतीति भावः । अतएव नशब्दगोचर इत्यनेन शक्यत्वनिषेधेपि लक्ष्यत्वसम्भवा त्कथ मिदं ब्रह्मणो ऽवेद्यत्वे प्रमाणमिति शंका निरस्ता । (अन्यथेति) अविज्ञातादिशब्दै रवेद्यत्वस्य प्रतिपादने विज्ञातादिशब्दै स्स्वरूपाप्रतिपादने चेत्यर्थः (प्रागुक्तेति) " अन्यथा [स्वयम्प्रकाशानुवादनै रर्थक्यप्रसंग] स्वप्रकाशानुमाननैरर्थक्यप्रसंगाच्च " इत्युक्तप्रकारेणेत्यर्थः। आदिपदेन वैयर्थ्यं विवक्षितम् । अवेद्यत्वस्य स्वरसतः प्रतीतौ वेद्यत्वस्यापि स्वरसतः प्रतीतेः परस्परविरोधात् ' अमतं - मतं - नवेद ' इत्यादे रनन्वयः , अमत मित्यादिना स्वरूपाप्रतिपादने ऽमतमित्यादि कृत्स्नं निरर्थकं स्यादिति भावः । नन्वमतत्वस्योपक्रमे प्रतिपादितत्वा दमतत्वेन मतत्वमेव ' मत ' मित्यनेन प्रतिपाद्यते , नत्वाकारान्तरेण मतत्वं, अमत मित्यत्र चाकारान्तरेण मतत्वं निषिद्ध्यते, अतो नानन्वयः , नापि वैयर्थ्य मिति शंकते (अमतत्वोपहितेति) अमतत्वेन मतत्वांगीकारेपि स्वरूपे मतत्वस्य सिद्धत्वा दमतत्वस्य बाधितत्वा दमतत्वेन मतत्वमेव, नसम्भवती त्यनन्वयः । अमतत्वांगीकारे वैयर्थ्यंच तदवस्थमिति परिहरति (किमत इति) " अमताविज्ञातादिशब्दैरपि तत्रैव तत्स्वरूपप्रतिपादना " दित्यत्र शंकते (अमतत्वं सामान्यत इति) यद्य प्यन्यथेत्यादिना ब्रह्मस्वरूपा प्रतिपत्तौ दोष उक्तः , तथापि प्रौढवाद नैवं शंकेति ध्येयम् । अस्त्वमतत्वेन वेषेण ब्रह्मणः प्रतिपादनम् ,

मप्रतिपन्नमेव भवेत् । तथा प्यमतत्वे वाक्यतात्पर्यं, मतत्वव्यपदेश-स्तु गळोपारि गर्जितमिति चेन्न ;- विपरिवर्तस्य दुर्वारत्वात् । क-स्यामतत्वे वाक्यतात्पर्यं वर्ण्यते? ब्रह्मणइति चेत्? हन्त ब्रह्मणो वेद्यत्वभयं परित्यज्य किमेव मुच्चारयसि !! - । यदिचाकारभेदेन मत-त्वामतत्वयो र्व्यवस्था, तदाऽस्मत्पक्षेपि न काचित्क्षतिः? तत्तद्वा-क्यप्रतिपन्न गुणविभूत्याकारितवेषेण मतत्वं, वस्त्वन्तर स्वभावविर हेण तत्तत्प्रमाणागोचरतया ऽनवच्छिन्नविषयत्वादिना चा मतत्वमिति ।

एतेन - " अविज्ञातं विजानता " मित्यादिकमपि निर्व्यूढं । " विज्ञातारमरेकेन विजानीयात् " इत्यत्र कृच्छ्रेण ज्ञातव्यत्वे ता-त्पर्यं, बाह्यार्थप्रकाशनक्षम चक्षुराद्यगोचरत्वेवा ! एवं -" येनेदं स-र्वं विजानाति तं केन विजानीयात " इत्यादिकमपि भाव्यम् । यद्वा - " मत्तस्स्मृति र्ज्ञान मपोहनं च " इत्याद्युक्तप्रकारेण यत्प्रसा-देनेदं सर्वं विजानाति, तं परमात्मानं तत्प्रसादमन्तरेण केन विजा-नीयादिति । " यतो वाचो निवर्तन्ते, अप्राप्यमनसासह " इत्यत्रा-पि ब्रह्मानन्दस्य वाङ्मनसा परिच्छेद्यत्वे तात्पर्यं प्रकरणादौ व्य-

---

तथापि मतत्वस्या प्रतिपादना न्नानन्वय इति शंकते ( तथापीति ) ( गळोपरि गर्जितमिति ) अहृद्यमित्यर्थः । ( अस्मत्पक्षइति ) वेद्य-त्व पक्षइत्यर्थः । ( वस्त्वन्तरेति ) रूपादिविरहा त्तत्ग्रोचर प्रत्यक्षा द्यगोचरतये त्यर्थः ( अनवच्छिन्नेति ) अवच्छिन्नः - परिच्छिन्नः । सचासौ विषयश्चावच्छिन्नविषयः । अवच्छिन्नः - एतावद्गुणकएवैता-वद्विभूतिकएवेति प्रमितः । अवच्छिन्नविषयो न भवती त्यनवच्छिन्न विषयः । तत्प्रसादं विना दुर्ज्ञानत्वादि रादिशब्देन गृह्यते ( विज्ञा तारमिति ) ज्ञातव्यत्वमात्रनिषेधे केनेति हेत्वाक्षेपायोगा द्भगवत्प्रसा-दसहकृत न्यायोपबृंहित वेदान्तैरेव ज्ञातव्यत्वं विवक्षितमिति भावः ( एवमिति ) सापि श्रुतिः प्रमाणान्तरग्राह्यत्व विषयेत्यर्थः ।

क्तम् । अन्यथा यच्छब्दादिभि स्तत्प्रतिपादनासम्भवात् , " आनन्दं ब्रह्मणो विद्वान् " इति तद्विषयविहित वेदनासम्भवाच्च ।

एतेन – " न शब्दगोचरो यस्य " इत्यादिकमपि निर्व्यूढं, निष्कृष्टस्वरूपस्य देवादिशब्दागोचरत्वे वा तात्पर्यम् ।

एव मन्यान्यपि वेद्यत्वादिप्रतिक्षेपकाणि वाक्यानि प्रमाणान्तर श्रुत्यन्तर वाक्यशेष वाक्यस्थपदान्तराविरोधेन नेतव्यानि ।

" अनुभाव्यत्वे ननुभूतित्वमित्युपहास्यम् " इति तर्कदूषण मुपसंहृत्योपहास्यतां प्रतिपादयता ऽऽगमबाधादिकं सुस्पष्टमिति सूचितं मन्तव्य मिति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतौ शतदूषण्यां अवेद्यत्वभंगवादो विंशः ॥

---

"अन्यथा" अवेद्यत्वपरत्वे । "यच्छब्दादिभिः" - ' यतोवाच 'इत्यत्र । आदिशब्देन-आनन्दपदं ब्रह्मपदंच गृह्यते (एव मन्यान्यपीति) " यद्वाचानभ्युदितं " " अगृह्यो न गृह्यते " " न ग्राह्यः केनचि त्क्वचित " " मान्तु वेदनकश्चन " इत्यादीनि विवक्षितानि । " प्रमाणान्तराणि " -प्रकाश्यत्वादि लिंगकानुमानानि । " श्रुत्यन्तरं " – "ब्रह्मविदाप्नोतिपरं" इत्यादि । " यद्वाचानभ्युदितं " इत्यत्र " तदेवब्रह्मत्वंविद्धि " इति वाक्यशेषः । [" अगृह्योनगृह्यते " इत्यत्र – " सएषनेति नेत्यात्माग्राह्यः " इतिवाक्यशेषः] । " वाक्यस्थपदान्तराणि " – तदुपस्थापकानि यत्पदादीनि ।

यदाहनवीनः – चिदविषयत्वमवेद्यत्वं , आत्मनश्च चैतन्याभेदान्न तद्विषयत्वम् । नन्वेवमपि चैतन्यस्य कल्पितभेदेन चैतन्यविषयत्वं सम्भवति, सत्यभेदस्तु घटादावपि नास्तीतिचेत ? सत्यम् , अभेदे

भेदप्रयोज्य सम्बन्धायोगात्, धर्मिसमानसत्ताकभेदाभावे तत्समानस- त्ताकविषयत्वाभावेन रजतकालएव शुक्तिकाया अरजतत्ववद्वेद्यान्यत्वस्य सत्त्वेन स्वप्रकाशतानपायात्, इति ॥ तन्न, संविद्भेदस्य समर्थितत्वात्; कल्पितभेदस्य त्वयाप्यंगीकाराच्च । यदि च धर्मिसमसत्ताकवेद्यत्वाभावा द्ब्रह्मावेद्यमिति ब्रूषे, तर्हि ब्रह्म धर्मिसमसत्ताकवेद्यत्वाभावाद्यथाऽवेद्यं, धर्मिसमसत्ताककारणत्वस्या प्यभावात् ब्रह्माकारणमपि स्यात् ।

ननु व्यावहारिकमपि विषयत्वम् ब्रह्मणोनास्त्येव, धर्मिसमान- सत्ताकभेदस्य व्यावहारिक विषयत्वोपपादकत्वादितिचेत्; पुरुषान्तर चैतन्यस्य पुरुषान्तरचैतन्य विषयत्वाभावापत्तेरिति ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाधात्म्येन तदेकदेवतेन तच्चरण परिचरणपरायणेन तत्प्रसादलब्ध महाचार्या परनामधेयेन रामानुज दासेन विरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां अवेद्यत्वनिरासो

विंशः स्कन्धः ।



श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# अथ एकविंशोवादः ।

विविधविषयाकृष्टै र्वागादिभि स्सुलभागसां
स्वय मुपनतं स्वान्तर्ध्वान्तं चिरस्य निरस्य नः ।
भगवति हरौ प्रत्यक्त्वान्तरात्मनि निर्भर
प्रसृमरसुधाधाराकारा प्रसीदतु शेमुषी ॥

येतु स्ववचनविरोधजालमप्यवधीरयन्तःसर्वसाक्षिकामपि संवि-दुत्पत्तिं प्रतिक्षिपन्ति, तान्प्रति ब्रूमः । किं घटादिविषयप्रकाशात्मिकाया एव संविद उत्पत्तिः प्रतिक्षिप्यते; उत सकलविषयविरक्तायाः

---

यतिपति परिदृष्टं प्रेष्ठमाम्नायवाचां-
शुभमतिभिरुपास्यं शुद्धसिद्धांतमार्गं ।
जनिपथभयभाजां लक्षय न्सानुकम्पो-
जयति भुवि वधूलश्रीनिवासार्यवर्यः ॥

बाह्यादिभि श्चिरनिरुद्ध निजप्रकाशे
पाणिन्धमीभवति वेदपथे समीचि ।
श्रीमद्यतीन्द्र कृतिरत्न रुचिप्रचारै-
स्संचारयन् जयति नः कविवादिसिंहः ॥

(ये पुनरिति) स्ववचनविरोधश्च "प्रतिवादिन श्शिष्याणांचे"त्यादिना वक्ष्यमाणोनुसन्धेयः (घटादिविषय प्रकाशात्मिकाया इति) अहमर्थधर्म भूताया इति विवक्षितम् । तेन तदभिमतसंविदोघटादिप्रकाशात्मकत्वात् कोटयन्तराभेदशंकाया अनवकाशः (सकलविषयविरक्ताया इति) स्व-

कस्याश्चि दन्यस्याः? नाद्यः, घटादीनामप्यनुत्पत्तिमत्त्वप्रसंगात् । नहि तदुत्पत्तेः प्रागेव तद्विषया प्रत्यक्षसंवि दस्मदादीनां सम्भवति । अन्यथाऽ स्मदादीनामपि सर्वदा सर्वज्ञत्वप्रसंगात् ।

ननु पूर्वं स्वरूपेणावतिष्ठते, पश्चात्तु सामग्रीवैचित्र्या त्तत्तद्घटादिविषयाभविष्यतीति चेन्न;- सत्यां संविदि सामग्र्या एवा नपेक्षणात् । तत्तद्घटादिविषयीकरण लक्षणसम्बन्धार्थं तदपेक्षेति चेन्न;- सामग्रीविशेषप्रातिनियत संवित्स्वरूपातिरिक्त सम्बन्धकल्पने प्रमाणाभावात् । संवित्स्वरूपनित्यत्वे श्रुतिसिद्धे सामग्रीवैयर्थ्यपरिहाराय तत्कल्पन मिति चेत्? स किं संविदि साध्य आकारः? उतानादिसिद्धं संवित्स्वरूप

---

**तः इति शेषः, वृत्त्याद्यवच्छेदे विषयोपरोधात् । कस्याश्चिदिति तुच्छत्वं व्यज्यते ( अन्यस्या इति ) अनहमर्थधर्मभूताया निर्द्धर्मकाया निराश्रयाया इत्यर्थः । ईश्वरस्यविषयोत्पत्तेः प्रागपि तत्प्रत्यक्षमस्त्येवेत्यत उक्त मस्मदादीनामिति । ईश्वरव दस्मदादिप्रतीतेरपि प्रतीतित्वादेवानुत्पन्नविषयतास्या दित्याशंक्य तथा सति कारणापेक्षाविरहात् सर्वदा सर्वेषां सर्वज्ञत्वं स्यादित्याह ( अन्यथेति ) ननु पूर्वंघटादिकमविषयीकृत्यैव स्थिता ऽहमर्थभूता संवि त्तत्तद्विषयेन्द्रियसन्निकर्षादिसामग्रीवशा त्तत्तद्घटादिविषया भविष्यतीति शंकते ( नन्विति ) किमिदं सामग्रीवैचित्र्यात् घटादिविषया भविष्यतीति । किं घटादिविषयकं ज्ञान मुत्पद्यत इत्यर्थः , उत विषयीकरणलक्षणसम्बन्ध उत्पद्यत इति । नाद्य इत्याह ( सत्यामिति ) द्वितीय माशंकते ( तत्तदिति ) तत्तत्प्रत्यक्षानुमानादिसामग्र्यनन्तरं साक्षा त्करोम्यनुमिनोमीति तत्तत्सामग्रीप्रयुक्तकार्यवैजात्यस्य संविद्यनुभवात् तदर्थत्वमेव सामग्र्या युक्तमिति नसामग्रीसाफल्याय तत्तत्साध्यतया सम्बन्धकल्पन मित्याह । ( नेति ) " नहि द्रष्टु र्दृष्टे र्विपरिलोपो विद्यते नाविज्ञातुर्विज्ञाते र्विपरिलोपो विद्यते" "प्रकाश्यन्ते नजन्यन्त"इत्यादिभिः संविदो नित्यत्वावगमात्तत्ज्ज्ञानस्य तत्तत्सन्निकर्षा द्यनुविधानदर्शनाच्च सामग्र्यवैयर्थ्याय स्वरूपातिरेकीसम्बन्धः सामग्र्यास्तादर्थ्यंच कल्पनीयं, वैजात्यंच संबन्धगतमेवेति शंकते ( संविदिति ) ( किमिति ) सम्बन्धइति शेषः ।**

मेव? तत्र सधर्मकत्व सविकारत्वादिभीरुणा भवता प्रथमः पक्षो न कक्षीकार्यः । आरोपितधर्मविकारान्वया ददोषइतिचेन्न;— आरोपस्यैव विषयीकरणात्मकस्य निरूप्यमाणत्वात् । यदिहि विषयीकरण मप्यारोपितं, तर्हि तद्विषय विषयीकरणा न्तरापेक्षयाऽ नवस्था । क्वचिद्वा विषयीकरणस्य सत्यत्वे [न] प्रागुक्तोदोषः ।

नच विषयीकरण मारोपित मप्यविषय इति वाच्यम् ; व्याघातात् । नापि विषयीकरणान्तर मन्तरेण स्वरूपेणैव तत्प्रकाशत इति वाच्यम्, तत्रैव सामग्रीनैरपेक्ष्यप्रसंगेन सर्वदा संविद् स्तद्विषयत्वे तत्सम्बन्धिघटादेरपि सर्वदा प्रकाशप्रसंगात् ।

---

त द्विषयीकरणं धर्मरूपं विकाररूपंवा मिथ्याभूतं विषयीकरणान्तर मपेक्षते, किंवासत्यभूत मिति निरूपणीय मित्याह (आरोपितस्येति) (विषयीकरणान्तरापेक्षयेति) मिथ्याभूतविषयकिरणान्तरापेक्षयेत्यर्थः । (नप्रागुक्तो दोष इति) किन्तु अपसिद्धान्तइति शेषः । (व्याघातादिति) आरोपितस्य प्रतीतिनियतसत्ताकत्वादिति भावः । ननु संवित् घटादिप्रकाशएव विषयीकरणमपेक्षते, नतु विषयीकरणेपि, स्वरूपस्यैव तत्प्रकाशात्मकत्वा दितिशंका मनूद्य परिहरति (तत्रैवेति) विषयीकरणविषये सामग्री नैरपेक्ष्यात्, नित्यभूतायास्संविदस्सर्वदा तद्विषयत्वे विषयीकरणस्य सर्वदा भानात् विषय भानं विना तद्भानायोगात घटादीनामपि सर्वदा भानप्रसंग इत्यर्थः । किञ्च विश्वव्यापतायां नित्यायांच सर्वदेशकालवर्त्ति पदार्थाधिष्टानत्व योग्यायां संविदि प्रपंचाध्यास मवोचः, अस्मिश्च कल्पे अह मर्थ धर्मभूतायां तादृश्यां संविदि अध्यासो वाच्यः । तदतिरिक्त संविदध्यासे एतत्संविदा भानायोगात् , अधिष्टानसंविदैव भानाभ्युपगमात् । ततश्चाधिष्टानभूतया तया संविदा घटादीनां भानावश्यम्भावात कादाचित्क सम्बन्धापेक्षाविरहात् न तदर्थं सामग्र्यपेक्षा युक्ते-

किंच विश्वव्यापाया मनादौ संविदि तत्तदधिष्ठानतया भासमाना-
यां सम्बन्धार्थं सामग्रीगवेषण मिति भवतो नयुज्यते, नह्यसंवि दध्यस्तो
घटादिलक्षणः कश्चित्समस्ति भवतां; नच घटादिः सामग्रयधीनसंबन्धलक्ष-

---

त्याह ( किंचेति ) अधिष्ठानभूतयापि संविदा सामग्रयधीनसम्बन्धद-
शायामेव घटादिर्भासते, नान्यदेत्यत्राह ( नचेति ) तथासति मि-
थ्यार्थस्य भाननियतसत्ताकत्वात घटादे स्सन्निकर्षदशाया मेव सत्वं
स्यात नान्यदा, तच्च प्रमाणविरुद्धं त्वदनंगीकृतं चेत्यर्थः।

नन्वस्तु दृष्टिसृष्टिः, चैत्रे सुषुप्ते तद्देहादिकं तंप्रति नास्त्यैव, जाग्रतो
मैत्रस्यतु त द्भ्रान्त्या, प्रत्यभिज्ञातु सोयं देवदत्तइतिवत् भ्रान्तिरिति।
अत्राहुः। दृगन्यस्य सर्वस्य दृष्टिसृष्टित्वे तत्तत्कार्यस्य प्रतीतिमात्रशरीरत्वे-
न नियततत्तत्कारणाजन्यत्वे श्रुतिषु स्वर्गार्थं ज्योतिष्टोमादि विधेः
ब्रह्मसाक्षात्कारार्थं श्रवणादिविधे राकाशादे र्वाय्वादिहेतुत्वोक्ते-
श्चायोगात, तत्रापि तृप्तयर्थं भोजने परप्रत्यायनार्थं शब्दोच्चारणादौच
प्रवृत्त्ययोगेन स्वक्रियादिविरोधाच्च। यदि तूक्तश्रुत्यादिकमपि स्वाप्नश्रु-
त्यादितुल्यमिति न पर्यनुयोज्यम् । त र्ह्यद्वैतश्रुतिमीमांसादिकमपि-
तथेति न तेनाद्वैतसिद्धिः। दृष्टिसृष्टिपक्षे घटादेः स्वज्ञानात्पूर्वमस-
त्त्वेन प्रतिकर्मव्यवस्थानुपपत्तेश्च । शुक्तीदमंशस्य रूप्यव दिदं
रूप्यमिति ज्ञानात् प्रागसत्त्वेन संयोगादिहेतुत्रयजन्यत्वरूपस्याध्या-
सतटस्थलक्षणस्य सत्य मिथ्यावस्तु सम्भेदावभास लक्षणस्वरूप
लक्षणस्यायोगाच्च । इदं रूप्यमिति ज्ञानकाले शुक्तित्वादे रभावे-
नाध्यासस्य तदज्ञानकार्यत्वादि प्रक्रियाविरोधाच्च । इदं रूप्यं नेदं
रूप्यमिति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधक भावानुपपत्तेश्च।
रूप्यादि बाध्यस्यापि दृष्टिसृष्टित्वेन तेन रूप्यादे मिथ्यात्वासिद्धेश्च।
सुषुप्तिप्रळयादौ जीवब्रह्मविभागस्या प्रतीतत्वेना विद्यमानतया प्रत्य-
हं प्रतिप्रळयंच मुक्तस्य पुनरावृत्त्यापाताच्च। सुप्तंप्रति संस्कारादेरप्य-

कार्यत्वादिप्रक्रियाविरोधाच्च । इदं रजतं नेदं रूप्यमिति ज्ञानयो र्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तेश्च । रूप्यादिबाधस्यापि दृष्टिसृष्टित्वेन तेन रूप्यादे र्मिथ्यात्वासिद्धेश्च । सुषुप्तिप्रळयादौ जीवब्रह्मविभागस्या प्रतीतत्वेन विद्यमानतया प्रत्यहं प्रतिप्रळयंच मुक्तस्य पुनरावृत्त्यापाताच्च । सुप्तं प्रति संस्कारादे रप्यभावेन तस्य पुनरुद्बोधायोगाच्च । मोक्षस्यापि दृगन्यत्वेन स्वाप्नमोक्षव दृष्टिसृष्टित्वापाताच्च । चिन्मात्रस्यैव घटादिदृष्टित्वे तस्य सर्वदा प्रतीत्यापत्त्या विशिष्टस्य तत्त्वे वाच्ये तस्यापि विशिष्टस्य दृष्टिसृष्टित्वे ऽनवस्था प्रसंगाच्च । उक्तन्यायेन दोषाज्ञानदृष्टिदेहेन्द्रियादीना मभावे भ्रान्त्ययोगेन तेषामपि दृष्टिसृष्टित्वे ऽनवस्थापाताच्च । घटादे र्दृष्टिसृष्टिरित्यस्यापि दृष्टिसृष्टित्वेन घटादे रदृष्टिसृष्ट्यापाताच्च । प्रत्यभिज्ञाविरोधाच्च । दीपादौ परिमाणादिभेदस्यैवेह बाधकस्याभावात् । तदभावेपि भ्रान्तित्वेच घटादे रप्येकस्मिन्नपि क्षणेभेदस्यात्मनोपि प्रतिक्षणं भेदस्यच प्रसंगात । सोयं देवदत्तइत्यादि दृष्टान्तेन तत्वमस्यादौ जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोगाच्च । अभेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगाच्च । "ध्रुवाद्यौः, ध्रुवापृथिवी, ध्रुवासः पर्वता इमे, ध्रुवं विश्व" मित्यादिश्रुतिविरोधाच्च । भिन्नत्वेन प्रतीतस्य घटपटादे रभेदः, अभिन्नत्वेन प्रतीतस्य तु घटस्य प्रतिक्षणं भेद इति दृष्टहानादृष्टकल्पनापाताच्च । "अस्मादात्मनस्सर्वे प्राणा स्सर्वे लोका स्सर्वे वेदा स्सर्वाणि भूतानि व्युच्चरन्ती" ति श्रुतावपि पूर्ववाक्ये "यत्रैष एतत्सुप्तो भूदि" ति सुप्ताधारत्वेनोक्तस्य ब्रह्मणः सर्वस्रष्टृतोच्यते, नतु सुप्तोत्थिताज्जीवा त्प्राणादिसृष्टिः, येनेय न्दृष्टिसृष्टौ मानं स्यात् । अन्यथा वाक्यशेषे- "नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीतत मभिप्रतिष्ठन्त" इत्यादिना सुषुप्तौ नाड्याद्युक्तिः, "यथोर्णनाभि स्तन्तुनोच्चरे द्यथाग्नेः क्षुद्राविस्फुलिंगा" इत्याद्युक्तिः, अत्रापि वाक्ये - "सर्वे लोका" इत्याद्यु-

क्तिश्चायुक्ता स्यात। नहि दृष्टिसृष्टिपक्षे सुषुप्तौ नाड्यादिकं ऊर्णनाभ्यग्न्यादित स्तन्तुविष्फुलिंग जन्मवा सुप्तोत्थितस्य सर्वलोकादि दृष्टिर्वास्ति। नचोर्णनाभि तंत्वग्निविष्फुलिंग दृष्टान्तो दृष्टि सृष्ट्य नुगुण इति।

अत्र कश्चिदाह - दृष्टिसृष्टिपक्षे सर्वापि व्यवस्था स्वप्नवदुपपद्यते, " अनादिमायया सुप्तो यदा जीवः प्रबुध्यत " इति श्रुत्या जाग्रतोपि जीवस्य सुप्तत्वोक्त्या दृष्टिसृष्टेस्तात्पर्यविषयत्वेन प्रतिपादितत्वात्। कथंचि दैनन्दिनस्वप्नवैलक्षण्येपि कुण्डपायिना मयने " मासमग्निहोत्रं जुहोती " त्यादाविव धर्मातिदेशस्या वश्यकत्वात्। दृष्टिसृष्टेश्च प्रसिद्धस्वपरधर्मत्वा द्भवति तत्पुरस्कारेण प्रवृत्ता श्रुति स्तत्र मानम्। किंच - देवदत्तस्य जाग्रदवस्था स्वप्नो भवितु मर्हति, बोधनिवृत्त्यवस्थात्वात्, तस्यैव दैनन्दिनस्वप्नावस्थावत्। नच जागर्मीत्यनुभवविरोधः, दैनन्दिनस्वप्ने तादृशानुभवेपि यथा नस्वप्नत्वविरोधः तद्वदुपपत्तेः। एवंच पुरुषस्या शीतिसंवत्सरसाध्यस्वप्नांगीकारा न्नकोपि विरोधः। नच मुक्तस्य पुनरावृत्त्यापातः, विभागप्रागभावा समानकालीन विभागप्रध्वंसस्यैव मोक्षत्वेन सुषुप्त्यादौ मुक्त्यभावादिति।

तन्न, स्वप्ने व्यवस्थाया असिद्धेः। नहि तत्र कारण मपेक्ष्यैव कार्योत्पत्ति र्दृश्यते, किन्तु - क्वचिद्दण्डादौ सति क्वचित्तदभावेपि घटोत्पत्ति र्दृश्यते, अतः कारणापेक्षानियमो ऽनुपपन्नः। किंच बहुकालव्यवहितस्वर्गो नस्वप्ने दण्डादिसामग्रीदर्शनानन्तरं घटवत् यागदर्शनानन्तरमेव दृश्यते। नच यागदर्शनानन्तर मदृष्टदर्शनं तदनन्तरंच स्वर्गदर्शनमिति वाच्यम्; नहि यागदर्शनानन्तरं नियमेना दृष्टदर्शन मस्ति, नच तत्सत्वेपि वा तदनन्तर मेव स्वर्गादिदर्शन मस्ति, नच यावत्स्वर्गोत्पत्त्यदृष्टदर्शनंवा। अत स्स्वर्गार्थज्योतिष्टोमादिविधि रनुपपन्नः। दृष्टिसृष्टिं जानत स्त

तृप्त्यर्थं भोजनादौ प्रवृत्ति रनुपपन्नैव । भोजने सत्यपि क्षुन्निवृ-त्त्यात्मक तृप्तिज्ञानाभावसम्भवेन तत्रैव व्यभिचारग्रहात् । बालानां मात्रादिभि राशितानां तदानीं तृप्तिज्ञानशून्यानां प्रबोधानन्तरं तृप्ति ज्ञानेनैव तृप्तिसृष्टे स्तत्रैव व्यतिरेकव्यभिचारग्रहाच्च । चैत्रे सुप्ते तद्देहादिकं तंप्रति नास्त्येवेत्युक्त्या स्वेनाज्ञातस्य स्वम्प्रत्यभावा दज्ञा-तपरोप्तबीजस्य केवलांकुरदर्शिन स्तव बीजाभावेप्यंकुरदर्शनेन व्य-भिचारग्रहा दंकुरार्थं बीजे प्रवृत्त्यनुपपत्तेः । मानाभावाच्च नदृष्टिसृष्टिः । " अनादिमायया सुप्त " इति श्रुतिस्तु तत्र नमानम् , तत्रहि त-त्वज्ञानाभावएव सुषुप्तिधर्मः प्रतिपाद्यते, नतु दृष्टिसृष्टिः । दृष्टिसृ-ष्टेरेव स्वाप्नधर्मत्वेन प्रतिपाद्यत्वे 'सुप्तो यदा प्रबुद्ध्यत, इति स्वाप विरोधिप्रबोधात्मकत्वेन प्रतिपाद्यमानतत्वज्ञानकाले दृष्टिसृष्ट्यभाव-प्रसंगात् । इष्टापत्तिरिति चेन्न; - अन्ततो वृत्तिरूपसृष्टे रावश्यक-त्वात । प्रत्युत इयं श्रुतिः ' मायया सुप्त ' इति वदन्ती तदभा-वमेव प्रतिपादयति । घटादिदृष्टेः प्राङ्मायया दृष्टे रभावेना भा-वात । दृष्टिसृष्टिपक्षे मायाधीनदृष्ट्यसम्भवात् । एतेन जगदुपा दानप्रतिपादक बहुश्रुतिविरोधोपि सिद्धः ।

यदप्यनुमानमुक्तं, तत्र किं जागरणमेव पक्षः, उत तथा प्र-तीयमानमात्रम् ? नाद्यः, स्वप्ने जागरणबुद्धितुल्यत्वोपपादनेन लोक सिद्धजागरणस्य जागरणत्वाभावात सुषुप्तिमोक्षयो रन्यतरस्यैव जागरणत्वप्रसंगेन तस्य पक्षत्वे बाधापसिद्धान्तयो रन्यतरप्रसंगात् । नाद्वितीयः, स्वप्ने जागरणबुद्धिविषयस्यापिपक्षत्वप्रसंगेन तत्र सिद्धसा-धनात । किञ्च - किं स्वप्नत्वमेव साध्यते; किंवा स्वप्नसाधर्म्यं ? नाद्यः, पूर्वत्र सुप्तधर्मातिदेशोक्तिविरोधात् । नद्वितीयः, सिद्धसाध-नात् । बोधनिवर्त्यत्वंच किं लोकसिद्धप्रबोधनिवर्त्यत्वं, किंवा तत्व-ज्ञाननिवर्त्यत्वं ? नाद्यः, सुषुप्तौ व्यभिचारात् । तस्या स्स्वप्नत्वे अ-वस्थात्रयविभाजक प्रमाणविरोधात् । नाद्वितीयः, असिद्धेः । अप्र-योजक श्चायं हेतुः ।

यदपि – विभागप्रागभावासमानकालीन विभागध्वंसस्यैव मोक्षत्वेन सुषुप्त्यादौ मुक्त्यभाव इति । तन्न, सुषुप्तिकाले विभागप्रागभावस्यापि विभागवदेव दृष्ट्यभावा दभावेन विभागध्वंसस्य सुषुप्तौ प्रागभावासमानकालीनतया मुक्तित्वानपायात् । नच दृष्ट्यभावादेव सुषुप्तिकाले नविभागध्वंस इति वाच्यम्, मोक्षकालेपि दृष्ट्यभावादेव तदसिद्ध्यापातात् ।

यच्च मतान्तरम् – प्रतिकर्मव्यवस्थादिसिद्ध्ये कल्पितं, घटादेः कुम्भकारादिसृष्टौ सत्या मेवा परा दृष्टिसृष्टि रस्तु । नच सृष्टिद्वयवैयर्थ्यं, सर्वत्र केवलस्य सृष्ट्यनन्तरं विशिष्टसृष्टे रावश्यकत्वात् । श्रुतावपि " तत्तेजो सृजते " त्यादिना केवलाना न्तेजोबन्नानां सृष्टि मभिधाय " तासां त्रिवृतं त्रिवृतमेकैकां करवाणी " ति केवलसृष्ट्यतिरिक्ताया विशिष्टसृष्टेः प्रतिज्ञायमानत्वदर्शनात् । तत्र केवलाना मर्थक्रियाकारित्वशून्यत्वेना सत्कल्पत्वप्रसंगे प्रयोजनसिद्ध्यर्थं विशिष्टसृष्ट्यभ्युपगमे प्रकृतेपि घटादे रप्रतीतिदशायां जलाहरणपाकाद्यभावेन तत्सिद्ध्यर्थं दृष्टिसृष्टे रावश्यकत्वात् । एवंच प्रतिकर्मव्यवस्थाद्युपपत्तिः । नचान्यसृष्टे वस्तुन्यन्यस्य कर्तृत्वानुपपत्तिः, कुलालसृष्टे घटादा वीश्वरस्यापि कर्तृत्वादिति ।

तत्रोच्यते । किमिदं दृष्टिसृष्टिरिति ? किं दृष्टे स्सृष्टिः, उत दृष्टिरेव सृष्टिः, अथ दृष्ट्या सृष्टिः ? नाद्यः, विवादाभावात् । नद्वितीयः, दृष्टेः कृत्यात्मकसृष्टिरूपत्वासम्भवात् । यत्तूक्तं, कार्यविषयः कर्तृनिष्ठो व्यापारएव सृष्टिः, अतो दृष्टिरपि सृष्टिरिति । तन्न, तन्मात्रे सृष्टित्वाव्यवहारात् । नहि यथा घटं करोती त्येत त्समानार्थतया घटं सृजतीति व्यवहरन्ति, तथा घटं पश्यती त्येत त्समानार्थतया घटं सृजतीति व्यवहरन्ति । प्रत्युत नायं सृजति किन्तु पश्यत्येवेव । तृतीयेपि – किं कुलालसृष्टस्यैव घटस्य

पुन स्सृष्टिः, उत व्यक्त्यन्तरस्य, अथ विशिष्टस्य ? नाद्यः असम्भवात । त्रिवृत्करणादिस्थलेपि पूर्वमसृष्टस्यैव सृष्टिः । तत्र संसर्गस्यैवोत्पत्तिः द्रव्यान्तरस्य तद्विशिष्टस्य वेत्यन्यदेतत । प्रयोजनाभावाच्च न पुनस्सृष्टिः । द्वितीयेपि - किं तद्व्यक्त्यन्तरं व्यावहारिकं, किंवा प्रातिभासिकं ? तत्राद्येपि दृष्टिः किं कुलालसृष्ट घटविषया सत्येव व्यक्त्यन्तरमुत्पादयति, उत व्यक्त्यन्तरविषयैव । नाद्यः, तद्व्यक्त्यन्तरस्य प्रत्यक्षविषयत्वाभावापत्तेः । नच तद्व्यक्त्यन्तरं स्वानन्तरभावि प्रत्यक्षविषय इति वाच्यम्, तस्य पूर्वप्रत्यक्षापेक्षया भिन्नविषयत्वे प्रमाणाभावात् । ननु - सामग्रीबला द्व्यक्तिद्वयविषय मेकं ज्ञान मस्त्विति चेत ? तथासति घटद्वयोपलम्भप्रसंगात् ।

ननु पूर्वघटोपादानत्वान्नविविच्य प्रतीति रिति चेन्न, अविकृतस्य घटस्योपादानत्वा योगात् । मृद्घटत्वेन परिणतेतिवत् सएव घट एतद्घटत्वेन परिणत इति प्रतीतिप्रसंगात् । प्रमाणाभावाच्च नव्यक्त्यन्तरोत्पत्तिः । यत्तु बौद्धच्छर्दिभक्षणं, घटादेरप्रतीतिदशाया मित्यादि । तच्च, सहकारिसमवधानासमवधानाभ्यां कार्यतदभावोपादानेन बौद्धान्प्रतिक्षिपद्भि वैदिकैर्निरस्तं । किंच दृष्ट्यासृष्टेपि घटे इच्छाकृत्याद्यभावे जलाहरणासिद्ध्या जलाहरणाव्यवहितप्राक्काले जलाहरणानुकूलकृत्यैव जलाहरणयोग्यघटव्यक्तिसृष्टिर्वाच्येतिकृति सृष्टि रेवस्यान्नदृष्टिसृष्टिः । अतएव न द्वितीयः, प्रातिभासिकस्य जलाहरणायोग्यत्वाच्च । यच्च कुलालसृष्टघटादेव जलाहरणं, मणिप्रभाविषये मणिबुद्धिन्यायेन व्यावहारिकघटसम्बन्धस्य प्रातिभासिकस्य प्रतीयमानत्वेन तत्प्रवृत्तस्य तल्लाभनियमादिति । तन्न, तथासति व्यक्त्यन्तरसृष्टिकल्पकाभावात् । नापि तृतीयः, विशेषणविशेष्यतत्सम्बन्धातिरेकिविशिष्टकल्पनेमानाभावात । यच्चोक्तं - केवलाद्विशिष्टं भिन्नमंगीकर्तव्यं, अन्यथा विशेषणविशेष्यतत्सम्बन्धातिरेकिविशिष्टानंगीकारे दण्डीपुरुषः दण्डपुरुषतत्सन्धा इति प्रतीत्योर्वैलक्ष-

ण्यंनस्यात् । विशिष्टस्यान्यत्वादेव - "विष्णवेशिपिविष्टाय" "विष्णुरुपाँशुयष्टव्यः ।" "संवत्सरमिन्द्रंयजेत ।" "तेषां महेन्द्रोदेवते" त्यादावपि देवताभेदासिद्धिरिति । तन्न, विशिष्टप्रतीतौ विशेषणसम्बन्धयो र्विशेष्यत्वासिद्धे दण्डपुरुषसम्बन्धा इति प्रतीतौ तयो रपिविशेष्यत्वाच्च प्रतीत्यो र्वैलक्षण्यस्य स्फुटत्वात् । विशिष्टस्यान्यत्वे दण्डीत्यादिप्रतीते र्निर्विकल्पकतापत्तेश्च । ततश्च विशिष्टप्रतीतेरेव सर्वत्र मानत्वात्, तस्या श्चातिरिक्तविशिष्टविषयत्वे विशेषणविशेष्य तत्सम्बन्धेषु मानाभावप्रसंगा त्प्रामाणिकपदार्थपरित्यागो ऽप्रामाणिकपदार्थस्वीकारइति महानयमनर्थः । नच वेदान्तिना मिन्द्रमहेन्द्रादेर्भेदः, तदभावेपि तत्तत्कर्मसु तत्तन्मन्त्रविनियोगबलादेव तथा तथा यजनोपपत्तेः । किञ्च-विशिष्टस्य विशेषणाद्भेदेऽ विद्याविशिष्टान्तःकरण विशिष्टस्य प्रतिबिम्बितस्य वा जीवस्य जडत्वमिथ्यात्वयोः प्रसंगात् ।

यच्चोक्तं- उत्पत्तिः प्रथमावगतिरिति वेदरूढत्वेन लोके घटादा वपि तस्यैवोत्पत्ति शब्दार्थत्वादिति । तन्न - किमुत्पत्तिः प्रथमावगतिरिति वैदिकेन केनचिद्वाक्येनोत्पत्तिशब्दस्य प्रथमावगतौ रूढत्वं प्रतिपाद्यत इत्युच्यते, उतप्रथमावगतौ वेदे उत्पत्तिशब्दप्रयोगा त्तस्य तत्र रूढत्वमवधार्यत इति, उत मीमांसक व्यवहारबलाद्रूढत्व मिति । नाद्य द्वितीयौ, असिद्धेः । न तृतीयः, गौणतया प्यन्यथा सिद्धियोग्य मीमांसकव्यवहारमात्रेण लौकिकस्य व्यवहारस्य बाधायोगात् । किंच - किमवगतिशब्दः प्रत्यक्षावगतिपरः, उतावगतिमात्रपरः । नाद्यः, "सोमेन यजेत" "यदाग्नेयोष्टाकपाल" इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वासिद्धेः । न द्वितीयः, घटाद्यर्थदण्डाद्युपादानाय वने प्रवर्तमानस्य पुरुषस्य तत्प्रवृत्तिहेतुभूत घट स्मरणकालएव घटस्योत्पत्तिप्रसंगाच्च । अपिच- कार्यविषयः कर्तृनिष्ठो व्यापारविशेष स्सृष्टिरिति त्वयैवोक्तं, तद्दृष्टेः सृष्टिरूपत्वे सृष्टे र्दृष्टयधीनत्वे चावगति रुत्पत्तिरित्यनेन विरुध्यते, उत्पत्ते र्घटादिधर्मत्वात् । इत्यलं कुतर्कमूल मिथोविरुद्धबहुविध प्रलापनिरसनेन ।

णमात्रसिद्धसत्ताकः। अतो यावदुत्पत्तिविनाशं घटादिप्रकाशो दुर्वारः।

प्रकाशत एव कस्मैचिदिति चेन्न;- सर्वस्मै प्रसंगात्। एकस्यामेवहि संविदि विश्वारोपो भवताम्। अनन्तसंविदध्यासात्प्रकाशाप्रकाशोपपत्ति रिति चेन्न;- घटादिविषयसंविदा मध्यस्तत्वे संविदन्तरानुपलम्भेच शून्यवादप्रसंगात्।

सत्यां संविदि नानात्वमात्र मध्यस्तामितिचेत्? तथासति सर्वत्र सर्व-

---

(अत इति) यतएव मध्यस्तो घटादिः प्रतीतिनियत सत्ताकः, यतश्च न सामग्र्यधीन सम्बन्धलक्षणमात्र सिद्धसत्ताकः, यतश्चाना द्यधिष्ठान संविद्धास्यश्च, अत इत्यर्थः (कस्मैचिदिति) ईश्वरायेत्यर्थः (एकस्यामिति) अहमर्थधर्मभूत संविदपि सर्वत्रैकैवेति भावः। उक्त दोषपरिहारायैवा नन्तास्संविद स्स्वीक्रियन्ते, ततश्च यस्य यस्यां संविदियोर्थोध्यस्यते तस्य तया संविदासोर्थो भासत इति प्रकाशाप्रकाशोपपत्तिरिति शंकते (अनन्तेति) अत्रच सर्वस्मै प्रकाश प्रसंग परिहार मात्रं शंक्यते, ननु याव त्सत्त्वं प्रकाश प्रसंग परिहारः। संवि त्स्वध्यास स्संवि दध्यासः। अद्वैतश्रुतिविरोधा न्नाध्यासं विना नानासंवित्सम्भवः, तत्रच किंसंविदध्यस्ता, किंवा तस्यां नानात्वमिति विकल्प्याद्यन्दूषयति (घटादीति) घटादिविषयसंविदा मध्यस्तत्वे तदतिरिक्तसंविदो नुपलम्भ निरस्ततया संविदध्यासस्य तदधिष्ठानकत्वासम्भवा दधिष्ठानान्तरासम्भवाच्च संविदध्यासस्य निरधिष्ठानतया शून्यवादप्रसंग इत्यर्थः। द्वितीयं कल्प माशंकते (सत्यामिति) भेदाध्यासेपि घटादिविषयकज्ञानस्य सर्वगतस्या नपाकरणा त्सर्वत्र सर्वविषयप्रकाशो दुर्वार इत्याह (तथासतीति) ननु चन्द्रे भेदाध्यासे सति यथा सव्य दक्षिणव्यवस्था, तथा घटविषयत्व तदविषयत्वव्यवस्थाप्युपपद्यत एव.

विषयप्रकाशो दुर्वारः, सर्वेषु प्रतिमाचन्द्रेषु कळंकप्रकाशवत् ।

यस्तु - दृग्दृश्ययो स्सम्बन्धानुपपत्त्या विश्व मपह्नोतु मीहते, स कथं तत्सम्बन्धार्थं प्रयतते । अतः संविदनुत्पत्तिवादिना मप्रकाशो वा याव त्सत्तं तत्प्रकाशोवा दुष्परिहरः ।

---

त्याशंक्याह ( सर्वेष्विति ) प्रतीयमानधर्माविरोधि धर्माध्यासएव त-यो र्धर्मयोः परस्परात्यन्ताभावसमानाधिकरणतया परस्परं भिन्नाश्रय-तया वा व्यवस्थायाः प्रतीति रुपपद्यते, नत्वन्यथापि, तथासति अळी-कचन्द्रत्वादेरपि व्यवस्थाप्रसंगात्, घटविषयकत्व पटविषयकत्वादि-कंच नपरस्परविरोधि, समूहालम्बने तदुभयदर्शनादिति भावः । किञ्चैवं प्रतीतिव्यवस्थायामपि घटविषयकत्व पटविषयकत्वाद्यन्यस्वरू-पस्य नव्यवस्थासिद्धिः, सव्यत्वदक्षिणत्वादेः प्रतीतिव्यवस्थायामपि एकस्मिन्नेवारोपितत्वेन परस्परसमानाश्रयत्वाभाव रूपार्थव्यवस्थाया अभावात् । नहि भेदारोपमात्रा त्स्वाभाविकाभेदो पगच्छति । तत श्च घटविषयकत्वादे र्नपरस्परसामानाधिकरण्याभावात्मक व्यवस्थासि-द्धिः । विषयीकरणलक्षणसम्बन्धस्य सामग्र्यधीनत्वे दूषणान्तर माह ( यस्त्विति ) "अन्यथे" त्यारभ्योक्त मर्थ मुपसंहरति ( अतइति ) यतएव घटादिविषयप्रकाशस्य कादाचित्कत्व मुपपत्त्ययोग्य मत इत्य-र्थः ( अप्रकाश इति ) प्रकाशके सत्यपि कदाचि दप्रकाशांगी-कारे कदाचिदपि प्रकाशो नस्यादित्यर्थः ( यावत्सत्तमिति ) याव त्संवित्सत्तमित्यर्थः । यद्वा - यावद्विषयसत्तमित्यर्थः । ज्ञानस्य नित्य स्यापि विषयसत्त्वदशाया मेव तत्प्रकाशकत्वस्य तै रंगीकारात् । एतेन कादाचित्कसंविद्विषय सम्बन्ध निराकरणेन वृत्त्यवच्छेददशा-यां संविदो विषयसम्बन्ध इति प्रत्युक्तं । वृत्तिरेव सम्बन्धः, साम-ग्र्यपि तदर्था, उत्पत्तिविनाशप्रतीतिरपि तद्विषयैवेति चेन्न ;

किंवृत्तिमात्रं सम्बन्ध उत तदाकार वृत्तिः । नाद्यः , घटप्रकाशकाले सर्वभानप्रसंगात् । न द्वितीयः, सुखादे रप्रकाश-प्रसंगात् । किञ्च संविद्विषयसम्बन्धो यदि वृत्तिः, तदा वृत्त्यभावद-शायां घटादे र्भानं नस्यात् । नचेष्टापत्तिः, अध्यस्तस्य प्रतीतिनियत सत्ताकत्वात् । तस्मात् सामग्र्यन्वय व्यतिरेकानुविधानादपि संविदुत्पत्ति प्रतीतेश्च संविदुत्पद्यत इति ।

अत्र नवीनाः, संविन्नोत्पद्यते, तद्धेतुत्वानिरूपणात् । तथाहि — न तावच्चक्षुरादि स्फुरणहेतुः, बाह्यगोचर चक्षुरादे रह नर्थसाधा रण स्फुरणाहेतुत्वात् । ज्ञानधाराकालीन स्फुरणस्य युगपदनेकज्ञाना जनक चक्षुराद्यजन्यत्वाच्च । नापि मनः, असाधारण प्रमाकरण-सहकृतस्यैव मनसो ज्ञानहेतुत्वादिति ।

ननु, बाह्यविषये चक्षुरादेः कारणत्वात् । आन्तरविषये करणा न्तरासहकृत मनसएव कारणत्वात् । ननु घटाद्याकारवृत्त्यवच्छिन्न स्फुरणस्यैवा हमर्थवृत्ति विषयात्मक तृतीयस्फुरणरूपत्वा [illegible] न्तेपि घटस्फुरणस्यैवा हमर्थादि तृतीयस्फुरणरूपत्वा [illegible] कथमियं व्यवस्थेति वाच्यम् । आन्तरमात्रगोचर स्फुरणे कारणान्त रासहकृतमनसः कारणत्वांगीकारात् । यद्यपि घट एव घटादि वृत्ते श्चक्षुराद्यपेक्षान्तःकरण परिणामत्वं, सुखादिवृत्ते स्तन्निरपेक्षा न्तःकरण परिणामत्वं च । सुखरूप वृत्त्यवच्छिन्न स्फुरणस्यैव सुख भासकत्वा त्सुखरूपावृत्तिः सुखज्ञानं भवत्येव । नच — ज्ञानधारा काले स्फुरणस्य चक्षुर्जन्यत्वा नुपपत्तिः, ज्ञानस्य स्फुरणाभिन्नत्वा त् । नन्वस्त्वेवं स्फुरणहेतुनिरूपणम्, अथापि स्फुरणस्योत्पत्ति रनु-पपन्ना । अस्तिहि - एतावन्तं कालमिद मनुभवन्नेवाह मासमिति धारोत्तरकालीन तदनुसन्धान हेतुभूतं धाराकालीनं धारास्फुरणम् । तस्यच जन्यत्वं जन्यज्ञानद्वय यौगपद्यायोगेन धारासमानकालीनत्वा नुपपत्ते रजन्यत्वस्यैव वाच्यत्वादिति चेन्न; - ज्ञानस्य स्वप्रकाशत्वां गीकारात् । नन्वयं घटइति जन्यप्रत्यक्ष [illegible]तज्ज्ञानविषयः, एतज्जनक[illegible]

प्रागभावरहिताया स्संविदः कथ मुत्पत्ति रिति चेन्न; - उक्तानुपपत्त्यैव तद्गत्वात् ।

ननु - नताव त्संविदा स्वप्रागभावग्रहः, स्वप्रागभावस्थितौ संविद नुत्पत्त्या ग्राहकाभावात् । तदपक्रमेतु विषयाभावादेव तद्ग्रहणायोगात् । नापि संविदन्तरेण तद्ग्रहः, निष्प्रतियोगिकाभावग्रहणायोगात् । प्रतियोगिन्याश्च संविद स्स्वतस्सिद्धाया स्संविदन्तरविषय त्वायोगा दिति ।

---

सन्निकर्षा नाश्रयत्वात् , सम्मतवत ! नचाप्रयोजकः, जन्यप्रत्यक्षविषयत्वे तज्जनकसन्निकर्षाश्रयत्वस्यैव प्रयोजकत्वात । घटजन्यं ज्ञानं नैतद्विषयम् , एतद्जनकत्वादिति वा नुमाना न्न स्वप्रकाशत्वसिद्धि रिति चेन्न; - किंविषयत्वं भेदघटितं विवक्षितम् , उतप्रकाश्यत्वमात्रं । आद्ये सिद्धसाधनम् । द्वितीये त्वन्मते बाधः, वृत्तेरप्रकाशतया तत्प्रकाश्यत्वा प्रसिद्धे स्तन्निषेधायोगात । वृत्त्यवच्छिन्न चैतन्यप्रकाश्यत्व विवक्षायान्तु बाधः, घटाकारवृत्त्यवच्छिन्न चैतन्यप्रकाश्यत्वस्य घटइव वृत्तावप्यंगीकारात् । वृत्तिविषयवृत्त्यन्तराभावा दस्मन्मते ना प्रयोजकत्वाञ्च । नच तज्जनकसन्निकर्षानाश्रयस्यापि जन्यतत्प्रत्यक्षविषयत्वेति प्रसंगः, त्वन्मतेपि तद्वृत्त्यवच्छिन्न चैतन्यभास्यत्वस्य तद्वृत्तिजनक सन्निकर्षानाश्रये प्यंगीकारे ऽतिप्रसंगात् । वृत्तेः स्वावच्छिन्न चैतन्यभास्यत्वाभाव प्रसंगात । यदिचानुसन्धाना द्यन्यथा नुपपत्त्या वृत्तेः स्वावच्छिन्नचैतन्यभास्यत्व मित्युच्यते, तदा ततएव मया पि जन्यज्ञानस्य स्वप्रकाशत्वां गीकारे को विरोधः । उक्तरीत्या द्वितीय मनुमान मपि निरसनीयम् । यदिच ज्ञानातिरिक्तं स्फुरणमिष्यते, तर्हि तस्य नित्यत्वे नैकत्वेनां गीकारा दन्धस्यापि रूपादिगोचरप्रवृत्ति प्रसंगात् । स्फुरणे सत्यप्यावरणेन प्रतिबन्धा न्न प्रवृत्तिरिति चेन्न ;- अनुभवविरोधस्य दुष्परिहरत्वात् । किञ्च - रूपस्या वरण मुत स्फुरणस्य । नाद्यः, जडत्वेनावरणा नंगीकारात् । न द्वितीयः,

नैवम्, स्वतः परतश्च तद्ग्रहोपपत्तेः। स्वत स्तावत् एतावन्तं कालं नकिंचि दह मज्ञासिषमिति यो ऽयं प्रत्ययः सहि सामान्यतः पूर्वकालवर्तिनं स्वात्माभावमपि गृह्णाति। नचातीतस्य प्रागभावस्य कथं विषयीकार इति वाच्यम्, अस्मदादिप्रत्यक्षज्ञान व्यतिरिक्तज्ञानेषु त्रिकालवर्तिनामपि ग्रहणात्। नचातीतस्या ऽसतो ग्रहणा दप्रमाणत्वम्, अतीतस्यापि स्वकाले सत्त्वात्, अन्यथा वर्तमानस्य पूर्वोत्तर कालासत्त्वेन तद्ग्राहिणो ऽप्यसद्ग्राहित्वेना प्रमाणत्वप्रसंगात्। गृह्य माणवैपरीत्याभाव एवहि प्रामाण्यं, नपुन र्ग्राह्यस्य ग्रहणसमकालत्वम्, अन्यथा – भवन्मतेनानिर्वचनीय रजतसमकालवर्तिन्या रजतभ्रान्तेः प्रामाण्यप्रसंगात्। संवित्प्रागभावग्राहकं किमिदं प्रमाण मिति चेत्? यद्घटाद्यभावग्राहकं तदेव। प्रत्यक्षानुप्रविष्टयावा पृथक्प्रमाणात्मिकया वा योग्यानुपलब्ध्या घटाद्यभावग्रह इति चेत्? इहापि तथैव।

---

**स्पर्शस्या प्यस्फुरणप्रसंगात्। तदवच्छिन्नमपि हि विशेषणविशेष्याभ्या न्नातिरिच्यत इति।**

**संवित्प्रागभावस्य स्वप्रतियोगिग्राह्यत्वं सम्भवत्येवेत्याह (स्वतस्तावदिति) (इहापि तथैवेति)**

**अत्र नवीनः – नानुपलब्ध्या ज्ञानाभावग्रहः शक्यते वक्तुं, अवेद्यज्ञानवादे ज्ञानस्यावश्य वेद्यत्वाभावेन सत्यपि तस्मिन् तदनुप लम्भ सम्भवात्, तदनुपलब्धे रधिकरणे प्रतियोगिसत्वा प्रतिकूलत्वात्। अन्धकारस्थघटानुपलम्भव ज्ज्ञानानुपलम्भस्या प्यभावाग्राहकत्वात्। नन्वन्धकारे घटानुपलम्भः सहकार्यभावात् सत्यपि घटे संगच्छते, इहतु ज्ञानग्राहकसामग्र्या मन स्सन्निकर्षादेः सत्वा त्तदनुपलम्भोधिकरणे तत्सत्त्वविरोधीति चेत्? किं मनसः संयुक्तसमवायो ज्ञानग्राहकसामग्री, किंवा संयोगविशेषघटित, तत्समवायः, अथवा ज्ञानान्तर सामग्र्यसहकृत स्संयुक्तसमवायः, उत बुभुत्सासहकृतः**

सएव । नाद्यः, ज्ञानानन्तरं तद्विषयकं ज्ञानं, तदनन्तरंच तज्ज्ञान-विषयकं, तदनन्तरंच तज्ज्ञानविषयक मित्येवं ज्ञानप्रवाहा विच्छेदप्रसंगात् । नहि - सत्यां सामग्र्यां किंचिज्ज्ञानं जायते किंचिन्नेति युक्तम् । न द्वितीयः, संयोगविशेषस्य निरस्तत्वात् । न तृतीयः, आत्मज्ञान सामग्र्यावश्यकत्वेन ज्ञानस्यैवा ग्रहणप्रसंगात् । न तुरीयः, अनुभुत्सितस्यापि ग्रहणदर्शनेन बुभुत्साया ज्ञानग्रहाहेतुत्वात् । तस्मा ज्ज्ञानस्य मानसत्वायोगा ज्ज्ञानानुपलम्भो नाधिकरणे तत्सत्ताविरोधीति न तदभावः प्रत्यक्ष स्स्यात् । स्वप्रकाश वादिमतेपि समवायस्या नित्यतया पाकरक्ते श्यामसमवायाभावेन सत्यपि श्यामे - पुरुषान्तरे तत्समवायाभावेन - तदनुपलम्भव दात्मनि ज्ञानसमवायाभावेनैव सत्यपि तस्मिंस्तदनुपलम्भ सम्भवात् । यदिच कश्चित्स्वप्रकाशं ज्ञानं समवायो नित्यइति ब्रूयात्, तन्मतेपि न ज्ञानाभाव श्शक्यते गृहीतुं, प्रतियोगिसत्ताविरोध्यनुपलम्भस्या भावात । ननु स्वप्रकाशज्ञानग्रहे तत्तत्सम्बन्धातिरिक्ता पेक्षाभावा त्पटज्ञानकाले घटज्ञानानुपलम्भ स्तत्सत्ताविरोध्य स्त्वेवेति चेन्न; - तन्मते घटज्ञानकालीनस्य पटज्ञानसमवायानुपलम्भस्य तन्निरूपक तज्ज्ञानविरहादिव घटज्ञानानुपलम्भस्यापि तन्निरूपक घटसम्बन्धविरहा दप्युपपत्तेः । पट ज्ञानकाले तदीयत्वानुभवाभावेपि ज्ञानमात्रानुभवस्य सत्वात् । ज्ञान ज्ञेययोः स्वरूपमेव सम्बन्धइति मतेपि यथा चत्वरीयघटाभाव भूतलयोः स्वरूपमपि सम्बन्धः कालभेदेन, नतु सर्वदा, अन्यथा घटवति घटाभावभ्रमस्यं विद्यमानाभाव भूतलवैशिष्ट्यविषयत्वेन प्रमात्वापातात; एवं ज्ञानज्ञेययोरपि कालभेदेन सम्बन्धस्वभावं स्वरूपमपि - सम्बन्धिनो स्सतोरपि सम्बन्धाभावोपपत्तेः । अपिच ज्ञानाभावः केन ग्राह्यः ? मनसेति चेत् ? किं मनः प्रतियोगिनमपि गृह्णाति, उताभाव मात्रं ? चरमे अभावमात्रं सिद्ध्येत्, नतु तस्य ज्ञानसम्बन्धित्वम् । प्रथमे ज्ञानस्य मानसत्वे न तस्य स्वप्रकाशत्वम् । अविद्यमानज्ञानस्य मानसत्वं न विरुद्धमिति चेत; तर्हि स्वप्रकाशत्वं विद्यमानत्वप्रयुक्तं स्यात्, न ज्ञानस्वरूपप्रयुक्तम् । तथाच सति घटादेरपि स्वप्रकाश

त्वापत्तिः । विद्यमानदशायां ज्ञानं स्वप्रकाशमिति चेत ? किं विद्यमानदशायां ज्ञानस्य स्वप्रकाशत्वे विद्यमानत्वमेव प्रयोजकम् , उतविद्यमान ज्ञानत्वं, ज्ञानत्वमात्रंवा ? प्रथमेति प्रसंगात् , द्वितीये गौरवात् , तृतीयमेव वाच्यम् । तथाचातीतादि ज्ञानं कथं मनसा गृह्येत । ज्ञानाभावस्य मनसा सम्बन्धाभावाद्य । संयुक्तविशेषणतासम्बन्ध इति चेन्न ;- निरवयवस्य मनसः निरवयवेनात्मना संयोगासिद्धेः । संयोगोह्यव्याप्य वर्तते । नच निष्प्रदेश आत्मनि मनसि च तस्याव्याप्यवृत्तिता संगच्छते । नच निष्प्रदेशे प्यौपाधिकप्रदेशो युज्यत इति वाच्यम् , उपाधिर्ह्युपधेयेन सम्बद्ध्य तमवच्छिन्द्यात् , अन्यथातिप्रसंगात् , तत्सम्बन्धश्च निरवयवे संयोगानुपपन्नएव । तस्या प्युपाध्यन्तरापेक्षाया मनवस्था स्यात । किंचाय मौपाधिकः प्रदेशः पारमार्थिकः, उत न? आद्ये तदेकत्व व्याघातः; विरुद्धयो रेकत्रा समावेशात् । औपाधिकत्वं ह्युपाधिजन्यत्वा त्तज्ज्ञाप्यत्वा दुपाध्यधीन सम्बन्धाद्वा ? आद्ये ऽग्निसम्बन्धा द्रक्तिमोत्पत्तौ श्यामतो पाधिजन्यभेदान्निर्भेदता व्यावर्तेत । नवा कश्चिदुपाधि रुपधेयस्वरूप व्यतिरेकेण तज्जन्योभेदस्सम्भवति । एव मप्यणुमनसि प्रदेशभेदासम्भवाद । नापि द्वितीयः, स्वाभाविकप्रदेश भेदाभावे उपाधिना तज्ज्ञानासम्भवात् । आरोपितप्रदेशभेदज्ञानेवा तव मतेऽ र्थाभावेन संयोगस्य प्रदेशवृत्तित्वासिद्धेः । न तृतीयः, तव मते तत्प्रतियोगिकभेदस्य तस्मिन्नसम्भवात । अन्यथा तस्मि न्नतद्बुद्धेः प्रमात्वप्रसंगाद । नापि द्वितीयः, अपारमार्थिकस्या निर्वचनीयस्य भेदस्य त्वया ऽनभ्युपगमात् । अत्यन्तासतश्च धर्मस्या प्यस्थापकत्वात । अस्तु तर्हि संयोगो व्याप्यवृत्तिरिति चेन्न; - तस्य स्वात्यन्ताभाव सदेशत्वानुभवात् । अत्यन्ताभाव प्रतियोगिनोश्च प्रदेशभेदनियमात् । अन्यथा विरोधो दत्तजलाञ्जलिस्स्यात् । निमित्तसंयोगा न्यूनातिरिक्तदेश विभु विशेषगुणानां सर्वत्रोपलंभ प्रसंगाच्च । नच संयोगातिरिक्त स्सम्बन्ध आत्ममनसो स्सम्भवति । नचानुपलब्ध्या ज्ञानाभावग्रहः, प्रतियोगिग्राहकेन्द्रियेणाधि-

करणग्रहण लक्षण सहकारि विरहात् । अन्यथा त्वक्संप्रयुक्त घटे अन्धस्याप्यनुपलब्ध्या रूपाभाव ग्रहप्रसंगात् । अतोनित्योनुभवो ज्ञानाभावसाक्ष्ये षितव्यः । श्रुतिरपि " नहिद्रष्टु र्दृष्टेर्विपरिलोपोविद्यत " इति वृत्तिमदन्तःकरणसाक्षिणं नित्यमनुभवं दर्शयति ।

उच्यते – ज्ञानस्य स्वप्रकाशत्वात् ज्ञाने सत्यनुपलंभासंभवात्, ज्ञानानुपलब्ध्या ज्ञानाभावस्सुग्रहएव । नच ज्ञानाभावो पलंभदशायां ज्ञानाभावस्या सम्भवान्न तत्प्रत्यक्षमितिवाच्यम्, पूर्ववर्त्तितया कारणत्वा त्प्रत्यक्षोपपत्तेः । ननु प्रत्यक्षं स्वसमानकालं विषयं विषयी करोति, घटोस्ति जानामीति प्रत्यक्षयोः विषयस्यवर्तमानतावभासादितिचेन्न; – सन्निकर्षोपलक्षितकाल सम्बन्धित्वस्य वर्त्तमानत्वस्य ग्रहात् । ननु प्रत्यक्षेविषयस्य तत्कालवर्तित्व नियमाभावे क्वचिदपिनिष्कम्पप्रवृत्ति र्नस्यादितिचेन्न; – तत्कालवर्तित्वंहि नस्वरूपसदुपयोगि, अतिप्रसंगात्, किन्तु ज्ञातं, ततश्च किं प्रवृत्तिकाले वर्तमानत्वज्ञानं प्रवृत्तिहेतुः, उत ज्ञानकाले वर्तमानत्वज्ञानं? नाद्यः, प्रवृत्तिकारणीभूत ज्ञानेन प्रवृत्तिकालग्रहणासम्भवात् । नाद्वितीयः, ज्ञानकाले वर्तमानत्वे गृहीतेपि प्रवृत्तिकालेवर्तमानत्वाग्रहेण निष्कम्प प्रवृत्त्यनुपपत्तेः । किञ्च किमुत्पत्तिक्षणवर्त्तित्वं ग्राह्यं, उतस्थितिक्षणवर्त्तित्वं? नाद्यः, स्थितिक्षणवर्तित्वस्या ग्रहे प्रवृत्त्यनुपपत्तेः । नद्वितीयः, उत्पत्तिक्षणदशायां स्थितिक्षणस्या सिद्ध्या तद्ग्रहणस्या सम्भवात । विरम्यव्यापाराभावाच्च नक्षणद्वयस्य क्रमेण ग्रहण सम्भवः । किञ्च – सन्तन्यमान वीणादिशब्दे तत्तच्छब्दज्ञानं, ततस्सुखं चानुभूयते । तत्र प्राथमिकशब्द द्वितीयक्षणोत्पन्न द्वितीयशब्दस्य तत्क्षणोत्पन्नप्राथमिकशब्दज्ञानजनितसुख द्वितीयक्षणएव ग्रहो वक्तव्यः । तत्कालेच द्वितीयशब्दाभावा त्तद्ग्रहो नस्यात् । ननु – प्रत्यक्षस्य स्वकाले वर्तमानविषयत्व नियमाभावे सर्वस्य तत्कालावर्तिविषयकत्वशंकया क्वचिदपि निष्कंपप्रवृत्ति र्नस्यात् । इति चेन्न ; – शंकानुदयदशायां निष्कम्पप्रवृत्त्युपपत्तेः । शंकोदयेच तद्विधूननं विना माभून्निष्क-

म्पप्रवृत्तिः । अन्यथा शब्दग्रहणमात्रे स्वस्थितिकालावर्तमानविषयक-त्वदर्शना त्सर्वत्रापि तच्छंकया प्रवृत्ति र्नस्यात । क्वचि द्रजता-दिज्ञाने जाते प्रवृत्त्युत्पत्तिकाल एव विषयस्यापसरणे अन्यत्रापि त-च्छंकया निष्कम्पप्रवृत्ति र्नस्यात । ननु - प्रतियोगिज्ञानस्याभावज्ञाने कारणत्वा त्तस्मिन् सति ज्ञानाभावस्यैवासिद्धेः कथं ज्ञानाभावस्य प्रत्यक्षत्वमिति चेत ? प्रतियोगिज्ञानजनितसंस्कारादेव प्रतियोग्यव-च्छिन्नाभावप्रत्यक्षत्वोपपत्तेः प्रतियोगिज्ञानस्य हेतुत्वेपि स्मृतघट प्रत्यक्षाद्यभाव स्सुग्रह एव । यदुक्तं स्वप्रकाशवादिमते पीत्यादिना सम्बन्धिनोः सतोरपि सम्बन्धाभावोपपत्ते रित्यन्तेन ज्ञानसत्त्वेपि तस्यात्मनि सम्बन्धाभावा त्तदनुपलम्भसम्भव इति । तन्न, घटस-त्वेपि घटसम्बन्धाभावा दनुपलम्भसम्भवेन घटाभावस्याप्यनुपलब्धि ग्राह्यत्वाभावप्रसंगात । तत्र घटसत्वे घटसम्बन्धो प्यस्त्येवेतिचेत् ? तर्हि प्रकृतेपि तत्र ज्ञानसत्वे तत्सम्बन्धो प्यस्तीति तुल्यम् । कि-ञ्चैव मन्यथासिद्धिशंका योग्यानुपलब्धे र्ज्ञायमानतया हेतुत्वे दोष स्स्यात्, नच तथानुपलब्धि र्हेतुः, किंतु स्वरूपेणैव । किंच - तत्र तत्सत्वेपि तत्सम्बन्धाभाव उच्यते, यत्र क्वचि त्तत्सत्वे तत्स-म्बन्धाभावोवा? अन्त्ये कस्या प्यभावस्या नुपलब्धिग्राह्यता नस्यात । आद्ये श्यामादिदृष्टान्ता सामञ्जस्यम् । श्यामादिसम्बन्धाभाववति घटादौ श्यामादे रप्यभावात् । यदुक्तं - मनसा प्रतियोगिविशिष्ट ज्ञानाभावग्रहे स्वप्रकाशत्वभंगप्रसंगान्न मनसा ज्ञानाभावग्रहसम्भव इति । तन्न, ज्ञानान्तरविषयत्वेपि स्वप्रकाशत्वभंगाभावात् । ज्ञानं यथा घटनिरूपितप्रकाशः एवं स्वनिरूपितप्रकाशोपीतिहि स्वप्रकाश शब्दार्थः । ततश्च प्रयोजनाभावा दनुव्यवसायानंगीकारेपि परोक्ष ज्ञानविषयत्व मनिवार्यमेव । नचावेद्यत्वमेव स्वप्रकाशत्वं, तस्य जडत्वे प्युपपत्तेः । किंच - किमिद मवेद्यत्वं? किम्प्रकाश्यत्वाभावः, किंवा ज्ञानान्तरप्रकाश्यत्वाभावः । नाद्यः, ज्ञानस्य प्रकाश्यत्वाभावे तद्व्यवहाराभावप्रसंगात् । द्वितीये - स्वस्य स्वनिरूपितप्रकाशत्व मिष्यते, नवा? आद्ये तदेव स्वप्रकाशत्वं स्यात् । द्वितीये - स्वेन

परेणाप्यप्रकाशा द्व्यवहाराभावप्रसंगः । यदुक्तं - मनसा सम्बन्धाभावान्न ज्ञानाभावग्रहसम्भव इति । तन्न, विशेषणविशेष्यभावांगीकारे बाधकाभावात् । नच निरवयवयो स्सम्बन्धानुपपत्तिः, मनस स्साश्रयवत्वात् । तावताप्यव्याप्यवृत्तित्वसिद्धेः । अस्तुवा - प्रतियोगिद्वये प्यव्याप्यवृत्तित्वनियमः, स्वरूपसम्बन्धांगीकारे किं बाधकम् । अस्तुवा संयोगो व्याप्यवृत्तिरपि, अप्रयोजकत्वेन संयोगस्य स्वाभावसामानाधिकरण्यनियमासिद्धेः । नच शब्दस्य सर्वत्रोपलम्भप्रसंगः, आकाशस्य सावयवत्वेन यदवयवे निमित्तसंयोग स्तत्रैव शब्दोत्पत्तेः । निरवयवत्वेपि नदोषः, परस्परप्रतिघातकानां विभु द्रव्यभेदकत्वकल्पने बाधकाभावात् । भेदकत्वंच भेदप्रयोज्यप्रयोजकत्वम् । ततश्च भेर्यादिक माकाशेन संयुज्य स्वसंयुक्ते आलोकान्धकारावयवविशेषादिसंयुक्ता द्भेदव्यवहारं जनयति, अनन्यथासिद्धभेद व्यवहारस्य बला देवं कल्पने बाधकाभावात् । यच्च - प्रतियोगिग्राहकेन्द्रियेण नाधिकरणग्रहणमिति । तन्न, प्रतियोगिग्राहकेण मनसा तद्ग्रहणात् । ज्ञानमात्रस्य मनोजन्यत्वात् । ज्ञानस्यच स्वप्रकाशत्वान्मनो ग्राह्यत्व मनिवार्यमेव । नचैव मुक्तप्रसंगान्न विमुक्तिरिति वाच्यम्, प्रतियोगिग्राहकेन्द्रियकरणकाधिकरणज्ञानस्या भावग्रहहेतुत्वात् । प्रतियोगिग्राहकत्वंच नतत्करणत्वं, गौरवात् । किन्तु हेतुत्वमात्रम् । नापि प्रतियोग्यतिरिक्त प्रतियोगिविषयज्ञानजनकेन्द्रियेणाधिकरणग्रहणानियमः, गौरवादेव । वायौ रूपाभावाग्रहप्रसंगाच्च - नप्रतियोगिग्राहकेन्द्रियेणा धिकरणज्ञान मभावधी हेतुः । विस्तरस्त्वन्यत्र द्रष्टव्यः । एवं वेद्य ज्ञानवादेपि नानुपपत्तिः । ज्ञानोपलम्भकसामग्र्यां सत्यां ज्ञानानुपलम्भस्याभावग्राहकत्वात् । तदुपलम्भकंच मनस्संयोगादिकमेव । नचैवं ज्ञानप्रवाहाविच्छेदप्रसंगः, यथोपलम्भं विषयान्तरसामग्र्या अन्यस्यवा कस्यचि त्प्रतिबन्धकत्वसम्भवात् । अन्यथा दीर्घशष्कुलीं भक्षयतो युगप दनेकेन्द्रियसन्निकर्षात्क्रमिकज्ञानोत्पत्ति र्नस्यात् । अथवा - ज्ञानान्तरसामग्र्या ऽसहकृत स्संयुक्तसमवाय स्सामग्री । नचात्म ग्रहसामग्र्या स्सर्वत्र सम्भवा

अतिक्रान्तैवानुपलब्धि रुपलब्धिकाले कथ मुपकुर्यादिति चेन्न; - स्मृत्यभावकल्पितया प्राचीनयैव तया तत्सिद्धेः , प्रात र्गजाभावादि विज्ञानवत् । तद्वदत्रापि प्रमाणसंज्ञाविशेषो यथारुचि प्रक्षिप्यताम् ।

---

दसम्भव इति वाच्यम् , तस्यैव ज्ञानाभावज्ञानस्य घट न्नजानामी त्याकारकस्यात्मविशेष्यकतया ज्ञानान्तरत्वासिद्धेः । नच ज्ञानान्तर सामग्र्यभावस्य ज्ञानान्तराभावकल्प्यत्वा दनवस्थेति वाच्यम् , अज्ञा- ताया एवानुपलब्धेः कारणत्वात् । तज्ज्ञानस्य कारणत्वेपि तत्राद्र्याप्ये- तरसमवधानस्यैव ज्ञेयतया तद्व्याप्यस्य संयुक्तसमवायस्या ज्ञातत्वात्

यद्यपि प्रत्यक्षसामग्र्यनुप्रविष्टतया स्वतन्त्रया नुपलब्ध्योत्पन्नेन संविदन्तरेण नेदानीं घटं साक्षात्करोमी त्याद्याकारेण संविदन्तर- स्याभावो गृहीतुं शक्यते, तथाप्यतीतकालीन प्रागभावस्य तत्काली- नानुपलब्ध्या कालान्तरे ग्रहोनोपपद्यत इति शंकते ( अतिक्रान्तै वेति ) यद्यपि स्वकाले ग्रहणमात्रादपि ग्रहणानुपपत्तिनिबन्धनः प्राग- भावनिरासः परिहृतएव, तथाच कालान्तरे प्रागभावस्य ग्रहणाभा- वेपि नकाचित्क्षतिः , तथापि कालान्तरे ग्रहणसम्भवा त्तदुपपादय न्परिहरति ( नेति ) संवित्तत्कालीनतया नोपलब्धा, तत्कालीनतया अस्मर्यमाणत्वात् , इत्यनुपलब्धा वनुमितायां मह्यं तदा संविदभाववान् , तदा तद्वत्तयानुपलब्धत्वादिति तल्लिंगकानुमानेन संविदभावसिद्धेरित्यर्थः।

ननु प्रातर्गजाभावादि विज्ञानस्थले ऽस्मदंगीकृतानुपलब्धिप्रमाणे नैवार्थसिद्धिः, अत्रतुत्वयानंगीकारा त्कथंसंविदभाव सिद्धिरित्यत्राह ( तद्वदत्रापीति ) तद्वत् - प्रातर्गजाभावादि विज्ञानस्थल इवेत्यर्थः । यथाप्रातर्गजाभावादि विज्ञानस्थले कार्यानुसारात्कारण आवश्यके तस्मिन् यथारुच्यनुपलब्ध्यादि संज्ञाप्रक्षिप्यते, एवमिहा प्येतावन्तं कालममुं नाज्ञासिष मित्याकारक ज्ञानलक्षणकार्यानुसारात क्लृप्ते तत्करणे यथारुचिसंज्ञाप्रक्षिप्यतां, प्रमाणस्वरूपन्तु दुरपह्नवमेवेत्यर्थः ।

नच संस्कारविलयात् स्मृत्यभावः; प्रबलतरसुखदुःखकालदैर्घ्यादि संस्कारतिरस्कारकाभावे तदयोगात्।

नच सुषुप्त्यादय एव संस्कारोच्छेदकाः, तथासति पूर्वदिनाद्यनुभूतस्यास्मरणप्रसंगात्। तथाच सुप्तोत्थितः शत्रुमपि मित्रतया प्रतिपद्येत, पु[त्री]त्रमपि कळत्रतया, श्रोत्रमपि नेत्रतयेति, विश्वविप्लवः।

---

यत्रानुभूतेपि संस्कारविनाशा दस्मरणं तत्र व्यभिचार इत्याशंक्य परिहरति (नच संस्कारेति) तत्र व्यभिचारइतिशेषः (प्रबलेति) अनुभवेसतीति शेषः। तदयोगात् – स्मृत्यभावा योगा दित्यर्थः। तथाच तादृशसंस्कार तिरस्कारकाभाव विशिष्टास्मरण मेव हेतुः, सच नव्यभिचारीतिभावः। यद्वा – स्मृत्यभावमात्रस्य व्यभिचारात् संस्कारविलयाभावविशिष्ट स्मृत्यभाव एव हेतु र्वाच्यः, सचात्र सन्दिग्धः, संस्कारविलया दप्यत्र तत्सम्भवा दित्याशंक्याह (नचेति) (तदयोगादिति) संस्कारविलयायोगा दित्यर्थः। संस्कारविलायकाभावस्य प्रत्यक्षसिद्धत्वा त्संस्कारविलयाभाव स्सुग्रह एवेति भावः। अथवा – ननु कार्याभावस्य यत्किंचित्कारणाभावप्रयोज्यत्वा दत्र स्मृतिरूपकार्याभावो नुभवे सत्यपि संस्काराभावा त्स्या दित्यप्रयोजकत्व माशंक्य निराकरोति (नचेति) (प्रबलेति) यथा कार्याभावः कारणाभावव्याप्त स्तथा प्रबलतरदुःखादिविरहकालीन स्मृत्यभावो नुभवरूपकारणविशेषाभावव्याप्तः, निरुपाधिक सहचारादिति भावः। तदिति स्मृत्यभावः परामृश्यते। अनुभवे सतीति शेषः। नन्वेवं – पूर्वदिनानुभवाभावानुमानं नस्यात्, सुषुप्त्या संस्कारविच्छेदेन संस्कारविलायकाभावविशिष्टा स्मरणस्याभावात्, इत्याशंक्य परिहरति (नचेति) ननु सुषुप्तौ ताव त्संविदनुभूयते, नच सा तत्कालीनतया पश्चा त्स्मर्यते, तत्राह स्प्रत्ययविगमा द्विषयावच्छेदविरहाच्च संस्कारस्यानुत्पत्तेः, ततश्च तत्र व्यभिचार इत्याशंक्य

नच विषयप्रकाशविरहा दहम्भावविगमाद्वा संस्कारानुत्पत्त्या तद-स्मृतिः, अर्थान्तराप्रकाशासद्भावयोः प्रकाशमानसंस्कारोत्पत्तिप्रतिबन्धकत्वे ऽतिप्रसंगात् । नचाविशदप्रकाशरूपत्वा दस्मृतिः, सर्वदा संविदंशस्या स्मरणप्रसंगात् । नहि संविदंशे वैशद्यं तवास्ति, नित्यमेव निर्धर्मकत्वात् । विषयाश्रयोल्लेखा द्वैशद्ये तत्स्मृति रिति चेत् ? तदपि न, वैशद्य मन्तरेणा प्यन्धकाराद्यनुभूत वस्तुमात्रादिषु स्मृतिदर्शनात् ।

तदेवं स्वत स्तत्प्रागभावग्रह उपपादितः ॥

---

परिहरति ( नच विषयेति ) ( अर्थान्तरेति ) यदि सुषुप्तौ संविदनुभूयते, तदा तद्विषयसंस्कारो प्युत्पद्यते, नच तत्राह म्प्रत्ययविगमस्य विषयावच्छेदविरहस्यच संस्कारानुत्पत्तिप्रयोजकत्वं, तथा सति घटाननुभवस्य पटाभावस्य चानुभूतकुड्यसंस्कारप्रतिबन्धकत्व प्रसंगात्, अत स्तत्र संविदो स्मरणादेव तदननुभवसाधना न्न व्यभिचार इति भावः । ननु नतत्र स्मृत्यभावेन संविदननुभव स्त्वया साधयितुं शक्यः, सौषुप्तिकसंविदनुभवस्य निर्विकल्पकव दविशद-तया तत स्संस्कारानुत्पत्ते रेवा स्मरणोपपत्ते रित्याशंक्य परिहरति ( नचाविशदेति )( नहीति ) आपरोक्ष्यलक्षणवैशद्यस्य सुषुप्तावपि सत्वात् तदानी मविद्यमानं वैशद्यं संविदतिरिक्ताकारप्रकाशरूपत्व मेव वाच्यं, तत्तु त्वन्मते संविदो निर्धर्मकत्वा न्नसम्भवती त्यर्थः । ननु विषयाश्रयविशिष्टतया संविदुल्लेखो वैशद्यं, तच्च सुषुप्तौ नास्त्येव, नचैवं सति सधर्मकत्व मपीत्याशंकते ( विषयाश्रयेति ) ( अन्धकारादीति ) अत्र विरळालोकवदन्धकारो विवक्षितः । आदिपदेन काचादिकं विवक्षितम् । " वस्तुमात्रादि " ष्वित्यत्रादे-पदेन तादृशधर्ममात्रं गृह्यते । अस्तिहि मन्दालोके देवदत्तस्य तद्धर्मभूतदण्डादे रप्यविशदावभासः । वेद्यत्वानंगीकारे बाधकमाह

परतो ऽपि तत्प्रागभावग्रहः संविदो वेद्यत्वसमर्थनादेव सिद्धः। अन्यथा त्वद्वाक्यजन्यापि संवित्तत्प्रागभावस्य दुर्ग्रहत्वं नसाधयेत्, संवित्प्रागभाव दुर्ग्रहत्वग्रहणे संविद्ग्रहणावश्यम्भावात् । स्वप्रकाश स्वरूपमेव प्रतियोगित्वेनोपजीव्य तत्प्रागभाव दुर्ग्रहत्वं साध्यत इति चेत्? एवं तर्हि तत्प्रागभावग्रहे ऽपि तदेवोपजीव्यताम् ।

किञ्च- प्रतिवादिनः शिष्याणांच त्वत्सिद्धान्तार्थज्ञान मनुत्पन्नं मत्वैव त्वया वाक्यं प्रयुज्यते, स्वयमपि कदाचि द्गुरूपदिष्टं प्रतिवादिनिर्दिष्टं वार्थ मजानानो नजानामीत्येव भाषसे, जिज्ञाससेच, एवं मूर्खपण्डितविभागो ऽपि लोके बहुळ मुपलभ्यते । तदेत दखिलं ज्ञानप्रागभावग्रहाभावे कथं घटेत? ज्ञानादिविधिशास्त्रंच कथं जीवेत्? तदेवं स्वस्मिन् वर्तमानस्य भविष्यत्संवित्प्रागभावस्य गृहणं योग्यानुप लब्ध्या जायते। अतीतस्यतु स्मरणानुमानादिना । परगतस्याप्यनुमानादिनैव । अतः स्वतः परतोऽपि सिद्धः संविदः प्रागभावः ।

ननु – भवद्भिरपि धर्मभूतज्ञानस्यापि स्वरूपनित्यत्व मभ्युपेतं, ततश्च तत्प्रागभाव तदुत्पत्त्यादिसमर्थने ऽपसिद्धान्त इति चेन्न;- अस्माकं धर्मभूतज्ञानस्य सधर्मकत्वा दवस्थाविशेषवत्त्वा त्तत्तदर्थ सामग्रीसंभागमोपपत्तेः । तत्तत्प्रकाशात्मकावस्थाविशेषेषु च प्रागभावो त्पत्त्यादिबुद्धे रुपलम्भविरोधाद्यभावात्, अपसिद्धान्ततानवताराच्च ।

---

( अन्यथेति ) तन्मते यद्यपि वाक्यजन्यवृत्तिविषयत्वं स्वप्रकाशत्वेपि वक्तुं शक्यम्, तथापि वृत्तिनिरसन मभिप्रेत्यैत दुक्त मित्यवगन्तव्यम् ( अनुत्पन्न म्मत्वेति ) अन्यथा उपदेशवैयर्थ्यात्, ज्ञानवतः प्रत्युपदेशे तदुपदेशा विरत्यापातादिति भावः ( नजानामीत्येवेति ) पुन [illegible]श्चयोपदेशेच जानामीति, अतः पूर्वं तत्प्रागभाव एव गृह्यत इति भावः ( एवं मूर्खेति ) तस्यैव शास्त्राध्ययने पण्डितत्वात् तत्र ज्ञानप्रागभाव एव मौर्ख्यमिति भावः ( ज्ञानादीति ) ज्ञानस्यो त्पत्त्यभावे तस्यानादितया विधेयत्वासम्भवा त्तद्विषय माज्यावेक्षणादि

अनुभूतेः स्वस्थान्तरापत्तिरेव नसम्भवति, अजत्वादेवेति चेन्न; - स्वरूपानुत्पत्तिमात्रस्य भवदभिमता विद्यया अस्मदभिमतप्रकृत्यादिभिश्च व्यभिचारात् । समस्तव्यतिरिक्तत्वे सतीति तर्ककौशलम् । अन्ततो ऽप्रयोजकत्वंच । अवस्थान्तरापत्तिराहित्यस्य हेतुत्वे साध्याविशेषात्, मिथ्याभूतावस्थान्तरानिषेधे ऽपसिद्धान्तात्, सत्यावस्थानिषेधेच व्यतिरेकव्याप्तेर्भग्नत्वात । यत्सत्यावस्थाविशिष्टं तज्जायते, यथा घट इतिहि सा । नच घटादेः सत्यावस्थाविशिष्टत्वं त्वया भ्युपगम्यते ।

एतेना नुभूते र्विनाशनिषेधो पि प्रत्युक्तः, प्रागुक्तप्रकारेण प्रत्यक्षादिबाधाच्च । यदि घटाद्यनुभूति र्नविनश्येत्, तर्हि सुप्तत्वाद्यनुप-

---

शास्त्रं नजीवेदित्यर्थः । आदिशब्देन ज्ञानार्थश्रवणादिविधि र्ज्ञाननिषेधविधिश्च गृह्यते । अनुभूति र्निर्विकारा, अजत्वादिति शंकते (अनुभूतेरिति) किं स्वरूपानादित्वमात्रं हेतुः, उतावस्थाराहित्यं? नाद्यः, इत्याह (स्वरूपानुत्पत्तीति) नाद्वितीय इत्याह (अवस्थान्तरेति) किं मिथ्याभूतावस्थान्तरं निषिध्यते, उत परमार्थावस्थान्तरमिति साध्यमपि विकल्प्य प्रथमं दूषयति (मिथ्याभूतेति) द्वितीयं दूषयति (सत्येति) एतेनान्वयव्याप्तिरपि निरस्ता, प्रतियोग्यप्रसिद्ध्या साध्या प्रसिद्धेः । अत्रच परमार्थविकारासिद्धेः व्यतिरेकव्याप्तिं प्रत्येव साक्षाद्भञ्जकत्वा त्परस्य व्यतिरेक्यनुमानत्वाभिमानाच्च व्यतिरेकव्याप्तिरेव कण्ठतो निराकृता । स्वसमानसत्ताकविकारराहित्यसाधनेतु पूर्वोक्तएव व्यभिचार इति भावः । एतेनेत्येत द्विवृणोति (प्रागुक्तप्रकारेण प्रत्यक्षादिबाधाच्चेति) प्रागुक्तप्रकारेणेत्येको दोषः, सच सर्वदा सर्वज्ञत्वप्रसंगादिः । प्रत्यक्षादिबाधा च्चेत्यपरं दूषणं । ज्ञानं नष्टमित्यादिकं प्रत्येकम् । विस्मृतज्ञापनार्थ मुपदेशानुपपत्त्यादि रादिशब्दार्थः । यद्वा (एतेनेति) अविद्यायां व्यभिचारप्रदर्शनेने त्यर्थः । विनाशनिषेधः- विनाशनिषेधानुमानं, अजत्वलिंगक मित्यर्थः । दूषणान्तर माह (प्रागुक्तेत्यादि)

पत्तिः, भवत्पक्षे मोक्षानुपपत्तिश्च । क्रियमानायां तस्यां विषयोल्लेख विलक्षणावस्थाविशेषस्य प्राग्वदेव दुष्प्रतिपादत्वात् । प्रध्वंसेपि ग्राहका

---

"अतः स्वतः परतोपि सिद्धः संविदः प्रागभाव" इत्यत्र प्रत्यक्षादिबाधस्य फलितत्वात् प्रागुक्तेत्युक्तम् । ( विषयोल्लेखेति ). विषयोल्लेखात्मकविलक्षणावस्था विशेषस्येत्यर्थः । विषयानुल्लेखावस्थाया इति यावत् । स्वरूपात्मनो विषयोल्लेखस्य नित्यत्वेन विषयानुल्लेखावस्थाया अयोगादिति भावः ।

अत्र नवीनः - नित्योय मनुभवः, अनादिभावत्वात्, आत्मवत्, व्यतिरेकेण घटवद्वा । परमतेनान्वयी दृष्टान्तः । स्वमतेन व्यतिरेक दृष्टान्तः । नचाविद्यायां व्यभिचारः, भावविलक्षणायां तस्यां हेतोरभावात् । अनुभवविनाशहेत्वनिरूपणं चानुकूल स्तर्कः । वृत्तिविनाशवत् । स्फुरणनाशेपि कारणविनाशो नहेतुः, स्फुरणस्यानादित्वात् । नन्वविद्याविनाशव त्तद्विनाशो स्त्विति चेन्न; - तद्वदत्रान्वयव्यतिरेक सिद्धस्य शास्त्रसिद्धस्यवा विनाशहेतो रदर्शनात् । नच विरोधिगुणान्तरा त्तन्नाशः, तस्याह मर्थासमवेतस्य तत्समवेतगुणेना विरुद्धत्वादिति ।

अत्रब्रमः - अहमर्थ धर्मस्य पक्षत्वेबाधः । तदतिरिक्तस्य पक्षत्वे जीवेश्वरयोस्सिद्धसाधनं । अहमर्थ धर्मातिरिक्तस्य घटादिविषयक ज्ञानस्यपक्षत्व आश्रयासिद्धिः, वादान्तरे तस्य निरासात् । अन्तः करणधर्मातिरिक्तस्य पक्षत्वे ईश्वरादिज्ञाने सिद्धसाधनं । तदतिरिक्तत्वेन विशेषणे किमीश्वरसमवेतज्ञानं विवक्षितं, किंवा ईश्वररूपः, अथवा ईश्वरस्य व्यवहारहेतुभूतं ज्ञानं ? नाद्यः, त्वन्मते ईश्वरसमवेत ज्ञानस्याप्रसिद्ध्याश्रयासिद्धेः । न द्वितीयः, त्वन्मते सर्वस्यापीश्वरज्ञानाभिन्नतया आश्रयासिद्धेः । औपाधिकभेदमादाय ऽसिद्धिपरिहारे तस्यानित्यत्वाद्बाधः । अतएव न तृतीयः । अस्मदादिव्यवहारहेतुज्ञा-

भावचोद्यं प्राग्वदेव परिहर्तव्यम्। नच स्वरूपनित्यत्वे प्रध्वंसानुपपत्तिः, घटादिष्वपि सत्कार्यवादिभि स्तथैव प्रध्वंसस्य निर्वहणीयत्वात्।

उक्तंच भाष्ये -

"तमिमं इन्द्रियद्वारकज्ञानप्रसर मपेक्ष्योदयास्तमयव्यपदेश" इति।

---

अस्य पक्षत्वेपीश्वरज्ञाने सिद्धसाधनं। असाधारणकारणत्वेन विशेषणेच तादृशस्यनित्यतयाबाधः। नित्यत्वञ्च यदि विनाशाप्रतियोगित्वं तदाबाधः। घटादिध्वंसस्य ब्रह्मण्यध्यस्तत्वेनाधिष्ठानात्मक ब्रह्मणो ध्यस्त तदभावात्मकतया ध्वंसस्य तत्प्रतियोगिकत्वात्। यदि सर्वकालसम्बन्धित्वं नित्यत्वं, तदा मोक्षान्वयित्वासिद्धिः। मोक्षानन्वयित्वेपि अविद्यासम्बन्धादिव त्सर्वकालसम्बधोपपत्तेः। मोक्षेकालाभावात्। हेतु रप्यविद्यायां व्यभिचारी। अविद्यायाश्च भावत्वाभावे भावकार्यस्य तत्परिणामत्वासिद्धि प्रसंगः। एवमप्यविद्यासम्बद्धजीवादौ व्यभिचारश्च। भावपदेन सत्त्वविवक्षायामपि सत्त्वमात्रविवक्षायामुक्तदोषानतिक्रमएव। परमार्थत्व विवक्षाया मनादित्वविशेषणं व्यर्थं। अनादित्वस्य निरासात स्वरूपासिद्धिः। अप्रयोजकश्चायंहेतुः। नचानुभव विनाशहेत्वनिरूपणं, विरोधिगुणस्य तन्निवर्तकत्वे बाधकाभावात्। नच वैय्यधिकरण्यं, जानामीच्छामि द्वेष्मि सुख्यामि दुःख्यामीति समानाधिकरणतयानुभूयमानत्वात्। यदि ज्ञानस्यात्माश्रयः, तदा इतरेषामपि सएवाश्रयः। यद्यन्यः, तदानीमपि सएवेतरेषामपीति - नक्वचिदपि पक्षे ज्ञानवैय्यधिकरण्यमिच्छादीनां। किञ्च स्फुरणाख्यकार्यनाशस्य प्रत्यक्षसिद्धत्वा त्तदनुमितेसति कारणविशेषे विरोधिसंसर्गा दन्यस्माद्वा विनाशस्सम्भवति।

( नच स्वरूपनित्यत्वइति ) सिद्धान्तइतिशेषः ( तथैवेति ) उत्पत्तिवदेवावस्थामादाय निर्वहणीयत्वादित्यर्थः। किं सा संविदह

नापि द्वितीयः, अह मर्थविलक्षणाया निर्विषयाया स्संविदो ऽनुपलम्भानिरस्तत्वात् । मुक्तौ निर्विषयत्वस्या न्यत्र प्रतिक्षेपात् । स्वापमद मूर्छासु निर्विषयसंविदुपलम्भो स्तीति वाङ्मात्ररूपत्वात् । अहमर्थस्यतु स्वरूपमात्रप्रकाशात्मकस्य विषयान्तरविरहेपि घटादिविषयग्राहि संवि द्विलक्षणतया तदाश्रयतयाच प्रतिपन्नस्य भवता संविद्विलक्षणतया हङ्कारग्रन्थित्वाभ्युपगमात् । पक्षान्तरेतु तद्वदेव तद्धर्मभूतसंविदोपि सर्वदा निर्विषयत्वसाधनस्योपलम्भानिरस्तत्वात् । सुषुप्तौतु निर्विषयाया

---

मर्थविलक्षणा, उताहमर्थएव ? नाद्य इत्याह ( अहमर्थेति ) नन्व- नन्तः करणात्मिका हमर्थातिरिक्ता संविन्मुक्तौ निर्विषयेष्टव्या, तदा कृत्स्नप्रपंचस्य निवृत्तत्वात् , इत्यत्राह ( मुक्ताविति ) अन्यत्र-वा दान्तरे । द्वितीयंदूषयति ( अहमर्थस्यतिवति ) तुशब्देन निर्वि- षयसंविदोनुपलम्भानिरस्ततानेति सूच्यते । " स्वरूपप्रकाशात्म- कस्ये " ति वस्तुगत्यनुवादः । अपिशब्देन निर्विषयत्वांगीकार- स्सूच्यते । "घटादी" त्यादिना परेण संविद्विलक्षणत्वस्या नंगीकारेहेतु द्वयमाह । घटादिविषया वभासकत्वेन संवित्त्वेन संप्रतिपन्नापेक्षयाद्दश्य- त्वेन विलक्षणत्वात , तदाश्रयत्वेन प्रतिपन्नत्वाच्च संविद्विलक्षणत्वांगीकार इत्यर्थः । ननु त्वया हमर्थस्य निर्विषयसंवि द्रूपत्वांगीकारा त्वन्मतानुसारेण तद्दृष्टान्तीकृत्य त्वया हमर्थधर्मत्वेना भ्युपगताया वस्तुतो निराश्रयाया स्संविदो निर्विषयत्वं प्रसाध्य तस्या उत्पत्तिः प्रतिक्षिप्यत इत्यत्राह ( पक्षान्तरे त्विति ) अह मर्थस्या न्तःकरणभिन्नत्वपक्ष इत्यर्थः । किं संविद स्सर्वदा निर्विषयत्वं साध्यते, उत सुषुप्तौ ? नाद्यः इत्याह ( तद्वदेवेति ) द्वितीयं दूषयति ( सुषुप्ताविति ) त्वत्मते संविद स्सर्वदा स्वप्रकाशत्वाभ्युपगमा त्सुषुप्तौ निर्वियसंवि दस्तिचे- त्सा तदानीं प्रकाशेतेत्यर्थः । प्रकाशे चानुसन्धानप्रसंग इति भावः । एव मह मर्थस्य निर्विषयत्व मभ्युपगम्योक्तम् । इदानी मह मर्थस्य

स्तस्याः प्रकाशादर्शनात् । स्वमात्रप्रकाशस्याप्यह मर्थस्वरूपस्यास्माभिः प्रत्यक्त्वानन्दत्वादिविशेषवत्तयैव स्वतः प्रकाशत्वाभ्युपगमेन क्वचिदपि निर्विशेषप्रकाशानभ्युपगमात् ।

यद्यप्यस्मत्पक्षे सुषुप्त्यादिषु धर्मभूता संविन्निर्विषया, तथापि साश्रयत्वादिभि स्तदानीमपि ननिर्धर्मकत्वम् । विषयरहितायास्तु तस्या स्तदानीं नप्रकाश मिच्छामः । येन प्रतिसन्धानप्रसंगचोद्या न्नमुच्येमहि । उक्तंहि भाष्ये - "यत्त्वनुभूते स्स्वयं प्रकाशत्व मुक्तं, तद्विषय प्रकाशनवेळायां ज्ञातु रात्मन स्तथैव ।" इत्यादि ।

यच्चानुमानम् - अनुभूति रनुत्पन्ना, अनुभूतित्वादित्यादिकं । तदप्युपपादित प्रत्यक्षादिसमस्त प्रमाणबाधितं, प्रागुक्तप्रतिकूलतर्क जालप्रतिहतञ्च । केवलव्यतिरेकिभंग श्चान्यत्र कृतः ।

---

निर्विषयत्व मसिद्ध मित्याह (स्वमात्रेति) मात्रपदेन घटादिकं व्यावर्त्यते । नन्वस्माभि र्यादृशी संविदिष्यते तादृशी त्वयापि सुषुप्ता वभ्युपगम्यत एवेत्यत्राह (यद्यपीति) सुषुप्तौ निर्विषयत्वांगीकारेपि नत्वदभिमतनिराश्रयनिर्विषय निर्धर्मका हमर्थधर्मविलक्षण संवित्सिद्धिः, येन तस्या अनादित्वं साध्येतेति भावः । ननु यदि सुषुप्तौ निर्विषया संविदिष्यते, तर्हि तस्या स्तदानीं प्रकाशमानत्वा दुत्तरकाले तदनुसन्धानं स्यादित्यत्राह (विषयरहिताया स्त्विति) (केवलव्यतिरेकीति) अन्यत्र - बुद्धिसरे । ननु तत्र साध्याप्रसिद्ध्या व्यतिरेकी दूषितः, तत्प्रसिद्धिश्च कथंचिद्व्यतिरेकिवादिभि रुपपादितैवेति चेन्न; - साध्यप्रसिद्धिसम्भवेपि तदभावव्यापकाभाव प्रतियोगित्वलिंगेना न्वयिनैव साध्यसिद्धिसम्भवे व्यतिरेकिकल्पना नुपपत्तेः । नच प्रकृतेपि तथा सम्भवः, अप्रयोजकत्वेना नुत्पन्नत्वाभावानुभूतित्वाभावयो रेव व्याप्तिग्रहासिद्धेः । विषयोल्लेखराहित्यस्य

घटादिविषयो ल्लेखरहित स्वरूपमात्रपक्षीकारे चाश्रयासिद्धिर्वा सिद्ध साधनं वेत्यादि दूषण मूह्यम् ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य
वेदान्ताचार्यस्य कृतौ शतदूषण्यां संविदनुत्पत्तिदूषणवाद
एकाविंशः ॥ २१ ॥

---

सार्वकालिकत्वे आश्रयासिद्धिः, कादाचित्कत्वे धर्मभूतज्ञानस्य सुषुप्तौ तादृशस्य नित्यत्वा त्सिद्धसाधन मित्याह ( घटादीति ) आदि पदेन निश्चितसाध्यव द्विद्यादिव्यावृत्ते रसाधारण्यं विवक्षितम् ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत
परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण
परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन
रामानुजदासेन विरचितायां शतदूषणी
व्याख्यायां चण्डमारुताख्यायां
संवि दनुत्पत्तिभंग

एकविंशः स्कन्धः ॥ २१ ॥

श्रीरस्तु ।
श्रीमते रामानुजायनमः ।

# अथ द्वाविंशो वादः ।

परिणमयतिविश्वं यस्स्वयं निर्विकारः -
परिणमतिच योसौ तत्तदर्थान्तरात्मा ।
विषमविषयतृष्णा वन्यकान्तारजातं-
व्यपनयतुभयं मे विश्वजिष्णु स्सविष्णुः ॥

यदुच्यते - अनुभूतिर्निर्विकारा, अनुत्पन्नत्वात् , यदुक्तसाध्यं न भवति तदुक्तसाधनमपि न भवति, यथा घटादिरिति । तत्र संविदुत्प-त्यादि समर्थनादसिद्धिबाधौसुगमौ ।

किंच किमिदं निर्विकारत्वं नाम ? किमुत्तरावधिराहित्यं,

---

हितमहितम प्यास्माकीनं विभज्य दयानिधि
स्तुरगवदनो देव स्त्रैलोक्यरक्षण दीक्षितः ।
जयतिघटय न्वेदान्ताचार्य पादसरोजयोः
स्थित परतया निष्ठा मस्माक मात्महितैषिणां ॥
परिणतमहापुण्यै स्सारग्रहैक विचक्षणै
र्निरुपधिधना द्यस्मा दन्यत्तृणायच मन्यते ।
द्रुहिणपदमप्यद्धा श्री श्रीनिवासगुरोर्वयं
चरणकमलद्वन्द्वेनानेन साधुसनाथिताः ॥

( तत्र संविदिति ) आदिपदेन सविकारत्वं गृह्यते । तच्च संविद् उत्पत्तिविनाशयो स्साधनात् , " नविज्ञातुर्विज्ञाते र्विपरिलोपो विद्यते" "प्रकाश्यन्ते नजन्यन्त " इत्यादिना नित्यत्वावगमाच्च सिद्धमि-तिभावः । ( किंचेति ) भावान्तराभावप्रतीतये उत्तरावधिराहित्य मि-

उतघटादिवन्नामान्तर व्यपदेशार्हावस्थाविशेषराहित्यं, उतावस्थामात्रराहित्यमिति । नाद्यः, अनुत्पन्नेन प्रागभावेनोत्तरावधिमता व्यभिचारात् । भावरूपाज्ञानेनच भवत्पक्षे । भावान्तराभाववादिनस्ते ऽनुत्पन्नः प्रागभावोनास्तीति चेन्न ;- त्वदभिमतेनाप्यन्यतरा नैकान्त्यनिर्वाहात् । भावत्वेसतीति विशेषयिष्याम इतिचेन्न ;- कथायामविशेषितस्य हेतोर्विशेषणे हेत्वन्तरापातात् । अस्मान्प्रतिव्यर्थ विशेषणत्वाच्च । ततश्च पुनस्त्यागे प्रतिज्ञा हानिः । भावरूपाज्ञाने व्यभिचारस्तदवस्थः । इदं सर्वं हृदि निधायाह –" भावेष्विति विशेषणे तर्ककुशलता विष्कृताभवती " ति । विशेषितो ऽप्ययं हेतुर्भवदभिमतया ऽनाद्यविद्यया तत्त्वज्ञानोदया दन्तवत्या नैकान्तः । मिथ्याभूतायास्तस्याः प्रध्वंसोपि मिथ्याभूत इतिनानैकान्त इति चेन्न ;-

---

त्युक्तं ( उतघटादिवदिति ) मृदादेर्घटादिरिव नामान्तरव्यपदेशार्हो योवस्थाविशेष स्तद्राहित्यमित्यर्थः । अपरिणामित्वमिति यावत् ( अवस्था मात्रराहित्यमिति ) कार्यमात्रराहित्यमित्यर्थः । अतिरिक्ताभावमते व्यभिचारं दर्शयति ( अनुत्पन्नेनेति ) ( भवत्पक्षइति ) " व्यभिचारादि " त्यनुषंगः ( अविशेषितस्येति ) पूर्वं विशेषणेन विना प्रयुक्तस्येत्यर्थः । पुरुषदोषमुक्त्वार्थ दोषमप्याह ( अस्मानिति ) ततश्च व्याप्यत्वासिद्धिरिति भावः ( ततश्चेति ) ततएव हेतोर्विशेषणस्य पुनस्त्याग इत्यर्थः । अविशेषितहेतावेव पूर्वोक्तव्यभिचारंच स्मारयति ( भावरूपेति ) ( आहेति ) भगवान् भाष्यकार इति शेषः । ननु भावरूपाज्ञानस्य मिथ्यात्वेन तद्विरोधिभूतध्वंसोपि मिथ्याभूतएव वाच्यः, अन्यथा समानसत्ताकत्वाभावेन विरोधासिद्धेः, ततश्च विनाशित्वाभावस्य साध्यत्वाभिमतस्य पारमार्थिकाभिमतस्य तत्र सत्त्वान्नव्यभिचार इति शंकते ( मिथ्याभूताया इति ) स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वमिति मतानुसारेण शं-

घटादिप्रध्वंसस्यापि मिथ्यात्वेन यदुत्तरावधिमदिति व्यतिरेकव्याप्ते दुर्ग्रहत्वापातात् । व्यावहारिकं घटादेरुत्तरावधिमत्त्व मुपजीव्यव्याप्तिग्रह इतिचेन्न ; - अविद्याया अपि तथाविधोत्तरावधिमत्त्वाभ्युपगमेना नैकान्त्यस्यानिस्तारात् । अथपुनः परमार्थोत्तरावधिराहित्यमेव साध्यार्थ इत्यातिष्ठसे ? तथापि व्यतिरेकासिद्धिः, यत्परमार्थविकारव त्तदुत्पन्नं यथा घट इति भवतोऽभिभाषितु मशक्यत्वात् । माभूद्व्यतिरेकः, अविद्यापि सपक्षएवास्तु, हेतुश्च सपक्षैकदेशवर्ति केवलान्वयी भविष्यतीति चेन्न ; - तथा प्यप्रसिद्धविशेषणत्वापातात् । नह्यप्रमितप्रतियोगिकं व्यतिरेकमभ्युपगच्छामः । नच परमार्थविकारं प्रमितमिच्छसि ।

---

**का । किं व्यतिरेकव्याप्तिः पारमार्थिकोत्तरावधिमत्त्व ग्राह्या, उत व्यावहारिकोत्तरावधिमत्त्व इति विकल्प्याद्यं दूषयति ( नघटादीति ) द्वितीयं दूषयति ( व्यावहारिकमिति ) उक्तरीत्या अविद्यायां साध्यसत्त्वेन हेतो स्साध्यव्यभिचारित्वे यद्व्यावहारिकोत्तरावधिमत्तदुत्पन्नमिति व्यतिरेकव्याप्तौ ग्राह्याया मविद्यायां व्यभिचार इत्याह ( अविद्याया इति ) उक्तव्यभिचार परिजिहीर्षया शंकते ( अथपुनरिति ) एतदपि पूर्वोक्तदूषणेनैव निरस्तमित्याह ( तथापीति ) अथवा किमुत्तरावधिमत्त्वराहित्यं साध्यं, उतपरमार्थोत्तरावधिमत्त्वस्य राहित्यं साध्यं, इति विकल्पमभिप्रेत्य प्रथमविकल्पेपि पूर्वोक्तरीत्या द्वेधा विकल्प्य दूषितः, इदानीं द्वितीय विकल्प उत्थाप्य निरस्यते " अथपुन " रित्यादिना । व्यतिरेकासिद्धिः - व्यतिरेकव्याप्त्यसिद्धि रित्यर्थः । ननु पारमार्थिकोत्तरावधिमत्त्वस्य व्यतिरेकस्साध्यः; नच व्यतिरेकासम्भवः, हेतोरन्वयित्वादिति शंकते ( माभूदिति ) अप्रसिद्धविशेषणत्वं - साध्या प्रसिद्धिः । तदेवोपपादयति ( नहीति ) अस्तु परमार्थविकारस्यापि क्वचित्प्रमिति रित्याह ( नच परमार्थेति ) माभूद्विकारस्य प्रमितिः,**

न चाप्रमितस्य परमार्थता सम्भवति । क्वचिच्च परमार्थविकाराभ्युपगमे ऽप सिद्धान्तः । ततश्च भवद्दृशा विकारश्चेदपरमार्थ इति व्याप्तौ सिद्धायां व्यवच्छेद्याभावाद्व्यर्थं विशेषणमिति ।

तदेतदखिलमभिसन्धायाह– " किंभवतः परमार्थभूतोप्यऽस्ति विकारः? येनैतद्विशेषणमर्थवद्[विष्य]वती " ति ।

ननु माभूद्व्यवच्छेद्यं, तथाप्य नैकान्त्यपरिहारक्षमतयापि सार्थं विशेषणमितिचेत् ? हन्तैवं शशविषाणरूपविकाररहितेति किं न साध्यते ? तावतापि ह्यनैकान्त्यंसुपरिहरम् । अप्रसिद्धविशेषणत्वापाता

---

अथापि बाधादिस्तु परमार्थः, अतस्त त्प्रतियोगिकाभावोपि सम्भवती त्याह ( नचेति ) प्रमाणं विनापि प्रमेयांगीकारेतिप्रसंगादितिभावः । परमार्थविकाराभ्युपगमे दूषणान्तर मप्याह ( क्वचिदिति ) ( ततश्चेति ) विकाराभावं साधयता त्वया विकारमात्रस्या पारमार्थिकत्वांगीकारात् , पारमार्थिकविकारस्या प्रसिद्ध्या तदभावस्य, साधयितुमशक्यत्वा दपारमार्थिकविकारस्यैवाभाव स्साधनीय इति तद्व्यवच्छेदाय पारमार्थिकत्वविशेषणं नकर्तव्य मित्यर्थः । यद्यप्यपार मार्थिकविकारस्या भाव एव साध्य इति तद्व्यावृत्त्यर्थतया नविशेषणस्य सार्थकता, अथापि पारमार्थिकविशेषणे दत्ते ऽविद्यायां पारमार्थिकविकारशून्यत्वस्य सत्वा न्न व्यभिचार इति व्यभिचारपरिहारार्थ मिति शंकते ( ननु माभूदिति ) ( हन्तैवमिति ) ननु विकारापारमार्थ्यस्य सिसाधयिषितत्वा त्तदर्थं परमार्थविकारशून्येति साध्यते, तत्र यद्यप्यनेनैव परमार्थत्वाभावो विकाराणां न सिध्यति, तथापि परमार्थविकारशून्यत्वे सति सविकारत्वलिंगेना परमार्थविकारस्य ब्रह्मणि साधने विकारमिथ्यात्वसिद्धेः कथं प्रतिबन्दीति चेन्न; – हेतौ विशेषणासिद्ध्या तदनुमानासम्भवात् । अत श्शशविषाणविकारराहित्यसाधनतुल्यमेवेद मिति भावः । ननु विकारराहित्यमात्रे साध्ये सिद्धसा·

दितिचेत्? तुल्यम्। अस्तु तर्हि सिद्धसाधनत्वपरिहारार्थं परमार्थेति वि-शेषणं, प्रसंगतस्त्व नैकान्त्यमपि परिहरिष्यति ; विकारराहित्यमात्रेहि साध्यमाने मिथ्याभूतविकारराहित्यमात्रेण यदि भवान् सिद्धसाध-नतां ब्रूयात्तदास्माभिर्विशेषितव्यमिति चेन्न ; - अतिप्रसंगात्। पर्वतो ग्निमानित्यादिषु सर्वेष्वपि प्रयोगेषु परमार्थाग्निमानित्यादि प्रयोगप्रसंगात्। स्वयम्प्रकाशानुमानेषुच भवता नुभूतिः परमार्थतः स्वयम्प्रकाशेत्यादि

---

**धना त्किञ्चिद्विशेषणविशिष्टं साध्यं वाच्यं, शशविषाणरूपविकार राहित्यसाध्यन्तु न सिद्धसाधनपरिहारक्षमं, तस्यापि सिद्धत्वात्, अत एव तत्परित्यागः, नत्वप्रसिद्धविशेषणत्वात्, परमार्थविकार राहित्यसाधने-न सिद्धसाधन मिति परमार्थविशेषणं सार्थकमिति शंकते (अस्तु तर्हीति)नन्वपारमार्थिकविकारराहित्ये संविद् स्त्वविकारत्ववादिनः सिद्धेपि पारमार्थिकविकारराहित्यस्या सिद्धत्वात् विकारत्वावच्छिन्न विकारराहित्यमसिद्धमेव, ततश्च न सिद्धसाधनमित्यत्राह (विकार-राहित्यमात्रेहीति) पारमार्थिकापारमार्थिकानुगत विकारत्वस्यैकस्या-भावा द्विकारराहित्यमात्रेसाधिते मिथ्याभूत विकारप्रतीते स्सिद्धसा-धनमिति तद्व्यावृत्त्यर्थमपारमार्थ्य विशेषणसार्थक्यमित्यर्थः। यद्वास्व मते विकारस्यानुभूतावंगीकारा द्विकारत्वावच्छिन्न सामान्याभावो न साधयितुं शक्यः, तत्परिहारार्थं विकारत्वव्याप्यधर्मावच्छिन्न प्रतियो-गिकाविकाराभाववत्त्वे विकारप्रतियोगिकाभाववत्त्वेवा साध्येमिथ्यावि-कारत्वस्यापि तद्व्याप्यतया तदवच्छिन्नाभावमादाय मिथ्याभूतविकार विशेषप्रतियोगिकाभावमादायवा सिद्धसाधनतां भवान् ब्रूयादिति पा-रमार्थिकत्वविशेषणं विकारप्रतियोगितावच्छेदकतयोपादीयमानं सार्थ-कमित्यर्थः (अतिप्रसङ्गादिति) ननु - पारमार्थिकाग्निमानित्यादि रू-पेणैव साधनप्रसंग इष्टइतिचेन्न; - तथापि मिथ्याभूतपरमार्थत्वाश्र याग्निमादाय सिद्धसाधनोद्भावनशंकया परमार्थत्वेपि परमार्थविशेषणं,**

प्रयोगोवाच्यः । अन्यथाहि मिथ्याभूतस्वयम्प्रकाशत्वाभ्युपगमेन परः सि-
द्धसाधनतामुद्घाटयेत । नच वयमप्यपरमार्थान् कांश्चनविकारानि-
च्छामः, येनसंविद स्तद्योगात्सिद्धसाधनतां प्रभ्रम इति बिभेषि । अतः
सुष्ठूक्तंभाष्ये विशेषणवैयर्थ्यम् । उत्तरयोरपि कल्पयोरनैकान्त्य म-
दर्शयत्—" भवदभिमता विद्यानुत्पन्नैव विविधविकारास्पद " मिति ।
तत्र न तावद्द्वितीयः, अविद्याया एव महदादिनामान्तरव्यपदेशार्ह स-
मस्तविकारयोगित्वस्य भवद्भिरेवस्वीकारात् । घटकपाललोष्टाद्यवस्था
विशेषो पिह्यन्ततो ऽविद्याया एव । अनुभूतिस्मृत्यादि नामान्तरव्यपदे
शार्हावस्था भेदाश्च संविदएव प्रत्यक्ष मीक्ष्यन्त इति कथं तदभाव
साधनम् । अनुभूतित्वादयः सविदवस्था विशेषा मिथ्याभूता इति
चेन्न ; - दत्तोत्तरत्वात् । नहि सत्यः कश्चिदवस्थाविशेषस्ते समस्ति ।
अतएव नतृतीयोपि । अपसिद्धान्तप्रसंगस्त्वधिकः, मिथ्याभूतानामव-
स्था विशेषाणां संविदोभवतैव स्वीकारात् । अन्यथा जगद्भ्रमतान्नि-
वृत्त्यपेक्षौ तदुपायगवेषण तदनुष्ठान तदर्थशास्त्रारम्भादे रभावप्रसंगात् ।
इष्टप्रसंगो यमितिचेन्न ; — व्यावहारिकव्यवस्था प्रतिष्ठितानां तेषां
त्वयैव स्वीकारात् । अन्यथा तिष्ठसत्यपक्षे, त्यजवा शास्त्रारम्भादिकमिति ।

---

**एवं तत्रापीत्यनवस्थाया तात्पर्यात् । तत्परं भाष्यं दर्शयति ( भव-
दभिमतेति ) भाष्यं विवृणोति ( तत्रनतावदिति ) द्वितीयः - परि
णामित्वाभावकल्पः । प्रत्यक्षबाधमप्याह ( अनुभूतीति ) अन्तःकरण
विकारा एते नसंविद्विकाराइतिचेन्न; ज्ञानत्वेनैव स्मृत्यादि विकाराणां
घटादीनामिव मृत्त्वेनानुभवात् । ननुसंवित्तादात्म्याध्यासा त्तथानुभव
इतिचेत ? ज्ञानत्वेनेवा नन्दत्वेनापि भानप्रसंगात । ज्ञानानन्दयोरभेदा
देवा वरणानावरणयोरपि शुक्तित्वेदं त्वयोरिवानिर्वक्तुमशक्यत्वात ( दत्तो
त्तरत्वादिति ) अप्रसिद्धविशेषणत्वेनेत्यर्थः ( अन्यथातिष्ठेति ) व्याव
हारिकव्यवस्थानंगीकारइत्यर्थः । व्यावहारिकव्यवस्थाया पारमार्थिक-**

संविद्विकाराणां मिथ्यात्व मेवात्र साध्यत इतिचेन्न; - अत्रापि व्यतिरेकभंग प्रसंगात् । नहि यद्विकारवत्तदुत्पन्नं यथा घटइत्यत्र सत्यविकारयोगित्व मुत्पत्तिव्याप्तं दृष्टं, येन तन्निवृत्त्या तन्निवृत्ति-स्स्यात् । लोकदृष्टया तथा दर्शनमस्तीतिचेन्न; - तस्याः संविद्वि-कारेषु घटादिविकारेषु च पक्षपाताभावेन त्वदुक्तव्याप्तेर्दुर्ग्रहत्वात् । त्वद्दृष्टेस्तु भयविद्वेषशीलतयापि तथाविधनियम ग्रहासिद्धेः । केवलान्वयित्वशंकापि पूर्ववद्दूष्या ।

ननु भवतोपि ब्रह्मानुत्पन्नं निर्विकारंच, ततस्तदेव समर्थयमानेष्वस्मासु . कस्ते कोपइति चेन्न; - अस्मात्सिद्धान्ता परिज्ञानात् । नहि वयं लोकसिद्धा मुदयास्तमयादि विकारशतशालिनी महमर्थ धर्मभूतां संविदं परंब्रह्मेति परिभाषामहे, नच तामेव सकलविषयाश्रय शून्यावस्थां, अपि तु समस्तचिदचिद्विशिष्टतया स्वविशेषणभूत चिद चित्प्रतिष्ठितक्लेशादि जन्मादिविकारजातं अस्पृशतोस्पृष्टविकारक्लेशं संकोच

---

व्यवस्थावा शास्त्रारम्भादिसिद्धये स्वीकार्या, व्यावहारिकव्यवस्थाचेन्न स्वीक्रियते पारमार्थिकव्यवस्थैव स्वीकार्येत्यर्थः । उक्तबाधपरिहारं शंकते ( संविद्विकाराणामिति ) परमार्थविकारशून्यत्वमेव साध्यते, विकारवतश्च तत्साधने मिथ्याविकारवत्त्वमेव सिद्ध्यतीति भावः । लौकिकानां ब्रह्मवद्घटादिविकारिणामपि पारमार्थ्यस्यैव प्रतीतेः मृदादिषु परमार्थविकार स्तद्व्याप्तइति ग्रह स्सम्भवतीति तत्प्रतीत्यनु-सारेणेद मनुमानमिति शंकते ( लोकदृष्टयेति ) लौकिकै स्संविद्विका राणामपि पारमार्थ्यस्यैव ग्रहा त्तत्रैव व्यभिचारग्रहा त्सत्यविकारयो-गित्वोत्पन्नत्वयो र्नव्याप्तिग्रह इत्याह ( नेति ) " तस्याः " - लोक दृष्टेः । स्वदृष्ट्यनुसारेणानुमाने नव्यभिचारः, अनुभूतेः परमार्थ विकारस्या नंगीकारा दित्याह ( त्वद्दृष्टेस्त्विति ) पूर्वोक्तेषु निर्विकार

विकासवैदेशिकसार्वज्ञ्य मनन्तमंगळगुण मीश्वरतत्त्वम् । यदि तस्य निर्विकारत्वं साधयसि कामं साध्यताम् । तत्र प्रमाण मिद मन्य द्वेति निपुणं विभावय ।

नचेश्वररूपस्यापि समस्तावस्थाशून्यत्वं साधयितुं शक्यं, कादाचित्क तत्तन्मूर्तद्रव्यसंयोगविभागाद्यवस्थाविशेषाणां वियदादिष्विव विश्वव्यापिनीश्वरेपि दुर्वारत्वात् । नित्यासंकुचितप्रकाशात्मनि तज्ज्ञानेपि तत्संकल्पाद्यवस्थाविशेषाणा मनन्ताना माम्नातत्वात् । अकर्मनिबन्धनतया च तेषा मपुरुषार्थत्वप्रसङ्गाभावात् । बीजांकुरव दवस्थाप्रवाहाना

---

स्ववाक्यविकल्पे ष्वाद्ययो स्सिद्धसाधन माह ( यदि तस्येति ) ( इद मन्यद्वेति ) अनुत्पन्नत्वहेतो रविद्यादौ व्यभिचारा च्छ्रुति रेवात्र मान मिति भावः । तृतीयकल्पे बाधक माह ( नचेति ) ( संयोगेति ) ननु निरवयवस्या त्मनः कथं संयोगः, संयोगस्या व्याप्यवृत्तित्वनियमात, प्रदेशभेदमन्तरेण स्वात्यन्ताभाव सामानाधिकरण्या योगात, "असंगोनहिसज्यत " इति श्रुतेश्चेति चेन्न;– प्रदेशभेदाभावेप्यवच्छेदकभेदेन संयोगतदभावयो स्सामानाधिकरण्योपपत्तेः, अवच्छेदकत्वंच विरुद्धयोर्यथानुभव मंगीकार्यम् । असंगत्वश्रुतिश्च "नस्थानतोपि परस्यो भयलिंगंसर्वत्रही " ति प्रतिपादित दोषाभावपरा । " तदैक्षत " त्यादि श्रुतिसिद्धसंकल्प लीलारसाद्यनन्तधर्मभूतज्ञानविकाराश्रयत्वाच्च ना वस्थामात्र शून्यत्वसाधनसम्भव इत्याह ( नित्येति ) जीवस्यसं कुचितज्ञानतया तत्तद्विषयादिभेदेन ज्ञानावस्थासम्भवेपि नित्यासंकुचि तज्ञाने नतत्सम्भवइति शंकामपनुदति (नित्यासंकुचितेति) (तज्ज्ञानेपीति)

दित्वेना हेतुकत्वादिचोद्यानवतारात्। आगमिके चास्मि न्नर्थे हैतुक संक्षोभस्या ऽशक्यत्वा दिति।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतौ शतदूषण्यां संविन्निर्विकारत्वानुमानभंगवादो द्वाविंशः ॥ २२ ॥



तस्यभगवतो ज्ञाने ( आगमिकइति ) अशक्यताच " लोक वतुलीलाकैवल्य " मित्यादिभिर्द्वितीयाध्यायेनुसन्धेया ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां संविन्निर्विकारत्वानुमानभंगो

द्वाविंशः स्कन्धः ॥ २२ ॥



श्रीः ।
श्रीमतेरामानुजाय नमः ।
श्रीमते निगमान्तमहागुरवेनमः ।

# अथ त्रयोविंशो वादः ।

प्रतिपुरुष मनेकाः प्रत्ययस्थं विचित्रा
श्शुभगतिषु धियो य श्चोदय त्यञ्जसा नः ।
अखिल चिदचिदन्तर्यामि तद्विष्णुसंज्ञं
सवितु रह मुपासे तस्य देवस्य भर्गः ॥

---

गेहक्षेत्रै र्यतिपतिमतादर्शिभि स्तत्त्वमूकै
रन्योन्यस्य श्रुतिपरिषदां कारितै स्संप्रहारैः ।
केशाकेशि प्रभवमलघुं योभिषंगं विनिन्ये
सोऽस्मिन्रिते भवतु सतत सर्वतन्त्रस्वतन्त्रः ॥
विभुरपि कर्णेकृत्य त्रातुं मुहुर्भविनोऽप्रभु
र्विहितविविधप्रादुर्भावो ह्यशैवतु भूरिशः ।
दुरितहरयायेन व्यस्माप्यनन्दिच्च देहिनो
युगपदवता रोचेत श्रीनिवासगुरुस्सनः ॥

संविन्नानात्वानंगीकारे गायत्रीविरोधःस्या दित्यभिप्रायेण गायत्रीं व्याकुर्वन् मंगळमाचरति ( प्रतिपुरुषमिति ) " धियो धर्मादिगोचराः " इति प्रमाणानुसारेणाह ( शुभगतिष्विति ) शुभहेतुषु धर्मादिष्वित्यर्थः । " तस्य देवस्य यद्भर्गस्तद्वरेण्य मुपास्महे " इति प्रमाणबलायन्तच्छब्दो य इति पदनिर्दिष्ट चोदयितृपरः, परन्तु प्रसिद्धपर इत्यभिप्रायेणाह ( अखिलेति ) " भर्गाख्यं विष्णुसंज्ञमि " ति प्रमाणमभिप्रेत्याह ( विष्णुसंज्ञमिति ) गायत्र्या विष्णुपरत्वं भर्गइति पद-

यदाहुः — अनुभूति र्न नाना, अजत्वात्; य न्नाना त ज्जायते, यथा घटः । दृश्यमानस्तु संविद्भेदो विषयाश्रयादिभेदोपाधिकत्वा न्न स्वाभाविकः, घटाकाशतरंगचन्द्रपराभिमतसमवायादिभेदवत् । अन्यथा कल्पनागौरवप्रसंगादिति ।

तदसारं, कि मत्र यतः कुतश्चिदपि भेदो निषिध्यते, उत संविज्जातीयमात्रात्, अथ संवित्स्वरूपात्, उत संविदन्तरात्, अथवा संवित्सजातीयराहित्यं साध्यतइति ।

न प्रथमः, प्रत्यक्षविरोधात् : देहात्मविवेकानुपपत्तिप्रसंगात ; अपसिद्धान्ताच्च । 'युष्मदस्मत्प्रत्ययगोचरयो र्विषयविषयिणो स्तमःप्रकाशवद्विरुद्धस्वभावयो रितरेतरभावानुपपत्ता' विति हि वः कूटस्थोपदेशः । अपरमार्थोपि भेदः तत्र निर्दिश्यतइतिचेत् ? साधु [illegible]पदेशः समारब्धः । परमार्थत स्तयो [रैक्य] र्भेदप्रसंगश्च । अत्राप्यपरमा[र्थ]दि[भे]दनि-

---

स्य सकारान्तरत्वंच वेदान्तविजये प्रपंचितमस्माभिः । आदिपदेन वृत्ति गृंह्यते । अप्रयोजकत्वशंका मपाकरोति (अन्यथेति) विषयाश्रयभेदस्य सिद्धत्वा त्तद्भेदः, कल्पनीयः, वृत्तिभेदस्य कल्पनेपि फलमुखत्वा त्तद्गौरवं दोषायेति भावः (तदसारमिति) अत्राप्रयोजकत्वमपि विवक्षितम् । नचानुभूतिनानात्वे गौरवं, भेदप्रतीतेः क्लृप्तानुभूतिविषयत्वे लाघवात । उपाध्यधीनत्वकल्पने अक्लृप्तो पाध्यधीनत्वकल्पनेच गौरवात् । अन्यथा घटादिभेदप्रतीते रप्यौपाधिकत्वकल्पनापत्तेः । अनवस्थाभया त्तत्परित्यागस्तु प्रकृतेपि तुल्यः (प्रत्यक्षविरोधादिति) घटादिभेदस्य प्रत्यक्षसिद्धत्वा दित्यर्थः । अपसिद्धान्तमेवोपपादयितु माह (युष्मदिति) "तत्र" - "इतरेतरभावानुपपत्ता" वित्यत्र (परमार्थतइति) समानसत्ताकयो र्भेदाभेदयो रेकत्रासम्भवा दिति भावः । किंच किमत्रानुमाने अपरमार्थस्य भेदस्य निषेधः क्रियते, उतपरमार्थस्य ? नाद्यइत्याह (अत्रेति) (सएवेति) अपसिद्धा

षेधे सएव दोषः, परमार्थभेदानुमिति प्रसंगोवा । परमार्थभेदनिषेधेतु व्यतिरेकव्याप्तिभंगः, यत्परमार्थभेदत्र तदुत्पन्नं. यथा घट इति हि सा स्यात् । नच घटादौ परमार्थभेद स्त्वयाभ्युपगम्यते । तदाह- " जन्मप्रतिबद्ध. परमार्थविभागः किं कचिद्दृष्टस्त्वये " ति । अविद्यायाश्चानुत्पन्नतया भ्युपेतायाः स्संविदपेक्षया परमार्थभेदाभ्युपगमे पक्षविपक्षमात्रवृत्तितया विरुद्धो हेतुः । अपरमार्थभेदाभ्युपगमेतु जडाजडतादात्म्यातिदेशः । तदाह- " अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतोऽविद्यैव स्यादात्मे" ति ।

न द्वितीयः, संविदः संविद्विजातीयत्वा नभ्युपगमेन सिद्धसाधनात् । नहि संविदेव भवति संविज्जातीयमात्रा द्भिद्यत इति कश्चिदिच्छति । तथेच्छ[illegible] प्रतिनासौ हेतुः, अविद्यायां संविद्विजातीयायां तद्वृत्तेः । साह्यतु संवित्तत्वात् सर्वस्मादेव हि भिन्नात्वयेष्यते । तद्भेदानभ्युपगमे तां[illegible]ध्यात्वाभ्युपगमेच दत्त मुत्तरम ।

न तृतीयः, सिद्धसाधनत्वादेव ।

नापि चतुर्थः, संविदन्तरसिद्धौ तदवधिकभेदस्यापि सिद्धे स्तन्निषेधायोगात् । तदसिद्धौ कथं तन्निरूपित भेदनिषेधः । उपाधिवशात्संविदंतरत्वेन प्रतायमानं स्वरूपं संविदन्तरशब्दे नानूद्य तदवधिकभेदोनिषिध्यते, चन्द्रस्तरंगचन्द्रान्न भिद्यतइतिव दितिचेत् ? तथापि हेतो र्विरोधः; संविदन्तराद्भिन्नाया मविद्यायां तद्वृत्तेः । नहि सा संविदन्तर भेदरहिता, प्रागुक्त

---

न्तएवेत्यर्थः । त्वयैव युष्मदादिवाक्यस्य परमार्थभेदपरत्वोक्ते रिति भावः ( परमार्थेति ) समानसत्ताकयो रेकत्रासम्भवादिति भावः । द्वितीयं दूषयति ( परमार्थेति ) ( तदाहेति ) भगवान् भाष्यकारइति शेषः । परमार्थभेदस्य निषेधइति पक्षे दूषणान्तरमाह ( अविद्यायाश्चेति ) ( दत्त मुत्तरमिति ) जडाजडयो रैक्यप्रसंग इत्यर्थः ।

दोषात् । यश्च प्रवाहानादि मविद्या मिच्छति, तस्यापि प्रागभावे संविदन्तरा द्भिन्ने हेतुवृत्तेर्विरोधएव । यद्यप्यभावमपि नेच्छेत्, तथापि घटादिषु संवि-दन्तरभेदाभावा त्सपक्षभूतेषु सर्वेषु हेतो र्वृत्ते रसाधारणता। अपर मार्थस्संविदन्तरा द्भेदस्तत्रास्तीति न सपक्षतेति चेत; तर्हि संवि दोपि संविदन्तरादपरमार्थ भेदयोगा न्न तत्र तद्राहित्यं साधयितुं श क्यं। अपारमार्थ्यमेव तस्यात्र साध्यत इति चेत् ? तथापि घटादिष्वपि संविदन्तरभेदापारमार्थ्यसिद्धेः सपक्षत्वम परिहार्यम् । संविदःसंविदन्तरा द्भेदमात्रं मिथ्या, घटादेस्तु स्वरूपमपीति विशेष इति चेत् ? कि मतः, स्वरूपस्य मिथ्यात्वे सत्यत्वेपि संविदन्तरप्रतियोगिक मिथ्या भेदयोगित्वस्य साधारणत्वात् ।

---

( संविदन्तरभेदाभावा दिति ) परमार्थभेदाभावा दित्यर्थः । ( साधयितुं शक्य मिति ) बाधा दिति भावः । ( अपारमार्थ्य मिति ) भेदवति भेदाभावसाधने भेदापारमार्थ्यपर्यवसाना दिति भावः । ( अपरिहार्य मिति ) तथा चासाधारण्य मिति भावः । अविद्यायाः प्रवाहानादित्वं अभावानभ्युपगमं चाधिकृत्या स्य ग्रन्थस्य प्रवृत्तेः ना विद्याप्रागभाववृत्तित्वेना साधारण्योद्धारशंकावकाशः । नन्वध्यस्त-स्या धिष्ठाननिष्ठाभावप्रतियोगित्वमात्रं वाच्यं, न त्वधिकरणमात्र निष्ठाभावप्रतियोगित्वं, तथाच संविद स्सत्यत्वना धिष्ठानत्वात तत्र भेदाभाव स्सम्भवति, घटादेश्च मिथ्याभेना नधिष्ठानत्वा न्न तत्र भेदाभावः, ततो न बाधो न चासाधारण्य मिति शंकते ( संविद स्संविदन्तरा दिति ) घटादिनिष्ठात्यन्ताभावप्रतियोगित्वाभावे तस्य सत्यत्वप्रसंगेन तत्र तदत्यन्ताभावस्या वश्यकतया घटादा वसा-धारण्यम् , यदि च तस्य घटादौ मिथ्यात्वेपि तदनाश्रये तत्र तदभाव इत्युच्यते, तदा संविद्यपि तदभावो न स्यादिति बाध एव स्या दि-त्यभिप्रायेण परिहरति ( कि मत इति )

नवीनस्तु - वृत्त्यतिरिक्ता संवित स्वप्रतियोगिक स्वसमानसत्ताक यावद्भेदरहिता, प्रमाणतोऽविभाव्यमानतद्भेदत्वात, चन्द्रादिवत् । वृत्तिज्ञाने बाधवारणाय वृत्त्यतिरिक्तेति । साध्यवैकल्यपरिहाराय स्वप्रतियोगिकेति । स्वशब्द स्वसमभिव्याहृतपरः । बाधपरिहाराय स्वसमानसत्ताकेति । व्यक्तिविशेषे स्वप्रतियोगिकभेदाभावेन सिद्धसाध्यतापरिहाराय यावदिति । घट तद्रूपावृत्ति स्ववाच्चकाखण्डशब्दप्रवृत्तिनिमित्तव त्प्रतियोगिक स्वसमानसत्ताक तादात्म्यविरोधिभेदरहिता, उपाधिपरामर्श मन्तरेण तद्भेदवत्त्वेना प्रमीयमाणत्वात, आकाशवत । आकाशानुभवयो स्स्ववाचक द्रव्यगुणशब्दप्रवृत्तिनिमित्त द्रव्यत्वगुणत्ववत घट तद्रूपप्रतियोगिकतादात्म्य विरोधितद्भेदवत्त्वेन साध्य वैकल्यबाधपरिहाराय घटतद्रूपावृत्तीत्युक्तम् । कर्मशब्दप्रवृत्तिनिमित्तकर्मत्वव त्प्रतियोगिकभेदवत्वेनोक्तदोषपरिहारार्थं स्ववाचकेत्युक्तम् । एत दनुभवपद प्रवृत्तिनिमित्ते तदनुभवत्वव त्प्रतियोगिक भेदाभावस्यैतस्मिन्परैरंगीकारात्सिद्ध साधनता परिहारायाखण्डपदं । सिद्धान्तेऽनुभव शब्दप्रवृत्तिनिमित्तानुभवत्वाधिकरणानुभव प्रतियोगिक कल्पितभेदस्य पक्षेंगीकारा द्बाधपरिहाराय तादृशधर्म वत्प्रतियोगिकतादात्म्य विरोधीत्युक्तं । सिद्धान्तेऽनुभवस्य अनुभवान्तर तादात्म्याविरोधिभेदानंगीकारान्न बाधः । तर्हि परमते प्यनुभवस्यानुभवान्तर प्रतियोगिककल्पित तादात्म्यविरोधिभेदाभावा त्सिद्धसाधनं स्यात् तन्निवृत्तये स्वसमान सत्ताकेत्युक्तं । परमतेच्च तादृशव्यावहारिक तादात्म्यविरोधि तद्भेदवत्त्वानंगीकारा न्न सिद्धसाधनम् । हेतावपि तद्भेदेत्युक्ते र्न साधनवैकल्यम् । परमते पक्षेऽसिद्धिशंकापरिहारार्थमुपाधिपरामर्शमन्तरेणे त्युक्तम् । तथा संवित्प्रतियोगिक स्वसमान सत्ताकभेदवती न सम्भवति, संवित्प्रतियोगिकानौपाधिक भेदवती न भवति, संविद्भिन्ना नभवति, संवित्त्वात, व्यतिरेकेण घटवत । नच साध्याप्रसिद्धिः , तत्प्रसिद्धिं विनापि संविद्भेदसंवित्त्वाभावयो

एतेन - अनुभूतित्वादिति हेतुना प्यस्य साध्यस्य दुस्साधत्वं दर्शितम्। तरंगचन्द्रदृष्टान्तोपि विषमः, तरंगचन्द्रस्य मिथ्याभूतस्य सत्य चन्द्रतादात्म्यायोगात्। यदि चन्द्रव्यतिरिक्त स्तरंगचन्द्रो नास्तीति निर्दिश्येत, तर्ह्यत्रापि संविदन्तरं मिथ्येत्येवोक्तं स्यात्। तथा विषयाश्रय भेदभिन्नानन्त संविदुपलम्भेच कस्या स्सत्यत्वं कासान्तु तरंगचन्द्र वन्मिथ्यात्वमिति विशेषकाभावा दनियमेन सर्वसंविन्मिथ्यात्वं सर्व संवित्सत्यत्वं वा प्रसजेत्। सामान्यत स्संवित्त्वे कुतश्चित्सिद्धे त द्व्यतिरिक्ता स्संविदो निषिध्यन्त इति चेत्? कएव माह - संवित्तत्व

---

घटादौ व्याप्तिग्रहसम्भवात्। नच तृतीयसाध्ये बाधः, शुक्तौ रजतादेरिव भेदकालेपि तदधिकरणे तदभावस्याविरुद्धत्वात्। नचाप्रयोजकत्वं, वृत्त्यतिरिक्तानन्तसंवित्कल्पने गौरवात्। एवं घटस्फुरणं पटादिस्फुरणप्रतियोगिक स्वसमानसत्ताक भेदव न्नभवति, स्फुरणत्वात, पटादिस्फुरणवत, इत्याह।

तदिदं सर्व मेवञ्जातीयक मन्यदपि सर्व मर्वाचीनैः कल्पितं निरस्तमित्याह (एतेनेति)

अयंभावः, घटादौ संविद्भेदस्य मिथ्यात्वेन तदभावस्य तत्राव- श्यकतया संवित्त्वहेतो रसाधारण्यं, सर्वत्रानुमाने प्रथमकल्पोक्त प्रत्यक्षबाधो विवक्षितः। किंच वृत्त्यतिरिक्तासंविदिति पक्षनिर्देशे तावदतिरिक्तेति व्यर्थं, वृत्त्यसिद्धेः। किंच वृत्ते स्संवित्त्वांगीकारे तत्रैव व्यतिरेकिहेतो र्व्यभिचारः। तदनंगीकारे वृत्त्यतिरिक्तेति व्यर्थम्। किंच प्रथमसाध्ये किं स्वशब्द स्संवित्परः उत समभिव्याहृतपरः? आद्ये दृष्टान्ते साध्यवैकल्यं, संवित्प्रतियोगिक चन्द्रसमान सत्ताकभेदस्य चन्द्रे सत्वात्। वृत्तिप्रतियोगिकस्व समान सत्ताक भेदस्य संविदि सत्वा

द्बाधश्च । यदिच स्वपदद्वयमपि समानार्थं, तदानीमपि वृत्तिरूपसंवि त्प्रतियोगिकतत्समान सत्ताकभेदस्य चन्द्रेसत्वात्साध्यवैकल्यं । स्वपदेन वृत्त्यतिरिक्त संविद्विवक्षायां संवित्प्रतियोगिक संवित्समान सत्ताकभे दस्या प्रसिद्धेस्साध्याप्रसिद्धिः । ननु नप्रतियोग्यप्रसिद्धिः, संवित्प्र- तियोगिक व्यावहारिकभेदस्य प्रतियोगित्वात, तस्यचघटादौप्रसिद्धेः । स्वसमानसत्ताकत्वन्तु स्फुरणान्तरे प्रसिद्धं, प्रतियोगितावच्छेदकं । घटरूपंनास्तीत्यत्र घटस्येव प्रतियोग्यवृत्तित्वेपि सम्बन्धित्वमात्रेणैव स- त्तायाः प्रतियोगितावच्छेदकत्व सम्भवादिति चेन्न;– घटस्य तत्ररूपसम्ब- न्धित्वात्तथात्वेप्यत्र स्फुरणान्तरसत्ताया भेदसम्बन्धाभावेना नवच्छेदक- त्वात् । कथंचि त्संबंधोपपादनेच तदवच्छिन्न प्रतियोगिनोपिसत्त्वा द्बाधएव । भेदवत्त्वादित्येव हेतुसम्भवेशेषवैय्यर्थ्यंच । भेदवत्त्वेन प्रमीयमाणत्वाभावस्य हेतुत्वविवक्षाया मप्यभावत्वस्यैव हेतुतावच्छेदक- त्वसंभवेशेषवैय्यर्थ्यं । एतत्परिजिहीर्षया स्वपदद्वयस्यापि भिन्नार्थत्वे पूर्ववत्साध्यवैकल्यं । द्वितीयेतत्तद्वृत्तिषु तत्तत्प्रतियोगिक तत्तत्समानसत्ता- कभेदाभावा त्साध्यसत्वेन तत्रबाधवारणार्थं वृत्त्यतिरिक्तेतिपक्षविशेषण मित्येतदसंगतमेवस्यात् । क्वचिदपि स्वसमानसत्ताकभेदवत्त्वेन प्रमी यमाणभिन्नत्व मप्यसिद्धमेव । किंचास्मदभिमतसंविदः पक्षत्वेस्वरूपा सिद्धिः । तदतिरिक्तायाः पक्षत्वे आश्रयासिद्धिः, तत्र प्रमाणा भावस्यो पपादितत्वात् । चन्द्रेच भेदस्य प्रातिभासिकत्वे प्यधिष्ठा- नभूत ब्रह्मसत्तातिरिक्त सत्ताया स्त्वया क्वाप्यनंगीकाराच्चन्द्रस्य स्व- समानसत्ताकभेदवत्त्वा त्साध्यवैकल्यंच । घट तद्रूपावृत्तीत्यादि सा- ध्येपि प्रथमस्वशब्दः संवित्परः, उत समभिव्याहृत परः ? नाद्यः, आकाशे संवित्प्रतियोगिक तादात्म्यविरोधिभेदांगीकारेण साध्यवैक- ल्यात् । ननु – आकाशस्य संविद्य ध्यासात् तत्तादात्म्यविरोधि- भेदाभावा त्साध्यमस्त्येवेति चेत् ? तथासति तादृशसाध्यस्य केवला न्वयित्वेनाभावा दित्येव हेतुसम्भवे शेषवैयर्थ्यात् । स्वशब्दस्य सं-

वित्परत्वेन घटपदवैयर्थ्यंच । संविद्घटयो स्स्वंविद्घटान्यतरत्वेन प्र
कृतत्वे यदादिसर्वनाम्ना तत्परामर्शों तत्र तस्यैव प्रकृतरूपस्य तत्स-
र्वनामप्रवृत्तिनिमित्तत्वा त्तदाश्रयघटभेदस्य संविदि सत्त्वा द्बाधः।
दृष्टान्ते साध्यवैकल्यंच । एतेन द्वितीयकल्पोपि निरस्तः। किंच
विभुनित्येन्द्रियादिपद प्रवृत्तिनिमित्तव त्कालादिभेदस्य सत्वाच्च
साध्यवैकल्यं । एवं पुण्यपापशुभमंगळादि शब्दान् दे-
वतादर्शनाद्यात्मक संवि त्तदितरकर्म साधारणानादाय बाध ऊह्यः।
अखण्डत्वंच व्यर्थं। नचैतदनुभवपद प्रवृत्तिनिमित्तै तदनुभवत्वव-
त्प्रतियोगिकभेदाभावस्यै तदनुभवे परै रंगीकारा त्सिद्धसाध्यतापरि
हारार्थं तदिति वाच्यम्, एतदनुभवशब्दस्या शक्तत्वे नैतदनुभवत्व
स्य प्रवृत्तिनिमित्तत्वासिद्धेः। नच शब्दबोध्यप्रकारत्वमेवेह प्रवृत्ति-
निमित्तत्वं विवक्षितमिति वाच्यम्, तथासति संवित्पदलक्ष्यार्थभेद-
स्य संविद्य सत्वा द्बाधापत्तेः। दृष्टान्ते साध्यवैकल्याच्च। किंच-
एतदनुभव भेदाभावसिद्धावपि संवि त्पदप्रवृत्तिनिमित्ताश्रय प्रतियो
गिक भेदाभावस्या सिद्धतया स्ववाचकपद प्रवृत्तिनिमित्तव त्प्रति-
योगिकभेद सामान्याभावस्यासिद्धेः,. सामान्याभावाविवक्षया ता-
दृशभेदप्रतियोगिकाभावमात्रे साध्ये तत्तद्व्यक्तिषु तद्व्यतिरिक्तभेदा
भावात्, अखण्डपददानेपि सिद्धसाधनमेव। ननु- स्ववाचक य-
त्किंचि त्पदप्रवृत्तिनिमित्तव त्प्रतियोगिकभेदसामान्याभाव स्साध्यः,
तथाचैतदनुभवभेदाभाव मादायोक्तरीत्या सिद्धसाधनवारणाया ख-
ण्डपदमिति चेत ? कि न्तावत्प्रयोजन मेतादृशपरिश्रम रक्षितेना
खण्डपदेन। किं चैव मेकपदलुब्धस्य ते पदद्वयहानिः प्रसज्येत;
संविदि संवित्पदप्रवृत्तिनिमित्तव त्प्रतियोगिकभेदस्य, आकाशे आ-
काशशब्द प्रवृत्तिनिमित्तव द्भेदस्याभावेन बाधसाध्यवैकल्ययो रभा-
वात्। किंच व्यतिरेकव्याप्तौ स्ववाचकशब्दप्रवृत्तिनिमित्तव त्प्रतियो
गिकभेदत्वेनैव व्याप्तिग्रहे शेषवैयर्थ्यम् । तादृशश्चाप्रसिद्धइति तद्भाव-

व्यतिरिक्ता स्संविद इति, अपितु संविदएव संविदः। नच संवित्त्वं साभान्यतः सिद्ध्यदेकमिति सिद्ध्यति, येन तद्व्यतिरिक्तसंविन्मिथ्यात्वं साध्येत। एकतया सिद्धौच कि मत्र पुनस्साध्यम्।

अतएव न पंचमः, एकया नाद्यविद्यया नैकान्त्याच्च। प्रवाहाविद्यापक्षेपि सजातीयवत्त्व विद्याप्रागभावे त्वदभिमते ऽनुत्पन्नत्वहेतोर्वृत्तेर्विरोधश्च। तस्यापि सजातीयवत्त्वं मिथ्येति चेत्? तर्हि घटादेरपि सजातीयवत्त्वं मिथ्येति यन्नाना तदुत्पन्नमिति व्याप्तिप्रदर्शनासिद्धिः। व्यावहारिकं घटादेः सजातीयवत्त्व मुपजीव्य व्याप्तिप्रदर्शन मिति चेत्? प्रागभावस्यापि व्यावहारिकसजातीयवत्त्वा त्तद्वर्तिनो हेतो र्विरोधएव। नचाभावस्य जाति र्नास्तीति सजातीयाभावः, समानोपाध्याक्रान्तत्ववेषेणा विशेषात्। अन्यथा संविदोपि

---

स्याप्रसिद्धेः तद्विशिष्टानुमित्ययोगः। ननु - संवित्प्रतियोगिक स्वसमानसत्ताकभेदवदन्यत्वं साध्यमिति चेत्? तर्हि किं तदन्यत्वं संवित्समानसत्ताकं साध्यते, उतान्यत्वमात्रं? नाद्यः, अप्रसिद्धेः। मिथ्याभूतस्यापि तादृशस्या न्यत्वस्य सिद्धिसम्भवेन तस्य पारमार्थिकभेदाविरोधितया ऽर्थान्तरत्वापत्तेः। अत एव संवित्प्रतियोगिकानौपाधिकभेदवती न भवतीत्यपि साध्यं निरस्तम्। संविद्भेदप्रतीतेरौपाधिकभेदविषयकत्वकल्पने गौरवेणा नौपाधिकभेदविषयया प्रत्यक्षभेदप्रतीत्या बाधश्च। अन्यथा दुःखादिभेदप्रतीते रप्यौपाधिकभेदविषत्वकल्पनाप्रसंगः। एव मनुमानान्तरेपि दूषण मूह्यम्।

( अपित्विति ) संवित्त्वापेक्षया संविदो न भिद्यन्त इति ब्रूम इत्यर्थः। ननु संवित्त्वस्यैकतयैव सिद्धत्वा द्भिन्ना स्संविदः कथं तद्भिन्ना स्स्यु रित्यत्राह ( नचेति ) ( सजातीयेति ) सजातीयपदेन समानोपाध्याक्रान्तत्वमेव विवक्षणीयं, तादृशं च विशेषणं प्रागभावे

जाति मनभ्युपगच्छतः सिद्धसाधनत्व प्रसंगात् । नच घटादिभेदस्य व्यावहारिकत्वं , इति स्थित मन्यत्र। तदेतत्सर्वं मभिप्रेत्याह —
"अबाधितप्रतीतिसिद्ध दृश्यभेदसमर्थनेन दर्शनभेदो ऽपि समर्थितएव, छेद्यभेदाच्छेदनभेदव " दिति ।

ननु दृश्यभेदेपि दर्शनमेकमेवोपलभ्यते, यथा घटपटाविमा विति ; छेद्यभेदेपि च्छेदकव्यापार एकएव दृश्यते, यथा एकप्रहार भेद्येष्वनेकेषु काण्डेषु ; अतः कर्मभेदे क्रियाभेदइति न व्याप्तिः; नच दृश्यभेदसमर्थनन्यायेन दर्शनभेदसिद्धिरिति विवक्षा, छेद्य भेदा च्छेदनभेदव दित्युदाहरणस्या नाकांक्षितत्वप्रसंगात् ; नच छेद्यभेदसमर्थनन्यायेन छेदनभेद स्समर्थ्यते, यदर्थ मप्युदाहियेत , अतः किमर्थं भाष्यमिति । उच्यते, दृश्यभेदइति न दृश्यानां स्वरूपभेदमात्रं विवक्षितम, अपितु कर्मकारकत्व विशेषणभेदः, अनेकेषा मप्येकसामग्रीविशेष मध्यपतितानां घटादीना मेकं कर्मत्वं, एवं कारकान्तरेष्व प्यनेकेषा मेकं तत्तत्कारकत्वं दृश्यते, यथा दर्शपूर्णमासयोः करणत्व मेकमेव, तथात्राप्यनेकेषा मेकं कर्मत्वमिति न विरोधः। एवं छेद्यभेदेऽपि द्रष्टव्यः । ततश्चायमर्थः " यदि सर्वासां संविदा मैक्यं स्यादेकस्यां घटादिप्रतिनियत विषयायां

---

प्यस्तीत्यर्थः । ननु - छेद्यभेदसमर्थनान्यायेन यथा छेदन भेद स्समर्थ्यते, एवं दृश्यभेदसमर्थनान्यायेन दर्शनभेदोपि साध्यत इति भाष्यार्थ इत्याशंक्याह ( नचेति ) ( यदर्थमिति ) कर्मभेदसमर्थनन्यायेन क्रियाभेदसमर्थने दृष्टान्तप्रदर्शनार्थं मित्यर्थः । ननु छिदिक्रियाभेदे कर्मभेदो युज्यते, तत्र क्रियाभेदस्य सिद्धत्वात; ज्ञानभेदस्य च विप्रतिपत्तेः कथं कर्मभेदः ? ततश्च कथं कर्मभेदा ज्ज्ञानभेदसमर्थनं ? अन्योन्याश्रयापत्ते, रित्यत्राह ( तत श्चाय मर्थ इति ) यदि सर्वासां

संविदि संविदन्तरविषयाणामपि प्रकाशप्रसंगः, नच तथोपलभ्यते, दृष्टादृष्टव्यवस्था प्रदर्शनात्, अतो ऽवगम्यते मिथो ऽनाघ्रातविषयाः संविदः स्वरूपतो भिन्ना इति । तत्रेदं निदर्श्यते - यथा च्छेदन क्रियाः परस्परास्पृष्टविषयाः परस्परं विभिद्यन्ते तद्वदिति ।

एतेन - दृश्यमानस्य संविद्भेदस्य विषयादिभेदोपाधिकत्वं विषयभेदमिथ्यात्वेन संविद्भेदस्य मिथ्यात्वसमर्थनंच निरस्तम्। दृश्यमानत्वादेवच कल्पनागौरवप्रसंगोऽपि परिहृतः । दर्शनस्यच बाधकाभावादेव च प्रमात्वं सिद्धम् ।

ननु प्रत्यगात्मनिष्ठ धर्मभूतज्ञानं नित्यमिति य इच्छति तस्य कथं संविद्भेदस्य विषयभेदोपाधिकत्वापह्नवः । उच्यते, नित्यापि संवित्तत्तत्कर्मानुरूपं तेषु तेषु विषयेषु संकोचं विकासंच भजते। ततश्च कर्मानुरूप तत्तद्विषयीकरणविकार विशेषापेक्षया स्वरूपत एव क्रियाभेदः प्रतिनियतविषयताच युज्यते । नवतु न तथा, नित्यनिर्विकार स्वप्रकाशमात्रत्वा भ्युपगमात् संविदः । मायातिरोधान तदधीनविचित्रविषयत्वादिकं तु न सम्भवतीत्यन्यत्र द्रष्टव्यमिति ।

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां संविन्नानात्व निषेधकानुमान भंगवाद स्त्रयो विंशः ।



---

संविदा मैक्यं स्या त्तदानीं घटसंवित्कर्मत्वमेव पटेपि विद्यमानं पट साविन्निरूपितकर्मत्वं स्यात्, ततश्च घटसंवित्कर्मत्वदशायां सर्वेषा मपि तत्संवित्कर्मत्व मिति दृष्टादृष्टव्यवस्था न स्या दित्यर्थः । ( एतेनेति ) एवं स्वाभाविकभेदसमर्थनेनेत्यर्थः । नन्वनन्तसंवित्कल्पने

गौरवं स्या दित्यत्राह ( दृश्यमानत्वा देवेति ) प्रत्युत प्रतीयमानस्य भेदस्यौपाधिकत्वकल्पने गौरव मिति भावः। दर्शनस्य भ्रान्तित्वा त्कथं ततो भेदसिद्धि रित्यत्राह ( दर्शनस्य चेति )

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां संविन्नानात्वानुमानभंगः

त्रयोविंशः स्कन्धः ॥ २२ ॥



श्रीः ।

श्रीमतेरामानुजाय नमः ।

श्रीमते निगमान्तमहागुरवेनमः ।

# अथ चतुर्विंशो वादः ।

विभूतिगुणवर्गेण विशिष्टं य मधीमहे ।
अप्रतर्क्यविशेषाय तस्मै भगवते नमः ॥

यदाहुः-अनुभूतिर्निर्विशेषा; अनुभूतित्वात् , यत्सविशेषंनतदनुभूतिः, यथाघटः, अनुभूतेस्सविशेषत्वे घटवदननुभूतित्व प्रसंगइति ।

अत्रतावत्प्रतिज्ञायां निर्विशेषपद मनुभूतिपद प्रतिपन्नादाधिकार्थबोधकंनवा ? पूर्वत्रतेनैवानुभूतिरितिवद नधिकार्थत्वेन पुनरुक्ति

---

यतिपति परिदृष्टं श्रेष्ठमाम्नाय वाचां
शुभमतिभि रुपास्यं शुद्ध सिद्धान्तमार्गम् ॥
जनिपथभवभाजां लक्षयन्सानुकम्पो
जयतिभुविवधूल श्रीनिवासार्यवर्यः ॥

बाह्यादिभिश्चिरनिरुद्धनिजप्रकाशे प्राणिन्धमीभवतिवेदपथेसमीचि ।
श्रीमद्यतीन्द्रकृतरलरुचिप्रचारैः सञ्चारयन्जयतिनःकविवादिसिंहः ॥

ब्रह्मणएवानुभूतित्वेन तै रभ्युपगमा त्तस्यच स विशेषत्वेनैव प्रतिपन्नत्वा न्न तस्य निर्विशेषत्व साधनसम्भव इत्यभिप्रायेणाह ( विभूति ) ( नेति ) निषेधश्रुते स्तात्पर्यमाह ( अप्रतर्क्येति ) निर्विशेषत्वे षाड्गुण्य प्रवृत्तिनिमित्तक भगवच्छब्दवाच्यत्वंच नस्यादित्यभिप्रायेणाह ( भगवतेनमइति ) ननु विशेषाभावोनुभूति स्वरूपातिरिक्तएव, अतस्ताहशाधिकार्थ प्रतिपादनान्नपौनरुक्त्यं; अत्रच विशेष

निग्रहापत्तिः । समस्तविशेषाभावएव तेन प्रतिपाद्यत इति चेन्न ;- उक्तोत्तरत्वात् । तथाहि - सकिमनुभूतिस्वरूपमेव ? ततोऽतिरिक्तंवा किंचित्? पूर्वत्रपुनरुक्तिः, सिद्धसाधनताच । नहि संवित्पर्याय शत पाठेपि नः काचित्क्षतिः । उत्तरत्रविशेषवत्त्वमवर्जनीयं । समस्तविशेषा भावो न ब्रह्मणोरूपादिवद्धर्मइतिचेत ? रूपादिवद्धर्मत्वं नास्तीतिवदता किंगुणत्वादिरूपेणधर्मत्वं प्रतिक्षिप्तं, उत यथाकथंचि द्विशेषणत्वमपि? आद्ये गुणत्वादिरूपेण विशेषकत्वाभावेऽपि प्रकारान्तरेण विशेषकत्वा त्सविशेषत्वं तावदवर्जनीयं । तथाच सति गुणादिरूपे विशेषे कः प्रद्वेषः । द्वितीये पक्षीकृतायाएव अनुभूते स्सा [ ध्यधर्मा ] ध्या नन्वयस्यत्वयैवोक्तत्वा दनुमानवृत्तान्ता नभिज्ञत्व मनान्वितनिग्रह स्थानंच । प्रमाणवलादय मेको विशेषः स्वीक्रियत इति चेत् ? प्रमाणवलादिति किं मिद मेवानुमानं प्रमाणं, उतान्यच्छ्रुत्यादिकं ?

---

मात्राभावस्य प्रतिपादना द्विशेषाभावरूप विशेषस्याप्यभावः प्रतिपाद्य इति विशेषाभावस्यापि मिथ्यात्वा न्न तेन सविशेषत्वं दोषइत्यभि प्रायेण शंकते ( समस्तेति ) समस्त विशेषाभावोहि विशेषाभावो विशेषाभावाभावश्च, तत्र विशेषाभावाभावोनुभूतिस्वरूपं, उतातिरिक्तं? पूर्वत्र विशेषाभावमादाय पौनरुक्त्याद्यभावेपि विशेषाभावाभावमादाय तदवर्जनीयं, उत्तरत्र तेनैव स विशेषत्व मित्याह " साकि "मित्यादिना ।

ननु समस्तविशेषाभावः स्वरूपातिरिक्तएव, परन्तु यथा रूपा दिकं घटादे र्धर्मः न तथा ब्रह्मण स्सधर्मः, अतो न पौनरुक्त्यं नापि सविशेषत्वमिति शंकते ( समस्तविशेषाभावइति ) किं विशेषाणां धर्मत्वमेव प्रतिक्षिप्यन्ते, उत यथाकथंचिद्विशेषणत्वमपि ? आद्ये स विशेषस्य न प्रतिक्षेपः , विशेषाश्रयत्वाभावेपि तत्सम्बन्धमात्रा त्स विशेषत्वोपपत्तेः ; द्वितीये पक्षसाध्यसम्बन्धासिद्धे रनुमानफलासि द्धिरित्याह ( रूपेत्यादि ) ( प्रमाणवला दिति ) अयं विशेषाभाव एकः

न पूर्वः, असिद्धेः । कथं तस्यैव प्रमाणत्वे विमन्यमानं प्रति तदेव प्रमाण मुपस्थापयसि । नोत्तरः, श्रुत्यादे र्निर्विशेषप्रतिपादकत्वस्य दूषयिष्यमाणत्वात् । यदि चाभावरूप मेकं विशेष मभ्युपगच्छसि तदा भावरूपे ष्वन्येषु विशेषेषु किं भावरूपत्वादेवामर्षः, उत प्रमाणाभावात् ? नाद्यः, अभावरूपे विशेषे कस्यचि दमर्षप्रसङ्गात् । न द्वितीयः, नित्यत्वस्वयम्प्रकाशत्वादे स्त्वयैव प्रमाणै रुपपाद्यमानत्वात् । व्यावहारिकप्रमाणोपस्थापितत्वा न्नित्यत्वादीनां मिथ्यात्वमिति चेन्न; निर्विशेषत्वस्यापि व्यावहारिकप्रमाणोपस्थापितत्वेन मिथ्यात्वप्रसङ्गात् । अस्त्वेवं किं न

---

नपुनरेतदतिरिक्तो भावरूपोऽभावरूपोवा विशेष स्स्वीक्रियत इत्यर्थः । ( असिद्धेरिति ) असम्भवादित्यर्थः । तदेवोपपादयति ( कथमिति ) विशेषाभावस्यापि विशेषत्वा दनुभूति र्निर्विशेषेति प्रतिज्ञायां सामान्यतो विशेषमात्रनिषेधेन विशेषाभावस्यापि निषेधाद्व्याघाता न्नैव मनुमान सम्भवः । नच सिसाधयिषित भावाभावप्रतियोगिक विशेषाभावातिरिक्त भावाभावरूप विशेषनिषेधा न्न व्याघातइति वाच्यम् ; सिसाधयिषितस्य भावाभावरूपविशेष प्रतियोगिकाभावस्य तत्प्रतियोग्यनुयोगिरूपत्वे भावाभावरूप समस्तविशेषाश्रयत्व प्रसंगात । सिसाधयिषितातिरिक्ता सिद्ध्या तन्निषेधायोगाच्च । भावाभावरूपकृत्स्न विशेषप्रतियोगिकसामान्याभावस्या प्रसिद्ध्या न तद्व्यतिरिक्तत्वावच्छिन्न प्रतियोगिकाभावस्य साधनसम्भव इति बहुदूषणग्रस्ततयाविमन्यमानं प्रति कथ मेतदनुमानोपन्यास इत्यर्थ. ॥ भावरूपविशेष एव निषिध्यते, नत्वभावोपीति नोक्तदोष इत्याशंका मनूद्य दूषयति ( यदि चेति ) यद्वा पूर्वोक्तसाध्याभ्युपगम एव बाधक माह ( यदि चेति ) ( अभावरूप इति ) यदि सत्त्वेपि त्वदमर्षबलादेव भावरूपविशेषणासिद्धिः , तदान्यस्या मर्षा दभाव रूपविशेषोपि न सिद्ध्ये दित्यर्थः ( नित्यत्वेति ) नित्यत्वादीनां

श्छिन्न मिति चेत् ? नित्यत्वनिर्विशेषत्वादे र्मिथ्यात्वेन सौगतवैशेषिका द्यभिमता नित्यत्वसविशेषत्वादे स्वर्जनीयत्वात् ।

ननु - निर्विशेषमिति प्रतिज्ञायां विशेषान्तरं निर्विशेषत्वंच वि- शेषत्वलक्षण सामान्योपाधिना युगपदेव प्रतिक्षिप्यते, ततः परं च न किंचि द्वक्तव्य मस्तीति चेत्? तत्तत्साध्यधर्मानन्वयलक्षणो दोषः प्रागेवोक्तः ।

किंच विशेषान्तरशब्देन किं सामान्यतः सविशेषत्वमेव विवक्षितं, उत रूपरसादयः कतिचन विशेषाः ? पूर्वत्र निर्विशेषत्वमपि नास्ति सविशेषत्वमपि नास्तीति व्याहतवर्णना, ' परस्परविरोधेहि न प्रकारान्तर

---

ब्रह्मस्वरूपाभिन्नत्वे नित्यादिपदाना मभिन्नार्थत्वप्रसंगेन धर्मत्वमेव वाच्यमिति भावः ।

ननु - निर्विशेषत्वस्य मिथ्यात्वेपि न विशेषान्तरस्य सत्यत्व सिद्धिः, निर्विशेषमिति प्रतिज्ञायां निर्विशेषत्वेन रूपेण निर्विशेषत्वस्य विशेषान्तरस्यच युगपदेव निषेधात्; ततश्च तमेवोभयनिषेध मादाय सविशेषत्वशंकायामपि न किञ्चिद्वक्तव्य मवशिष्यते, तस्यापि वि- शेषत्वेन रूपेण निषेध्यतया मिथ्यात्वेन परिहृतत्वा दित्याशंकते ( निर्विशेषमिति ) तथासति विशेषान्तराभाव निर्विशेषत्वाभावादि साध्याना मपरमार्थतया साध्यधर्मानन्वयलक्षणो दोषः प्रागुक्त स्स्या दित्याह ( तत्तदिति ) व्यावहारिक मादाय साध्यान्वयोपपत्तिशंका- या अप्यनुपदं वक्ष्यमाणव्याघातेन निरासो बोध्यः । ( पूर्वत्रेति ) निर्विशेषत्वस्य निषेधे सविशेषत्वविधि स्स्यात्, सविशेषत्वनिषेधे निर्विशेषत्वविधि स्स्यात , ततश्च व्याघातः, समानसत्ताकयो र्भा- वाभावयो रेकत्रासम्भवा दित्यर्थः ( परस्परेति ) भावाभावयोः पर-

रिधति' रिति न्यायात । उत्तरत्र रूपरसादिविशेषं निर्विशेषत्वादिकं चापोह्य शास्त्रसिद्धैः सर्वज्ञत्वादिभिः सविशेषत्वप्रसंगः ।

किञ्चेयं प्रतिज्ञा त्वदभिमतहेतुरूपधर्मप्रतिक्षेपिका, नवा? आद्ये हेत्वभावे साध्याभावः, प्रतिज्ञाहेतुविरोधश्च । द्वितीये तेनैव विशेषण तया भ्युपगतेन सविशेषत्वम् । हेत्वादिधर्मान्वयस्य प्रमाणसिद्धत्वाभ्यु पगमेन तन्निषेधे कालात्ययापदेशप्रसंगश्च । यदिच व्यावहारिक हेतु धर्मान्वयेन साध्यसिद्धि रिति मन्यसे? तदा बाष्पधूमभ्रमानुमितदहन

---

रूपराभावव्यापकाभाव प्रतियोगित्वा दित्यर्थः ( उत्तरत्रेति ) यदि कतिपयविशेषाणां निषेध इति ब्रूषे, तर्हि घटादिधर्मत्वेन प्रसिद्धानां रूपादीनां प्रमाणविधुराणां त्वदभिमतनिर्विशेषत्वाविद्याश्रयत्वादीनांच निषेध स्स्यात । ततश्च निष्प्रत्यूहाशास्त्रसिद्धसार्वज्ञ्यादिसिद्धिः ( त्वदभिमतेति ) किन्त्वदभिमतहेत्वभावं साधयति, उत तज्ज्ञापन मात्रं करोतीति विकल्पार्थः ( प्रतिज्ञाहेतुविरोध श्चेति ) प्रतिज्ञायाहेतु प्रतिक्षेपकत्वे हेतुवचनं प्रतिज्ञाया विरुद्ध मित्यर्थः ( द्वितीय इति ) ततश्च हेतुसिद्धौ साध्यासिद्धेः साध्यसिद्धौ हेत्वसिद्धेः प्रतिज्ञाहेतु वचनयोः परस्परव्याघात इति भावः ( हेत्वादीति ) हेतुना साध्य सिद्धये प्रतिज्ञाया हेत्वप्रतिक्षेपकत्वांगीकारात्, हेतौ स्साधकत्वस्य च प्रामाणिकत्वाधीनतया प्रामाणिकत्वस्या भ्युपगन्तव्यत्वात्, सामान्यतो निर्विशेषत्वसाधने बाध इत्यर्थः । आदिपदेन पक्षता परिगृह्यते । नन्वस्तु हेतोः प्रतिक्षेप एव; नचैव मसाधकत्वप्रसंगः, व्यावहारिकत्वेन साधकत्वसम्भवात्; लाघवेन सत्त्वमात्रस्य साध कत्वप्रयोजकतया पारमार्थिकत्वस्या प्रयोजकत्वात, इत्याशंका मनु वदति ( यदिच व्यावहारिकेति ) सत्त्वमात्रस्य प्रयोजकत्वेतिप्रसंग इत्याह ( तदेति ) हेतुसमसत्ताकत्वेनेति शेषः । धूमभ्रमानुमित दहनवत स्वाप्नद्राविणपारणामावभूषणवच्च साधनसमसत्ताकत्वावश्य

वत् - स्वप्नलब्धद्रविणनिर्मितभूषणवच्च - साध्यव्यापिव्यावहारिकत्वस्य त्वयैवानुमन्तव्यत्वा न्न किंचि दस्माकं दूषणीय मस्ति । यादृच्छिक

---

म्भावेन निर्विशेषत्वसाध्यस्यापि व्यावहारिकत्वेन मिथ्यात्वान्न किञ्चि दस्माभि र्दूष्य मित्यर्थः । यद्वा व्यावहारिकपदमेव साधनसमसत्ताकत्वपरं, अतो नाध्याहारः "स्वप्नलब्धे" ति दृष्टान्तार्थम् । यथा कार्यस्य कारणसमसत्ताकत्वं नियतं, तथा ज्ञाप्यस्यापि ज्ञापकसम सत्ताकत्वं नियत मित्यर्थः ( न किंचि दस्माक मिति ) त्वयैव निर्विशेषत्वस्य मिथ्यात्वांगीकारेण विशेषाणां सत्यत्वसम्भवादिति भावः ।

ननु व्यावहारिकधूमस्य व्यावहारिकवह्निव्याप्तिग्रहे तदनुमान मस्तु, इहतु व्यावहारिकानुभूतित्वप्रतियोगिकाभावस्यैव निर्विशेत्व रूपसाध्याभावात्मक सविशेषत्वं प्रति व्यापकत्वग्रहा द्व्यावहारिकानुभूतित्वेनैव तत्साधनं युक्त मिति चेन्न; - एव मनुमिते र्व्यावहारिकविषयत्वेना प्युपपत्तेः पारमार्थिकविशेषाविरोधा दर्थान्तरत्वात ।

किञ्च - व्यावहारिकाभावे व्याप्तिग्रहा त्पारमार्थिक प्रतियोगि सिद्धिरिति साहसमेव, साध्यप्रतियोगिक प्रातिभासिकाभाव व्यापकाभावप्रतियोगिना साध्यविरुद्धेन साध्यानुमानापत्तेः । ननु - व्यावहारिकाभावे व्याप्तिग्रह एव प्रतियोग्यनुमिति रिति चेन्न; - शुक्तिरजताभावस्य तदधिकरणे व्यावहारिकत्वस्य त्वयैवांगीकारा त्तस्याश्चाभावे शुक्तित्वव्याप्तिग्रहा च्छुक्तित्वाभावेन तच्छुक्तिरजतानुमानापत्तेः । प्रतियोगिव्यधिकरणाभावव्याप्तिग्रह एवानुमिति हेतु रिति चेन्न; - ब्रह्मण्यपि व्यावहारिकविशेषांगीकारेण तस्य प्रतियोगिवैयधिकरण्यासिद्ध्या तत्र व्याप्तिज्ञानस्य निर्विशेषत्वानुमिति हेतुत्वाभावापत्तेः । प्रतियोगिवैयधिकरण्यावच्छेदकावच्छेदेन व्याप्तिग्रहः प्रतियोग्यनुमिति हेतुरिति चेन्न; - त्वयैवाधिष्ठानातिरिक्त प्रातिभासिकप्रतियोगिक प्रातिभासिकाभावांगीकारेण तद्व्यापक

संवादि लिंगविभ्रमव दभिमतसिद्धि रिति चेत्? किमियं सिद्धि र्निर्ण-
यात्मिका, उत सन्देहात्मिका? न पूर्वः, यादृच्छिकसंवादीत्यनेनैव
विसंवादशिरसो ऽपि सम्भावितत्वेन निर्णयासिद्धेः। नोत्तरः, सन्दि
ग्धनिर्णयार्थं न्यायं प्रवर्तयितु मिच्छतः पुनरपि तेनैव न्यायेन सन्देह

---

घटत्वादि प्रतियोगिकाभावेन प्रातिभासिक तद्रजतानुमानापत्तेः।
प्रतियोगि वैयधिकरण्या वच्छेदेन व्यावहारिकाभावे व्याप्तिग्रहः प्रति
योग्यनुमिति हेतुरितिचेन्न; - प्रातिभासिकरजतसामग्र्या प्रातिभा
सिकरजतानुमाना भावापत्तेः । [· प्रातिभासिक ] प्रातिभासिका
भावएव तत्सामग्री विरहव्याप्यत्व ग्रहात् । नच तत्रान्वयव्याप्त्यै
वानुमिति र्नव्यतिरेक व्याप्त्येतिवाच्यं, अन्वयाप्रतिसन्धान दशा
यां व्यतिरेकव्याप्तिग्रहा दनुमितेस्त्वयापह्नोतु मशक्यत्वात । अन्यथा
ऽन्वयव्याप्ति ज्ञानेनानुमितिः क्वापि नास्तीति वक्तुं शक्यत्वा द्व्य-
तिरेकिमात्रो च्छेदापत्तेः। तस्मा दभावमात्रे - प्रतियोगिव्यधिकर-
णाभावमात्रे - व्यावहारिकाभावमात्रे - व्यावहारिकप्रतियोगि व्यधि
करणव्यावहारिकाभावेवा - व्याप्तिग्रहादनुमित्यसम्भवा न्न विशेषे
व्याप्तिग्रहानिर्विशेषत्वानुमिति सम्भवः।

( लिंगविभ्रमव दिति ) लिंगविभ्रमस्थल इवेत्यर्थः ( किमिय
मिति ) किं निर्विशेषत्वानुमितिः निर्विशेषंपरमार्थ उतापरमार्थइति
सन्देहविरोधीनी, उतनेति विकल्पार्थः, ( नपूर्वइत्यादि ) हेतुज्ञानस्य
भ्रमत्वेज्ञानस्य विद्यमानत्वात ज्ञानेसत्यपि सन्देहो न निवर्तत एव,
ज्ञानस्य भ्रमजन्यतया अप्रामाण्यशंकाग्रस्तत्वात; ततश्च यादृच्छिक
संवादसंभवबुद्ध्या तन्निवृत्तिर्वाच्या, साच नसम्भवति, विसंवादस्याप्य
नुभवबुद्ध्या अप्रामाण्यशंकाया अनिरासादित्यर्थः ( सन्दिग्धेति )
सन्देहोह्यनुमानेन निवर्तनीयः, ततश्च सन्देहनिवृत्त्यर्थं प्रवृत्तेनानुमानेना
प्रामाण्यशंका स्कन्दितत्वेनार्थ संशयाधाना त्तस्य चाहित सन्देहत्वम

स्यैव स्थिरीकरणात् । असत्या स्सत्यसिद्धिभागस्तु स्वस्थाने द्रष्टव्यः । अतो न कथंचिदपि सर्वविशेषशून्यत्वं प्रतिज्ञातुं शक्यते ।

घटस्यच परमार्थतः सविशेषत्वानभ्युपगमा द्दृष्टान्त स्साध्या व्यावृत्तः । अथ मिथ्याभूतविशेषयोगा त्तत्र सविशेषत्व मिच्छसि ? तदानुभूतेरपि तथाविधविशेषाभ्युपगमा न्न तत्प्रतिक्षेपः शक्यः । पर मार्थविशेषशून्येति साध्यार्थेतु व्यतिरेकदृष्टान्तासिद्धि रुक्ता ।

यस्त्वनुभूति र्दृश्यधर्मरहितेति साध्यं प्रयुङ्क्ते; तस्य साध्यवि- शेषणवैयर्थ्याच्च निग्रहः । अदृश्यधर्मानभ्युपगमात् । एवं प्रत्यक्त्वा जडत्वप्रकाशत्वादिहेतवोऽपि निरस्ता वेदितव्याः ।

---

संशयाधायकेसत्यनुमानसहस्रेणापि निवर्तयितुमशक्यत्वा त्सन्देहस्यै व स्थिरीकरण प्रसंगइत्यर्थः । प्रतिज्ञादोषमुपसंहरति ( अतइति ) परमार्थस्य विशेषाभावस्य घटादावपि सत्त्वाद्धेतो रसाधारण्यमित्याह ( घटस्येति ) घटादौ यद्यपि विशेषाभावः परमार्थो विद्यते, तथा पि स पारमार्थिकत्वलक्षण धर्मावच्छिन्नप्रतियोगिकः, नतु विशेषत्वा वच्छिन्नप्रतियोगिकः, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिना अभा वस्य विरोधात् ; अत्रच विशेषत्वावच्छिन्नाभावएवसाध्यः, अतोना साधारण्यं ; यत्तु समानसत्ताकयोरेव विरोधः अत स्स्वरूपेणैववि शेषप्रतियोगिकस्तदभावो घटादावप्यस्तीतिमतं; तत्र नेदमनुमानं, येन तदाशयासाधारण्यं दुष्परिहरंस्यादित्यभिप्रायेणशंकते ( अथेति ) तथासति बाधएवेत्याह ( तदेति ) परमार्थविशेषत्वावच्छिन्नप्रतियो- गिकाभावएवसाध्यः, अतोन बाधइत्याशंका मनूद्यपरिहरति ( परमा र्थविशेषेति ) ( उक्तेति ) संविदोनिर्विकारत्वभंगादौ "तथापिव्यति रेकासिद्धि" रित्यादिनोक्तन्यायेनोक्तप्रायेत्यर्थः । पारमार्थिकत्वलक्ष ण धर्मावच्छिन्नप्रतियोगिकविशेषाभावस्य साध्यत्वेपीदं दूषणं बोध्यं "वैयर्थ्याच्चे" ति चकारः पूर्वोक्तदोषसमुच्चयार्थकः । "प्रकाशत्वादी"

येच धर्मपक्षीकारेण प्रयोगाः- भेदादयो नानुभूतिधर्माः, दृश्यत्वात्, धर्मत्वात्, रूपादिवत्, इत्यादयः । तत्र तावत् स्वाभ्युपगतनित्यत्वादीनामपि पक्षीकारे ऽपसिद्धान्तः । तद्बहिष्कारे तै रेवानैकान्त्यम् । तेषां मिथ्यात्वेना भ्युपगमा न्नापसिद्धान्तानैकान्ताविति चेन्न; - तथा सति तत्प्रतिक्षेपकान् प्रति तत्समर्थनप्रयासनैरर्थक्यात् । तेषा मनुभूतिस्वरूपमात्रत्वेच तत्त्वरूप मभ्युपगच्छद्भि स्सौगतादिभि स्सह न विमन्तव्यम् । अनित्यत्वादिकल्पना त्तै र्विवाद स्तत्प्रतिक्षेपश्च क्रियत इति चेन्न; — अनित्यत्वादिनिषेधस्यापि स्वरूपत्वे स्वरूपातिरिक्तस्य सत्यत्वे मिथ्यात्वेच सिद्धसाधनत्वव्याघातादिभि र्दत्तोत्तरत्वात् ।

---

त्यादिशब्देना परिच्छिन्नत्वादिग्रहः । किमनुभूति धर्मत्वमात्रं निषिद्ध्यते, उतपारमार्थिकानुभूति धर्मत्वमिति विकल्पमभिप्रेत्याद्यं द्वेधाविकल्प्यदूषयति ( तत्रतावदिति ) द्वितीयंकल्पमुत्थापयति ( मिथ्यात्वेनेति ) पारमार्थिकानुभूतिधर्मत्वाभावएवसाध्यः, नित्यत्वादयश्च व्यावहारिकाएव, अतस्तेषां पक्षत्वेच बहिर्भावेच नोक्तदोषावित्यर्थः ( तथासतीति ) ब्रह्मणिनित्यत्वादिक मनिच्छद्भिरपि नित्यत्वादिकं मिथ्येत्यभिधानादित्यर्थः । नहितैस्स्वात्यन्ताभाव सामानाधिकरण्यरूपं मिथ्यात्वमुच्यते, किंतु अत्यन्ताभाव प्रतियोगित्वमेव, अतस्तत्समर्थनं सफलमितिचेन्न, - व्याघातेनतदत्यन्ता भावाधिकरणे तत्समर्थना सम्भवात् । विस्तरस्त्वन्यत्रद्रष्टव्यः । ननुनित्यत्वादिकं ब्रह्मणस्स्वरूपमेव, अतस्तस्य पक्षत्वेपि धर्मत्वाभावान्नबाधः, अपक्षत्वेपि हेत्वभावान्न व्यभिचारइति शंकामनूद्य परिहरति ( तेषामिति ) (अनित्यत्वादि निषेधस्येति ) स्वरूपत्वेसिद्धसाधनं, स्वरूपातिरिक्त सत्यत्वेनुभूति स्वरूपत्वोपक्रमव्याघातः, अद्वितीयत्व व्याघातश्च । मिथ्यात्वेप्युपक्रम व्याघात स्तत्प्रतिक्षेपासम्भवश्च । अनुभूतिपक्षकानुमानं

किञ्चानुभूतिशब्देन लोकसिद्धसंविद्विवक्षायां विषयाश्रयस्वगत विशेषाणां अनन्तानां प्रत्यक्षादिसिद्धत्वस्थापना त्कालात्ययापदेशः । श्रुतिसिद्धब्रह्मस्वरूपपक्षीकारेतु श्रुत्यैव तद्गतानन्तविशेषविषयया बाधश्च परिहार्य इति ।

तदेतत्सर्वमपि संगृहीतं भाष्ये - "यदपि नास्यादृशे दृशि [स्व]रूपाया दृश्यः कश्चिदपि धर्मो ऽस्ति, दृश्यत्वादेव तेषां न दृशि धर्मत्व मिति च । तदपि स्वाभ्युपगतैः प्रमाणसिद्धैः नित्यत्वस्वय म्प्रकाशत्वादिधर्मै रुभय मनैकांतिक" मित्यादिना ।

तत्र "स्वाभ्युपगतै" रित्यप सिद्धांतादे स्संग्रहः । "प्रमाण सिद्धै" रितितु बाधादेः । अनैकान्तिकशब्दः स्वसाध्यसम्बंधनियम निषेधार्थः । तेन यथासम्भवं बाधादेरपि संग्रह इति । प्रतिप्रयोगश्च

---

दूषणान्तरमाह ( किंचेति ) " नास्यादृशे " रित्यादिनादृशिपक्षकानुमान मुक्तं, " दृश्यत्वादेवे "त्यादिना धर्मपक्षकमुक्तं, तदप्युभय मित्यन्वयः । ( अपसिद्धान्तादेरिति ) ' तत्र ' शब्देन नित्यत्वादि प्रतिक्षेपका न्प्रति तत्समर्थनप्रयासनैरर्थक्यप्रसंगा त्स्वाभ्युपगत नित्यत्वादीनां मिथ्यात्वासम्भवः, स्वाभ्युपगतै रित्यत्रस्वेनैवे त्येवकारविवक्षया परानंगीकारलाभा त्परप्रतिक्षेपपुरस्सरं स्वाभ्युपगतस्य नित्यत्वादेः सिद्धसाधनप्रसंगेन स्वपरसाधारणस्वरूपमात्रत्वासम्भवश्च गृह्यते । " बाधादे " रित्यादिपदेना नैकान्त्यं गृह्यते । नन्वनुभूतित्वस्य कथ मनैकान्त्यं, पक्षे ऽनैकान्त्यासम्भवादित्यत्राह ( अनैकान्तिकशब्दइति ) ( यथासम्भवमिति ) अनुभूतित्वलिंगके बाधः, दृश्यत्वलिंगके अनै- कान्त्यमित्यर्थः । भाष्ये " धर्मै " रिति सामान्यतः प्रयोजकत्वमात्रंवि वक्षितं, तच्चानैकान्त्यसाध्याभावाधिकरणयो र्बाधे विषयतया द्रष्टव्यं ।

अनुभूतिः सविशेषा- भासमानत्वात् , घटादिवत्; नित्यत्वादयो ऽनु-
भूतिधर्माः, अभ्युपगतानुभूतिस्वरूपंप्रति तद्धर्मतया प्रमाणत स्सा-
ध्यमानत्वात्, यत्र यत्प्रमाणतः साध्यते स तद्धर्मः, यथा सम्प्रतिपन्नः;
इत्यादयः । नचात्र विपक्षे बाधकाभावः शंक्यः, प्रागुक्तनिर्विशेष
प्रतिज्ञानुपपत्त्यादेरेव बाधकत्वात् । अन्ततो निर्विशेषानुमानस्यैव
विपक्षे बाधकरहितत्वाच्च । नच दृष्टांतासिद्धिः, त्वयैव घटादे र्व्यतिरेक

---

( सविशेषेति ) स्वसमानसत्ताकविशेषवती त्यर्थः । भासमानत्वञ्च
प्रकाशमात्रं विवक्षितम् । तच्चानुभूते श्चैतन्याविषयत्वेपि परेणांगीकृत
तमिति नासिद्धिः । ( अनुभूतिधर्मा इति ) अधिकरणसमानसत्ताकत्व-
मपि धर्मविशेषणं , तेन न सिद्धसाधनं । ( अभ्युपगतेति ) तद्धर्मत-
~~या प्रमाणत स्साध्यमानत्वा~~ दित्येव हेतुः । प्रमाणाभासेन साध्य-
माने क्षणिकत्वादौ व्यभिचारवारणाय प्रमाणत इत्युक्तम् । प्रमाण
सिद्ध तद्धर्मत्वमात्र मुपजीव्य धर्मिसमानसत्ताक धर्मत्वं साध्यत इति
न सिद्धसाधनम् । नचासिद्धिः, तैनैव सौगतान्प्रति कारणत स्साध्य
मानत्वात । ननु - न धर्मतया नित्यत्वं साध्यते, किन्तु स्वरूपतये
त्याशंक्याह (अभ्युपगतेति ) सौगतै स्स्वरूपस्या भ्युपगमा त्तान्प्र-
ति स्वरूपस्य साधने सिद्धसाधनं स्यादित्यर्थः । ( प्रागुक्तेति )
अनुभूतिपक्षके निर्विशेषत्वप्रतिज्ञानुपपत्ति र्विपक्षे बाधिका, नित्यत्वा
दिपक्षकेतु नित्यत्वादीना मनुभूतिसमानसत्ताक तद्धर्मत्वाभावे मि·
थ्यात्वा न्नित्यत्वप्रतिक्षेपकान्प्रति तत्समर्थनप्रयासनैरर्थक्यादि विपक्षे
बाधकम् । अयमेव निर्विशेषप्रतिज्ञानुपपत्त्यादे रित्यादिशब्दार्थः । ( अ
न्ततइति ) प्रत्युतेत्यर्थः ( विपक्षे बाधकरहितत्वादिति ) नचानुभूतेस्स
विशेषत्वे घटादिव दननुभूतित्वप्रसंगो विपक्षे बाधक उक्तएवेति वा
च्यम् , विशेषवत्त्वमात्रस्य व्यावहारिक विशेषवत्त्वमात्रस्य च प-
क्षातिरिक्ते सर्वत्र सहचारे प्यननुभूतित्वव्याप्यत्वाभावा त्स्वसमान

दृष्टांततया उदाहरणात् । बाधादे रपि प्रसंगाभावेन प्राबल्य मक्षमदुक्ताना मिति ।

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य
वेदान्ताचार्यस्य कृतिषु शतदूषण्यां निर्विशेषत्वानुमान
भंगवाद श्चतु विंशः ।



---

सत्ताकविशेषवत्त्वस्यापि तर्कशून्यतया अननुभूतित्वव्याप्यत्वाभावा त्तर्कस्य मूलशैथिल्यात् ।

यत्तु केनचि दुक्तं, सत्यकामत्वादयो गुणाः ब्रह्मधर्मिक प्रति योगिसत्त्वविरो ध्यत्यन्ताभाव प्रतियोगिनः, पदार्थत्वात्, वस्तुत्वात्, भावत्वाद्वा, ब्रह्मवत्; ब्रह्मनिर्गुणं, गुणात्मकत्वात्, गुणवत्; नच गुणात्मकत्व मसिद्धं; "विज्ञान मानन्दं ब्रह्मे" ति श्रुत्या आनन्दात्म कत्वबोधनात्; आनन्दादय स्सन्त्येव धर्माः, तेचापृथक्त्वेपि पृथगि- वावभासन्त इत्यंगीकारात् इति ।

अत्र पक्षे सत्यकामत्वादि विशेषणवैयर्थ्यं । नन्वानन्दोविषयानुभवो नित्यत्वंचेति सन्तिधर्माः, तेचापृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इत्यं [ तिज्ञानादीनांतत्रांगी ] गीकारा त्तेषामपि पक्षत्वे बाधस्स्यादिति त द्व्यवच्छेदाय पक्षविशेषणं सार्थमेवेतिचेन्न, - ज्ञानादीनां स्वरूपाभि न्नत्वेन तद्वृत्तित्वा सम्भवात् । किंच - सत्यकामत्वादीनामपि तद्वदेव स्वरूपाभिन्नत्वं ब्रह्मणिवृत्तिश्च सम्भाव्यत एवेति बाधः । साध्येच प्र तियोगिन स्सत्यकामत्वादे र्व्यावहारिक सत्त्वांगीकारेण तदभावस्य तद्विरोधित्वाभावा द्बाधः । तत्र ब्रह्मणि प्रतियोगिसत्त्व विरोधित्व मस्तीतिचेन्न, - तत्रैव व्यावहारिकसत्त्वस्य विद्यमानतया तद्विरोधा

सिद्धेः । पारमार्थिक सत्त्वविरोधित्वं विवक्षितमिति चेन्न;- दृष्टान्ते साध्यवैकल्यात । ब्रह्मणिप्रतियोगिपारमार्थिकसत्त्वविरो ध्यत्यन्ताभाव प्रतियोगित्वं विवक्षितमिति चेन्न; - आनन्दात्मकस्य ब्रह्मण स्स्ववृत्त्यंगीकारा त्साध्यवैकल्यानुद्धारात् ।

किंच - किमयमत्यन्ताभावः प्रातिभासिकः? उतव्यावहारिकः ? अथवा पारमार्थिकः ? नाद्यः, अप्रत्यक्षत्वेन प्रातिभासिकोत्पत्त्यसि- द्धेः; तत्साधनेपि पारमार्थिकसत्ताविरोधाच्च । अतएव न द्वितीयः, व्यावहारिक प्रतियोगिन स्तत्रांगीकारेण तत्समानसत्ताकाभावस्य तत्र बाधाच्च । तत्सिद्धावपि पारमार्थिकसत्त्वाविरोधाच्च । नापि तृती यः, ब्रह्मस्वरूपातिरिक्तत्वे बाधात ; तदनतिरिक्तत्वेपि तस्य ब्रह्म- णि वृत्त्यंगीकारे साध्यवैकल्यात् । तदनंगीकारे बाधात । गुणात्म कत्वादि रसिद्धो हेतुः, श्रुत्या ज्ञानात्मकत्वप्रतिपन्नत्वात् । गुणत्वं स स्यमितिचेत् ; - ब्रह्माभिन्नतया गुणत्वाभावएव ज्ञानादीनां किं नस्या त् ? किंच ज्ञानाभेदा क्रियात्मकत्वमेव किं न स्यात् ? यदि नैयायि के ज्ञानादीनां गुणत्वांगीकारादेव तथेच्छसि; तर्ह्यतिप्रसंगः ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत
परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण
परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन
रामानुजदासेन विरचितायां शतदूषणी
व्याख्यायां चण्डमारुताख्यायां
निर्विशेषत्वानुमानभंग

चतुर्विंश स्स्कन्धः ।

श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

## अथ पंचविंशो वादः ।



अन्योन्यव्यतिरिक्तयो रविजह द्धर्मत्वधर्मित्वयो
र्व्यापारे गृहमेधिनो रिव ययोः साहित्य मासूत्र्यते ।
सा संवि त्सकलार्थसाधकवपु स्तत्सिद्धभोगः प्रभुः
श्रीमा नस्तु समे समस्तदुरितोत्ताराय नारायणः ॥

---

अगणित परव्याव र्त्तकौशिक वैभवशालिनी
रवितथपरब्रह्म स्वाभाव्य गोचरसंविदः ।
विगळितविपर्यासा विश्राणयत्वनुकम्पया
सततमिह न स्त्रय्यन्तार्यो हृदंबुजमावसन्

अकृत्रिम सरस्वती परिमळस्फुरद्भारती
निवेशितपरावर स्थिति रवद्यगन्धं जहत् ।
रमानिधि गुरुस्सनः स्फुरतुतत्वधी गुप्तये
वधूलकुलभाविता वतरणस्सदामानसे ॥

(अन्योन्येति) अनेन वादार्थ स्संगृह्यते । व्युपसर्गेण विविध विरुद्धधर्माद्ध्यासा द्भेदस्सूच्यते । अस्ति हि 'य स्सर्वज्ञ ' इत्यादिना आश्रयाश्रयिभावप्रतीतिः । अतिना भेदाभेदो निराक्रियते । व्याहते स्त न्निरास इतिभावः । नन्वाश्रया श्रयिभावो ऽविद्योपाधिकृत इत्यत्राह (अविजहदिति) "परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञान बलक्रियाचे" ति श्रुते रिति भावः (आसूत्र्यत इति) "अभिद्ध्योपदेशा" दित्यादिसूत्रे ष्वितिभावः (सकलार्थ साधकेति) सकलार्थ व्यवहारहेतु रित्यर्थः । यद्वा - अर्थसाधकत्वं अर्थहेतुकत्वं, अर्थव्याप्तत्वमिति यावत; जीवज्ञानवत् भगवज्ज्ञानं नार्थ व्यभिचारीति प्रमात्वं विवक्षितं । (तत्सिद्धभोगइति) अपरिच्छिन्न स्वरूपगुणविभूति साक्षा

य दुच्यते - संविदात्मा अजडत्वात् , यदुक्तसाध्यं न भवति तदुक्त साधन मपि न भवति, यथा घटः, इति; तदसत् , स्वस्मै भासमानत्व रूपस्याजडत्वस्य हेतो रसिद्धेः । अव्यभिचरितप्रकाशसत्ताकत्वस्य सुखादिभि र्व्यभिचारात । तेषामपि संविद्व्यतिरेकस्यानात्मत्वस्य च सौगतसुहृदा त्वया ध्यपरित्यागात् । सजातीयनैरपेक्ष्यादेरपि दीपादिभि र्घटादिभि रपि वा व्यभिचारात् । सर्वथा सजातीयनिरपेक्ष प्रकाशत्वस्य पक्षेप्यसिद्धेः । साख ल्वात्मसम्बन्धसापेक्षप्रकाशा ।

---

त्काराधीना परिच्छिन्नानन्द इत्यर्थः । ( स्वस्मा इति ) स्वकर्तृक व्यापाराद्यनुगुण ज्ञानप्रकाश्यत्व रूपस्येत्यर्थः । ( अव्यभिचरितेति ) अव्यभिचरितः प्रकाशो यस्यास्सा अव्यभिचरितप्रकाशा, तादृशीसत्तायस्येति विग्रहः । व्यभिचारश्च व्यापकत्वाभावो विवक्षितः, तेन प्रकाशव्याप्त सत्ताकत्वमिति पर्यवसितार्थः । व्याप्तिश्चकालिकी । आदिपदेन दुःखादिगृह्यते । ननु - सुखादीनामपि संविदभिन्नत्वेन पक्षत्वात् न व्यभिचार इत्याशंक्याह ( तेषामपीति ) सुखादीनां संविदभेदे आत्माभेदे च तयोस्स्थैर्यप्रसंगे तस्य त्वंप्रीत्यर्थं मंगीकर्तुं शक्यत्वेपि आत्मस्थैर्य वादकञ्चुकेन वैदिकान्वंचयितु न्नात्माभेद मंगीकरोषीत्यर्थः । ( सजातीयेति ) सजातीय निरपेक्ष व्यवहारत्वादे रित्यर्थः । आदिपदेन सजातीयसापेक्ष व्यवहारत्वाभावो गृह्यते । किं सजातीयपदं सजातीयप्रकाशपरं ? उत न ? आद्ये दोषमाह ( दीपादिभिरिति ) संवित्प्रदीप साधारणा निर्वचनीया खण्डधर्मरूपस्य प्रकाशत्वस्य परै रभ्युपगमादितिभावः । द्वितीये दोषमाह ( घटादिभिरिति ) ननु- केनापिरूपेणयत्सजातीयं तदनपेक्षत्वंविवक्षितं, ततश्चघटादीनांशून्यत्वादिना सजातीयप्रकाशसापेक्षत्वा न्न तत्र व्यभिचार इत्याशंक्य परिहरति ( सर्वथेति ) प्रकाशपदं व्यवहारपरं । ( सेति ) प्रकाशमात्रस्य व्यवहार हेतुत्वे नित्यचैतन्ये । सर्वदा सर्वेषां व्यवहारप्रसंगेन देवदत्तीयत्वादे

अन्यथा स्वाश्रयव्यतिरिक्तेभ्योऽपि तत्प्रकाशप्रसंगात् ।

अतएवात्मनिरपेक्षत्व मप्यसिद्धं; संविदन्तर निरपेक्षप्रकाशत्वस्य स्वस्मै परस्मै वेति विकल्पे पूर्वस्यासिद्धे रुत्तरस्य विरुद्धत्वात् । अन्यस्मा एव भासमानत्वनियमात् घटादिव दनात्मत्वसिद्धेश्च । अन्यथा घटादेरपि भासमानत्वमात्रेणात्मत्व प्रसंगस्या वारणात् ।

अतो ज्ञानत्वमेव हेतुः परिशिष्यते । तच्च प्रकाशरूपत्वं, तच्च स्वस्मै परस्मै वेति विकल्पेन दूषित मेव । न कस्मैचिदिति

---

र्व्यवहारप्रयोजकतया तैरेवांगीकारा दिति भावः । ( अन्यथेति ) तदीयत्वस्य व्यवहाराप्रयोजकत्वे देवदत्तस्य स्वीयघटसंविद्विषयक व्यवहारव दितरेषामपि देवदत्तीयघटसंविद्विषयव्यवहारप्रसंग इत्यर्थः । ननु- व्यवहारमात्रे न तदीयत्वापेक्षा, किन्तु तदीयव्यवहार इति चेन्न - " निर्विशेषं न सामान्यं " इति न्यायेन पुरुषविशेषासम्बन्धिव्यवहारा सिद्धे र्व्यवहारमात्रस्यात्मसम्बन्धसापेक्षत्वात् । ( अत एवेति ) तत्तद्व्य- वहारस्य तत्तदात्मसापेक्षत्वाभावे पूर्वव दतिप्रसंगा त्तत्सापेक्षताया मपि हेतु रसिद्ध इति भावः । ( संविदन्तरेति ) संविदन्तरनिरपेक्ष प्रकाशत्वरूपहेत्वन्तर्गतः प्रकाशः स्वतः किं स्वस्मा एव वा इति विकल्पः । ( असिद्धेरिति ) संविदतिरिक्तात्मन एव संविद्व्यवहार कर्तृत्वात स्वमते सिद्धिः, परमतेन्तःकरणस्यैव कर्तृत्वा दसिद्धिः । ( विरुद्धत्वादिति ) परस्मा एव प्रकाशमानत्वस्य घटादा वनात्मत्व व्याप्यत्वदर्शनात, तद्व्याप्यस्य संविदन्तरनिरपेक्षत्वे परस्मा एव प्रकाशमानत्वस्य सुतरा मनात्मत्वव्याप्यत्वादिति भावः । ( अन्यथेति ) वस्तुत स्स्वस्मै भासमानत्वस्या त्मत्वव्याप्यत्वेपि यदि तत्साहचर्यं मात्रेण संविदन्तर मनपेक्ष्य प्रकाशमानत्वस्या त्मव्याप्तत्व मिष्यते, तदा तत्सहचरितभासमानत्वमात्रस्या त्मत्वव्यापकतया तेन घटादा

पक्षे तु प्रकाशत्वहानिः, तथैव सर्वत्र प्रसिद्धेः ।

किंचानेन हेतुना संविद आत्मत्वं साधयन्तः किमिद मात्मत्व मभिसन्धाय साधयन्ति? किं ज्ञातृत्वादिकं? उतप्रत्येतुः प्रत्येतव्याद्व्यतिरिक्तत्वं? अथवा स्वस्मैभासमानत्वं? उताव्यभिचरितप्रकाशसत्ताकत्वं? यद्वा स्वप्रकाशत्वं? उत स्वानतिरिक्तत्वं? यद्वान्यदेव किंचिदिति । नाद्यः, प्रत्यक्षविरोधात् । ज्ञातृत्वंहि ज्ञानाश्रयत्वं । तत्र स्वापेक्षया स्वस्यैवाश्रयत्वं व्याहतं, आश्रयत्वाश्रयित्वलक्षणविरुद्धधर्माध्यासात् । अतएव स्वाश्रयतादात्म्येन ज्ञातृत्वमपि प्रतिक्षिप्तं, धर्मधर्मिभेदाभेदपक्षस्तु भवतापि नांगीक्रियते । नापिज्ञानान्तराश्रयत्वं वक्तुं शक्यं,

---

ज्ञानान्तरसाधनं स्या दित्यर्थः । ( तथैवेति ) यः प्रकाश स्स किंचित्प्रति प्रकाश स्स्यादिति व्याप्तेः लोकसिद्धत्वादिति भावः । ( किमिद मात्मत्वमिति ) आदिपदेन कर्तृत्वभोक्तृत्वे संगृह्येते । ( प्रत्येतु रिति ) पंचम्यन्तं प्रत्येतव्यविशेषणं । ज्ञातृत्वे सति ज्ञेयत्वस्य विशिष्टस्योद्देश्यत्वात् न पूर्वाभेदः । ( स्वानतिरिक्तत्वमिति ) साध्यवाच्यात्मशब्दस्य स्वपरत्वाभिप्रायेणायं विकल्पः ( प्रत्यक्षविरोधादिति ) घटादिज्ञानं न ज्ञातेति प्रत्यक्षं । दूषणान्तर माह ( ज्ञातृत्वं हीति ) ननु स्वरूपतो ज्ञानरूपस्याप्याश्रयतादात्म्यात् ज्ञातृत्व मविरुद्ध मित्यत्राह ( अत एवेति ) प्रत्यक्षविरोधाद्व्याघाताच्चेत्यर्थः । नहिव्याहतात्र्थांतर-परिग्रहात् अर्थान्तरव्याहतेः परिहृति र्युक्तेति भावः । ननु धर्मधर्मिणो र्भेदाभेदस्य धर्मधर्मिभावान्यथानुपपत्त्यैव सिद्धत्वात् तस्यैव तादात्म्यरूपत्वात् ज्ञातृतादात्म्यात् ज्ञातृत्वाश्रयत्वं सिद्ध्यत्येवेत्यत्राह ( धर्मधर्मिभेदाभेदेति ) प्रमाणबाधकभिन्नयो रेव धर्मधर्मिभावसिद्धिः । अति प्रसंगस्तु प्रमाणबलादेव परिहार्य इतिभावः । व्याघातपरिहाराय ज्ञानान्तराश्रयत्वं ज्ञातृत्वमितीष्यत इत्याशंक्याह ( नापीति )

योग्यानुपलम्भ निरस्तत्वात्, इच्छादेरिच्छांतराश्रयत्वादिवत् ।

किंच क्षणिकस्यैव ज्ञानस्य ज्ञातृत्वं साध्यते? उतास्थिरतया भ्युपगतस्य तस्यैव? पूर्वत्र प्रतिसन्धानाद्यनुपपत्तिः सौगतादीन्प्रति प्रयुक्ता भवन्त मास्कन्दति । उत्तरत्रापि किं निराश्रयस्य ज्ञानस्य ज्ञातृत्वं साध्यते, उत साश्रयस्य? आद्ये प्यस्मदभिम[तज्ञानात्मका]तात्मनो ज्ञातृत्वसाधने सिद्ध साधनत्वम् । निराश्रयज्ञानांतरपक्षीकारेतु आश्रयासिद्धिः । सर्वाभ्युपेतसंविद एव निराश्रयत्वविवक्षायांप्रत्यक्षादिविरोधः । द्वितीयेज्ञातृद्वयोपलब्धिप्रसंगः । उत्तरोत्तरज्ञानाना मप्युक्तहेतुसम्बन्धाविशेषेणं ज्ञातृत्वप्रसंगेना नवस्था व्यभिचारो वा ।

---

(अस्मदभिमतेति) प्रतिशरीरं भिन्नस्येत्यर्थः (निराश्रयेति) सर्वशरीरा नुगतस्यैकस्य निर्विषयस्येत्यर्थः । "प्रत्यक्षादी" त्यादिपदेन सविषया संवित् न निराश्रया, प्रत्यक्षेण धर्मतया प्रतीयमानत्वात्, घटत्ववत्, इत्यनुमानविरोधः ; "द्रष्टु र्दृष्टेः" "विज्ञातारं" "रसयिताघ्राता" इत्यादि श्रुति विरोधश्च गृह्यते । ततश्चाश्रया सिद्धिरितिभावः । ननु ज्ञातृत्वेोपलम्भ इष्ट एव, जानामीत्युपलभ्यमानस्यैव ज्ञातृत्वस्य साध्यमानत्वात् ; नच ज्ञातृत्वेनोक्त विधोपलम्भप्रसंगः, तस्यापीष्टत्वादेव, पक्षभूतज्ञानाश्रयस्य स्वेनैव तज्ज्ञानाश्रयतयोपलम्भात् ; पक्षीभूतज्ञानस्यापि साध्यमान ज्ञानाश्रयतया स्वेनैवोपलम्भात, नचैकेनैव ज्ञात्रा ज्ञातृ द्वित्वोपलम्भप्रसंगः, यौक्तिकोपलम्भस्य युक्तयनुसन्धान दशायामिष्टत्वात् ; अपरोक्षानुपलम्भस्य देवदत्त यज्ञदत्त कर्तृद्वित्वा नुपलम्भवदुपपत्तेः । मनस एकात्म योग्यतद्धर्मग्राहकत्व नियमात् । व्यक्ति भान सामग्रया जातिभानसामग्र्यानैयत्यात् ज्ञानेभासमाने ज्ञानत्वस्य भानेपि न ज्ञानगत ज्ञानभानमित्यत्राह (उत्तरो त्तरेति) वा शब्दस्वारस्यादेवं व्याख्यातम् । यद्वा वा शब्दश्चार्थो द्रष्टव्यः । अन्यदीय

किंच सत्यज्ञातृत्वसाधने ऽपसिद्धान्तः । आरोपितज्ञातृत्वसाधने त्वदुक्तवाक्यानुमानादिभि स्तदारोपस्यास्माभि रभ्युपगमा त्सि-द्धसाध्यता । प्रतीयमानज्ञातृत्वस्यारोपितत्वसाधनं त्वनन्तरमेव दूष यिष्यामः । एवं ज्ञातृत्वकल्पप्रतिक्षेपेणैव द्वितीयः कल्पोपि प्रतिक्षिप्तः । अवेद्यत्वाभिमतानुभूते र्वेद्यत्वप्रसंगस्त्वधिकः ।

नापि तृतीयः, प्रत्यक्षविरोधात् । स्वाश्रयायैव हि सा भासमाना दृश्यते । स्वस्मा इति प्रकाशफलित्वं हि ज्ञाप्यते । प्रकाशफलित्वंच प्रकाशाधीनव्यवहारादिमत्त्वं । नच ज्ञानमा त्रस्यैव व्यवहारादिकर्तृत्वं भवता प्यभ्युपगम्यते । फलित्वारोपसाधने तु प्राग्वदेव परिहारः । नापि चतुर्थः, सिद्धसाधनात् । तावता चात्मत्वसिद्धौ सुखदुःखादेरपि प्रसंगात् । पंचमषष्ठयोरपि सिद्धसाध नतैव । नापि सप्तमः, तत्किं परसम्प्रतिपन्नात्म तादात्म्यविधिपर्यव सितं, उतानुभूतेर्यथाकथंचि दात्मशब्दप्रतिपाद्यतामात्रनिष्ठमिति? आ-द्ये व्याघातादिदोषस्तदवस्थः । द्वितीयेतु सिद्धसाधनत्वमेवेति ।

अस्तु तर्ह्यात्मानं पक्षीकृत्यात्मत्वादेव ज्ञानतादात्म्यसाधनं, ततो नोक्त दोषावकाशः, इतिचेन्न;- धर्मिणोपि धर्मतादात्म्यविधे र्व्याहतत्वात् । तस्य ज्ञानत्वमात्रसाधनेतु त्रय्यन्तविदां सिद्धसाधनात् ।

आत्मशब्दवाच्यस्यैव विषयोल्लेखलक्षणावस्थायोगः कल्पनालाघवा द्विधीयते, इति चेन्न;- तथापि तथाविधावस्थैव ज्ञानं तदाश्रय आत्मेति

---

**ज्ञातृत्वं साध्यमित्यत्राह (प्रतीयमानेति) (प्राग्वदिति) सिद्धसाधन मित्यर्थः । (तावतेति) तस्यैवात्मत्वरूपत्वे सुखादेरप्यात्मत्व प्रसंग इत्यर्थः । (व्याघातादीति) पर सम्प्रतिपन्नात्मनो ज्ञातृत्वा त्तदभेदसाधने पूर्वोक्तव्याघातः, प्रत्यक्ष विरोधश्चेत्यर्थः । नन्वात्मनो घट[टा]विषयज्ञान-तादात्म्यं न साध्यते, येनोक्त दोषस्स्यात, किन्तु ज्ञानमात्रं साध्यत इत्यत्राह (तस्येति) (तथाविधेति) सिद्धे ज्ञाने कदाचि द्विषयसम्ब-**

वैशेषिकादिवत्तस्य ज्ञातृत्वमेव सिद्ध्यति । अवस्थामिथ्यात्वा द्वैषम्यमिति चेन्नः- बाधाभावादिना तत्सत्यत्वस्य दुरपह्नवत्वात् । तथापि भवदभिमता नन्तावस्थ नित्यज्ञानातिरिक्त आत्मा न सिद्ध्यतीति चेन्न;- ज्ञातुः तद्ध र्मभूतज्ञानस्य च तावता दुरपह्नवत्वात् । ज्ञानं किमेकमेव सत्सामग्रीवशा द्विषयोल्लेखाद्यवस्था वद्भवति, उत ज्ञातर्येव ज्ञानलक्षणानन्ताव-स्थेति विशये श्रुतिशरणानां पूर्वः पक्षः, लाघवमात्रशरणाना मुत्तर इति स्थिते द्वेधापि भवदभिमतं न सिद्ध्यत्येवेति का पूर्वरूपे वा-र्ता । उत्तररूपे दुस्तरं श्रुत्यादिक मनुसन्धत्स्वेति ।

---

न्धस्य निरस्तत्वात्, विषयो ल्लेखाज्ञानमेव पर्यवस्यतीतिभावः ( बाधा-भावादिनेति ) आदिपदेनापसिद्धान्तप्रसंगो गृह्यते ( श्रुति शरणाना मिति ) " न विज्ञातु र्विज्ञाते र्विपरिलोपो विद्यते " इति ज्ञातृ समवेत ज्ञानस्य नित्यत्वश्रुते र्ज्ञानसाधन विधानाच्चेतिभावः । ( पूर्वरूपइति ) आत्मन एव घटादिविषयत्व इत्यर्थः । तर्ह्यात्म समवेतानेक ज्ञानपक्षों-गीक्रियता मित्यत्राह ( उत्तर रूपइति ) श्रुति रुक्तैव । आदिशब्देन " नित्या एवात्मनोहित " इत्यादिकं गृह्यते । यद्वा सर्वधा त्वत्पक्ष-स्यानुपपन्नत्वात एकमेव ज्ञानं सामग्रीवशात विषयोल्लेखावस्थाव द्भव-तीत्यस्मदभिमतपक्षं दूषयितुं तवकावा गतिरित्यर्थः ।

ननु " अत्रायं पुरुषस्स्वयं ज्योतिः " " आत्मैवास्य ज्योति " रिति श्रुतिरेवात्मनो ज्ञानाभेदं साधयति ; ननु " अस्तमित आदित्ये याज्ञवल्क्ये " त्यादिना " किं ज्योतिरयं पुरुष " इत्यन्तेन ज्ञानसा-धनालोका द्यभावे जीवस्य किं ज्ञानसाधनमिति पृष्टे " आत्मैवास्य-ज्योति " रित्युपक्रान्तात्मा न्नाव त्परमात्मैव, स्वप्नेन शारीरमभिप्रेत्य " असुप्तस्सुप्ता नभिचाकशीती " ति तल्लिंगात ; तथाचात्रायं पुरुष

श्रुतिरेवात्मनो ज्ञानानतिरिक्तत्वं साधयतीति चेन्न;- परिहृतप्रायत्वात् ।
तत्रहि॥*॥ श्रुतिप्रत्यक्षसंसिद्धे ज्ञातृत्वे ज्ञानताश्रुतिः । नेया तद्गुणसारत्वा

---

इति उपसंहारोपि अस्येत्यनुषंगेण ईश्वरोस्य जीवस्य स्वयमेव ज्योतिः-ज्ञाने हेतुरित्येवं परः; अस्मिन्नेव प्रकरणे " वाचैवायं ज्योतिषास्ते " इति ज्योतिश्शब्दस्य ज्ञानसाधने प्रयोगात् ; आत्मैवास्येति षष्ठ्या स्वविषयत्वस्यैवोक्तेरिति चेत् ? तदसत् , " किं ज्योतिरयं पुरुष " इति ह्ययं कार्यकारणसंघातात्मापुरुषस्स्वस्यासनादि व्यवहारे किं ज्योतिरिति पृष्टं, नतु ज्ञानसाधनं, " आदित्येनैवायं ज्योतिषास्तेपल्ययते कर्मकुरुते " इत्यादि व्यवहारस्यैव उत्तरेदर्शनात्; आदित्येन जानातीत्यदर्शनाच्च ; अतः परम्परा व्यवहारनिमित्तादित्य चन्द्राग्निवागनन्तरं साक्षाद्व्यवहारनिमित्त ज्योतिः प्रश्नोत्तरं " आत्मैवास्य ज्योतिर्भवती" ति अस्य कार्यकारणसंघातस्य व्यवहारार्हानुभवगोचरस्या त्मानुपचरित स्वरूप मधिष्ठानसाक्षिचैतन्यं ज्योतिरिति दर्शयति , नतु ज्योतिस्साधनमिति, साधनपदाभावात । ज्योतिश्शब्दस्य प्रकाशमात्रार्थत्वात् प्रक्रमविरोधाच्च । आत्मपदमपि जीवेश्वरस्वरूप भूतचैतन्यमभिधत्ते, नतु जीवव्यतिरिक्तमेव परमात्मानं, अह मनुभवे ऽप्रकाशमानस्य घटादिव दात्मपदार्थत्वायोगात । व्युत्पत्तिनिमित्त प्रयोगस्यावयवशक्ते आत्मपदस्य जीवेपि सम्भवात् । " स्वेनज्योतिषा स्वपिती " ति स्वापस्य जीवलिंगस्यदर्शनाच्च । " असुप्तस्सुप्तानि " ति लिंगस्य प्रकाशात्मनिजीवेपि सम्भवाच्च । ज्ञानसाधनानाम नेकेषां सत्वेन स्वयमित्यादि विशेषणासंगतेश्चेति । अतः श्रुतिबलादेवात्मनो ज्ञानाभेद सिद्धिरिति शंकते ( श्रुतिरेवेति ) ( परिहृत प्रायत्वादिति ) तस्य ज्ञानत्वमात्रसाधने त्रय्यन्तविदां सिद्धसाधनादित्यनेनेत्यर्थः । उक्तं परिहारमान्तरं च संगृह्णाति ( तत्र हीति ) यदि स्वप्रकाशत्वमात्मन इष्यते तर्हि तत एव घटादिप्रकाशोपपत्तौ न तस्य ज्ञातृत्व कल्पनमित्या

त्स्वप्रकाशतंयापिवा॥*॥वदन्तिहि"विज्ञातारमरेकेन विजानीयादि" त्याद्याः परःशताः श्रुतयः साक्षाज्ज्ञातृत्वमेव । तदविरोधाय ज्ञानमात्रश्रुतिरपि जड त्वं प्रतिक्षिपति, न तज्ज्ञातृत्वं, अन्यथा प्रत्यक्षादिभिश्च विरोधात् । येनैव शास्त्रेण ज्ञानरूपत्व मात्मनः साध्यते संविदात्मत्वपक्षे तस्य श्रोतापि न सिद्ध्येत् । नह्यनात्मानं प्रत्युपदिश्यत इति भव-तापीष्यते । आत्मातु संविन्मात्ररूपो ज्ञातृत्वाभावा न श्रोतु मीष्टे । अहंकारः शृणोतीति चेत् ? स किं स्वार्थं परार्थं वा शृणोति ? नाद्यः, स्वनाशपर्यन्तत्वात् ; अह मर्थात्यन्तविलयगर्भोहि भव-त्पक्षे मोक्षः । नहि कश्चित्स्वनाशाय मोक्षशास्त्रं शृणोति । अतएव न द्वितीयः, स्वात्यन्तनाशेन परोपकारस्य कस्याप्यनभिमतत्वात् ; अह मर्थस्य चात्मत्वमस्मन्मतेन सिद्धमिति ॥

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य
वेदान्ताचार्यस्य कृतिषु शतदूषण्यां संविदात्मत्व
भंगवादः पंच विंशः ।



---

शंक्य श्रुतिबलाज्ज्ञातृत्वस्याप्यंगीकार्यत्वा दुभयोरविरोधा च्चोभयमेष्टव्यं, तद्विरोधाद् ज्ञातृत्व मसत्त्वं च परित्याज्य मित्याह ( वदन्तीति ) ननु ज्ञातृत्व मौपाधिकमेव श्रुत्या प्रतिपाद्यत इत्याशंक्याह ( साक्षादिति ) ज्ञातृत्वस्यान्तःकरणोपाधित्वे परंपरासम्बन्धा द्विज्ञातारमिति निर्देशो ऽनुपपन्न एव । नचोपाधिगतस्य तत्रारोपः, श्रुते रप्रामाण्यप्रसंगात् । रक्तपटादिव्यपदेशस्यौपचारिकत्वात् , प्रकृते च बाधकाभावात् । ( नहीति ) एतेनान्तःकरणतादात्म्यापन्न आत्मा शृणोतीत्यपि निरस्तं, स्वनाशस्यापुरुषार्थत्वादेव । ननु भवत्पक्षेपि मोक्षदशायां अन्तःकरण स्याभावात् अपुरुषार्थता, इत्यत्राह ( अह मर्थस्येति )

यदाह नवीनः -

योय मनुभव स्स आत्मनो न भिद्यते, संवेदनत्वात्, व्यति रेकेण घटवत्। नचाप्रयोजकता, आत्मधर्मनित्यज्ञानाभावेन उत्पाद विनाशशीलस्य ज्ञानस्यात्मगुणत्वे आत्मनः कूटस्थताहानेः ।

स्या देतत्, आत्मन उत्पत्तिविनाशानंगीकारा न्न कूटस्थता हानिः, नह्यन्योत्पत्तिविनाशाभ्या मन्यस्य कौटस्थ्यं हीयते, अविद्या निवृत्त्या त्वदभिमतात्मनोपि तत्प्रसंगादिति । भवे देवं, यदि कार्यं कारणा द्भिद्येत । जायमानंहि कार्यं प्रागपि सदिति वक्तव्यं, असत उत्पत्त्यनुपपत्तेः, शशशृंगवत ।

ननु नरशृंगतुल्यं कार्यं, अपितु कारणे कार्यस्य प्रागभाव, इतिचेत? अस्तु प्रागभावः, तथापि तत्काले कार्यं किं सत्? तथा सति किं कारणे वर्तते, किंवा अन्यत्र? नाद्यः, प्रागभावप्रतियोगिनो रेकदा ऽवृत्तेः । न द्वितीयः, कारणा दन्यत्र कार्यस्यासमवायात् । अन्यसमवायिनो न्यानुपा देयत्वात् । प्रागभावकाले च प्रतियोगिन स्सत्वानभ्युपगमे कथं नरर शृंगतुल्यता । नहि प्रागभावसत्तैव प्रतियोगिन स्सत्ता, अन्यसत्ताया अन्यसत्त्वेति प्रसंगात् ।

ननु नरविषाणं कालत्रयेप्यसत, कार्यं तूत्पत्तेः पूर्वमिति वैषम्यमिति चेत? किंचित्काल मसतः कालभेदेपि सत्त्वा नुपपत्तेः । किमत्र सत्त्वासत्त्वे पदार्थधर्मौ, स्वरूपं वा? नाद्यः, असत्त्वकालेपि पदार्थसद्भावप्रसंगात । अनित्यधर्मस्याश्रयाद्दतेनव स्थानात् । धर्मस्य धर्मिसत्त्वं विनानुपपत्तेः धर्मत्वे उपजीव्यधर्मि सत्त्वविरोधेना सत्त्वस्यैव व्याघातात् । न द्वितीयः, एकस्य सदस दात्मत्वविरोधात ।

ननु कालभेदेन घटस्य रक्तत्वश्यामत्वव दस्या विरोध इति चेन्न;- धर्मस्य कालभेदेन स्वहेतुसपाजा द्व्यत्ययः, नतु स्वरूपस्य, तथा सति सत्वासत्वयो भेंदा त्तावन्मात्रस्वरूपस्य धर्मिणोऽपि भेदापत्तेः । इदं पूर्वरचन मस्तदित्यसतो बुद्ध्यनुपपत्तेश्च । तस्य स्वभावस्यावच्छेदककालासम्बन्धात् ।

तस्मा द्य त्किंचित्काल मसत् तत्सर्वदाऽप्यसदेव । तदाह भगवान् - " नासतो विद्यते भावो नाभावो विद्यते सत " इति ।

ननु तथासति दृश्यात्मना असद्रूपस्य ब्रह्मणस्स्वरूपेणा प्य- सत्त्वं स्यादिति चेन्न;- यत् येनरूपेण कदाचिदसत तत्तेनरूपेण सर्वदासदिति दृशाद्यात्मना कदाचिदसतो ब्रह्मण स्तद्रूपेण सर्वदा ऽस त्वस्येष्टत्वात् । नित्यज्ञानात्मनः स्वरूपत स्सत्यत्वेन प्रतिपन्नस्य तेनरूपेण सर्वदा सत्वात् । आत्मन्यस्मी त्यनुभवस्य सर्वदा विद्य मानस्य घटादावधिष्ठानविषयत्वेनै वान्यथासिद्ध्यभावात् । तत्रापि तथैवा न्यथासिद्धौ तदधिष्ठानस्यैवा स्मदभिमतत्वात आत्मनोऽसत्वे सर्वशून्यताप्रसंगात् । पटरूपेणासतो घटस्य स्वरूपेण सत्त्वेन व्यभि- चाराच्च । मच्च घटादे स्सत्वेन प्रमितत्वात्किंचित्काल मसतोऽपि कालान्तरे सत्वं धर्म इति वाच्यं, घटादिसद्बुद्धे रधिष्ठानविषयतया न्यथा सिद्धत्वात् । नहि सन् घटइत्यत्र सत्त्वस्य घटधर्मत्वं प्रतीयते, किन्तु मृद्घटइतिव त्सत्तादात्म्यमात्रम् । तच्च सद्रूपेणोभयवादिस- म्मताधिष्ठानात्म सत्तादात्म्यमेव, सत्तान्तरकल्पने गौरवात् ।

किंच कारणे समवायः किमसत उत्पत्तिः, स्वस्मिन् सत्तासम- वायोवा ! आद्येपि स्वोपलक्षितसत्तासमवायः, उतविशिष्टसमवायो वा ? नाद्यः, तस्य नित्यसमवायवादिनः सर्वदा सत्वेन बुद्ध्यादौ मन आदे रकारणत्वप्रसंगात । बुद्ध्यात्वनित्यत्त्ववादिनो नित्यसम वायेच न मानसमिति समवायस्याप्यनेकत्वा विशेषेणार्थान्तरत्वात् ।

न द्वितीयः, असतो विशेष्यासम्बन्धेन विशेषणत्वायोगात् । नापि स्वस्मिन् समवायउत्पत्तिः, असति तस्मिन् तदु[पप]त्पत्तेः कार्यसत्वस्य चोत्पत्ति प्रयोज्यत्वात् । नच कार्यस्याद्यसमयसम्बन्धउत्पत्तिः, सम्बन्धस्य संयोगत्वे तस्योत्पत्त्यनन्तरभावित्वात् ; गुणादौ तदभावाच्च । नापि समवायः, कार्यस्य कारणसमवाय उत्पत्तिरित्यत्रोक्त दूषण न्यायेन निरस्तत्वात् ; घटादेः काले तदभावाच्च । नापि स्वरूपसंबन्धः, असतो निस्स्वरूपत्वेन स्वरूपद्वयात्मकसम्बन्धायोगात् ; तस्य स्वरूपद्वयात्मकत्वे समवायस्यापि घटोत्पत्तित्वप्रसंगाच्च । घटस्यापि स्वोत्पत्तित्वेन घटो घटवानितिव दुत्पन्नो घटइति प्रतीत्यनुपपत्तेश्च । समवायस्यैकत्वेना द्याभावाच्च । नच स्वसमानकालीनपदार्थ प्रतियोगिकध्वंसा नाधारसमयसम्बन्धइति वाच्यम् , स्वपदेनोत्पद्यमान पदार्थाभिधाने आत्माश्रयात् , उत्पत्तेरेव निरूप्यमाणत्वात् । वस्तुमात्राभिधानेच द्वितीयक्षणावच्छिन्नघटस्या प्युत्पत्तिप्रसंगः । तस्यापि द्वितीयक्षणावच्छिन्न स्वसमानकालीन पदार्थप्रतियोगिकध्वंसा नाधारद्वितीयक्षणे सत्वात् ।

ननु स्वशब्दः क्षण विशेषानवच्छिन्न कार्यस्वरूपपरः, तथा च प्रथमक्षणेपि तत्क्षणइति तत्कालस्थितिक शब्दादिध्वंसस्य द्वितीय क्षणे सत्त्वान्नतस्मि स्तत्प्रसंगइति चेन्न ; तत्र किं स्वसमानकालीन यत्किंचित्पदार्थध्वंसा नाधारत्वं विवक्षितं, उत तत्कालीनयावत्पदार्थ प्रतियोगिक - ध्वंसानाधारत्वं, किं वा तत्कालीन पदार्थप्रतियोगिक यावद्ध्वंसानाधारत्वं ? आद्ये द्वितीयक्षणेति व्याप्ति स्तदवस्थैव, घटकालीन यत्किंचिन्मृदादि प्रतियोगिक ध्वंसानाधारत्वस्य तदापिसत्वात् । द्वितीयेघटकालीन नित्य पदार्थप्रतियोगिक ध्वंसाभावा दसम्भवः । तृतीये घटकालीनानित्यचतुरपदार्थ प्रतियोगिक यावद्ध्वंसानाधारत्वं द्वितीयक्षणेप्यस्तीत्यतिव्याप्तिरेव ।

ननु स्वसमानकालीन यावदनित्यपदार्थ प्रतियोगिक ध्वंसाना धारत्वं विवक्षितमिति चेन्न ; - तत्र किं यावद्ध्वंसानाधारत्वं याव द्ध्वंसाधारभिन्नत्वं, उत यावद्ध्वंसात्यन्ताभाववत्त्वं? आद्ये द्वितीयक्षणेति व्याप्तिः । द्वितीये यावद्ध्वंस प्रतियोगिक सामान्याभाववत्त्वं, उत तत्प्रतियोगिक यावद्विशेषाभाववत्त्वं ? नाद्यः, ध्वंसेषु सामान्याभावेन तदवच्छिन्नप्रतियोगिक सामान्याभावायोगात् । न द्वितीयः, भावस्य स्वात्यन्ताभाव समानकालीनत्ववदभावस्यापि तथात्वात् । अन्यथा तदत्यन्ताभावस्य त्रैकालिकत्वानुपपत्तेः । तथा च द्वितीयक्षणे ध्वंसा त्यन्ताभावसत्त्वादति व्याप्तिदुर्वारा । किंच चरमध्वंसकालीन कार्य पदार्थाभावेन ध्वंसाभावात् तद नाधारकालस्या प्रसिद्ध्या चरमध्वंसे तादृशकालाधारत्वस्या सम्भवात्तत्रा व्याप्तिः । नच चरमध्वंसासिद्धिः, सर्वमुक्तौ अदृष्टाभावेन कार्यमात्राभावात । सर्वमुक्त्यभावेच स्वस्य नित्यसंसारित्वशंकया कस्यापि निश्शंकं प्रवृत्त्यनुपपत्ते मोक्षशास्त्रानर्थक्य मेवस्यात । नापि स्वसमानकालीन यावदनादि पदार्थाधार समय सम्बन्धः, चरमोत्पन्नभावकार्यस्य द्वितीयादि क्षणसम्बन्धेति व्याप्तेः । तस्मान्ना [न्न] सत्कार्यवादोयुज्यते । सत्कार्यवादेपि यदि कार्यसत्त्वं कारणाद्भिन्नं तर्हि कारणान्वेषणं व्यर्थं, तेन विनापि तत्सत्त्वात । उत्पत्तेः पूर्वं कार्यस्यानुपलब्धेश्च । अवस्थाविशेषः कार्यमिति पक्षो विशेषस्य प्रा [क्त्व] [सत्वा] वसत्त्वासत्त्वाभ्यां प्रतिवक्तव्यः । तस्मात्कारणमेव कार्यस्य स्वरूपं तेन तेन कारणेन तत्तकार्यरूप माप द्यते । तत्रानिर्वचनीयवादे कार्यविकारेण कारणस्याविकारित्वेपि कारणा भिन्न कार्यसत्यत्वे तद्विकारेण कारणमपि विकारिस्यादेव, तथाच्चा- त्मैव बुद्ध्यादिरूपेण जायते विनश्यतिचेति कथन्नकौटस्थय हानिः । नचा विद्याविनाशेप्ययं दोषस्समानः, अविद्याया आत्मव्यतिरेकेणा निर्वचनीयसत्त्व भेदाभ्युपगमात् तद्विकारस्यापि तत एव व्यव- स्थितत्वात् । अविद्यानिवृत्तेः कूटस्थात्मनिवृत्तत्वाच्च । बुद्ध्यादि

त्मनिव्याप्यवर्तते, उत तत्प्रदेशे ? नाद्यः, शरीर बाह्यप्रदेशेपि तदु-पलम्भप्रसंगात् । न द्वितीयः, निरवयवस्य प्रदेशाभावात । नन्वौ [ पचारि ] पाधिकः प्रदेश भेदोस्तीति चेन्न ; - उपाधिज्ञाप्यस्य तज्ज-न्यस्तदधीनश्च प्रदेशो निष्प्रदेशेनास्तीत्युक्तत्वात् । एव मात्मनस्तद्धेतु सम्बन्धानुपपत्तिश्च बाधक स्तर्कः । निष्प्रदेशआत्मनि स्वात्यन्ताभा व समानाधिकरण मन स्संयोगासम्भवात् । नचावच्छेदकभेदेन वृत्तिः, अवच्छेदकस्याप्यवच्छेद्याभाव समानाधिकरणत्वे वच्छेद-कत्वानुपपत्तेः भावाभावावच्छेदकयो वैय्यधिकरण्यं वक्तव्यम् । त-च्चैकवृत्तिनोः परपक्षे न सम्भवति । नचावैयधिकरण्येपि धर्मयो स्स्वरूपभेदमात्रेणा संकीर्णावच्छेदकत्वं सम्भवति, तथासति संयोग वति देशेपि द्रव्यत्वपक्षत्वा द्यनेकधर्मसत्त्वा त्तत्रापि तदभावप्रमास्यात । किंचात्मनो ज्ञानेन सम्बन्धानिरूपणाच्च न तदाश्रयत्वम् । न तावत्सं योगः, अयुतस्सिद्धयो स्तदयोगात् । नापि समवायः, तस्यैवासि-द्धेः । नापि तादात्म्यं, न तावत्तदभेदएव, धर्मधर्मिभावाद्यसम्भवात् अभेदस्य सम्बन्धत्वायोगात् । नापि भेदाभेदौ, समानसत्ताकयो स्त-यो र्युगपदेकत्रायोगात । घटादे र्मृदादित उत्पत्त्यनुपपत्तेश्च । भेदोप्य स्तीति तत उत्पत्तिरिति चेत् ; तर्हिजायमानं मृद्भिन्नं प्राङ्नास्ती ति वक्तव्यम् । घटादिश्च जायमानएव, प्राक्तच्छब्दबुद्धयो रभावा त । प्रागसतश्च सतो भेदइति कुत्राभेदः । एवं मृज्जायते विनश्यती ति बुद्ध्यभावाच्च नजनिविनाशवतो मृदभेदः । तस्माद्यज्जायते वि-नश्यति तत्तदुपादानादत्यन्तं भिन्नमेव ।

कस्तर्हि गुणगुणिनो स्सम्बन्धः ? कश्च मृद्घटइत्यादि सामा-नाधिकरण्यप्रतीते र्विषयः? तादात्म्यमिति ब्रूमः । किं तत् ? उच्यते, भिन्नत्वे सत्यभिन्नसत्ताकत्वम् । अस्तिहि मृद्घटयो रेतत्तादात्म्यं, उपादानोपादेययो स्सत्वभेदाभावात । अन्यथा मृद्घटइति सामाना-धिकरण्यायोगात । दण्डघटयोस्तु नैवं, भेदे विद्यमाने पि-

दण्डाधिष्टाना मनुपहिता सत्ता दूषटसत्ताया अन्यत्वात् । तदन्यत्वं च घटसत्वस्य दण्डाद्यभावेपि सन् घट इत्यनुभवात दण्डो घटइत्य ननुभवाच्च सिद्धम् । नन्वेव मेक घटनिष्ठरूप रसादीनान्त दूघटसत्तैव सत्तेति तेषामप्यन्योन्यं सामानाधिकरण्यानुभवस्स्यादिति चेत्; मैवं, रूपादीनां घटावच्छिन्न सत्तावच्छेदकत्वात् घटाभिन्न सत्ताकत्वेन तत्तादात्म्येपि रसादीनां रूपाद्यवच्छिन्न सत्तावच्छेदकत्वा भावेनान्योन्य तादात्म्याभावात् । ननु कुतइदं वैषम्यमिति चेत्? सामानाधिकरण्यप्रतीति तदभावाभ्यामिति ब्रूमः । अस्ति हि शुक्लो घटइति सामानाधिकरण्यप्रतीतिः, नत्वेवं रूपरसयोः । नच शुक्लोघट इति मतुब्लोपाद्भेदवत् प्रतीयते, मत्वर्थगत्या ऽभेदोस्तीति वाच्यं; शाब्दे हि ज्ञाने मतुब्लोपात् भेदतिरोधानं, नतु प्रत्यक्षानुभवेपि, अनुभूयते च शु-क्लोघटइति । किंच मतुब्लोपानुशासनेपि आचार्यस्य सत्ताभेद लक्षण तादात्म्यमेवमूलं, अयुतसिद्धयोस्तथानुशासनाभावात् । ननु मृद् घटयो र्घटरूपयोश्च भेदे कथमेकसत्ताकत्वं, दण्डघटयोर दर्शनादिति चेत्? किं प्रमाण प्रश्नः, तत्रोपपत्ति प्रश्नोवा? आद्ये अभिहितएव सामा नाधिकरण्यानुभवः । द्वितीयेतु दण्डघटभेदवत मृद्घटभेदस्सत्तावच्छेद को न भवतीति भेदेप्येकसत्ताकत्वं, भेदसत्ताया एव धर्मिप्रतियोगि सत्ते कत्व विरोधित्वात्; अन्यथा दण्डघटयोरिव मृत् घटयोरयुतसिद्धि र्नस्यात , तेषां भेदाविशेषात् । समवायस्य भेदाभेदपक्षस्य च निरा सात । अधिष्ठानात्मसत्तैव कार्यगुणिभ्यामवच्छिन्ना कार्यगुणाभ्यामवच्छि द्यतइति परिणामपरिणामिनो र्गुणगुणिनोश्च एकसत्ताकत्वं तादात्म्यम् ।

एतेन घटः किं सद्विलक्षणएव; तथासति सन् घटइति धीर्न स्यात्, अधिष्ठानसत्तादात्म्या तथाप्रतीतिः, घटस्यसत्तादात्म्यं हि तद्-तिरिक्त सत्ताशून्यत्व मेवेत्यधिष्ठानंसत् घटश्चेति द्वयमेव, तथा च घटस्य सत्तासम्बन्धाभावात् न सत्प्रतीति विषयत्वमुपपद्यते । अत

द्विलक्षणमेवसद् बुद्धिविषयइति चेत् ? आत्मनिसत्त्वस्यैव बुद्धिविषयत्वात्, सज्ज्ञाना नपेक्षप्रतीतिकत्वेन सत्ताया निष्प्रतियोगिकत्वाच्चेति परास्तं ; घटस्यवस्तुतोधिष्ठान सत्ताकसम्बन्धाभावेपि तत्प्रतियोगिक वास्तवभेदस्याप्यभावात् सत्तानवच्छेदकभेदवत्त्वरूप तादात्म्य सम्बन्धा दधिष्ठानसत्तावच्छेद कात्वेन सद्बुद्धिगोचरत्वात् । अथवा सत्तानवच्छेदक भेदाविरोधी कश्चि दनिर्वचनीयो धर्मस्तादात्म्यं, घटस्य दण्डादिवन्मृदो भेदाननुभवात मृद्घटइत्यभेदानुभवाच्च ।

ननु - सद्भेदाभावे कार्यकारणभाव शब्दान्तरवाच्यत्वादिकं नस्यादिति चेन्न; - कार्यकारणभावाद्यर्थंहि भेदोपेक्ष्यते, नतु सद्भेदः, स्वप्नरथादेरपि कार्यत्वादे श्श्रुत्या दर्शितत्वात । तथाच घटादे मृदादिप्रतियोगिको भेदो न भेदान्तरवत्सत्तावच्छेदकइति सामानाधिकरण्यप्रतीतिबला त्सिद्धम् । एवंच पक्षद्वयेपि भेदस्य सत्ताशून्यत्वा त्कार्यकारणयो रनिर्वचनीया भेद इत्युच्यते । अतएव भेदाभावस्येव तन्नियतस्यापि भेदसामानाधिकरण्यविरोधः , अविरोधेवा कथं भेदाभेदनिरासइति प्रत्युक्तं ; समानसत्ताकयो रेव प्रतियोगि तदभाव तन्नियतयो र्विरोधात् । नचैवं ज्ञानात्मनोरपि अयमेव संबन्धोस्त्विति वाच्यम्, ज्ञानस्य " सत्यं ज्ञान " मित्यादिवाक्येन " कतम आत्मा योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष " इत्यादिवाक्येनात्मनश्च तात्पर्येण प्रतिपादितत्वेन तयोः पारमार्थिकत्वा त्तयो र्मिथ्याभेदे अभेदस्यैव वास्तवत्वा दस्मदिष्टसिद्धेः । नच ज्ञाने सम्बन्धनिराकरणस्य रूपादावपि तुल्यत्वा त्तस्यापि गुणित्वादिकं न स्यादिति वाच्यम्, वस्तुतस्तदभावस्येष्टत्वात् । प्रतीते स्त्वनिर्वचनीय गुणिभावविषयत्वात् । एतावांस्तु विशेषः, अध्यारोपो न्तःकरणावच्छिन्नात्मनि सोपाधिकः, " काम स्संकल्पो विचिकित्सा श्रद्धा ऽश्रद्धाधृति र्ह्रीर्धीर्भी रित्येतत्सर्वं मनएवे " ति श्रुत्या, बु-

द्ध्यादिकं चिदाश्रितं, गुणत्वात् , रूपवत् , नचात्मा तदाश्रयः, तस्य निरवयवकूटस्थस्या व्याप्यवृत्तिजन्य बुद्ध्याश्रयत्वा नुपपत्तेः, पृथिव्या दे स्तदाश्रयत्वं चापास्तमिति परिशेषोनुभवेना पोद्बलितयान्तःकरणधर्मत्वेन सिद्धत्वात । केवलात्मनिच "नान्तःप्रज्ञं न बहिः प्रज्ञ" मिति स्वप्नोपलब्धेः जाग्रदुपलब्धेश्च निषेधात् विज्ञानाभावस्य सिद्धत्वात् ।

ननु "मनसाह्येव पश्यती" त्युपक्रमे विज्ञानंप्रति मनसः कारणत्वश्रुतेः तस्य मनोधर्मत्वश्रुति रौपचारिकीति चेन्न; - विज्ञान धर्मिणो मनस आत्मनि विज्ञानारोपनिमित्ततया कारणत्वात , कुसुमस्य स्फटिकारुणिमारोपे कारणत्ववत , एवं च उभय- श्रुति र्मुख्यार्था । घटादौ तु रूपादि र्न सोपाधिकः , तत्रोपाधेरदर्शनात्, किन्तु रज्जुसर्पव न्निरुपाधिकएव । नच रज्जु स्सर्पइव तद्रूपादेर्निरुपाधिकाद्ध्यासत्वे व्यवहारदशायां बाधस्स्यादिति वाच्यं, अविचारदशायां मिथ्यात्व बुद्ध्यभावेपि देहात्मतादात्म्यव द्विचारदशायां मिथ्यात्वनिश्चयरूप बाधस्येष्टत्वात । सविलासाविद्या निवृत्तिरूप बाधस्त्विदानीं नभवति, रूपादेर्मूलाज्ञानोपादानकत्वेन घटादि ज्ञानानिवर्त्यत्वात् , तन्निवर्तक ब्रह्मज्ञानस्य चेदानी मभावात् । अत एव च रज्जु सर्पवैलक्षण्यात् ।

किंच; ज्ञोतएवेति सूत्रमपि संविदआत्मत्वे प्रमाणम् । ज्ञः- नित्य चिद्रूपएवाममात्मा, अत एव - चिद्रूपब्रह्मणएवा विद्याधानादि जीव भावेन स्थितत्वा, दिति हि सूत्रार्थः । "नहि द्रष्टुर्दृष्टे र्विपरिलोपो विद्यत" इति श्रुतिरपि तत्र प्रमाणं, व्यधिकरणषष्ठीतः समानाधिक- रणषष्ठ्या अभ्यर्हितत्वात् ।

किंच वैयधिकरण्येपि द्रष्टुर्यादृष्टिस्तस्याविपरिलोपो निषिद्ध्यते, किंवा दृष्टेर्यो द्रष्टातस्य ? नाद्यः; जीवाश्रितज्ञानस्य प्रत्यक्षं विनाशानु

भवात् । न द्वितीयः, "यद्वैतन्नपश्यति पश्यंश्चैतं नपश्यति " द्रष्टुर्दृष्टे र्विपरिलोपोविद्यत " इति श्रुत्यासुषुप्तौ करणव्यापारोपरमात्सर्व ज्ञानो परमाशंकायां रूपादिविषयक वृत्तिज्ञानोपरमेपि साक्षिज्ञानस्यो परमो नास्तीत्यर्थे स्पष्टमवगम्यमाने अप्रसक्त द्रष्टृनाश निषेधपरत्वायोगात् । नचेश्वरदृष्टे र्विनाशमियं निषेधतीति वाच्यं, " पश्यं श्चैतन्नपश्यती " ति विशेषविज्ञान निषेधस्य तस्मि न्नयोगात । " तीर्णोहि तदा सर्वांश्छोकान् हृदयस्यभवती " ति पूर्ववाक्यप्रमितस्य सुषुप्तौ शोक सन्तरणस्य सर्वदा अशोकेपरमेश्वरे अयोगात । " नहि घ्रातुर्घ्राते र्विपरिलोपोविद्यत " इत्युत्तरवाक्या त्प्रतिपन्नघ्राणाभि व्यक्तौ गन्ध ज्ञानस्यपरस्मिन्नयोगाच्च । नहि गन्धज्ञानमात्रं घ्रातेरर्थः- गन्धमनुमिममाने गन्धं जिघ्रतीत्य प्रयोगात । नचैवं दृष्टेः कथं द्रष्टृ त्वमिति वाच्यं, रूपादिविषय वृत्त्यधिष्ठानतया कल्पितभेदेन फलरूप दृष्टिसम्बन्धित्वेनवा दृष्टिरूपस्यात्मनो द्रष्टृत्वोपपत्तेः। द्रष्टुर्वृत्त्याश्रयस्यान्तः करणस्य यादृष्टि स्तत्साक्षिभूताज्ञप्तिस्तस्या इति, दृष्टेर्वृत्तेर्योनुभवो द्रष्टासाक्षीति तस्येति वार्थइति ।

अत्र ब्रूमः --

घटानुभवो नात्मा, घटविषयत्वात् , इच्छादिवत् । अहं जानामीत्यात्मनो ज्ञानाश्रयत्वादि प्रतीत्यनुपपत्ति र्विपक्षे बाधिका । अनुभव स्यात्मा भेदसाधकानुमानेच नैव विपक्षे बाधक मस्ति । नचासत उत्पत्त्यनुपपत्तेः कार्यस्य प्रागपि सत्वस्याश्रयणीयतया कार्यं कार- णाभिन्नमिति कार्यस्योत्पत्तौ कारणस्याप्युत्पत्तिरित्यात्मनो जन्यज्ञानाश्रय त्वे कौटस्थ्यहानिरिति वाच्यम् ; असत उत्पत्त्यापत्त्या प्राक्कारणा त्मना सत्त्वाङ्गीकारेपि न संविदात्मा भेदसिद्धिः, आत्मनो न्यस्यैव कारणत्वात् । नच तत्र मानाभावः कौटस्थ्यहानिप्रसंगात, "नवि- ज्ञातुर्विज्ञाते र्विपरिलोपो विद्यत ' इति श्रुत्यर्थात्म धर्मभूतज्ञानस्य नित्यत्वश्रुते घटादिज्ञानावस्थो त्पत्त्यनुभवाच्च तथाकल्पनात् । किं-

चासतउत्पत्तौ किं बाधकम् । नचैवं नरश्रृंगस्या प्युत्पत्तिप्रसंगः, कारणाभावात् । तदभावश्च नरे श्रृङ्गानुत्पत्त्यैवोन्नीयते । प्रागभाव-एव वा कार्योत्पत्तिनियामकः । तत्काले ऽ सतएवच तत्तादुत्पत्तिसह कारिसन्निधानान्ननरश्रृङ्गस्योत्पत्तिप्रसंगः, प्रागभावस्य तदप्रतियोगिक त्वात् । कदाचि त्सत्वादेव वाननरश्रृंगतुल्यत्वं कार्यस्य । नच किंचित्काल मसतः कालभेदेपि सत्वानुपपत्तिः, अनुभवबलेन देशभेदेनेव काल भेदेनापि सत्वासत्वयोरुपपत्तेः । तस्मान्नित्यं सतो ब्रह्मणः नित्य म-सतो नरश्रृंगस्यच्च उत्पत्त्यदर्शना त्कदाचित्सतः कदाचिच्चासतएवो त्पत्तिरुपपन्ना । सत्त्वासत्त्वेच पदार्थधर्मौ न स्याताम् । नचासत्त्वका-लेपि पदार्थवद्भावप्रसंगः, तत्र किं मभावप्रातियोगित्व रूपासत्वनि रूपकाभाव कालोपि सत्वकालोभिमतः ? किंवा तादृशसत्वकालएव? नाद्यः, आपादकाभावात् । न द्वितीयः, इष्टत्वात् । अभावप्रतियोगि त्वस्य प्रतियोगिसमानकालीनत्वात् ।

किंच - कदाचिदसतस्सर्वदा असत्वमिति व्याप्तिः प्रमाणेनो-पस्थिते धर्मिणि । प्रमाणेन उपस्थितिश्च ब्रह्मणः प्रपंचस्य वा स्यात ? तत्र न तावद्ब्रह्मणि व्याप्तिग्रहः, तस्य सर्वदा सत्वादेव । नापि-प्रपंचे, कादाचित्कसत्वस्यैव तत्रानुभवात् । जायमानं हि कार्यं हि प्रा-गपि सदिति स्ववचन विरोधाच्च । अविद्यायां व्यभिचारश्च ।

यच्चोक्तमितः पूर्वमसदित्यसतो बुद्ध्यनुपपत्तिः, तस्य कालस-म्बन्धाभावादिति । तन्न, पूर्वकालीनाभाव प्रतियोगित्वपरत्वा द्व्यव-हारस्य । उदाहृत भगवद्वचनमपि न सत्कार्यवादपरम् । नह्यत्र वैशेषिकादि निरास एक विज्ञानेन सर्वविज्ञान प्रतिज्ञानं सांख्यसिद्धा-न्तोपन्यासो वा क्रियते । नच सत्कार्यवादेन देहात्म विवेकोपपादनं शोकशंका निवृत्तिर्वास्यात । त्वदुक्त सांकर्यवादश्च प्रागेवनिरस्तः । तस्माद्देहात्मनो र्नाशित्वानाशित्वरूप स्वभाव विवेकएव परस्य शो-कशान्तये कर्तव्यः । सएवच पूर्वं " गतासूनगतासू " निति

प्रस्तुतः । स एव च "अविनाशीतु तद्विद्धि" "अन्तवन्त इमे देहा" इत्यनन्तर मुपपाद्यते । अतोस्य वचनस्यायमर्थः- असतो देहस्य सद्भावो नविद्यते, सतश्च आत्मनो नासद्भावः, उभयोर्देहात्मनो र्यथोपलब्धि, तत्वदर्शिभिः, अन्तः - निर्णयः, दृष्टः, देहस्यासद्वस्तुनो ऽसत्त्वमेवस्वरूपं आत्मनश्च चेतनस्यसत्त्वमेव स्वरूपमिति निर्णयो दृष्टइत्यर्थः । विनाशस्वभावोह्यसत्त्वं, अविनाश स्वभावश्च सत्त्वमिति ।

किंच कदाचिद् सतस्सर्वदा असत्वेदृश्यात्मनो ऽसतो ब्रह्मणः स्वरूपेणाप्यसत्त्वापत्तिः, यदिच यद्येन रूपेण कदाचि दसत्तत्तेन रूपेण सर्वदा असत इति नियमान्नस्वरूपेणासत्वमिति ब्रूषे, तर्हि आकारभेदेनेवानुभवबलेन कालभेदेनाप्यविरोधः । कारणमेव कार्यरूपमापद्यतइति वदतस्तवकारणस्य पूर्वं कार्यात्मना असत्वस्य सम्प्रतिपन्नत्वात तस्यैव पश्चात कार्यात्मना सत्वा द्व्यभिचारः ।

यच्चोक्तं सत्वानुभवोधिष्ठान विषयइति । तन्न, सन् घटइत्यनुभवे घटत्वस्येव सत्वस्यापि घटधर्मत्वात् । मृद्घटइत्यत्रापि घटत्ववन्मृत्त्वमपि घटधर्मएव । प्रपंचस्य मिथ्यात्वासिद्ध्या सदधिष्ठानकत्वासिद्धेश्च । नच सत्वान्तरकल्पनेगौरवं, ब्रह्मण स्सद्रूपतयासत्व रूपत्वा सिद्धेः ।

यच्चोत्पत्ते स्समवायादिरूपत्व निराकरणम् । तदुत्पत्ते स्तदन्यत्वमेव साधयेत, न त्वनुभवसिद्धं तत्स्वरूपमेवबाधेत । कारणत्व मेव तत्त दर्थकार्यरूप मापद्यतइति वदतापि उत्पत्तिरंगीकृतैव ।

किंचैवं सतः रूपान्तरापत्तिवद् सतएवोत्पत्तिः किमिति नेष्यते? अतर्क्यः कारणसमवायादिरेवोत्पत्ति रिति किमिति नेष्यते । समस्तानुपपत्ति परिहारभारस्या तर्क्यत्व शिरस्येवत्वया निवेशितत्वात् । स्वानधिकरणक्षणा व्यवहितोत्तर क्षणसम्बन्धोवा स्वाधिकरण क्षणा-

नुत्तरक्षणसम्बन्धोवा उत्पत्तिः स्वोपलक्षित समवाय इत्यत्र यदुक्तं बुद्ध्या-दौ मनआदे रकारणत्व प्रसंगइति । तत्र, बुद्ध्यादेः पूर्वमविद्यमानत-या तस्य कारणसापेक्षत्वात् । ततस्ते नैरन्तर्यभङ्ग स्त्विदानी मिष्टः । कादाचित्कत्वप्रतीते र्न तस्या नित्यसमवायात्मकत्वमिति चेत् ? यदि प्रतीतिबला दुत्पत्तेः कादाचित्कत्व मङ्गीकरोषि ! तर्हि कथं ता न्निराक-रोषि । पारमार्थिकत्वमेवोत्पत्तेः निराक्रियते, ननु व्यावहारिकत्वमपीति चेत् ? यदि व्यावहारिकोत्पत्तौ नानुपपत्तिः कथन्तु उत्पत्त्यनिरूपणा त्कारणस्य कार्यरूपापत्ति स्साद्ध्यते । ननु सत्यपक्षे उत्पत्तेर्निरूप यितु मशक्यत्वेन कारणमेव सत्यकार्यरूप मापद्यतइ त्युत्पत्त्यनिरूपणं कौटस्थ्यहाना न्न हेतुस्स्या दिति चेन्न ;- कार्यस्य कारणाभिन्नत्वे कारणस्यसामग्रीवशा त्कार्यरूपापत्ते रसम्भवात्, भिन्नत्वेऽन्यस्यान्यात्म ताया स्सम्भवाच्च न कारणं कार्यरूपमापद्यतइति कुतः कौटस्थ्य हानिः । अनुपपन्नत्वाविशेषे उत्पत्तेरेव वक्तुं शक्यत्वात् । किञ्च सत्त्वस्यैकत्वेपि घटसत्तायां पटनिरूपितत्वाभाववत् समवायस्य प्रा ग्बुद्धिनिरूपितत्वाभावात् ।

यच्च कार्यसमवायस्य विशेषणत्वे दूषण मुक्तं, असतो विशेष्या सम्बन्धे विशेषणत्वायोगादिति । तन्न, सतएव विशेष्यसम्बन्धात् । नच पूर्वमसतः कथं सम्बन्धइतिवाच्यं, अस्य प्रतियोगिजन्यत्वासिद्धेः ।

यच्च स्वस्मिन् सत्तासमवायइत्यत्र दूषणमुक्तं असति तस्मि स्तदनुपपत्ते रिति । तन्न, असति तत्समवाया नंगीकारात्, सत्येव तत्समवायात् । नहि सत्ता समवायादिदशायामपि असत्त्वम् ।

यच्चोक्तं कार्यसत्त्वस्योत्पत्ति प्रयोज्यत्वादिति । तन्न, यदि प्रयो-ज्यत्वं जन्यत्वं, तदा असिद्धिः । यदि व्याप्यत्वं तदा का हानिः सत्ता समवाय उत्पत्तिरित्यत्र ।

यच्च स्वरूपसम्बन्धे दूषणमुक्तं असतो निस्स्वरूपत्वेन स्वरूप द्वयात्मक सम्बन्धायोगादिति । तन्न, असतःसम्बन्धा नंगीकारात् ।

सत एव स्वस्यविद्यमानदशायां सम्बन्धांगीकारात् । नच समयस्यापि घटोत्पत्तित्व प्रसंगः, घटकालसमुदायरूपोत्पत्तिं शरीरान्तर्भावस्ये ष्टत्वात् , कालमात्रस्य चोत्पत्तित्वासिद्धेः । नहि वनं भव त्येकोवनस्पतिः । नचोत्पन्नो घटइति प्रतीत्यनुपपत्तिः, समुदायिनो स्सम्बन्धस्य प्रसिद्धत्वात् । नच समवायस्यैकत्वा दाद्यत्वासम्भवः, उपाधितः स्वरूपतोवा क्षणानां भिन्नत्वात ।

यच्च स्वसमानकालीन पदार्थप्रतियोगिकध्वंसानाधारत्वं इत्यत्र दूषणमुक्तं, स्वपदेनोत्पद्यमान पदार्थाभिधाने आत्माश्रयइति । तन्न, स्वपदेनोत्पद्यमान पदार्थस्य स्वरूपेणैवाभिधानात् , उत्पद्यमानत्वेनाऽभिधानात् । स्वसमानकालीन पदार्थप्रतियोगिक ध्वंसाधारकालाऽन्यकालत्वं विवक्षितमितिच्चे न्नोक्तदोषः । स्वसमानकालीन पदार्थप्रतियोगिक ध्वंससामान्य विवक्षायामपि न दोषः, ध्वंसे सामान्यधर्माभावेपि स्वसमानकालीन पदार्थानामेवतत्वेनानुगतीकृतानां प्रतियोगितावच्छेदकत्वात् । याव द्विशेषाभावएव वा विवक्षितः ।

यच्चोक्त मत्यन्ताभावस्य त्रैकालिकतया द्वितीयक्षणेपि सत्वात् तत्रा तिव्याप्तिरिति । तन्न, प्रतियोगिसमानकालवृत्ति प्रयोजक सम्बन्धातिरिक्त सम्बन्धेन तदभावाश्रयत्वस्य विवक्षितत्वात् । तादृशश्च न द्वितीयक्षणः, किन्तु पूर्वक्षण एव । नचात्र कल्पकाभावः, यथा कालसंख्यात्यन्ताभावस्य काले विद्यमानत्वेपि काले कालसंख्या नास्तीत्यप्रतीतेः काले रूपाद्यभावप्रयोजकसम्बन्धेन संख्यात्यन्ताभावोनवर्ततइति कल्पनीयं, यथा च कालान्योन्याभावस्य कालेपि सत्वेपि कालः कालोने त्यप्रतीतेः कालो घटो नेति प्रतीतेश्च काले घटान्योन्याभावप्रतीतिप्रयोजक सम्बन्धेन कालान्योन्याभावो न वर्तत इति कल्पनीयं, तथा ध्वंसा

त्प्राग्ध्वंसो नास्तीति प्रतीतेः ध्वंसकाले ध्वंसो नास्तीत्यप्रतीतेश्च पूर्वकाले येन सम्बन्धेन वर्तते न तेन सम्बन्धेन उत्तरक्षण इति कल्पनात् । यद्वा यत्कालावच्छेदेन उक्तध्वंसात्यन्ताभावस्य प्रति योग्यसमानकालीनत्वं तत्कालसम्बन्धो विवक्षित इति नोक्तदोषः । नच चरमध्वंसोत्पत्तौ अव्याप्तिः, सर्व मुक्तौ मानाभावात् । नच सर्वमुक्त्यभावे स्वस्य नित्यसंसारित्वशंकया निश्शंकं प्रवृत्त्यनुपपत्तिः, सत्यां सामग्र्यां कार्यविलम्बायोगेन मोक्षसाधननिर्वृत्तौ मोक्षो भव तीति निश्चया न्मोक्षसाधने प्रवृत्त्युपपत्तेः । अन्यथा सर्वमुक्तिपक्षेपि कल्पान्तरे स्वस्य मुक्तिशंकया इदानीं प्रवृत्त्यभावापत्तेः । यद्वा स्वप्रा गभावान्यूनानतिरिक्तकालीनप्रागभावप्रतियोगि स्वसमानकालीनपदार्थ प्रतियोगिकध्वंसप्रतियोगिक स्वप्रागभावसमानकालीन परस्परसमान कालीन यावत्प्रागभावाधिकरणकालसम्बन्ध उत्पत्तिः । स्वप्रागभा- वान्यूनानतिरिक्तकालीन प्रागभावानां प्रतियोगिनो ये स्वसमान कालीनपदार्थाः तत्प्रतियोगिका ये ध्वंसाः तत्प्रतियोगिकाः स्वप्राग भावसमानकालीनाः परस्परसमानकालीनाश्च यावन्तः प्रागभावाः तदधिकरणकालसम्बन्ध उत्पत्ति रित्यर्थः । प्रतियोगितत्प्रागभावयो र्द्वयो रपि ध्वंसप्रागभावत्वा त्तदुभयानाधिकरणत्वात् स्वा [न] धिक- रणकालस्या सम्भवं परिहर्तुं परस्परसमानकालीनत्वंविशेषणं । तृतीय- क्षणोत्पन्न पदार्थप्रतियोगिक ध्वंसप्रागभावात्मक तत्पदार्थघटित क- तिपयप्रागभावाधिकरणत्वा त्तृतीयक्षणस्य तत्रातिव्याप्तिपरिहाराय स्व प्रागभावसमानकालीनेति । स्वसमकालोत्पत्तिक पदार्थप्रागभावस्य स्वकाले अभावात् असम्भवपरिहाराय स्वप्रागभावा न्यूनातिरिक्त कालेति पदार्थविशेषणमिति सुस्थं लक्षणम् । स्वसमानकालीन या वत्प्रागभावाधिकरण सम्बन्धो वा । सर्वमुक्तिपक्षे पि न लक्षणासम्भ वः, स्वाधिकरण यत्कालवृत्तिध्वंसत्वं स्वाधिकरण यावत्कालवृत्तित्व

व्याप्यं तत्कालसम्बन्धस्योत्पत्तित्वात् । याव त्स्वाधिकरण कालवृत्ति[त्व] ध्वंसान्यकान्यतराश्रय यावत्स्ववृत्तिपदार्थक्षण उत्पत्तिः ।

ननु - सत्कार्यवादस्यैव भगवता नुगृहीतत्वात कथ मसत्का र्यांगीकारइति चेन्न ;- संस्थानादे रेव कार्यत्वस्यानुग्रहात् । सत्का र्यवादश्च संस्थानविशिष्टे कार्ये विशेष्यस्य प्रागपि सत्त्वा दुपपद्यते ।

यच्च व्याप्यवृत्तित्वादि विकल्पमुखेन ज्ञानात्मनो स्संयोगनिरा करणं, तस्या णुपरिमाण आत्म न्यनवकाशएव । नचायुतसिद्धयो स्संयोगाभावः प्रतिज्ञामात्रेण सिद्ध्यति ।

यदुक्तं भिन्नत्वेस त्यभिन्नसत्ताकत्वरूपं तादात्म्यं गुणगुण्या- दि सामानाधिकरण्य प्रतीते विषय इति । तन्न, तस्य सामानाधि- करण्य प्रतीतिविषयत्वा सम्भवात् । सामानाधिकरण्यं हि समाने ना धिकरणेन सम्बन्धः, तद्विषयस्य सामानाधिकरण्या नुभवस्य क- थं भिन्नत्वे स त्यभिन्नसत्ताकत्वं विषयः । तत्र हि धर्मद्वयं धर्म्यभेदश्च प्रतीयते । नतु धर्मिणि धर्मधर्मिणो र्भेदो र्भेदोवा सत्ताया [ असत्ताया] : । किंचैवं दण्डघटयो र्दण्डो घट इ त्यननुभवात तयोरपि सत्ताभेद- प्रसंगः । किंच घटोरूप मित्यपि प्रतीतिप्रसंगः । घटसत्तैव रूप- रसादीनां सत्तेति रूपं रस इति प्रतीतिप्रसंगश्च ।

यदुक्तं शुक्लो घट इति सामानाधिकरण्यप्रतीत्या तयो स्तादा- त्म्यमिति । तन्न, तत्प्रयोगस्य मतुब्लोपनिबन्धनत्वात् । अभेदप्रती- तिस्तु नास्त्येव । तथासति रूपंघट इत्यपि प्रयोगप्रसंगात् । प्रयुज्य तेहि मृद्घट इतिव द्वस्तुघट इत्यपि ।

यच्चाचार्याभिप्रायवर्णनम् । तदपि न, रूपस्पर्शादि शब्दादपि तदनुशासनप्रसंगात् । स्रजिष्ठः स्रग्विष्ठ इत्यत्र विण्मतो र्लुगिति मतुप

स्तत्समानार्थस्य विनश्च लोपानुशासनात् स्रक्स्रग्विणो र्वसुर्वसुमतोश्च तादात्म्यप्रसंगः। तथा क्रियावत् शब्दव दित्यत्रापि मतुल्लोपानुशासन प्रसंगः। गर्गावत्साः बिदा उर्वाः इत्यत्र यञञोश्चेति गोत्रप्रत्ययलोपविधानात् कूटस्थगोत्रापत्ययो रपि तादात्म्यप्रसंगः। तस्मात् गुणगुणिनो स्सामानाधिकरण्य प्रतीत्यसिद्धौ न तदनुसारेण तयो स्तादात्म्यं सम्बन्ध इति।

यच्चोक्तं रूपाद्यवच्छिन्नतया घटसत्ताया रसादिसत्तात्मकत्वा भावादिति। तन्न, तत्र किं मठाकाशस्य घटशरावाद्यवच्छेदेऽपि शरावावच्छिन्नाकाशत्व माकाशापेक्षया अभेदेऽपि परस्परंभेदवद्रूपत्वरस त्वावच्छिन्नसत्तयो र्घटावच्छिन्न सत्तापेक्षया ऽभेदेऽपि परस्परं भेदइति विवक्षितम्? किंवा रूपावच्छिन्नत्वस्य रस सत्तात्वंप्र त्यवच्छेदकत्वाभावः। नाद्यः, घटावच्छिन्नसत्ताया रूपसत्तात्वेन रूपसत्ताया रूपत्वावच्छिन्न सत्तात्मकत्वेनच घटसत्तायाएव रूपसत्तात्वा तयो स्तादात्म्यप्रसंगात्। रक्तकृष्णाद्यनेक तन्त्वारब्ध चित्रपटे यानि नानारूपाणि चित्ररूपं वा तेषां तस्य वा कृष्ण तन्तु तादात्म्य प्रसंगः, तन्तुसत्तायाः पटसत्तात्वात् तस्याएव तद्रूपसत्तात्वात्। न द्वितीयः, रूपसत्तात्वस्य रससत्तावच्छेदकत्वात्। नच घटसत्तात्वमेवावच्छेदकं, विनिगमकाभावात्। नच घटरूपसत्तात्वा पेक्षया घटसत्तात्वं लघ्विति वाच्यम्, सत्तात्वस्यैव ततोऽपि लघुत्वा त्। नचानुभवबला त्तदनंगीकारः, तादृशानुभवासिद्धेः। सामानाधिकरण्यप्रतीतिस्तु ना वच्छेदककुदृष्टिगन्धमपि सहते। अस्तिच तत्र लोहितालोहिताम्रफलानि दृष्ट्वा लोहितं मधुरमिति सामाना धिकरण्यप्रयोगः। अत स्तयोरपि तादात्म्यं दुर्वारमेव।

अपिच अभिन्नसत्ताकत्वे अभेदः प्रयोजकइति तु (त्वद्वा) वाक्यादेव गुणगुण्यादे र्भेदाभेदांगीकृतौ तत्र समानसत्ताकौतावेकत्र

त्वयैव निषिद्धाविति भिन्नसत्ताका वेष्टव्यौ, तत्र किं भेदो व्यावहारिकः अभेदः प्रातिभासिकः, किंवा तयो र्भेदः प्रातिभासिकः अभेदो व्यावहारिकः, उत भेदो धर्मिसमसत्ताकः अभेदो न्यादृशः, उताभेदो धर्मिसमसत्ताकः भेदो न्यादृशः, [उताभेदो धर्मिसमसत्ताकः भेदो न्यादृशः,] अथवा भेदो धर्मिसमसत्ताकः अभेदोपि पारमार्थिकत्वावच्छिन्न प्रतियोगिकभेदाभावो धर्मिसमसत्ताकः ?

नाद्यः, स्वाप्न[क]कार्यकारणयो स्तादात्म्यासिद्धिप्रसंगात् । दूरस्थवनस्पत्यो रभेदेन भासमानयो स्तादात्म्यप्रसंगाच्च ।

नद्वितीयः, घटस्य प्रागपि प्रसंगेन कारकव्यापारनैरर्थक्यापत्तेः । यदुक्तं भेदमात्रमेव कार्यकारणभावप्रयोजकम्, स्वाप्नार्थानां कार्यकारणभाव दर्शनादिति । तन्न, तथासत्यंगुल्यवष्टम्भादिना भेदारोपेसति तस्यैव तत्कार्यत्वप्रसंगात् । ननु तत्र कारणताग्राहक प्रमाणाभावादेव न कारणत्वम्, मृद्घटयो स्तत्सत्वात् कार्यकारणभाव सामग्रीसाफल्यंचेति चेत् ? यदि प्रमाणमप्यङ्गिक्रियते कथं तर्हि कार्यस्य प्रागविद्यमानत्वे प्रमितएव तस्य प्राग्विद्यमानकारणभेदं ब्रूषे ? पौर्वापर्याभावेच कथं कार्यकारणभावः । तस्मात् भेदस्य धर्मिसमसत्त्वमेव कार्यकारणभावप्रयोजकम् । भेदमात्रस्य प्रयोजकत्वे भेदस्य प्रयोजकत्वाभावएवोक्तस्स्यात्, तद्व्यावर्तनीयातिप्रसंगाभावात् ।

न तृतीयः, दूरस्थवनस्पत्यो स्तादात्म्यप्रसंगा देव ।

न तुरीयः, कारकव्यापारनैरर्थक्य प्रसंगादेव ।

न पंचमः, घटपटादीनां सर्वेषामपि परस्परतादात्म्यप्रसंगात् ।

किंच सर्वंहि ब्रह्मस्वरूपमेवेति कस्सम्बन्धो घटादे स्सत्त्वेन येन सत्तावच्छेदकत्वं स्यात् । ननूक्तं घटस्य वस्तुतोधिष्ठानसम्बन्धाभावेपि तत्प्रतियोगिक वास्तवभेदस्याप्य भावात् सत्तानवच्छेदक भेदवत्स्वरूप तादात्म्यसम्बन्धा दधिष्ठान सत्तावच्छेदकत्वमिति, इति चेत् ? सत्यमुक्तं, दुरुक्तन्तु तत्, प्रपंच मात्रस्य तादृशसम्बन्धाविशेषेण सर्वेषां परस्पर तादात्म्यप्रसंगात् । तत्र मृदवच्छिन्नसत्तायाएव घटावच्छिन्नत्वं घटावच्छिन्नसत्ताया रूपाद्य-वच्छिन्नत्वमित्यादि डिम्भप्रलोभनाना मर्थशून्यत्व प्रसंगात् । घटादीनाम-धिष्ठानभूत सत्प्रतियोगिक सद्भेदाभावा त्सत्तादात्म्यवद् घटादिप्रति-योगिक सद्भेदस्याभावाच्च सर्वेषां सर्वै स्तादात्म्य मनिवार्यमेव ।

यच्चोक्तं बुद्ध्यारोपोन्तः करणावच्छिन्नात्मनि सोपाधिक इत्यादि ; तन्निरासः कर्तृत्वाद्ध्यासभंगे द्रष्टव्यः । आह च भगवान् बादरायणिः संविदात्मनोर्भेदं " ज्ञोत एवे " ति । ज्ञशब्दस्य "इगुपधज्ञाप्रीकिरः कः" इति कर्तरिघञ् प्रत्ययान्तत्वात् । अतएवास्य सूत्रस्य संविदभेदपरत्वं निरस्तम् । " नहि द्रष्टु र्दृष्टे र्विपरिलोपोविद्यत " इति श्रुतिश्च संविदात्मनो र्भेदे प्रमाणम् । द्रष्टु र्दृष्टेरिति व्यतिरेक निर्देशात् ।

यदत्रोक्तं व्यधिकरणषष्ठीत स्समानाधिकरणषष्ठ्या अभ्यर्हि तत्वात् इयं श्रुति स्संविदात्मनो रभेद एव मानमिति । तन्न, नह्यत्र विज्ञातु र्विज्ञानाद्यभेदः प्रतिपाद्यते, विपरिलोप निषेधस्यैव विधेयतयाप्रतीतेः । किन्तु विज्ञातु र्विज्ञाते रित्यनुवादश्च यथाप्राप्तीति जिघ्राणिपश्यामीत्यादि प्रत्यक्षेण एष हि द्रष्टेत्यादि श्रुत्याच सिद्धद्रष्ट्राश्रयताक दृष्ट्यादिक मनूद्य विपरिलोपाभावो विधीयते ।

किंच विज्ञातु र्विज्ञातेरिति सामानाधिकरण्ये लिंगभेदानुपपत्तिः । नच विज्ञातुरेव विशेष्यत्वान्नदोषइति वाच्यं, तथा सति विज्ञातेरिति

विशेषणवैयर्थ्यात् । ज्ञानस्यानित्यत्वाशंकया तन्नित्यत्व एव प्रकरणतात्पर्यात् । अतोऽव्यधिकरणे एव षष्ठ्यौ विज्ञातुर्विज्ञातेरित्यादिषु ।

यच्च द्रष्टुर्या दृष्टिस्तस्या विनाशनिषेधासम्भवः, रूपादिविषयज्ञानस्य प्रत्यक्षं विनाशानुभवादिति । तन्न, तदनुभवस्य विषयीकरणरूपावस्था विनाशविषयत्वात् । श्रुतेश्च धर्मधर्मिभूत स्वरूपविषयत्वात् । व्यधिकरण षष्ठीपक्षे त्वदुक्तयोजनाच वृत्त्यादि निरसादेव निरस्ता ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत
परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण
परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन
रामानुजदासेन विरचितायां शतदूषणी
व्याख्यायां चण्डमारुताख्यायां

संविदात्मत्व भंगः

पंचविंश स्स्कन्धः ।



श्रीरस्तु ।

श्रीमतेरामानुजायनमः ।

# अथ षड्विंशोवादः ।

अहंत्वे दन्त्वाभ्यां स्वपरविदितां श्चेतनगणा
नहंकारादी नप्यचिदुपधिभेदा ननहमः? ।
अहंतायस्यैकाक्रबलयति वैशिष्टयविभवा
न्ममास्मिन्विश्राम्यत्वहमिति मति र्विश्ववपुषि ॥

( अहन्त्वेदन्त्वाभ्यामिति ) स्वयं स्वेनाहमिति विदितः परेण त्विदमिती त्यनेनात्मन्यहमिति प्रतीतिर्न तत्राहंकार तादात्म्याद्ध्यास निबन्धना, तथासति परात्मनि इदमिति प्रतीतेरपि इदमर्थ तादात्म्याद्ध्यास निबन्धनत्व प्रसंगादिति सूच्यते । ( चेतनगणानिति ) एवं व्यवस्थित व्यवहारस्य स्वाभाविक भेदएव हेतुतया कल्पनीयः, न त्वौपाधिकः, गौरवादिति भावः । ( अहंकारादीनिति ) अहंकारो नाहमर्थः, जडत्वादिति सूच्यते । "उपाधि" शब्देन भोगोपकरणत्वं विवक्षितम् । तेन भोक्तृत्वेन प्रतीयमानादहमार्थात् भेद स्सूच्यते ( अहन्तेति ) अपृथक्सिद्ध प्रकारतया तत्र ज्ञापकशब्दानां परमात्मनि पर्यवसानेन तस्याहन्ता तत्र च्छब्दप्रतिष्ठां व्याप्नोति तत्र च्छब्दवाच्यता समानाधिकरणा भवतीत्यर्थः । चैत्यराहन्ता कथनेन अन्तःकरणं नाह मर्थः, तस्यान्तःकरणानंगीकारादिति सूच्यते । वैशिष्टयस्य विभवः - अपृथक्सिद्धता । ( ममेति ) अहमिति व्यवहारहेतुभूता मदीया मति र्वामदेवादेरिव मत्प्रकारतया परमात्मानं विषयीकरोत्वित्यर्थः । अनेन वामदेवादीनां परमात्मन्यह मिति व्यवहार श्शरीरभाव निबन्धन इत्युक्तंभवति । तेन तथा

अंगीकुर्वतः परस्य मते शबळे व्युत्पन्नस्याहंशब्दस्य तदेकदेशे लक्षणा प्रसंगइति सूच्यते । यद्वा "चेतनगणा नचि द्रुपधिभेदांश्च यस्याहंताकबळयती" त्यनेन " तस्यैषएव शारीरआत्मे " त्येत द्वा-क्यार्थ सूचनमुखेनानन्दमय आत्मोपदेश परिसमाप्तिःसूच्यते । " चेतन गणानि " त्यनेन विज्ञानमय उक्तः । अहंकारशब्देन तत्कार्य भूतो मनोमयउक्तः । आदिशब्देन प्राणमयान्नमया वुक्तौ । उपधि शब्देन आत्मोपदेश द्वारत्वमुक्तम् । अहंकारादीन चिद्रुपधि भेदा निति समुच्चयेन चेतनस्या प्यात्मोपदेशोपाधित्वं सूच्यते । पृथ गुक्तिस्त्व हन्त्वेदन्त्वाभ्यां स्वपरवेदनं वक्तुम् । तच्च दकारान्ता स्मच्छब्दनिष्पन्नाहं शब्दवाच्योयमहमर्थः , अहमेवा धस्तादित्य स्याहंग्रहेणोपासनपरत्व मनभ्युपगच्छत्त्वया ' तत्रत्याहं शब्दो नाहमर्थ, प्रसिद्धास्म च्छब्दनिष्पन्नो भवति, किंतु दकारान्ता व्यय'मिति वाच्यं, ततश्च तस्य पृथगुपदेशे प्यहमर्थस्य पृथगुपदेशा भावात् न तस्यात्मभेदासिद्धिरिति सूचयितुम् । एवं सर्वत्रैकस्यैवा त्मत्व प्रतिपादनेन " तस्यैषएव शारीरआत्मे " त्यस्य यस्सिद्धान्तार्थः श्रुति स्वारस्य सिद्धः – 'पूर्वस्य यः परमात्मा शारीरात्मा सएवास्यापि शारीरआत्मे ' ति सोर्थ स्सूचितोभवति । तेनैतदनुबन्धि श्रुतिस्वरससिद्ध मानन्दमये महावाक्यतात्पर्यमपि सूच्यते । स्थूला रुन्धती न्यायेन पुच्छब्रह्मणि आत्मोपदेशपर्यवसानपक्षे उत्तरोत्तरस्यैव पूर्वपूर्वं प्रति शारीरात्मतया प्रतिपाद्यत्वात् । विभव पदेन वैशिष्ट्यस्या कर्मकृतत्वं विवक्षितम् । तेन तत्सम्बन्धप्रयुक्त दोषाभावः फलितः । अनेन द्वासुपर्णेति श्रुत्यर्थो विवक्षितः ।

अनेन श्लोकेन परै रात्मनो हमर्थभेदे प्रमाणतयोपन्यस्तानां श्रुतिवाक्याना मतत्परत्व मुक्तं भवति । तथाह्याहुः – त्वं पदार्थ मात्मानं अह मनुभवगोचरात् पृथक् कृत्येयं श्रुतिः तत्साक्षितया प्रदर्शयति ।

" अथातो ऽहंकारादेश " इत्यादिना अहंकार मुपदिश्य " अथात आत्मा देशा एवात्मैवाधस्ता दात्मोपरिष्टा दात्मा पश्चा दात्मा पुरस्ता दात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वं " मिति ततोन्यस्या त्मन उप देशात् । नन्विदं ब्रह्मविषयमिति चेन्न;- तस्य वाक्योपक्रमे " स एवाधस्तात् स उपरिष्टात् स पश्चा त्स पुरस्ता त्स दक्षिणत स्स उत्तरत स्स एवेदँ सर्वमि " ति पृथगेव निर्दिष्ट त्वादिति ।

अन्येतु " भूमा नारायणाख्य स्स्या त्स एवाहंकृति स्मृतः ।

जीवस्थस्त्वनिरुद्धो य स्सोहंकार इतीरितः ॥
अणुरूपोपि भगवान् वासुदेवः परो विभुः ।
आत्मेत्युक्त स्सच व्यापी " इति स्मृत्या,

" अनिरुद्धोहिलोकेस्मिन् महानात्मा परात्परः ।
योसौ व्यक्तत्व मापन्नो निर्ममे सपितामहम् ॥
सोहंकार इति प्रोक्त स्सर्वतेजोमयोहि सः । "

इति स्मृ[श्रु]त्यनुसारात् अत्र नारायणानिरुद्धवासुदेवाएवभूमाहंकारात्म शब्दै रुपदिश्यन्ते ; अहमर्थे च जीवेहंकारपदाप्रयोगात् । किंच न पृथगुपदेश इत्येतावता भेद स्सिद्ध्यति, भूमात्मनोरपि भेदप्रसंगात् । अस्तिहि तयोरपि पृथगुपदेशः । तथापि तयो रभेदे किमपराद्ध महंकारात्मनो रभेदेन । ननु भूमात्मनो र्भेदेन प्रत्यक्षासिद्धयो रभेदेन व्यपदेश ऐक्यार्थः । द्वयो स्सार्वात्म्यायोगात् । अहंकारस्य त्वात्मत्वेन प्रत्यक्षसिद्धस्य भेदव्यपदेशो भेदार्थ इति चेन्न;- अह मर्था दन्यस्यात्मनो ब्रह्मापेक्षया भेदेन प्रत्यक्षसिद्धत्वा भावात् तयो रुपदेशो भेदार्थः, अह मर्थस्यतु ब्रह्मभिन्नत्वेन सिद्धस्य व्यपदेश ऐक्यार्थ इति वैपरीत्यापत्तेः । सार्वात्म्यं च नेह प्रतिपिपादयिषितं, " स एवाधस्तादहमेवाधस्था दात्मैवाधस्तादि " त्युप क्रमानुसारेण उपसंहारेपि स एवेद मित्यादेः सर्वगतत्वपरत्वात्, तस्य च भेदेप्यविरोधादिति ।

अत्र नवीनः ।

इदंहि प्रकरणं यद्ज्ञानाच्छोको यज्ज्ञाना त्तन्निवृत्तिः, स एवात्मा सुखं, तदेव च भूमा; सच निखिलभेदाभावा-त्मेति प्रतिपादयति । "श्रुतंह्येवमे भगवद्दृशेभ्यस्तरति शोकमात्म विदि" त्युपक्रमात् । तस्यात्मनो यच्छब्देनानुकृष्टस्य "यदावैविजानाती" त्यादिना तज्ज्ञानसाधनश्रवणा द्युपन्यासपूर्वकं "सुखंत्वेव विजिज्ञासितव्य" मिति सुखात्मतयोपन्यस्तस्य "सुखं भगवो विजिज्ञासे" इति तज्जिज्ञासापूर्वकं "योवै भूमातत्सुखंनाल्पे सुखमस्ति भूमैव सुख" मित्युक्त्वा "भूमानं भगवो विजिज्ञास" इत्याकांक्षा मवतार्य "यत्र नान्य" दित्यादिना निरस्तनिखिलभेदस्य वस्तुनो लक्षितत्वात् । यत्र यस्मिन्वस्तु न्यन्यत् भिन्नं कार्यजातन्नपश्यतीत्यादिना नामरूपात्मक भेद प्रपंचप्रमाणस्यैं निषिद्धत्वात् । "अथ यत्रान्यत्पश्यति अन्यच्छृ-णोति अन्यद्विजानाति तदल्प" मिति वस्त्वन्तरपरिच्छिन्नस्याल्पत्वं संकीर्त्य "अथ यदल्पं तन्मर्त्य" मिति मर्त्यत्वेनाल्पसुख मस्तीत्यसुख त्वेन वस्त्वन्तरपरिच्छिन्नस्य निन्दितत्वा च्च ।

नच यत्रेति विषये सप्तमी, अन्यत् कर्तृयन्नपश्यति शृणोति विजानाति वा सभूमेति वाक्यार्थः किन्न स्यादिति वाच्यं, नञो धातु प्रत्ययाभ्यामन्वये प्रमाणप्रमातृ निषेधेन तदसिद्धिप्रसंगात् । अन्यनिषेधेचात्मैकत्वमिति मदिष्टासिद्धिः । नच दुर्विज्ञेयत्वमात्र मत्रप्रतिपा-द्यम्, तस्या पदार्थत्वा दवाक्यार्थत्वात्, त्वदभिमत ब्रह्मणः पामरधी विषयत्वेन दुर्विज्ञेयत्वाभावाच्च । नहीश्वरश्शरीरी शंखचक्रादि बाहु रिति श्रुत्या पामराअपि विप्रतिपद्यन्ते । किंच "सभगवः कस्मिन् प्रतिष्ठित" इत्यादिना ब्रह्मणोप्याधिकरणमस्ति नवेत्याशंक्य "नाह मेवं ब्रवीमीति सहोवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित" इति भेदनिषेधेनात्मनः प्रतिष्ठितत्वनिषेधात् । विभुत्वस्यतुभूमत्वे विभुत्वादप्रतिष्ठित इत्येव ब्रूयात् ।

नच नियम्येपिप्रातिष्ठाशब्दप्रयोगात् ब्रह्मणोन्यनियाम्यत्वं पृष्टन्तदेव निषिद्ध्यतइति वाच्यं; अन्योह्यन्यस्मिन्निति भेदनिषेध पुरस्सरं तन्निषेधेनाद्वैतसिद्धेः। सएवाधस्तादि त्युत्तरवाक्ये सार्वात्म्यप्रतिपादनाच्च। एवं च 'यत्रनान्य' दित्य द्वितीयत्वेन लक्षितत्वात अथ यत्रान्यदिति भेदस्य निन्दितत्वात अन्योह्यन्यस्मिन्निति भेदनिषेधात् सार्वात्म्यप्रतिपादनाच्चा द्वितीयपरमिदं प्रकरणम्। अस्मिन्नयमहंकाराख्या निरुद्ध 'स्स एवाधस्ता' दित्युपदिष्टभूमाख्य ब्रह्मणः तत्वान्तरं सद्व्यपदिश्यते उत तदभिन्नएवा भिन्नधर्माच ? नाद्यः, अजिज्ञासितस्य शेषिभूमोपदेश प्रतिकूलस्य च निर्देशानुपपत्तेः। प्रकरणिनापेक्षितार्थपरत्वाभावेन वाक्यभेदप्रसंगाच्च। नद्वितीयः, प्रथमनिर्देश वैय्यर्थ्यात्। नच भूम्नस्सकाशादहंकाराख्यानिरुद्धस्य भेदभ्रमनिवृत्त्यर्थं पृथगुपदेशः, अलौकिके त्वनिरुद्धे धर्मिणिप्रतियोगिनिच तथाविधेभूम्नि प्रत्यक्षभेदभ्रमासम्भवात्। धर्मिग्राहक प्रमाणविरोधेनानुमानादेरप्य नुदयात्। स्मृतौ भूमाहंकाराद्य पर्यायपदप्रयोगात् भ्रमइति चेत्; अत्राप्य पर्यायशब्देनैवोपदेशात् भ्रमानिवृत्तेः। नचास्मन्मतइव तुल्यलक्षण निर्देशात तन्निवृत्तिः, त्वदभिमतलक्षणस्य सर्वगतत्वस्य भेदेप्यविरोधात। नारायणाद्युपस्थापकपदाभावाच्च।

ननूक्तस्मृतौ भूमाहंकारात्मशब्दै नारायणानिरुद्ध वासुदेवानामवगतत्वाच्छ्रुतावपि तच्छब्दैस्तएव प्रत्यभिज्ञायन्तइति चेन्न; - अहंकारशब्द साम्येपि रूपभेदेना प्रत्यभिज्ञायमानतया श्रुतिस्मृत्योरेकार्थत्वाभावात। स्मृतौ जीवस्थस्त्वनिरुद्धइति परिच्छिन्नोहंकारः प्रतीयते, श्रुतौत्वहमेवेदं सर्वमिति सर्वात्मकः। स्मार्त्तक्रमबाधादपि तृतीयआत्मादेशो न स्मार्त्त वासुदेवस्यादेशः, सर्वस्मृतिषु वासुदेवस्य प्रथमपाठात। नच स्मृतिमनुसृत्य सर्वात्मत्व श्रुतिपीडायुक्ता। तस्मात् जडस्य ब्रह्मकार्यत्वे नारम्भणाधिकरणन्यायेन ब्रह्मणस्तदात्मकत्वेपि जीवस्य तदकार्यस्य तद्भेदे आत्यन्तिकभेदएव स्यादिति ब्रह्मणस्सार्वात्म्य श्रुतिरुन्मत्त

तरमिथ्यात्वं भूयस्त्वोपपादकम् । नापि तदधिकरणवस्तु सत्त्वं तस्याल्पत्वोपपादकं, प्रत्युतविपरीतमेव हि लोके विद्यागुणादि शालिनं भूमानिति वदन्ति तच्छून्यं चाल्पमिति । नच यतोन्यत्वेन किंचिद्वस्तु न पश्यति स भूमा यतोन्यत्वेन किंचिद्वस्तु पश्यति तदल्प मित्यर्थः, भवति च वस्तुपरिच्छेद तदभावाभ्यां अल्पत्व बहुत्वोपपादनमिति वाच्यम्; सर्वज्ञब्रह्मान्यत्वेनैव किंचिज्ज्ञजडयोः प्रतिपत्तेः, वस्तुपरिच्छेदतदभावाभ्यां अल्पभूयस्त्वोपपादनाभावा च्च । वैपुल्यं हि भूमा, अल्पत्वप्रतियोगित्वात, तच्च वस्त्वन्तरपरिच्छेदेपि गगनादौ दृश्यते । दृश्यतेच "सनसाधुना कर्मणा भूया" निति कर्पाधीनतया तस्यानुवादः । नच वस्त्वन्तरापरिच्छेदः कर्माधीन स्तत्परि च्छेदो वेति युक्तम् ।

यश्च विषयसप्तमीपक्षे दोष उक्तः दुर्विज्ञेयत्व न्न पदार्थ इति । सनास्त्येव, ज्ञानविषयत्वाभावस्य वक्तु मशक्यतया सुखेन ज्ञानविषयत्वाभावस्य प्रतिपादनात् । इदमेव च दुर्विज्ञेयत्वं । पश्यतिपदं सुखसाध्यदर्शनं लक्षणया बोधयति । परमात्मस्वरूपंहि दुर्विज्ञेयमेव, "श्रूयतां परमं दैवं दुर्विज्ञेयं मयापि च । नारायणो महायोगी"ति चतुर्मुखेणाभिधानात । नच लक्षणैव दोषः, तवाप्य न्यपदेन समानसत्ताकान्यस्य लक्षणीयत्वात् ।

अयुक्ता च प्रथमश्रुतपदे लक्षणा, "संख्यायुक्तं क्रतोः प्रकरणात्स्या दि"त्यधिकरणे "नप्रथमयज्ञे प्रव्रज्यादि"त्यत्र "एष वाव प्रथमोयज्ञो यज्ञानां य एतेनानिष्ट्वे"ति वचनात् प्रथमयज्ञशब्दः प्रथमं प्रयुज्यमानत्वेन ज्योति ष्टोमवचन इति पूर्वपक्षंकृत्वा - प्रथमशब्देना प्रवृत्तपूर्वस्य कर्तुराद्य प्रवर्तनाभिधायिना तादृशप्रयोगविषये क्रतौ लक्षणयावर्तितव्यंस्यात्, अतः प्रथमप्रयोगवचनः, नच यज्ञशब्दे प्रयोगलक्षणादोषाय - चरमश्रुत त्वात्, प्रथमश्रुतस्यतु नलक्षणायुक्तेति सिद्धान्तितत्वात् ।

अन्योऽन्यस्मिन् प्रतिष्ठितइति भेदनिषेधेनात्मनः प्रतिष्ठितत्व निषेधादपिनाद्वितीयपरता, सहोवाचे त्युत्तरपरिसमाप्तिप्रतीत्या अन्योऽन्य स्मिन् प्रतिष्ठितइत्यस्य पूर्वशेषत्वस्या स्वरसत्वेन तस्य भिन्नवाक्यत्वात् । स एवेदं सर्वमिति सार्वात्म्योपदेशादपि नाद्वितीयपरता, तादात्म्योपदेशा सिद्धेः । यदि सार्वात्म्यं सर्वाभेदः ; तदाबाधः, जडा जडयो रभेदासम्भवात् । सर्वमिथ्यात्वं विवक्षितमिति चेन्न;- सार्वात्म्यशब्दस्या खण्डस्यवा तत्राव्युत्पत्तेः। जीवस्यमिथ्यात्वापत्तिश्च । नच जीवांशेऐक्यं अचिदंशेमिथ्यात्वं प्रतिपाद्यं, वैरूप्यप्रसंगात । ननु नवैरूप्यं, वास्तवभेदा भावस्य प्रतिपाद्यत्वात्, सचाचिदंशे तत्स्वरूपस्य मिथ्यात्वात्, जीवेतु ब्रह्मैक्यादितिचेत् ? अनृतजडपरिच्छिन्नभेदस्य वास्तवस्यसत्वेन तदभाव स्यासम्भवात् । नचान्यतर प्रतियोगिकभेदाभावएव समानाधिकरण वाक्यार्थः , अतः प्रपंचे ब्रह्मप्रतियोगिकभेदाभावविषयकमिदं वाक्यमिति वाच्यं; सद्विलक्षणत्वाभावे मिथ्यात्वलक्षणभंगात; ब्रह्मभेदाभावस्य पार मार्थिकत्वासम्भवेन श्रुतेरतत्वा वेदकतापातात । ब्रह्मभेदस्या प्रसिद्ध तया तदभावस्यासम्भवाच्च ।

एतेन सर्वाधिष्ठानत्वमपि दत्तोत्तरं ।

किञ्च इदंसर्वमित्यनेनाप्रतीतंचाधिष्ठानत्वं । नन्विदं रजतमिति वदिदं सर्वमित्यत्रार्था दधिष्ठानत्वसिद्धिरिति चेन्न;- तद्वदेवा योग्यार्थतापातात् ।

किंच कथं द्वयोरधिष्ठानत्वा नुपपत्तिः ? उभयाधिष्ठानक भ्रमादर्शनादिति चेत् ? तन्न यः पिण्डे मणिभ्रमस्यायो वह्न्यु भयाज्ञानोपादानकस्य उभयाधिष्ठानकत्वात, देहात्म भ्रम मुपपा दयता त्वया स्थूलोह मित्यादिभ्रमे आत्मान्तःकरणयो र्द्वयो रपि अधिष्ठानत्वं वाच्यमेव । अतो न कथंचिदपि सार्वात्म्यसिद्धिः । तस्मा न्नाद्वैतपरं प्रकरणं ।

एवं चानिरुद्धादिपरत्वे न कश्चि द्विरोधः । तदुपदेश श्च भेदभ्रमनिवृत्यर्थः । नचोभयो र्व्यापकत्वसम्भवा न्न भ्रमनिवृत्ति

रिति वाच्यं; उभयत्राप्येवकारेण व्यापकान्तरनिषेधात्। नचाकाशा दिषु व्यापकेषु सत्सु व्यापकान्तरनिषेधः कथमिति वाच्यम्; तत्राप्येवकारानुपपत्तेः। अथ स्तावत् विद्यमानं ब्रह्मैवेत्युक्ते न ब्रह्म भिन्नमिति ह्यर्थ स्स्यात, तच्चानुपपन्नं, सद्वैलक्षण्यस्य त्वया वाच्य त्वात्। परमार्थतो ब्रह्मभिन्नं नेति विवक्षायांतु इहापि सम्बन्धविशेष विवक्षास्तु। सच सम्बन्धविशेषः नियन्तृत्वेनावस्थानं।

किंच यदि परमार्थतो ब्रह्मैवेति वाक्यार्थ स्स्यात तदा एवकारेण परमार्थतो ब्रह्मभिन्नं नेत्यर्थो लभ्येत, नच तत्सम्भवति, तस्मात सर्वथा तत्र एवकारानुपपत्तिः।

यच्चाप्रत्यभिज्ञान मुक्तं, तदतितुच्छं, "जीवस्थ" इत्य-धिष्ठातृत्वस्यैव विवक्षणीयतया परिच्छेदाप्रसक्तेः। स्वरूपतो व्यापकत्वे विरोधाभावाच्च।

यच्च स्मार्तक्रमबाधात नानिरुद्धाद्यादेश इति। तन्न, क्रमप्रत्यभिज्ञाभावेपि अर्थप्रत्यभिज्ञाया विरोधाभावात्। "भूमा नारायणाख्यः स्यात" इति स्मृतौ तत्सत्वाच्च।

यच्च स्मृत्या श्रुतिपीडा न युक्तेति। तथैव, श्रुत्यैवतु तात्पर्यं वर्णयामः। स एवाधस्तादित्युपक्रमेणाधिकरणवस्तुप्रतीतेः, एवकारस्य निर्णयाविरोधित्वस्य उक्तत्वात्, तदनुसारेण सर्वगतत्वपरत्वात। त्वन्मते आत्मादेशानुपपत्तिः पौनरुक्त्यात्।

यदुक्तं सार्वात्म्यश्रुते रुन्मत्तप्रलपितताव्यावृत्तये अभेदोपदेशायात्मोपदेश इति। तन्न, तादृशशंकाया स्तत्रापि सुलभत्वेनाभेद बोधनासम्भवात्। कथंचाभेदं कण्ठतो बोधयन्ती श्रुतिःस्वार्थे प्रामाण्य मलभमाना स्वसमानशीलश्रुते रार्थिकार्थ मुपजीव्य प्रामाण्यं लभेत।

ननु सार्वात्म्यश्रुत्या जडवन्मिथ्यात्वप्रतीतिव्यावृत्तये अभेदोपदेशः कार्य इति चेन्न;- "श्रुतं ह्येवमेव भगवद्दृशेभ्य स्तरति शोकमात्मविदि"ति

वाक्यपर्यालोचनया श्रोतुर्नारदस्यात्मनित्यसत्यत्व बुद्धेःस्फुटतरं प्रतीतेः । नहि शोकतरितु मिथ्यात्वंकस्यापि शंकाविषयः । आत्मनित्यत्वप्रतीति बलादेव च त्वयोन्मत्त प्रलपितत्व मुक्तं । तथाचकुतो मिथ्यात्वशंकाव· काशः । किंचैव मात्मादेशएवास्तु, किमहंकारोपदेशेन? नचाहंपदार्थात्मनोर्भेदेन प्रतिपादनार्थमितियुक्तं. तत्प्रतिपादकपदाभावात् । नचोभयोपदेशादेव उभयोर्भेदसिद्धिः , अहं पदादपि स्वरूपमात्रोपस्थिते स्त्वया वाच्यत्वात् । नचाहम्पदं शबले व्युत्पन्नं, तथा च घटोनित्यइत्यत्रा नित्यत्वस्य घटांशइवात्मस्वरूपे सार्वात्म्याद्यन्वय इति वाच्यं, चैतन्याहंकारोभय विशेष्यकत्वे उभयत्र सर्वगतत्वाद्यन्वय प्रसंगात् । अहंकारप्रवृत्तिनिमित्तकत्वे परस्पराद्ध्यासाभावप्रसंगः , अहं शब्दसमानविषयत्वा दहम्प्रतीतेः । ननु लोकेसमवहिते व्युत्पत्तावपि नायं नारदस्य प्रवृत्तिनिमित्ततया व्युत्पन्नः, अहमेवाधस्ता दित्यादिष्वपि तादृशएवाहंशब्दः, यद्वा शक्तिसंकोचेन भागत्यागलक्षणयावा स्वरूपमात्र परः; नचैवमप्यहंकारोपदेशासिद्धिरिति वाच्यम् , प्रकारतया मुख्यार्थतया वा तत्प्रतीते स्सत्वात्; भेदसिद्धिश्च प्रवृत्तिनिमित्तादिज्ञानदशाया मस्त्येवेति चेत? एव मप्युपदेशभेदात् भेदासिद्धेः । किंच एव महंकारात् भिन्नत्वेन ज्ञातत्वात् आत्मसार्वात्म्योपदेशे कोविरोधः । नचोपाधिकृत परिच्छेदव्यावृत्त्या वास्तवसार्वात्म्यपराहंकारादेशश्रुति र्दहराकाशमहत्वश्रुतिवदिति वाच्यं, औपाधिकपरिच्छेदप्रतीते स्सार्वात्म्यप्रतिबन्धकत्वात्, अन्यथा न कदाचिदप्युपदेशसम्भवः । नहि कदाचिदप्यौपाधिकपरिच्छेदो नास्तीति ज्ञातुं शक्यं । दहराकाशेतु स्वाभाविकपरिच्छेदभ्रमव्यावृत्त्यर्थमेवा परिच्छेदोपदेशः । नन्वत्रापि तथैवास्त्विति चेत? आत्मनएवाहमर्थत्वेपि तस्यापरिच्छेदोपदेशसम्भवेन एतदुपदेशेनाहंकारस्या हमर्थत्वसाधनासम्भवात् । कश्चात्रोपादिश्यमानोपरिच्छेदः? नतावद्देशापरिच्छेदः, तस्यात्म सार्वात्म्यानुपपादकत्वात् । नह्यसर्वगतत्वे वस्त्वन्तरमिथ्यात्वरूपसार्वात्म्याविरोधः । नच बाह्यार्था

धिष्ठानत्वसिद्धये सर्वगतत्वमपेक्षितमिति वाच्यं, अन्तःकरणावच्छिन्ने स्वाप्नार्थाध्यास वदुपपत्तेः । नापि वस्त्वपरिच्छेदः, उपपाद्यस्या प्यात्म्यसार्वात्म्यस्य वस्त्वपरिच्छेदरूपतया उपपाद्योपपादक भेदासिद्धेः। एतावता भूमसार्वात्म्योपदेश निर्वाहे आत्मोपदेशवैयर्थ्याच्च ।

तस्मादयमत्र श्रुत्यर्थो बोद्धव्यः । जिज्ञास्य सुखस्य लक्षणमाह (योवैभूमेति) विपुलसुखं जिज्ञास्य सुखमित्यर्थः । स्वरूपोत्कर्षात्म कस्य वैपुल्यस्य स्वर्गसुखादि साधारण्यात् पृच्छति ( भूमानमिति ) ( यत्रनान्यदिति ) यत्रेति विषयसप्तमी, यतोभूमान्तरं- विपुलान्तरं नपश्यति सभूमेत्यर्थः । वैषयिकसुखंनिन्दति ( यत्रान्यदिति ) यतो विपुलंपश्यति तदल्पम् । नन्वाल्पेषु चतुर्मुखानन्दपर्यन्तेषु मध्ये किंचि त्सुखमस्ति । " तज्ज्ञानमज्ञानमतोन्यदुक्त " मितिवन्निन्दार्थवादः । यद्वा यस्मिन् दृष्टेन्यद्वैषयिक सुखं नपश्यति यस्मिन् श्रुतेमतेचान्य न्नशृणोति नमनुते, अनादरात्, सभूमा । यद्वा यस्मिन् निखिलविभूति गुणविशिष्टेज्ञाते किमपि ततोन्यत्वेन नपश्यति, सर्वस्य तदन्तर्गत त्वात्, सभूमा; यस्मिन् ज्ञातेन्यत किंचिज्जानाति, अन्यस्मिन् कृत्स्नस्या पृथक्सिद्धप्रकारत्वाभावेन विशिष्टरूपत्वासिद्ध्या तदन्तर्गतत्वाभावात्, तदल्पम् । यत्रेत्युक्ते कथं विभूतिगुणविशिष्टप्रतीतिः? वैपुल्यव्यु- त्पन्नेन भूमशब्देनेति ब्रूमः । लक्ष्याविरोधेनैव हि लक्षणंवाच्यं, ततश्च यत्स्वरूपगुणविभूतिभि र्वैपुल्यंप्रतीयते तदविरोधेनैव निषेधघटित लक्षणस्यार्थोवाच्यः, ब्रह्मस्वरूपापेक्षयान्य निषेधे भूमशब्द स्वारस्य भंगात्, श्रुत्यन्तरविरोधाच्च, उक्तएवार्थोवसीयते । यद्वा यस्मिन् विपुलसुखेदृष्टेन्यत् तद्विरुद्धभूतं दुःखं नपश्यति सभूमेत्यर्थः । राज महिमाधीनस्थितित्वस्य प्रजासुदर्शनात् पृच्छति (सभगवइति) स्वेच्छा धीनस्थिति रित्याह ( स्वेमहिम्नीति ) ( यदिवेत्यादि ) लोकेहिगवा- श्वादिकं महिमेत्याचक्षते, तदनुसारेतु महिम्निप्रतिष्ठितत्वं नब्रवीमि

त्यर्थः किंचिद्धिवस्तु कुत्रचिद्वर्तमानं दृश्यते, अतः कुत्रायंवर्तते इत्यभिप्रायेणपृच्छति (अन्योह्यन्यस्मिन् प्रतिष्ठितइति) उत्तरस्य तथा चेत्येतदन्तत्वस्य स्वरसतःप्रतीतेः प्रश्नएवायंयुक्तः ! सर्वत्रेत्युत्तरमाह (सएवेति) यद्वा अन्य इत्यादिः चशब्दाद्धयाहारेण प्रतिवचनशेष स्सन् स्वेमहिम्नीत्येतदुपपादकः, भूमातिरिक्तोहि स्वातिरिक्ताधीन स्थितिः, नतुभूमापीत्यर्थः । ननु अन्योह्यन्यस्मिन्निति समभिव्याहृत पदोपस्थित प्रतियोगिकान्यत्वस्यैव शीघ्रंप्रतीते रन्योन्याभावनिषेधएव स्वरसतः प्रतीयतइति चेन्न ;- भूम्नः पूर्वप्रकृततया ततएव प्रतियोग्या कांक्षाया श्शान्तत्वेन पश्चाच्छ्रुततया विलम्बितप्रतीतिकोत्तर पदार्था कांक्षाया अभावात् । भूम्नोगुणान्तरमाह (सएवेति) वक्ष्यमाणाहं ग्रहणोपयोगितया सार्वात्म्यमुपक्षिपति (सएवेदमिति) अहंग्रहोपासन मुपदिशति (अथातइति) तादात्म्योपदेशस्य स्वरूपैक्य निबन्धन- त्वभ्रमं वारयितुमाह (अथातइति) आत्मशब्देनान्तः प्रविश्यानियम- नेनधारकत्वरूपं सामानाधिकरण्यनिबन्धनं शरीरत्वं विवक्षितम् । अधस्ताद्धियमानैस्सर्वैः पदार्थैरेवंसम्बन्धिनो न्यस्याभावात् प्रथममेव कारः । एवमन्योप्येवकारः ।

यदुक्तं अहमितिकृतिः करणं यस्मिन्निति व्युत्पत्त्याहंकारशब्दोह- मर्थवाचकइति । तन्न, बहुव्रीहेरत्रासम्भवात् । अयं ह्यहंशब्दोनुक- रणत्वात् "अनुकरणंचानितिपर" मिति गतिसंज्ञकः, अतोगति कारकोपपदानां कृद्भिस्सहसमासवचनं प्राक्सुब्युत्पत्ते' रिति प्रागेव सुबुत्पत्तेरुत्तरपदेन तत्पुरुषः, बहुव्रीहिस्तु सुबुत्पत्त्यपेक्षाविलम्बितः !

यदप्याह - तैत्तिरीयके "ब्रह्मविदाप्नोति पर" मिति उपक्रम्य "योवेदनिहितंगुहाया" मिति तस्य बुद्ध्यनुप्रवेशेनाहम्प्रत्यये प्रका- शमानत्वं प्रत्यक्त्वमुक्त्वा, तस्य देहादिसाधारण्यात् तद्व्यावृत्त्यर्थं प्रत्य गात्मानं स्थूलसूक्ष्मसूक्ष्मतर सूक्ष्मतमोपाधिविवेकेन पंचकोशानवतार्य

दर्शयन्ती श्रुतिः " विज्ञानंयज्ञंतनुते कर्माणितनुतेऽपि चे " ति श्लोकेन विज्ञानमयस्याहंबुद्धिविषयस्याहंकारस्य निखिलकर्म कर्तृत्वमुक्त्वा, तस्याविद्योपाधिम द्रूपान्तराभिप्रायेणाह " अन्योन्तर आत्मानन्दमय " इति । अतोनकर्त्ता हमनुभवगोचर एव जीवः । नन्वानन्दमयो न जीवः, किन्तु ब्रह्मैव, अन्नमयादेरिवा नन्दमयादन्यस्या निर्देशात्, आनन्दमयस्यैव प्रकरणित्वात्, इति चेत्? नहीदं प्रकरणमानन्दमये पर्यवसितं, उपक्रमोपसंहारे ष्वानन्दमयाप्रतीतेः । नच " रसंह्येवायं लब्ध्वानन्दीभवति, यदेष आकाश आनन्दोनस्यात् " इति " अन्यो-न्तर आत्मानन्दमय " इत्युपक्रान्तस्य परामर्शोस्त्विति वाच्यं; आनन्दप्रकृत्यर्थस्यैवाभ्यासात्, लक्षणायाश्चा न्याय्यत्वात् । ममतु निर्विशेषलक्षणायामपि भागत्यागलक्षणास्वीकारेण रेवती वाक्यगत प्रकृतधर्मिवाच्ये तच्छब्दस्य धर्ममात्रपरत्वइव श्रुतित्वा हानेः । उप क्रमेप्यानन्दमयशब्दस्या न्नमयादिविकारप्रायपाठेन विकारार्थस्य ब्रह्म-णि वर्तितु मनर्हत्वात् । आनन्दैकरसे ब्रह्मणि तत्प्राचुर्यवाचिनोमयटः प्रयोगानुपपत्तेः । प्रकृत्यर्थविरोधिनो लेशतोनुवृत्तावेव प्राचुर्यवाच्य-मयटः प्रयोगात् । यथा ब्राह्मणमयोग्राम इति । नचाल्पत्व निवृत्ति लक्षणयानन्दमयशब्दः, परमात्मनि भूमशब्दवदिति वाच्यं; मानुषा-नन्दादे रुत्तरोत्तरशतगुणाधिक्य प्रतिपादनेनैव ब्रह्मानन्दे तत्सिद्धेः । जीवमुख्यार्थसम्भवे लक्षणायोगाच्च । ननु जीवोपि दुःखप्रचुरोनादि श्चेतिनानन्दमयइति चेन्न ;- अविद्यायामानन्दात्मक ब्रह्मप्रतिबिम्बस्य जीवस्य ब्रह्माधीनाग्रिमक्षण सत्ताकतया तद्विकारत्वात । किंचान-न्दमयस्य ब्रह्मत्वे " ब्रह्मपुच्छंप्रतिष्ठे " ति निर्दिष्टं ब्रह्मपुच्छत्वं तस्या नुपपन्नं, नह्येकमेवपुच्छं पुच्छवच्चभवति । तस्मात्प्रतिष्ठापदसन्नि-धानात्पुच्छपदे नाधारलक्षणया सर्वाधारं ब्रह्मैववाक्यार्थः । तथा च सर्वाधारभूतं ब्रह्मास्यानन्दमयस्य, प्रतिष्ठा पर्यवसितं रूपमिति ब्रह्मै-वोच्यते । तदेवब्रह्मप्रकरणि, " ब्रह्मविदाप्नोति पर " मिति उपक्रमे

" असन्नेवे " त्यादौच तस्यैव परामर्शात् । अत आनन्दमयः कर्तुरह मनुभवगोचरादन्यो जीवएव । तस्मात् " सत्यंज्ञानमनन्त " मिति मंत्रे प्रतिज्ञातमानन्त्यं " तस्मा द्वा एतस्मादात्मन आकाशस्संभूत " इत्यादिना " अन्नात्पुरुष " इत्यन्ते नारम्भणाधिकरणन्यायेन समर्थ्य, गुहाप्रवेशेनप्रतिज्ञातं सर्वान्तरात्मत्वं प्रतिपादयितुं शरीरप्राणादिभ्यो बाह्यान्तरभावेन स्थितेभ्योप्यान्तरतां शाखाचन्द्र न्यायेनान्नमयादीन् कोशान् " स एष " इत्यादिनोपन्यस्य प्रदर्शयतीति । तथा योयं विज्ञानमयः प्राणेषुहृद्यन्तर्ज्योतिःपुरुष " इत्यत्र " हृद्यन्तर्ज्योति " रिति अन्तः करणाख्या हंकारातिरिक्तं ज्योतिरात्मकं जीवस्वरूपं दर्शयति । सूत्रकारोप्यह मनुभवविषयातिरिक्तं जीवस्यब्रह्माख्यरूपं न षष्ठप्रपाठके प्रतिपाद्यं, " स वायं पुरुषोजायमान " इत्यादिना जन्मजरामरणावस्थात्रयवतः अह मनुभवगोचरस्यैवोपन्यासा दित्याशंक्य, सुषुप्त्युत्क्रान्तिकालयोः "प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यं किंचनवेद " " प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याती " त्यादिना संसारिणः प्राज्ञशब्दनिर्दिष्ट ब्रह्माख्यस्वरूपान्तरनिर्देशात्, " योयंविज्ञानमय " इत्याद्यसंगोदासीन जीवस्वरूपपरमित्याह " सुषुप्त्युत्क्रान्त्यो र्भेदेने " ति । एवं " तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती " त्यभोक्तारं जीवं दर्शयति । नन्वयंमन्त्रः परमात्मनएवा नशनं दर्शयति, जीवस्य तु " पिप्पलंस्वाद्वत्ती " ति भोक्तृत्वमेव दर्शयतीति चेन्न ; - एवं सति " ब्रह्मवेद ब्रह्मैव भवती " ति वाक्यशेषावगतस्य विदुषोब्रह्मभावस्य- उपक्रमगतस्य एकविज्ञानात्सर्वविज्ञान प्रतिज्ञानस्य च बाध प्रसंगात् । भोग्यभोक्त्रोरभेदायोगात् । किं विषयातर्हि " स्वाद्वत्ती " ति श्रुतिरितिचेत् ? साहि ब्रह्मस्वरूपस्य सतोजीवस्य बुद्ध्युपाधिकृतं भोक्तृत्व मनुभवसिद्धमनुवदन्ती स्वरूपेण तस्यैवाभोक्तृत्वं दर्शयति । अत एवायं मन्त्रः पैंगिरहस्य ब्राह्मणएवमेव व्याख्यातः । " तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्व मनश्नन्नन्यो अभिचाकशीतीतिज्ञः तावेतौ

सत्वक्षेत्रज्ञौ " इति । तत्रापि सत्वशब्दोजीवं क्षेत्रज्ञशब्दः परमात्मान मभिदधातीति चेत ? " तदेतत्सत्वं येन स्वप्नं पश्यति अथ योयं शारीर उपद्रष्टा स क्षेत्रज्ञ " इति सत्वक्षेत्रज्ञपदयो रन्तःकरणशरीर परतया व्याख्यातत्वात । नन्वत्रापि स्वप्नद्रष्टृत्व तदुपद्रष्टृत्वाभ्यां जीवेशावेवोक्ताविति चेन्न;- येनेति करणतृतीयान्तयच्छब्दोक्तस्य तदेतदिति परामर्शात्, जीवस्यैव स्वप्नोपद्रष्टृत्वात्; शारीरात्मा प्राज्ञेनात्मनेत्यादौ जीवे प्रसिद्धेन शारीरशब्देन तस्यैवाभिधेयत्वा च्चेति ।

अत्रोच्यते -

आनन्दमयस्य ब्रह्मत्वेन विज्ञानमयातिरेकेण जीवस्याप्रति पादना न्नान्तःकरण मदमर्थः । तथाहि - अन्नमयादिपर्यायेषु पक्षा द्यवयववतः प्राधान्यस्यावयवाना मप्राधान्यस्य च प्रतीते रानन्दमय पर्याये प्यानन्दमयस्य प्रधानप्रतिपाद्यत्वं स्वरसतः प्रतीयमानं पुच्छब्रह्मणः प्राधान्येन प्रतिपाद्यत्वं प्रतिक्षिपति । अतः पुच्छ ब्रह्मणः प्राधान्येन प्रतिपाद्यत्वेवान्तरप्रकरणविरोधः । किंच " ब्रह्म विदाप्नोति परमि " त्युपक्रान्तस्य " सत्यं ज्ञान " मिति लक्षित ब्रह्मणः " आत्मन आकाश स्संभूत " इति कारणत्व मभिधाय, तमेवात्मानं जीववैलक्षण्येन सुखेन बोधयितुं प्राणमयाद्यन्तरात्मपर म्परा मुपदिश्य, आनन्दमयात् " अन्योन्तर आत्मे " त्यनुपदेशा दन्तरा त्मपरम्परामुखेन प्रतिपिपादयिषितं ब्रह्माऽऽनन्दमय इति स्वरसतः प्रतीयते । अतः पुच्छब्रह्मणः प्रधानप्रतिपाद्यत्वे महाप्रकरणविरोधः । नचैवं भूमविद्याया मप्यात्मोपदेशस्य प्राणपर्यन्तत्वप्रसंगः, वागादि ष्विव " अस्ति भगवः प्राणा द्भूय " इति प्रश्नस्य " अदोवावप्राणा द्भूय " इति प्रतिवचनस्य चाभावादिति वाच्यं; " एष तु वा अति वदति य स्सत्येनातिवदती " ति तुशब्देन प्राणातिवादिनोपि सत्यादि वादिनः प्रकर्षावगमात्; अतिक्रान्तस्वोपास्यवस्तुवादित्वं ह्यति वादित्वं । वागादिष्वनुक्तस्यातिवादित्वस्य प्राणे प्रतिपादनादात्मोपदेशस्य

त्वपर्यन्तत्वं मन्वान शिष्यो भूयो न पप्रच्छ । आचार्यस्तु प्राण मपि सातिशयं मन्वन् 'एष तु वा अतिवदती' त्युपादिदेश । नचेह तादृशोपदेशोस्ति । सर्वपर्यायसाधारणोपसर्जन पुच्छोपदेश एवान्तरात्मान्तरोपदेश इति तु श्रोतु मपत्रपामहे । नच पुच्छ पुच्छवतो [र्भे] रभेदायोगः, त्वन्मतेपि जीवब्रह्मणो रत्यन्तभेदाभावात् । कथंचि द्भेदस्तु ममापि तुल्यः । आनन्दप्रचुरं विशिष्टं प्रति धर्मि स्वरूपस्य ब्रह्मत्वविशिष्टस्य वा पुच्छत्वसम्भवात् ।

एतेन सर्वपर्यायसाधारणत्वेन पूर्वतनानन्दमयोपदेशशेषत्वात् "तस्यैष एव शारीर आत्मे" त्यस्यात्मान्तरोपदेशत्वं निरस्तम् ।

ननु षष्ठ्याभेदप्रतीते रन्तरात्मान्तरोपदेशत्वं वाच्यमिति चेन्न;- शिरः पक्षादिमत्तया शरीरत्वेन प्रतिपादितस्य शरीराधिष्ठात्राकांक्षायां "तस्मा द्वा एतस्मा दात्मन" इत्यत्र तस्मा द्वा एतस्मा दित्येतावता प्रकृ तब्रह्मपरामर्शेसिद्धे आत्मशब्दस्य सम्बन्धिशब्दत्वेन समभिव्याहृताकाश प्रभृत्यन्नमयपर्यन्ताधि ष्ठातृत्वलाभार्थतया अन्नमयेप्रकृतस्य ब्रह्मणएवाधि- ष्ठात्रात्मतया सिद्धत्वात् स एव "यः पूर्वस्ये" त्यनूद्य प्राणमयादि शरीरेषु अधिष्ठात्रात्मत्वेन विधीयते, स एवाधिष्ठात्रधिष्ठेयभाव ष्षष्ठ्यर्थः । शारीर इत्यत्राधिष्ठातयैव शैषिकोण् । सच सम्बन्धः अभेदेपि । तदधिष्ठातृत्वं हि स्वेच्छाधीन तत्प्रवृत्तिकत्वं, अत आनन्दमयेन शारीरोपदेशेनभेदसिद्धिः ।

किंच आनन्दमयपर्यायशेषभूतस्य श्लोकस्य ब्रह्मपरत्वात् तद् व्यानन्दमयस्य ब्रह्मत्वं साधयति, श्लोकानां तत्तत्पर्यायस्थावयवि तात्पर्यकत्वदर्शनात् ।

ननु मनोमयपर्यायस्थश्लोके मनोमयाविषयत्वं न दृष्टमिति चेत्? "यतो वाच" इत्यादिश्लोको हि मनसा अपरिच्छिन्नब्रह्मानन्दद्दष्टे र्भयनिवृत्तिलक्षणफलं प्रतिपादयति, "येन्नं ब्रह्मोपासते" "य

प्राणं ब्रह्मोपासते " "विज्ञानं ब्रह्म चेद्वेदे" ति माथपाठात् । नच पुच्छवाक्यश्लोकयो ब्रह्मश्रुत्या पुच्छपरत्वं, "तदप्येष" इति प्रधान प्रकृत मानन्दमयं परामृश्य तद्विषयश्लोकत्वप्रतिपादनात् ।

किंच प्रकरणस्य स्वस्मादनतिरिक्तैः स्वावयवै शिरःपक्षादिभिर्नि रूपणपरत्वा ग्रानन्दमयानतिरिक्तं ब्रह्म। अस्मिन् ह्यानन्दमयप्रकरणे आनं दमयशब्दार्थानतिरिक्तैरेव प्रियादिभिःशिरःप्रभृतिरूपणात्, पुच्छेपि तथैव युक्तत्वात्, 'सोकामयते' त्यनन्तरकारणत्व प्रतिपादकवाक्येन पुंलिंगान्ते नानन्दमयस्यैव परामर्शनीयत्वात्। नच पुच्छब्रह्मणोपि पुंलिगान्तशब्देन निर्देशः "तस्माद्वा एतस्मादात्मन" इत्यत्रास्तीति तदपेक्षएव 'स' इति निर्देशोस्त्विति वाच्यं, तस्य व्यवहितत्वात् । "तस्यैपएवात्मे" त्य व्यवहित पुंलिंगनिर्देशोप्यस्तीति चेत ? य एव प्राणमयादिः एष एव पूर्वस्य तस्यान्नमयादे श्शारीरआत्मेति हि त्वदभिमतयोजना, अ- नयारीत्या पूर्वपूर्व प्रत्यन्तरात्मतयोपदिष्टस्य शारीरत्वोपदेशो विज्ञान मयपर्यन्तं दृष्टः, अत आनन्दमयस्यापि विज्ञानमयंप्रति शारीरत्वोपदेश एवायं वाच्यइति नानन्दमयादन्यस्यात्रात्मेति निर्देशः । "तस्यान्न मयादेरेष प्राणमयादिरेव शारीरआत्मा, यः स्वस्मात पूर्वस्यान्नमयादेः पाश्चात्य" इति योजनायामपि उक्तन्यायेनानन्दमयस्यैव 'तस्यैष आत्मे" ति निर्देशः ।

अथस्यात- यः पूर्वस्यान्नमयस्य शारीरआत्मा तस्य प्राणमयस्य एष वक्ष्यमाणोमनोमय एव शारीरआत्मेत्यर्थः । "यः पूर्वस्ये" ति साकांक्षतया पूर्ववाक्यगतस्य "शारीर आत्मे" त्यस्य स्वस्सतानु- षंगात । एव मुत्तरत्रापि । एवंच यः पूर्वस्य विज्ञानमयस्यात्मोऽन्द मयः तस्यैष पुच्छत्वेनोक्तं ब्रह्मैव शारीरआत्मेत्यनेन प्रतिपाद्यते । एवंच पूर्वपक्षद्वयव त्यव्यवहितान्यथा ध्याहारदोषोपि । एवंचात्म शब्देन पुच्छब्रह्मनिर्देशात् स इति परामर्शोपपत्तिरिति । तन्न, अन्न मयंप्रति प्राणमयस्य शरीरत्वामसिद्ध्या तदनुवादासम्भवात् । "अ-

न्योन्तर आत्माप्राणमय " इत्यनेन प्रसिद्धं तदितिचेत्? तर्हि " त-स्यैष एवे " त्यादिवाक्यं व्यर्थंस्यात् । किंच आनन्दो ब्रह्मेत्यानन्द शब्दस्य ब्रह्मपरत्वावगमात् " आनन्दोब्रह्मेति व्यजानात् " " आनन्द मयमात्मान मुपसंक्रम्ये " ति आनन्दानन्दमयशब्दयो रेकार्थत्वेनानन्द मयशब्दस्य ब्रह्मपरत्वम् । एवं श्रुतिस्वारस्यसिद्धं आनन्दमयस्य ब्रह्मत्वं सूत्रकारोप्याह " आनन्दमयोभ्यासा " दिति ।

यदुक्तं उपक्रमोपसंहारयो रानन्दमयामतीतेर्नेदं प्रकरणमानन्द मयएव पर्यवसितमिति । तन्न, असिद्धेः । उपक्रमोपसंहारयोः प्रतिपन्न ब्रह्मणएवानन्दमयत्वात् । नचानन्दमयशब्देन कीर्तनमुपक्रमोपसंहा-रयोर्नास्तीत्यतत्परत्वं, तथा सति " आत्मन आकाश " इत्युक्तात्मनोपि ब्रह्मान्यत्व प्रसंगात् । आत्मशब्दोपक्रमोपसंहाराया भूमाविद्याया भूम तात्पर्यकत्वाभावप्रसंगात् । यदि च " तस्मा द्वा एतस्मा " दिति ब्रह्मा भेदप्रतीतः शुक्तिर्भातिवादित्व सार्वात्म्योक्त्याभूमपरता, तदा इहा प्यन्योन्तर आत्मेत्यात्मान्तरोपदेशाभावादानन्दमयपरत्व मवसीयताम् ।

यच्चोक्तं विकारार्थस्य मयटो नुपपत्तिरिति । तदेतत्प्रजल्पतो जिह्वां सूत्रकारएव लुनाति " विकारशब्दान्नेति चेन्न प्राचुर्यादि " ति । नच विकारप्रायपाठान्मयटो विकारार्थत्वम् । विज्ञानमयेमयटः स्वार्थिकत्वात् । त्वयैवाहं बुद्धिविषयस्य विज्ञानस्यैव विज्ञानमयत्वाभिधानात् । जीवेपि विकारत्वस्यासम्भवाच्च, तस्यानादित्वात् । नच प्रतिबिम्बात्मकस्य बिम्बब्रह्माधीनाग्रिमक्षणसत्ताकतया तद्विकारत्वमितिवाच्यं, एतावता विकारत्वासिद्धेः । लक्षणायान्तु प्रायपाठभंगएव । त्वदुक्तंतादधीन्यं च ब्रह्मण्यपि सम्भवति, अनादेर्ब्रह्मणोपि उत्तरक्षणसत्तायाः पूर्वक्षण सत्ताधीनत्वात् । नचानन्दस्वरूपत्वा त्तत्प्राचुर्यासम्भवः, " आनन्दं ब्रह्मणोविद्वान् " इति व्यतिरेकनिर्देशेन जीवस्यज्योतिषः प्रभारूपज्यो तिराश्रयत्ववदानन्दरूपस्यापि ब्रह्मण आनन्दाश्रयत्वात् । नच ले-

शतो दुःखान्वयापत्तिः, मयटः प्रकृत्यर्थातिशयमात्रवाचित्वात् । स्वचा तिशयः क्वचित्समानाधिकरण सजातीयापेक्षया, यथा ब्राह्मणमयोग्रा मइति । क्वचिदाश्रयान्तरगत सजातीयापेक्षया, यथा तेजः प्रचुरो· गभस्तिमानिति । इह च दुःखसम्बन्धस्य ब्रह्मणिबाधितत्वात् जीवगत सुखमेवप्रतियोगि । अत एव मयडभिप्रेतः जीवानन्दापेक्षयोत्कर्षो· नन्तरमेवानन्दवल्ल्यां व्याख्यायते । हेत्वन्तरमप्याह सूत्रकारः "त द्धेतु व्यपदेशाच्चे" ति । "कोह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दोनस्यात्, एषह्येवानन्दयाती" ति प्रकृतमानन्दमयं पुंलिंगेनेत च्छब्देन परामृश्य जीवाना मानन्दहेतुरयं व्यपदिश्यते । अत एवा नन्दयितव्या जीवादन्य एवानन्दमयः परमात्मेति विज्ञायते । एवं श्रुतिन्यायै रानन्दमयस्य ब्रह्मत्वे प्रतिष्ठाप्यमाने आनन्दमयाधिकरणं दूषयतां शंकरादीनां ब्रह्मविद्रोहादन्य त्किमपि प्रयोजनं नवीक्षामहे ।

यदाह वाचस्पतिः– "प्रायपाठपरित्यागो मुख्यत्रितयलंघनम् । पूर्वस्मिन्नुत्तरेपक्षे प्रायपाठस्यबाधनं ॥"; मयड्विकारप्राचुर्ययो मुख्यो ब्रह्मशब्दश्च परब्रह्मणि । अभ्यस्यमानानन्दशब्दश्च प्रकृत्यर्थएव मुख्यो नमयडर्थे । पूर्वपक्षे एत त्त्रितयलंघनम् ; ब्रह्मणोविकारत्वाभावात्, प्रा· चुर्येच दुःखान्वयप्रसंगात्, अल्पत्वनिवृत्तिरानन्दमयपदेन लक्षणीया । अवयवपरपुच्छपद समानाधिकरण ब्रह्मपदमप्यवयवपरतया व्याख्येयम् । "यदेष आकाशआनन्दोनस्या" दित्यभ्यस्यमानानन्दपदेनच मय डर्थोलक्षणीय इति ॥ तत्र मयडुपपत्तिरुक्तैव । पुच्छत्वेन ब्रह्मणो रूपणे ब्रह्मशब्दस्य कुतोलक्षणा । आनन्दपद मप्यानन्दमयस्य स्व· रूपतोप्यानन्दत्वं मुख्यतएववर्ततइति । अहो नु खलु भ्रान्तेरपर्य- नुयोज्यता, यल्लेशतोप्यहमर्थ भेदगमकत्वाप्रतीतावपि तदर्थं "योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति" रिति श्रुति मुदाहरन्ति । जीवस्य हृदया द्भेदासिद्ध्यर्थन्तु तदुदाहरणं निष्प्रयोजनं, तत्र कस्यापि वि·

प्रतिपत्त्यभावात् । " सुषुप्त्युत्क्रान्त्योर्भेदेने " त्यत्रापि कर्तृजीववैलक्षण्य न्नप्रतिपाद्यते । जीवविलक्षण परमात्मपरत्वमेव षष्ठमपाठकस्योच्यते । " प्राज्ञेनात्मने " त्यत्रात्मशब्दो न स्वपर्यायः । ' द्वा सुपर्णे ' ति श्रुतिरपि जीवस्य भोक्तृभेदप्रमाणं, आत्म परमात्मपरत्वात् । नच तयोर्भेदे " ब्रह्मवेद ब्रह्मैवभवती " ति श्रुतिविरोधः, नह्य भेदोवेदन साध्यइत्यनुन्मत्तोब्रवीति । भेदपक्षेतु एव कार इवार्थः, " इववद्वेवमेववे " ति निघण्टुपाठात् । अतो " निरंजनः परमं साम्य मुपैती " ति श्रुतिसमानार्थतया सम्यगेवश्लिष्यते । नन्वेक विज्ञानेन सर्वविज्ञान प्रतिज्ञा ऽसम्भवः, सर्वप्रकारके ब्रह्मणिज्ञातएव सर्वज्ञानसम्भवात् । पिप्पलादनंच नान्तःकरणस्य, तस्यैव संसारप्रसंगात् । किन्तु तद वच्छिन्नस्या त्मन एव । जीवस्य भोक्तृत्व मनुभवसिद्ध मिति हि त्वया भिहितम् । ततश्च ततोन्यत्वेन प्रतिपाद्यमानं ब्रह्मैवस्यान्नतु जीवः । पैंगिरहस्येसत्वशब्दो जीवपर एव, " सत्वमस्त्रीतु जन्तुष्वि " त्यमराभिधानात् । जन्तुश्च चेतनः, ' प्राणीतु चेतनोजन्मी ' त्यादि पाठात् । क्षेत्रज्ञोपीश्वरएव, " योस्यात्मनः कारयितातं क्षेत्रज्ञं प्रचक्षत " इति मानववचनात् । शारीरोपीश्वर एव, जगच्छरीरकतया तस्यैव श्रुतिसिद्धत्वात् । अत एव ब्रह्ममीमांसाया श्शारीरकत्व प्रसिद्धिरपि । उपद्रष्टृत्वमपीश्वरस्यैव, जीवस्यद्रष्टृमात्रत्वात्, तद ध्यक्षत्वरूपस्य उपद्रष्टृत्वस्य ब्रह्मण्येवसम्भवात् ।

यच्च उक्तं " येनेति तृतीयानोपपद्यत " इति । तत्र किं " तयोरन्यः पिप्पलं स्वाद्वत्तिसत्व " मित्युक्तत्वात् सत्वान्तरमेव " तदेतत्सत्वं येने " त्यत्रोपदिश्यते ? उत तदेव ? नाद्यः, " द्वा सुपर्णा " इत्यत्र जीवपरमात्मोपदेश विरोधात् । अस्तु तर्हि द्वितीयः पक्ष इति चेत् ? सम्यगभ्यस्त स्त्वया वृषळोद्वाहमन्त्रः, येन पिप्पलात्तैव स्वप्नदर्शनरूपे भोगे करणत्वात न कर्त्तेति ब्रूषे । मनसश्च प्रमातृत्वेन करणत्वस्य त्वया नंगीकारात् ।

यदुच्यते- अहमर्थोनात्मा, सुषुप्तिमोक्षयो रननुवर्तमानत्वात् । मोक्षे च तदनुवृत्तावज्ञत्वादिप्रसंगाच्च । अतश्चैतन्यमात्रमात्मा । तत्रानिदमि चैतन्ये निरुपाधिरहम्भ्रमः । कर्तृत्वादिस्तुसोपाधिः, सर्पलौहित्यव त्क्रमादिति । अत्रब्रूमः – सुषुप्तौ तावदहमर्थाननुवृत्तौ पुनः प्रतिसन्धानानुपपत्ति प्रसंगः । नह्यहमर्थान्तरेणानुभूतमर्थमहमर्थान्तरं स्मर्तुमलं, अति प्रसंगात् । सुषुप्तावपि तदनुवृत्तौ तदानीमपि तत्प्रकाशप्रसंग इतिचेन्न;- विद्यमानस्य प्रकाशनियमानभ्युपगमात् । तदानीमप्रकाशेपि तदनुवृत्तौ किं प्रमाणमिति चेन्न; - पूर्वोत्तरवर्त्यहमर्थ प्रतिसन्धानबलादेव मध्येपि तत्कल्पनात् । पूर्वोत्तरकालावच्छिन्न मध्यकालकल्पनेना स्वाप्सामितीदानींतन कालानुसन्धानव दिदानी मतीतकालावच्छिन्नाहमर्थस्यापि प्रकाशोपपत्तेः ।

---

( अननु वर्त्तमानत्वादिति ) आत्मातु नित्यइतिभावः ( मोक्षेचेति ) संसारदशाया महमर्थस्या ज्ञानव्याप्तेरितिभावः । सुषुप्ता वनुवर्त्त मानत्वे तत्प्रकाश प्रसंगइत्यपि विवक्षितम् । (कर्तृत्वादिरिति) कर्तृत्वादि भ्रमोन्तःकरणोपाधिक इत्यर्थः (सुषुप्ताविति) तथाच हेत्वसिद्धिरितिभावः ( अतिप्रसंगादिति ) देवदत्तानुभूतस्य यज्ञदत्तेन स्मरणप्रसंगादिति भावः ( विद्यमानस्येति ) यद्यपि सदाप्रकाश इष्टः, तथाप्य भ्युपेत्येदम् । ( तदानीमित्यादि ) “ सुषुप्तौ तावदि ” त्यादे स्तर्कोपन्यासपरत्वात् प्रमाणप्रश्नोपपत्तिः । प्रतिसंन्धानं– प्रत्यभिज्ञानम् । ननु स्वापदशायां स्वापकालस्या स्फुरणेनेदानीं तत्प्रतिसन्धानाभावात्कथं तत्कालावच्छेदेनाहमर्थस्य कल्पनमित्याशंक्य कल्पित कालविशिष्ट स्वापानुसन्धानवत् कल्पित कालविशिष्टाहमर्थ कल्पनमप्युपपद्यत इत्याह ( पूर्वोत्तरेति ) पूर्वोत्तरकालावधिकत्वं विवक्षितम् । अहर्द्वयस्य राज्यन्तरितत्व व्याप्तया मद्ध्यकालकल्पनमिति भावः । ( इदानीन्तनेति ) इदा

मध्येचाहमर्थाभावे संस्कारधाराभावात्प्रतिसंधानाभावप्रसंगश्च । संवित्स्व रूप मविद्यास्वरूपं वा तदाधारोभवत्विति चेन्न;- तयोरपि तदानीमनु वृत्तौ प्रमाणाभावात् । नहि ज्ञातारमंतरेण ज्ञानमज्ञानंवाऽवस्थातुमलं । अन्य था घटादिष्वपि तदवस्थितिप्रसंगात् । ज्ञानाभाव स्तत्रापि विद्यत इतीष्टःप्रसंग इतिचेन्न;- भवदभिमतभावरूपाज्ञानस्य तत्र प्रसज्यमा नत्वात्, तस्यच तन्निष्ठत्वेन त्वया नभ्युपगमात् । नच संवित्स्वरूपस्य संस्काराधारत्वं, निर्विकारत्वनिर्विशेषत्वविरोधात् । नाप्यविद्यास्वरूपस्य, तथा सति तस्यैव ज्ञातृत्वप्रसंगात् । नह्यन्यगत संस्कारेणान्यस्य स्मृतिः सम्भवतीत्युक्तं । उपादानोपादेयभावा दुपपद्यत इति चेन्न,- क्षणभंगनयप्रसंगात् । सत्कार्यावादाभ्युपगमेनाविद्या तद्विवर्तयो रेकत्वा दुपादानं संस्कार उपादेये कार्यकर इति चेन्न;- उपादानो पादेययोः काल्पनिकैक्यस्य सौगतमतेपि सत्वात् ; परमार्थैक्यस्य

---

नीन्तनकाले नुसन्धानमिति सप्तमीसमासः । तदानीन्तन काला वच्छिन्नतया स्वापानुसन्धानवदित्यर्थः । ( तयोरिति ) त्वदभिमत निराश्रयसंविद ज्ञानयोरित्यर्थः । बाधकमप्याह ( नहीति ) जानामि नजानामीति ज्ञानसमानाधिकरणतया नुभूयमानमज्ञानं नाज्ञातरिसंभ- वतीति भावः । अनुवृत्ति मभ्युपेत्यापि दूषयति ( नचेति ) आत्मनो ज्ञातृत्वाभावोपपादनार्थं त्वदुक्तया रीत्या संविद एव तद्रूपापत्त्या निर्विकारत्वविरोधा दित्यर्थः ( निर्विशेषत्वेति ) नच मिथ्यात्वेनपरिहारः, तथापि तस्या एव ज्ञातृत्वप्रसंगा दितिभावः ( इत्युक्तमिति ) अह मर्थान्तरगतानुभवेनाह मर्थान्तरे स्मृत्यसम्भवोक्तया इदमप्युक्तप्रायमि- त्यर्थः । ( क्षणभंगेति ) तत्रापि कार्यकारणभावेन उपपादनसम्भवात् प्रतिसन्धानानुपपत्त्याक्षणिकत्वदूषणं नस्यादित्यर्थः ( सत्कार्येति ) कार्य कारणयोर्भिन्नत्वात क्षणभंगे प्रतिसन्धानानुपपत्तिः, अत्रतु न तथेतिभावः (परमार्थेति) नच धर्मिसमसत्ताकमैक्यमस्तीति वाच्यं, अन्तःकरणान्तर-

त्वन्मतेप्यभावात् । किंवा सुषुप्तिकाले संविदविद्ययोः सद्भावे प्रमाणं ? सुप्तोत्थितस्य सुखमह मस्वाप्समिति परामर्श इति चेन्न;- तेन सुखस्वाप विशिष्ट तदानीन्तनाहमर्थस्यैव विषयीकरणात् । इदानींतना हमर्थप्रकाशेन तदुपलक्षणमितिचेन्न; - इदानींतन सुखसंविद्व्यां तदानीन्तनस्वापविशिष्टाहमर्थोपलक्षणं किं न स्यात् ? तदानी महमर्थप्रकाशाभावे कथं तत्परामर्श इति चेत् ? कथन्तदानीमज्ञान सुखसाक्षिसंवित्प्रकाशाभावे तत्परामर्शः ? तत्परामर्शादेव तदा तत्प्रकाशोपि कल्प्यतइति चेत् ? तथाहमर्थप्रकाशोपि कल्प्यतां । उप लम्भविरुद्धं तत्कल्पनमितिचेत् ? कोयमुपलम्भः? एतावन्तं कालं नकिं

---

स्याप्य विद्योपादानकत्वेनातिप्रसंगा दितिभावः । संविदविद्यानुवृत्ति प्रमाणाभावं पूर्वोक्तं प्रपंचयितुं पृच्छति ( किंवेति ) ( सुप्तेति ) सुख मनुभवन्नह मस्वाप्समिति सुखमस्वाप्समित्यस्यार्थः, तत्रास्वाप्समित्य विद्यापरामर्शः, सुखमिति संविद इत्यर्थः । तथास्य स्मदिष्टमेव सिद्धमित्याह ( तेनेति ) सुखेनस्वापेनचेत्यर्थः ( इदानीन्तनेति ) इदानीमहमर्थस्य प्रकाशात्तस्य च स्वापसुखाश्रया त्माभेदाद्ध्यासात तथाप्रतीत्युपपत्ते रित्यर्थः । ( तदुपलक्षणमिति ) अहमर्थो- पलक्षणम् । अतत्कालीनतया व्यावर्त्तकत्वादुपलक्षणत्वोक्तिः । अहमर्थव्यावर्त्तकत्वात् तत्तादात्म्याधिष्ठान संविद्व्यावर्त्तकत्वात् (इदानींतन सुखेति) इदानींतन सुखतत्संविद्विशिष्टात्मनि तदानीन्तनस्वाप विशिष्टाहमर्थस्याद्ध्यासा त्तथाप्रतीतिः किन्नस्यादितिभावः । एवमर्थोप लक्षणत्वे निरस्ते तदानीन्तनाहमर्थ परामर्शोयमितिसिद्धं, तत्रस्वापेहमर्था- वगमोपि तदप्रकाशात नतस्यायं परामर्श इत्याशंकते ( तदानीमिति ) ( अज्ञानेति ) अज्ञान सुखसाक्षिणः संवित्प्रकाशस्यचाभावे कथमज्ञान सुखसंविदां परामर्शइत्यर्थः (परामर्शादेवेति) तथा परामर्शादित्यन्वयः । सुखमहमस्वाप्समिति परामर्शादित्यर्थः ( कल्प्यतामिति) सुखमहमस्वाप्स

चिदहमज्ञासिषमित्येवं रूप इति चेत्? तर्हि तत एवाज्ञानसुखसाक्षित्वेऽपि त्वप्रकाशकल्पनमपि विरुध्येत। उपलम्भस्य बाह्यविषयवेदननिषेधरूपत्वात्तत्कल्पनमुपपद्यत इति चेत्? समः समाधिः। मामप्यहं न ज्ञातवानित्युपलम्भो विरोधीति चेत्? कस्य विरोधी? किमहमर्थस्य, उत तत्संवेदनस्य, उत वेदनमात्रस्य? न प्रथमः, अतद्रूपत्वादुपलम्भस्य। नह्येतावन्तं कालं नाहमभूवमिति कश्चित्प्रतिसन्धत्ते, अपि तु विद्यमानमपि मां नज्ञातवानिति। न द्वितीयः, एतावन्तं कालं न ज्ञातवानित्यनेन संविदमपि न ज्ञातवानिति संवित्संवेदनस्यापि निषेधप्रसंगात्। स्वप्रकाशेन तदा तत्प्रकाशनम्, निषेधस्तु विषयप्रकाशस्येति व्यवस्थेति चेत्? तुल्यमहमर्थेऽपि। अत एव न तृतीयः; स्वपक्षोन्मूलनप्रसंगाच्च। "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहम्

---

मित्यत्र सुखादेरिवाहमर्थस्यापि भानाविशेषादिति भावः (बाह्येति) अहमर्थप्रकाशकल्पनमित्यर्थः (तत्कल्पनमिति) अज्ञानादिप्रकाशकल्पनमित्यर्थः (समइति) अहमर्थस्यापि बाह्यत्वादिति भावः। किमर्थविरोधित्वात् उपलंभ विरोधिता? उत बाध्यत्वेनेति पृच्छति (कस्येति) (निषेधप्रसंगादिति) नज्ञातवानिति सामान्यनिषेधस्य यावद्विशेषनिषेधकत्वादिति भावः (निषेधस्त्विति) प्रत्यगव्यतिरिक्तविषयशब्दार्थः (तुल्यमिति) मामप्यहं न ज्ञातवानिति निषेधेऽपि देवत्वाद्याकारेणाहमर्थोल्लेखादिषय इति भावः (अत एवेति) विशेषनिषेधरूपतया अतद्रूपत्वात्, एतावन्तं कालं न किंचिदज्ञासिषमिति परामर्शविरोधाच्चेत्यर्थः। (स्वपक्षेति) अज्ञानसंविदोः प्रकाशस्यापि निषेधप्रसंगादित्यर्थः (नाहेति) अत्र न जानातीति प्रकाशनिषेधः प्रकाशकल्पना

मस्मीति नो एवेमानि भूतानि विनाश मेवा पीतो भवती" ति सुषुप्तविषयश्रुत्या तदानी महमर्थप्रकाशकल्पनं विरुध्यत इति चेत्? तर्हि "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेदनान्तर" मिति तद्विषयश्रुत्यैव संवित्सुखादिप्रकाशकल्पन मपि विरुध्येत, अविशेषात्। तथापि तदानीन्तनमज्ञान मनुभूत मननुभूतं वा? पूर्वत्र संविदोपि प्रकाशसिद्धिः, स्वप्रकाशत्वात्; उत्तरत्राज्ञानप्रतिसन्धानानुपपत्तिरिति चेन्न;- तदानीन्तनकालस्येव तदानीन्तनाज्ञानस्यापि तदा[illegible] [illegible]त्वेन तद्विषयप्रतिसन्धाना[न]भ्युपगमात्। तथापि प्रात[illegible]जाभावादिनयेन तदानी मधिकरणोपलम्भोवश्यम्भावीति चेन्न;- इदानी[illegible]व कल्प्यमाने मध्यकालवर्तिनि स्वात्मनि योग्यस्मृत्यभावेन ज्ञानाभाव [illegible] कल्पनोपपत्तेः। तदानी मधिकरणोपलम्भस्यावश्यंभावेपि अह

---

[illegible]विरोधीरित्यर्थः (तर्हीति) संवित्सुखादेरान्तरत्वा दित्यर्थः (तथा-[illegible]पीति) तथाच प्राज्ञेनात्मनेत्यादिश्रुते र्न किंचिदज्ञासिषमिति परा[illegible]मर्शस्य चाज्ञानसंविद्व्यतिरिक्तविषयतया संकोचः कार्यः, नाज्ञा[illegible]सिषमिति प्रतीते रन्यथोपपादयितु मशक्यत्वादिति भावः। नचैव [illegible]हमर्थप्रतिसन्धानानुपपत्त्या "नाह खलु न बाह" मित्यादिश्रुते र्न किंचिदहमवेदिषमिति परामर्शस्य च संकोच स्स्यादिति वाच्यं; पूर्वोक्त[illegible]रीत्या हमर्थोपलक्षणसम्भवात्। अज्ञानस्य त्विदानीं अननुभवेन उप[illegible]लक्षणासम्भवात् परामर्शत्वस्यैव वाच्यत्वात् (तदानीमेवेति) उद्बोध[illegible] एवेत्यर्थः। ननु चत्वरादे रधिकरणस्य प्रागनुभूतस्येदानीं [illegible] तत्र गजाद्यभावकल्पन मस्तु, इह त्वननुभूतस्या ज्ञानाधिकरणस्य स्मरणाभावे कथं तत्राभावकल्पनं, इत्यज्ञानाश्रयसंविदनुभव आवश्यक इति शंकते (तथापीति) (इदानीमिति) पूर्वोत्तरजाग्रदवस्थावच्छिन्ने क्यप्रत्यभिज्ञया मध्येपि सत्त्वस्य कल्पनेन तदानीं ज्ञानवत्त्वे नियमत स्तद्वत्तया स्मर्तव्यस्य तथा स्मृत्यभावेन ज्ञानाभाव कल्पन मित्यर्थः। (तदानीमिति) इह प्रतिसन्धीयत इत्यनेन प्रतीति

मर्थस्यैव प्रकाशकल्पना युक्ता । अहन्न ज्ञातवानिति स एवह्यज्ञानाश्रय तया प्रतिसन्धीयते । अतो न कथंचिदपि सुषुप्तावहमर्थाभावोवक्तु मपि शक्यः । अहमेव पूर्वं सुप्तः, तथाप्यहमर्थ स्तदानीं नास्तीति व वचनविरोधा च । मुक्तावप्यहमर्थानुवृत्तिः प्रागेव श्रुतिवशा द्दर्शिता । नच मोक्षे अहमर्थानुवृत्त्या बद्धत्वप्रसंगः, तथा सति संविदनवृत्तावपि तत्प्रसंगात् । यथावास्थितस्वरूपप्रकाशो नाज्ञत्वादिहेतुः, अपित तद्विरुद्ध एवेति चेत्? तुल्यम् । यदि च मोक्षे ऽहमर्थो नस्यात् मोक्षशास्त्र स्याधिकार्यभावः स्यात् । नहि स्ववधाय स्वयमेव बुद्धिपूर्वकारी प्रवर्तते । अहमर्थस्य चात्यन्तविनाशो मोक्षे भवद्भि रिष्यते । संविदात्मनः स्वस्य च विवेकाग्रहात् प्रवर्तते इति चेत् ? तर्हि स्वविनाशे

---

शात्रं विवक्षितम् । नच श्रुतिविरोधः, नाहमिति न [illegible] श्रुतिः, किन्तु अय मह मस्मीति न ज्ञानाति, तत्राप [illegible] मनुष्यत्वादिरूपेण प्रतीतिरेव निषिद्धयत इति स्वरसः [illegible] यथा " कश्चिद्धवा अस्मा ल्लोकात् प्रेत्य आत्मानं [illegible] अय मह मस्मीति, अथ यो ह वै त मग्निं सावित्रं वेद स एवा स्मा ल्लोकात प्रेत्यात्मानं वेद अय मह मस्मी " त्यादौ । नच मामप्यह न्न ज्ञातवानि त्यनुभवविरोधः, न वाहं किंचन वेदनान्तरं- न किञ्चिदहं मवेदिष मिति श्रुत्यनुभवविरोधस्य संवित्प्रकाशपक्षेपि तुल्यत्वात् ( तथासतीति ) संसारदशायां संविदोप्यज्ञानव्याप्ते रिति भावः ( यथावस्थितेति ) हेतुशब्दो व्याप्यपरः ( तुल्यमिति ) नाह मर्थो व्याप्यः, किन्तु यथावस्थितावपरीतप्रकाश एवेत्यर्थः । ननु सुषुप्तिदशाया मिव प्रली- नो ह्मर्थ स्सूक्ष्मरूपेण वर्तता मित्यत्राह ( अहमर्थस्य चेति ) मुक्तौ निरन्वयविनाशएव त्वयाहमर्थस्येष्ट इत्यर्थः ( संविदात्मनइति ) स्वाभिन्नतया ज्ञातसंविदोनित्यताज्ञानात प्रवर्ततइत्यर्थः ( तर्हीति )

संविदो विनाश मभिमन्येत । सच स्वविनाश एवंति मन्यमानो न प्रवर्तेतैव । स्वात्मावस्थानभ्रमात् प्रवर्तत इति चेन्न;- फलस्वरूप मजानत स्तदर्थित्वायोगे नोपायानधिकारात् । अहमर्थस्थितिमपेक्षमाणस्य च भवन्मते नित्य संसारप्रसंगात् । अह मर्थस्थितिभ्रमेण प्रवृत्तस्याप्यद्वैतज्ञानोदयसामर्थ्या देवानिच्छतो प्यहमर्थ विनाश इति चेत्? तथा सति राज्यकामस्य शिरश्छेदवदपवर्गः स्या दिति सम्यक् पुरुषार्थपरत्वं शास्त्रस्य समर्थितं भवति ।

अस्तु तर्ह्या ध्यात्मिकादिदुःखत्रयाभिघातवशा त्तदविनाभूताहमर्थ स्यापि विनाशोभिमतइति । तदपि मन्द, "तमेवं विद्वानमृत इह भवति, तमेव विदित्वाति मृत्यु मेता"त्यादिभि र्मृत्युतरणहेतुतया श्रुतस्य ब्रह्मवेदनस्य साक्षा न्मृत्युहेतुत्वप्रसंगात् । "ब्रह्मैव भवति, सर्वंहपश्यः पश्यति" इत्यादिभि र्विरोधप्रसंगा च्च ।

---

भेदाग्रहइत्यर्थः ( फलेति ) अविद्याग्रन्थिविलयस्य त्वन्मते मोक्षत्वा दितिभावः ( नित्यसंसारेति ) अहमर्थस्थिति मपेक्षमाणस्य तद्विरुद्ध मोक्षसाधने प्रवृत्त्यनुपपत्ते र्नित्यसंसारप्रसंग इत्यर्थः । मोक्षेप्यहमर्थ स्थिति भ्रमेण तत्साधनेप्रवृत्तस्य मोक्षस्सेत्स्यतीत्याशंकते ( अहमर्थेति ) ( तथासतीति ) स्वस्यैव नाशे स्वसम्बन्धितया काम्यमानपुरुषार्थस्या सिद्धेरेव न्यायावतारइतिभावः ( तदपीति ) संसारोह्यनिष्टत्वात् मृत्यु रित्युच्यते, अतःस्वनिवृत्तिरपि सकलसुखोच्छेदकत्वेनानिष्टत्वा न्मृत्यु रेवेत्यर्थः ( ब्रह्मैवेति ) विनिष्टत्वादिदुर हमर्थस्य ब्रह्मभाव सर्वदर्शन

अस्तु तर्हि ज्ञप्तिरूप एवात्मा मोक्षशास्त्राधिकारीति चेन्न;- तस्य ज्ञातृत्वमन्तृत्वाद्यसम्भवेन श्रवणमननाद्ययोगात्, नित्यमुक्त स्वभावतयाऽ पवर्गार्थित्वासम्भवाच्च । ज्ञातृत्वदुःखित्वाध्यासा त्सर्व मुप पद्यत इति चेन्न;- तदध्यासप्रलापाना मन्यत्रोत्सारितत्वात् ।

एतेनात्मनोऽपवर्गार्थमहमर्थस्वरूपो ज्ञाता नश्यतीति च प्रत्युक्तं, दृष्टा दृष्टरूपप्रयोजनान्तर मन्तरेण परार्थं स्वानर्थस्य परमकारुणिकै रप्य नभ्युपगमात् । तदेतत्प्रियतनमोज्जीवनार्थं मुण्डोपहारवदित्यायातम् । अपि च - यद्यहमर्थो नात्मा कथ मनात्मनि देहे ऽहंबुद्धिः देहात्मभ्रम इत्यु च्यते? सहि त्वत्पक्षे देहाहंकारभ्रम इत्यभिधीयेत । आत्माहंकारयो रैक्यभ्रमा देहाहंकारभ्रम एव देहात्म भ्रम इति चेन्न;- तद्भ्रमस्याद्याप्य सिद्धेः । संविद्रूपस्यचाहंजानामीत्यादिना तद्धर्मभावादिविरुद्धधर्मवत्तया प्रतीयमानस्याहमर्थेन देहेन वा तादृशभ्रमप्रसंगाभावात् । ततश्च देहा त्मवादनिराकरणप्रयासोपि निरर्थकः स्यात् , देह श्चैतन्यमिति चार्वाकै रप्यनंगीकारात । देहस्याहन्त्व चेतनत्वादिप्रतिक्षेप एवहि ता न्प्रातिक्रियते ।

---

भावयोरसम्भवादितिभावः ( ज्ञातृत्वादिति ) ज्ञातृत्वादिस्वरूपायोग्यस्य श्रवणादिक न्नसम्भवतीत्यर्थः । आदिशब्देन ध्यातृत्वापरपर्यायं वि ज्ञातृत्वं विवक्षितम् । ज्ञातृत्वमत्र श्रोतृत्वं, श्रवणेजानातेः श्रुतौ प्रयो- गात् ( सर्वमिति ) श्रवणादिकं अपवर्गार्थित्वंचेत्यर्थः ( एतेनेति ) वक्ष्यमाणेनेत्यर्थः ( आत्माहंकारयोरिति ) अहमिति आत्माहंकारयो रभेदाद्ध्यासा दहंकृशइत्यत्रापि देहेहंकारतादात्म्यवत् आत्माभेदोपि प्रती यतइत्यर्थः ( तद् भ्रमस्येति ) अहंकारात्मभ्रमस्य तदधीनदेहात्मभ्रमस्य चेत्यर्थः । एतदेवोपपादयति ( संविदिति ) परेण संविदएवात्मतया-

अन्यथा तेषां सिद्धसाधनात् । यदि चाहमर्थो नात्मा, तस्य प्रत्यक्त्व मपि न स्यात् , अहम्बुद्ध्यैव प्रत्यगर्थस्य परागर्था द्विवेकात् । "युष्मद स्मत्प्रत्ययगोचरयो" रित्यादि हि भवदीयभाष्ये प्युक्तं । नन्वहमर्थविषयें शद्वय मस्ति, तत्र तत्प्रकाशांशः प्रत्यक्पदार्थः, तदधीनप्रकाशोह-न्त्वाशः परागर्थः, इदं रजत मिति भ्रमे शुक्तिरजतांशभेदवदिति । तद प्याशामोदकमात्रं, इदंप्रत्ययेपि कश्चि त्प्रत्यगंशोस्तीति निष्कर्षप्रसं गात् । उपलम्भविरुद्धः स इति चेत्? तुल्यं । अहम्प्रत्ययविषयेपि

---

गीकारात तस्याश्चाहमर्थधर्मतया प्रतीयमानत्वेनाहमर्थभेदाध्यास स्त दधीनो देहभेदाद्ध्यासश्च नसम्भवतीत्यर्थः ( अन्यथेति ) चार्वा कैश्चैतन्यस्य देहधर्मतयांगीकारा दितिभावः ( नन्विति ) अहं बुद्धि विषयत्वं परागर्थात भेदप्रयोजक न्नभवतीतिभावः ( इदम्प्रत्ययेपीति ) प्रत्यगंशोहमर्थः , तेन तत्रापि सतएव प्रत्यगंशत्वादिष्टापत्तिरिति परास्तम् ( उपलम्भेति ) इदमह न्नभवतीत्युपलम्भ विरोधादित्यर्थः । (तुल्यमिति) अहमिदन्नभवामी त्युपलम्भविरोधा न्नाहंप्रत्ययविषये इदमंश इत्यर्थः (अहंप्रत्ययेति ) परेणपरस्य अयमित्येवानुमानादित्यर्थः ।

यदप्याह नवीनः -

युक्तितोप्यहंकारातिरिक्त आत्मासिद्ध्यति । तथाहि - अहमनुभवविषयो ऽन्तःकरणा तिरिक्ताहमिति ज्ञानविषयो वा स्वप्रकाशान्योवा , न स्वद्रष्टा स्वव्यतिरिक्तद्रष्टृकोवा; दृश्यत्वात , स्वप्रकाशत्वा नाधिकरणत्वाद्वा ; घटादिवत् । अहमनुभवोहमिति व्यवहारहेतुप्रकाशः । नच पराभिमतात्मत्वेसिद्धसाधनं, पक्षतावच्छे-दकैक्ये अंशतासिद्धसाधनस्या दोषत्वात् । मतान्तरेतु विषयपदस्य विशेष्यपरत्वान्न स्सिद्धसाधनम् । नच ज्ञानानाश्रयत्वमुपाधिः, वृत्तिज्ञान विवक्षायामन्तःकरणे साध्याव्यापकत्वात । प्रकाशत्वस्या[स्य त्व] स्मन्मते

निरधिकरणत्वेन तदनाश्रयत्वाप्रसिद्धेः । नच प्रकाशात्यन्ताभावाश्रयत्वं, साधनव्यापकत्वात्। सुषुप्त्यादौ ज्ञानानाश्रयत्वस्यात्मत्वाप्रयोजकत्वेन तदनाश्रयत्वस्याप्यनात्मत्वे अप्रयोजकत्वात्। नन्वह मनुभवातिरिक्त प्रकाशमानविषयत्वमुपाधिः; अहमनुभवविषयत्वा दन्यदीयपरोक्षज्ञानविषयत्वाच्च पक्षस्यसाधनव्यापकता , अतोऽह मनुभवातिरिक्त पदं मात्रपदंचेति चेन्न;- देहादौ साध्याव्यापकत्वात् । उपाध्येकदेशस्य साधनस्यत्वावेन उक्तसाध्यंप्रति प्रयोजकत्वेन व्याप्यत्वानिर्णयाच्च । किंचाह मनुभवविषयस्यात्मत्वे प्रतिशरीरं दुःखादिधर्मिणस्तस्यभेद आवश्यक इतिगौरवम् । तदतिरिक्तस्यतु भेदे प्रमाणाभावात्लाघवम् । नन्वाहमर्थान्यात्मकल्पनागौरवं, त्वयाप्यन्तःकरणात्मभेदस्वीकारात् । अहमनुभवगोचरस्या त्मत्वेतु विवादः । नचैव महमनुभवगोचरस्य ज्ञानाद्याश्रयत्वानुभवविरोधः, ज्ञानाद्याश्रयस्यात्मत्वनियमग्राहक प्रमाणाभावात्, आत्मग्राह्यत्वेनबुद्ध्यादीनां रूपादिवदनात्मधर्मत्वात् । नचैवं दुःखाद्याश्रयस्य तद्द्रष्टभेदानुभव विरोधः, चैतन्यतादात्म्यारोपात् तदुपपत्तेः । नचोक्तानुमाना दुःखाश्रयस्यात्मभेदे सिद्धे तदभेदारोपो ऽयमनुभवः, तद्भेदस्त्व नुभवविरोधात् नानुमानात्सिद्ध्यतीति वाच्यम्; तथासति गौरोऽहमित्यनुभवविरोधात देहातिरिक्तात्मनोऽप्य सिद्ध्यापातात् । ममशरीरमितिप्रत्यक्षं कृतहानादिप्रसंगयुक्तिसहकृतं तदभेदप्रत्यक्षबाधकमितिचेत् ? तर्हि दुःखिनोममात्मेतिप्रत्यक्षं तद्द्रष्टृकस्य दुःखादे रतद्धर्मत्वनियमतर्कसहकृतं दुःखाश्रयस्यात्माभेद प्रत्यक्ष बाधकमस्तु। अन्तःकरणमेवाहि अहमर्थः, तदवच्छिन्नचैतन्यं ततोऽन्यदिति ममात्मेति भेदप्रतीतिः । नचममान्तःकरणमितिधीर्मुख्या, तूपचारोऽस्त्वितिवाच्यं ; दुःखाद्याश्रयाहमर्थाभेदे गौरवस्यो थवा ममात्मा ममान्तःकरणमिति प्रतीतिद्वयस्य भेदां यथार्थत्वम् । नचात्मनो न्तःकरणस्य वा एकस्य

अहमर्थात् कथमुभयोर्भेदइतिवाच्यं; ममताह्यन्तःकरणचैतन्ययोराविद्यकैकतामापन्नयोर्धर्मः, अतो ममताधिकरणान्यतर प्रतियोगिकभेद इतरस्योपपन्नः । नच संपिण्डितस्योभयस्य ममताधिकरणत्वा त्तदुभयप्रतियोगिकः कथमेकस्यभेदः,स्वप्रतियोगिकभेदस्यायोगादितिवाच्यं; शब्दो द्रव्याश्रितः इत्यत्र वस्तुत आकाशस्यैव सामान्यतो विषयत्ववद्रूपं नभवति रस इत्यत्र नीलादिविशेषभेदस्यैव सामान्यतो रूपाभावत्वेन विषयत्ववच्च ममत्वसामान्याकारेणात्मान्तःकरणयो रन्यतरस्य विषयत्वात् । अन्यतराप्रामाण्ये हेत्वभावेन उभयप्रामाण्यस्यैवमेव निर्बाधत्वात् । एवं च भेदप्रत्यक्षेण दुर्बलादहमर्थाभेदानुभवस्य बाधितत्वा न्निर्बाधमनुमानम् । अनुमानमपि लाघवाद्युक्त तर्क सहकृतं प्रत्यक्षबाधकं, [illegible]प्रत्यक्षस्य ततोबाधदर्शनात् । अतएवाहंमुक्तस्स्यामिति प्रवृत्तिरविरुद्धा, चिदात्मनोपि तत्र प्रकाशात् । प्रत्युततवैव निरतिशय सुखार्थिनो मोक्षेप्रवृत्तिर्नस्यात्, दुःखाद्याश्रये तदयोगात् । नच दुःखोच्छेदार्थं प्रवृत्तिः, कार्यस्य हि परिणाम्युपादानमेव स्वरूपमिति तदुच्छेदादृते न तस्यात्यन्तिकोच्छेदः । उपादानंचात्माचेत् तदुच्छेदे कस्य मोक्षःपुरुषार्थः । अनुच्छेदेच न दुःखादे रात्यन्तिकोच्छेदः ।

किंच मामहं जानामीति ज्ञानविषयत्व महंकारस्यानुभूयते । तच्च नस्वसमवेतजन्यज्ञानविषयत्वेन, निरवयवात्मनि संयोगाभावेन ज्ञानसामग्र्यभावात् । नाप्यहंकारधर्मोनित्यं ज्ञानमस्तीति, आत्मातिरिक्त नित्यज्ञानेप्रमाणाभावात् । नचाविषयस्य स्वप्रकाशत्वं सम्भवति, स्वाविषयत्वं स्वप्रकाशत्व मित्यस्य निराकरिष्यमाणत्वात् । अतएव [illegible]स्य हेत्वसिद्धिः । तथाच हेतूच्छित्तिरपि विपक्षबाधकस्तर्कः । [illegible]बोधस्य विषयो नस्वबोद्धकः विनाशप्रतियोगित्वात् घटादिवत् । नचासिद्धिः, "स्वमपीतोभवती"ति सुषुप्तौ ज्ञानस्यैवलयः, "यत्रैतत्पुरुषःस्वमपीतोभवती" ति

प्रक्रान्तपुरुषप्रतियोगिकत्वात् । नच जीवस्य स्वरूपेण विलयोस्ति, प्रत्यभिज्ञाविरोधात् । कृतहानादिप्रसंगात् । सत्सम्पत्तिविरोधाच्च । उपाधिलये जीवस्य तदभिमानिनोपि लयोभवति, सत्सम्पत्ति वाक्यानुसारेण पुरुषलयवाक्यस्य तथैवार्थवर्णनात् । तटस्थोपाधे र्विलये प्युपहिते लयबुद्ध्यदर्शनात् सउपाधि र्जीवतादात्म्यापन्नोऽह मभिमान गोचरः, तस्यैवलयः, अन्यथा जाग्रतीव सुषुप्तावप्यहमाकारपरामर्शःस्यात् । तथात्वे चाहमित्यभिमन्यमान एवास्वाप्समिति परामर्शप्रसंगः, तस्यानुभवनियमात् जाग्रतितदनुभवतया निर्णीतचैतन्यस्य तदापिसत्वात् । सुषुप्तौचैतन्यस्याभावे सुखादिपरामर्शस्याप्यभावापातात् । नचान्तः[हंकार] करणविनाशे प्रत्यभिज्ञानविरोधः, अहमनुभवे प्रकाशमानचैतन्यस्य तद्विषयस्यावस्थात्रये प्यनपायात् । उपाधावहंकारे प्रत्यभिज्ञानस्य जातिविषयत्वात् । अहं निर्दुःखः स्यामिति स्वापेप्रवृत्तिरपि अहमनुभवगोचरस्य चिदात्मनोध्यासात् दुःखाश्रयस्य दुःखाभावार्थम् । किंच दुःखाभावस्यापि सुखविशेषत्वात् स्वापे दुःखाभावजन्यसुखस्या हंकारेनुपपत्तेः, नित्यधर्मरूपे तस्मिन् ज्ञानाभावाच्च, स्वरूपसुखाभि व्यक्त्यर्थं स्वापेप्रवृत्तिः । अहंकारात्मवादे तन्नसंगच्छते । नचानुभवस्मरणयो र्वैयधिकरण्यं, कृतहानाकृताभ्यागमोवा ; तदापि सूक्ष्मरूपान्तःकरणावच्छिन्न चैतन्यस्यसत्वात् तावतैवातिप्रसंगपरिहारात् । स्थूलरूपस्यनाशात् तत्कृतकर्मनाशेपि तत्फलस्य तदुपाहितएव जीवे कालान्तरेपि सेवादिफलवत् सर्वज्ञेश्वरकर्तृकस्य नियमोपपत्तेश्च ।

ननु किं सूक्ष्मत्वं ? कारणात्मना प्रतिपत्तिरिति चेत् ? किं कारणमेववर्तते, उतकार्यमपि ? आद्येनान्तःकरणसत्वं, द्वितीये नजाग्रदवस्थातो विशेषइति चेन्न ;- सूक्ष्मतायां अनिर्वचनीयत्वेन भेदाभेदाभ्यां दुर्निरूपत्वस्यानुकूलत्वात् ! नच तत्र प्रमाणाभावः, सतोसतोवोत्पत्त्यनुपपत्त्या " असद्वा इदमग्रआसी " दिति श्रुत्याच कार्यमात्रेवस्थाभ्युपेयत्वात् । अनभिव्यक्तरूपस्यैवात्रा सच्छब्दार्थत्वात् । तुच्छत्वे आ-

सीदिति विरोधात् ; परामर्शोविद्यावच्छिन्नस्यैवेति केचित्, तदानु न स्मृत्यसम्भवचोद्यावकाशः । नच मितत्वहेतोरासिद्धिः, परिच्छिन्न स्यात्म शब्दार्थत्वव्याघातात् । “ यश्चास्यसन्[न्ति] न्नतोभावस्तस्मादात्मेति गीयते ” इति वचनाच्च । नचात्मत्वं जातिरेव, तन्नानात्वसिद्धेः पूर्वं तदसिद्धेः । आत्मनानात्वे गौरवाच्च । परेषान्तु सुखमहमस्वाप्स मिति परामर्शोनुपपन्नः, अहंकाराननुभवात् कादाचित्कस्य तदनु भवस्य सुषुप्तावसम्भवात्, नित्यस्यात्मान्यस्याभावात्, विषयस्यवास्व प्रकाशत्वादित्युक्तत्वात । सुषुप्तौ जाग्रतीवाहमित्यनुभवादर्शनाच्च चिद्रूपात्मत्वावृतत्वात , अभिव्यञ्जकान्तः करणाभावाच्च न तदा विशेष्यः प्रकाशते । तस्मादहमिति ज्ञानविषयो न स्वद्रष्टा, तस्मिन् प्र-काशमानेपि अप्रकाशमानत्वा दित्यनुमानमपि साधु । प्रकाशमानत्वं प्रकाशप्रयुक्त संशयाद्यगोचरत्वं,तदभावोप्रकाशमानत्वं । सुषुप्तावहंकारसं शयाभावो न स्वप्रकाशप्रयुक्तः, किन्तु धर्मिज्ञानाद्यभावात्, इति नविशेष्या सिद्धिः । नच ब्रह्मणि व्यभिचारः, स्वव्यवहारहेतुप्रकाशानाश्रयत्वस्य साध्यस्य सत्वात् । नच विशेषणवैयर्थ्यं, अहंकारस्यात्माभेदे तत्प्रकाशद शायां अप्रकाशमानत्वस्यायोग इति अप्रयोजकत्वनिरासार्थत्वात् । पराभि मतात्मत्व निषेधात् ननिषेध्याप्रसिद्धि दोषः । परामृश्यमानात्मारोपात्तु अहंकारस्य परामर्शविषयताप्रतीतिः । अनुकूलतर्कवत्त्वाच्च नाप्रयोजकत्वं। अतं 'ज्ञाहंकार आत्मा ज्ञानाश्रयत्वादिति न सत्प्रतिपक्षत्वम् । किंच जन्यज्ञानविवक्षाया मसाधारण्यं, अजन्यज्ञानविवक्षाया मसिद्धि श्च । नच जीवान्तरेश्वराभ्या मर्थान्तरता, गौरवात् । तद्भेदनिराकरणा र्थत्वात् एतस्य । देवदत्ताहमनुभवविषय स्तस्यैवाहमनुभवे प्रकाश मानस्वव्यतिरिक्तद्रष्टृक इतिवासाध्यम्, अतोनार्थान्तरतेति ।

अत्रोच्यते । पक्षतावच्छेदकैक्यें शतस्सिद्धसाधनस्यादोषत्व पक्षे घटादिव्यावर्तक विशेषणंव्यर्थम् । पक्षान्तरेच घटादिव्यावृत्त्यसिद्धिः, घटादिज्ञानस्याहंकारगोचरसंशय विरोधित्वेन घटमहमद्राक्षमिति त

द्रोऽहमस्मरणे व्यवहारादौच जनकत्वस्य त्वयास्वीकारात् । अहंकारावच्छिन्नचैतन्यमेव तद्व्यवहारहेतुरिति पक्षेऽपि अहंकारावच्छिन्न चैतन्याश्रयस्त स्वाप्नार्थबुद्धिसुखदुःखादे व्यावृत्त्यसिद्धिः । तथाचांशत स्सिद्धसाधनता । घटाद्यनुभव एव घटमहमद्राक्ष मित्यहंकार व्यवहारस्मरणादि हेतुरितिमते तद्वृत्त्यवच्छिन्नचैतन्याश्रयत्वेन बाधः । अहंजानामीति प्रतीते वृत्त्यवच्छिन्नचैतन्याश्रयत्व विषयत्वेन त्वया निर्वाहात् । अहंकारावच्छिन्नचैतन्यं तद्भासकमितिपक्षेऽपि तस्यप्रति बिंबोपाधि भूतान्तःकरण गतत्वाद्बाधः, प्रतिबिम्बस्योपाधिभूत दर्पणादिगतत्वात् । अहं त्वमादि पदजन्य शाब्दवृत्त्यवच्छिन्न प्रकाशाश्रयत्वात्साधनत्वमतेत्वमादिपदजन्य ज्ञानस्याप्य परोक्षत्वादपरोक्षविशेषणेऽपि बाधएव । धर्मादौव्यभिचारश्च । प्रकाशरूपात्मनोऽनि राश्रयत्वेन त्वन्मते साध्याप्रसिद्धिश्च ।

यदुक्तं यं प्रतिह्यनुमानं स्वप्रमेयं साधयति तस्यसिद्धिरपेक्षिता, खाचान्नास्त्येवेति । तन्न, परस्यपक्षएव प्रकाशाश्रयत्व प्रसिद्ध्या तदुपजीव्य प्रवृत्तानुमानस्य परमत्येव तद्बाधकत्वायोगात् , अन्यनाण्यानुमानवत् ।

यच्च मुक्तिकाली नात्मपदार्थो नभवतीति साध्यम् । तदपि न, मुक्तिकालीनेति विशेषणवैयर्थ्यात् । नचात्मशब्दार्थकथनमेव तदितिवाच्यं, क्रममुक्तिपक्षे बाधात् । एकमुक्तिपक्षे मुक्तिकाला प्रसिद्धेः । नच मुक्त्याश्रयो न भवतीत्यर्थः, तदनाश्रयत्वेऽपि स्वमत इवात्मत्वसम्भवात । अविद्या निवृत्तिरूपत्वाभावसाधनेतु बाधः ।

यच्च स्वव्यतिरिक्तद्रष्टृक इति साध्यम् । तत्रपुरुषान्तरेणार्थान्तरं । तत्र यदुक्तं द्रष्टनेकत्वे गौरवान्नार्थान्तरतेति । तन्न, तथासति द्रष्टृमत्व साध्यं व्यर्थमाधिकं । नच स्वेनैवार्थान्तरता, अहमनुभवादिपदाभ्यां कर्तृत्वा द्रष्टृत्वे गौरवात् । द्रष्टृपस्यात्मनः प्रकाशवत्ताभावात् बाधः । कालिमानिर्दृष्ट

वृत्त्यवच्छिन्न चैतन्याश्रयत्वमस्तीति चेत् ? तर्हि पुरुषान्तराहमर्थस्यापि वृत्त्यवच्छिन्न चैतन्याश्रयत्वात् सिद्धसाधनं केनापि दुर्वारं । परमार्थतः प्रकाशाश्रयत्वसाधने बाधएव । अप्रयोजकत्वंच । नचाहमनुभवविषयस्यात्मत्वे प्रतिशरीरं सुखादिधर्मिण स्तस्य भेद आवश्यकइति गौरवं, तदारीतिकतस्य भेदे प्रमाणाभावाल्लाघवमितिवाच्यं; प्रत्यक्षादि सिद्धस्य द्रष्टात्मभेदस्यौपाधिकत्व साद्विलक्षणत्व कल्पनायां द्वयोरहंप्रतीतिविषयत्व कल्पनाया मप्रतिपन्नैक्य कल्पनायां प्रत्यह महंकारस्य विनश्वरत्वेन प्रतिजीव मनन्ताहमर्थकल्पनायामेवच गौरवात् । नच दुःखाश्रये मुमुक्ष्वभिलषित निरतिशय सुखासम्भवान्मोक्षार्थ प्रवृत्त्यनुपपत्तिस्तर्कः, प्रमाणबलात् काळविशेषे तदुपपत्तेः । वैषयिक सुखाश्रये तत्रैव निरतिशय दुःखाश्रयत्ववत् रागद्वेषादिवदेकाश्रयत्वाविरोधाच्च । दुखोच्छेदार्थं प्रवृत्तिरप्युपपद्यते, आत्मस्वरूपे विद्यमानएव तदपरिणामभूतस्य दुःखस्योच्छेद संभवात् । मनसउपादानत्वं त्वसिद्धमेव । नच हेतूच्छित्तिरपि बाधिका, अहमर्थस्य स्वसमवेतजन्यज्ञानविषयत्वात् तत्राव्याप्य वृत्तित्वाभावे बाधकाभावात । किंच सूक्ष्मवस्तुसंयोगा देव स्थूलोत्पत्तिस्त्वयापि वाच्या, तत्राप्यवयवांगीकारे ऽनवस्थाप्रसंगात् तत्रसंयोगो व्याप्यवृत्तिः कथं चिदव्याप्यवृत्तिर्वास्वीकर्त्तव्यः । सन्निकर्षाजन्यस्यापि त्वन्मते शाब्दप्रत्यक्षवदनुभवबळेन प्रत्यक्षत्वोपपत्तेः । किंच मांजानामीत्यहमर्थविषयकतया नुभूयमानं ज्ञानं नचैतन्यस्वरूपं, तस्याहमर्थानाश्रितत्वात् ; नाप्यहमाकार वृत्त्य वच्छिन्नचैतन्यं, क्लृप्तकारणाभावेन त्वदुक्तरीत्या तदसम्भवात् । नच सावृत्तिर्न ज्ञानमितिवाच्यं, जानामीत्यनुभव विरोधात् । क्लृप्तकारणाभावेन व्यवहारासिद्धिप्रसंगाच्च । नापि घटादि वृत्त्यवच्छिन्नचैतन्यं, मामहं जानामीति विषयत्वानुभव विरोधात् । तत्सन्निकर्षाजन्यत्वेन तद्विषयत्वासम्भवात् । विषयत्वाननुभवे च मानाभावेन दृश्यत्वहेत्वसिद्धेः ।

यच्च जीवस्य स्वप्ने श्रूयमाणोविलयः अहमभिमान गोचरोपाधिलयादेव वाच्यइति । तन्न, अहमभिमानविषय शरीरनाशेपि जीवनाशाद्य

पदेशात् । अतो "माह खल्वयमेवं संप्रत्यात्मानं ज्ञानात्ययमहमस्मि" इत्युक्तदेवत्वाद्यभिमानाभावोपपादक धर्मभूत ज्ञानसंकोचावस्थाया एव विवक्षासम्भवेन्तःकरणस्याहमर्थत्व साधकत्वासिद्धेः ।

यच्च सुषुप्तावहमर्थसत्वे सःप्रकाशेतेति।तन्न,इष्टत्वात्।नचाहमित्यभिमन्यमानएवास्वा स्वामिति परामर्शप्रसंगः, आत्मस्वरूपस्य स्वप्रकाशत्वेपि स्वस्यैवाभिमतिरूपत्वेन तदाश्रयत्वाभावात् ।नचाहमित्यभिमति नासमिति परामर्शप्रसंगः, ज्ञानत्वस्य स्वरूपाप्रकाश्यत्वात् ; अह न्त्वप्रकारकत्वस्य स्वाप्रकाश्यत्वाच्च । अहमर्थस्तु परामृश्यते अहमस्वाप्समिति । अतस्तत्सत्व मावश्यकं । अहमेव पूर्वं सुप्तइति प्रत्यभिज्ञाविरोधाच्च । नच चैतन्य स्वरूपस्य सत्वात् तदुपपत्तिः, तावन्मात्रस्या हमर्थत्वाभावात् । नच जातिविषयाप्रत्यभिज्ञा, पुरुषान्तरेपि तथा प्रत्यभिज्ञाप्रसंगात् । नापि भ्रमः, बाधकाभावात् । अनेनाहमर्थेन पूर्वाहमर्थस्या ननुभवेन संस्काराभावेन भ्रमासम्भवाच्च । किंचानुभवस्मरणयोः वैधिकरण्यं, कृतहानादि प्रसंगश्च। नच सूक्ष्मरूपेण परिहारः, संस्कारधर्मादेः पूर्वाहंकारगुणत्वे तद्विकारद्रव्यत्वे च तद्विनाशेविनाशात । नन्वेक मेवान्तःकरण द्रव्यं क्रमेण स्थूलसूक्ष्मावस्थे आपद्यतइति द्रव्यैक्यान्नाति प्रसंगलेशोपि, स्थूलावस्थस्या हमर्थत्वान्न सुषुप्तावहमर्थाभाव प्रसंगश्चेतिचेन्न;- स्वरूपविषयत्वासम्भवेन कथंचि न्निर्वहणीयाया लयश्रुतेर्लाघवेन सम्प्रतिपन्न जन्यज्ञानविषयत्वोपपत्ता वन्तःकरण लयपरत्वक ल्पनाया अनुपपन्नत्वेन निरुक्तप्रक्रियायां कल्पकाभावात । किंच " सयथाशकुनि स्सूत्रेण प्रबद्धो दिशंदिशं पतित्वान्य त्रायतनं मलब्ध्वाबन्धन मेवोपाश्रयते एवमेव खलुसोम्यैतन्मनोदिशं दिशं पतित्वा न्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते प्राणबन्धनं हिसोम्यमनः" इति मनसो व्यापारोपरममात्रं श्रूयते । अविद्यावच्छिन्नस्यैवानुभवः परामर्शश्चेति पक्षेच देवदत्तानुभूतस्य यज्ञदत्तेनस्मरणप्रसंगः ।

यच्च सुखाभिव्यक्तयेस्वापे प्रवृत्तिः, अहंकारात्मवादे तन्नयुज्यत इति । तन्न, स्वापजन्य सुखांगलाघवाद्यर्थं स्वापे प्रवृत्तिसम्भवात ।

किंच अभिव्यक्तिर्न प्रकाशमात्रं, तस्यनित्यसिद्धत्वात् । नाप्य विद्यानिवृत्तिः, ज्ञानसाध्याया स्तस्याः स्वापासाध्यत्वात् ।

यत्तु सुखमहमस्वा प्समिति परामर्शः परस्यानुपपन्नइति । तन्न. परामर्शा सिद्धेः । सुखविशिष्टाहमर्थस्येदानी मनुभवात्स्वापस्यानुमा नात् । तस्मिन्प्रकाशमानेऽप्र प्रकाशमानत्वादिति हेतुरप्यासिद्धः । यथाचाह मित्यभिमन्यमानएवास्वाप्समिति परामर्शस्तथोक्तम् । प्रत्यक्षबाधितानि चानुमानानि, दुःखाद्याश्रयस्य तद्द्रष्टृभेदानु भवात् । नच चैतन्य तादात्म्यारोपात् तदुपपत्तिः, तथासति मामहं जानामीति नस्यात्, अहं ममद्रष्टेरित्येव स्यात् । बाधकाभावाच्च न भ्रमः । नच दुःखिनो ममात्मेति प्रत्यक्षं तद्द्रष्टृकस्य दुःखादे रतद्धर्मत्वनि-यमतर्क सहकृतं बाधकम् , अप्रयोजकत्वेन नियमासिद्धेः ।

किंचेयं प्रतीति र्लौकिकानां वैदिकानां वा ? नाद्यः, लौकि कानां हि आत्माहंत्वेनवा ज्ञानाद्याश्रयतयावा प्रतीयते । नच ममाहमिति वा ममज्ञानीतिवा प्रतीतिरस्ति । न द्वितीयः, शास्त्रतो देहातिरिक्त तदधि ष्ठानात्मज्ञानेसति अनाद्य विद्यावशात देहे अपरोक्षतोहं भ्रमस्य विद्यमान तया शरीरसम्बंधित्वेनैवतदुपपत्तेः । दुःखस्यापि शरीरेद्ध्यासात् दुःखिनो ममात्मेति प्रतीत्युपपत्तिः । अन्यथा हमर्थसम्बंधितयैव प्रतीतौ केन रूपेणात्मा प्रतीयते? नतावदहंत्वेन ज्ञानित्वेन चेत्युक्तं । ममसाक्षी त्यादिस्वेच्छा कल्पित ज्ञानंतु न प्रमाणं । नचा नुमानेन बाधः, तर्काणां निरासात् । तस्मादबाधित प्रत्यक्षबाधितान्यनुमानानि ।

किंचाहमनुभव विषयः स्व द्रष्टा, ज्ञानाश्रयत्वात् , व्यतिरेकेण घटवदिति । नचा प्रयोजकता, अहमर्थस्य द्रष्टृभेदे ईश्वरस्याहं बुद्ध्यभावप्रसंगात । श्रूयतेच- " हंताहमिमास्ति स्र" इत्यादिना । स्मर्यंते च " अहं कृत्स्नस्य जगत " इत्यादि ।

किंच " आत्मानं चे द्विजानीयामहमस्मी ति पुरुषः ।

वस्तुन्येवेदमंशः परकीयानुमाना द्दृश्यत इति चेत्? तर्हि तत्रैवेद म्प्रत्यय गोचरे प्रत्यगंशोपि सिद्ध इति तद्वदेव घटादिष्वपि तत्क ल्पनाप्रसंगः। नात्र परात्मनीद मंशः प्रतीयते, अपित्वेकमेव व स्त्वंशभेद मन्तरेणापि प्रतिसम्बन्धिभेदेना हन्त्वेदन्त्वाभ्यां प्रकाशत इति चेन्न;- अहमर्थप्रकाशे प्येकस्यैव पुत्रत्वेन पितृत्वेन प्रतीतिवत् इदमंशभानप्रसंगात्। तत्रापि कदाचिदय महमस्मीति प्रतिभातीति चेन्न;- देवोह मित्यादिषु देवादिशब्दवत विशेषणविवक्षया तत्रेदं शब्दप्रयोगात् । तस्य चांशस्या स्माभि रपि परत्वाभ्युपगमात् । प्रतिसम्बन्धिनिरूप्योहमर्थो न स्वरूपं भवितु मर्हतीति चेन्न; - पुत्रा दिष्वपि तत्प्रसंगात्। प्रतिसम्बन्धिनिरपेक्षं मनुष्यत्वाद्याकारान्तरं दृश्यते, अत स्तत्र न दोष इति चेन्न;- अत्रापि वस्तुत्वचेतनत्वाद्याकारान्तरसिद्धेः।

नन्वहंशब्दप्रत्यभिज्ञाना दहंकार एवाहमर्थ इति निश्चीयते, सच क्षेत्रान्तर्भूतो भगवता परिगणितः, "महाभूतान्यहंकारो बुद्धि रव्यक्त मेवच" इत्यारभ्य "एतत्क्षेत्र"मिति वचनात्, "निर्ममो निरहंकार" इत्यादिषु च हेयतया यमुपदिश्यते, अतो नात्मा भवितु मर्हतीति। तद सत्, बुद्धिशब्दप्रत्यभिज्ञानेन भवदभिमतसंविदोपि बुद्धिपर्यायवाच्य महत्तत्वानतिरेकप्रसंगात् । अध्यवसायाख्यकार्योपकरणत्वमात्रेण तत्र बुद्धिशब्द इति चेत्? तर्हि अनात्मनि देहे अहमभिमानाख्यकार्यकर- तया त्राप्यहंकारशब्द इति भाव्यम् । अहम्भावान्तरहेतुत्वं न शब्द शक्त्या प्रतीयत इति चेन्न;- अभूततद्भावार्थच्विप्रत्यय मुत्पाद्य व्यु त्पत्त्या तदुपपत्तेः। क्षेत्रान्तर्भावपरिगणनं तु बुद्धे रप्यविशिष्टमिति। सं- विदोपि क्षेत्रकुक्षिनिक्षिपे नैरात्म्यवादप्रसंगः, समाधि श्च समान एव। निरहंकार इत्यादिषु गर्वपर्यायोहंकार उत्कृष्टजनावमानहेतुत्वा दनर्थ हेतुरिति हेयतयोपदिश्यते; न पुन रहमर्थोऽहंकारतत्वं वा, तयो रुपाधि मन्तरेणानर्थहेतुत्वाभावात। तथाचसत्यु पाधे रेव हेयत्वापत्तेः। नचा हंभावः स्वरूपेणत्यक्तुं शक्यः, त्यागबुद्धावपि तदनुप्रवेशात्। सुषुप्ति

मूर्छादिषु तत्त्यागाभ्युपगमेपि नासौ स्वशक्त्या, दैवादापन्नत्वात् । अहं भावस्य चोपादेयत्वमेव श्रुत्या प्रतीयते-" अथातोहंकारादेशः, अहमेवा धस्ता दह मुपरिष्टात् "," त्वं वा अह मस्मि भगवो देवते अहंवैत्वमासि भगवो देवते तद्योहं सोसौ योसौ सोह" मित्यादिषु । "तत्वमसि" निरूपणे चैवा मबाधितं सामानाधिकरण्य मनुसन्धेय मिति सिद्धमनारोपितज्ञातृत्वविशिष्टोहमर्थ एवात्मेति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां अहमर्थात्मत्वसमर्थन भंगवादः षड्विंशः ।

---

किमहं कस्यकामाय किमर्थमनुसंचरेदि " ति निष्कृष्टात्मविषयकं ज्ञानमहंत्वप्रकारतयाभिलपन्तीश्रुतिः अहमर्थस्यानात्मत्वे विरुद्ध्यते । "आत्मन्येव न दोषाय शब्दोहमितियो द्विज। अनात्मन्यात्मविज्ञानं शब्दोवा भ्रान्तिलक्षण" इति स्मृतिश्च । तत्रहि दोषत्वं भ्रान्ततापादकत्वं, उत्तरत्र भ्रान्तिलक्षण इत्युक्तत्वात । शब्दोहमित्यत्र बुद्धिरपिविवक्षिता, उत्तरत्रात्म विज्ञानमित्युक्तत्वात् । साच बुद्धिरहमिति शब्दसमानविषया अहमिति बुद्धिरेव । सैवोत्तरत्रात्मविज्ञानमित्युच्यतइति स्वरसतः प्रतीयते ।

किंच " विरजा विपाप्माभूयासं " " ब्रह्मलोक मभिसम्भवानी " ति अहमर्थ सम्बन्धितया मुक्तिरप्याभिलप्यते । योहं बाल्येपितरावन्वभूवं सोहं नपुत्राननुभवामीति प्रत्यभि ज्ञानविरोधाश्च । नच चैतन्यस्वरूपेसा स्थूलावस्था, अन्तःकरणकबळितस्यैवाहमर्थत्वात् । नच जातिविषया प्रत्यभिज्ञा, सएवा हमततोन्यइति प्रतीतेः । न भ्रान्तिः, बाधकाभावात् ।

इति श्री चण्डमारुते अहमर्थात्मसमर्थनभंगः

षड्विंश स्स्कन्धः ॥

श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

# अथ सप्तविंशो वादः ।

तमाश्रये यस्त्विहचेतनाना मेकोबहूनां विदधाति कामान् ।
शक्तिःपरायस्य समस्तसूतिः स्वाभाविकी ज्ञानबलक्रिय च ॥

यदाहुः - ज्ञातृत्वादिप्रकाशोभ्रान्तिः, देहात्माभिमानत्रतएव जायमानप्रकाशत्वात्, स्थूलोऽहमित्यादि प्रतीति वदिति । तदसत हेत्वसिद्धेः । नहीश्वरस्य योगिनां मुक्तानांवा देहात्मभ्रमः, नच तेषां ज्ञातृत्वादिकं नप्रकाशते । यथा परंब्रह्मैवसंकल्पयाते-'हन्ताहमिमास्तिस्रोदेवता' इत्यादि । अस्तिच 'वेदाहं समतीतानी' त्यादि भगवद्गीतावाक्यशतम् । तथा "तद्धै तत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहंमनुरभवं सूर्यश्च " " सर्वंहपश्यः

---

( ज्ञातृत्वादीति ) अहं जानामीत्यादिव्यवहारहेतुभूतः प्रकाशः पक्षतया विवक्षितः, तेनान्तःकरणगततया ज्ञातृत्वादिगोचर ईश्वरज्ञाने नांशतो बाधः । आदिपदेन कर्तृत्वादिपरिग्रहः । अंशत स्सिद्ध साधनस्य दोषत्वपक्षे देहाविषयत्वेन विशेषणीयं ( भ्रान्तिरिति ) अत्र विशेष्यावृत्तिप्रकारकत्व विवक्षितं, न मिथ्यात्वं, कर्तृत्वादेरात्मन्यौपाधिकत्वस्य सिसाधयिषितत्वात ( देहेति ) देहात्माभिमानक्षण एव जायमानत्वविवक्षायां तत्क्षणे जायमानस्य तदभिन्नतयासिद्धसाधनं, कदाचिद्देहात्मभ्रमवतो जायमानत्व विवक्षिते अविद्यानिवर्तक चरमज्ञाने व्यभिचार इति चेन्न; - देहात्मभ्रमप्रवाहाधिकरणकाल एव जायमानत्वस्य विवक्षितत्वात् । एवकारोघटादिज्ञाने व्यभिचारवारणाय (तदसदिति ) इदानीन्तन घटज्ञाने व्यभिचारादितिभावः । देहात्माभिमान शून्ये असम्भाव्यमानत्व विवक्षायां दोषमाह ( हेत्वसिद्धेरिति) चरमब्रह्म साक्षात्कारे व्यभिचारानुद्धारश्च द्रष्टव्यः । असिद्धिमुपपादयति ( नहीति ) देहात्माभिमानोच्छेदवत्य सम्भाव्यमानत्वं विवक्षितं, अतोनोक्त दोषइत्यत्राह ( योगिनामिति ) ( सर्वंहेति ) अनयाश्रुत्या मुक्तस्यज्ञातृत्व

पश्यती"त्यादिभि र्योगिनां मुक्तानांचा हन्त्व ज्ञातृत्वादिप्रतिपत्तिः। अन्यथा संवित्स्वरूपप्रतिभानस्यापि भ्रान्तित्वप्रसंगः । देहात्म भ्रमनिवृत्तावपि तत्प्रतिभासो स्तीतिचेत्! कुतः? श्रुतेरितिचेत्! तुल्यम्। किंच ज्ञातृत्वाव-भासो निरधिष्ठानस्साधिष्ठानोवा? नाद्यः, अपसिद्धान्तात् । न द्वितीयः, संविदधिष्ठानत्वे तत्सामानाधिकरण्येनानुभवितुः ज्ञातृत्वंज्ञानमिति प्रकाश प्रसंगात् ; इदं रजतमिति शुक्तिसामानाधिकरण्येनेव रजतस्य। अधि ष्ठानांतरस्यतु परमार्थस्यानभ्युपगमात् , अपरमार्थस्याप्यन्तत स्संविदधि ष्ठानत्वेनोक्तदोषानपायात । दर्पणादिषु व्यधिकरणतयामुखाद्यध्यास स्तर्हि कथमितिचेन्न;- उक्तोत्तरत्वात् । तत्रहि परमार्थभूते दर्पणे मुख देशत्वमध्यस्यते । तत्रच सामानाधिकरण्यमस्त्येव । किंच सत्यस्य

---

सिद्धे स्तत्समानाधिकरणमहंत्वमपि सिद्धमेव, सर्वं पश्यतीति तद्विष-यकदर्शनसिद्धे रहंजानामीतिप्रतीते स्सिद्धिरित्यर्थः ( अन्यथेति ) असि द्ध्यभावइत्यर्थः ( श्रुतेरिति ) स्वप्रकाशनित्यत्वादि श्रुतिभिः (तुल्यमिति) उक्तश्रुतिभिरहमन्नमित्यादि श्रुतिभिश्चेत्यर्थः ( तत्सामानाधिकरण्येनेति ) तच्छब्दोज्ञातृत्वपरः, अनुभवितुः चिद्रूपस्यात्मन इत्यर्थः। किं ज्ञानत्वेन प्रतीतेऽध्यासः, उत स्वरूपतः? आद्येज्ञातृत्वं ज्ञानमिति प्रतीति प्रसं-गादित्यर्थः । द्वितीयेज्ञातृत्वमिति निरधिकरणतया भासेतेतिभावः । संविदोन्य दधिष्ठानं चेन्नदोषइत्यत्राह ( अधिष्ठानान्तरस्येति ) उक्तदोषे सति सदिदंरजतमिति रजतस्यसतेवात्रापि स्वाधिष्ठानाधिष्ठान संविदा-सामानाधिकरण्या त्पूर्ववत् ज्ञातृत्वं ज्ञानमिति प्रकाशप्रसंगादित्यर्थः । " दर्पणादिष्वि " ति अध्यस्तस्याधिष्ठानगततया प्रतीतिमात्रे दृष्टान्त तयोक्तं, नतुप्रतिबिंबत्वं, ततश्च ज्ञातृत्वाहंत्वयो स्संविद्यध्यासादहं ज्ञातेति साश्रयतया प्रतीतिरुपपद्यतइत्यर्थः । किंमुखमध्यस्यते, उत मुखसंसर्गइति विकल्पमभिप्रेत्याद्ये दोषमाह ( सत्यस्येति ) ज्ञातृत्वा

दर्पणस्याधिकरणत्वं मुखस्यचारोपितस्याधेयत्वं पश्यामः, अत्रतु सत्य तयाभ्युपेतायास्संविदएव मुखवदारोपितत्वाभिमतोहमर्थएवाधिकरणतया प्रतीयते । एवं मुखदर्पण संसर्गाध्यासपक्षेप्यधिकरणसत्यत्वादासिद्धिः । ननु दर्पणे मुखदेशत्वारोपः मुखेवा दर्पणदेशित्वारोपः, एव मत्रापि संविद्यहमर्थदेशित्वारोपइति कःपक्षपातः, यथा संप्रतिपन्नस्य देव दत्तस्य गन्धर्वनगरदेशित्वारोपइतिचेन्न;- सामग्रीसम्भवा सम्भवाभ्यां विशे षात् । तत्रहि दर्पणप्रातिहतप्रातिस्रोतःप्रवृत्त नयनालोकेन देशवियुक्त मुखमात्रग्रहणे ऽनुकूलस्रोतसाच दर्पणदेशे गृह्यमाणे देशत्वादिसाम्या न्मुखदेशभेदाग्रहणाच्च मुखदेशत्वारोपसम्भवः, मुखेच यत्किंचिद्देशव र्तिनि दर्पणदेशवृत्तिवस्त्वन्तरेण देशित्वादिसाम्यात्अन्यदेशवृत्तित्वाग्रहाच्च दर्पणदेशित्वारोपः, अत्रतु संविदिनिर्विशेषायां देश्यन्तरसाम्यासम्भवात्तद्भे दाग्रहासम्भवाच्च कथमहमर्थ देशित्वाध्यासः । अहमर्थे तर्हि संविदेश त्वाध्यासइति चेन्न ;—तदध्यस्तस्य अहमर्थस्य तत्सामानाधिकरण्य प्र तीतियोग्यस्य रजते शुक्तिदेशत्वाध्यासव त्तदनुपपत्तेः । मणिप्रभावि-

---

**ध्यासोऽहंज्ञानामीतिप्रतीतेः, तत्र च ज्ञानमेवाधेयतया अहमर्थएवाधि करणतया प्रतीयते, तच्च नोपपद्यतइत्यर्थः । द्वितीये दोषमाह ( मुखदर्पणेति ) ( सत्यत्वादिति ) अहमर्थरूपं सदेवाद्वि- तीयमिति संविदोमिथ्यात्वंस्यादित्यर्थः । नन्वन्यतरस्मिन् अन्यतरा- ध्यासे नतयो स्सत्यत्वमिथ्यात्वनियमः, दर्पणमुखयो स्सत्यत्वादितिशंकते ( नन्विति ) तथाप्यधिकरणस्य सत्यत्वंस्या दित्याशंक्याधिकरण मिथ्यात्वे दृष्टान्तमाह ( यथेति ) ( तदध्यस्तस्येति ) अहमर्थदेशित्वा- रोपपक्षेप्ययंदोषोबोद्धव्यः । ननुमणिप्रभायां सप्रभाकमण्यारोपे प्रभाया यथाधिष्टानत्वप्रतीति र्मणिगतत्वप्रतीतिश्च, तद्वत्ज्ञातृत्वविशिष्टस्या हमर्थस्य संविद्यध्यासात् संविदभेदप्रतीतिः संविदाश्रयत्व प्रतीतिश्चेति शंकते ( मणिप्रभेति ) मणौप्रभानारोप्यते, स्वतस्सप्रभाकएवमणिः**

षयसप्रभाकमण्यारोपव त्सर्व मुपपन्नमितिचेन्न;- प्रभाश्रयस्यपरमार्थमणे स्सम्प्रतिपन्नत्वेन तस्य तत्प्रभायां तत्साम्यादिभिरारोपस्योपपत्तेः । अत्रापि यदि ज्ञानाश्रयस्सत्यइष्यते ज्ञानस्यसत्यंसाधर्म्यं, तदा तद्धर्मे ज्ञाने कुतश्चित्तदारोपस्सम्भवतीति शंक्येत । नच तत्साधर्म्येपितस्यसंभवः, प्रभावद्धर्मभूतस्य ज्ञानस्य धर्मिणमन्तरेण कदाचिदपि प्रकाशासंभवात् । धर्मधर्मिभावेनतुप्रतीतौ धर्मधर्म्यारोपासम्भवात् गमनेगन्तृत्वारोपवत्तद सम्भवः । नहि मणिधर्मतयैव प्रतीतायां प्रभायां मणिबुद्धिसम्भवः । स्फटिकरागायःपिण्डौष्ण्यादिवत्संविद्यपि तच्छायापत्तितः संसर्गतोवा ज्ञातृत्वमस्त्वितिचेन्न;- जपाकुसुमवह्न्यादे र्वास्तवरागौष्ण्ययोगेन तच्छा-यापत्तिसंसर्गाभ्यां तद्गुणकत्वेन प्रतीत्युपपत्तेः, अत्रतु संविद्यहंकारेच वास्त वज्ज्ञातृत्वा नभ्युपगमात् ; अवास्तवज्ञातृत्वच्छायापत्त्यादा वन्योन्याश्रया नवस्थादिदोषात् । ज्ञप्तिमात्रत्वच्छायापत्त्यादौ ज्ञप्तिमात्रत्व प्रतिभासप्रसं-

---

प्रभायामारोप्यते, अहमर्थस्यतु संविदनाश्रयत्वात्तत्र संविदारोप्यतइति वाच्यम् , तथाचाहमर्थस्य संविदभेदारोपोनस्यादिति पूर्वोक्तदोषस्तद वस्थइत्यर्थः । साधर्म्यांगीकारेपि दोषमाह ( नचेति ) प्रभा यथा मणि धर्मतया प्रत्यक्षसिद्धा तथाज्ञानमप्यहमर्थधर्मतया प्रत्यक्षसिद्धं, तच्च यदिधर्मिणमन्तरेण कदाचित्प्रतीयेत तदा तथाभासमानेध्यासइति शंक्येत, नच धर्मिणमन्तरेण कदाचित् ज्ञानस्यप्रतीतिरस्तीत्यर्थः । औपाधिकभ्रमत्वान्नसाधर्म्यापेक्षेतिशंकते ( स्फटिकेति ) यथासंख्यं विवक्षितम् । अत्रद्वितीय संविद्ग्रहणं दृष्टान्तार्थं (अन्योन्याश्रयेति ) संविदिज्ञातृत्व महंकारच्छायापत्त्या, अहंकारेतु तादृशसंविच्छायाप-त्त्येत्यन्योन्याश्रयः । अहंकारेयद्यन्यच्छायापत्त्या ज्ञातृत्वं तदातस्मि-न्नपि अन्यच्छायापत्त्येत्य नवस्थेत्यर्थः । ननु न ज्ञातृत्वविशिष्टस्यच्छायापत्तिः, येनान्योन्याश्रयस्स्यात, किंतुज्ञप्तिगतस्य ज्ञप्तिमात्रत्वस्याहमर्थेछायापत्तिः, तथाचाहमर्थस्य ज्ञानत्वेसिद्धेतस्य संविदिच्छायापत्त्या संविदोज्ञानाश्रयत्व प्रतीतिसंभवइत्याशंक्य, एवमप्यहमर्थे ज्ञातृत्वभानंनस्यात, अहंज्ञानमित्येव भानंस्यादित्याह ( ज्ञप्तिमात्रत्वेति ) आदिशब्देन छायापत्तिकल्पज्ञानताका-

गाच्च । अहंकारवृत्तिविशेषेऽनुभवस्य छायापत्त्या ज्ञातृत्वप्रकाशइति चेन्न;— ' शब्दगन्धरसादीनां कीदृशी प्रतिबिम्बते ' तिन्यायेन नीरूपस्य च्छायापत्त्ययोगात् । भेदाग्रहमूलभ्रमस्यापि निर्विशेषे दुर्निर्वहत्वस्यान्यत्र प्रपंचितत्वात् । उभयत्रासिद्धमपि चूर्णहरिद्रासंसर्गजरागवत् ज्ञातृत्वंप्रकाशत इति चेन्न;- तथा सति वास्तवज्ञातृत्वप्रसंगात् । आगन्तुकचैतन्यवादावतारस्त्वधिकः, लोकायतवादावतारोवा । तेह्येवमाहुः- 'पृथिव्यप्तेजोवायव एव तत्वानि, तेभ्यश्चैतन्यं किण्वादिभ्योमदशक्तिव'दिति । ननु च ज्ञातृत्वोत्पत्त्यभ्युपगमे स्यादिदं चोद्यं, न पुनरध्यासे । तथाहि- क्रियाशक्तिमा नहंकारो व्यंजकस्वभावत्वात् दर्पणइव स्वानिष्ठतया मुखं स्वक्रियात्मनानुभूतिमभिव्यनक्ति, तत एव जानामीति भ्रमइति । तदपिमन्दं, नित्यप्रकाशस्यानुभवस्या भिव्यक्तिनैरपेक्ष्यात् ; अपेक्षायामपि जडस्याहंकारस्य संविदइव साक्षाद्व्यंजकत्वाभावात् । इन्द्रियादिवद्व्यंजकत्वा भ्युपगमेपि तज्जन्यज्ञानान्तरानभ्युपगमेन तदसिद्धेः । ज्ञानान्तराध्यासस्य त्वद्यापि

---

हंकारस्य संविदिच्छायापत्ति र्विवक्षिता । ननु अन्तःकरणवृत्तिविशेषे अनुभवस्य छायापत्तिः, तस्यच रक्तः स्फटिकइत्यत्र प्रतिबिंबितरक्तद्रव्यस्य स्फटिकेनेव वृत्त्यभेदेन प्रतीताहमर्थस्य ज्ञातृत्वेसति तदभेदाध्यासादात्मनो ज्ञातृत्वोपपत्तिरिति शंकते ( अहंकारेति ) ( नीरूपस्येति ) नीरूपद्रव्यस्येत्यर्थः ( आगन्तुकेति ) ज्ञातृत्वंहि ज्ञानमेव, तथा च जन्य ज्ञानांगीकारा दपसिद्धान्त इति भावः । " क्रियाशक्तिमान् " – क्रियात्मनाभि व्यंजनशक्तिमान् । अभिव्यक्तस्यापि सौरालोकस्य करतलाभिव्यंग्यत्वं दृश्यतइत्यत्राह ( अपेक्षायामपीति) (संविदइवेति) व्यवहारानुगुण्यरूप प्राकट्यापादनाभावादित्यर्थः ( अभ्युपगमेपीति ) दोष इति शेषः । तमेवोपपादयति ( तज्जन्येति ) आध्यासिकज्ञानहेतुतया इन्द्रियवद्व्यंजकत्व मुपपद्यतइत्यत्राह ( ज्ञानान्तरेति ) अन्तःकरणे ज्ञानाध्यास एव हीदानीं चिन्त्यते, तत्सिद्ध्यर्थं च

निरूप्यमाणत्वात् । तज्जन्यज्ञानविषयतया घटादेरिव संविदोपि त्वदुक्तप्रकारेणाननुभूतित्व मिथ्यात्वादिप्रसंगाच्च । किंच- किमनभिव्यक्तस्यैवाहंकारस्यानुभूति व्यंजकत्वं, उताभिव्यक्तस्यवा? नाद्यः, सत्याकारत्वेनानारोपितत्वप्रसंगात् । न द्वितीयः, संविदभिव्यक्तिमन्तरेण तदनभिव्यक्तेः । अनभिव्यक्तायाश्च संविदोऽव्यंजकत्वे स्वयं प्रकाशत्वादि परित्याग प्रसंगात् । तदभिव्यक्तितः पश्चादभिव्यक्तस्याहंकारस्यं तदभिव्यक्ति प्रति करणत्वविरोधात्, तादधीन्यादिप्रसंगाच्च । पूर्वाभिव्यक्तस्याप्यनुभवस्य तद्व्यंग्येनैवाहंकारेणविशदव्यक्तिस्साध्यते, रविकरव्यंग्येन करतलेन पूर्वव्यक्तरविकरविशदीकरण वदितिचेन्न; - निर्द्धर्मके निरंशे स्वप्रकाशे वैशद्यासम्भवस्यान्यत्रोक्तेः । रविकरेतु सधर्मकेसावयवे स्फुटास्फुटभावाद्युपपत्तेः । नच तत्रकरतलेन तद्विशदीकरणं, करतलं प्रतिहतिवशाद्बहुळीभूतस्यालोकस्य सेतुसंरुद्धस्रोतसइव स्वयमेव बहुळतयोपलम्भात् । नच तत्र निरोधएवनास्तीति वक्तुं शक्यं, तिरोधानवैयर्थ्यादिप्रसंगात् । नच निरोधेऽपि बाहुल्यं नास्तीतिशंकनीयं, प्रतीपस्रोतसातात्सिद्धेः । तच्च दर्पणाद्विप्रतिफलितरविकिरणै गर्भगेहान्धकार निरसनादिषु सिद्धं ।

---

अन्तःकरणस्याभि व्यंजकत्वाय ज्ञानान्तरस्याध्यास उच्यते, अयंचोपपादकाध्यास उपपाद्याध्यासवदेवासिद्ध इत्यर्थः ( सत्येति ) मिथ्यावस्तुनः प्रतीतिव्याप्तत्वादित्यर्थः । किमनभिव्यक्ता संविदन्तःकरणमभिव्यनक्ति, उताभिव्यक्ता, आद्येदोषमाह ( अनभिव्यक्तायाः इति ) द्वितीये संविदोभिव्यक्ति रन्तःकरणेनैवेत्य न्योन्याश्रय इत्यत्राह ( तदभिव्यक्तितइति ) ( तादधीन्येति ) अन्यानपेक्षस्वरूप स्वप्रकाशत्वहानि प्रसंगइत्यर्थः । स्वप्रकाशेनैव संविदभिव्यक्ता तदभिव्यक्ताहंकारेण प्रकाश्यत इति नान्योन्याश्रय इत्यत्राह ( पूर्वाभिव्यक्तस्येति ) किमतिरिक्त धर्मप्रकाशो वैशद्यं, उतावयवविशेष प्रकाशः, उतस्वरूपप्रकाशः; त्रितयस्याप्यसम्भवं पदत्रयेणाह ( निर्धर्मइत्यादिना ) ( रविकरेत्विति )

नच तावताकरतलादुपरिष्टादपि बहुळोपलम्भप्रसंगः, मूलाग्रयोरालोकानां घनविरळभावस्य सर्वत्र दीपादिष्वप्युपलब्ध्या प्रतिहतालोकस्याप्यग्रवैरळ्योपपत्तेः। नच मात्रयापि पार्श्वालोकात् करतलो परितनस्या लोकस्य न वैषम्यं दृश्यतइतिवाच्यम्, सूक्ष्मस्य वैषम्यस्य दुर्ग्रहत्वात् । अन्यथा मध्यंदिन मार्ताण्डमण्डला लोकमध्यज्वाज्वल्यमानप्रदीपालोकसन्निधाने तत्रत्यालोकमण्डलस्य बहुळतरत्वेन ग्रहणप्रसंगात् । नच करतलप्रतिहतौ मूलेपितत्प्रसंग., उपलम्भव्यवस्थाप्यत्वा दुपलब्धियोग्य बाहुळ्यस्य । किञ्च– यत्स्वनिष्ठतयाभिव्यक्ते. प्रयोजकंव्यञ्जकत्वं तत्किंज्ञानत्वं, उतज्ञानजनकत्वं, यद्वा इन्द्रियत्वं, उततदनुग्राहकत्वं, उततत्सम्बन्धहेतुत्वं, यद्वा बोद्धृबोध्ययोरन्यतरगत प्रतिबन्धनिराकर्तृत्वं, अथवा साङ्ख्यादिमते घटादिम्प्रतिदण्डादेरिव स्वाव्यतिरिक्तस्वाभिमतानुभूतिं प्रतिजनकत्वमेवेति । नाद्यः, असिद्धः; विरोधाच्च । उत्तरे कल्पास्सर्वेपि संविदो ज्ञानविषयत्वानभ्युपगमेनैव निरस्ताः । विशेषतोपिब्रूमः । न द्वितीयः, इन्द्रियादिभिरनैकान्त्यात् । न तृतीयः, असिद्धेः । अहंकारजन्मनामेकादशानामेवहीन्द्रियत्वं श्रूयते । नचतुर्थः, अदृष्टेश्वरादिभि र्व्यभिचारात् । अत एव न पञ्चमः । इन्द्रियक्रियादिभिश्च व्यभिचारोधिकः । न षष्ठः, शमदमादिभि र्दीपादिभिश्चानैकान्त्यात; दर्पणादिदृष्टान्तस्य च साधनवैकल्यात् ।

---

पीतत्वविशेषस्यावयवविशेषस्य च प्रागभातस्य भानमस्तीत्यर्थः (तदनुग्राहकत्वमिति) दीपादिव दिन्द्रियानुग्राहकत्वं। "तत्सम्बन्धहेतुत्व"-दर्पणादिवत्; इन्द्रियसम्बन्धहेतुत्वं (विरोधादिति) घटादिज्ञानस्य स्वनिष्ठतया घटाद्यभिव्यंजकत्वा दर्शनादित्यर्थः (ज्ञानविषयत्वानभ्युपगमेनेति) जन्यत्वानभ्युपगमेनेत्यपि द्रष्टव्यम्, तेनचरमविकल्पनिरासः (अत एवेति) अदृष्टेश्वरयोः कार्यमात्रहेतुत्वादितिभावः (शमदमेति) शमा-

नचाहंकारापनेयं किंचिदनुभूतिविषयज्ञानोत्पत्तिप्रतिबन्धकं सम्भवति, बाह्यस्यान्धकारादेरिवान्तरस्य किल्बिषादेरप्य हंकारनिवर्त्यत्वाभावात् । अज्ञानस्यापि भावरूपस्याभावरूपस्यवा ज्ञानमात्रनिवर्त्यत्वात् । भवदभिमताज्ञानस्य स्वरूपाश्रयविषयादि दुर्निरूपत्वस्यान्यत्र स्थापनात् । नच ज्ञानप्रागभाव स्तदुत्पत्तिप्रतिबन्धकः, प्रागभावस्य कैश्चित्कारणत्वाभ्युपगमात ; अन्येषामपि कार्यस्य तन्निरसनरूपत्वेन कार्योत्पत्तेः प्रागभावानिरसनापेक्षाया मात्माश्रयप्रसंगात । किंच- व्यञ्जकानां स्वनिष्ठतयाभिव्यंग्याभिव्यंजनस्वभावत्वे सौगतसौहार्दं प्रकाशितम्भवति । अप्रामाण्यंस्वत इतिहि तैरंगीक्रियते । स्वतः प्रामाण्यभंगेचा पौरुषेयी श्रुतिरपि न प्रमाणंस्यात ।

अथमन्यसे- आत्मातावन्निर्विकारइति श्रुतिसिद्धम , तस्य च ज्ञातृत्वाभ्युपगमे विकारित्वप्रसंगः, ज्ञातृत्वं हि गन्तृत्ववत्क्रियाविशेषकर्तृत्वरूपत्वा द्विक्रियात्मकम ; अतः कृतिशक्तिमतोन्तःकरणस्य सैव कृति श्चितिशक्तिरूपात्मसान्निधानेन ज्ञानरूपेवभातीति न क्वचिदपि तात्विकं ज्ञातृत्वं । प्रयोगश्च-ज्ञातृत्वकर्तृत्वाहंत्वादिकं नात्मधर्मः, विक्रियात्मकत्वात्, दृश्यत्वात्, दृश्यनिष्ठत्वात्, अहमर्थसमानाधिकरणतया प्रतीयमानत्वात्, सम्प्रतिपन्नवत । अत्रैवविकारिद्रव्यस्थमिति वा साध्यम । विप्रतिपन्नोहंप्रत्ययो नात्मगोचरः,

---

दिर्बोद्धृगत कल्मषनिवर्तकः, दीपादिर्बोध्यगततिमिर निवर्तकः । असिद्धिमप्याह ( नचाहंकारेति ) ( अभावरूस्येति ) प्रतियोग्यतिरिक्त निवृत्त्यभ्युपगमेनोक्तम् । अहंकारस्याभावरूपा ज्ञाननिवर्तकत्वेपि नप्रतिबन्धकत्वं, प्रागभावस्या प्रतिबन्धकत्वादित्याह ( नचज्ञानेति ) ( कारणत्वेति ) कारणस्याप्रतिबन्धकत्वादितिभावः (अन्येषामिति) निरसनं निवृत्तिः, तथा च कारणीभूताभाव प्रतियोगित्वाभावान्न प्रतिबन्धकतेत्यर्थः ( किंचेति ) व्यंजकस्य ज्ञानस्यस्वनिष्ठतया विषयाभिव्यंजकत्वे सर्व ज्ञानाप्रामाण्यापत्तिरितिभावः । इष्टापत्तिन्निराकरोति (स्वतः प्रामाण्येति )

अहंप्रत्ययत्वात् , देहाहम्प्रत्ययवदिति; यद्वा - आत्मावा ज्ञातृत्व कर्तृत्वाहन्त्वादिरहितः, निर्विकारत्वात्, अन्तःकरणरूपाहंकारव्यतिरिक्तत्वात्, अजडत्वात् , प्रत्यक्त्वात् , आत्मत्वादित्यादिभिश्चेति । अत्र ब्रूमः, यथा निर्विकारत्वमात्मनश्श्रुति सिद्धं तथा ज्ञातृत्वमपि ततएवसिद्धं । तथाहि "अथयोवेदेदं जिघ्राणीति स आत्मे" त्यादि, तथा "एषहि द्रष्टाश्रोते" त्याद्यारभ्य "विज्ञानात्मापुरुष" इत्यादिभिरात्मनएव साक्षाज्ज्ञातृत्वंश्रूयते। निर्विकारश्रुतिविरोधात् भ्रान्तिसिद्धविषया ज्ञातृत्वश्रुतिरितिचेन्न;- विपरिवर्तप्रसंगात् । निर्गुणनिरूपणेच विषयव्यवस्थाया निर्वहणंद्रष्टव्यम् । कथं च ज्ञातृत्वस्य विकारात्मत्वं ? नतावन्मृत्पिण्डादिवत्स्वरूपान्यथाभावेन; तदसिद्धेः। नापि धात्वर्थयोगितामात्रेण, अस्तिभवतीत्यादियोगेनानुभूतेरपि विकारित्वप्रसंगात् । नित्यत्वादस्त्यादेर्विकारत्वं नास्तीति चेन्न;—ज्ञातृत्वेपि समानत्वात् । ज्ञातृत्वस्य कादाचित्कतयोपलम्भा

---

अप्रामाण्यस्यस्वतस्त्वे प्रामाण्यं स्वतोनस्यात्, तथाच श्रुतेर्नस्वतः-प्रामाण्यं, अपौरुषेयत्वेन वक्तृगुणादपि नेतिप्रामाण्यमेव नस्यादित्यर्थः। (क्रियाविशेषेति) क्रियाविशेषाश्रयत्व रूपत्वादित्यर्थः। (नक्वचिदिति) अन्तःकरणे आत्मनिवेत्यर्थः । ज्ञातृत्वकर्तृत्वयो र्विक्रियात्मकत्वं हेतुः । अन्यत्साधारणम् । ( अहमर्थेति ) अहन्त्व समानाधिकरणतया प्रतीयमानत्वादित्यर्थः । अहन्त्वानतिरेकेयं हेतुः (संप्रतिपन्नवदिति) गन्तृत्व घटत्व देहत्वानि यथायोग्यंदृष्टान्तः (आत्मावेति) अन्नधर्मरहित इत्यपिसाध्यं विवक्षितम् , तदभिप्रायेण द्वितीयहेतुव्यतिरिक्ता व्यतिरेकिणः । ज्ञातृत्वादिराहित्येसाध्ये द्वितीयहेतुरन्वयी, तत्राहंकारपदं स्वरूपकथनं । श्रुतेरन्तः करणपरत्व शंकापनुत्तये विज्ञानात्मापुरुष इत्येतदुपात्तं (नतावदित्यादि) मृत्पिण्डस्य घटावस्थायां स्वरूपान्यथाभावा यथाघटस्य तद्विकारत्वं, तथा ज्ञातृत्वावस्थायां पुरुषस्यान्यथाभावोनेति नतस्य विकारात्मत्वमित्यर्थः ( नापीति ) ज्ञातृत्वदशायामात्मनः ज्ञाधात्वर्थयोगितामात्रेणेत्यर्थः । कादाचित्कधात्वर्थयोगित्वं विकारित्वमित्याशयेन शङ्कते ( नित्यत्वादिति ) ज्ञातृत्वे ज्ञानस्वरूपाश्रयत्वे ( ज्ञातृत्वस्येति ) जानाम्यज्ञासिषमितिकादाचि

ज्ञानंविकारइति चेन्न;- अस्त्यादेरपि कादाचित्कतयोपलम्भात्तस्या‡पि विकारत्वप्रसंगात् । ज्ञाननित्यत्वश्रुत्यादिबला दस्त्यादे र्नविक्रियात्मत्वमिति चेत् ? तर्हि ज्ञातृत्वमपि श्रुतिसिद्धमेव, यथा— " नविज्ञातुर्विज्ञातेर्विपरिलोपोविद्यत"इति । एवंचसति कर्मोपाधिक तत्तत्करणव्यापारद्वारकनियतविषयज्ञान प्रकाशाप्रकाशा वपेक्ष्य उदयास्तमयव्यदेशः। उक्तंचभगवता शौनकेनापि-"यथानक्रियते ज्योत्स्ना मलप्रक्षाळनान्मणेः । दोषप्रहाणा न्नज्ञानमात्मनः क्रियते तथा॥यथोदपानकरणात्क्रियते नजलाम्बरम् । सदेव नीयते व्यक्ति मसतस्सम्भवः कुतः॥ तथाहेयगुणध्वंसा दवबोधादयोगुणाः। प्रकाश्यन्ते नजन्यन्ते नित्याएवात्मनोहि ते ॥ ". इति । एतेन ज्ञाननित्यत्वे नित्योपलम्भप्रसंग इति चोद्यमपि परिहृतम् , कर्मोपाधिकसंकोचवशात्तदप्रकाशात् । ज्ञानसंकोच विकासाभ्या मात्मनोविकारित्वमितिचेन्न;— साक्षात्तदाश्रयत्वाभावात् , व्यवधानेन तदाश्रयत्ववचनस्य स्वरूपाविषय निर्विकारश्रुत्यासह विरोधगन्धाभावात् । एवं च सति प्रत्यक्षकलहशान्तिरपिस्यात् । यच्च विक्रियात्मकत्वादि त्याद्यनुमानतूलजालं, तत्रापि बाधानैकान्त्यादि पवनदहनसंमूर्छनम । बाधस्ताव न्नित्यज्ञातृत्व प्रतिपादकश्रुत्यादि वशात्सर्वत्रासिद्धः । विशेषतश्च भ्रमः - विक्रियात्मकत्वादिति स्वरूपपरिणामविवक्षायामसिद्धिः । क्रियायोगमात्रादिविवक्षाया मस्त्यादिभिरनैकान्त्यं । दृश्यत्वा न्नात्मधर्मइत्यस्य दूषणन्तु निर्विशेषत्व

---

‡कतयोपलंभादित्यर्थः (ज्ञानमिति) (अस्त्यादेरिति) अनुभूतिरासीदस्ति भविष्यतीति कादाचि त्कतयोपलम्भादित्यर्थः(ज्ञाननित्यत्वेति)कालस्यातीतादिरूपत्वा त्तत्तत्कालावच्छिन्नरूपेण सत्त्वस्याप्यतीतत्वादि व्यवहारादित्यर्थः (श्रुतिसिद्धमिति) नित्यतयेति शेषः । आत्मनोज्ञातृत्वे विकारित्वप्रसंगइति तर्कं दूषयित्वानुमानमपि दूषयति (यच्चेति) (नित्यज्ञातृत्वेति)औपाधिकत्व व्यावृत्यर्थं नित्यपदम् । " जानात्येवाय " मिति नित्यज्ञातृत्वप्रतिपादक श्रुतिः । " कर्ताबोद्धे " ति कर्तृत्वश्रुतिः । " आत्मन्येष नदोषाय शब्दोहमिति योद्विजे " ति अहन्त्वाश्रयेप्रमाणं । ( क्रियायोगेति )

निराकरणेऽग्राह्यम् । दृश्यनिष्ठत्वादित्ये तदप्यात्मनो दृश्यत्वसमर्थनेन परिहृतम् । यदि पुनर्द्रष्टृनिष्ठत्वनिषेधे तात्पर्यं, तदा व्याघातः; नहि ज्ञातृत्वमेव ज्ञातृनिष्ठन्नभवतीति सम्भावयामः । यच्चा हमर्थसमानाधिकरणतया प्रतीयमानत्वादिति, तदप्यात्मत्वेना नैकान्तिकम् । अस्ति ह्यहमात्मेत्यपि सामानाधिकरण्यम् । आत्मातावदस्ति, तस्यात्मत्वंनाम किमपि नास्तीति कुत्रानैकान्त्यमितिचेत् ? तर्हि ज्ञातानाम कश्चिदस्ति ज्ञातृत्वंनाम किंचिन्नास्तीति परिभाष्य तत्पक्षीकारेण प्रयोगं परित्यज्य तूष्णीमास्व । एषुच ज्ञानमात्रात्मधर्मत्व निषेधे त्वप्रसिद्धविशेषणता । ज्ञानधर्मत्वमात्रनिषेधें ऽशतस्सिद्धसाधनता । ज्ञातृधर्मत्वनिषेधे स्ववच नविरोधापसिद्धान्तौ ।

विकारिद्रव्यस्थमिति साध्येऽप्यात्मनोपि शरीरसम्बन्धादि मात्र विकाराभ्युपगमेन सिद्धसाधनता। उत्पत्तिविनाशादि विकारिद्रव्यनिष्ठमिति साध्येपि बाधाप्रयोजकत्वादि रपरिहार्यः ।

---

क्रियापदं धात्वर्थपरं, तच्च भावप्रधानम् । आदिशब्देनजन्यत्वंविवक्षितम् । "अस्त्यादि" भिरित्यत्र संयोगादिर्विवक्षितम् ( आत्मनोदृश्यत्वसमर्थनेनेति ) अप्रयोजकत्वं , अस्त्यादिभि रनैकान्त्यंचेतिभावः । प्रत्यक्त्वमात्मत्वमिति विवक्षायां दोषउक्तः, ज्ञातृत्वमात्मत्वमिति विवक्षितंचेद्बाधोपीत्याह ( यदिपुनरिति ) बाधमुपपादयति ( नहीति ) ( तर्हीति ) तथाचाश्रयासिद्धिरितिभावः ( अप्रसिद्धेति ) निर्धर्मकासिद्धेरितिभावः ( अंशतइति ) यत्किंचिज्ज्ञानधर्मत्वनिषेधे धर्मभूतज्ञानं प्रत्यधर्मत्वात् सिद्धसाधनतेत्यर्थः । "अंशतः"- अंशेन, ज्ञानैकदेशं धर्मभूतज्ञानमादायेतियावत् । सामान्यतोज्ञानधर्मत्वनिषेधे "बोद्धाविज्ञानात्मापुरुष" इति श्रुतिबाधः, ज्ञातृधर्मत्वनिषेधे प्रतिज्ञाविरोधापसिद्धान्ताभ्यां निग्रह इत्याह(ज्ञात्रिति)(बाधेति ) आत्मनोनित्यत्वज्ञातृत्वयोः श्रुतत्वादितिभावः ।

एव महम्प्रत्ययोनात्मगोचरः, अहम्प्रत्ययत्वादित्यत्रापि ज्ञानमात्राह मर्थाद्यात्मशब्दार्थ विकल्पेन सिद्धसाधनत्वाप्रसिद्धविशेषणत्व विरोधापसिद्धान्तादि र्द्रष्टव्यः ।

नच भ्रान्तिस्थलेहम्प्रत्ययस्यानात्मविषयतया अन्यत्रापि तथैव भवितव्यम्, अति प्रसगात् । यश्चात्माज्ञातृत्वादिरहितइति साध्ये निर्विकारत्वादितिहेतुः, सच विकारविकल्पेन निरस्तप्रायः । यस्त्वन्तःकरणरूपा हंकारव्यतिरिक्तत्वादिति, सोपितेनैवात्मनो ज्ञानरूपत्वमपि निषेद्धुं शक्यमिति प्रसंजकत्वा दप्रयोजकत्वाच्च परिहृतः । ज्ञातृत्वाभ्युपगमे जडत्वपराक्त्वानात्मत्वादि प्रसंगइति विपक्षे व्याप्ति सिद्धेः प्रयोजकत्वमिति चेन्न; ज्ञातृत्वे प्यजडत्वादिकं भवत्विति त्वत्प्रयुक्तप्रसंगव्याप्ता वपि पर्यनुयोगावतारात् । एतेनाजडत्वादित्यनुमानमपि निरस्तं भवतीति ।

यश्चाहंकारस्य ज्ञातृत्वमिच्छति, सकथं दृश्यत्वप्रकृतिपरिणामत्वादिभि र्देहस्याचेतनत्वंसाधयति । यदिपुन र्दृश्यत्वाद्यविशेषेपि देहस्याचेतनत्व मन्तःकरणस्य ज्ञातृत्वंच देहत्वादिवद्व्यवस्थितम्मन्येत, तदान्तःकरणस्यैव द्रष्टृत्वमपि साधयेत, पर्यनुयोगपरिहारयोस्तुल्यत्वात् । विकारिद्रव्यविशेषस्यैव परिणाम विशेषवशा ज्ज्ञातृत्वमिच्छन्नूनं

---

( एवमहम्प्रत्ययइति ) अत्रापि ज्ञानमात्रात्मविवक्षायां अप्रसिद्धविशेषणता, ज्ञानमात्मेतिविवक्षायां पूर्ववदंशत स्सिद्धसाधनत्वादि, ज्ञातिरयुक्तावपसिद्धान्तः, अहंकारस्य तन्मते ज्ञातृत्वात , अहमर्थत्वमात्मत्वमित्युक्ते प्रतिज्ञाविरोधइत्यर्थः । अप्रयोजकतांचाह ( नचभ्रान्तीति ) ( सचेति ) धात्वर्थायोगित्वमसिद्धं, अस्त्यादियोगात , अन्यथाभावराहित्यमप्रयोजकम् , अस्त्यादियोगवज्ज्ञातृत्वस्यापि सम्भवादित्यर्थः । (ज्ञातृत्वइति ) पर्यनुयोगादित्यन्वयः ( एतेनेति ) अप्रयोजकत्वादित्यर्थः ( यश्चेति ) चेतनत्व ज्ञातृत्वं द्रष्टृत्वमिति देहस्यात्मत्वंसिद्धमितिभावः । ( विकारीति ) आत्मनोपकृष्टस्य ज्ञातृत्वादेः शरीरेस्थापनसम्भवात ,

भूतचैतन्यवादमेवाभिप्रेत्यात्मापह्नवादिषु भिक्षुपादप्रसारणन्यायेन प्रवर्तत इत्यायातम् । अतस्सिद्धं ज्ञातृत्वमात्मन एव, तच्चा नध्यस्तं सत्यमिति ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु शतदूषण्यां ज्ञातृत्वाध्यासभङ्गवाद

स्सप्तविंशः ॥२७॥

---

आत्मापह्नवः सुकरइति तवाभिप्रायइत्यर्थः ।

नवीनस्तु – " असंगोह्ययंपुरुषः, " " असंगोनहिसज्जते " " दृष्टैवपापंच पुण्यंचे " ति श्रुतिभिः कर्तृत्वभोक्तृत्व निषेधान्नात्मा कर्ताभोक्तावा । नच करोमिभुंजइति प्रतीत्यनुपपत्तिः, अन्तःकरण गतस्यैव तस्य प्रतीतेः तस्याहमनुभवे प्रकाशमानत्वात् । नचात्र मानाभावः, विरुद्धधर्माध्यासानुपपत्त्या ऽहमनुभवगोचरस्य द्वैरूप्याव- श्यम्भावात् । तथाहि – आत्माज्ञानरूपः, ज्ञानं च नचैतन्यविषयः, नचैकस्य चैतन्यविषयत्वाविषयत्वे सम्भवतः । दुःखत्वपरमप्रेमास्पदत्वे अपि परस्परासंकीर्णं स्वाश्रयंव्यवस्थापयतः । परमप्रेमास्पदत्वं हि सुख त्वेन, नच सुखस्य दुःखाश्रयतासम्भवति, तयोर्विरोधात् । एवमप रिच्छिन्ने अहमर्थेपरिच्छेदानुभवोपि द्वैरूप्येमानम्; अहमिहैवास्मीति परिच्छेदानुभवात् । नच देहपरिमाणमेवारोप्यतइति वाच्यम्, आत्म ग्रहणस्यैव तदाऽसम्भवात्; तद्गत परिमाणग्राहकेन्द्रियस्यैव तद्द्रव्य ग्राहकत्वात् । तस्मात्परिच्छिन्नमेवान्तःकरणं स्वसाक्षितादात्म्यापन्नमह मनुभवविषयइति वाच्यम् । किंच-दुःखाद्याश्रयस्य पराभिमतात्मन इन्द्रियग्रहणयोग्यत्वेपि तत्रप्रतीयमानं परिच्छिन्नं परिमाणमनारोपितम्, तत्रतद्बाधकाभावात्; तस्यैवात्मत्वे घटादिवदनित्यत्वप्रसंगेन मुख्यतु

पपत्तेः , तत्तादात्म्यात् सर्वगतोपि दृगात्मापरिच्छिन्नतयाभासत इ-त्यहमर्थोद्विरूपः । तदुपाधिकमेव तत्तादात्म्याध्यस्तात्मकर्तृत्वादि न स्वाभाविकमिति ।

अत्रोच्यते । यदुक्तं ज्ञानविषयताप्रतीत्यर्थं मामित्यत्रात्मनोन्योभासत इति । तन्न, तथापि मामित्यात्मनोपिभासमानतया तस्यविषयतावश्यम्भावे तदन्यकल्पनस्य व्यर्थत्वात् । नन्वन्तःकरणस्यविषयता, तदभेदादात्मन औपाधिकमितिचेत् ? अहंप्रतीतिविषयमन्यं तस्याभेदाध्यासंच कल्पयित्वा तदुपाधिकविषयताकल्पनादपि घटादिगताया अहन्त्वगताया वा विषयताया आरोपस्य लघुत्वात् । वृत्तिविषयत्वस्यैव वा प्रतीतौ को विरोधः । स्वविषयकवृत्त्यभिन्नतया चैतन्यस्य प्रतीतेः तन्निबन्धन एव वा ज्ञानविषयत्वव्यवहारोस्तु । किंच प्रकाशत्वमात्रं न स्वप्रकाशत्वम् , मीमांसकनैयायिकयो रविवादप्रसंगात् । अतो भेदगर्भ विषयत्वातिरिक्तं प्रकाश्यत्व मात्मनोस्त्येवेति तद्भाने को विरोधः । किंच कर्मत्वं हि न विषयत्वं, गमनादे र्निर्विषयस्य कर्माभावप्रसंगात्; विषयोपि कर्मत्येतावत , किन्तु क्रियाजन्यफलभागित्वं; ततश्च ज्ञाधात्वर्थरूपस्वजन्यव्यवहारशालित्वात् ज्ञानकर्मत्वप्रतीतौ को विरोधः । ननु घटं जानामि मां जानामीति प्रतीत्यो र्वैषम्यानुपलम्भे कथं क्वचि द्विषयत्वं भासते क्वचित्कर्मत्वमिति वैषम्यमिति चेन्न;- सर्वत्र कर्मत्वस्यैव प्रतीतेः । वस्तुतस्तु व्यवहारप्रयोजकीभूतो ज्ञाननिरूपितः कश्चिदतिशयो व्यवहारविषये भासते, मां जानामीति स एव भासते, सतु ज्ञानातिरिक्तगतो विषयतेत्युच्यते, सोत्र न भासते । किंच धर्मभूतज्ञानविषयत्वस्यात्मन्यनुभवात् न कश्चि द्विरोधः । नच ज्ञानाश्रयत्वे घटवदज्ञानत्वप्रसंगः, " विज्ञानात्मा पुरुषः " " जानात्येवायं पुरुष " इत्यादिभि रप्रयोजकसहचारमात्रमूलतर्कानुमानयो र्बाधात् ।

यदुक्तं सुखस्य दुःखाश्रयत्वं न सम्भवतीति । तत्तुच्छं, तथात्वे बाधकाभावात । सुखस्य दुःखाश्रयत्वादर्शनमेव बाधकमिति

चेन्न; - आत्मन स्सुखरूपत्वं त्वदुक्तन्यायेन श्रुत्या च सिद्ध मेव । तस्य दुःखाश्रयत्वं च प्रत्यक्षश्रुतिभ्याम् । किमवोधिकं दर्शनं नाम । वैषयिकसुखस्य दुःखाश्रयत्वादर्शनमात्रेणात्मसुखस्यापि तदनाश्रयत्व साधने तद्वदेव नित्यत्वानाश्रयत्व मनित्यत्वं वा स्यात् । नचैवं दुःखस्यापि सुखाश्रयत्वप्रसंगः, आकस्मिकापादनस्य सर्वत्र सुलभ तया सर्वव्यवस्थाभावप्रसंगात् । तद्धेत्वनिष्टनिदर्शनं च ज्ञानस्यापि ज्ञानाश्रयत्वस्योपपादितत्वात दृश्यत एव ।

यच्च परिच्छिन्नत्वेन द्वैरूप्यसाधनम् । तदपि न, देहस्यपरिच्छि न्नतया देहात्मभ्रमादेव तदुपपत्तेः । नचेन्द्रियेणात्मग्रहणासम्भवः ; परिमाणग्रहणाभावेपि त्वचा घटादिग्रहणदर्शनात् । तथा चन्द्र समुद्रयो ग्रेहणदर्शना च्च । समुद्रेपि परिमाणमात्रग्रहणाभ्युपगम साहसस्या त्मन्यप्यनिवार्यत्वात् ।

किंच त्वमिहास्सइति चाक्षुषधीमूलाद्वाक्या दहमिहास्मीति जाय-मानाधी श्शरीरविषयैव, तदविशेषादन्यत्रापि तथा।यच्चपरिच्छिन्न परिमाण मनारोपितं बाधकाभावादिति, तत्र किमन्तरेणोपाधिमात्मन्यपि परिच्छे-दारोपोस्ती त्यभिमतं, उतपरिच्छिन्नान्तःकरणतादात्म्यारोप मात्र मिति? आद्ये अनारोपित मित्यनुपपन्नम् । देहातिरिक्त परिच्छिन्न वस्त्वंतरकल्पनागौरवमधिकम् । द्वितीये परिच्छिन्नतयाप्रतीयमान देहतादात्म्यारोप एवास्त्विति ।

यदप्याह- "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण"इति श्रुतिरेव मनस्तादात्म्यापन्नस्यात्मनो भोक्तृत्वेमानम् , मनस्तादात्म्यस्यैव मनोयो-गत्वात् । " सधमानः सन्नुभौलोकावनुसंचरति ध्यायतीव लेलाय-तीवेति " श्रुतिरप्यत्रमानम् । इवशब्दस्य मिथ्यात्वद्योतकत्वात् । भगवानपि केवलात्मनिकर्तृत्वं निषेधति- "तत्रैवं सतिकर्तारमात्मानं केवलं तुयः। पश्यत्यकृतबुद्धित्वान्नस पश्यति दुर्मतिरि" ति । श्रीभागवते

भगवद्वचनं- शोक हर्ष भय क्रोध लोभ मोह स्पृहादयः । अहं-
कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मन ” इति । सूत्रमपिमानं “कर्ता·
शास्त्रार्थवत्वात्” “यथाच तक्षोभयथे” ति । यथावाश्यादीतरकारक
संविधानप्रयुक्तं कर्तृत्व तदसमवधानेतु स्वाभाविक मकर्तृत्वमेव,
तथात्मनोपि शरीरेन्द्रियादि समवधानप्रयुक्तं कर्तृत्वं, तदसमवधानदशायां
नेतिनतस्य कर्तृत्वं स्वाभाविक मित्यर्थइति । तन्न, तथाहि - शरीरेन्द्रिय
साधारणयोगस्यैव मनसासंभवात् आत्मेन्द्रियेतिश्रुतिरत्रप्रमाणम् । ध्या·
यतीवेत्यत्रइवशब्दो त्पार्थः, भुक्तमिवेतिवत् । स्वहितं चिन्तयन्नका-
र्स्न्येनचिन्तयितुं शक्नोति, स्वहितं चरन्नकार्त्स्न्येनचरितुं शक्नोती
त्यर्थः । “ कर्ताबोद्धा विज्ञानात्मा पुरुष ” इति इममेव पुरुषं प्रत्य
भिज्ञाप्य कर्तृत्वादिकथनात् । यद्वा “ तस्मादेवंविद्वान् वीवनृत्येत्
प्रेवचलेत् इत्यत्र यथा विनृत्तत्वे प्रचलनत्वे सत्यपि
तत्प्रयोजकत्वेनो न्मत्तेसिद्ध स्योन्मादस्याभावा दिवशब्दप्रयोगः,
एवमिहापि भगवति सकल्पप्रयोजकस्य सत्यसकल्पत्वस्य प्रवृत्तिप्र-
योजकस्या प्रतिहतशक्तित्वस्य च जीवेऽभावादिव शब्दप्रयोगः । यद्वा
“तस्यैषाश्रुतिः यत्रैतत्कर्णावपि निगृह्यानिनद मिवनदथुरिवाग्नेरिवज्वलत
उपश्रृणोती” त्यत्र यथा प्रसिद्धवैधर्म्यादिव प्रयोगः; एव मिहापि । वैधर्म्यं
च प्रागुक्तं अन्यमेयत्वादिकं च । उपक्रमे उभौ लोकौ संचरती
त्यभिधाने कर्तृत्वनिषेधासम्भवादेव मेवार्थस्य वाच्यत्वात् । स स-
मान स्सन्निति बुद्धिवैशिष्ट्याभिधानात् औपाधिकत्वमेव कर्तृत्वस्योच्य
त इति चेन्न;- तस्य तत्प्रतिपादकत्वासम्भवात् । यदाह शंकरः -
“ समानः सदृशः सन्, केन ? सन्निहितत्वा द्धृदयेन. हृदि च पुण्ड
रीकाकारो मांसपिण्डः तात्स्थ्यात बुद्धिर्हृत, किंपुन स्सामान्यं ? अश्व
माहिषव द्विवेकतोनुपलब्धिः. अत्रभास्यावभासकयो र्विवेकतोनुप
लब्धिः प्रसिद्धा, आलोकोह्यवभास्येन सदृशो भवति; यथा
रक्त मवभासयन् रक्तसदृशो रक्ताकारो भवति; तथा पीतं

ल्लोहितं वावभासय न्नालोक स्तत्सदृशो भवतीति ” । तन्न, हृच्छब्देन मांसपिण्डस्यैवोपस्थानात् , मुख्यार्थबाधकाभावेन लक्षणा नुपपत्तेः । तत श्च न बुद्धे संसन्निधिः । तस्मा त्समान स्साभि मान इत्यर्थः । “ तत्रैवं सति कर्तार मात्मानमि ” ति तु भगवतैव निर्व्यूढम् । शोकहर्षेत्यादिनाचार्यैरेव निर्व्यूढम् । सूत्राच्च न त्वदुक्तार्थ मुपलभामहे; किन्तु सापेक्षत्वमात्रमिति ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्यपादसेवासम-
धिगत परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरण
परिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापर
नामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
ज्ञातृत्वाध्यासभंगः
सप्तविंशः स्कन्धः ॥२७॥



श्रीरस्तु ।

श्रीमतेरामानुजायनमः ।

## अथाष्टाविंशोवादः ॥

चतुर्दशविधस्यापि साक्षिवर्गस्य साक्षिणे ।
स्वतस्सर्वविदेतस्मै नमस्सर्वान्तरात्मने ॥

यत्पुनराहुः— आसंसार मज्ञानसाक्षित्वेन ब्रह्मावतिष्ठते । श्रूयतेहि- "साक्षीचेता केवलो निर्गुणश्चे" त्यादि । नच स्वप्रकाश प्रत्यक्षा दैन्द्रियकप्रत्यक्षाच्चा तिरिक्तं साक्षिप्रत्यक्षं नाम नकिञ्चिदुपलभ्यत इतिवाच्यम् , सुखमहमस्वाप्स मेतावन्तं कालं न किंचिदह मज्ञासिष मिति सुखाज्ञानयोः साक्षित्वेन सुप्तोत्थितस्य स्वात्मपरामर्शादिति ।

अत्रोच्यते । तत्र तावत्स्वरूप सुखप्रकाशः स्वप्रकाशान्तर्गतः, न पुनस्साक्षिप्रकाशगम्यः । वैषयिक सुखप्रकाशस्तु सुषुप्तिकाले न

---

( चतुर्दशेति ) यथा साक्षिवर्गस्य साक्षित्वं न विषयावभासात्मकत्वं; तथा भगवतोपीति भावः । किं तर्हि भगवत स्साक्षित्व मित्याकांक्षायां सर्वसाक्षात्कर्तृत्वमेव सर्वसाक्षित्व मित्याह ( स्वत इति ) अद्वैतश्रुतिबलात ज्ञानस्वरूपमेव वाच्य मित्यत्राह ( सर्वान्तरात्मन इति ) विशिष्टाद्वैत एवाद्वैतश्रुते स्तात्पर्यमिति भावः । ( सुखमह मिति ) सुखाज्ञानयो स्साक्षित्वेनैव सुखमहमस्वाप्सम्- त्येतावन्तं कालं न किंचिदवेदिषमिति च सुप्तोत्थितस्य स्वात्मपरामर्शादित्यन्वयः । अयं परामर्श स्स्वापकाले साक्षिणा सुखाज्ञानयोः प्रकाशादेव, नान्यथेत्यर्थः । " स्वरूपसुखप्रकाशः "- स्वरूपसुखस्यप्रकाश इत्यर्थः ( साक्षिप्रकाशगम्यइति ) साक्षिप्रकाशत्वेनावगन्तव्यइत्यर्थः ।

सम्भवति । अज्ञानमपि तदानीन्तनस्मृत्यभावेनानुमीयते, तत्कालादिवत् । नहि सुषुप्तिकालोपि तदानी मेव साक्षिणा गृहीत इतीच्छसि । इष्यमाणत्वेपि कालोपाधेरपि कस्य चिद्गृहीतव्यतया जागरनिर्विशेषत्व प्रसंगः । तदग्रहणे पुनरेतावन्तं कालमिति कालविशेषणोपादानविरोध स्स्यात् । किंच किमिदं साक्षित्वमिति निरूपणीयं । किं साक्षात्कर्तृत्वं, उत साक्षात्कारत्वं, उताविद्यकप्रकाशंप्रतिहेतुत्वं, उतान्यंत्किंचित्? इति । नाद्यः, ब्रह्मणोवास्तवज्ञातृत्वानभ्युपगमात् । लोकेपरमार्थ द्रष्टारमेव साक्षीति व्यपदिशन्ति । आविद्यकस्यापि ज्ञातृत्वस्या हंकारनिष्ठत्वा भ्युपगमेन विलीनाहंकारेषु सुषुप्त्यादिकालेषु तदसिद्धेः । न द्वितीयः, "साक्षाद्द्रष्टरि संज्ञाया" मित्यनुशासनविरोधात् । आहचाहमर्थात्मत्वसमर्थनमध्ये- "साक्षित्वं च साक्षाज्ज्ञातृत्वमेव, नह्यज्ञातुस्साक्षित्वम्, ज्ञातैवहि लोकवेदयो स्साक्षीति व्यपदिश्यते, न ज्ञानमात्रं, स्मरतिचभगवान् पाणिनिः 'साक्षाद्द्रष्टरि संज्ञाया' मिति साक्षाज्ज्ञातर्येव साक्षिशब्द"मिति । औपचारिकसाक्षित्वा भ्युपगमेपि ससाक्षात्कारः किं स्वात्मनः, उताविद्यायाः? नाद्यः, स्वप्रकाशस्यान्यवैमुख्येन दृगधीन सिद्धेर विद्यायाएवा सिद्धिप्रसंगात् । नद्वितीयः, मिथ्याभूता विद्यागोचरत्वेन वृत्तिज्ञानवत् ब्रह्मणोपि मिथ्यात्वप्रसंगात् । स्वरूपेणाबाधितस्यापि वृत्तिज्ञानस्य विषयमिथ्यात्वादेवाहि मिथ्यात्व मुपवर्णितं

---

( तदानींतनेति ) तदानीन्तनतयास्मृत्यभावेनेत्यर्थः । तत्कालादिवदित्यनुमेयत्वे दृष्टान्तः । ननुनस्मृत्यभावेनानुमानम्, ब्रह्मस्वरूपमेवहि कालः, तस्यचग्रहण मस्त्येवेति शंकमानंप्रत्याह ( इष्यमाणत्वेपीति ) सिसाधयिषितं साक्षित्वं किमिति विकल्प्यदूषयति ( किंचेति ) आविद्यकं ज्ञातृत्वमभ्युपगतमेवेत्यत्राह ( लोकइति ) ( आविद्यकस्यापीति ) तेनात्मन्यौपाधिकाध्यासोपि निरस्तः । उपाधिविलये नौपाधिकाध्यासा सम्भवात् ( स्वप्रकाशस्येति ) स्वात्मन इत्युक्त्या स्वस्यैव प्रकाश

सविषयमिथ्यात्व वादिभिः। स्वगोचर एव साक्षात्कारः पुनरविद्यागोचरइव भातीतिचेन्न;- तथाप्यविद्याया असिद्धिप्रसंगात् । नह्यन्यगोचरस्य ज्ञानस्य ततोन्यगोचरत्वेनभ्रमः, अनुव्यवसायस्य विषयावच्छिन्न ग्राहकत्वात् । तद्भ्रमेपि नतेन ज्ञानेनतत्सिद्धिः । किंच स्वगोचर एवायं साक्षात्कारो अविद्यागोचरइव कस्यभाति? नतावद्ब्रह्मणः, अहम विद्यागोचरइति ज्ञातुमसमर्थत्वात् । नाप्य विद्यायाः, अहं ब्रह्मणो गोचरइव भामीति तस्या अपि ज्ञातुमशक्यत्वात् । नचान्यस्य, तदुभयव्यतिरिक्तस्यकस्यचित् सुषुप्त्यादिषु अप्रकाशमानत्वेनतदयोगात्।

---

इत्यभिधानात् अन्यवैमुख्यसिद्ध्याविद्याया असिद्धिप्रसंगइत्यर्थः (स्वगोचरइति) ततश्च मिथ्याविषयत्वाभावात् न मिथ्यात्वमितिभावः (तथापीति) तथोक्तावपीत्यर्थः। दोषोस्तीतिशेषः। कुतइत्यत्राह (अविद्यायाइति) तदुपपादयति (नहीत्यादि) (अनुव्यवसायस्येति) व्यवसायोपनीतस्यैवा नुव्यवसायविषयत्वादितिभावः। अंगीकृत्याप्याह(तद्भ्रमेपीति) (तेनेति) अविद्यागोचर भ्रमविषयेणेत्यर्थः। तद्विषयस्यैव तत्साधकत्वादित्याशयः। यद्वा तादृश भ्रमांगीकारेपि न तद्भ्रमेणतत्सिद्धिः. पारतन्त्र्येण तद्विषक ज्ञानस्य तदसाधकत्वादिति भावः। दोषान्तरमाह (नहीति) हिरवधारणार्थः। हेतौ पूर्वं भ्रममंगीकृत्य तेनासिद्धिरुक्ता. इदानीं तेनासिद्धावपि तद्भ्रमविषयभूतज्ञानेनसिद्धि शंकान्निराकरोति ( तद्भ्रमेपीति ) ( अहमिति ) अहमर्थस्यैव भ्रान्तिज्ञानाश्रयत्वात् ब्रह्माविद्ययो रतथात्वान्नतयो रुक्तभ्रान्तिरितिभावः ( अहंब्रह्मणइति ) इवशब्दएवार्थः। अहं ब्रह्मणोगोचरएवेतिवा भामीतिवा ज्ञातुमशक्यत्वादित्यर्थः। दूषयति (तदुभयेति) (तदयोगादिति) अविद्यागोचरत्वभाना योगादित्यर्थः। ननुस्यादेष मन्यथाख्यातिपक्षे तद्विषयत्वस्याभावाद विद्यायाअसिद्धिः. अस्माकंतु भ्रमेसति मिथ्याभूत मविद्याविषयकत्व मप्यस्तीति स्याद विद्यासिद्धि

नच न कस्यचिदितिवक्तुं शक्यम, भातीत्यादेः प्रतिसम्बन्धिन मन्तरेण प्रयोगादृष्टेः । मिथ्यासाक्षित्वमिति चेन्न ;—

साक्षित्वं यदि मिथ्या स्यात् साक्ष्यन्तर परिग्रहः ।
नचेदाधारभावेपि मिथ्यात्व मनुवर्ण्यताम् ॥

नन्वासंसार मविद्याया स्स्वात्मन श्च प्रकाशो ब्रह्मणः, अपवर्गेतु स्वात्मन एवेति नियम इति चेत्? किमपवर्गदशाया मविद्यायाः प्रकाशो निवृत्तो नवा? निवृत्त श्चेत स्वात्मैव निवृत्त स्स्यात् । अनिवृत्तत्वे त्वविद्यापि तदानीं मनिवृत्ता स्यात् । प्रागपि प्रकाशमात्राधीन सिद्धि र्हि सा । यदिच ब्रह्मस्वरूपसाक्षात्कार एवाविद्यामपि प्रकाशयेत्? ब्रह्मणो विद्याया श्च तादात्म्यं प्रसज्येत । स्वरूप मेव हि तेन प्रका

---

रिति किंचेत्यत्रः प्रागुक्तदोषस्योद्धारंशंकते (मिथ्येति) (साक्षित्वमिति) तथाच मिथ्याभूत साक्षित्वसाधक साक्ष्यन्तरंवाच्यं, तत्रापि तथेत्यनवस्थेत्यर्थः । नच साक्षित्वमपि स्वस्मिन्नेवाध्यस्यतइति न साक्ष्यन्तरमितिवाच्यं, तथाप्यनन्त साक्षित्वकल्पनया अनवस्थाया दुस्तरत्वात् । साक्षित्वविषय [ का ] भावेपि साक्षित्व म्मिथ्यास्त्वित्यत्राह (नचेदिति) तथासति ब्रह्मणस्सर्वाधिष्ठानतया निरधिष्ठ
स्तस्यापि साक्षित्वस्य मिथ्यात्वमस्तु, अनध्यस्तत्वापि
यद्वा यथा साक्षित्वस्याध्यासाभावेपि मिथ्यात्वं,
धिष्ठानतया निराधिष्ठानस्यापि मिथ्यात्व
हित्या विशेषादितिभावः । नन्वज्ञानागोच
सिकमिति ब्रूमः, स्वरूपमेवतु कर्तृ आखं
नाविद्यायाः असिद्धिः; नापिमिथ्यात्वं, घा
टादिज्ञानवद्र सत्यत्वादितिशंकते ( नन्वि

शनीयम्। अस्वरूपप्रकाशत्वे वृत्तिवन्मिथ्यात्वं प्रागेवोक्तम्। विषयापहार एव वा स्वरूपापहारोपि वा यद्वा तद्वा मिथ्यात्व मस्तु। किंचाविद्यासाक्षित्वं ब्रह्मण स्स्वरूप मेव, ततोन्यद्वा? पूर्वत्र स्वरूपस्य नित्यत्वा न्नित्य मविद्यासाक्षित्वप्रसंगः। उत्तरत्र तत् किं परमार्थभूत मुतापरमार्थभूतम्? आद्ये ब्रह्मव्यतिरिक्तसत्यत्वानभ्युपगमेनापसिद्धान्तः। द्वितीये तत् किमविद्यास्वरूप मुत तदारब्धम? नाद्यः, विषयस्वरूपमात्रस्यैव साक्षिस्वरूपत्वे घटादे र्यावद्विनाशं व्यवधानादि

---

त्वनएवाविद्या प्रकाशत्वादित्यर्थः (प्रागेवेति) नच सत्यविषयकत्वात्सत्यता, सत्यशुक्तिविषयस्यापि रजतभ्रमस्यमिथ्यात्वांगीकारादिति भावः। (विषयापहारएवेति) विषयापहारइति परमतेन, स्वरूपापहारइति मायिमतेन। यदिमिथ्याविषयवृत्तेः स्वरूपापहारः, ब्रह्मण्यपि तथास्यात्, यदि ब्रह्मणिविषयापहारएव, वृत्तावपितथास्यात्, सर्वथावृत्तिसाक्षिणोर्न वैषम्यंस्यादिति तात्पर्य (विषयस्वरूपेति) अविद्यासाक्षित्वं यद्यविद्या तर्हि घटादिसाक्षित्वमपि घटादिरेवस्यात्, ततश्चविषयेविद्यमानेपि साक्षित्वाभावस्य वक्तुमशक्यतया सर्वथाभानप्रसंगइत्यर्थः। नच घट प्रकाशदशायां साक्षी न स्वकीयइति वाच्यम्, तदा अर्थान्तरस्याप्य भानप्रसं-

'वादप्रकाशः, अहमर्थ तद्धर्माज्ञानादीनामप्य प्रकाशप्रसं'

'ःकरणोपहितचैतन्यसम्बन्धाभावादप्रकाशः, शुद्धचि

'तःकरणोपाधिकभेदवच्चैतन्यासम्बन्धेना प्रकाशप्रसं-

'धि नेशुद्धचैतन्याद्भेदं सम्पादयति, अतो विद्याप्रका-

'पिभासेत, अविद्यावच्छुद्धचैतन्ये कल्पितत्वात्।

स्साक्षी, साक्षित्वंच अकर्तृत्वेसतिद्रष्टृत्वं, द्रष्टृ

र्तृत्वव्याघातात्, किन्तु वृत्त्यवच्छिन्नं चैतन्यं

टेतं नस्वरूपं, स्वरूपभूतं साक्षित्वन्तु उदा

दशाया मप्यविच्छेदेन प्रकाशप्रसंगात् । न द्वितीयः, साक्षित्वाधीन सिद्धे रविद्यायाः साक्षित्वजनकत्वायोगात् । साक्षित्वस्याप्यनादित्वा भ्युपगमेनापसिद्धान्ता च ।

एतेनाविद्याप्रकाशं प्रति हेतुत्वपक्षो निरस्तः, अनादे र्हेत्वन पेक्षणात । नापि चतुर्थः, तस्यापि स्वरूपान्तर्भावबहिर्भावादिविक- ल्पदुस्थत्वादिति । अतो न कथंचिदपि निर्विशेषज्ञानमात्रस्य सा- क्षित्वं सम्भवतीति साक्षित्वोपदेशसामर्थ्यादेव ज्ञातृत्वादिक मात्मनो वश्याभ्युपगन्तव्य मिति ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां साक्षित्वभंगवादोष्टाविंशः ॥२८॥



---

सीनमिति नवीनजल्पितंनिरस्तं ; उक्तरीत्या अज्ञानप्रकाशघटादिप्रका- शयोः प्रसंगात् । किंच एवमपि साक्षीचेतेति श्रुतिप्रतिपन्नस्य ब्रह्मणिसाक्षि त्वस्यानिर्वाहः । यत्तो दासीनबोधात्मत्वं स्वरूपभूतंसाक्षित्वमिति । तन्न, अनुशासनविरोधस्योक्तत्वात् ।

( साक्षित्वस्येति ) नच साक्षित्वन्नाविद्या तदारब्धंवेतिवाच्यं, अ- विद्यान्यस्या नाविद्याकस्यमिथ्यात्वायोगात् । तदधीनत्व न्त्वनादे र्नसम्भ वतीत्युक्तं ( अनादेरिति ) ब्रह्मस्वरूपस्यैवाविद्या प्रकाशत्वादिति भावः ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्यपादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण परायणेन तत्प्रसादलब्ध महाचार्या परनामधेयेन रामानुजदासेनविरचितायां शतदूषणी व्याख्यायां चण्डमारुताख्यायां साक्षित्वभंगः

अष्टाविंशस्स्कन्धः ॥ २८ ॥



श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

# अथैकोनत्रिंशो वादः ॥

विदित मनुवदन्तो विश्व मेत द्यथाव
द्विदधति निगमान्ताः केवलं यन्मयत्वम् ।
अविदितबहुभूमा नित्य मन्त र्विधत्तां
हयवरवदनोसौ सन्निधि स्सन्निधिं नः ॥

यदाहुः- शास्त्रप्रत्यक्षयो र्विरोधे शास्त्रं बलीयः । अन्यथा ऽद्वैतशास्त्रस्य प्रामाण्योच्छेदप्रसंगात् ,अपरोक्षदेहात्मभ्रमादेश्च दुर्निरासत्वा

---

(विदितमिति) यथावद्विदितमित्यन्वयः । प्रत्यक्षेण सत्येनहिविश्वं प्रतीयते, तच्च प्रत्यक्षं यथार्थं, ततश्च निषेधकत्वाभिमतश्रुते र्धर्मिग्राहक विरोधा त्तन्मयत्वएव तात्पर्यमितिभावः (केवळमिति) नतुनिषेधन्तीत्यर्थः । अद्वैतशास्त्रस्य प्रत्यक्षात्प्राबल्यं वक्तुं सामान्यतश्शास्त्रस्य प्रत्यक्षाद्बली यस्त्वमाह ( शास्त्रेति ) ( अपरोक्षेति ) देहातिरिक्तात्मासिद्धौ शास्त्र-मात्र प्रामाण्योच्छेद प्रसंगइतिभावः । ननु प्रत्यक्षविरुद्धशास्त्रस्य प्रत्यक्षा त्प्राबल्यव्युत्पादन मद्वैतशास्त्रस्य प्रत्यक्षबाधकत्वार्थं हि क्रियते ! तच्चायुक्तम्, अद्वैतशास्त्रस्य प्रत्यक्षाविरोधाभावेन व्युत्पादनवैय र्थ्यात् । तथाहि- न शास्त्रप्रत्यक्षयोर्विरोधः, अधिष्ठानत्वेन घटाद्यनुगत सन्मात्रस्यैव प्रत्यक्षग्राह्यत्वात; घटादेः प्रत्यक्षग्रहणायोग्यत्वात् । तथाहि इन्द्रियव्यापारानन्तरं घटादिस्सर्वतोभिन्नएवहि प्रतीयते, संशय विपर्यया-दर्शनात; भेदस्यप्रतियोग्येक वित्तिवेद्यस्य न प्रत्यक्षेण ग्रहःसम्भवति, सर्वेषां प्रतियोगिनाम सन्निकर्षात । नच प्रतियोग्यंशेस्मृतिः, तथापि

पातात् । नचात्र विरोध एव न सम्भवतीति वाच्यं, भेदप्रपंच

---

वैशिष्ट्यांशे तदभावात् । नच तदंशेपि प्रत्यक्षत्वं, सम्बन्धिद्वयप्रत्यक्षं वि-नातदसम्भवात् । तस्मात्प्रत्यक्षायोग्य प्रतियोगिन स्तदेक वित्तिवेद्य भेदस्य तदेकवित्तिवेद्यघटस्य च प्रतिभासो भ्रम इति केचित् । अन्येतु घटोपि प्रत्यक्षः, सत्वं त्वधिष्ठानगतमेव भासते, न घटादिगतमिति न प्रत्यक्षविरोध इत्याहुः । अपरेतु सत्ताजाति र्वा विद्यमानत्व लक्षणं वा सत्वं प्रत्यक्षेण प्रतीयते, नत्वबाध्यत्वरूपं, अतो न विरोधः इत्याहुः । इतरेतु " सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्य"मिति श्रुतिबला न्मन्मथ मन्मथ इतिवत सत्यत्वोत्कर्षापकर्षप्रतीतेः प्रकारा न्तरेण तदसम्भवात व्यवहारकालाबाध्यत्वं सर्वकालाबाध्यत्वमित्येवो त्कर्षापकर्षयो र्वाच्यत्वात प्रपंचे व्यवहारकालाबाध्यत्वं विषय इति न विरोध इत्याहुः । तस्मा त्सर्वथाविरोध एव नास्तीत्याशंक्याह (नचात्रेति) अय माशयः- आद्यपक्ष स्ताव:दनुपपन्नः, सर्वस्माद्भेदस्याग्रहेपि कोट्यनुपस्थिते र्विशेषादर्शना द्वा संशयाभावोपपत्तेः ; क्वचित्संशयस्यैव दर्शनाच्च । किंच सदंशेपि मिथ्यार्थप्रतियोगिकभेद संशयादर्शनात तद्ग्रहोवाच्यइति तज्ज्ञानमपिभ्रमस्स्यात। किंच प्रतियोग्यंशे कारणाभावेन भ्रमत्वेपि घटांशे भेदांशेच प्रत्यक्षत्वे नानुपपत्तिः, अन्यथा सत्यपितथाप्रसंगात् । किंच प्रतियोग्यंशेस्मृतिः, भेदे तद्वैशिष्ट्यांशेच प्रत्यक्ष मस्तु; नच सम्बन्धिद्वयप्रत्यक्षाभावा न्न सम्बन्धप्रत्यक्षं स्यादिति वा-च्यम् , मुख्यसम्बन्धप्रत्यक्ष एव तद्धेतुत्वात ; नच लाघवा त्सम्ब न्धत्वमेव कार्यतावच्छेदकप्रविष्टमिति वाच्यम्. जगत्सत्यत्वे अति प्रसक्तत्वेना सत्यत्वे प्रत्यक्षत्वस्यैवाभावेन सम्बन्धप्रत्यक्षत्वस्या कार्यता वच्छेदकत्वात । द्वितीयपक्षोप्यनुपपन्नः; तत्र घटादौ सदभेदप्रतीति रस्ति नवा? नाद्यः, विरोधस्यापरिहारात । अन्त्ये सन्घट इति विशि ष्टव्यवहारानुपपत्तिः । भेदाग्रहा त्तदुपपादने अनिर्वचनीयख्यात्युच्छेदः ।

गोचरत्वतन्निषेधाभ्यां विरुद्धविषयत्वोपलम्भात् । नच देशकालस्वरूपा दिभेदेन निषेधः संकोच मर्हति, "नेह नानास्ति किंचन" तस्मान्नविज्ञान मृतेस्ति किंचित्क्वचित्कदाचि द्विजवस्तुजात " मित्यादिभि स्सर्वदेशसर्वकालवर्त्तिनां ब्रह्मव्यतिरिक्तवस्तूनां सर्वप्रकारनिषेधोप लम्भात् । "त्रय आवसथा स्त्रयः स्वप्ना" इति च स्वपस्येव जागरसुषुप्तयो रपि मिथ्यात्व मेवह्युच्यते । नच जागरादिवत्स्वप्नस्यापि सत्यत्व मुच्यत इति विपरिवर्तः, स्वप्नशब्देनैव तयो रुपचरितत्वात् । स्वप्न

---

तृतीयोप्यनुपपन्नः, सच्छब्दस्य लोके जात्यादावेव व्युत्पन्नतया सदेव सत्यं ज्ञानमित्यादौ पारमार्थिकत्वासिद्धिप्रसंगात् । चतुर्थो प्ययुक्तः, किञ्चित्कालविशेषिताबाध्यत्वग्रहणे तत्रैव सत्यपदव्युत्पत्तेः पूर्वोक्तदोषात् । ननु लोके बाधाभावमात्रे व्युत्पत्तिरितिचेत्? केनचिद्बाधाभावस्य शुक्तिरजतेपिसत्त्वात्. बाध्यत्वसामान्याभावस्यग्रहे विरोधानिस्तारात् । तस्माद्विरोधस्सर्वथा दुष्परिहरइति ।

ननु विधिनिषेधयो र्देशकालान्तर विषयत्वेन वा विधेयनिषेध्ययोः स्वरूपभेदेनवा संकोचा न्न विरोध इत्यत्राह ( नच देशेति ) आदिशब्देनप्रकारो गृह्यते । सम्भवति हि ब्रह्मणोन्यस्स्वतन्त्रंनास्तीति स्वातन्त्र्यादिप्रकारेण निषेधः (सर्वप्रकारेति) विज्ञा नमृतइति ब्रह्मव्यतिरिक्तस्य कृत्स्नस्यापि निषेधा त्पारतन्त्र्यादेरसिद्धेर्न स्वातन्त्र्यादिना निषेधइतिभावः । ननु "त्रयः स्वप्ना स्त्रय आवसथा" इति स्वप्नोपलक्षितावस्थात्रयस्य आवसथशब्देनावसथवत् सत्यत्वमेवोच्यत इत्यत्राह (नच जागरादिवदिति) (स्वप्नेति) प्रथमश्रुतस्यावसथस्यैवो द्देश्यत्वात स्वप्नशब्देन उपचारात् स्वप्नकल्पत्वं विधीयत इत्यर्थः । अस्तु वा स्वप्नइत्यस्यैवोद्देश्य समर्पकत्वं ; तथा प्यावसथशब्देन नसत्यत्वविधिः , तस्य तत्राप्रसिद्धत्वादि

शब्दस्यच मिथ्यार्थेलोकप्रसिद्धत्वात्। अन्यत्र तदभावात्। नह्यावसथशब्द स्सत्ये प्रसिद्धः । नच भेदविधायकश्रुतिबलात् भेदनिषेधकश्रुतीना मन्यपरत्वं, निषेधस्यैव प्रसंगसापेक्षत्वेन विध्यपेक्षया परत्वात् अपच्छेद न्यायेन बलीयस्त्वात् । नच सिद्धवस्तुविषययो स्समुच्चयविकल्पादिसम्भव इति निर्गुणवादे निरूपितम्। अतो त्यन्तविरोधे रज्ज्वधिकरणसर्पभूविदळन वत्कम्बुकळधौतवच्चोभयबाधोन्यतरबाधोवावश्यंभावी । तत्रनाद्यस्सम्भवति, पारमार्थिकत्वापारमार्थिकत्वातिरिक्तकोटिदर्शनाभावात् । निषेधकतया पर- स्य च शास्त्रस्य निषेधकान्तरादर्शनात् । नच विधिरेव निषेधस्य निषेध इति वाच्यम्, तस्य स्वरूपत स्स्वार्थावगाहित्वात्। निषेधस्यतु प्रतियोगि

---

**स्याह (अन्यत्रेति) ननु तुल्यप्रमाणेन भेदशास्त्रेण भेदश्रुतेरन्यपरत्वसिद्धे- र्न प्रत्यक्षस्य शास्त्रविरोध इत्याशंक्याह (नचेति) नन्वरुणैकहाय नीव व्रीहियववद्वा विकल्प स्समुच्चयो वास्त्वित्यत्राह (नच सिद्धेति) अत उक्तरीत्यासंकोचाभावा द्विरोधः शास्त्रप्रत्यक्षयोरिति शेषः । किञ्च यदि निषेधक मुभयो रस्ति तदाध्यस्याद्युभयबाधः । नचोत्तरस्य निषे धक मन्य दस्ति । नच प्रत्यक्षमेव तन्निषेधकं, तथात्वं हि घटादिप्रत्य क्षस्य घटाभावो नास्तीत्यद्वैतशास्त्रवेद्यमिथ्यात्व घटकाभावप्रतिक्षेप रूपतया वाच्यम्, तथाच तादृशाभावप्रसंगसापेक्षत्वेन शास्त्रात्प रत्वं स्यात् , तत श्च प्रत्यक्षशास्त्रयो रन्योन्याश्रयः, तस्मा दुभयो र्निषेधाभावा न्नोभयबाध इत्याह (निषेधकतयेति ) निषेधकतया परस्ये त्युक्तिः प्रत्यक्षस्य निषेधकत्वे तदपेक्ष्यत्वेन ततः परत्वं न स्या दित्य भिप्रायः । ननु प्रतिक्षेपरूपत्वाभावेपि प्रतियोगिन एवाभावाभावत्वेन प्रत्यक्षस्य तन्निषेधकता स्यादित्याशंक्याह (नचेति) स्वरूपतः प्रतियो ग्यवगाहनमात्रा न्न निषेधकत्वं बाधकत्वं वा, शुक्तिरजतप्रतीत्या तद भावस्य निषेधबाधयो रदर्शनात् ; अपितु प्रतिक्षेपरूपत्वादेव, तच्च**

प्रतिक्षेपात्मकतयैव स्वरूपलाभः । विनाशादिषु कथमिति चेन्न;- तत्रापि प्रतियोग्यपेक्षत्वात् ॥ * ॥ विनाशादिषु शब्देषु नास्तिशब्दस्यगोचरः । नञुपश्लेषवैधुर्यात् केवलं प्रतिपद्यते॥*॥ अतोन्यतरबाधोवशिष्यते । बाधश्चबलवतादुर्बलस्यैव नचप्रत्य क्षपरोक्षयोः प्रत्यक्षत्व परोक्षत्वाभ्यामेव प्राबल्यदौबल्यें, शुक्तिप्रत्यक्षेण शुक्तिरजतप्रत्यक्षबाधस्य दीपशिखादिभेदानुमानेन दीपैक्य प्रत्यभिज्ञान बाधस्यच परित्यागप्रसंगात् ।नचोपजीव्योप जीकभावात प्रत्यक्षशास्त्रयोः

---

प्रत्यक्षस्य नास्तीत्यर्थः । ननु घटो विनष्ट इत्यादिषु प्रतियोगिनिषेध रूपता दृश्यते ; प्रतियोगिप्रतिक्षेपरूपतातु नास्ति, नञो श्रवणादिति शंकते (विनाशादिष्विति) (केवलमिति) प्रतियोगिप्रातिक्षेपरूपतारहित इवापाततो ज्ञायत इत्यर्थः (अत इति) ननु कथ मनिर्धारणेना न्यतर बाधपरिशेषः? निषेधकस्य परस्य शास्त्रस्य निषेधकान्तरादर्शनादिति पूर्वोक्त्या निषेधकशास्त्रस्य प्रत्यक्षबाधकत्वस्यार्थसिद्धत्वादिति चेन्न;- तत्रहि निषेधाभावे बाधो न सम्भवतीत्युक्तं, नतु निषेध स्सर्वो बाधक इति, अनन्यथासिद्धत्वेनैव बाधकत्वस्य वक्ष्यमाणत्वात् (बाधश्चेति) ननु बलवतो बाधकत्वं वदतः प्रत्यक्षस्यापि बलवत्त्वे बाधकत्व मभिमतम्; तच्चायुक्तं, निषेधरूपत्वाभावेन विधे र्बाधकत्वाभावस्योक्तत्वादिति चेन्न;- विधेरपि निषेधबुद्धिद्वारा बाधकत्वस्याभिमतत्वात्; विधे स्त्वप्रतिपक्ष निषेधकत्वं च बलवत्त्वकृतमिति न पूर्वोक्तविरोधः (शुक्तीति)बाध्यत्व प्रयोजकाभावेपि बाध्यत्वं दृश्यत इत्यर्थः (दीपेति) बाधकत्वप्रयोजका भावेपि बाधकत्वं दृश्यत इत्यर्थः । एतेन प्रत्यक्षत्वं परोक्षबाधकत्व प्रयोजकं परोक्षत्वं प्रत्यक्षबाध्यत्वप्रयोजकमिति निरस्तं; व्यभिचारात् । शुक्तिप्रत्यक्षरजतप्रत्यक्षयो र्बाध्यबाधकभावे अननुगमान्नेदं प्रयोजकम्, अनुगतस्य वक्ष्यमाणत्वाच्चेति विवक्षितं (नचोपजीव्येति) उपजीव्य

प्राबल्यदौर्बल्ये; व्याप्तिग्राहक प्रत्यक्षोपजीविनानुमानेन ज्वालैक्य प्रत्यक्षबाधस्योक्तत्वात् । नच पूर्वत्वादुपक्रमवत्र प्रत्यक्षप्राबल्यं, पूर्वत्वमात्र-स्यापच्छेदेपरस्यैव प्राबल्यनिश्चयेना प्रयोजकत्वात्। नच परत्वस्यबाधप्रयोज कत्वे माध्यमिकमर्यादया त्र्यन्तानामपि बाध्यत्वमितिवाच्यं, परत्वमात्रस्य बाधकत्वेनानुपन्यासात् । अन्यथाद्विचन्द्रज्ञानादिना प्राक्तनचन्द्रैकत्व ज्ञा-नादिबाधप्रसंगात् । तस्माद्द्वयोर्ज्ञानयोर्विरोधेसावकाशत्वा दन्यथासिद्धंबाध्यं, अनवकाशत्वादनन्यथासिद्धंबाधकम्। अवकाशश्चाविरुद्धविषयलाभोप्रमाण कोटिनिवेशोवा । तत्रपूर्वस्येहासम्भवो दर्शितः । उत्तरस्तुकारणदोषेपर्यव-सितः । नच शास्त्रजन्यज्ञानस्य दुष्टकारण प्रसूतत्वं, कर्त्रभावेनैव भ्रमविप्र-लम्भप्रमादाशक्तिमूलत्वशंकोच्छेदात्;अविच्छिन्नसम्प्रदायत्वेन शैथिल्यावा पोद्वापादि विचारवैदेशिकत्वात्; उपबृंहणब्रह्ममीमांसाद्यनुग्रहेण प्रतिपत्तृ-

---

जातीयत्वेन प्राबल्यं विवक्षितं । अत एव नरशिरः कपालशुचित्वानु मानस्याशुचित्वबोधकागमबाधः (माध्यमिकेति) "न सन्नासन्नसदसन्नचा प्यनुभयात्मक"मिति मिथ्यात्वरूपचतुर्थकोटेरपि तेन निषेधा द्बाध स्स्या दित्यर्थः (परत्वमात्रस्येति ) शास्त्रान्तरापेक्षया शास्त्रस्य परत्वं प्राबल्यप्रयोजकं, न परत्वमात्रमिति भावः (ज्ञानयोरिति) ज्ञायते नेनेति ज्ञानं ज्ञानकरणं, यथाश्रुते विरुद्धयो र्ज्ञानयोः वक्ष्यमाणाविरुद्ध विषय-लाभासम्भवात् (अन्यथासिद्धमिति) प्रतीयमानार्थे प्रामाण्यंविनापि स-म्भावितोदयत्व मन्यथासिद्धत्वं (उत्तरस्त्विति) अप्रमाणकोटिनिवेशस्य कारणदोषं विना ज्ञातु मशक्यत्वा त्तस्य बाध्यत्वप्रयोजकत्वोक्ति स्तत्प्रयोजककारणदोषे पर्यवस्यतीत्यर्थः (कारणदोष इति ) कारणगतो दोषः, प्रमातरि प्रमाणे प्रमेये वादोषाद्धि अप्रमाणं ज्ञानं भवति ( नच शास्त्रेति) अत्र नच शास्त्रं दुष्टमिति वक्तव्ये ज्ञानस्य दुष्टकारणप्रसूतत्वा भाववचनं लाघवार्थं; अन्यथा हि नापि प्रतिपत्ता दुष्टः, ब्रह्ममीमांसादि

दोषाणामपि निर्मूलत्वात् । अत श्शब्दप्रमाणदोषतया सम्प्रतिपन्न समस्त सम्भावनाविरहे शास्त्रजन्यज्ञानस्य निर्दोषकारणप्रसूतत्वेन प्रामाण्यात् प्राबल्यं प्रतिष्ठितम् । नच प्रत्यक्षदोषतया संप्रतिपन्न काचकामीलादि दोषविरहात् गगनपवन दहनसलिल वसुधादि गोचरप्रत्यक्षस्यापि प्राबल्यं स्थितमितिवाच्यम्, भेदवासनायाः प्रत्यक्ष दोषत्वेन वासनामूलाभेदभ्रमेदृष्टत्वात् ; भेदवासनायाश्च बीजांकुरन्यायेन प्रवाहानादितया तत्तत्प्रत्यक्षमूलत्वोपपत्तेः । अतोदुष्टकारणप्रसूतं भेदज्ञानं निर्दोष निगमान्त जन्मना निर्विशेषाद्वैतज्ञानेन बाध्यत इति ।

अत्रोच्यते । यदुक्तं- शास्त्रबलीयस्त्वाभावे सत्य द्वैतशास्त्र प्रामाण्योच्छेद प्रसंग इति । तदसत् , प्रत्यक्षाविरोधिन्येवा द्वैते द्वैते वा तत्प्रामाण्यस्य निर्वाह्यत्वात् । यच्च प्रत्यक्षप्राबल्ये देहात्मभ्रमादौ दुर्निरसत्वमिति । तदयुक्तं, देहात्मभेद प्रत्यक्षानुसारिणैव शास्त्रेणतन्निरसनात् । अन्यथा प्रत्यक्षाच्छास्त्रस्य बलीयस्त्वे यूपादित्यैक्यवाक्येन यूपादित्यभेदग्राहि प्रत्यक्षबाधप्रसंगात् । यच्चोक्तं निषेधस्य सर्वविषयत्वोपलंभेन संकोचो नयुज्यत इति । तदपिमन्दम्, सर्वविषयत्वे सत्येवहि प्रमाणान्तर विषयात् संकोचो

---

मत्वादिति प्रतिज्ञान्तरं स्यात्; तत्र भागासिद्धिवारणार्थं मद्वैततात्पर्य निश्चयवान् प्रतिपत्तेत्यपि विशेषणीयं स्यात (प्रामाण्यादिति) प्रामाण्याच्छास्त्रस्या प्रमाणकोटिनिवेशासम्भवा त्प्राबल्यं प्रतिष्ठित मित्य ध्याहारेणयोज्यं ( वासनामूलेति ) ताविमौ चन्द्राविति प्रत्यभिज्ञादिष्वित्यर्थः (देहात्मभेदेति) ममशरीमिति प्रत्यक्षं विवक्षितं । ननु शिलापुत्र

कस्य शरीरमिति वदौपचारिकमिति चेन्न; - ममशरीरमित्यादौ स्वसंबंधिकत्व नियमदर्शनस्यैव तत्र संबन्धित्वोपचार निबधनत्वात् । किंच अहं शरीरमितिप्रतीतेः कदाप्यदर्शनात् ममशरीरमिति प्रतीति भेदनिबन्धनैव । नन्वेवं भेदग्रहेसति स्थूलोहमिति कथमभेदारोपः ? कथं वा जपास्फटिकसन्निधानेसति जपा रक्तरूपे इदमस्माद्भिन्नमिति भेदग्रहेसती मे रक्तरूपेइत्य भेदाध्यासः? कथंच स्फटिककुसुमे इति भेदे गृह्यमाणएव स्फटिके रक्ताभेदभ्रमः? यदिचेदन्त्वेन भेदग्रहस्य तदीयैतदीय रक्तरूपत्वेना भेदग्रहाविरोधित्वा ज्जपास्फटिकत्वाभ्यां भेदग्रहेपि रक्तत्वस्फटिकत्वाभ्या मभेदग्रहाविरोधित्वाच्च उपाधिमाहात्म्या द्भ्रमः, तर्हीहापि अहन्त्व शरीरत्वरूपेण भेदग्रहेपि अहन्त्वस्थूलत्वरूपेण भेद ग्रहाभावात् तेन रूपेणाहं स्थूलइत्यारोप उपपद्यतइति पश्य । अहमर्थे अहन्त्वमेव शरीरभेदः,शरीरेच शरीरत्वमेवाहंभेदः, अतस्ताभ्यां रूपाभ्याम भेदग्रहोनसम्भवति।स्थौल्यन्नाहमर्थभेदः,नचाहन्त्वं स्थूलत्वावच्छिन्नप्रातियोगिकभेदः, अतस्तद्ग्रहेपि भ्रमोपपत्तिः । ननु चन्द्रप्रादेशिकत्वप्रत्यक्षस्या धिकपरिमाणबोधकशास्त्रेणबाधः,अप्सूपलब्धस्य गन्धस्य'उपलभ्याप्सुचेद्गन्धं केचिद्ब्रूयुरनैपुणाः । पृथिव्यामेव तंविद्यादपोवायुं च संश्रित' मिति शास्त्रेण बाधोदृष्टइतिचेन्न;- यो दूरतो यत्परिमाणतयोपलभ्यते सततोधिक परिमाणइति प्रत्यक्षेणव्याप्तिग्रहा त्परिमाणबोधकागमस्य प्रत्यक्षमूलत्वाच्च दूरत्वस्याल्पपरिमाणभ्रमजनकत्वस्य प्रत्यक्षेण ग्रहणाद्दोषजन्यत्वेननिश्चितस्य प्रत्यक्षस्य संवादकव्याप्ति प्रत्यक्षबला न्मूलप्रत्यक्षगौरवाच्च बाधोयुक्तः । वस्तुतोबाधोप्रामाण्यज्ञापनं, तच्चात्रदोषजन्यत्वानिश्चयादेव कृतमिति नतस्य शास्त्रेणबाधः. किंतु प्रत्यक्षेणबाधितेनिर्बाधं शास्त्रेण परिमाणविशेषबोधनम् । अप्सुगन्धप्रत्यक्षमपि पूर्वंतत्तद्गन्धशून्यतयोपलब्धानां पश्चात्कुसुमादिसंसर्गेतदुपलब्धेस्तदपायेच तदननुवृत्तेरन्वयव्यतिरेकाभ्यां कुसुमादिसंसर्गस्याप्सु गन्धोपलब्धौ दोषत्वनिश्चयात् , दोषजन्यत्वेन

युज्यते । अन्यथा नाहिंस्यादित्यस्या ग्निषामीयवाक्येनापि संकोचो

---

निश्चितं शास्त्रेण बाध्यते दोषादेव बाधितं वा शास्त्रस्यावकाशं ददाति , शास्त्रं चैतन्न्यायमूलकमेवेति ( अन्यथेति ) नन्वर्थवादत्वा न्न स्वार्थपराणि यूपादित्यादिवाक्यानि, नतु प्रत्यक्षविरोधात्; नचैवं देवताविग्रहाद्यसिद्धिः, अन्यपरादपि मानान्तराविरुद्धार्थसिद्धे रसम्भ वात्; मानान्तरविरोधेतु अन्यपरत्वा न्न स्वार्थसाधकत्वमिति चेत? अन्यपरत्वंहि वाक्यान्तरोपयोग्यर्थप्रतिपादनमुखेन तच्छेषत्वं, तत श्च शब्दस्वाभाव्या दध्ययनविधिबला द्वा यत्स्वार्थपरत्वं द्वैतवाक्यसाधारण मवगतं तदेव विधिवाक्यार्थोपपादनार्थ मप्यावश्यक मभूदिति अन्य परत्वेन वेदान्तवाक्यादपि स्वार्थतात्पर्याव्यतिरेक एव सिद्धयेति ननु तात्पर्यव्यतिरेकः। अहो बत विपश्चितामपि कुलक्रमागत मिदं महा दाढ्यं, यत्तुरगाधिरूढतुरगविस्मरणन्याय मनुसरति ! अद्वैत वाक्यानां प्रत्यक्षविरोधोस्तीति वदन्ति, तत्रैव षड्विधतात्पर्यलिंग मर्पाति । नहि किंचिदपूर्वत्वं महाभूतं, किन्तु प्रत्यक्षाविरोधः, तदधीनहेतुविशेषाश्च । षड्विधेष्वपि लिंगेषु अपूर्वत्वमेव प्रधानं, तस्मिन् सतीतरेषा मसत्त्वेपि तात्पर्यसिद्धेः, असति तस्मिन् इतरेषां सत्वेपि तात्पर्यासिद्धेः । तच्च द्विरूपं 'ताद्रूप्येण परिच्छित्तिः तद्वि· पर्ययतोपि वे'ति । तत्र कथं प्रत्यक्षाविरोधे जाग्रति अपूर्वत्वं? कथं चोपक्रमः? कथंचोपसंहारः? कथंचाभ्यासः? प्रत्यक्षविरोधे तेषां तत्परत्वासिद्धेः । फलार्थवादतयोपपत्तयोपि प्रत्यक्षाविरुद्धार्थस्यैव । किंच- तात्पर्यवत्वेपि न श्रुतेः प्रत्यक्षात्प्राबल्यम् , रूपरस परावृत्ति मृदुभावपर्यन्त मुख्यश्रवणस्य प्रत्यक्षविरुद्धत्वेन उष्णीकरणमात्रलक्षणा भ्युपगमात् । तत्त्वमसिवाक्यस्यापि त्वंपदवाच्ये तत्पदवाच्याभेदस्य प्रत्यक्षविरुद्धतया निष्कृष्टचैतन्यैक्ये लक्षणाभ्युपगमात् ।

ननुवेदस्य निर्दोषत्वात् प्रामाण्यंनियतं, नतु प्रत्यक्षस्य, तस्य तु सविषयत्वान्नियतं, अतोवेदस्य सर्वथापि प्रामाण्यं रक्षणीयं, प्रत्यक्षस्य तु सविषयत्वं रक्षणीयम् ; ततश्च वेदस्य प्रातीतिकार्थे प्रामाण्यस्वीकारे यदि प्रत्यक्षस्य सविषयत्वमलभ्येत तदाश्रुतेरन्यत्रप्रामाण्यंवाच्यं, यदि यथाश्रुतांगीकारे प्रत्यक्षस्य निर्विषयत्वं नापद्यते तदाश्रुतेः प्रतीयमानार्थएव प्रामाण्यम् ; एवं स्थिते न यूपादित्यभेदग्राहि प्रत्यक्षं प्रातिभासिकविषयं, यावद्व्यवहारमनुवर्तमानत्वात्; नापि व्यावहारिकविषयं, ब्रह्मव्यतिरिक्त सकलमिथ्यात्व प्रतिपादक षड्विधतात्पर्य लिंगयुक्तानेकाद्वैत श्रुतिविरुद्धेन एकेनादित्योयूपइतिवाक्येन पारमार्थिक यूपादित्यैक्य प्रतिपादनासम्भवात्; अतोयूपादित्यवाक्य मन्यपरं, अद्वैतवाक्य मनन्यपरमिति । उच्यते- प्रमाणानां प्रामाण्यंस्वतः, ततश्च विरुद्धतया प्रमाणद्वयोपस्थितौ यद्येकस्यान्यपरत्वेन प्रामाण्यंसम्भवति तदान्यपरत्वमेवग्राह्यम् । किंच वेदवाक्यस्य प्रामाण्यनियमः कुतआगतः ? वाक्ये क्लृप्तदोषव्यतिरिकादितिचेत्? तर्हि प्रत्यक्षे क्लृप्तदोष व्यतिरेकात् घटादिप्रत्यक्षेपि प्रामाण्यन्नियतमेव । श्रुतिविरोधात् प्रत्यक्षेऽपूर्वदोषकल्पनायां प्रत्यक्षविरोधा दद्वैतवाक्यएवा पूर्वदोषः कल्प्येत । किंच वाक्य एव दोषकल्पनमुचितम् , न्यायानुसन्धानदशायां समभिव्याहारविशेषस्या न्यत्रापिदोषत्वदर्शनात् इहापि तस्यैव दोषत्वस्यकल्प्यत्वात् । एवं दोषकल्पनाया मप्यर्थान्तरपरत्वेन वेदप्रामाण्यस्य निष्प्रत्यूहत्वाच्च । तिष्ठतु प्रत्यक्षविचारः । भेदवाक्यस्य नियतप्रामाण्यस्य कथमद्वैतवाक्येन बाधः ? अपच्छेद न्यायादितिचेन्न; - दोषविधुरस्यापच्छेदन्यायसहस्रेणापि बाधकल्पनायोगात् । अपच्छेद न्यायबलादेवदोषः कल्प्यतइतिचेन्न;- तदपेक्षयाऽद्वैतवाक्ये विषयान्तर कल्पनस्यैवोचितत्वात् । वस्तुस्तु प्रमाण

लक्षणपरीक्षित प्रमाणभावानां वेदाना मापातप्रतीत्या मिथोविरोधोप-स्थितौ तच्छमने किञ्चिदवलम्बनमात्रस्या पेक्षितत्वा त्तन्मुखेन प्रामा-ण्यसंरक्षणार्था एतेन्यायाः । एकस्मिन्प्रयोगे क्रमेणोभया पच्छेदे विकल्पः शास्त्रार्थः; [illegible]च्छेदाभावाभाववत्प्रयोगे अदक्षिणसं स्थापनं कर्तव्यं, उत्तरस्योद्गात्रपच्छेदाभावाभाववत्प्रयोगे सर्ववेतसदानं कार्यमिति शास्त्रार्थः; इत्यपेक्षाया मष्टदोष दुष्टविकल्पस्य गत्यन्तराभाव स्वीकार्यतया वाक्ये किञ्चिदवलम्बनाभावेऽपि अनुष्ठानकाले निमित्त पौर्वापर्यनिमित्त नैमित्तिकशास्त्रार्थ कर्तव्यताबुद्धि पौर्वापर्यमवलम्ब्य परस्य क्वचिद्बाधकत्वदर्शना त्तावन्मात्रेण स्वारस्यलेशादिनैव वाक्यार्थ निर्णयः क्रियते । नचैवतावता अपौरुषेयत्वादि दृढतरन्यायसिद्धस्य भेदविषय वेदवाक्यप्रामाण्यस्यभंगोयुक्तः। परस्य पूर्वबाधकत्वंहि न्यायः, तच्च चन्द्रैकत्वज्ञानानन्तरभाविनि द्विचन्द्रज्ञानेव्यभिचरितम् । परत्वेपि दोषवशादप्रामाण्ये दोषतदभावयोरेव प्रामाण्या प्रामाण्यप्रयोजकत्व मिति सिद्धम् ।

किंचानेन न्यायेन भेदवाक्यस्याप्रामाण्ये षोडशिग्रहणवाक्य मग्रहण वाक्येन बाध्येत । अपिच अदाक्षिण्यनिमित्तस्य पूर्वत्वे तस्यैव परबाधकत्वं स्यात्, निषेधरूपत्वात । तस्मान्नायापच्छेदन्यायः प्रभवति । परन्तु पक्रम न्यायएव । नचायमेकवाक्यएवेति नियन्तुंशक्यः, न्यायस्यास्म दधीनत्वाभावात् । पूर्वस्यानुपसंजातविरोधित्व मुत्तरस्योत्पत्तिदशाया मेव सन्देहावरुद्धत्वं हि न्यायः । अय मिहाप्य विशिष्टः, पूर्वस्य भेदवाक्यस्यानुपसंजातविरोधित्वेन निश्चितार्थत्वात; अद्वैतवाक्यस्य उत्पत्तिदशायामेव भेदवाक्यविरोधेन सन्दिग्धत्वा च्च ।

( सर्वविषयत्वे सत्येवहीति ) सर्वविषयत्वोपलम्भे सत्येवही त्यर्थः ( अन्यथेति ) "यत्किंचित्प्राचीन मग्नीषोमीयात्तेनोपाँशुचरन्ती"ति यत्किंचिच्छब्देन उपांशुत्वस्याग्नीषोमीया त्प्राचीनकृत्स्नविषयत्वोपल

नस्यात् । नचात्र प्रत्यक्ष विरोधमात्रेण संकोचः, प्रकरणाद्यापन्न विशेषेणापि तत्सिद्धेः । तथाहि - यत्र परमात्मानं प्रति अपृथक्सिद्धत्वं विवक्षितं तत्र प्रपंचस्य स्वातन्त्र्य निषेधे तात्पर्यम, नतु ब्रह्मविशेषण भूतसमस्त निषेधे। यथैक एव देवदत्त स्तिष्ठति नान्यत् किंचिदित्युक्ते तत्तुल्यपुरुषान्तर निषेधे तात्पर्यं, न पुन स्तदवयवगुणजात्यादिनिषेधे । तदुक्तं संवित्सिद्धौ - "यथा चोळनृपः सम्राड द्वितीयोस्तिभूतले । इति तत्तुल्यनृपतिनिवारणपरं वचः । नतु तत्पुत्रतद्भृत्यकळत्रादि निवारणम् ॥" इति । यत्र पुन जीवानां स्वाभाविकस्वरूपप्रतिपादने तात्पर्यं तत्र देहात्मभ्रमप्रतिक्षेपाय देहादे स्तदभिन्नाध्यस्तत्वमात्र मुच्यते। न पुन स्स्वरूपेण मिथ्यात्वं। यथा शुक्तौ रजतस्याध्यस्तत्वेन शुक्ति रजतमिथ्यात्वे न रजतमात्रमिथ्यात्वं तद्वत् । यत्र तु जीवानां परिशुद्धानां परस्परसाम्ये तात्पर्यं तत्रदेवादिरूपस्य तत्प्रयुक्त सुख दुःखादिरूपस्यच वैधर्म्यस्यौपाधिकत्वेन स्वाभाविकत्वनिषेध एव

---

म्भेपि "यावत्या वाचा कामयीत तावत्यादीक्षणीया यामनुब्रूयादि" त्यनेन संकोचः, तथा "नेह नानास्तिकिंचने" त्यादिषु किंचन शब्दस्य संकोच इति भावः (यत्र परमात्मानं प्रतीति) बृहदा रण्यके "नेह नानास्तिकिंचने" तिवाक्ये "यस्मिन् पंच पंच जना आकाशश्च प्रतिष्ठित" इत्यपृथक्सिद्धत्वावगमा त्स्वातन्त्र्य निषेधे तात्पर्यम् । कठवल्ल्यां "नेह नानास्ती" त्यत्र "यतश्चोदेति सूर्यो अस्तं यत्र च गच्छति । तं देवास्सर्वेऽर्पिता स्तदु नात्येति कश्चने" त्यपृथक्सिद्धत्वावगतेः स्वातन्त्र्यनिषेधे तात्पर्यम् । आदिशब्देन श्रुत्यन्तरं विवक्षितम् । अन्तर्यामिब्राह्मणादौहि अपृथक्सिद्धत्व मवगम्यते (यत्र पुन रिति) "[illegible] अत्यन्तनिर्मलं पर मार्थत" इत्यादिषु (यत्रत्विति) "तस्यात्मपरदेहेषु सतोप्येकमयं

क्रियते । यथैकजातीयानां रक्तानामुपरञ्जकद्रवान्तर संसर्गप्रयुक्त वर्ण वैषम्यादेर स्वाभाविकत्व मुच्यते । निर्गुणवादादेश्च हेयगुणनिषेधे तात्पर्यमित्यन्यत्र स्थितम् । सदेवेत्यादि च सद्विद्यानिरूपणसुगमार्थम् । एवं सर्वत्रोह्यम् । यत्पुनः'त्रय स्स्वप्ना'इति जागरसुषुप्तयोरपि स्वप्नसाम्य मुच्यतइति। तत्र जागरसुषुप्तयो स्स्वप्नसाम्ये विवक्षितेपि नमिथ्यात्वाकारेण साम्यमितिपश्यामः । यथा पैंगळ्यातिशयविवक्षया कश्चिदग्निर्माणवकइत्युपचरति, कश्चिद्रूष्मळत्वविवक्षया, कश्चिच्चतपश्चर्यादिप्रयुक्त परिशुद्धिविवक्षया, एवमत्रापि प्रमाणान्तराविरोधाय स्वप्नसाधर्म्यान्तरे तात्पर्यं ग्राह्यम् । तच्च यथा स्वप्नस्य ईश्वरसृष्टत्वेन जीवस्य कर्मानुगुणनियत देशकालस्वरूप तत्तत्स्वप्नफलभोगादौ न स्वातन्त्र्यं तद्वज्जागरसुषुप्तयोरपि कर्मफलत्वेनेश्वराधीनत्वान्न तत्र जीवस्य स्वातन्त्र्यमित्येवमादि रूपेण प्रमाणाविरोधेन ग्राह्यमिति । ततश्च —

औपचारिकवाक्येषु योग्य मेवोपचर्यते ।
तत्त त्प्रकरणादिभ्य स्तद्विशेषोपि सिद्ध्यति ॥

यत्तु भेदनिषेधकश्रुतीनां भेदविधायकश्रुत्यपेक्षयापरत्वेन बलीयस्त्वमिति। तत्रापि नापच्छेदन्यायविषयत्वमिति निर्गुणनिरूपणेग्राह्यम् ।

यच्चाद्वैतगोचरशास्त्रस्य निषेधकान्तरं नदृश्यतइति । तदपि परमसुहृदं माध्यमिकं विस्मृत्योच्यते । सहि शून्यमेवतत्वमिति वदन् संविदद्वैतमपि निषेधति । नच तद्वाक्यं दोषमूलत्वेनाप्रमाणत्वात्परमप्य किंचित्करमिति वाच्यं, वेदान्तवाक्यस्यापि अविद्याख्यदोषमूलत्वस्य त्वयैववर्ण्यत्वात् ।

---

हि यत् । विज्ञानं परमार्थोहि " त्यादिषु ( निर्गुणवादादेरिति ) " साक्षीचेता केवलो निर्गुण श्च " त्यादिषु ( संविद द्वैतमपीति ) एवं चाधिष्ठानस्यापि निषेधात् मिथ्यात्वमपि न स्यादिति भावः ।

दोषाणामवान्तरभेदस्तु नबलाबलहेतुः, भ्रमविप्रलम्भादीनामितरेतरभिन्न त्वेपि दोषत्वस्याविशेषात्। तथापि प्रामाण्यभ्रमो वेदेषु त्रमुळ मुपलभ्यत इति चेत्? किमतः,तत्वस्थितिनिरूपणेनुपकारकत्वात्। अतएवशास्त्रप्रत्यक्षयोः प्राबल्यदौर्बल्यहेतुरपि निर्मूलः, अविद्याख्य दोषमूलत्वाविशेषात् । नच भेदवासनादोषः; शास्त्रतो निर्विशेषाद्वैतेसिद्धेहि तद्विपरीतसंस्कारात्म नो भेदवासनाया दोषत्वकल्पनासिद्धिः, तद्दोषत्वेचसतितन्मूला त्प्रत्यक्षात्प्राबल्येन शास्त्रतो निर्विशेषाद्वैतसिद्धि रित्यन्योन्याश्रयात् । शास्त्रेण निर्विशेषत्वे सिद्धे स्या द्भेदवासनादोषः, तद्दो षभावेच सिद्धे स्या न्निर्विशेषधीः । नच क्वचिद्भेदवासनादोष इतिलोके सर्वत्र प्रसंगः, अभेदवासनायामपि तथा प्रसंगात् । तस्यापि च भेदवासनाख्यदोषस्य शास्त्रेपि दुस्त्यजत्वाच्च । अन्यथा प्रकृतिप्रत्ययपदवाक्य तदर्थादिभेदस्या कांक्षासन्निधियो

---

**ननु वक्तृभ्रमादिदोषाभावा द्वेदप्राबल्य मित्यत्राह ( दोषाणामिति ) नन्वविद्यादोषः शब्दस्वरूपाध्यासहेतुः. नतु तस्याप्रामाण्यप्रयोजक इति चेन्न;- वातगत्यादिदोषमूलभ्रमसिद्धवाक्या द्वक्तृदोषाभावेप्य नाश्वासात ( शास्त्रत इति ) ननु निर्विशेषसिद्ध्याभेदवासनाया दोषत्वं न कल्प्यते, किन्त्वन्यत्र दोषत्वेनदृष्टत्वा दित्यत आह ( नच क्वचिदिति ) इद मुपलक्षणं, अपूर्वचैत्रादिवैलक्षण्यज्ञाने वासनास- म्भवा दित्यपि बोध्यम् । ननु प्रत्यक्षस्य दोषजन्यत्वनिश्चया च्छा- स्त्रस्य ततः प्राबल्यं न ब्रूमः, किन्तु शास्त्रं निर्दोषत्वेन निश्चितं, प्रत्यक्षन्तु न तथा, किन्तु दोषमूलतया सन्दिग्धं, विपरीतवास नाया दोषत्वसन्देहा दित्यस्मादेव वैषम्या त्प्राबल्यं ब्रूम इति चे त्तत्राह ( तस्यापि चेति ) ( अन्यथेति ) अद्वैतवाक्यजज्ञानस्य लक्षणा तात्पर्यनिर्णयार्थं तर्कात्मकवाक्यार्थज्ञानसापेक्षत्वा त्तदर्थं वाक्यार्थस्यापि**

ग्यतादिभेदस्य चानुपलंभे वाक्यार्थविशेषप्रत्ययस्या नुदयप्रसंगात् । नच भेदवासना प्रत्यक्षस्यैव दोष इति वाच्यं, विपरीतसंस्कारात्मना दोषत्वे क्वचिद्दोषता क्वचिन्नेति नियामकाभावात् । आकारान्तरेणतद्दोषत्वस्य दुष्प्रतिपादत्वात् । तद्दोषत्वे सति तन्मूलस्य भ्रान्तत्वं, तद्भ्रान्तत्वेच सिद्धे तद्दोषत्व मिति च परस्पराश्रयणात् । प्रत्यक्षस्य भ्रान्तत्वं तद्भ्रान्तत्वे निर्विशेषत्व प्रतिपादनं तत्प्रतिपादने भेदवासनाया दोषत्व

---

ग्रहणमुपपन्नं(विपरीतसंस्कारात्मनेति)विपरीतसंस्कारोहितद्विरुद्धविषयः, सच विरुद्धविषय एव दोष स्स्यात्, नतु तस्मिन्नेवेति चेन्न;- अभेदज्ञानेपि प्रतियोग्यादिभेदभानादिति भावः । किञ्च विपरीतवासनात्वाविशेषेपि भेदवासनायाः प्रत्यक्ष एव दोषत्वं नान्यत्रेत्ययं नियमः प्रत्यक्षस्य भ्रमत्वनिश्चयादेव वाच्यः, नियामकान्तराभावात; एवं चान्योन्याश्रयः ; निर्विशेषत्वप्रतिपत्तिबला द्दोषत्वसिद्धिविवक्षायां चक्रकं वेत्यादिकं वेत्याह ( तद्दोषत्व इति )

ननु शास्त्रतो निर्विशेषानिश्चयेपि निर्विशेषस्वारस्यसम्भावित दोषप्रत्यक्षस्य दोषमूलत्वकल्पनं, अतो भेदवासनादोष इति चेत्? उच्यते । प्रत्यक्षस्य दोषमूलकत्वकल्पन मनुपपन्नं, दोषमूलत्वसम्भावना विधुरबहुतरभेद गोचरवेदवाक्यसंवादात । किञ्च दोषसम्भावनाविधुरस्यापिहि भेदपरवाक्यस्य दोषमूलत्वं त्वया कल्पनीयम्, ततो बहुतरप्रत्यक्ष भूयस्तरभेदवाक्य रूपोभयविध प्रमाणानुसारेणाल्पतराद्वैतवाक्यस्य दोषमूलत्वकल्पन मेवोचितम् ।

वस्तुतस्तु प्रमाणस्य दोषमूलत्वन्नवयं कल्पयामः, अपितु विषयान्तर सम्भवाना विधुरोक्तोभयविधानंतप्रमाणानुसारेण सम्भावितविषयान्तरा द्वैतवाक्यजन्य त्वदीय कुमतिमात्रस्य। दोषश्च समीचीन न्या-

मिति चक्रकश्चात्रा नुसन्धेयम् । नचा द्वैतवाक्यार्थ ज्ञानेत्व भेदवा-
सनामूलं, अत एव ध्यानादिविध्युपयोगइति वाच्यम् ; अभेदवासनया
अप्यन्ततो भेदवासनामूलत्वात् । नह्य भेदज्ञानं भेदज्ञानमन्तरेण
सम्भवति । स्वय मेव प्रतियोग्यादि भेदवासनावहत्वात्, नचा

---

यानुसन्धानदशायां समभिव्याहारविशेषइति प्रागेवोक्तं । किंचदोष
मूलत्वाभावेना द्वैतवाक्यस्यप्रामाण्यं त्वयाभ्युपेतम् । दोषमूलत्वाभावेपि
शुक्तिरजतसुखादिसाक्षिणो प्रामाण्यस्वीकारात् । किंच घटादिप्रत्य-
क्षस्यापि नित्यचैतन्यरूपतया दोषमूलत्वाभावेना द्वैतवाक्यवत्प्रामाण्यं
दुर्वारम् । अथएव दोषजन्यः, तद्विषयत्वेनैव ज्ञानस्याप्रामाण्यम्, एवं
चा द्वैतवाक्यस्य प्रामाण्य मितरेषा मप्रामाण्यंच सिद्धमितिचेन्न,- परो-
क्षभ्रमस्य दोषजन्यार्थविषयत्वाभावेन प्रामाण्यप्रसंगात् । ननुपरोक्ष
भ्रमे दोषजन्यत्वम प्रामाण्यप्रयोजकं, अपरोक्षभ्रमे दोषजन्यार्थविषयत्व
मितिचेन्न;- अविद्याभ्रमरूपे साक्षिणि दोषजन्यार्थविषयत्वाभावेना प्रा-
माण्याभावप्रसंगात् । अन्यवासनाया अन्यत्रहेतुत्वासम्भवात्, वास-
नाया स्सर्वत्रासम्भवाच्च नभेदवासनाया दोषत्वम् । अथभेदवासनायाः
प्रकृत्यादि भेदज्ञानहेतुत्वेपि ना द्वैतज्ञानहेतुत्वं तद्विरुद्धाभेद वासना-
याएव तद्धेतुत्वादित्यत्राह (नचाद्वैतेति) (अभेदवासनायाइति) न
केवलं प्रकृत्यादिज्ञानएव भेदवासनाहेतुः, अपित्वभेद वासनायामपि,
अभेदज्ञान प्रतियोगिभूतभेदविषयत्वादित्यर्थः । दोषान्तरमाह (स्व-
यमिति) नच वाच्यमित्यनेनान्वयः । अभेदवासनाहि प्रतियोगिवि-
शिष्ट ज्ञानाजन्या तज्जन्यां भेदवासनामप्याक्षिपति, अतश्चाभेदवासना
जन्यज्ञानस्यापि विशिष्टविषयत्वा द्भेदवासनाहेतुरित्यर्थः । किंनिष्प्रति
योगिकस्वरूपधीः स्वप्रकाशस्वरूपमेव, किंवा तद्विषयकज्ञानान्तरमिति

भेदवासना निष्प्रतियोगिक स्वरूपधी हेतुरिति वाच्यम, नित्यस्फुरि तस्य चिन्मात्रस्य निष्प्रतियोगिकत्वेपि तस्य वासनामूलत्व तन्मूल प्रत्यक्षादि विषयत्वस्य त्वयैव प्रतिक्षेपात्। अतो भेदनिषेधकाद्वैत वाक्यार्थज्ञानस्यापि भेदवासनामूलत्वं तदापादकत्वं च फलितं ततश्च तुल्य दोषत्वे किं कस्य बाधकं बाध्यं वा । किंचा भेदवासनाया दृष्टरूपेणा दृष्टरूपेणवा तत्त्वमस्यादिवाक्या द्वाक्यार्थज्ञानोपकारकत्वं ? नाद्यः, वाक्यार्थ वासनामन्तरेणापि वाक्यस्य यथा सम्भवंसत्यासत्यस्वरूपस्वार्थ

---

विकल्पमभिप्रेत्याह ( नित्येति ) ननुब्रह्मण श्चिदविषयत्वरूपावेद्यत्वेपि वृत्तिविषयत्वं सम्भवतीतिचेन्न;- अभेदवासनाया निष्प्रतियोगिक ज्ञानजनकत्वेना न्योन्याश्रय प्रसंगेन तादृशज्ञानजन्यत्वाभावा ज्जनकीभूतज्ञानस्य अभेदप्रतियोगिभेदविषयतया तज्जन्याया वासनाया निष्प्रतियोगिक स्वरूपधी हेतुत्वासम्भवा ज्जनकीभूत ज्ञानस्याभेदवासना जन्यत्वाभावेन भेदवासना जन्यत्वसम्भवाद् प्रामाण्यप्रसंगा त्तत्प्रमानाविषयतयोत्तर ज्ञानस्याप्यप्रामाण्यप्रसंगाच्च ( अतोभेदेति ) जीवब्रह्माभेद वाक्यार्थज्ञानस्य विशिष्टविषयत्वोक्त्या भेदप्रपंचनिषेधक वाक्यार्थज्ञानस्यापि प्रतियोग्यादिभेदविषयत्वेन विशिष्टविषयत्वलाभा द्भेदवासनामूलत्वं तदापादकत्वंच फलितमित्यर्थः । प्रपंचनिषेधस्य त्वमसि वाक्यार्थ ज्ञानोपयोगित्वा त्तज्जन्यभेदवासना मादायापि तत्त्वमसिवाक्यार्थज्ञानस्य भेदवासनामूलत्वं दर्शयितुं तदापादकत्वंचफलितमित्युक्तम् । ( अदृष्टरूपेणेति ) विहितनिदिध्यासन जन्यादृष्ट मभेदवासनैवेत्यर्थः । ( वाक्यार्थवासनामिति ) एतेनभेदवासनानिरसनद्वारा उपयोगइति निरस्तम् । असत्यार्थज्ञाने विपरीतवासनासत्वेपि वाक्यार्थ ज्ञानांगी·

वोधकत्वस्य भवद्भिरपि स्वीकर्तव्यत्वात् । उक्तंचाभि युक्तैः—
“ अत्यन्तासत्यपिज्ञान मर्थे शब्दः करोति ही ” ति । अन्यथाक्क
चिदप्य परिचितविचित्रवाक्यार्थ प्रत्ययो न स्यात् । तथा च सङ्केत
गतंकर्त्रीनां प्रावीण्येन , भवतां च पूर्वपक्षविज्ञानेन, श्रुतीनांचा
प्राप्तार्थसमर्पणार्थसामर्थ्येन । नापिद्वितीयः, शक्त्युपबृंहित ज्ञान
निवर्त्यत्वाकुष्ट प्रपंचसत्यत्व भीरुभि र्भवद्भि रनभ्युपगमात् । अभ्युप
गच्छता मप्याकांक्षादित्रय परामर्शादिरूप दृष्टसामग्री घटनमन्तरेणा
दृष्टस्योपयोगाभावात् । अत्र चा द्वैतानुध्यानजन्य वासनामन्तरेण
तत्प्रत्यय सामग्रीसिद्धेः । अन्यथा तच्छ्रवणस्याप्यनुपपत्त्या वासना
जनकस्य तद्ध्यानस्यापि असिद्धिप्रसंगात् । नचापरोक्षरूप वाक्या-
र्थज्ञानजननार्थं दृष्टद्वारेणा दृष्टद्वारेणवा तदुपयोगइति वाच्यम् ,

---

कारोक्तेः । अत्रखण्डनसम्मतिमाह ( उक्तंचेति ) ( इत्यन्तीति ) न
ह्यभेदवासनारूपम दृष्टमवधारणे अपरोक्षेवा उपयुज्यते, [illegible]-
वाद्विषयस्वभावाच्च तदुपपत्तेः; एककोटिका नवधारणस्यानिरासात् ;
किंत्वविद्या निवृत्त्यनुकूल शक्तिविशेषे, तथा च शक्तिविशेषविशिष्ट
ज्ञाननिवर्त्यत्वे ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावात् सत्यत्वापत्तिरित्यर्थः ।
ननुसर्वैरपिकार्यमात्रस्या दृष्टजन्यत्वाभ्युपगमात् ध्यान जन्यवासनारूपा दृ
ष्टस्य वाक्यार्थज्ञान एवोपयोगोस्तु, नाविद्यानिवृत्त्यनुकूलशक्तिविशेष
इत्यत्राह ( अभ्युपगच्छतामिति ) आकांक्षादिपरामर्शस्य [illegible] साम
ग्रीत्वात् तद्घटनेनोपयोग स्वयाङ्गुवच्य इति भावः । ननु शब्दा
त्प्राकपरोक्षज्ञान मेव जायते, पश्चा द्वैतानुध्यानजन्य वासनानन्तरमा
अपरोक्षं जायते, ततश्च सत्यत्वापत्ति रित्यत आह ( नचेति ) ज्ञा-
नस्य विधेयत्वे खलु द्रष्टव्य इत्यनूद्य ध्यानविधिःस्यात्, आत्मैव
त्वं चनिराकृत मिति दर्शनरूपतापन्नध्यानस्य मोक्षोद्देशेनैव विधे
र्नवासनाया दर्शनउपयोग इत्यादिशङ्कस्य भावः । न केवलं

शब्दजन्यप्रत्यक्षादे दूर्षणात् ॥ * ॥ न शब्दजन्यं प्रत्यक्षं प्रत्यक्षत्वा घथेतरत् । व्यवस्थाभंजनेतुस्याद् सर्वमानेषु संकरः ॥ अन्त्य प्रत्यक्ष वेद्यन्तु ब्रह्मचेदधिकान्वितम् । स विशेषत्वमेवस्या न्नचेत्त प्राग्वच्च संसृतिः ॥ * ॥ अत एव शास्त्रप्रत्यक्षजन्य ज्ञानयोः परोक्षत्वापरोक्षत्वलक्षण वैषम्यनिषेधोपि प्रत्युक्तः ।

यच्चोपजीव्यस्यापि प्रत्यक्षस्य ज्वालाभेदानुमानेन बाधोदृष्ट इति । तदप्यतिस्थवीयः, तत्र उपजीव्यविरोधाभावात् । नहि तत्र ज्वालैक्य प्रत्यभिज्ञादिकं भेदानुमानस्योपजीव्यम् । नच भेदानुमानं स्वोपजीव्यव्याप्तिग्राहक प्रत्यक्षविशेषं बाधते । तथा प्युपजीव्य जातीयस्यापिविरोधे तद्वा नादृग्त्वेति न कश्चि द्विशेष इति चेत् ? सामान्यत उपजीव्यजातीयस्यापि ज्वालैक्यज्ञानस्य विशेषतोपि दुष्ट

---

प्रत्यक्षस्य शब्दजन्यत्वेतिप्रसंगः, तदभ्युपगमे प्रयोजनमपिनास्ती त्याह (अन्त्येति) आद्येभ्रमत्वादनिवर्तकत्वं, अन्त्ये स्वरूप प्रकाशव दितिभावः (अतएवेति) शब्दजन्यज्ञानस्या परोक्षत्वभंगादित्यर्थः । एवंच जात्या प्रत्यक्षं प्रबलमित्युक्तं भवति । विरुद्धप्रमाणातिरिक्ता निहिता प्रामाण्यशंकं प्रत्यक्षं विरोधिनः परोक्षाद्बलीयस्तया तस्या प्रामाण्यमापादयति । अतएव हि यूपादित्यैक्यबाधः । एतदभिप्रायेणैवा नन्यथासिद्धं प्रत्यक्षंबलीयइति भगवतावेदार्थसंग्रहे नुगृहीतं – "प्राबल्यमागमस्यैव जात्या तेषु त्रिषुस्मृतम् "इति। अत्र प्राबल्यंनिर्दोषत्वं(सामान्यतइति)तैलनाशस्य दीपनाशहेतुत्वं प्रत्यक्षसिद्धम् । एवं वर्तिनाशस्यापि । दीपस्याश्रयनाशकत्वं तैलनाशकत्वंच । एवं चतुर्भिः कारणताग्राहिप्रत्यक्षै रनन्यथासिद्धै र्विरोधाद्दृष्टदोषज्वाला प्रत्यभिज्ञान्तरसजातीयतया प्रत्यभिज्ञान्तरदोषत्वेना वधारितसादृश्यस्य इहापि दोषत्वसंभवा द्दोषमूलत्वेन शंकिता प्रत्यभिज्ञाभेदानुमानेन बाध्यत इत्यर्थः । प्रत्यभिज्ञान्तरे दोष

दोषजातीयत्वात । अचिरनिर्वापितारोपितप्रदीपेपि निर्वाणादर्शिनस्तदेवे दमिति दृढप्रत्यभिज्ञानमुदेत्येव । तत्रापि हि भेदादर्शनसादृश्यादिकं दोषः । सोत्रापिसम्भवन् ज्वालैक्यज्ञानस्य निर्दोषत्व निर्णयं प्रति रुणद्धि । तावतिचानुमान मबाधितमुदेतीति न दोषगन्धः । इह तु स्वोपजीव्यं तज्जातीयं च कृत्स्नं प्रत्यक्षं बाध्यत्वेन प्रसक्तमिति स्थितः स्वव्याघातः । अत उपजीव्यप्रत्यक्षबाधेन शास्त्रं नोदेतुमलम् ।

---

दर्शन मुपापदयति ( अचिरेति ) एकवर्तिका स्थत्व मेकपात्रगतत्वं चादिपदार्थः ( संभवन्निति ) शंक्यमान इत्यर्थः । ननु वर्णपदवाक्यस्वरूपांशप्रत्यक्ष मुपजीव्यं, तन्न बाध्यते, सत्यत्वांशस्त्वनुपजीव्यः, स एव बाध्यते, तस्मान्नोपजीव्यबाध इति चे त्तत्राह ( अत इति ) अयं भावः अभावबुद्धिलक्षणो बाधः प्रपंचे प्यविशिष्टः, अन्यथा तस्यमिथ्यात्वासिद्धेः । नापि विरोध्यभावधी र्बाधः, तत्र किं प्रत्यक्षेण प्रपंचे स त्यत्वं गृह्यते, उत न? अन्त्ये सत्यत्वांशप्रत्यक्ष बाधोक्त्यसम्भवः । आद्येपि किंचित्कालाबाध्यत्वलक्षणस्य व्यावहारिकस्य प्रत्यक्षग्राह्यत्वे तन्निषेधासम्भवः, मिथ्यात्वात् । निषेधे प्रपंचस्यैव तत्सम्भवा, त्स- त्यत्वपर्यन्तधावनवैयर्थ्यम् । सत्यत्वनिषेधेपि प्रपंचनिषेधसिद्ध्या उप- जीव्यविरोधस्या वर्जनीयत्वात् । त्रिकालबाधायोग्यत्वरूपस्य ब्रह्मधर्म स्य कल्पितस्य प्रपंचे ग्रहे अन्यथा ख्यातिः । प्रपंचगतस्यैव तस्य ग्रहणे व्यवहारदशायां बाध्यस्य तस्य प्रपंचसमान स्वभावतया प्र- पंचसमसत्ताकमिथ्यात्वासम्भवः । ननूपजीव्यस्वरूपस्योप मर्दो यथा- न भवति सत्यत्वस्य च तस्मिन्नुपमर्दो यथा भवति तथा प्रपंचस्य प्रतियोग्यविरोध्यभावः प्रतिपाद्यते,शुक्तिरजतवदिति विवक्षितमितिचेन्न;- " यस्मिन् द्यौरि " त्याद्य ध्यारोपकवाक्यावगत प्रपंचब्रह्मसम्बन्धमात्रस्य मिथ्यात्वेन ब्रह्मणि प्रपंचविरोध्यभावप्रतिपादने प्रपंचस्वरूपानुपमर्दस्य ब्रह्मतुल्यत त्सत्यत्वानुपमर्दस्य च सम्भवात प्रपंच मिथ्यात्वासिद्धेः ।

किंच शास्त्रप्रत्यक्षयो र्बलाबल परीक्षकप्रमाणमपि ब्रह्म व्यतिरिक्त भेदगोचरत्वेन शास्त्रेणैव बाध्यत इति स्वेनैव स्वबलं प्रति क्षिपत् शास्त्रं कथं प्रत्यक्षात्प्रबलं भविष्यति । असत्यात् सत्यप्रतिपत्त्यादिकन्तु दूषयिष्यते । अतः प्रत्यक्षादिसिद्धानुपमर्देनैव भेदनिषेधक श्रुतीनां तात्पर्यमुपपादनीयमिति ।

इति श्रिकवितार्किकसिंहस्य सर्वतन्त्रस्वतस्य श्रिमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां प्रत्यक्ष शास्त्रविरोधपरिहार एकोनत्रिंशोवादः ॥ २९ ॥

---

एव मेत च युक्तम्, प्रत्यक्षस्या बाधितार्थकत्व लक्षणप्रामाण्यसिद्धेः प्रपंचमिथ्यात्वेपि सम्बन्धमिथ्यात्वस्यावश्यकत्वा तावन्मात्रमिथ्यात्वेन सर्वप्रमाणप्रमेया बाधस्थापनस्य युक्तत्वात । नन्व सत्यादपि सत्य सिद्धे स्तत्र तत्र दर्शनादसत्यमेवशास्त्रं निर्विशेष सिद्ध्युपयोगीत्यत्राह (असत्यादिति)

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्यपादसेवासमधिगत परावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरण परिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापर नामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां प्रत्यक्षशास्त्रविरोधपरिहारभंग

एकोनत्रिंशः स्कन्धः ॥२९॥

श्रीरस्तु ।

श्रीमतेरामानुजायनमः ।

# अथ [illegible]वादः ॥

सत्यैरेव सदातनोक्ति निवहै स्सत्यप्रमाहेतुभि

स्सत्यं ज्ञानमनन्तमेकममलं यद्ब्रह्मनिर्दिश्यते ।

तत्सत्यैः परिकर्मितं गुणगणै स्सत्याभिसन्धिक्रियं

सत्यानन्दविभूतिकं विचिनुम स्सत्यस्य सत्यं महः ॥

---

( सत्यैरिति ) सदातनत्ववत्सत्यत्वमपि प्रामाण्यप्रयोजकमिति भावः ( निवहैरिति ) भेदाभेदघटकश्रुतिभेदः, आराधनाराध्यगुण विभूतिश्रुतिभेदः, कर्मोपासनतत्वश्रुतिभेद श्च विवक्षितः ( सत्यप्रमे- त्यादि ) सत्यप्रमाहेतुभि रित्यनेन सत्या त्सत्योत्पत्तिः, नासत्यादि- त्युक्तम् । सत्य मित्यारभ्य निर्दिश्यत इत्यन्तेन सत्यादेव सत्य ज्ञप्ति र्ना सत्या दित्युक्तम् ( सत्यं ज्ञान मित्यादि ) ब्रह्मसत्यज्ञाना नन्दात्मक मेक ममलं सर्वविधैरपि वेदान्तवाक्यैरिति परै रुच्यते, तत्र सत्यस्यैव वेदस्य तत्प्रतिपादकत्वा द्वैतसिद्धे स्सत्यगुणविभूति विशिष्टमेव ब्रह्म प्रतिपाद्यत इति भावः ( सत्येति ) सत्येत्यभिसन्धि प्रकार उक्तः । अनेन कारणत्व मुक्तं भवति । इदं च विभूतिवैशिष्ट्येहेतुः ( सत्यस्येति ) निर्धारणे षष्ठी । चेतनेषु सत्य मित्यर्थः । सत्य शब्देन नित्यत्वं विवक्षितम् । नित्येष्वपि नित्यम् । सर्वचेतनानां नित्य- त्वेपि सोहमिति प्रत्यभिज्ञाप्रतिबन्धक कादाचित्कत्वभेदभ्रमजनक न्मसम्बन्धोस्ति, ईश्वरस्य तन्नास्तीत्येषु नित्यतया ईश्वरो निर्धा-

योय मसत्य प्रलापः- असत्यादपि शास्त्रादे स्सत्यस्य ब्रह्मण सिद्धि स्सम्भवति । अस्तिचा सत्या त्सत्योत्पत्ते स्सत्य प्रतिपत्तेश्च लोके बहुळ मुपलम्भः; आरोपितै रेव शुक्तिरजतरज्जु सर्पशंकाविषभावित गरुडादिभिः सत्यस्य हर्षभयमरणगरळहरणादे र्दर्शनात् । तथा स्वाप्नार्थेन शुभादिः, प्रतिबिम्बेनबिम्बतत्वं, लिप्यक्षरै रक्षराणि, रेखा गवयादिभिस्सत्यगवयादिः, चित्रपूरुषादिभिः पुराणवृत्तान्तादिः, नादविशेषोपाधिक शब्दनानात्वेनार्थभेदश्चेति असत्यैरेव सत्यानि निश्चीयन्ते । तथा बाष्पारोपित धूमादिभि र्यदृच्छासन्निहित धूम ध्वजादिसिद्धिः । नचात्र सर्वत्र तत्त त्संवित्स्वरूपमेव सत्यं कारण मिति वाच्यम् , ज्ञप्तिस्वरूपमात्रस्य कारणत्वे ज्ञप्त्यन्तरादपि तदुत्पत्ति प्रसंगात् । विषयविशेष विशेषितायास्तु कारणत्वोक्तौ नागृहीतविशे-षणन्यायेन विषयस्यापि कारणत्वावश्यम्भावात् । नचा सत्यात्सत्यसिद्धौ लिंगविभ्रमा त्साध्यसिद्धिप्रसंगइति वाच्यम् , यादृच्छिकसंवाददशाया मिष्टप्रसंगत्वात् । तत्सिद्धिनियमः प्रसज्यत इति चेन्न;– तदनियमस्या सत्यत्व प्रयुक्तत्वाभावात् । अपित्व व्याप्तिनिबन्धनत्वात् । व्याप्तं

---

र्यते । पूर्वार्धेन वादार्थसंग्रहः । उत्तरार्धेन तत्फलसंग्रहः । (असत्या दित्यादि)सिद्धिः - ज्ञप्तिः । असत्या त्सत्योत्पत्तिप्रदर्शनं दृष्टान्ततया । उत्पत्तौ निदर्शन मारोपितैरित्यादि । शंकाविषभावितगरुडनिदर्शनं परोक्षे प्यनिर्वचनीयांगीकारेण । "तथेत्यादि" ज्ञप्तौ निदर्शनम् । प्रतिबिम्बे बिम्ब भेदाध्यासा त्तद्विशिष्टरूपेणासत्यत्वम् । "लिप्यक्षरैः"- लिपावध्यस्ताक्षरैः । एव मुत्तरत्रापि विवक्षा ग्राह्या ( नादेति ) नगो नाग इत्यादौ कल्पित ह्रस्वदैर्घ्यादिविशिष्टत्वेन भिन्नस्य शब्दस्यार्थभेदधीहेतुत्वमिति भावः ( लिंगविभ्रमादिति ) लिंगरूपा द्विभ्रमात्, अर्थाध्यासा दित्यर्थः । विषयस्याहेतुत्वेपि असत्या त्सत्यसिद्धि रपरिहार्या, ज्ञानस्या प्यसत्यत्वा

हि साधनं। नह्यसन्धूमाभासो वह्निव्याप्तः । बहुळत्वोद्भवत्वादिवदना रोपितत्वस्यापि व्याप्त्युपयोगितया न्वयव्यतिरेकसिद्धत्वात् । प्रति बिम्बादेश्चासत्यस्यापि सत्यमुखादिसिद्धौ अन्वयव्यतिरेकाभ्यां व्याप्ति सिद्धेः । प्रतिबिम्बस्यासत्यत्वेपि बिम्बप्रतिबिम्बयो र्व्याप्तिस्सत्या, तद्वशा त्तत्र बिम्बसिद्धिरिति चेन्न;– व्याप्ति र्हि सम्बन्धत्वाद्व्याप्य व्यापकसापेक्षा, कथं तयो रन्यतराभावे सा सत्याभवेत् । अतो व्याप्यं प्रतिबिम्बादिक मसत्यमेवेति तद्गताव्याप्तिरपि तद्गतमालिन्यादिवदसत्यैव। नच विषयमिथ्यात्वे तद्विषय ज्ञप्तिसत्यत्वसिद्धिः ? नहि नभः प्रसून मिथ्यात्वे तत्परिमळपारमार्थ्यम् । अतश्शास्त्रादे र्मिथ्यात्वनिश्चयेपि ततः परमार्थनिर्विशेष ब्रह्मनिश्चय उपपद्यते । नच सहसाशास्त्रस्या

---

दित्याह ( नचेति ) नन्वसत्या त्सत्यसिद्धिसम्भवेपि कथ मसत्यतया ज्ञाता च्छास्त्रा त्तत्सिद्धिः; यद्यपि शास्त्रेण ज्ञानोत्पत्तेः प्राक्छास्त्रं नासत्यतया ज्ञातम्, तथापि ज्ञानोत्पत्तिदशायां तथा प्रतीते रनन्तर मनाश्वासप्रसंग इत्यत्राह ( अत श्शास्त्रादेरिति ) असत्यस्य सत्य ज्ञापकत्वे सिद्धे अनाश्वास एव नोदेतु मलम् ; अन्यथा सत्यत्वे प्यनाश्वास एव स्यात् , सत्यतया ज्ञातादपि भ्रमदर्शनात्; अपौरु- षेयत्वादिना तन्निरास श्च तुल्य इति भावः । एव मसत्यतया ज्ञान मभ्युपगम्योक्तं, वस्तुतस्तु तदेव नेत्याह ( नचेति ) श्रवणदशा मारभ्य निवर्तकज्ञानोदयपर्यन्तं शास्त्रस्यासत्यता न धिय मारोहति, अपितु तदतिरिक्ताना मेव, आपातत स्स्ववृत्तिविरोधप्रतीतेः पश्चान्मनन निदिध्यासनाभ्या मसम्भावनाविपरीतभावनानिरासे सति अनन्तरो- त्पन्नज्ञानमेव शास्त्रस्या प्यसत्यतां विषयीकरोतीत्यर्थः । ननु शास्त्रं प्रपंचनिवर्तकज्ञानेनैव निवर्तते, उतान्येन? आद्ये निवर्तकज्ञाननिवृ- त्त्यर्थं ज्ञानानन्तर मपेक्षणीयम् , द्वितीये स्वनिवृत्त्यर्थमपि; अत उभयथाप्यसत्यतया ज्ञातस्य शास्त्रस्य ज्ञानोत्पादकत्व मावश्यक

सत्यताधियमविरोहति, स्वजन्यविश्व निवर्तकाद्वैत बोधजन्मनःप्राक्सत्य तयैवावभासात् । अतोबोधनदशायां स्वयमपि सदित्यवभासात् स्वजन्य बोधसामर्थ्यादेव स्वस्यापिनिवृत्तिसिद्धौ पुनः बोधान्तरस्या नपेक्षितत्वेन तदुत्पादकत्वाभावाच्च न कश्चि द्विरोधः । नच वाच्यं सत्यतया प्रत्यक्षादिसिद्धस्यापि प्रपंचस्यशास्त्रेणेव शास्त्रसिद्धसत्यत्व स्यापि ब्रह्मणः केनचिद्बाधेमिथ्यात्वं सम्भवतीति , अदर्शनादेव तन्निरासात् । नच कारणदोष निश्चयात् फलितः प्रतीति विषयबाधः, यादृच्छिकसंवादि लिंगविभ्रमादिभि रेवानैकान्त्यात् । अतो वस्तुतो मिथ्याभूतादपि शास्त्रादेः परमार्थसद्द्वितीयब्रह्मनिश्चय उपपद्यत इति ।

---

मित्यत्राह ( अतो बोधनदशायामिति )( स्वयमपीति ) अर्थवादिति भावः । स्वस्यापीत्यपिना स्वव्यतिरिक्तस्य कृत्स्नस्य ग्रहणात् निव र्तकज्ञानमपि गृह्यते । बोधनदशाया मित्यनुवादस्या सत्यत्वाज्ञानं विरोधितया शंकितुं योग्यं परिहृतम् , शंकान्तरपरिहार स्त्वीषत्कर इति भावः । सदित्यवभासा त्स्वजन्येत्यन्वयः। यद्वा प्रपंचमिथ्यात्वावगाहिपूर्वं ज्ञानातिरेकेण ज्ञानान्तरेणेव शास्त्रस्य मिथ्यात्वावगाहन मित्युक्तत्वात्तद्- वलम्बनेन मिथ्यात्वावगाहनमिव शास्त्रस्य प्रपंचनिवर्तकज्ञानातिरेकेण स्वनिवृत्तये द्वितीयज्ञान मपेक्ष्येत, तथा च सत्यतया ज्ञातस्यैव शास्त्र- स्याद्वितीय ज्ञानजनकत्वं वाच्यमिति कस्यचिच्छंका जायेतेति ता- न्निवारयति (अतोबोधन दशायामिति) मननादिभि रसंभावनादि निरा सेन स्ववृत्तिविरोधशंकानिरासात् न ज्ञानान्तरापेक्षेति भावः । नन्वेव म्महता प्रयत्नेना सत्यात्सत्यसिद्धिः किमर्थं साध्यते, बाधादेव प्रपं चवद्ब्रह्मणोपि मिथ्यात्वसंभवा दित्यत्राह (नचवाच्यमिति) एवं तटस्थ शंका न्निराकृत्य नच सहस्रेत्यादिनोक्तं प्रकृत मुपसहरति ( अतो वस्तुतइति ) वादार्थोपसंहारोवा । पूर्वस्मि न्पक्षे वस्तुत इति पद स्वारस्यम् । द्वितीययोजनाया मुसंहारान्तराभावो निमित्तम् । यद्वा- बाधा त्प्रपंचासत्यत्वं साधयता त्वया ब्रह्मण स्सत्यत्वं नांगीकर्तुं शक्यम्,

अत्रोच्यते । यदुक्तमसत्या त्सत्योत्पत्ति र्दृश्यत इति । तदसत्, सत्यैर्ज्ञानादिभिरेव तत्र तत्र तत्सिद्धेः । यत्तत्रोक्तं- ज्ञप्तिस्वरूपमात्रस्य कारणत्वे ज्ञप्त्यन्तरादपि तत्सिद्धिप्रसंग इति । तदपि मन्दं, ज्ञप्ति स्वरूपाणां परस्परविचित्रशक्तित्वात् । विषयविशेष मन्तरेण वैचित्र्यं कुत स्सिद्धमिति चेत्? किमय मुत्पत्तिप्रश्नः, उत ज्ञप्तिप्रश्नः? आद्ये तत्सामग्रीवैचित्र्य मेवोत्तरम् । तदेव च कुत स्सिद्ध मिति चेन्न; -सामग्रीवैचित्र्यपारवश्यस्य सार्वत्रिकत्वात् । सामग्रीवैचित्र्यादेव हि

---

त्रापि बाधसंभवात्, अतः कथं त्वन्मते सत्यस्य सिद्धिरिति सिद्धान्तिशंकां परिहरति (नच वाच्यमिति) (तन्निरासादिति) बाधकज्ञा ननिरासा दित्यर्थः (नचेति)दुष्टकारणजन्यत्वस्या प्रामाण्यव्याप्तत्वा दत्र च तन्निश्चयस्य सत्त्वा त्तत्कार्ये अप्रामाण्यानुमितिः कल्प्यते, तदंतर्गततया विषयाभावसिद्धे र्बाधकज्ञानं फलितमित्यर्थः (यादृ च्छिकेति) लिंगविभ्रमस्थले दोषजन्यत्वे सत्यप्रामाण्याभावा द्दुष्टका रणजन्यत्व मप्रमाणं प्रत्यनैकान्तिकम्, अतो दोषनिश्चयस्या कारणत्वा न्न तद्बला द्बाधकप्रमाकल्पन मित्यर्थः (ज्ञानादिभिरिति) आदिश ब्देन लिपिस्वरूपादिः । ननु सर्वत्रापि विषयविशेषादेव ज्ञानवैचि त्र्यसिद्धिः, नान्येन, अतः शक्तिरूपवैचित्र्यमपि विषयविशेषादेवेति शंकते (विषयविशेषमिति) (आद्यइति) ज्ञानसामग्रीवैचित्र्यादेव ज्ञा नवैचित्र्य न्न विषयविशेषा दित्यर्थः । सामग्रीवैचित्र्यमपि विषय विशेषादेवेति शंकते (तदेवेति) सामग्रीवैचित्र्यं तत्सामग्रीवैचि त्र्या देवेत्यर्थः । ननु ज्ञानसामग्रीवैचित्र्यप्रयोजकं तत्सामग्रीवैचित्र्यं विषय एवेत्यत्राह (सामग्रीति)तत्प्रयोज्यत्वा न्न तत्प्रयोजकमितिभावः । ननु सामग्रीवैचित्र्याधीन वैचित्र्यविशिष्टं ज्ञानं हेतुरितिवाच्यं, स च विशेषस्तत्तद्विषयत्वमेव, अन्यस्यासंभवात्, तस्य च तत्त द्विषयस्वरूपत्वा द्विषयस्यापि भयादि हेतुतापत्ते रित्याशंका न्निरा

तत्तद्विषयत्वनियमोपि संविदः । नच तत्तद्विषयत्व मेव सामग्र्यधीनो विशेष इति वाच्यं, एकविषयत्वेपि सामग्रीविशेषा त्प्रत्यक्षत्वपरोक्षत्व स्मृतित्वानुभवत्वगरळनिवर्तकत्व तदशक्तत्वादिविशेषदर्शनात् । नच विषयोपि ज्ञप्तिसामग्र्यनुप्रविष्ट इति वाच्यं, अतीतानागतानुमाना-दिषु तदयोगात् । अस्मदादिप्रत्यक्षज्ञानमात्रे त्विन्द्रियसम्प्रयोगाधार तया तस्य कारणत्व मिष्यते । नच मिथ्याभूतस्य विषयस्य सम्प्रयो गाधारता, प्रकाशा त्पूर्वं तत्स्वरूपाभावात् । प्रकाशस्य च सम्प्रयोग समनन्तरभावित्वेन चक्रकाश्रयप्रसंगात् । द्वितीयेपि स्वयम्प्रकाशा दनुव्यवसायादे र्वा यथाभिमानं तत्सिद्धिः । तथाप्यवान्तरवैचित्र्यो पलम्भे विषयविशेष एव कारणमिति चेन्न; विषयविशेषस्यैव तत्र तदवान्तरवैचित्र्यरूपत्वात्; तत्प्रकाशं प्रति सत्यस्य दोषादे रेव प्रयोजकत्वात् । मिथ्याभूतस्य विषयस्यैव च तत्प्रकाशप्रयोजकत्वे सत्या

---

करोति (नचेति) (एकेति) तथाच ज्ञानवैचित्र्यं विषयादेवेति नियमो ऽसिद्धइति भावः (ज्ञप्तिसामग्र्यनुप्रविष्टइति) ततश्च विषयादेव ज्ञान वैचित्र्यसिद्धिरिति शंकार्थः । ननु रज्जुसर्पादि ज्ञानस्य प्रत्यक्षत्वात् तत्र विषयो वश्यं सामग्र्यनुप्रविष्ट इत्याशंक्याह (अस्मदादीति) संप्रयोगाधारत्वं, प्रकाशात्प्रागिति शेषः । चक्रकं विषयसंयोग प्र-काशानांद्रष्टव्यं । ज्ञप्तिप्रश्नपक्षं दूषयति (द्वितीयइति) (यथाभि मानमिति) प्रत्यक्षत्वादिक म्मतभेदेन ; स्वप्रकाशा दनुव्यवसाया द्वा, शक्ति स्त्वादिशब्दग्राह्यानुमाना दित्यर्थः । ननु भयजननशक्ता परोक्षेषु सर्पव्याघ्रादि भ्रमेषु अवान्तरवैचित्र्यं विषयविशेषादेव ज्ञाप्यं, तथाच तत्रासत्यस्य सत्यवैचित्र्यधी हेतुत्वं सिद्धमिति शंकते (तथापीति) प्रयोजकत्वेसत्यादित्य त्रा सत्यादितिच्छेदः । एवं शक्तिवैचित्र्या दतिप्रसंग निरासउक्तः; सम्प्रतिविषयवैचित्र्या दति

दसत्यप्रतीतिमात्रसिद्धेः । तदुपलक्षितस्यज्ञानस्य च हर्षभयाप्ययादिहेतुत्वे प्युपलक्षणस्य तस्य हेतुत्वाभावात् । नहि कारणोपलक्षण मपि तत्कार्यकारणं भवति, अतिप्रसंगात् । अन्वयव्यतिरेकाभ्यां नाति प्रसंग इति चेन्न; - विषयस्यैव निरपेक्षहेतुत्वविवक्षायामप्रतीयमाना दपि सर्पादे र्भयादिप्रसंगात् । ज्ञप्तिसापेक्षत्वविवक्षायां तदुपलक्षण मात्रेणान्वयव्यतिरेकयो रन्यथासिद्धेः । तर्हि ज्ञप्ते रपि निरपेक्षाया हेतुत्वे ज्ञप्त्यन्तरादपि तदुत्पत्तिप्रसंगः, सविषयाया हेतुत्वे विषयोप लक्षणत्वमिति विपरिवर्तप्रसंग इति चेन्न; - ज्ञप्ते रुपलक्षणत्वे तदुप लक्षितस्य विषयस्याज्ञायमानदशाया मपि भयादिहेतुत्वप्रसंगात् । कार्योत्पत्तिदशाया मपि कारणोपलक्षणावस्थानापेक्षाया नामान्तरेण तस्यापि कारणत्वस्वीकारात् । नचैवं विषये प्यस्त्विति वाच्यं, विष- योल्लेख मन्तरेण विषयिणो ज्ञानस्यावस्थानाभावा देव केवलज्ञाना

---

**प्रसंगनिरासेपि दोषइत्याह ( तदुपलक्षितस्येति ) ( अतिप्रसंगादिति ) चन्द्रोपलक्षकशाखाया श्चंद्रकार्यविषय प्रकाशहेतुता प्रसंगादित्यर्थः । ( विषयस्यैवेति ) यदिविषयस्यैव निरपेक्षस्य ज्ञानविषयत्व मनपेक्ष्या पि हेतुत्व मभ्युपगम्येत तदापर मन्वयव्यतिरेकयो रनन्यथा सिद्धिः, नचैषोभ्युपगमस्तवशक्यः, अप्रतीयमाना दपि सर्पादे र्भयोत्पत्तिप्रसंगेन ज्ञानस्या हेतुत्वापत्त्या विषयस्य कारणीभूत ज्ञानोपलक्षणत्वेन कारणत्वा नुपपत्तेः; एवं च सापेक्षस्य हेतुतावाच्या, तत्रचान्वयव्यतिरेकयो रन्यथा सिद्धिरेवेत्यर्थः । "निरपेक्षायाः"- सर्पादिविषयकत्वानपेक्षायाः ; यथा ज्ञानाभावदशायां तदुपलक्षिता द्विषया द्भयादिप्रसंगः तथा विषया भावदशायां तदुपलक्षितात ज्ञाना द्भयादिप्रसंगस्तु न वक्तुं शक्यः, तदानीमपि सर्पादिविषयोल्लेखे तस्येष्टत्वा दित्याह ( नचैवमिति ) अनुल्लेखस्य विद्यमाने ज्ञाने असम्भवादेव न तद्दशायां भयादिप्रसंगा वकाश इत्याह ( विषयोल्लेख इति ) ननु सिद्धान्ते विषयानुल्लेखेनापि**

स्तदुत्पत्तिप्रसंगस्या नवतारात् । अप्रस्तुतनिर्विषयाभ्युपगमपक्षेपि प्रस्त-रावस्थाविशेषविशिष्टस्य कारणत्वस्वीकारात् । ज्ञान मन्तरेण विषय-स्याप्यवस्थानं कथ मिति चेन्न; - क्षणभंगात्मख्यात्यादिप्रसंगात् त्वयापि तत्प्रतिक्षेपात् । तथापि लिंगतज्ज्ञानयो रिवात्रापि विषयविष-यिणो द्वयोरपि कारणत्व मस्त्विति चेन्न; -तत्र द्वयो रप्यनन्यथासिद्धा न्वयव्यतिरेकवत्वात् , अत्रतु विषयस्या न्यथासिद्धत्वा द्विषयिण श्च हेतुताया दुस्त्यजत्वात् । लिंगज्ञानेपि विषयस्योपलक्षणत्व मस्त्विति चेन्न; - लिंगभ्रमे प्युपलक्षणत्वसिद्धेः तदुपलक्षितेन ज्ञानेन लिंगिसिद्धि नियमप्रसंगात् । अतो न लिंगज्ञाने विषयोपलक्षणत्वम् । अत्रापि तर्हि विषयान्तरोपलक्षितज्ञाने प्युपलक्षणत्वं सिद्धमिति ततो हर्षादिसिद्धौ घट्टकुट्यां प्रभात मिति चेन्न; - तद्विषयोपलक्षणज्ञप्तिस्वरूपविशेष-स्यैव तत्कारणत्वस्वीकारात् । यथा गुणविशेषोपलक्षितजात्यादि

---

ज्ञानस्वरूपावस्थाना दतिप्रसंग स्तुल्य इत्यत आह ( अप्रस्तुतेति ) ज्ञानावस्थाविशिष्टं कारणम् , तदेव च विषयोपलक्ष्यं, तच्च प्रस्त रणविशेषदशायामेवेति नानुल्लेखावस्थाया मतिप्रसंग इत्यर्थः । ननु यदि ज्ञाने विषयस्योपलक्षणत्वा न्न भयादिहेतुत्वं, तदा लिंगकरण तापक्षे लिंगस्य कारणता न स्या दित्याशंकते ( तथापीति ) लिंग ज्ञानस्या प्यन्यथासिद्धिरेवेति शंकते ( लिंगेति ) ननु लिंगविभ्रमा दपि अनुमिति र्भवत्येव भ्रमरूपेत्यत्राह ( तदुपलक्षितेनेति ) प्रमा रूपानुमितावेव हेतुत्व मित्यर्थः ( विषयान्तरेति ) ज्ञानमात्रं सर्पाद्युप लक्ष्य मविशेषादिति भावः । " सिद्धौ " - सिद्धिप्रसंगे । सर्पा-दिना तद्विषयकमेव ज्ञान मुपलक्ष्यमिति परिहरति ( तद्विषयोपलक्ष णेति ) अयं बहुव्रीहिः ( यथेति ) पाकजरूपसमानाधिकरणद्रव्यत्व साक्षाद्व्याप्यजातिः पृथिवीत्व मित्यत्र जातिविशेषः पृथिवीत्वशब्दवाच्यो रू ।, त ो ि वि श इत्यर्थः । वस्तुतो न लिंगं करणं, परमार्थ

स्वरूपस्य वाच्यत्वे गुणस्य वाच्यबहिर्भावः, तथात्रापि विषयस्य कारण बहिर्भावः । भवतु वा परमार्थधूमाद्युपलक्षितं ज्ञानं कारणमिति, तथापि भवतो न कश्चि ल्लाभः, तत्रापि विषयस्या कारणत्वात् , सर्वत्र ज्ञानस्य सत्यस्य कारणत्वसिद्धेः ।

किंच —

कार्यकारणभावेहि पौर्वापर्य मुदीर्यते ।
असत्यत्वे कथं पूर्वभावित्वं कस्य चि द्भवेत् ॥

ननु तत्तद्विषयाणां मिथ्याभूताना मपि कारणत्वं शास्त्रत स्सिद्ध्यति, "स्वप्ने ष्वगम्यागमनंच धन्य" मित्यादिभि स्तद्विषयाणा मेव हि शुभाशुभादिसिद्धिहेतुत्वं स्वप्नाध्यायादिषु पठ्यते, इति चेन्न; - उपचारादपि प्रयोगसम्भवात् , तद्भ्रमस्यैव तत्र हेतुत्वा त्तस्य च सत्यत्वात् । स्वाप्नार्थानां ईश्वरसृष्टत्वपक्षे तन्मिथ्यात्वासिद्धे श्च ।

यत्तु लिप्यक्षरै रक्षरग्रहणमिति । तत्र लिपिस्वरूपं संकेतो वर्णबुद्धि श्च न मिथ्याभूताः । नच वर्णबुद्धिरेव तद्वर्णबुद्धिहेतुः, आत्माश्रयप्रसंगात् । नच लिपिषु वर्णभ्रमः सत्यवर्णधीहेतुः, गौरवात् ।

---

**धूमोपलक्षितज्ञानस्यैव प्रमानुमिति हेतुत्वात् , अतो न तद्दृष्टान्तानुरोधादपि विषयो हेतु रित्याह ( भवतु वेति ) इदं च सर्वम्मतान्तर रीत्योक्तं , स्वमते प्रमाया उत्पत्तौ स्वत स्त्वांगीकारात ( तथापीति ) तथा चेत्यर्थः ( शुभेति ) धनं प्रयोजन मस्येति विग्रहे "स्वर्गादिभ्यो यदि"त्युत्पन्न यत्प्रत्ययान्तेन धन्यशब्देन धनहेतुत्वावगतेः । "संकेतः"- अस्या लिपे रयं वर्णो बोद्धव्य इति बुद्धिसंकेतः । वर्णबुद्धे र्लिप्यक्षर पदेन विवक्षायां दूषणान्तर माह ( नचेति ) भ्रमप्रमाभेदा न्नात्माश्रय**

सङ्केतवशा देव तत्सिद्धौ वर्णभ्रमस्य कारणत्वकल्पने प्रमाणाभावात् । भावेपि तत्पारमार्थिकत्वस्योक्तत्वा च ।

रेखागवयेपि सत्यादेव रेखासन्निवेशसादृश्यमात्रात् पूर्वानु भूतगवयस्य पुरुषस्य प्रथमं गवयस्मृतिः । अननुभूतगवयस्य तु न गवयस्मृतिरपि, रेखासादृश्याबोधनात् । कदाचि दाप्तवाक्येन गवयोपलक्षणा त्पश्चा द्रेखाया मपि कस्यचि द्गवयभ्रम स्सम्भवेदपि, तस्यापि न ततः परं किमपि तत स्सत्यगवयज्ञान मिति समस्तीति नासत्यात् सत्यधीः ।

चित्रपुरुषादिभिः पुराणवृत्तान्तादिज्ञानेपि उपदेशो वा, प्रत्युत पुरुषलिखितत्वव्यवसाये सति लिंगं वा, निदानं; नतु चित्रगोचरः पुरुषभ्रमः ।

नादविशेषोपाधिकशब्दनानात्वेपि तत्तन्नादाभिव्यक्तरूपेण स-म्बन्धग्रहणसहकृतशब्दस्वरूप मेवार्थधीहेतुः । तच्च विशेषणेन सह

---

इत्यर्थः ( संकेतेति ) भ्रमेपि संकेतस्यापेक्षितत्वादिति भावः । यद्यपि यत्र गोसदृशो गवय इत्युपलक्षणेन गवयप्रतिपत्तिः तत्र ततः पश्चा द्रेखागवयेपि गवयभ्रमस्सम्भवति, तथापि तेन भ्रमेण ततः परं कस्याप्यर्थस्या सिद्धे र्ना सत्या त्सत्यसिद्धि रित्याह ( यत्र त्विति ) ( चित्रेति ) क्वचिच्चित्रं प्रदर्श्य तदनुरूपपुराणवृत्तान्तस्यो पदेशात यत्रतु विस्रम्भणीयपुरुषलिखितत्वनिश्चयः तत्रानुमाना त्पुराण वृत्तान्तज्ञान मित्यर्थः ( नादेति ) नगो नाग इत्यादौ न कल्पितह्रस्व दैर्घ्यादिविशिष्टशब्दत्वेन कारणत्वं, किन्तु ह्रस्वदीर्घादिनादाभिव्यक्त त्वेन, तथैव संकेतग्रहोपि, तत्र च ह्रस्वादिनादाभिव्यक्तत्वविशेषणं शब्दस्वरूपं च सत्यमेवेत्यर्थः । इदंचाभ्युपेत्योक्तम् , वस्तुतो नाना-

सत्य मेव । नचौपाधिकं शब्दनानात्वं, एकरूपस्य शब्दस्यानुप लम्भात् , कल्पकाभावा च्च । क्रमयौगपद्यादिविकल्पदुस्थत्वेन वर्णानां बोधकत्वे निरस्ते बोधकान्तरं किंचि त्कल्प्यते, तच्च सामर्थ्यादि शालिभिः प्रत्यक्षयितु मपि शक्यते , " स्फोटस्त्वं वर्णसंश्रय " इति महाभारते प्युच्यत इति चेन्न; - वर्णानां स्फोटव्यंजकत्वेपि क्रमयौग पद्यादिविकल्पावतारप्रसंगात् । परिहारस्य च समत्वात । " स्फोट स्त्वं वर्णसंश्रय " इत्यस्य वर्णाना मेव स्फुटीकरणशक्तिमात्र विषय त्वात् । समाधिग्रन्थेष्वपि शब्दब्रह्मापरनाम्नो वाचकेतरस्यैव कस्यचि द्वाचकहेतोः परब्रह्मानुसन्धानोपकारकतया ऽनुसन्धेयत्वविधेः, तावत एव च योगिभि स्साक्षात्करणात । स्फोटदूषणविस्तार स्त्वाचार्यादि ग्रन्थे ष्वनुसन्धेयः ।

बाष्पारोपितधूमेन यादृच्छिकाग्निसिद्धि स्तु न भ्रमसामर्थ्या धीना, अन्यथा सर्वत्र तद्भ्रमे तत्सिद्धिप्रसगात । अत एव हि तत्र प्रामाण्यमपि नांगीक्रियते । अत्रापि यादृच्छिकब्रह्मसद्भावे शास्त्रादे स्स्वय मप्रमाणत्वा त्प्रमाणान्तरासम्भवाच्च, न तत्सत्यत्वव्यवसायः शक्यः ।

तदेवं लोकदृष्ट्या अस्मद्दृष्ट्या च सत्यादेव सत्यस्य सिद्धिः । भवद्दृष्ट्यात्वसत्या दसत्यस्यैव सिद्धिरिति न कथंचिदप्यसत्या त्सत्य सिद्धि रुदाहर्तु शक्यते । असत्यस्यापि प्रतीतिः सत्यादेव दोषादे र्भवति किं पुन स्सत्यस्य ।

---

त्वं स्वाभाविक मित्याह (नचेति) कल्पकं शंकते (क्रमेति) उपलम्भोऽप्यस्तीत्याह (तच्चेति) आगममपि प्रमाणयति (स्फोट इति) एवं च पदस्फोटे सिद्धे लाघवा त्तदैक्ये कल्पिते दैर्घ्यादिभेदादे वार्थ भेदधीरिति भावः । प्रतिबन्धापरिहारानुरोधा न्न वर्णस्फोटो ऽत्र विवक्षितः । स्फुटीकरण मर्थबोधनं (अग्निसिद्धिरिति) सिद्धिः प्रमा- णाभावप्रयुक्तासत्त्वशंकाविच्छित्तिः । " अत एव " - अग्निसिद्धिसाम

ननूपलक्षणत्वं नाम ज्ञाप्यबहिर्भावे प्युपलक्ष्य ज्ञानहेतुत्वं, तथा च मिथ्याभूतस्य विषयस्य उपलक्षणत्वांगीकारे पुनरपि हेतुत्वं सिद्ध मिति चेन्न; - उपलक्षणं हि न स्वरूपेण ज्ञापयति, अपितु स्वज्ञानेन; तथा च ज्ञानगत मेव हेतुत्वं न पुन र्विषयगतं, विषयस्य मिथ्यात्वेन हेतुत्वायोगात् । अन्यथा कुलालविज्ञानविषयभूतस्या गामिघटस्य घटं प्रतिहेतुत्वं स्यात् । नच तद्युज्यते, नियतपूर्ववृत्तित्वाभावात् । नच तावता विषयस्य हेतुत्वाभावे कुविन्दज्ञानस्यापि हेतुत्वं स्यादित्यतिप्रसंगं शक्यते वक्तुम् । तद्वदत्रापि । कार्यस्य कारणकालासन्निधाना त्तत्रा हेतुत्व मिति चे त्तुल्यं, अविशेषा दसान्निध्यस्य । अथाप्यत्र पुनः अतिप्रसंगात् तत्परिहारार्थं विषयस्यापि हेतुत्व मकामेनापि स्वीकर्तव्य मिति चेत्? तर्हि कर्तृज्ञानविशेषणे घटादावपि किं न स्वीकार्यं । कार्यकारणभावनियमस्या वश्यांगीकार्यत्वात् कारणायत्त मेव वैषम्यन्तेषु तेषु स्वीक्रियत इति चेत्? तुल्य मत्रापि । तर्ह्यसत्वेपि कारणत्व मस्त्विति चेन्न;— व्याघातात् । नियतपूर्वभावित्वं हि कारणत्वम् । व्यावहारिक मपि कारणत्वं तेनैव रूपेण निर्वहन्ति दुर्वैतण्डिकाः । पूर्वभावित्वं हि पूर्वकालसत्त्व मेव । कारणं

---

र्थाभावादेव । तद्व्यक्तेः प्रमाजनकत्वे सत्यपि प्रमाणमिति न व्यव ह्रियत इत्यर्थः ( कुलालेति ) आगामिघटज्ञानस्य तच्चिकीर्षाद्वाराघट निर्माणप्रयोजकत्वादिति भावः । “ तत्र ”- आगामिघटे (असान्निध्यस्येति) असत्यस्येति शेषः । आगामिघटादेरपि हेतुत्व मस्त्वित्यभिप्रायेण शंकते ( अत्रापीति ) व्याघातोपपादनं (नियतेति) इदं युष्माकमपीष्ट मित्याह ( व्यावहारिकमिति ) कारणपदार्थ विवेचनेन कारणस्य सत्व मुक्तं, प्रकारान्तरेणापि तदाह ( कारणमिति ) ननु भावित्वांशं परित्यज्य नियमेन यस्मात् पूर्वकाले यत् तत्त्वं कारणत्व मित्युच्यते, इदं चास्

हि पूर्वावधिः । अवधित्वं च स्वसद्भावेनैव । कारणानां नियतपूर्वत्व मिति सामान्यनिर्देशेपि तत्र सद्भावो सद्भावो वा कश्चि देकः परि शिष्यते , परस्परविरोधात् । तत्रासद्भावपक्ष स्त्वकारणलक्षणत्वा दत्र धूयते । सद्भावपक्ष स्त्ववशिष्यते । अतो नागामिनः कारणत्वम । नाप्यत्यन्ता सतः । तेन सत्यादेव कारणा त्कार्यस्य ज्ञापका द्वा ज्ञाप्यस्य सिद्धिः । श्रुतिरपि — " कथ मसत स्सज्जायेते " ति, " सन्मूलाः " इति, " सदेवसोम्येदमग्र " इति च । ननु मिथ्यार्थ ज्ञानस्योपलक्ष्यज्ञानहेतुत्वेपि तज्ज्ञानोपलक्षणार्थं मिथ्यार्थस्य हेतुत्व मिति चेन्न; - तत्रापि तज्ज्ञानस्यैव हेतुत्वात् । तथाचानवस्थेति चेन्नः - अवश्यवेद्यत्वाभावात् । तथा च सत्यस्यैव ज्ञानस्य हेतुत्व मिति नासत्या त्सत्यसिद्धिः ।

---

तोपि समान मित्यत्राह ( नियतपूर्वत्वमिति ) नियतपूर्वत्वमित्यनेन योर्थोभिधीयते , तस्य निर्देशेपीत्यर्थः ( तत्रेति ) नियमेन यदित्यत्र साकांक्षत्वा दस्तीति वा नास्तीति वा वक्तव्यमित्यर्थः । ननु अस्ति नास्तीत्युभय मुच्यते, अस्तित्वगर्भलक्षणं दण्डादिषु, नास्तित्वगर्भं मृत्सु इत्यत्राह ( परस्परेति ) एकस्मि न्वाक्ये अस्तित्वनास्तित्वयो र्विभागेनान्वयो न सम्भवति, आवृत्त्या वाक्यभेदप्रसंगा दनुगतलक्षणासिद्धे श्च; तत श्च यस्मा त्पूर्वं नियमेन यदस्ति च नास्तिचेति समुच्चितास्तित्वनास्तित्वाभ्या मन्वयो वाच्यः, तत्र च विरोध इत्यर्थः ( अकारणेति ) सम्प्रतिपन्ने कारणे दर्शना दकारणे दर्शनाच्च कारणलक्षणत्वासम्भवा दित्यर्थः । " सिद्धिः " - उत्पत्तिः ज्ञप्ति श्च ( अवश्येति ) उपलक्षणत्वस्येति शेषः । बिम्बानुमानेपि ज्ञानस्यैव हेतुत्वमिति पूर्वोक्तन्यायेन सिद्धं. इदानीं लिंगस्य हेतु

किंच प्रतिबिम्बा द्बिम्बसिद्धौ विप्रतिपन्नः प्रतिबिम्बो बिम्बपूर्वकः प्रतिबिंबत्वादिति वा, प्रतिबिंबज्ञानं बिंबज्ञानपूर्वकं प्रतिबिंबज्ञानत्वा दिति वा अनुमानप्रवृत्तिः। उभयत्रापि सत्यादेव ज्ञाप्यसिद्धिः, प्रति बिंबत्वस्य ज्ञानस्य च सत्यत्वात् । नहि चन्द्रत्वा दित्यनुमानं प्रयुज्यते, व्यभिचारात् । अपितु चन्द्रत्वेना रोपितत्वा दिति । चन्द्र त्वेनारोपितत्वं सत्य मेव । यथा रजतत्वेनारोपित मिद मिति ज्ञानं परमार्थविषय मेव, बाधकज्ञानत्वात् ; तथा प्रतिबिंबचन्द्रोयमिति ज्ञानं परमार्थविषयमेव । ततो वा नासत्या त्सत्यसिद्धिः ।

किंचासत्यत्वेपि प्रतिबिंबादे र्ज्ञातृत्वज्ञानाद्यनेकसत्योपश्लेषेणैव सत्यबुद्धिहेतुत्वसिद्धिः ।

---

**त्वेपि तत्र नासत्या त्सत्यसिद्धि रित्याह ( किंचेति ) "विप्रतिपन्न" इति पक्षविशेषपरं, नतु विप्रतिपत्तिपरम् , स्वार्थानुमानत्वात् ( इति वानुमानप्रवृत्तिरिति ) एतत्प्रयोगानुरूप मनुमान मित्यर्थः ( ज्ञानस्येति ) भावप्रधानो व्यपदेशः ( नहीति ) यदि चन्द्रत्वादिति प्रयोगानुरूप मनुमानं स्यात् तदा प्रतिबिम्बचन्द्रं चन्द्रत्वं हेतुं च प्रातिभासिक मंगीकृत्य तत्रासत्या त्सत्यसिद्धि श्शंक्येतापि, नतुतथानुमानं, व्य- भिचारादित्यर्थः । ननु प्रतिबिंबत्वस्य हेतुत्वेपि तदेव प्रातिभासिकं स्यादित्यत्राह (अपित्विति ) एतज्जलोपाधिक चंद्रत्वप्रकारकारोपविषय श्चंद्रसन्निधानवान् जलोपाधिकचन्द्रत्व प्रकारकारोपविषयत्वा दित्य नुमानम् । इदमेव प्रतिबिंबत्वमितिभावः । कथं सत्यत्व मित्यत्राह (यथेति) तद्बाधकज्ञानत्वा दित्यर्थः ( ततोवेति) लिंगज्ञानं हेतुरिति पूर्वोक्तपक्षेण विकल्पः । स्वार्थानुमानत्वेपि असत्या लिंगात्सत्यसिद्धिं वदता त्वया एवं हि तदनुमान मभिलपनीयमिति प्रयोगप्रदर्शन तात्पर्यं । विषयस्यासतः कारणत्व मंगीकृत्यापि मिथ्याभूतशास्त्रा द्ब्रह्म सिद्धिमाह (किंचेति) ज्ञातृत्वं ज्ञानसंबंधः । आदिपदेन ज्ञात्रादेः**

यत्तूपलक्ष्यबहिर्भूतत्वे सत्युपलक्ष्यप्रतीतिजनकत्व मुपलक्षणत्वं, तत श्च ज्ञानोपलक्षणतया विषयो यद्यभिमत स्स्या त्तर्हि तत्रैवासत्या ऽसत्यप्रतिपत्तिरिति ; तन्न , वस्तुतो विषयस्योपलक्षणत्व मपि नाभ्यु पगच्छामः, स्वेनैव वा स्वविषयज्ञानान्तरेण वा सविषयज्ञानस्वरूप प्रकाशस्य प्रागेवोक्तत्वात् । अभ्युपगम्यापि वदामः । नहि भ्रमविषय स्यापि सर्वथा मिथ्यात्वं ब्रूमः, सामान्यरूपेण देशकालान्तरादिषु सत्त्वाभ्युपगमात । रजतज्ञान मिति तेन रूपेण उपलक्षणेतु सत्य मेवोपलक्षणम् । शुक्तिरजतज्ञान मिति प्रबुद्धपरामर्शेपि शुक्तिरजतत्व तत्संसर्गाणां स्वरूपतः सत्यत्वात, शुक्तिगतात्यन्ताभावप्रतियोगिनोपि

---

परिग्रहः । असत्त्व मुपलक्षणत्वं च विषयस्या भ्युपगम्य परिहृतं, अथानभ्युपगम्य परिहर्तु मनुवदति ( यत्त्विति ) स्वप्रकाशेन ज्ञानेन ज्ञानविषययो र्युगपदेव ग्रहान्नविषयज्ञाप्यत्वरूप मुपलक्ष्यत्वं ज्ञान स्यास्ति, अनुव्यवसायपक्षेपि विशेषणज्ञानस्या हेतुत्वा न्नास्तीत्यर्थः । उपलक्षणत्वानभ्युपगमेनोक्तं, तदभ्युपगमेना प्याह (अभ्युपग म्येति) (सर्वथेति ) न स्वरूपतः, किंतु प्रतिपन्नदेशकालयो रित्यर्थः (सामान्येति ) देशविशेषानिर्धारणेन क्वचिद्देशेकस्यांचि- द्दिशि सत्त्वाभ्युपगमा दित्यथः । दूषणान्तरमाह ( रजतेत्यादिना ) किं रजतज्ञानमिति ज्ञाने असत्यस्यो पलक्षणतया हेतुत्व मुच्यते, उतशुक्ति रजतज्ञानमिति ज्ञानइति विकल्प मभिप्रेत्य प्रथमे दोष माह ( रजतज्ञान मिति ) रजतज्ञान मित्यत्रोपलक्षणत्वेन रजतत्वेनोपलक्षणता स्यात, तथा च सत्यमेवोपलक्षणमित्यर्थः । द्वितीय आह(शुक्तिरजतेति) किं शुक्तिरज- तज्ञान मित्यत्र शुक्तिपदस्य सप्तम्यन्ततया ज्ञानान्वयेन शुक्तिविशेष्यकं रजतत्वप्रकारकज्ञानमिति विवक्षितं,उत शुक्तिपदस्य षष्ठयन्ततया रजत पदान्वयेन शुक्तिनिष्ठतया प्रतीयमानं यद्रजतत्वं तस्य ज्ञानमिति विवक्षितमिति विकल्प्य , आद्यआह ( शुक्तिरजतत्वेति ) द्वितीये ( शुक्तिगतेति ) "विशेषण विशेष्यतत्संबधादे" रित्यादिशब्देन वि

रजतत्वस्य शुक्तिनिष्ठतया प्रतीयमानताया अपि सत्यत्वात् । शुक्ति निष्ठतया प्रतीयमानत्वविशेषितरजतज्ञान मिति विशिष्टरजतेनोपलक्षणेपि न विशेषणविशेष्य तत्सम्बन्धादे रसत्यत्वं प्रपश्यामः । अतो न क्वचिदपि असत्या त्सत्यसिद्धिः । यद्यपि चासत्यानां केषाञ्चि दन्वय व्यतिरेकानियमा त्सत्यसिद्धिहेतुत्वनियमः, तथापि नासत्यादेव सत्यब्रह्म सिद्धिनियमो व्यवहर्तुं शक्यते, अदर्शनादन्वयव्यतिरेकासिद्धेः । सम्भावनामात्रेपि यादृच्छिकसंवादिलिंगविभ्रमादिवत् प्रमाणत्वाभावात् । असत्या त्सत्यसिद्धि निर्णायकस्यापि प्रमाणस्यानुपगमेन

---

शेषणविशेषग्रहः । असत्यस्य सत्यसिद्धिहेतुत्वं नास्तीत्युक्तं, इदानीं तदभ्युपगम्यापि शास्त्रा त्सत्यब्रह्मसिद्धि र्नसंभवतीत्याह ( यद्यपिचेति ) ( असत्यानामिति ) प्रातिबिंबाना मन्वयव्यतिरेकनियमा द्धेतुसामर्थ्यादेव सर्वत्र प्रमाप्रमाभाव प्रयुक्तासत्वशंकानिवर्तक प्रमितिहेतुत्वं, नतुयदृच्छासंवादिलिंगव दनियम इत्यर्थः ( असत्यादेवेति ) प्रमाणान्तरसंवादेन विनासत्यमेव ब्रह्मसिध्यतीतिनिर्धारणं न संभवति, अस त्यशास्त्रब्रह्मसिध्योः प्रतिबिंबव दन्यत्रान्वयव्यतिरेकादर्शना दित्यर्थः । ननु एवमपि बाष्पारोपितधूमादिव सत्यस्यापि ब्रह्मणस्सिद्धौ न विरोध इत्यतआह (संभावनेति) "प्रमाणत्वाभावात"- मानाभावायत्ता सत्व शंकानिवर्तकत्वाभावादित्यर्थः । ननु सत्य ब्रह्मसिद्धौ न संभावना मात्रम्, किंतु " वेदान्तविज्ञान सुनिश्चितार्थाः " इत्यादिप्रमाणै स्सत्यब्रह्म सिद्धिहेतुत्व निर्णयके, सुपसर्गेणात्र विपर्ययव्यवच्छेदा दित्यत्राह ( असत्यादिति ) तेषामपि प्रमाणाना मसत्यतया तैस्सत्यब्रह्मसिद्धेर्वि द्यमानाया अविद्यमानायाश्च बोधनासंभवात् सत्यब्रह्मसिद्धि र्भवतीति निर्णयो नसिध्यतीत्यर्थः । ननु बाधाभावा द्ब्रह्मसिद्धिस्सत्येत्यआह

श्चिवक्षितासिद्धे श्च । बाधाभावस्यच परिहरिष्यमाणत्वात ।

यत्तूक्तं- विषयमिथ्यात्वे तद्विषयज्ञप्तेरपि सत्यत्व न्नासिद्ध्यतीति । तदपि हास्यं, कारणमिथ्यात्वे कार्यमिथ्यात्वस्यच तुल्यन्यायतया दुस्त्य जत्वेना सत्यात्सत्योत्पत्तिभगात । एवं ज्ञापकमिथ्यात्वे ज्ञाप्यमिथ्यात्वमपि स्यात । इदंच स्वसिद्धान्तोच्छेदनमनवेक्षमाणै रुच्यते, मिथ्याभूतप्रपंच सिद्धिरूपस्य ब्रह्मणोपि मिथ्यात्वप्रसंगात् । ब्रह्म स्वप्रकाशात्मकमेव, तथापि साक्षिप्रकाशो वृत्तिप्रकाशोवा प्रपंचसिद्धिरूपइतिचेन्न;- तयोर्ब्रह्मव्यति रेकेण सत्यत्वे भेदवादावताराद् । अव्यतिरेकेण सत्यत्वेतूक्तदोषानतिक्र मात । असत्यत्वेतु तयोरपि ब्रह्माधीनसिद्धित्वेन तत्रैवोक्तदोषप्रसंगात् । अस्तु ब्रह्मणोपि मिथ्याविषयत्वं मिथ्यावेद्यत्वंच, तथापि बाधाभावात् सत्यत्वमितिचेत् ? तुल्यं । सविषयावृत्ति स्तत्र बाध्यतइतिचेन्न;- स्वप्ना दिषु दर्शनमस्त्येव, अर्थास्तु नसन्तीत्येव बाधकप्रत्ययोदयात । विषया भावे कथं विषयित्वं, विषयित्वाभावेच कथं ज्ञानत्वमितिचेन्न;- अतीत विषयानुमानादिषु विषयाभावेपि विषयित्वदर्शनात् । यद्देशकालादिवृत्ति तया यस्य प्रतिभासः तद्देशकालादिवृत्तितया तस्य सद्भावे कथं तत्रविष याभावइतिचेन्न;- अत्रापि यथा कथंचि द्विषयस्य विद्यमानत्वात् । तदुक्तं- "जन्मन्येकत्रभिन्नेवा तथा कालान्तरेपिवा । तद्देशेवान्यदेशेवा स्वप्नज्ञानस्यगोचर " इत्यादि । तथापि प्रतिपन्नोपाधिसम्भेदेन विषयस्य विद्यमानत्वं नास्तीतिचेन्न;- तावतापि तद्विषयत्वस्यानपायात् । प्रामा ण्यमात्रमेवहि ततो निवर्तते ।

---

**(बाधेति) (तुल्येति) मिथ्याप्रतिसंबंधिकत्वस्या विशेषादित्यर्थः (ब्रह्मा धीनेति) मिथ्याभूतयो र्वृत्तिसाक्षिणोः प्रकाशाधीनसिद्धित्वं वाच्यम्, त[illegible]च ब्रह्मान्यत्र प्रकाशांगीकारे ऽनवस्थाप्रसंगात ब्रह्माधीनसिद्धित्वंम् , [illegible]च विषयमिथ्यात्वा द्ब्रह्ममिथ्यात्वंस्यादित्यर्थः । " मिथ्यावेद्यत्वं "- [illegible]याभूतशास्त्रवेद्यत्वं (तुल्यमिति) रज्जुसर्पज्ञानादिष्विति शेषः ( वि- [illegible]त्वेति ) तस्य ज्ञानस्वभावत्वादित्यर्थः ( अत्रापीति ) अन्यथाख्याते**

अख्यात्यादिपक्षे च क्वचिदपि विषयमिथ्यात्वा नभ्युपगमात् , विषयमिथ्यात्वस्यच दूरतोनिरस्तत्वात् ; असत्ख्यातित्वस्यैवान्तत स्स त्वात् ; तदसत्त्वे तत्पक्षांगीकारस्यैवानुपपन्नत्वात् ; उपपन्नत्वांगीकारे. चा नियमात् , न कथंचि दप्यसत्यात्सत्यप्रतिपत्तिरुदाहर्तुं शक्यते ।

यत्तु वस्तुतोसत्यस्यापि नसहसा पुनश्शास्त्रस्या सत्यता धियमधि रोहतीति । किं ततः ? निर्विशेषबोधकत्वव्यवसायोपपत्ति रितिचेन्न;- तदुपपत्तावपि तत्प्रमात्वासिद्धेः । आरोपितलिंगेन लिंगिबुद्धिवत् । ततश्च सत्यब्रह्मव्यवसायासिद्धिः । नच शास्त्रस्य असत्यता सहसैव धियन्नाधिरोहति, ब्रह्मव्यतिरिक्त समस्तमिथ्यात्वश्रवणवेळायामेव शास्त्र स्य तत्प्रामाण्यस्या प्येकप्रहारेण बाध्यमानत्वात् । अन्यथा सजातीय विजातीयादि समस्तभेदशून्य ब्रह्मप्रतीत्यनुदयप्रसंगात् ।

एतेन प्रमाणस्वरूप मिथ्यात्वेपि प्रामाण्यमस्तीति विप्र लंभव्यवहारोपि दत्तोत्तरः । नच बाधितानुवृत्त्या सादितिप्रतीत्य

---

रितिभावः (अख्यात्यादीति) आदिपदेन यथार्थख्यातिपरिग्रहः ( असत्ख्या तित्वस्येति ) रजतविषयत्वादेः सत्यत्वांगीकारेपि असद्विषयत्वं स दित्येव त्वयेष्टव्यं, अन्यथामिथ्यात्वपक्षांगीकारस्यैवा नुपपन्नत्वादित्यर्थः । रजताभावे रजतविषयत्व मनुपपन्नम्, विषयासत्वे असद्विषयत्व मु पपन्नत्वा दंगीक्रियत इत्यत्राह (उपपन्नेति) एवमपि विषयस्यासत्वे तद्विषयत्व मसदिति नियमो भग्नइत्यर्थः (एकप्रहारेणेति) प्रपंचेन सहैव शास्त्रस्यापि मिथ्यात्वेन ज्ञायमानत्वा दित्यथः ( अन्यथे शास्त्रतत्प्रामाण्ययोः मिथ्यात्व ज्ञानाभाव इत्यर्थः । नच स्व विरोधधीः, तथासति शास्त्रमसदेव निवर्तकज्ञाना त्प्राक्कधा न इति त्वदुक्ते रप्यसंभवात । अद्वैतप्रमाणस्या सत्यत्वेपि प्राम सत्यत्वा दारोपितलिंगेप्रामाण्यस्यापि मिथ्यात्वा दत्र तद्वैषम्या त्स सिद्धिसंभवइति केनाप्युक्तं निरस्यति (एतेनेति) प्रामाण्यस्या प्येकये

SASTHRAMUKTHAVALI-48

# THE SATHADUSHANI

BY
SRI VEDANTA DESIKA

WITH
chandamarutha

BY
THODDAIACHARIA

*Edited by*
*P B ANANTHACHARIAR*

*Printed at the*
SRI SUDARSANA PRESS
CONGEEVERAM

Vol 4.
(Copy Right Registered)

1926
Price Rs 3—8—0

श्रीः ।

शास्त्रमुक्तावळी—४८.

# शतदूषणी ।

श्री कवितार्किक सिंहेन सर्वतन्त्रस्वतन्त्रेण

श्रीमद्वेदान्ताचार्येण विरचिता

वाधूलकुलतिलक श्रीमहाचार्यविरचितया

चण्डमारताख्यया व्याख्यया सह

श्रीकाञ्चीप्रतिवादिभयङ्करअनन्ताचार्येणपरिशोधिता

श्रीसुदर्शनमुद्राक्षरशालायां

अमुद्र्यत ।

## चतुर्थसंपुटः—षट्षष्टितमस्कन्धान्तः

श्रीकाञ्ची ।

इदानी मेतन्मूल्यम् ३—१२—८

श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

## शतदूषणी ।

### एकचत्वारिंशो वादः ।

अविद्याख्यावद्यं फलमपि तदीयं भगवतो
विदूरे यस्येति श्रुतिशिरसि जोघुष्यत इदम् ।
यदज्ञानाद्बन्धो भवति न तु यद्वैभवविदां
स मे देवः श्रीमाञ्छमयतु सदा चेतसि तमः ॥

यः पुनरयं स्वप्रकाशचिन्मात्रैकरसस्य ब्रह्मणो विश्वभ्रमहेतुरविद्याख्यो दोषः, स किं परमार्थः, उतापरमार्थः? आद्येपि ब्रह्मणो भिन्नोऽभिन्नो वा? भिन्नत्वे परमार्थद्वित्वप्रसङ्गः । अभिन्नत्वे च ब्रह्मण एव विश्वभ्रमहेतुदोषत्वमुक्तं स्यात् । तथाच ब्रह्मणो नित्य-

---

### चण्डमारुतः ।

ज्ञानाङ्कूरश्चिवङ्कराः कलिमलप्रोल्लाससर्वङ्कषाः
काणादप्रमुखप्रकल्पितकथाकल्कङ्कषाः पञ्चषाः ।
व्याकुर्वन् यतिभूपतेरिह कृतीरुर्जावयन्मादृशा
नाकल्पं करुणालयो विजयतां श्रीश्रीनिवासो गुरुः ॥

यः पुनरिति । स्वप्रकाशपदेन स्वविषयाविद्याश्रयत्वे व्याघातः प्रदर्श्यते । स्वप्रकाशत्वेपि अखण्डानन्दत्वादेरप्रकाशात्तदवच्छिन्नविषयकाज्ञानमुपपद्यत एवेत्यत्राह— चिन्मात्रे ति । आनन्दत्वादयो धर्मास्सन्त्येवेत्यत्राह— एकरसस्ये ति । आनन्दत्वादेर्मिथ्यात्वान्न तद्विषयत्वमज्ञानस्य युक्तम्, तज्ज्ञानस्याविद्यानिवर्तकत्वप्रसङ्गेनातत्त्वज्ञानान्मोक्षापत्तेः । ब्रह्मणो नित्यमुक्तत्वनिर्दोषत्वाच्च संसारहेत्वज्ञानाश्रयत्वं व्याहतमित्याह— विश्वभ्रमहेतुर्दोष इति ।

त्वेन नित्यभ्रमप्रसङ्गः। सहकारिसद्भावात् कदाचिद्भ्रमः, तद्वैकल्यात्तु पश्चान्निवृत्तिरितिचेत्? तर्हि प्राप्ताप्राप्तविवेकेन सहकारिदोष इत्युक्तं भवति। तत्रापि हि परमार्थापरमार्थविकल्पानुपपत्तिर्दुर्वारा। कश्चासौ सहकारित्वेन विवक्षितः? तत्त्वमस्यादिवाक्यजन्यतत्त्वज्ञान प्रागभाव इति चेन्न;— भावरूपाज्ञानप्रतिपादनप्रयासवैयर्थ्य प्रसङ्गात्। तस्य च प्रागभावस्य न ब्रह्मस्वरूपता युक्ता, तत्त्वज्ञानाद्ब्रह्मनिवृत्तिप्रसङ्गात्। ब्रह्मव्यतिरिक्तस्य तु मिथ्यात्वेन तद्दर्शन हेतुदोषत्वं ब्रह्मण एव स्यात्। ब्रह्मणश्च नित्यत्वेन तस्य नित्य

---

ननु सहकारिवशादातत्त्वज्ञानाद्भ्रमः, उत्पन्ने तत्वज्ञाने सहकारिणो निवृत्तत्वान्न भ्रमोत्पाद इति शङ्कते— सहकारी ति। तर्ही ति। ब्रह्मणि सत्यपि सहकार्यभावे भ्रमानुत्पत्तेस्तत्सत्त्वे च भ्रमोत्पत्तेरन्वयव्यतिरेकाभ्यां सहकारित्वेनाभिमतस्यैव कारणत्वं स्यान्न ब्रह्मणः, परिणामित्वमपि ब्रह्मणोऽपरिणामित्वश्रुत्यनुसारेण सहकारिण एव स्यात्— इति तस्यैव दोषत्वं युक्तम्, ब्रह्मणः परिणामित्वेपि अखण्डाकारवृत्तिरूपप्रमां प्रत्यपि कारणत्वादप्रमासाधारणकारणत्वाभावात् न ब्रह्मणो दोषत्वम्, किन्तु सहकारिण एवेत्यर्थः। विकल्पानुपपत्ति रिति। विकल्पयोः कोट्योरनुपपत्तिरित्यर्थः। दुर्वारे ति। "ब्रह्मव्यतिरिक्तस्यत्वि" त्यादिना वक्ष्यमाणो दोषोऽपरमार्थे प्रसज्यत इति भावः। ने ति। नच परिणाम्यर्थं तदुपादानम्, अभावस्य भावपरिणामत्ववत् भावपरिणामित्वस्यापि विरोधात्। किं प्रागभावो ब्रह्मस्वरूपमेव, उत तदतिरिक्त इति विकल्पमभिप्रेत्याद्ये दोषमाह—तस्ये ति। अनित्यमात्रस्य तत्वज्ञाननिवर्त्यत्वादिति भावः, यद्वा तत्वज्ञाने सति ब्रह्माभावप्रसङ्ग इत्यर्थः। द्वितीये दोषमाह—ब्रह्मव्यतिरिक्तस्ये ति। मिथ्यात्वेने ति। अन्यथा अद्वैतहानिरिति भावः। तस्ये ति। प्रागभावस्येत्यर्थः। ननु कथं तत्त्वज्ञानानुत्पादप्रसङ्गः? तत्सामग्रीवशात्तदुत्पत्तेः आनिवार्यत्वादिति चेन्न,— अध्याससामग्र्या नित्यत्वेन तत्त्वज्ञानोत्पत्तियोग्यत्वेनाभिमतकालेपि प्रागभावाध्यासस्यावश्यकत्वात्, तस्य चाध्यस्यमानाविनाभावात्,

लयमेप्यति। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समा' 'न कर्म लिप्यते नरे' 'यस्य नाहङ्कृतो भाव' इत्यादिभिर्ब्रह्मविदा कर्मालेपोपदेशश्च जीवन्मुक्तिमन्तरेण न घटते । 'तस्यकार्यं नविद्यत' इति सर्वोपायानुष्ठाननिवृत्तिरपि तेषान्तदैव मुक्तिमावेदयति । अतो वयन्निर्गुणब्रह्मविदस्सर्वस्मैरयोग्या — इति ।

अत्र ब्रूम'- यदुक्त ज्ञानस्यैव मोक्षप्रतिबन्धकनिवर्तकत्वात्तस्यच निष्पन्नत्वात्तदानीमेवासौ मुक्त इति, तदसत्, असकृदावृत्तस्याप्रयाणादनुवृत्तस्य ज्ञानविशेषस्य मुक्तिसाधनत्वस्थापनात्, तस्य च प्रक्रान्तस्याप्यन्तिमप्रत्ययसावधिकत्वेन निश्शेषनिष्पन्नत्वाभावात्। भवतुवोपायभूतज्ञान निष्पन्नम्, तथापि तदानीमेव फलसिद्धिरिति नायन्नियम, स्वर्गादिसाधनेषु सगुणानुष्ठितेषु यज्ञादिष्विव प्रतिबन्धकेन फलविलम्बोपपत्ते । नच प्रतिबन्धकमपि मिथ्यात्वाविशेषातत्वज्ञानेनैव निवृत्तमिति वाच्यम्, तथासाति जीवनादेरपि निवृत्तिप्रसङ्गेन जीवन्मुक्तिवचोयुक्तेरेवायुक्ते । शरीरादिमिथ्यात्ववर्णनदूषणमपि विस्तरेणान्यत्र द्रष्टव्यम् । इहामृतत्वश्रुत्यादिकमपि प्रत्यक्षादिविरोधात् बहुविधश्रुतिस्मृत्यादिविरोधाच्च उत्तरपूर्वाघाश्लेषविनाशरूपमुक्तिकल्पावस्थाविशेषाभिप्रायमिति व्यवस्थाप्यते । एतदभिप्रायेण ह्युक्तं महाभारते- 'मुक्तानां लक्षणह्येतद्यच्छ्वेतद्वीपवासिनामि' ति । 'अत्र ब्रह्म समश्नुत' इत्येदपि

---

**स्थापनादि**ति। अविधेयज्ञानभङ्गे। **फलबिलम्बोपपत्ते**रिति। तथापि प्रबलारब्धकर्मप्रतिबन्धादेव निश्शेषाविद्यानिवृत्त्यभाव इति भावः । **श्रुतिस्मृती**ति । ध्यानादिविधिः 'तस्यताव' दित्यादिश्च श्रुति, 'बुद्धेचेदि' त्यादिस्तु स्मृति' ध्यानादिस्मृतिश्च । **अश्लेषविनाशे** ति तत्सङ्कल्पाभिप्रायम् । ननु 'मुक्तानांलक्षण' मिति वचनेन जीवतोऽपि मुक्तिप्रतीतेः सिद्धान्ते कथ तन्निराम इत्यपेक्षायामाह **एतदि**ति ।

समाधिदशाभाविब्रह्मानुभवपरम्। नच सैव साक्षाद्ब्रह्मप्राप्तिः, अस्या नुकूल विच्छेदात्, अपुनर्विच्छेदस्य निरवशेषब्रह्मानुभवस्य सिषाधयिषितत्वात् ।

यत्तु यथा पूर्वं देहानुबन्धस्य दग्धपटवन्नबन्धकत्वमिति, तदपि स्वहृदयविसंवादेनोक्तम्। नहि तत्वमस्यादिवाक्यश्रवण समनन्तरमप्यनुवर्तमानदेहेन्द्रियादिभिर्दुःखादिकं न जायते। केयं जीवन्मुक्तिः? किं जीवत एव देहादिभेदनिवृत्तिः, उत तत्प्रतिभासस्य, अथ तदधीनप्रवृत्तेः, यद्वा तन्मूलपुण्यपापादेः, अथवा तत्प्रयुक्तसुखदुःखादेः, यद्वान्यस्य कस्यचिदिति। नाद्य, व्याघातात्, जीवनस्य शरीरादिसम्बन्धात्मकत्वात्। सशरीरत्वं बन्धः, अशरीरत्वं मोक्ष इति त्वयैव श्रुतिभिरुपपादितत्वात्। अथ सशरीरत्वप्रतिभासे सत्यपि बाधात् सशरीरत्वं निवृत्तमिति न विरोध इति चेत्? सशरीरत्वे निवृत्ते कथमशरीरस्य सतो जीव-

---

सिसाधयिषितत्वादिति । मुमुक्षुणा सिसाधयिषितत्वात्सैव मुक्तिरिति भावः । द्वितीयादिकल्पेषु निवृत्तिरित्यध्याहारः । चतुर्थे निवृत्तिरनुत्पत्तिः । व्याघातादिति । शरीरसम्बन्धतन्निवृत्त्योः परस्पर व्याघातः बन्धमोक्षयोः परस्पर व्याघात इति व्याघातद्वयं विवक्षितम् । इदञ्च क्रमेण जीवनस्येत्यादिपञ्चम्यन्तद्वयनिवक्षितहेतुद्वयेनोपपाद्यते। श्रुतिभिरिति 'नह वैसशरीरस्ये'त्यादि' श्रुतिः। द्वितीयव्याघातपरिहारं शङ्कते अथेति। सशरीरत्व निवृत्तौ परममुक्त्यपेक्षया जीवन्मुक्तेः को विशेष इत्यपेक्षाया प्रतिभासो विशेष इत्याह सशरीरत्वप्रतिभास इति। कथमिति। जीवनाभावादिति भावः । ननु शरीरप्रतिभासो जीवनम्, अतो न विरोध इत्यत्राह अजीवत इति। सम्प्रतिपन्नाया ज्ञानजन्यायाश्शरीरनिवृत्तेः तत्प्रतिभासनिवृत्त्यात्मकत्वात् ततोऽपि त्वदिष्टज्ञानजन्यसशरीरत्वनिवृत्तिः प्रतिभासनिवृत्तिरेव वाच्या, एवञ्च शरीरप्रतिभासात्मकजीवनस्याभावाज्जीवन्मुक्तिविरोध इत्यर्थः । अथवा— कथमिति।

न्मुक्ति 'अजीवतोपि हि मुक्ति सशरीरत्वस्य मिथ्यार्थवशात्त निवृत्तिमात्रात्मा. ननु त्वन्मते न्दायिका वा तु वत्सनिवृत्तिरिति जीवन्मुक्तेरजीवन्मुक्तेश्च न विशेष पक्षान्तर । सशरीरत्वप्रतिभासनिवृत्तावपि बाधेपि द्विचन्द्रज्ञानादिवत्तदनुवृत्त्या विशेष इति चेत्— त्वत्पक्षे बाधितानुवृत्त्यसम्भवस्योक्तत्वात् । प्रत्यक्षाविरोधाच्च । निवृत्तावप्यनुवृत्तवद्भातीति चेन्न— स्वरूपतो नित्यनिवृत्तस्य प्रतिभासमात्रार्थेन सिद्धितया भिमतस्य प्रतिभासानुवृत्तौ निवृत्तिवचनायोगात् । न द्वितीय. बाधादेव. जीवनविशेषाच्च। नच देहादिभेदप्रतिभासा त्यन्तनिवृत्तौ जीवनन्नाम किमपि । नच सुषुप्तवदसौ जीवन्मुक्तो निवृत्तप्रतिभास एव प्राणिति. तथासति यथापूर्व प्रवृत्तिनिरोधात् । अत एव न तृतीय ।

---

शरीरसम्बन्धस्यैव जीवनत्वादिति भाव' । मुक्तावान्तरविशेषपरिदूषणान्तरमाह **अजीवतोऽपिही** ति । मुक्तिसामान्यस्य सिद्धे हि जीवन्मुक्तिरिति विशेषो वाच्य. अत शरीरनिवृत्तिस्सामान्यमिति वाच्यम. ततश्च परममुक्तौ प्रतिभासनिवृत्त्यतिरेकेण शरीरनिवृत्त्यभावात् जीवन्मुक्तावपि प्रतिभास निवृत्तिर्वाच्या, ततश्चोभयोरविशेष इत्यर्थ । मिथ्यार्थव्यवसाय - मिथ्याभूतस्यार्थस्याध्यवसाय' । मिथ्यार्थतत्प्रतिभासनिवृत्तेरसम्भवात्तत्व **ननुत्वन्मत** इत्यादिना विवक्षितम् । **सशरीरत्वे**ति । बाधात् प्रतिभासेऽपि विषयेण सहैव निवृत्त तथापि प्रतिभासान्तरोत्पत्त्या प्रतिभासानुवृत्तिर्युज्यते, अप्रामाण्याध्यवसायलक्षणबाधे सत्यपि द्विचन्द्रज्ञानानुवृत्तिवदित्यर्थ । **त्वत्पक्ष** इति । अनुवृत्तिहेतुभूतदोषस्यापि मिथ्यात्वात्सहैव निवृत्तेरित्यर्थ । **प्रत्यक्षविरोधाच्चे** ति । नाद्य इत्यनेनान्वय' । **बाधादेवे** ति । आद्यकल्पोक्तात् प्रत्यक्षविरोधादित्यर्थ. । **नचे** ति । जीवनस्य तद्व्याप्तत्वादिति भाव. । **किमपि**- देहसम्बन्धो वा प्राणसम्बन्धोवेत्यर्थ. । **यथे** ति । सुषुप्तवदेवेति भाव । **अत एवे** ति

नच यत्किञ्चित्प्रवृत्तिमन्तं कञ्चिददृश्तनिष्ठं पश्यामः शृणुमो वा । प्रतिष्ठिताद्वैतविज्ञानैरेवहि भवत्सिद्धान्त ग्रन्थकन्थाशतानि निर्मितानि । नापि चतुर्थ , जातिवर्णाश्रमाद्युपाधिकाना विधिनिषेधाना ब्रह्मविदोप्यनुवर्तनीयत्वस्य " नाविरतो दुश्चरितात " " नियतस्य तु सन्न्यास कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामस परिकीर्तित । " इत्यादिभिस्सिद्धत्वात् । अलेपकमतभङ्गेचास्य प्रपञ्चो ग्राह्य । अथ मन्यसे अबुद्धिपूर्वकेषु न लेप इति आस्त्वेव, तथापि नासौ मुक्त , बुद्धिपूर्वै प्रारब्धैश्च बन्धानुवृत्ते । एतावन्मात्रजीवन्मुक्तेरश्लेषश्रुतिवशेनास्माभिरपीष्यमाणत्वात् । अत एव न पञ्चम , प्रामादिकै कर्मभि ब्रह्मविदा फलारम्भानभ्युपगमात् । बुद्धिपूर्वै प्रारब्धैश्च फलस्य प्रत्यक्षादिसिद्धस्य दुरपह्नवत्वात् । अनिर्वचनीयत्वादिमात्रेण तदपह्नवे तत्वज्ञानात्प्रागपि वस्तुतो मुक्तत्वेन जीवन्मुक्तिपर्वकल्पनानुपपत्ते । नापि षष्ठ , अन्यस्यापि निवृत्ति जीवनविरोधिनी नवा ? आद्ये विरोधादेव जीवन्मुक्त्यसम्भव । द्वितीयेपि जीवनाविनाभूत दु खादेरेवावर्जनीयत्वान्न मुक्त्युपपत्ति । अन्ततो अविद्याशेषमन्तरेण जीवनानुपपत्ति । तच्छेषेच मुक्त्यनुपपत्ति ।

---

प्रत्यक्षविरोधादेव । तद्विवृणोति **नचे** ति । **नापी** ति । अस्मिन् कल्पे अव्याहृतस्य निवृत्तिपदस्यानुत्पत्तौ तात्पर्यम् । प्रत्यक्षत सिद्धस्यापि परमार्थतो भाव एव मुक्तिरित्याह **अनिर्वचनीयत्वादी** ति । **नमुक्त्युपपत्ति** रिति । दु.खविरोधिन एव मुक्तित्व मुक्तम्, न तत्सहभूतस्येति भाव । **तच्छेषेचे** ति ।

एतेनेद निरस्तम् , यदाह नवीन – प्राथमिकसाक्षात्कारात् सञ्चितकर्मोपादानाज्ञानांशविनाश प्रारब्धकर्मोपादानाज्ञानांशस्य प्रारब्धकर्मणा प्रतिबन्धान्न तदा नाश , किन्तु भोगेन प्रारब्धनाशे सत्येव, यथाच व्युत्प-

त्तिमतो वेदान्ताध्ययनमात्रजन्यात् साक्षात्कारादविद्यानिवृत्तौ अनित्यफलत्वादि विपरीतवासना प्रतिबन्धिका तथा अज्ञानकार्यमपि प्रारब्धकर्माविद्यानिवृत्तौ प्रतिबन्धकम्, बिम्बसाक्षात्कारेऽप्युपाधिना प्रतिबन्धात् प्रतिबिम्बभ्रमानिवृत्तिवदज्ञाननिवृत्तिरपि ब्रह्मसाक्षात्कारेऽपि युज्यते देहधारकप्रारब्धकर्मणैवाश्रमधर्मस्य निःश्रेयसस्यापि अङ्गत्वेऽपि कर्मणः प्रतिबन्धोऽपि न विरुद्धः शुकादीनां विदुषामपि शरीरश्रवणानुपपत्त्या प्रारब्धकर्मणो ज्ञानप्रतिबन्धकत्वकल्पनान्नात्र प्रमाणाभावः शङ्कनीयः, प्रारब्धकर्मक्षयानन्तरमुत्पन्नवृत्त्यानुवृत्तस्याविद्यालेशस्य निवृत्तिः यद्वा प्राथमिकसाक्षात्कारादावरणशक्तिमदज्ञानांशनिवृत्तिः प्रतिबन्धनिवृत्त्यनन्तरं तेनैव निवृत्तावरणचैतन्येन विक्षेपशक्तिमदज्ञानांशस्यापि निवृत्तिः तावत्पर्यन्तं विक्षेपानुवृत्तेः जीवन्मुक्तिः नन्वेवं घटाद्यवच्छिन्नचैतन्यस्यापि सकृदुत्पन्नवृत्तिनिवृत्तस्य पश्चादप्यवस्थानसम्भवात् कालान्तरे वृत्त्यन्तरं विनापि तदज्ञाननिवृत्तिः स्यादिति चेन्न,— प्राथमिकवृत्तेर्घटमात्रविषयत्वेपि कालान्तरीयघटाविषयत्वात् सर्वात्मना तदनभिव्यञ्जकतया तदर्थं वृत्त्यन्तरापेक्षणात्. अज्ञानान्तरेण पुनरावृतत्वादपि तस्यापेक्षितत्वाच्च वेदान्तानां सर्वात्मना ब्रह्मबोधनसमर्थत्वात् तज्जनितसाक्षात्कारः सर्वात्मनाभिव्यञ्जकः, मानाभावाच्च नाज्ञानान्तरमिति वैषम्यम्, प्राथमिकवृत्त्यभिव्यक्तचैतन्यस्य कालान्तरे अज्ञाननिवर्तकत्वे मानं तु तस्याभिध्यानादिति श्रुतिः, तस्य— शास्त्रयुक्तिभ्यां निश्चितस्य, अभिध्यानात् - सजातीयप्रत्ययप्रवाहरूपात्, प्रपञ्चे पारमार्थिकत्वभ्रमप्रयोजकविपरीतवासनाहेतुमायांशस्य निवृत्तिः, ततः, युज्यतेऽनेनेति योजनम् - असम्भावनाद्यसहकृतसाक्षात्कारः तस्मात्, प्रपञ्चे व्यावहारिकत्वभ्रमप्रयोजकावारकमायांशस्य, ततस्तत्त्वभावः - अभिव्यक्तब्रह्मात्मनावस्थानम्, तस्मादन्ते प्रारब्धकर्मक्षये बाधितानुवृत्त्या प्रतिभासमानप्रपञ्चहेतुमायांशस्य, इत्येवं तदा सर्वमायानिवृत्तिरिति श्रुत्यर्थः । तदुक्तं- 'शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात् । प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥' इति ।

किञ्च सञ्चितं प्रारब्धं वा कर्म नैतत्पुरुषीयाज्ञानकल्पितम्, अतो नैतत्पुरुषीयाज्ञाननिवर्त्यं तादृशाज्ञानम्, तस्मात् ज्ञानाग्निरित्यादिप्रमाणबलात् कर्मणा

ने- न ज्ञानेन निवृत्तिर्युक्ता प्रमाणबलावधार्यज्ञानस्याज्ञानेतरानिवर्तकत्वादर्श-नत् कर्मनाशकत्व न सम्भवतीत्युक्तो तेनैवादर्शनेन ज्ञानेनाज्ञाननिवृत्तौ कर्मणः प्रतिबन्धकत्वमपि न स्यात्।

ननु व्यावहारिकार्थकल्पनाऽनवच्छिन्नब्रह्मकर्तृकेव, अनवच्छिन्नस्यावच्छि-न्नापेक्षया भेदाभावात् एतत्पुरुषीयतत्त्वज्ञानमपि ब्रह्मण एवेति तेन तत्वज्ञानेन ब्रह्मकर्तृककल्पनोपादानाज्ञाननिवृत्तिर्युक्ता नचैव सति पुरुषद्वयस्य युगपच्छुक्ति-रजताध्यासे तयोरन्यतरस्य शुक्तिसाक्षात्कारेण तदध्यासवत् इतराध्यासस्यापि निवृत्यापात सर्वैर्ब्रह्मणोभिन्नतया अध्यासतत्वज्ञानयोस्तदीयत्वादिति वाच्यम्, प्रातिभासिकाध्यासस्यावच्छिन्नब्रह्मकर्तृकतया तदन्त.करणावच्छिन्नकर्तृकाध्यासस्य तदीयतत्वज्ञाननिवर्तकत्वात् , अनवच्छिन्नब्रह्मकर्तृकाध्यासस्यत्ववच्छिन्नसम्बन्धि तत्वज्ञानेन निवृत्तिर्युक्तैव, ब्रह्मणस्तदभिन्नतया तत्वज्ञानस्यापि तदीयत्वात्, इति चेन्न — तथा सति एकस्य तत्वज्ञानादेव युगपत्सर्वेषा मुक्तिप्रसङ्गात् ।

इष्टमेवेदम् , नचैव शुकादिमुक्तिवचनविरोध· तद्वचनस्य जीवन्मुक्तिविषय त्वात् इतिचेत्? तर्हि जीवन्मुक्तिरेव सर्वेषा युगपत्स्यात् , एतत्पुरुषीयसञ्चितकर्मा-दिवत् सर्वपुरुषीयसञ्चितकर्मादेर्ब्रह्मसम्बन्धित्वाविशेषात् ।

किन्त्वानादौ ससारे जीवन्मुक्तपरम्पराया अप्यनादित्वात् एतावत्काल प्रारब्धकर्म तैरनुभूत इत· परञ्च मुक्तिपर्यन्त तैश्शुकादिभिश्च प्रारब्धकर्मा नुभोक्ष्यत इति महदिद साहसम् , इत· पर मुक्तिरस्मिन्काल इत्यनिर्णयात् शुकादीनामपि सुबहुसहस्रब्रह्मकल्पेषु प्रारब्धानुभवप्रसङ्गात् । नच कर्मणामेत दज्ञानोपादानत्वमेवास्त्विति वाच्यम तथासति शुक्तिरजतादिवदनन्यानुभाव्यत्व प्रसङ्गात् । कर्मसाध्यादृष्टस्य त प्रत्यापरोक्ष्यप्रसङ्गाच्च । अतस्तत्वज्ञानेन कर्मो पादानाज्ञाननिवृत्तिर्युक्ता । अतएव न प्रारब्धकर्मण· प्रतिबन्धकत्वकल्पनापि युक्तिमती । प्रारब्धकर्मभिः प्रतिबन्धे यः प्राथमिकदृष्टान्त· सोऽनुपपन्न., अध्य-यनमात्रजन्यस्य तत्वज्ञानस्य विरोधिवाक्यश्रवणेनानिर्द्धारणरूपतया तस्याविद्या निवर्तने सामर्थ्याभावात् तत्र प्रतिबन्धाकल्पनात् । द्वितीयदृष्टान्तोप्यनुपपन्न·, जलाद्युपाधेर्बिम्बतत्वज्ञानानिवर्त्यतया तत्रोपाधिना प्रतिबन्धसम्भवात् कर्मकृतत्व

ज्ञाननिवर्त्यमिति कथं तस्य प्रतिबन्धकता । ननु अज्ञानस्य ज्ञानेन निवृत्तौ सत्या तथैवाज्ञाननिवृत्त्या अज्ञानोपादानककर्मनिवृत्तिरिति चेत्? एवं [कर्म] क्रमकल्पनाया मानाभावात् । रजतज्ञानमुत्पन्नमिति प्रतीते त्वया रजतज्ञानस्य साक्षिरूपतया तस्योत्पत्त्यभावेन रजतविषयत्वाङ्गीकारात्तुल्यन्यायेन शुक्तिज्ञानेन रजतज्ञानं निवृत्तमिति प्रतीतेरेव ज्ञानेनाज्ञानकार्यनिवृत्तौ मानाभावात् । ननु निवर्त्यं यदि स्वनिवृत्तिप्रतिबन्धकम् तथाहि दोषः, तत्सत्त्वे निवृत्तेरसम्भवात्, तन्निवृत्तौ पुनर्निवृत्त्यसम्भवेन निवर्तकत्वाभिमतस्य तन्निवर्तकत्वाभावप्रसङ्गात्. निवर्त्यस्य निवर्त्यान्तरनिवृत्तिप्रतिबन्धकत्वे को दोष इति चेन्न,— एतन्निवृत्तेः प्रतिबन्धकान्तरकल्पनापत्तेः नचेष्टापत्तिः, तस्यैवाज्ञाननिवृत्तिप्रतिबन्धकत्व कल्पनौचित्यात् ।

किञ्चाद्वैतज्ञानाधीनाज्ञाननिवृत्तिर्ब्रह्मस्वरूपैव, तदधीना कार्यनिवृत्तिः का नाम? अश्वमेधदृष्टान्तोऽप्यनुपपन्नः, अश्वमेधात् प्रारब्धस्य क्षुद्रता का नाम? प्रारब्धत्वादेव प्राबल्यात् । सर्वेषां वैदिककर्मणां फलजनकत्वावश्यम्भावाविशेषात्, प्रारब्धस्य मध्ये विरामहेत्वभावाच्च प्रारब्धभोगानन्तरमेव तद्देहवियोगसाध्य कर्मफलभोगो युक्तः, अतः तत्र प्रारब्धेन प्रतिबन्धकल्पना युज्यते, अत्र तथा कल्पकं न किञ्चित् पश्यामः, प्रत्युत ज्ञाननिवर्त्यत्वादप्रतिबन्धकल्पना युज्यते । नच विदुषां शरीरश्रवणानुपपत्तिः कल्पिका, तच्छरीरस्य तदज्ञानो-पादानकत्वाभावेन तदीयतत्वज्ञानानिवर्त्यत्वात् । शरीरस्य तदज्ञानकार्यत्वे शुक्तिरजतवदसाधारण्यप्रसङ्गः, मासामृगाद्यान्तरविशेषप्रतिपत्तिप्रसङ्गः, इन्द्रि-यापरोक्षप्रसङ्गः, सुषुप्त्यादौ शरीरानुपलम्भप्रसङ्गश्च । तदज्ञानकार्यत्वे हि तत्कर्तृकाध्यासस्स्यात् । सुषुप्त्यादौ च न देहादध्याससम्भवः, तदवस्थायां स्वरूप मात्रानुभवस्य त्वयैवाभिधानात् । ननु शरीरमेतदज्ञानोपादानकम्माभूत्, न तत्र प्रतिबन्धः कल्प्यते, किन्तु शरीरस्थितये प्रारब्धानुवृत्त्यर्थं प्रारब्धोपादाना ज्ञानानिवृत्तेरेवेति चेत्? न, प्रारब्धस्याप्येतदज्ञानकार्यत्वाभावस्योक्तत्वात् ।

किञ्च सञ्चितकर्मोपादानाज्ञाननिवृत्तिः कुतोऽङ्गीक्रियते? तत्वज्ञानस्योत्पन्नत्वादिति चेत्? तर्हि प्रारब्धोपादानाज्ञानमपि निवर्त्येत । तन्नोपपद्यते, शरी-

रानुवृत्तेरिति चेत्? तर्हि सञ्चितमपि न निवर्त्येत। मुक्तिश्रवणात्तन्निवृत्तिरिति चेत्? तर्हि कृत्स्नाज्ञाननिवृत्तिप्रसङ्गः, किञ्चिदज्ञाननिवृत्तेस्ससारदशासाधारणत्वात्। बह्वज्ञान निवृत्तम्, अल्पीय एव प्रारब्धमिति चेत्? तर्हि किञ्चिदूना मुक्तिरित्यौपचारिकत्वमेव समर्थित स्यात्। मुख्यत्वव्यपदेशस्तु स्वैराभिलापनिबन्धनो युष्माकमिति वय पश्याम.।

वृत्त्यन्तरेण प्रारब्धकर्माविद्यानिवृत्तिरित्यप्यनुपपन्नम्। अहमध्यासानुवृत्तौ न मुक्तिः, तथा सति ससार एव मुक्तिरिति सुवचनत्वात्। अहमध्यासनिवृत्तौ तु न वृत्त्युत्पत्तिः, उत्पन्नापि वा नैतदीया। प्राथमिकसाक्षात्कारादावरणाज्ञानाशनिवृत्तिरित्यप्यनुपपन्नम्, एवमशभेदकल्पनाया विक्षेपकस्याज्ञानत्व एव मानाभावप्रसङ्गात्। इद न जानामीत्यनुभवो हि अज्ञाने मानम्, तत्वतस्तत्र इद नेच्छामि इद च द्वेष्मीत्यादिवत् अभावप्रतियोगिभूतज्ञानगततया सकर्मकत्वस्य भासमानत्वेपि सकर्मकत्व भावरूपाज्ञानगततया भासत इति त्वया कल्प्यते, एव कल्पनेपि आवारकाज्ञानस्यैव सकर्मकतया मान स्यात्, नतु विक्षेपकस्यापि, उभयोस्सकर्मकत्वे मानाभावात्। निरुक्तानुभवश्चैकेनापि चारितार्थो नोभय विषयीकरोति, गौरवात्, तत्रावरणदशावच्छेदेन इद नाज्ञासिषमिति प्रतीयमानत्वात्, जलाद्युपाधिस्थले निवृत्ते आवरणे विक्षेपकाज्ञानस्य सत्वेपि न जानामीति प्रतीतेरदर्शनाच्च निरुक्तानुभवस्यावारकाज्ञान विषयत्वमेव युक्तम्, भूतले घटादिजनकस्य दण्डादेर्भूतलविषयत्ववत्। शुक्त्यादौ विक्षेपकस्यापि शुक्त्यादिविषयत्वाभावात् न तस्याज्ञानत्वे किञ्चिन्माना पश्यामः। विक्षेपकस्यापि सविषयत्वे सोपाधिकभ्रमस्थले जानामि न जानामीति च प्रतीतिप्रसङ्गः।

किञ्च - ज्ञानविरोधितया ह्यज्ञान भास्यते, आवारकाज्ञानमेव च ज्ञान विरोधि, न तु विक्षेपकम्, सोपाधिकभ्रमे ज्ञानविरोधादर्शनात्, रजतादि भ्रमेपि शुक्तिज्ञानेन तद्विरोध्यावरणे निवृत्ते तत एव तन्निमित्तविक्षेपाभावः, नतु विक्षेपकस्य ज्ञानेन निवृत्तत्वात्, विक्षेपकस्य ह्युभयनिमित्त आवरणम्। जलाद्युपाधिर्वा। निमित्तनिवृत्त्यापि कार्यनिवृत्तिः युज्यत एव, स्थिते

ग्यन्तःकरणे इन्द्रियसन्निकर्षरूपनिमित्तनिवृत्त्या वृत्तिनिवृत्तेः । एवञ्च एकस्यैवाज्ञानस्याच्छाद्यविक्षेपकत्वम्, शुक्तिरजतादिस्थले आवरणनिवृत्तिरज्ञाननिवृत्तिर्वा, सोपाधिकस्थले विक्षेपानुवृत्तेरावरणस्यैव निवृत्तिः, इति वाच्यम् , ततश्चात्रापि विक्षेपानुवृत्तेरावरणनिवृत्तिरेव तत्वज्ञानेन जातेति अज्ञाननिवृत्तेरभावात् कथ तद्रूपामुक्तिः? तदभावे कथ तद्विशेषजीवन्मुक्ति. ?

पूर्ववृत्त्याभिव्यक्तमेव चैतन्यमनुवृत्ताज्ञानाशनिवर्तकमित्यप्यनुपपन्नम् , वृत्तिमनपेक्ष्य निवर्तकत्वे तत एव सर्वेषामप्यज्ञाननिवृत्तिप्रसङ्गात् , चैतन्यस्य तदीयत्वतदभावयोरविशेषात् , स्वरूपाभेदात्तदीयत्वं तदीयवृत्त्यवच्छेदाभावात्तदभावश्चैव हि तुल्ये । तदीयवृत्तिनिवृत्ताकरणकत्वमेव तदीयत्वमिति चेन्न,- सुखदु'खादिप्रकाशस्य तदीयत्वाभावप्रसङ्गात् । नन्वन्तःकरणावच्छिन्नचैतन्य स्यैवानया चरमवृत्त्यावच्छेदात् तस्यच चैतन्यस्यैतदीयत्वान्न निरुक्तातिप्रसङ्ग इति चेन्न' ,- तथा सति तत्वमस्यादिवाक्यस्य परिच्छिन्नब्रह्मबोधकतया पूर्णाखण्डब्रह्मबोधकत्वाभावप्रसङ्गात् ,एतदन्तःकरणानवच्छिन्नब्रह्मांशावारकाविद्यानिवृत्त्यभावप्रसङ्गात् , एकदेशस्फुरणमात्रेण सर्वांशेप्यविद्यानिवृत्तौ घटावच्छिन्न चैतन्यस्फुरणेपि सर्वस्मिन्नपि चैतन्यांशे अविद्यानिवृत्तिप्रसङ्गात् , एकदेशावारकाज्ञाननिवृत्तिमात्रेण जीवन्मुक्त्युक्तावतिप्रसङ्गाच्च ।

किञ्चैव सकृद्घटवृत्त्यभिव्यक्तचैतन्य कालान्तरे घटविक्षेपकाज्ञानान्तरन्निवर्त्तयेत् , प्राथमिकवृत्तेः कालान्तरीयत्वागोचरतायामपि घटगोचरत्वात्, अज्ञान निवृत्तौ सर्वात्मनाभिव्यक्त्यपेक्षाया स्पर्शगन्धाद्यनभिव्यक्तेश्चाक्षुषवृत्त्या अज्ञान निवृत्तिर्नस्यात्, एवमन्यत्रापीत्यज्ञाननिवृत्तिरेव क्वापि न स्यात् । अज्ञानान्तरेणावरणमप्यसङ्तम् , विरोधिसन्निधाने तदयोगात् । अन्यथा ब्रह्मणोऽपि पुनरावरणप्रसङ्गात् , वेदान्तानां सर्वात्मना ब्रह्मबोधनसमर्थत्वादिति निरर्थकोऽय नव प्रलाप' ।

ब्रह्मणि मानाभावान्नाज्ञानान्तरमित्यनुपपन्नम् , विक्षेपकस्याप्यभावप्रसङ्गात् । नच देहानुवृत्तिर्विक्षेपकाशसत्वे मानम् , देहस्यैतत्पुरुषीयाज्ञानकार्यत्वाभावस्योक्तत्वात् ।

ईश्वरावताराणामिव ब्रह्मविदामपि जीवतान्दुःखाद्यभिनयमात्रमिति चेत् ?

---

'तस्याभिध्यानादि' ति व्याख्यान चा सङ्गतम्, ज्ञानस्याज्ञानतया माया-निवर्त्तकत्वासम्भवात्। ब्रह्मसत्ताप्रतीत्यतिरेकेण पारमार्थिकसत्वप्रतीतिः व्यावहारिकसत्वप्रतीतिरिति प्रतीतिद्वयाभावात्। तत्वभावपदस्याभिव्यक्तब्रह्मात्मनावस्थाने व्युत्पत्त्यभावात्। बाधितानुवृत्तिशब्दस्य वृषलोद्वाहमन्त्रतुल्यत्वात्। विक्षेपकाशस्य त्वयैवाबाधितत्वोक्तेः तस्यैतदीयत्वाभावेन एतदीयज्ञाननिवर्त्यत्वासम्भवादभिध्यानादीना समानविषयतया भिन्नविषयज्ञानान्निवर्त्तकत्वासम्भवात्, निवृत्तित्रयाप्रतीतेः। निवृत्तिपदस्याऽऽवृत्त्यान्वये वाक्यभेदप्रसङ्गात्। विश्वस्या अपि मायाया अन्ते निवृत्तिप्रतीतेः विश्वगोचरमायानिवृत्तिरिति षष्ठीसमासाङ्गीकारे निषादस्थपत्यधिकरणविरोधात्। तत्वभावात् - श्रवणरूपतत्वज्ञानात्, तत्सिद्धात्, योजनात् - युक्तितः, स्थिरीकरणरूपान्मननात्, तत्साध्यात् भूयोभूयस्तस्याभिध्यानाच्च, प्रारब्धकर्मावसाने कृत्स्नस्यापि प्रारब्धेतरकर्मणः तदधीन भगवद्विचित्रसङ्कल्पस्य वा निवृत्तिरित्येकवाक्यतयान्वयप्रतीतेः आकाङ्क्षाक्रमानुसारा दुत्पत्तिक्रम परित्यज्यावरोहक्रमेण निर्देशोपपत्तेः। भूयःपद श्रवणादि त्रयेणापि वान्वेतु।

नन्वभिध्यानान्मायानिवृत्तिः, तत्वभावान्मायानिवृत्तिः, एव विश्वमायानिवृत्तिः इत्येव निवृत्तिपदावृत्त्या भेदेन नान्वय, किन्त्वभिध्यानयोजनातत्वभावैर्विश्वमायानिवृत्तिरिति चेत्? एव तर्हि इद मायाया निवृत्तित्रये न मान स्यात्, अभिध्यानान्मायानिवृत्तिर्भवति, तत्वभावादपि भूयो मायानिवृत्तिर्भवतीत्येवमन्वये हि निवृत्तित्रय शङ्क्येतापि, एकवाक्यताया तु निवृत्तित्रयस्य न प्रसङ्ग। नच साधनत्रयकीर्त्तनान्निवृत्तित्रयसिद्धिः, तस्य तदसाधकत्वात्, साक्षात्पारम्पर्याभ्यामेककार्यान्वयोपपत्तेरुपपादितत्वात्।

ननु अस्तु पञ्चमः पक्षः, नच प्रत्यक्षादिविरोधः, परकीयप्रत्यक्षे विप्रतिपत्ते, दुःखतत्प्रत्यक्षकल्पकव्यापाराणाञ्चाभिनयनमात्रत्वादित्याशयेन शङ्कते **ईश्वरे** ति। सुखदुःखानुत्पाद इति पञ्चमपक्षे स्वप्रयोजनविरहस्य सिद्धत्वात्

हन्त स्वानुभवविरुद्धं धार्ष्ट्यम् । शक्यञ्चेदं सर्वैर्वक्तुम् । नच स्वपर प्रयोजनविरहे मन्दोपि कश्चित्प्रवर्तेत । नच मुक्तस्य लीलाप्रसङ्गमप्यनु मन्यसे, जक्षदादिवाचामेव भक्षणात् । अतो जिवतिचेन्न मुक्त . मुक्तश्चे- न्नजीवतीति न कथञ्चिदपि जीवन्मुक्तिम्सम्भवतीति ।

यत्तु चक्रभ्रमादिदृष्टान्तेनानुवृत्ताशस्य स्वयमेव विलय इति, तदप्यहेतुकविनाशाद्यनुपपत्त्या बाधितानुवृत्तिभङ्गे निरस्तम् ।

यत्पुनरलेपोपदेशो जीवन्मुक्तिमन्तरेण न घटत इति, तदपि प्रामादिकविषयत्वस्थापनादेव परिहृतम् । "तस्य कार्यं न विद्यत' इत्यादिसर्वोपायानुष्ठाननिवृत्तिवादाश्च मुक्तविषयतया समाध्यवस्था विषयतया च यथासम्भवं व्यवस्थाप्या । अन्यथा ब्रह्मविदामेव यावज्जीवानुष्ठानस्य निषिद्धपरिहारस्य च श्रुतिस्मृतिसिद्धस्य बाध प्रसङ्गात् ।

किञ्च निर्गुणविषयत्वाभिमतसद्विद्यानिष्ठस्यैव "तस्य तावदेव चिर यावन्न विमोक्ष्ये अथ सम्पत्स्य" इति शरीरपातमात्रमपेक्षते मोक्ष इति विळम्बावधिमुपदिशन्ती श्रुतिरेव जीवन्मुक्ति वारयति । तथा "नह वै सशरीरस्य सत प्रियाप्रिययोरपहतिरस्ति, अ- शरीरं वा व सन्तं न प्रियाप्रिये स्पृशत" इति श्रुतिमप्यधीमहे ।

---

स्वप्रयोजनविरहानुवादः । भक्षणादि ति । अन्यपरत्वोक्तेरित्यर्थ. । यद्वा अन्यस्य निवृत्तिर्जीवनाविरोधिन्येव, नचजीवनाविनाभूतदुःखादिप्रसङ्गः, जीव- नस्य दुःखाद्यप्रयोजकत्वात् , नापि प्रत्यक्षविरोध , अभिनयमात्रत्वादिति

अत्राशरीरत्वञ्च कर्माधीनशरीरवैधुर्यमित्यन्यत्र स्थापितम् । आपस्तम्बेनोपासनगत्यादिविषयबहुविधाध्यात्मशास्त्रार्थतत्वपारदृश्वना निराकृतेयं जीवन्मुक्तिः— "वेदानिम लोकममुंच परित्यज्यात्मान मन्विच्छेत्, बुद्धे क्षेमप्रापणम्, तच्छास्त्रैर्विप्रतिषिद्धम्, बुद्धे चेत् क्षेम प्रापणमिहैव न दुःखमुपलभेत, एतेन परं व्याख्यात" मिति । एतेन- निर्विशेषवादिनां जीवन्मुक्तिनिराकरणेन, तत्कल्पित निराकरणीय सर्व तुल्यन्यायतया निराकृतामित्यर्थः । अत प्रत्यक्षश्रुति स्मृत्यादिविरोधात्, स्वैराभिलाषिभि· स्वैरजनसङ्ग्रहश्रद्धाव्यामुग्धैर्वा कल्पितेय जीवन्मुक्तिरिति प्रत्यक्षीकृतस्वदु खैर्मुमुक्षुभिरुपेक्षणीयेति ।

इति शतदूषण्या जीवन्मुक्तिभङ्ग

**एकत्रिंशोवादः ।**



---

षष्ठपक्ष एव शङ्कते **ईश्वरे** ति । नन्वीश्वरस्यापि प्रियाप्रियस्पर्शप्रसङ्ग इत्यत्राह **अत्राशरीरत्वमि** ति । तुल्यन्यायतामाह **अत** इति ॥

इति वाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचिताया शतदूषणीव्याख्याया चण्डमारुताख्याया जीवन्मुक्तिभङ्ग

**एकत्रिंशस्कन्ध· ।**



निर्विकारस्येति चेत् ? सा किं विवर्तपरम्पराविद्यायास्स्वरूपम्, उत तत्कार्याण्येव, यद्वा वस्त्वन्तराणि ? नाद्य, उक्तदोषानतिक्रमात् ; स्वरूपत्वाविशेषात् सर्वदा सर्वाध्यासप्रसङ्गात् । न द्वितीयः, निर्वाह्यस्यैव निर्वाहकत्वानुपपत्तेः । नच तृतीयः, अनभ्युपगमात् । अभ्युपगमेपि तत्सत्यमिथ्यात्वादिविकल्पशतदौस्थ्यापातात् । सत्यत्वे सद्वितीयत्वादिप्रसङ्गात्, मिथ्यात्वेपि तत्परम्परायां प्रतिनियतकालविचित्राध्यासे तथाविधपरम्परान्तरक्लृप्तिप्रसङ्गात्। पूर्वपूर्वविवर्तानामेव उत्तरोत्तरहेतुत्वान्नासौ दोषः, यथा ब्रह्मपरिणामानां प्रकृतिपरिणामानां वा तत्तदुत्तरोत्तरपरिणामहेतुभाव इति चेन्न,- तथाप्यविद्याकल्पनस्य निर्मूलत्वप्रसङ्गात् , ब्रह्मण्येवान्यनिरपेक्षानाद्यध्यासप्रवाहवैचित्र्येण सर्वाध्याससिद्धे । तर्हि परिणामपरंपरासामर्थ्यमाश्रित्य परिणामिद्रव्यापह्नवप्रसंग इति चेन्न—प्रत्यक्षादिविरोधप्रसङ्गात्। नचात्रापि तथा, तद्विषयप्रमाणानां प्रत्येकं प्रतिक्षेपात् । न तथा निरधिष्ठानभ्रमापत्तिरिति

---

**उत तत्कार्याण्येवे** ति । तत्तत्कालनियतोत्पत्तिकतया निर्वाह्यत्वेनाभिमतान्येवेति विरोधसूचनार्थ एवकारः । **उक्ते** ति । नियताध्यासासम्भवादित्यर्थः ; तदेवोपपादयति— **स्वरूपत्वे** ति । परम्परायास्स्वरूपत्वं हि परम्परान्तर्गतानां तदभेद एवेति नियामकत्वेनाभिमतानां मृदादीनां सर्वदा सत्त्वान्नियाम्यत्वेनाभिमतानामपि सर्वेषां घटादीनां सर्वदाऽध्यासप्रसङ्ग इत्यर्थः । **निर्वाह्यस्यैवे** ति । कार्यक्रमे नियामकप्रश्ने क्रमविशेषविशिष्टकार्यस्यैव नियामकत्वोक्तावात्माश्रय इत्यर्थः । क्रमविशेषविशिष्टकार्याणामेव विवर्तपरम्पराशब्दार्थत्वादिति भावः। **मिथ्यात्वेपीति** । प्रतिनियताध्यासनियामकत्वेनाङ्गीकृतायां विवर्तपरम्परायाः क्रमिककार्यघटितत्वात् तत्तत्कार्यक्रमेपि विवर्तपरम्परान्तरापेक्षायामनवस्थाप्रसङ्गादित्यर्थः। ननु परम्परात्मकसमुदायस्य न समुदायरूपेण नियामकत्वं विवक्षितम्, येनोक्तदोषः स्यात्, किन्तु पूर्वपूर्वविवर्तविशेषस्य उत्तरोत्तरविवर्तविशेषहेतुत्वमिति शङ्कते- **पूर्वे** ति । **प्रत्यक्षे** ति । पिण्डघटाद्यवस्थाव्यतिरेकेणानुगतस्य मृद्द्रव्यस्य दर्शनादित्यर्थः ।

भेतव्यं भवता, ब्रह्मण एव सर्वविवर्ताध्यासाधिष्ठानत्वाभ्युपगमात् । नह्यपरमार्थभूताया अविद्याया अधिष्ठानतया स्वीकारश्शक्यः, तथासति ब्रह्मण एवासिद्धिप्रसङ्गे माध्यमिकसमाजमध्यमध्यास्स्व । ब्रह्मसत्यत्वश्रुत्यादिबलात्तदभ्युपगमः, नतु विवर्ताधिष्ठानत्वादिति चेन्न,- विकारतदुपादानप्रकृत्यादिसत्यत्वश्रुतिबलादेव प्रकृतितत्परिणामपरम्पराभ्युपगमप्रसङ्गेनाविवादप्रसङ्गात् । तत्सत्यत्वप्रतिपादकश्रुतिबाधे ब्रह्मसत्यत्वप्रतिपादिकाया अपि तस्या बाधितुं शक्यत्वात् । किञ्च किमविद्या प्रकाशते, नवा? नचेत्तुच्छत्वम्, निरुपाख्यस्यैव तुच्छत्वात् । प्रकाशते चेत् स प्रकाशः किमविद्यास्वरूपम्, उत ब्रह्मस्वरूपम्, अथ तस्यास्तस्य वा धर्मः, उतान्यः कश्चित्? न तत्राद्यः, स्वप्रकाशत्वेन ब्रह्मवत्सत्यत्वप्रसङ्गात् । न द्वितीयः, तन्नित्यत्वेन नित्यमविद्याप्रकाशादनिर्मोक्षप्रसंगात् । नापि तृतीयः, तयोर्ज्ञातृत्वाभ्युपगमात् । अध्यस्तज्ञातृत्वाभ्युपगमे कः प्रतीकार इति चेन्न,- तस्याप्यध्यासस्याविद्याहेतुकत्वेऽन्योन्याश्रयणात्, प्रकाशाध्यासस्य तदधीनत्वात्, तस्याश्च प्रकाशाधीनसिद्धित्वात् । ब्रह्महेतुकत्वे तस्य नित्याध्यासप्रसङ्गात् । अहेतुकत्वे पूर्ववत्प्रपञ्चाध्यासस्यैवाहेतुकत्वप्रसङ्गादादिमदनादिवैषम्यस्याप्रयोजकत्वोक्तेः । निर्दोषप्रकाश

---

श्रुतिबलादिति। "नित्या सततविक्रिया" "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाः" मित्यादि वाक्यं विवक्षितम् । प्रकाशाधीनासिद्धित्वादिति । अध्यस्तस्याध्यासात् प्रागसिद्धेरित्यर्थः । अप्रयोजकत्वोक्तेरिति । अनादित्वेपि कारणापेक्षा परिहर्तुं शक्यत इत्यत्रेत्यर्थः । निर्दोषेति। दोषमन्तरेण प्रकाशमानस्य ब्रह्मवत्सत्यत्वप्रसङ्गादित्युक्तो दोषः, यदि निर्दोषस्यापि ब्रह्मणोविद्या प्रकाशेत नित्यं तत्प्रकाशप्रसङ्ग इत्युक्तो दोषः, अविद्यायामुक्तरीत्या तत्त्वज्ञानप्रागभावसत्त्वासत्त्वाभ्यां ज्ञातृत्वस्य प्रकाशाप्रकाशव्यवस्थायाञ्च- तथासति तत्त्वज्ञानप्रागभाव एवेत्यादिनोक्तः, अविद्याया असिद्धिप्रसङ्गलक्षणदोषश्चात्र विवक्षितः । अविद्या

गोचरत्वप्रयुक्तदोषाणां च प्रागनुवृत्तेः । नापि चतुर्थः, सत्यस्य तस्यानभ्युपगमात्, मिथ्याभूतस्य त्वध्यासेऽन्योन्याश्रयप्रसङ्गात् ।

एतेनाविद्याप्रवाहपक्षोपि निरस्तः, प्रपञ्चप्रवाहस्यैव हेतुकार्यभावेन स्थित्युपपत्तौ निरर्थकाविद्याप्रवाहकल्पनायोगात्, उपलम्भाद्यसिद्धेश्च ।

किञ्चेयमविद्या निराश्रया, साश्रया वा ? पूर्वत्र ब्रह्मवत् सत्यत्वप्रसङ्गः । शशशृङ्गवद्वा तुच्छत्वप्रसङ्गः । उत्तरत्राप्यस्याश्रयः किं ब्रह्मस्वरूपम्, उत तदेवोपहितम्, अथवा स्वतन्त्रोन्यः ? न प्रथमः, नित्यशुद्धस्याशुद्धिविरोधात् । अन्यतरमिथ्यात्वे वोभयमिथ्यात्वे वा तदविरोध इति चेन्न,- शुद्धमिथ्यात्वेऽपसिद्धान्तशास्त्रवैयर्थ्यादिप्रसंगात् । अशुद्धमिथ्यात्वे तन्निवृत्तिनैरपेक्ष्यप्रसगात् । कदाचिदपि तस्या अभावात् तत्प्रतिभासानिवृत्तेरपेक्षेति चेत् ? प्रतिभासस्यापि मिथ्यात्वे प्रसंगसाम्यात् । तत्सत्यत्वानभ्युपगमात् । मिथ्यात्वेपि सत्यत्व इवापुरुषार्थत्वाविशेषात् तन्निवृत्त्यपेक्षेति चेत् ? तर्ह्यपुरुषार्थाश्रयत्वलक्षणाशुद्धत्वस्य दुस्त्यजत्वा

---

प्रवाहाङ्गीकारपक्षे नायमन्योन्याश्रयः, पूर्वपूर्वाविद्यया उत्तरोत्तराविद्याप्रकाशोपपादनसम्भवादित्यत्राह- **एतेने** ति । एतद्विवृणोति- **प्रपञ्चे** ति । कार्यानुपपत्त्यभावेपि प्रमाणबलात्स्वीक्रियत इत्यत्राह- **उपलम्भादी** ति । **स्वतन्त्रोन्य** इति । ब्रह्मानाश्रय इत्यर्थः । **मिथ्यात्वेपी** ति । व्यावहारिकसत्त्वस्य विद्यमानतया अपुरुषार्थत्वतन्निवृत्त्योस्सम्भवादिति भावः । **सत्यत्व** इति । सत्यत्वाङ्गीकार इत्यर्थः । **तर्ही** ति । ब्रह्मणो हेयसम्बन्धाङ्गीकारे ब्रह्मणो निरवद्यत्वप्रतिपादिकानां बह्वीना श्रुतीनां तदुपबृंहकबहुस्मृतीतिहासपुराणानाञ्चाप्रामाण्यप्रसङ्गने हेयसम्बन्धस्य मिथ्यात्वेनाप्रामाण्यं परिहरसि, तस्य यदि सत्त्वमङ्गीकरोषि तदा यादृशसत्त्वविशिष्टादशुद्धिर्लोके तादृशी ब्रह्मण्यप्यङ्गीकृतैवेति तच्छ्रुतिप्रामाण्योप-

त्तन्मिथ्यात्वोक्तिरुपच्छन्दनमात्रे पर्यवस्यति । उभयमिथ्यात्वे तूभय विधदोषापत्तिः । व्याघातादयश्च स्युः । नापि द्वितीयः, अविद्या श्रयस्य ब्रह्मण उपाधिमत्त्वे सत्यमिथ्याविकल्पिताविद्यान्तरादिपरिग्रहे ऽपसिद्धान्तानवस्थाविरोधादिदोषसमुन्मेषात् । नापि तृतीयः,

---

पादनमुपच्छन्दनमात्रमेवेत्यर्थः । धर्मिसमसत्ताकाशुद्धेरेव हेयत्वम्, प्रातिभासिका शुद्धिविशिष्टेऽशुद्धत्वाव्यवहारात्, ततश्च धर्मिसमसत्ताकाशुद्धिरेव ब्रह्मणि निषि द्ध्यत इति चेत्? तर्हि जीवब्रह्मणोस्सावद्यत्वनिरवद्यत्ववैषम्यं न सिद्ध्येत्, जीवेपि धर्मिसमसत्ताकस्य अवद्यस्यासिद्धेः । उपहितस्यैवाविद्याश्रयत्वाद्धर्मि समसत्त्वमस्तीति चेत्? तत्र किमुपाधेरविद्याश्रयत्वम्, उतोपाध्युपलक्षितस्य, उत तद्विशिष्टस्य? नाद्यः,— उपाधेरेव जीवत्वापातेन जीवब्रह्मणोरभेदानुप पत्तेः । न द्वितीयः, दोषस्य धर्मिसमसत्ताभावेन जीवस्य सावद्यत्वाभावप्रसङ्गात् । तृतीयेप्यवद्यस्य किमुभयत्र प्रत्येकं परिसमाप्य वृत्तित्वं विवक्षितम्, उत व्यासज्यवृत्तित्वं? नाद्यः— पूर्वोक्तदोषद्वयप्रसङ्गात् । न द्वितीयः,- असिद्धेः, दुःखादेरन्तःकरणवृत्त्यात्मकस्यान्तःकरणे परिसमाप्य वृत्तेः, तदभेदाज्जीवे प्रती तावपि व्यासज्यवृत्तित्वासिद्धेः । उभयमिथ्यात्व इति । उभयविधो दोषः— अपसिद्धान्तादिः निवृत्तिनैरपेक्ष्यादिश्च । व्याघाते ति । शुद्ध्यशुद्ध्योर्भावा भावात्मकयोस्समानसत्ताकयोः परस्परव्याघात इत्यर्थः । उभयोर्भिन्नसत्ताकत्वे च यद्यशुद्धेर्व्यावहारिकत्वं शुद्धेश्च प्रातिभासिकत्वमिष्यते तदा ब्रह्मणश्शुद्धिप्रति पादकवेदाप्रामाण्यं स्यात्, यद्यशुद्धेः प्रातिभासिकत्वं शुद्धेर्व्यावहारिकत्वमिष्यते तदा संसारस्य प्रातिभासिकत्वप्रसङ्ग इत्यादिदूषणान्यादिपदेन विवक्षितानि नापी ति । उपहितब्रह्मैवाविद्याश्रय इत्यत्र किं स उपाधिरविद्यान्तरम्, उता न्यः? उभयथापि सत्यत्वाङ्गीकारे अपसिद्धान्तः, मिथ्यात्वे तु निराश्रयत्वे सत्यत्वापत्त्या साश्रयत्वे वाच्ये आश्रयान्तरासम्भवाच्च ब्रह्माश्रयत्वे वाच्ये केवलब्रह्मणः शुद्धिविरोधेन तदाश्रयत्वासम्भवेनोपहितस्यैव तदुपाध्याश्रयत्वे वाच्ये तदुपाध्याश्रयत्वमपि पूर्ववदुपाध्यन्तरोपहितस्यैवेत्यनवस्था, एतत्परि हारार्थं स्वस्यैवोपाधित्वे उच्यमाने स्वस्मिन्नपि स्ववृत्त्या विरोध इत्यर्थः। किंच यद्यु

ब्रह्माज्ञानवादपरित्यागादिप्रसंगात् । तस्याप्याधाननिरूपणे ऽनव स्थादिप्रसङ्गाच्च । स्यादेतत्, ब्रह्मवत्स्वयमेवाविद्या स्वाश्रयेति; तन्न, आश्रयाश्रयित्वयोरेकप्रतिसम्बन्धिकयोरूपादिभेदमन्तरेण विरुद्धत्वात् । ब्रह्मणस्तु स्वाश्रयत्वं नास्त्येव । आश्रयान्तरनिषेधाभिप्रायेण स्वाश्रयत्वोक्तिः । अस्तूपाधिभेदेनेति चेन्न;— तस्याप्याधाराकारोपाधेरनाधारत्वानुपपत्तेः तदाधारोपाध्यन्तरादिभेद

---

पाधिर्विशेषणं, तदा तस्य सांसारिकत्वादिप्रसङ्गः, यदि च उपलक्षणं तदा ब्रह्मण एव सावद्यत्वादिप्रसङ्गश्चादिपदग्राह्यम् । ब्रह्माज्ञानवादपरित्यागादी त्यादिशब्देन जीवाज्ञानपरित्यागवादपरिग्रहः । अन्यगताशुद्धिनिवृत्त्यर्थं जीवस्य श्रवणाद्यनुपपत्तिश्चादिशब्देन विवक्षिता । स्यादेत दिति । नचैवं निराश्रयत्व इव स्वाश्रयत्वेपि ब्रह्मवत् सत्यत्वप्रसङ्गः; ब्रह्मभिन्नत्वेन मिथ्यात्वात् । नच निराश्रयत्वेपि तथा वक्तुं शक्यम्, निराश्रयत्वे अधिष्ठानस्याप्यभावेन सत्यत्वस्यावश्यकत्वात्; स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वस्यासम्भवात्, निरधिष्ठानभ्रमस्यानङ्गीकाराच्च । आश्रयाश्रयित्वयो रिति । यद्यप्याश्रयाश्रयित्वयोरेकप्रतिसम्बन्धिकयोरुपाधिभेदेनाप्येकत्र वृत्तिर्न दृष्टा, तथापि विरुद्धधर्माणां केषाञ्चित्कपिसंयोगतदभावादीनां मूलत्वाग्रत्वाद्युपाधिभेदादेकत्र वृत्तिदर्शनमात्रेण इदमुक्तम्। कथं तर्हि "स्वे महिम्नि प्रतिष्ठित" इति श्रुतिरित्यत्राह— आश्रयान्तरे ति । तदाधारे ति । आधाराधेयत्वप्रयोजकयोराकारयोरविरोधे द्रव्यत्ववृक्षत्वयोरिव कपिसंयोगतदभावयोः प्रयोजकत्वासम्भवाद्विरोधे वाच्ये तयोरप्येकाश्रयत्वाय उपाध्यन्तरं कल्पनीयमित्यनवस्थेत्यर्थः । कथं तर्हि मूलत्वाग्रत्वयोरवच्छेदकत्वम्? अविरोधादिति चेन्न,— तयोरप्यवयवभेदेनैव वृत्त्या विरुद्धत्वात् । ननु तर्हि कपिसंयोगतदभावयोरप्यवयवभेदेनैव वृत्तेः कथमयं दृष्टान्त इति चेन्न,- वृक्षरूपसमुदाय्यपेक्षया दृष्टान्तोपादानात् । ननु विषयविषयिभावसम्बन्धेन विषये विद्यमाना प्रमैव प्रमाविषयत्वमिति कैश्चिदभिधानात् प्रमेत्यादिसामान्याकारकं ज्ञानं विषयत्वेन स्वाधारः— विषयित्वेन स्वाधेयम्, तद्वदत्रापि स्यादिति चेन्न;- अत्र तादृशाकारद्वयादर्शनात् । नन्वत्रापि मिथ्यात्वेनाविद्याधेयत्वम्, घटादे-

कल्पनेऽनवस्थानात् । आधेयाकारतादात्म्येन तस्यापि स्वाधेयत्वे तूपाधिभेदवाचोयुक्तिविलोपप्रसङ्गात् । ननु मिथ्याभूताया: किमा श्रयविकल्पेन, अध्यासस्याधिष्ठानमात्र ह्यपेक्षितमिति चेन्न;— भवत्पक्षे सर्वत्राश्रयाणामध्यासाधिष्ठानमात्रत्वात् । घटादिसंसर्गोऽपि भूतलादावध्यस्त एव, अन्यथा तत्रैव तत्सत्यत्वप्रसङ्गात् । किंचापरमार्थभूतेयमविद्याप्रतीतिर्नाहङ्कारतद्वृत्तितदवच्छिन्नचिदन्य-न्यतमा, तेषां तदपत्यत्वात् । अन्यथापि काल्पनिकत्वेन मूल

---

स्तथात्वात्, अविद्यात्वेन च तस्या आधारत्वमिति चेन्न,- नहि घटादेर्मिथ्या-त्वेनाविद्याधेयत्वम्, अपितु तत्परिणामतया, नचानादिरविद्या तत्परिणाम: । आधारत्वाधेयत्वप्रयोजकाकारयोर्विरुद्धयोर्व्यवस्थापके ये उपाध्यन्तरे तयोरपि विरुद्ध योर्व्यवस्थापके उपाध्यन्तरे आदिशब्दार्थ: । एतच्चानवस्थोपपादनार्थमादिशब्देन गृहीतम् । ननु आधारत्वाधेयत्वप्रयोजकाकारयो: परस्परतादात्म्यादविरोधादेकत्र वृत्त्युपपत्तेस्तन्निर्वाह्ययोराधारत्वाधेयत्वयोरप्येकत्र सम्भवान्नानवस्थेत्याशङ्कामनूद्य परिहरति- आधेयाकारे ति । आधेयाकार: आधेयत्वप्रयोजकाकार: । तस्य-आ-धारत्वप्रयोजकाकारस्य । स्वाधेयत्वम्- अविद्याधेयत्वम् । आश्रयाधिष्ठानयो र्भेदाभिप्रायेण शङ्कते- ननु मिथ्याभूताया इति । अधिष्ठाने ति । ब्रह्मण एवा विद्याधिष्ठानत्वसम्भवात् अशुद्ध्यधिष्ठानस्य च शुद्धिविरोधाभावादिति भाव: । भवत्पक्ष इति । आश्रयित्वाधिष्ठानत्वयोरभेदादाश्रयत्वाभावे अधिष्ठानत्वमपि न स्यात्, अधिष्ठानत्वे च जडत्वाद्यशुद्ध्याश्रयघटादिष्विव शुद्धिविरोधो दुस्त्यज इति भाव:। अन्यथे ति । यत्र यदध्यस्त न भवति तत्र तत्स्वात्यन्ताभावसमानाधिकरणं न भवतीति व्याप्तया तस्य तत्र मिथ्यात्वासम्भवादिति भाव: । एकदेशिमतेने-दमुक्तम् । किंचे ति । तदपत्यत्वं- तत्कार्यत्वम् । तत्कार्यस्य च तदध्यासकत्व मनुपपन्नम्, कार्यपूर्वकाले तदध्यासाभावेनाविद्यास्वरूपस्यैवासिद्धिप्रसङ्गात्, आध्यासिकस्याध्यासकाले नियतसत्ताकत्वादित्यर्थ: । अन्यथे ति । अविद्या-कार्यत्वाभावेऽपि काल्पनिकत्वे तन्मूलदोषान्तर वाच्यम्, तदध्यासस्यापि काल्प

दोषान्तरापेक्षायामनवस्थानात् । नच ततोऽन्या काचिद्दृशिः ? तस्या ब्रह्मस्वरूपत्वे ब्रह्मणोपि मिथ्यात्वप्रसङ्गात् । तदतिरिक्त सविदन्तरासिद्धेश्च । अपिच प्रकाशमानेयमविद्या किं ब्रह्मात्मना प्रकाशते, उत तदन्यत्वेन, यद्वान्यत्वानन्यत्वसाधारणात्मना ? नाद्यः, सहि ब्रह्मस्वभावनिह्नवेन वा, स्वस्वभावनिह्नवेन वा, उभयोस्समुच्चयेन वा, उभयनिह्नवेन वा? आद्ये ब्रह्मस्वभावनिह्नवे प्रकाशतत्वविलयेन तदधीनसत्ताकमविद्यादिकमपि विलीनमेव स्यादिति वृथा शास्त्रादिपरिश्रमः, प्राप्यनिवर्त्यायाः प्रसंगस्यापि दूरापास्तत्वात् । अविद्यास्वभावनिह्नवे तु ब्रह्ममात्रप्रकाशे अपवर्गबन्ध

---

निकत्वे तत्रापि दोषान्तरमित्यनवस्थेत्यर्थः । नच ततोन्ये ति । अविद्याप्रतीत्युद्दशस्यानुषङ्गः । कुत इत्यत्राह— तस्या इति । संविदन्तरम्— सविद्विशेषः । यद्वान्यत्वे ति । अन्यत्वानन्यत्वान्यतरमात्रसहचरितत्वेन गृहीतरूपान्यरूपेणेत्यर्थः । सही ति । प्रकाशः । स्वभावनिह्नवः— स्वासाधारणधर्माप्रतीतिः । तत्प्रतीतौ हि भेदप्रतीतेः न ब्रह्मात्मना भानमुपपद्यत इति प्रथमद्वितीयतुरीयविकल्पानां भावः । तत्तदाकारयोरविरोधप्रतीत्या समुच्चयसम्भवाद्ब्रह्मात्मना भानमुपपद्यत इति तृतीयविकल्पस्य भावः । आद्य इति । ब्रह्मस्वभावस्याप्रकाशे तत्प्रकाशात्मकं ब्रह्मस्वरूपमेव न स्यादिति तदधीनसत्ताक किमपि न स्यादित्यर्थः । प्राप्य निवर्त्याया इति । प्राप्येति ल्यबन्तम् । णिच्प्रकृतिभूतधात्वर्थनिवृत्त्यपेक्षया [illegible]नकर्तृकत्व बोध्यम् । यद्वा प्राप्येति णिजन्तादेव ल्यप्, "विभाषाप" इति णेरयादेशाभावपक्षे रूप णिजन्तम् , निवर्तयतिधात्वर्थापेक्षयैवात्र पक्षे समानकर्तृकत्वम् । आत्मा ह्यध्यस्यन्नविद्या प्रापयति ज्ञानेन निवर्तयति च । यद्वा प्राप्येति अर्हार्थे ण्यत् । प्राप्या चासौ निवर्त्या चेति पूर्वकालैकसर्वेत्यादिना समानाधिकरणसमासः। पूर्वं प्राप्तयर्हा, अनन्तर निवृत्त्यर्हेत्यर्थ. । पूर्वं प्राप्तौ सत्येवानन्तरं निवृत्त्यर्हेत्युक्त भवति । अविद्यास्वभावनिह्नवेअ- विद्यागतासाधारणधर्माप्रतीतौ। ब्रह्ममात्रप्रकाश इति। ब्रह्मण एव स्वासाधारणाकारविशिष्टतया प्रतीतौ। अविद्यायास्स्वासाधारणाकाराविशिष्टतया प्रतीत्यभावे तन्निवर्तकब्रह्मज्ञानेच्छाया अभावात् ,

वैषम्यविरहप्रसंगेन पूर्वोक्तदोषानतिपातः । समुच्चयस्तु न सम्भव त्येव, विद्याविद्ययोर्वैरस्य शाश्वतिकत्वात् । अन्यथा विद्यानिवर्त्य त्वमविद्यायाः क्वचिदपि न स्यादिति स्थितमन्यत्र । उभयनिह्नवे तु उभयविधदोषस्यानाश्यासिद्धिः स्यात् । स्यादेतत्, यथा दर्पण मुखयोस्स्वभावमनपह्नुत्य दर्पणे मुख्याध्यासः, यथावा अतिरस्कृतोभय स्वभावो दीपकज्जलसंभेदः, यथा वा दीपालोकमण्डलस्य तद्बाह्य

---

ब्रह्ममात्रप्रकाशस्य च सिद्धत्वाज्जिज्ञासाविरहादपवर्गार्थप्रवृत्तिविघातः । वैषम्येति । अविद्यायाः स्वरूपेणैव प्रकाशे अनर्थत्वादेरप्रकाशात् प्रकाशाधीनसिद्धिकस्य च तस्य प्रकाशाभावे असिद्धेस्तत्त्वज्ञानात्प्रागनर्थसम्बन्धस्तदुत्तरमनर्थनिवृत्तिरिति वैषम्यस्य विरहप्रसङ्गात्तदर्थशास्त्रपरिश्रमवैयर्थ्यमित्यर्थः । समुच्चयस्त्वि ति । तुशब्देन तत्तदसाधारणाकारेण प्रतीतौ भेदप्रतीतेरावश्यकत्वादभेदाध्यासो न सम्भवतीति सूच्यते । नच तत्तदसाधारणाकारयोरविरोधभ्रमात् तादात्म्याध्यास सम्भवः, जडत्वाजडत्वयोरविरोधभ्रमासम्भवात् । स हि व्यावहारिकविषयो वा प्रातिभासिकविषयो वा स्यात् ; तत्र व्यावहारिकविषयत्व तावन्नोपपद्यते, जडत्वा जडत्वयोर्विरोधस्यैव व्यावहारिकतया तुल्यसत्ताकाविरोधासिद्धेः । नापि प्रातिभासि कत्वम्, अनाद्यध्यासस्य प्रातिभासिकत्वासिद्धेः । भेदे प्रतीयमाने अभेदेनाध्यासा सम्भवे हेतुमाह– विद्याविद्ययो रिति । भेदे प्रतीयमाने ऽभेदाज्ञानासम्भवा दधीनाभेदाध्यासो नोपपद्यत इत्यर्थः । क्वचिदपी ति । शुक्तिरजतादिर शुक्तिज्ञानात् शुक्त्यज्ञाननिवृत्तिर्न स्यादित्यर्थः । ननु ब्रह्माविद्ययोरसाधारण रूप द्वय तयोर्विरोधश्च प्रतीयत एव, नचैव ब्रह्मण्यविद्याध्यासानुपपत्तिः, अधिष्ठाना ध्यस्यमानयोरसाधारणाकारे प्रतीयमान एवाध्यासदर्शनात्, तथान्यत्रापि शाश्वति कविरोधे आलोके विद्यमानेपि सन्तमसदर्शनाच्च, इति शङ्कते– स्यादेतदिति । मुख्याध्यास इत्यनन्तरं क्रियत इति शेषः । यथावे ति । अतिरस्कृते ति च्छेद । यथावे ति । अयञ्च निवर्तकसन्निधानेपि निवर्त्यसद्भावमात्रे दृष्टान्तो

सन्तमसमण्डलस्य च सामीप्याविरोधः, एवमयमविद्याब्रह्मणोरनपह्नुतोभयस्वभावयोरेवानादिरासत्तिविशेष इति किमस्मान् वर्णनावशेन वशीचिकीर्षसि, मैवम्, सर्वत्र तादात्म्याध्यासे भेदाग्रहं संसर्गाध्यासे ऽत्वसंसर्गाग्रहमन्तरेण क्वचिदपि भ्रमासिद्धेः। दर्पणमुखाध्यासेऽप्यन्तरालाग्रहणादेव नैरन्तर्यभ्रमः। कथं तर्हि दर्पणस्य दूरस्थताग्रहणमिति चेत्? श्रूयतामवधानेन, दर्पणाभिमुखप्रवृत्तेन नायनतेजःप्रवाहेण सान्तरालदर्पणग्रहः, दर्पणप्रतिहतेन तु प्रतिस्रोतसा तेनागृह्यमाणान्तरालमुखस्वरूपमात्रग्रहः, तत एव दर्पणे

---

पन्यासः। अनपह्नुतोभयस्वभावयो रिति। प्रतीयमानतत्तदसाधारणाकारविशिष्टयोरित्यर्थः। आसत्तिविशेषः— आध्यासिकं तादात्म्यम्। अध्यासरूपविशेषणसम्भवोपपादने तात्पर्यं परिहरति किमस्मा निति। किमित्याक्षेपे। इच्छामात्रमेव, नतु तत्फलसिद्धिरित्यर्थः। वर्णनावशेने ति। दृष्टान्तोपन्यासेनेत्यर्थः। यथा कविभिः काव्यादिनोपमाद्यलङ्कारैर्ललितमनसो वशीक्रियन्ते नैव तत्त्वनिर्णयप्रधाना मीमांसका इति भावः। सर्वत्रे ति। भेदग्रहो हि तादात्म्याध्यासं प्रत्येव विरोधीति भेदाग्रहं विना तादात्म्याध्यासः परं न स्यात्, न तु संसर्गाध्यासः, स तु तत्रासंसर्गग्रहस्यैव विरोधितया तदभावं विना परं न स्यात्, नतु भेदाग्रहं विना; दर्पणे मुखाध्यासश्च संसर्गाध्यास एवेति ग्रहणभेदो विरोधात्सम्भवत्येवेति नायं दृष्टान्त इत्यर्थः। ननु तर्हि विरोधिभूतासंसर्गग्रहे विद्यमान एव दर्पणे मुखसंसर्गाध्यास एव ब्रह्माविद्ययोर्भेदग्रहेऽपि अभेदाध्यासे दृष्टान्तोऽस्त्वित्यत्राह— दर्पण इति। अन्तरालम्— असंसर्गः। नैरन्तर्यम्— संसर्गः। यदि मुखदर्पणयोरसंसर्गग्रहो न स्यात् तदा कथं दर्पणस्य मुखापेक्षया दूरस्थत्वग्रह इति शङ्कते- कथं तर्ही ति। सान्तरालदर्पणग्रह इति। मुखासंसर्गविशिष्टदर्पणग्रह इत्यर्थः। अगृह्यमाणान्तराले ति। अगृह्यमाणदर्पणासंसर्गमुखस्वरूपग्रहणमित्यर्थः। तत एवे ति। प्रतिस्रोतसा तेजःप्रवाहेण दर्पणासंसर्गस्य मुखे अग्रहणात् मुखग्रहणाच्च तेन दर्पणाभिमुखप्रवृत्त

मुखमिति भ्रम', तद्व्यवहारमात्रं वा जायते । ज्ञानद्वित्वं न दृश्यत इति चेत् ? किं धारावाहिकधीसन्ततौ तद्भेदः ? अत्र तु तत्वधीभ्रमयोरितरेतरव्यवहिता धारेति विशेषः। यौग- पद्यप्रतीतिस्तु शैघ्र्यातिशयेन कालकलाभेदाग्रहणात्। अतः न कचिदपि प्रत्यक्षविरुद्धाकारस्य क्लृप्तिः। दीपकज्जलसम्भेदे तु न विरोधगन्धोपि, तत्राध्यासप्रसङ्गाभावात्, वध्यघातकभावादि

---

नायनरश्मिजन्यज्ञानोपनीतदर्पणस्य मुखे संसर्गभ्रमो दर्पणे मुखमित्याकारको जायत इत्यर्थः। यद्यपि दर्पणाभिमुखप्रवृत्तरश्मिभिरसंसर्गो मुखदर्पणयोर्गृहीतः, तथापि संसर्गग्रहहेतुभूतसन्निकर्षेणासंसर्गस्याग्रहणादसंसर्गाग्रहस्य हेतुत्वमव्याहत मेवेति भावः। ननु भेदाग्रहस्य कथमभेदज्ञाने कारणत्वम्, अङ्गुल्यवष्टम्भा दिना भेदे गृह्यमाण एव चन्द्रादौ अभेदग्रहात्, अस्ति हि चन्द्रद्वित्वे गृह्यमाण एव दक्षिणचन्द्रो दक्षिणचन्द्रादभिन्न इति ग्रह इति चेन्न,- तद्रूपेणो पस्थिते तद्रूपावच्छिन्नभेदग्रहाभावस्यैव तद्रूपोपस्थिते तद्रूपावच्छिन्नाभेदज्ञानहेतु त्वात्, अत्र च सव्यचन्द्रत्वावच्छेदेन दक्षिणचन्द्रभेदज्ञानेपि दक्षिणचन्द्रो दक्षिणचन्द्राद्भिन्न इति तदवच्छेदेन भेदग्रहाभावात्तदवच्छेदेनाभेदग्रहसम्भवात्। अख्यातिपक्षानुसारेणाह- व्यवहारमात्र मिति। किमिति-दृश्यत इत्यनुषङ्गः। अत्रत्वि ति। प्रथमप्रवृत्तनायनरश्मिभिर्मुखासंसृष्टत्वेन दर्पणग्रहण तत्वधीः,प्रतिहत नायनरश्मिभिर्दर्पणसंसृष्टतया मुखज्ञान भ्रमः, शैघ्र्याद्द्वित्वाप्रतीतावव्यवविशेषो न विरोधीति भावः। क्लृप्ति रिति। भ्रम इत्यर्थः।विरोधगन्धः-अनुपपत्तिगन्धः। 'यथा वा अतिरस्कृतोभयस्वभावो दीपकज्जलसम्भेद'इत्यत्र किंयथा दीपकजलयोर्भेदे भासमानेपि अभेदोऽध्यस्यते तथात्रापीति विवक्षितम्,उत यथा विरुद्धयोरपि दीपक जलयोस्संसर्गस्तथेहापि विरुद्धयोरपि विद्याविद्ययोस्संसर्ग इतीत्येवं विकल्पमभि प्रेत्याद्य दूषयति- तत्राध्यासे ति। द्वितीय दूषयति- वध्यघातके ति। वध्यघा- तकभावः- निवर्त्यनिवर्तकभावः। आदिशब्देन एकस्मिन् काले सहानवस्थान नियमलक्षणविरोधो गृह्यते। ननु मूर्तयोस्सामान्यतः समानदेशत्वविरोधेपि यथा

विरोधासिद्धेः । मूर्तयोस्समानदेशत्वविरोधस्त्वंशभेदेन सूक्ष्मवै देश्यात्परिहृतः । आलोकसन्तमसमण्डलयोरपि सादेश्य एव विरोधः, नतु सामीप्ये । नच अत्रापि ब्रह्माविद्ययो परस्पर समीपदेशत्वादिस्वीकारो युक्त, परिच्छिन्नत्वादिप्रसङ्गात् । अतो नाविद्या ब्रह्मासक्तिर्वक्तुं शक्यते । एवमन्यान्यप्यनन्तानि विकल्पदूषणानि अविद्यास्वरूपमनुबध्नन्ति ।

ननु किमनेनानिष्टापादनप्रपञ्चेन, प्रासादनिगरणादिवदवस्तुभूतायामविद्यायां नैते वस्तुदोषा क्षतिमावहन्ति, यदाहु—"दुर्घटत्वमविद्याया भूषण न तु दूषण" मिति, अतोऽविद्याप्यनुपपन्नेति स्थितौ ब्रह्माद्वैतमकण्टकमिति चेत् ? हन्त निष्प्रयोजन. प्रयास तव माध्यमिकादिमतनिरासे । तेपि यदि सर्वशून्यत्वमपि दुर्घटम्, ततोपि सर्वशून्यत्वमेव प्रतिष्ठितमितीष्टप्रसङ्गता यदि ब्रूयु, तदानी किं वक्ष्यसि । यदि सर्वशून्यत्वं दुर्घटम्, तदा परपक्ष

---

दीपकज्जलयोस्समानदेशत्वम्, एवमिहापि निवर्त्यनिवर्तकयोस्सामान्यतो विरोधे सत्यपि विद्याविद्ययोरविरोधोऽस्त्वित्यत्राह—मूर्तयो रिति। विरोध.- अनुपपत्तिः । प्रदीपकज्जलदृष्टान्तोपादानेन यदि विरुद्धयोरपि कश्चित्संसर्गो न स्यात् तदा मूर्तयोस्समानदेशत्वविरोधात् प्रदीपकज्जलयोर्मूर्तयोस्समानदेशत्वस्य यानुपपत्ति रापादयितुमिष्यते सा इष्टापत्त्या परिहृतेत्यर्थ । आलोके ति । यद्यप्यालोकसन्तमसयोर्निवर्त्यनिवर्तकभावः, तथापि समानदेशत्वेनैव, तथा च भिन्नदेशस्थस्यानिवर्तकत्वात्सामीप्यलक्षणस्संसर्ग उपपद्यत इत्यर्थः । ननु ब्रह्माविद्ययोरपि सादेश्य एव विरोधः, इदानी च परस्पर समीपदेशत्वमेवेति नाविद्यानिवृत्तिरित्याशङ्क्याह— नचे ति। परिच्छिन्नत्वादी ति । आदिशब्देन ब्रह्मभिन्नदेशस्थाविद्यादेर्ब्रह्मण्यध्यस्तत्वानुपपत्तिः परिच्छिन्नत्वप्रयुक्तमिथ्यात्वादिकञ्च गृह्यते । अत इति । आसक्तिः— तादात्म्याध्यास , एवमविद्या ब्रह्मात्मना प्रकाशत इति पक्षो दूषितः । द्वितीयतृतीयपक्षौ दूषयन् दूषणान्तराण्यपि सङ्गृह्णाति— एवमन्यानीति ।

विजयप्रसङ्गः, ततश्च दुर्घटपक्ष परित्यज्य परपक्षः स्वीक्रियतामिति ब्रूयामितिचेत्? तर्ह्यस्माभिरप्येवमभिधाने भव निरुत्तरः। तदेतत् सर्वमुपक्षिप्तं भाष्ये- " निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूत उतापरमार्थभूत इति विवेचनीय" मित्यादिना। आरम्भणाधिकरणे च व्यस्तृणीत।

इति शतदूषण्यामविद्यास्वरूपानुपपत्तिर्नाम
एकचत्वारिंशो वादः ॥४१॥

——(x)——

अय भावः,– मिथ्यापदार्थस्य ह्यविष्ठानसत्त्वमेव सत्त्वमिति तव सिद्धान्तः, तच्च तादात्म्याध्यास एव स्यात्, ततश्चाविद्यायास्तादात्म्येन ब्रह्मण्यध्यासाभावे प्रातिभासिकत्व व्यावहारिकत्व वा न स्यादेवेति तुच्छत्व परमार्थत्वं वा स्यात्, तथाच तत्त्वज्ञानान्निवृत्तिरपि न स्यात्। किञ्च अधिकरणभिन्नसत्ताकप्रतियोगिकाभावोधिकरणाद्भिद्यत इति त्वयैवाभिधानात् ब्रह्मणि प्रपञ्चनिवृत्तिर्ब्रह्मभिन्नैव स्यात्, तत्र च पारमार्थिकत्वादिविकल्पो दुर्वारः। किञ्च दृग्दृश्ययोरसम्बन्धानुपपत्तेः, आध्यासिक तादात्म्यमेव सम्बन्ध इत्यवोचः, ततश्च ब्रह्मतादात्म्यासिद्धौ दृग्दृश्ययोरसम्बन्धान्तरमधिष्ठानभूतदृगन्तरं अविद्याया अप्रतीतिर्वा स्यात्, तथा तस्या अपरोक्ष्यञ्च न स्यात्, संवित्तादात्म्यस्यापरोक्षत्वात्। किञ्चाविद्याया व्यावहारिकत्वे प्रातिभासिकरजतोत्पत्तिर्न स्यात्, प्रातिभासिकत्वे व्यावहारिकोत्पत्तिर्न स्यात्।

ननु प्रातिभासिकस्यापि व्यावहारिकार्थक्रियाकारित्वमस्त्येव, शुक्तिरजत रज्जुसर्पादेरपि भयाद्यर्थक्रियाजनकत्वात्, नच ज्ञानमेवार्थक्रियाजनक तच्च व्यावहारिकमिति वाच्यम्, ज्ञानमात्रस्य जनकत्वे घटादिज्ञानादपि भयादि प्रसङ्गात्, रजतादिविषयत्वेन जनकत्वे चागतमेवार्थस्यापि प्रयोजकतयाऽर्थक्रियाकारित्वम्, स्वप्नकल्पिततडागादिना स्नानपानादिक्रियाऽदर्शनाच्च नच

तत्र क्रियान्तरस्यैवेति वाच्यम्, तदवस्थाया सुखादिजनिकायास्तस्या घटादि क्रियाऽभिशेषात्, अवस्थान्तरे मृषात्वबुद्धिस्तु घटादावपि तुल्या, किंच रजतादिकमपि स्वध्वंस जनयतीति चेन्न,—सर्पादिज्ञानस्यैव भयाद्यर्थक्रियाकारणत्वात् । नच ज्ञानमात्रस्य भयाद्यर्थक्रियाकारित्वे घटादिज्ञानादपि तत्प्रसङ्गः, घटादिविषयत्वस्य जनकतावच्छेदकत्वात् । स्वाप्नतडागस्नानादिनापि भ्रान्तिनिवृत्ति रप्यस्त्येव । मतिस्तु तज्ज्ञानजन्यैव । शुक्तिरजतादेश्च यदि अतिरिक्तध्वंसोऽस्ति तदा स प्रातिभासिक एव । वस्तुतस्त्वविकरणात्मैव तद्ध्वंस इति स्वोक्तिविरोध एव, अधिकरणस्य तदजन्यत्वात् ।

किञ्च— किमज्ञान भाव', उताभावः? नाद्य,—ध्वंसस्याज्ञानानुपादानकत्व प्रसङ्गात् । यदि चाऽभावस्यापि भावोपादानकत्वमिष्येत, तदा भावस्याप्यभावो पादानकत्वाविरोधात्तत्त्वज्ञानप्रागभावोपादानकत्वमेव प्रपञ्चस्य लाघवात्प्रसज्येत । अत एव न द्वितीय । अपिच किमज्ञान सादि, उतानादि? आद्ये अनवस्था । द्वितीयेपि किमज्ञानमेकम्, उतानेकम्? नाद्य, शुक्तिज्ञानेन तन्निवृत्तौ ससारोच्छेदप्रसङ्गात् । नच शुक्तिज्ञानेन सम्बन्धनिवृत्तिरेव, नत्वज्ञाननिवृत्तिरिति वाच्यम्, एकेन ज्ञानेन सम्बन्धे निवृत्ते पुनः कालान्तरे तदज्ञानाननुभवापातात् । नच पूर्वसम्बन्धनिवृत्तौ सम्बन्धान्तरमुत्पद्यत इति वाच्यम्,— पूर्वोत्तरकालयोरविशेषात्सम्बन्धनिवृत्त्युत्तरक्षण एव सम्बन्धान्तरोत्पत्त्यापत्त्या सर्वदाऽज्ञानानुभवप्रसङ्गात् । ननु तज्ज्ञानमेव तदुत्पत्तिप्रतिबन्धकमिति चेत्? तर्हि ज्ञानानन्तरमेव सम्बन्ध उत्पद्येत । नचेष्टापत्ति, ज्ञानानन्तर न जानामीत्यनुभवप्रसङ्गात् । नच तदपीष्टमेवेति वाच्यम्, सकृज्ज्ञानेन प्रागवगत न जानामीत्यनुभव इति स्वोक्तिविरोधात् । किंच अज्ञानसम्बन्धो ह्यज्ञानावरण तच्च नास्ति न प्रकाशत इति व्यवहारयोग्यता, तस्याश्च यावद्वस्तुभाविन्या. कथ मध्ये निवृत्तिरुत्पत्तिर्वा? अज्ञाज्ञानेनापि वा सम्बन्धस्यैव निवृत्तावज्ञानस्या निवृत्तिप्रसङ्गाच्च । द्वितीयेपि किं प्रतिविषय अज्ञानभेद', उत प्रतिपुरुषम्, उत प्रतिज्ञानम्? नाद्य,— एकेनैव शुक्तिज्ञानेन शुक्त्यज्ञाननिवृत्तौ पुरुषान्तरस्य कस्यापि कालान्तरे शुक्त्यज्ञानाननुभवापातात् । अत एव न द्वितीय,— एकेन ज्ञानेनैकाज्ञाने निवृत्ते अज्ञानान्तरस्य सत्त्वेन तदानीमेव तेनावरणप्रसङ्गात् । नचैक

मेवाज्ञानमेकदावृणोति, यदावृणोति तन्निवर्तत इति वाच्यम् । तथा सति अज्ञानान्तराणामानर्थक्यप्रसङ्गात् , कालान्तरे अज्ञानाननुभवापाताच्च । कालान्तरे किंचिदज्ञानान्तरमावृणोति, तस्मिंश्च ज्ञानान्तरेण निवृत्ते पुनरज्ञानान्तरमिति नाज्ञानान्तरवैयर्थ्यम् , नच कालान्तरे ऽज्ञानाननुभवप्रसङ्ग इति चेत्, एकेन ज्ञानेन एकाज्ञाने निवृत्ते तदानीमेवाज्ञानान्तरावरणप्रसङ्गात् । नच कालान्तर एव तेनावरणमिति वाच्यम् । तत्कालकालान्तरयोरविशेषात् । अपि च घटोत्पत्ति क्षण एव एकेनाज्ञानेनावरणवत् सर्वाज्ञानैरप्यावरणप्रसङ्गेन प्राथमिकज्ञानेनैव सर्वाण्यज्ञानानि निवर्तेरन्निति अज्ञानान्तरवैयर्थ्यमनिवार्यमेव । किञ्च - एवं तत्तत्प्रागभावानामेव आवारकत्वकल्पनाया लाघवमिति मुधैव भावरूपाज्ञान कल्पनम् । अपिच किमिदमज्ञानत्वं ज्ञानाजन्यत्वम्, उत ज्ञानविरोधित्वम् , अथवा ज्ञानाभावत्वम् ? नाद्य , घटादावतिव्याप्तेः । अतएव न द्वितीयः, घटादेरात्मधर्मत्वाभावात् । न तृतीयः, असम्भवात् , तदङ्गीकारेऽतिव्याप्ति । नच ज्ञानस्याविद्याव्यतिरेकेणाभावो नेति वाच्यम् , घटादौ तस्याङ्गीकारादिति ।

अत्र कश्चित् ब्रह्ममीमांसागोचरप्रेक्षावत्प्रवृत्तिहेतुज्ञानविषयतावच्छेदकत्व मज्ञानत्वम् । विषयप्रयोजनादिसत्त्वस्य प्रेक्षावत्प्रवृत्तिहेतुत्वात् , ' अज्ञातं ब्रह्म विषयो ज्ञातं ब्रह्म प्रयोजनमि' त्यङ्गीकाराद्ब्रह्मणश्शास्त्र प्रतिपाद्यत्वेन विषयत्वात् , तस्य प्रागेव ज्ञातत्वे तत्प्रतिपाद्यत्वानुपपत्तेः, प्रतिपाद्यतावच्छेदकमज्ञानमेव पर्यवस्यति । प्रतिपाद्यत्वमेव हि विषयत्वम् । नच ब्रह्मत्वमेव तदवच्छेदकम्, प्रतिपाद्यभिन्नावृत्तित्वादिति वाच्यम्,– प्रतिपन्ने ब्रह्मणि प्रतिपाद्यताया अभावेन तदभाववदवृत्तित्वेनावच्छेदकत्वाभावात् । प्रतिपत्तिप्रागभावावच्छिन्न समयमात्रवृत्तिधर्मस्यैव तदवच्छेदकत्वादज्ञानमेव तथा, न तु ब्रह्मत्वादि । नच घटाद्यज्ञाने अव्याप्तिः, यदवच्छिन्नस्य विषयतावच्छेदकत्वं तदाश्रयत्वमेव तत्त्वमित्यत्र तात्पर्यात् , तादृशश्चावच्छेदकमज्ञानत्वमेवेति तदाश्रयत्वात् । अथवा– स्वसमानाधिकरणषड्विधतात्पर्यलिङ्गान्यतमप्रयोजकत्वकत्वे सति विषयनिष्ठात्यन्ताभावाप्रतियोगिधर्मत्वं वा । प्रतिपिपादयिषायाश्च उपक्रमोपसंहारप्रयोजकत्वेपि विषयनिष्ठत्वाभावात् , ब्रह्मत्वादेश्च विषयनिष्ठत्वेपि तात्पर्यलिङ्गान्यतमप्रयोजकत्वाभावात्, उपक्रमादिषट्कस्य धर्म्याश्रयत्वेन धर्मितावच्छेदकतया तस्य

साधारण्येन सकलप्रयोजकत्वेपि अन्यतमप्रयोजकत्वाभावाद्दलद्वयोपादानम्। तदेकमात्रसाधारणप्रयोजकत्वस्यैव तदर्थत्वात्, ज्ञातत्वे अपूर्वत्वायोगात् अज्ञातत्वे सत्येवापूर्वत्वात् अन्वयव्यतिरेकाभ्यामपूर्वत्वप्रयोजकमज्ञानम्। अपूर्वतायाश्च विषयनिष्ठत्वात्तत्समानाधिकरणमेवाज्ञानं तत्प्रयोजकम्। नह्यन्यस्याज्ञातत्वे अन्यस्यापूर्वता, अतिप्रसङ्गात्। तथाच विषयनिष्ठमज्ञानं स्वसमानाधिकरणापूर्वतायाः प्रयोजकम्, अपूर्वता च तात्पर्यलिङ्गमिति न लक्षणासम्भवः, नचैवं शुक्त्यज्ञाने अव्याप्तिः, तत्रोपक्रमादेरभावादिति वाच्यम्,— वाक्यार्थस्यापूर्वत्वाच्छुक्त्यादेरपि वाक्यार्थत्वसम्भवेनापूर्वत्वस्य वक्तव्यत्वात्, तत्राप्युपक्रमादिकल्पनायास्सुकरत्वात्। प्रयोजकत्वेत्यत्र फलोपधानस्याविवक्षितत्वात्प्रयोजकतावच्छेदकतावच्छेदकरूपस्वरूपयोग्यतायाश्च तत्रापि सत्त्वान्नाव्याप्तिः। यद्वा— मीमांसकनैयायिकमतसिद्धविशेषादर्शनभिन्नत्वे सति विशेषादर्शनाधारसमयानाधारसंशयसामग्री अज्ञानम्। अधिकरणमेवाभाव इति मते अधिकरणज्ञानाभावस्य अतिरिक्ताभावमते विशेषदर्शनाभावस्य च संशयसामग्रीत्वेपि उभयवादिसिद्धतद्भिन्नत्वाभावात्, धर्मिज्ञानकोटिस्मरणादेश्च तद्भिन्नसंशयसामग्रीत्वेपि विशेषदर्शनकालेपि सत्त्वेन तदाधारसमयानाधारत्वाभावान्नातिव्याप्त्यादिदोषः। यद्वा— निग्रहस्थानविभाजकोपाधिव्यापकभावत्वान्यव्यतिरेकिधर्माश्रयस्संशयसामग्री अज्ञानम्, प्रतिज्ञाहान्यादिनिग्रहस्थानमध्ये अज्ञानाख्यनिग्रहस्थानस्यापि परिगणितत्वात्तस्य च वादिवाक्यार्थज्ञानरूपत्वात् यत्र वादिवाक्यार्थाज्ञानत्वं तत्राज्ञानत्वमिति व्याप्त्या अज्ञानत्वस्य तादृशविभाजकोपाधिं प्रति व्यापकत्वात्तदाश्रयत्वमज्ञानमात्रेऽस्तीति नासम्भवः। प्रमेयत्ववस्तुत्वादेस्तादृशधर्मान्प्रति व्यापकत्वेपि व्यतिरेकिधर्मत्वाभावात्तदादाय धर्मिज्ञानकोटिस्मृत्यादौ नातिव्याप्तिः। अतएव भावत्वान्येत्यपि सार्थकम्। नन्वाज्ञानं नाम निग्रहो ज्ञानाभाव एव, नतु भावरूपाज्ञानमिति लक्षणस्यासम्भव एवेति वाच्यम्,— ज्ञानाभावस्य निग्रहसामान्यलक्षणत्वेन अज्ञानाख्यनिग्रहविशेषासाधारणधर्मत्वाभावात्। ननु वादिवाक्यार्थज्ञानाभाव एवाज्ञानमस्तु, निग्रहसामान्यं च ज्ञानसामान्याभावः, सामान्यविशेषाभावयोर्भेद एवेति न पूर्वोक्तानुपपत्तिरिति, न, एवमपि ज्ञानाभावव्याप्यभावरूपाज्ञानस्यानिराकरणाद्विनिगमनाविरहात् उभयस्यापि निग्रहस्थानत्वात्। इत्याह।

तत्र तावदाद्यं लक्षणमनुपपन्नम् । तथाहि— किं मीमांसापदेन शास्त्रं विवक्ष्यते, किंवा ज्ञानेच्छा, अथवा विचारः? नाद्यः, शास्त्रं प्रवर्तकीभूतं ज्ञानं वेदान्तार्थनिश्चयोपयोगिन्यायप्रतिपादनपरमिदं शास्त्रमिति ज्ञानम्, तज्ज्ञानविषयत्वं च वेदान्तानां शास्त्रस्य न्यायस्याप्यस्तीति तद्विषयतावच्छेदकेऽव्याप्तिः । न द्वितीयः, तद्विषये प्रवृत्तेरेवासिद्धेः । अत एव न तृतीयः । तदुद्देश्यप्रवृत्तिविवक्षायाञ्च वेदान्तत्वादौ पूर्ववदतिव्याप्तिः । किञ्च ब्रह्मविचारो निश्चयद्वारा मोक्षसाधनमिति ज्ञानस्य प्रवृत्तिहेतुत्वाद्विचारनिर्णयफलानां तद्विषयत्वात्तथा विषयतयावच्छेदकेष्वतिव्याप्तिः । यदुक्तम्— 'अज्ञातं ब्रह्मविषयः' इति । तत्र किमज्ञानावृतत्वं विवक्ष्यते, उत ज्ञानविषयत्वाभावः? नाद्यः, तत्त्वज्ञानविषयस्य मोक्षकालीनस्य च ब्रह्मणो मीमांसाविषयत्वात् । न द्वितीयः । ज्ञानाभावेऽप्यव्याप्तेः । यदप्युक्तं 'प्रागेव ज्ञातत्वे तत्प्रतिपाद्यत्वानुपपत्तिरिति', तन्न, प्रतिपाद्यत्वं हि शाब्दज्ञानप्रतिपत्तियोग्यत्वम्, तच्च पूर्वं ज्ञातेऽप्यस्त्येव । अत एव भाविप्रतिपत्तियोग्यत्वमपि । पूर्वमप्रतिपन्नत्वे सति भाविप्रतिपत्तियोग्यत्वं तदिति चेन्न,— प्रवर्तकीभूतज्ञानस्य तद्विषयत्वे मानाभावात् । यच्चोक्तम्- 'प्रतिपाद्यमेव हि विषयत्व'मिति । तन्न,- शास्त्रप्रतिपाद्यत्वं हि शास्त्रजन्यप्रमितिविषयत्वम् । अत्र चाज्ञानावच्छेद्यतया विवक्षितं विषयत्वं प्रवर्तकीभूतज्ञानविषयत्वमेव, कथमनयोरभेदः? ततश्च कथं प्रतिपाद्यतावच्छेदकत्वेऽपि प्रकृतविषयतावच्छेदकता । यच्चोक्तं 'नच ब्रह्मत्वमेव तदवच्छेदक'मित्यादि, तन्न, तथा सत्यज्ञानस्याप्यवच्छेदकत्वाभावापत्तेः । तदपि हि वाक्यजन्यप्रतिपत्त्युत्तरकालीनजीवन्मुक्तिदशायामपि सत्त्वेन न प्रतिपत्तिप्रागभावावच्छिन्नसमयमात्रवृत्ति । किञ्च घटाद्यज्ञाने अव्याप्तिः, नच यदवच्छिन्नं विषयतावच्छेदकं तदाश्रयत्वस्य विवक्षितत्वात्तादृशज्ञानत्वाश्रयत्वात् नाव्याप्तिरिति वाच्यम्, यदवच्छिन्नमित्यत्रावच्छेदकत्वं न सम्बन्धमात्रम्, तथा सति तादृशप्रमेयत्वाश्रयतया घटादावतिव्याप्तेः, किंतु कारणतावच्छेदकत्वादितुल्यं विषयतावच्छेदकतावच्छेदकत्वं निरूपणीयम्, तथाच घटाद्यज्ञानेऽतिप्रसक्तत्वादज्ञानत्वं तथा, किन्तु ब्रह्माज्ञानत्वमेवेत्यव्याप्तिरेव । अज्ञानत्वज्ञाने सत्युक्तविषयतावच्छेदकतावच्छेदकत्वज्ञानम्, तज्ज्ञाने च तद्घटितलक्षणज्ञानादज्ञानत्वग्रह इत्यन्योन्याश्रयः । द्वितीयलक्षणमप्ययुक्तम्, अज्ञानस्यापूर्वत्वप्रयोजकत्वाभावात् । ज्ञानविषयत्वाभावो ह्य

पूर्वत्वम्, तत्रच ज्ञानसामग्रीविरहस्यैव प्रयोजकत्वात् । नचाज्ञानविषयत्व मेवापूर्वत्वम्, तत्रचाज्ञान प्रयोजकमिति वाच्यम्, ज्योतिष्टोमादेर्जडस्याज्ञान विषयस्यापूर्वत्वाभावप्रसङ्गात् । नच तत्रापि ज्योतिष्टोमान्नवच्छिन्नचैतन्यज्ञान मेवापूर्वत्वप्रयोजकमिति वाच्यम्, अज्ञानविषयेऽप्यहङ्कारादौ "अथातोऽहङ्कारा-देश" इति शास्त्रप्रतिपाद्ये अपूर्वत्वस्य सत्त्वाद्विद्वद्वाक्यादेरपूर्वार्थकतया ऽननु वादत्वप्रसङ्गात् । आग्नेयादिवाक्यैस्तत्तदर्थप्रतीतावपि ततोऽज्ञानानिवृत्तेः । अज्ञानविषयत्वरूपापूर्वत्वस्याज्ञानत्वज्ञानाधीनज्ञानत्वात् । अपूर्वत्वप्रयोजकत्वरूपा ज्ञानत्वस्य चापूर्वत्वज्ञानाधीनज्ञानत्वादन्योन्याश्रयः । किंच सर्वस्याप्यज्ञानाधीन त्वेनान्यतममात्रप्रयोजकत्वाभावादसम्भवः । अज्ञानत्वेनान्यतममात्रप्रयोजकत्वं विवक्षितम्, तथाचोपादानत्वेन सर्वप्रयोजकत्वेऽपि उक्तरूपेणापूर्वत्वं प्रत्येव प्रयोजकत्वमिति चेन्न,— अज्ञानत्वस्यैव निरूप्यमाणत्वेनात्माश्रयात् । किंच ब्रह्मत्ववदज्ञानमेव धर्मितावच्छेदकमस्त्वित्यसम्भवः । अज्ञानस्य स्वनिवृत्तिरूप फलप्रयोजकत्वाच्चासम्भवः । अद्वैतोपपत्तिप्रयोजकभेदकल्पितत्वोपयोगित्वाच्चा ज्ञानस्यासम्भवः । घटाद्यज्ञानस्य विषयीभूतघटादिजडावृत्तित्वाद्ब्रह्माज्ञानस्य विषयीभूतब्रह्मणि कल्पितत्वाच्च विषयनिष्ठात्यन्ताभावप्रतियोगित्वादसम्भवः । नच प्रतियोगिव्यधिकरणत्वमभावविशेषणम्, तादृशाभावाप्रसिद्धेः, सर्वस्यापि ब्रह्मणि कल्पितत्वात् । यादृशार्थविशेषे कदापि वाक्यं नासीत्तदर्थाज्ञाने च पूर्वप्रतीकाभावादव्याप्तिः, उत्तरप्रतीकाभावाच्च । किंच प्रसक्तप्रकाशस्या कल्पितस्यैवाप्रकाशात्मकत्वकल्पिताविद्या प्रति आश्रयित्व विषयित्व वेति चित्त्व सत्यत्वयोरज्ञानाश्रयत्वविषयत्वप्रयोजकत्वात् । अज्ञानस्य चापूर्वताप्रयोजकत्वा च्चित्त्वसत्यत्वयोरप्यपूर्वताप्रयोजकत्वमिति तत्रातिव्याप्तिः । किंच "ज्ञातं ब्रह्म प्रयोजन" मित्युक्तत्वात् । फलत्वप्रयोजकीभूतज्ञातब्रह्मत्वेऽतिव्याप्तिः । आनन्दत्वे नाविद्यानिवृत्तित्वेन च ब्रह्मस्वरूपस्य फलमिति फलमात्रप्रयोजकत्वादानन्दत्वा दावतिव्याप्तिः । जीवात्मविषयवाक्योपक्रमोपसंहारप्रयोजकप्रतिपिपादयिषाद्यति व्याप्तिः । तद्विषये जीवे प्रतिपिपादयिषायास्सत्त्वात् । किंच उपक्रमोपसंहारा भ्यासार्थवादान्तर्गतपदानामुपक्रमोपसंहारप्रयोजकत्वाद्ब्रह्मण एव प्रपञ्चाभावत्वपक्षे ब्रह्मरूपात्यन्ताभावप्रतियोगित्वेऽपि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वाभावादतिव्याप्तिः। किंच अज्ञानावरणेऽतिव्याप्तिः । किंचात्र किं प्रयोजकत्वं विवक्षितम्? न ताव

जनकत्वम्, ब्रह्मत्वस्योपक्रमाद्यजनकत्वात् तत एव न घटकत्वमपि । नापि तद्व्यतिरेकव्याप्यव्यतिरेकप्रतियोगित्वम्, असम्भवप्रसङ्गात् । देवदत्ताज्ञानव्यतिरेकेऽपि यज्ञदत्त प्रत्ययपूर्वत्वस्य सत्त्वात् । किञ्च विषयगतत्वमित्यव सिद्धौ व्यर्थो व्यतिरेकोपन्यासः । प्रतिपिपादयिषायाश्च अभ्यासादावपि प्रयोजकत्वात्तद्व्यतिरेकोऽपि व्यर्थः । किञ्च विषयत्वं न यत्किञ्चित्प्रति, असम्भवादतिव्याप्तेश्च । नाप्यज्ञान विषयत्वम् ,आत्माश्रयात् । स्वविषयत्वविवक्षाया निर्विषयप्रत्यक्त्ववारणाय पूर्वप्रतीक वैयर्थ्यम् । तात्पर्यविषयगतत्वविवक्षायाञ्च यत्किञ्चित्तात्पर्यविषयगतत्वात्प्रतिपिपादयिषायामतिव्याप्त्यपरिहार , तत्तात्पर्यविवक्षायामपि अहङ्कारतात्पर्यकवाक्यमूलभूताया तस्यामतिव्याप्ति. । किञ्च ब्रह्मत्वम् स्वरूपमन्यद्वा ? नाद्यः, धर्मितावच्छेदकत्वस्य तथात्वसम्भवेन विशेषणवैयर्थ्यात् , स्वस्मिन् स्वस्याभावेन विशेष्यभागेनापि तदवारणाच्च । अतिरिक्तत्वे मिथ्यात्वेन विषयनिष्ठात्यन्ताभावप्रतियोगित्वात् नच स्वरूपाभिन्नस्यैव ब्रह्मत्वस्य तदाश्रयत्वमेव तत्प्रयोजकत्वमिति वाच्यम् , एतादृशप्रयोजकत्वस्यैव लक्षणघटकत्वे असम्भवात् । तृतीयलक्षणमप्यनुपपन्नम्, मीमांसकमतनैयायिकमतसिद्धाभिन्नत्व सतीत्यलम्, विशेषेत्यादिव्यर्थम् । नचाखण्डाभावे न वैयर्थ्यम्, एवमपि गौरवेण तस्य ज्ञाननिवर्त्यतानवच्छेदकत्वात् , अज्ञानत्वस्य तदवच्छेदकत्वेनाङ्गीकारात् सर्वदापि यत्किञ्चिदर्थविशेषदर्शनसत्त्वात् विशेष्याप्रसिद्धिश्च । तदर्थविशेषदर्शनसमयानाधारसंशयसामग्रीतदर्थाज्ञानमिति तत्तदज्ञानानामिदं लक्षणमिति चेन्न,—एवमप्यज्ञानसामान्यलक्षणालाभात् । स्वस्य यो विषय. तद्विशेषदर्शनसमयानाधारसंशयसामग्री अज्ञान स्वमिति लक्ष्यत्वाभिमतमज्ञानमेवोच्यत इति चेन्न,--एवमपि यस्यार्थस्य विशेषदर्शनं संशयो वा नास्ति तत्राव्याप्तेः । नैयायिकाद्यभिमतविशेषादर्शनस्याभावाद्यात्मनो निर्विषयतया पूर्वप्रतीकवैयर्थ्यञ्च । स्वमते भावरूपात्मज्ञानात्मकविशेषादर्शनस्य संशयजनकत्वाङ्गीकार अभावरूप विशेषादर्शनस्याभावतया गौरवेण जनकत्व प्रमाणाभावेन पूर्वप्रतीकवैयर्थ्यञ्च । अभावात्मविशेषादर्शनस्य जनकत्वे प्रमाणमस्ति चेत् तत एवोपपत्तेः भावरूप विशेषादर्शनस्य जनकत्वे प्रमाणाभावात् असम्भवापत्ते. । अतएव स्वविरोधिज्ञानस्य यो विषयस्तद्व्याप्यदर्शनसमयानाधारसंशयसामग्रीति विवक्षितम् , स्वशब्दश्च लक्ष्यपर एव, विरोधित्वं च न निवर्तकत्वादि, अभावात्मकविशेषादर्शन-

निवर्तकासम्भवात्, किन्तु स्वस्थितिसमयास्थितिकत्वमिति निरस्तम्, अखण्ड ब्रह्माज्ञाने अव्याप्तेश्च, तन्निवर्तकाखण्डार्थनिष्ठवेदान्तजन्यज्ञानविषयस्य निराश्रयस्य ब्रह्मणो व्याप्यलक्षणविशेषाभावात् । धर्माद्यतीन्द्रियाज्ञानाव्याप्तेश्च, शास्त्रजन्यस्यापि धर्मादिज्ञानस्य परोक्षतया स्वानिवर्तकत्वेन स्वस्थितिसमयास्थितिकत्वाभावात्; अखण्डब्रह्मज्ञानस्यापि अखण्डाज्ञान निवर्त्यैव वियदादिना सममखण्डाज्ञानाधीनसत्ता कधर्माद्यज्ञाननिवर्तकत्वेन स्वस्थितिसमयास्थितिकत्वाभावात् । सत्त्वेपि तद्विषयीभूताखण्डब्रह्मणो व्याप्याभावाच्च । किञ्च पुरुषाज्ञानस्यैव पुरुषसंशयसामग्रीत्वात्, तस्य च विशेषदर्शनसमयाधारत्वादव्याप्तिः । ननु करादिलक्षणविशेषादर्शनमपि तत्र कारणम्, पुरुषाज्ञानमपि संशयान्तरविषयव्याप्यभूतपुरुषदर्शन समयानाधारमिति प्रकारेण सर्वत्र लक्षणमूह्यमिति चेत्? परोक्षविशेषदर्शन स्थले निराश्रयब्रह्माज्ञाने चाव्याप्तेः ! किंच–करादिविशेषदर्शनात्तद्द्वितीयक्षण एव तदज्ञाननिवृत्तिः, नाद्यक्षण इति क्वाज्ञानस्य विशेषदर्शनसमयानाधारत्वम् । ननु विशेषदर्शनस्थितिसमयास्थितिकत्व विवक्षितमिति चेन्न,–अतीन्द्रियधर्माद्यज्ञाने तथाप्यव्याप्तेः । धर्मिज्ञानकोटिस्मृत्यादावतिव्याप्तेश्च, ज्ञानद्वयस्य एकक्षणे स्थित्य-भावात् । यत्र विशेषदर्शन नास्ति तत्स्थलीयसंशयसामग्रीभूतधर्मिज्ञानादिव्यक्तावतिव्याप्तिश्च । नच कारणतावच्छेदकावच्छेदेन विशेषदर्शनसमयानाधारत्व विव-क्षितमिति वाच्यम्, सामान्यतो विशेषदर्शनसमयानाधारत्वस्याज्ञानेप्यभावात् ॥ विशेषदर्शनस्थितिसमयास्थितिकत्वस्य तु कारणतावच्छेदकावच्छेदेन धर्मिज्ञा-नेपि सत्त्वात्, विशेषाज्ञानत्वरूपकारणतावच्छेदकस्य ज्ञानघटितत्वात्, तस्य चेदानीं निरूप्यमाणत्वेनान्योन्याश्रयादिति दिक् । चतुर्थलक्षणमनुपपन्नम्, वृत्ति मत्त्वादिरूपधर्मस्याज्ञानत्वव्यापकत्वात्तदाश्रयत्वाद्धर्मिज्ञानादेस्तत्रातिव्याप्तेः । किञ्च प्रतिज्ञान्तरत्वव्यापकशब्दत्वरूपव्यतिरेकिधर्माश्रये संशयसामग्रीभूतविप्रतिपत्ति वाक्येऽतिव्याप्ति, पर्यनुयोज्योपेक्षणत्वव्यापकाभावत्वरूपव्यतिरेकिधर्माश्रये संशयसामग्रीभूतविशेषादर्शनेऽतिव्याप्ति । किञ्चाज्ञानत्वग्रहस्य निग्रहस्थानविभाजको-पाधिव्यापकत्वग्रहाधीनत्वाद्व्याप्तिज्ञानत्वग्रहाधीनत्वाच्च व्यापकत्वग्रहस्यान्योन्याश्रयः । किञ्च ज्ञानाभावस्यैव निग्रहत्वेन भावरूपाज्ञानस्य निग्रहत्वाभावादसम्भवः ।

ननु लाघवाद्भावरूपाज्ञानमेव निग्रह, विनिगमनाविरहादुभयमेतया, वादि-वाक्यार्थस्य ज्ञातत्वेपि अपरोक्षज्ञानाभावेनाज्ञानस्यानिवृत्त्या निग्रहप्रसङ्गात् । किञ्च– भावरूपाज्ञानस्य यदि ज्ञानाभावत्व नाङ्गीक्रियते, तदा ज्ञानाभावत्वं निग्रहसामान्यलक्षणमिति त्वयोक्तत्वात्तादृशसामान्यलक्षणानाक्रान्तत्वाद्वादिवाक्यार्थ विषयकभावरूपाज्ञानं निग्रहस्थानविशेष इत्यसम्भव एव । भावत्वांशपद वैयर्थ्यञ्च । यदि चाङ्गीक्रियते, तदा अभावत्वमेवादाय विशेषादर्शन संशयप्रागभावादावतिव्याप्तिरिति ।

अत्र नवीनः, अनाद्युपादानत्वे सति मिथ्यात्वमज्ञानत्वम् । मृदादावविद्या सम्बन्धादौ आत्मनि चातिव्याप्तिवारणाय विशेषणत्रयम् ।

अनादित्वे सति स्वजन्यानपेक्षज्ञाननिवर्त्यत्व वा अज्ञानत्वम् । स्मृत्यादिनिवर्त्यसस्कारे ज्ञाने चातिव्याप्तिवारणायानादीति । आत्मन्यति व्याप्तिवारणाय उत्तरविशेषणम् । स्वजन्यानपेक्षत्वविशेषणाच्च नाविद्यासम्बन्धा दावतिव्याप्तिः । यदि च प्रागभावोऽङ्गीक्रियते तदा इच्छादिप्रागभावेऽतिव्याप्ति वारणाय भावत्वमपि विशेषणम । तथाच तन्मते अनादिभावत्वे सति स्व जन्यानपेक्षज्ञाननिवर्त्यत्व लक्षणम् । ज्ञानत्वेन ज्ञाननिवर्त्यत्व वा लक्षणम् । सस्कारादावतिव्याप्तिवारणाय ज्ञानत्वेनेति । नचाविद्यासम्बन्धादावतिव्याप्तिः, तस्य ज्ञानानिवर्त्यत्वात्, अविद्यानिवृत्त्यैव तन्निवृत्तेः ।

तत्र तावदाद्य लक्षणमनुपपन्नम्, अनुत्पादितभ्रमाज्ञाने अव्याप्तेः । न चोपादानत्वयोग्यत्व विवक्षितमिति वाच्यम्, तस्य भ्रमोपादानत्वावच्छेदका वच्छिन्नत्वरूपत्वात् अज्ञानत्वस्यैवावच्छेदकत्वात्तद्रूपापरिचये योग्यताया ज्ञातु मशक्यत्वात् । नच लाघवान्निखिलप्रपञ्चोपादानं ब्रह्मगोचरमेकमेवाज्ञानमिति नाव्याप्तिरिति वाच्यम्, शुक्तिज्ञानेन शुक्त्यज्ञाननिवृत्तौ ससारनिवृत्त्यापत्तेः, अज्ञानस्यैकत्वात् । ननु शुक्तिज्ञानेनावरणनिवृत्तिरेव, नत्वज्ञाननिवृत्तिरिति वाच्यम्;– ज्ञानेनाज्ञान निवृत्तमित्यनुभवस्यावरणमात्रविषयत्वकल्पनायोगात् । अज्ञाननानात्वस्यैव वाच्यत्वात् । चरमसाक्षात्कारस्याप्यावरणमात्रनिवर्तकतया ततोऽप्यज्ञानानिवृत्तिप्रसङ्गात् । नापि द्वितीयलक्षण युक्तम् । ब्रह्मण एवाज्ञान निवृत्तित्वात्तस्य च ज्ञानसाध्यत्वाभावाज्ज्ञानजन्यनिवृत्तिप्रतियोगित्वलक्षणज्ञाननिव-

र्त्यत्वासम्भवात्। ज्ञानसाध्यनिवृत्तिप्रतियोगित्वं विवक्षितम्, साध्यत्वं च क्षेमसाधारणं अज्ञानात्मकनिवृत्तावप्युपपादितमिति चेन्न,—अविद्यासम्बन्धादावति व्याप्तेः। अविद्यानिवृत्तेरेवमपि स्वजन्यत्वाभावेन स्वजन्यानपेक्षत्वस्य सत्त्वात्। नच स्वजन्यत्वमपि स्वसापेक्षत्वमेव विवक्षितमिति वाच्यम्, एवमप्यविद्या सम्बन्धादावतिव्याप्तेः। नहि ब्रह्मरूपाविद्यासम्बन्धनिवृत्तिः ब्रह्मरूपामेवाविद्या निवृत्तिमपेक्षते, स्वस्य स्वापेक्षत्वायोगात्। नन्वाविद्यानिवृत्तित्वेनापेक्ष्यत्वम्, सम्बन्धनिवृत्तित्वेन तदपेक्षत्वं चेति वाच्यम्, — एवं सति तादृशनिवृत्तित्वं प्रति सम्बन्धवदविद्याया अपि प्रतियोगित्वादसम्भवापत्तेः। यथा चाविद्यानिवृत्तेर्न साध्यत्वसम्भवः तथोक्तमविद्यानिवृत्तिभङ्गे। अनयैव नीत्या ज्ञाननिवर्त्यत्व घटितलक्षणान्तरनिरासो भाव्यः। एतेन अनाद्युपादानत्वे सति ज्ञाननिवर्त्यत्व मित्यन्यत्र यदुक्तं तदपि निरस्तम्। किंच किं ज्ञानशब्देन चैतन्यमुच्यते, उत निवृत्तिः? नाद्य,— संस्कारस्य वृत्तिनिवर्त्यतया चैतन्यनिवर्त्यत्वाभावेन पूर्वलक्षणेऽनादिपदवैयर्थ्यात्। संस्कारनिवृत्तेरपि मिथ्यात्वेन चैतन्याधिष्ठानकत्वा त्तजन्यत्वमस्तीति चेन्न,— तथा सति संस्कारस्यापि मिथ्यात्वेन चैतन्याधिष्ठानक तया तज्जन्यत्वात्, स्वजन्यानपेक्षत्वविशेषणेनैव तद्व्यावृत्तिसिद्धौ अनादिपद वैयर्थ्यात्। उक्तलक्षणे च संस्कारनिवृत्तश्चिरत्वेनैवाधिष्ठानभूतचिन्निवृत्र्यत्वात् संस्कारेऽतिव्याप्तिश्च। नच संस्कारनिवृत्तौ सत्त्वेनैव हेतुत्वम्, अविद्या निवृत्तौ तु ज्ञानत्वेनैवेति वाच्यम्, सत्त्वाचिरत्वयोर्ब्रह्मस्वरूपतया विवक्षित व्यवस्थानुपपत्तेः। न द्वितीयः,— वृत्तेरविद्यानिवृत्तिप्रतिबन्धकावरणनिवर्तकत्व चैतन्यस्य त्वज्ञाननिवर्तकत्वमिति मते असम्भवात्। आवरणेऽतिव्याप्तिश्च। मतान्तरेपि किमेकाज्ञानपक्ष इदं लक्षणम्, उत नानाज्ञानपक्षे? आद्ये घटादि ज्ञानानामज्ञाननिवर्तकत्वाभावेनावरणनिवर्तकत्वादावरणनिवृत्तेरज्ञाननिवृत्त्यनपेक्ष- तया ऽज्ञानावरणयोस्सहैव निवृत्तिस्स्यादित्यावरणेऽतिव्याप्तिः। द्वितीये तु घटविषयकाज्ञानं समानविषयकज्ञानस्यानुदयान्न निवृत्तम्, किन्तु अखण्डसाक्षा त्कारेणाखण्डाज्ञाने निवृत्ते तन्निवृत्त्यैव निवर्तेत तत्राव्याप्तिः। नच तस्याप्यना दित्वेनाखण्डाज्ञानानुपादानकत्वेन तन्निवृत्तिमनपेक्ष्याखण्डाज्ञानेन सहैव तन्नि- वृत्तिरिति वाच्यम्, तथा सत्यावरणस्याप्यजन्यतया अखण्डाज्ञाननिवृत्त्यनपेक्ष

निवृत्तित्वेन तत्रातिव्याप्तेः । यदि च तस्य तादधीन्यात्तन्निवृत्त्यधीननिवृत्तिकत्वम्, तथा सति कृत्स्नस्याप्यखण्डाज्ञानाधीनतया तन्निवृत्त्यधीननिवृत्तिकत्वमेवेत्यव्याप्तिरेव । अखण्डाज्ञानेन ब्रह्मस्वरूपावरणाभावे अध्यास एव न स्यादिति कृत्स्नस्याप्यखण्डाज्ञानाधीनत्वमनिवार्यमेव । किंच–तत्तत्स्वरूपस्याननुगतरूपेण निवर्तकत्वमते असम्भवः । मतान्तरेपि परोक्षवृत्तेरनिवर्तकत्वात् ज्ञानत्वस्य निवर्तकतावच्छेदकत्वाभावादसम्भव एव । नचापरोक्षत्व विवक्षितमिति वाच्यम् , चन्द्रापरोक्षे सत्यपि कश्चन्द्र इति प्रश्नानुसारेण चन्द्राज्ञानानिवृत्तेस्त्वयैवाङ्गीकारात् । नचापरोक्षावधारणत्व विवक्षितमिति वाच्यम् , चन्द्रज्ञानस्यैव तादृशत्वात् । यथा च एककोटिकज्ञानस्यानवधारणत्वासम्भवस्तथोक्त प्राक् ।

यच्चोक्तमन्यत्रैव—ज्ञानत्वेन ज्ञाननिवर्त्यत्वमज्ञानत्वम् , ज्ञानत्वेन चित्सामान्यरूपेण यत् स्वजन्य तदनपेक्ष्य सत् तेनैव रूपेण यत् ज्ञान निवर्तयति तदज्ञानमित्यर्थः । आवरणनिवर्तकसाक्षात्काररूपवृत्त्यपेक्षणेनासम्भवपरिहाराय ज्ञानत्वेन जनकत्व विवक्षितम्, " तथा विद्वान्नामरूपाद्विमुक्तः " इत्यादिशास्त्रात् कार्यस्यापि ज्ञाननिवर्त्यत्वसिद्धे तत्रातिव्याप्तिपरिहाराय स्वजन्यानपेक्षेति: ज्ञान ह्यविद्यानिवृत्तिसहकृतमेव कार्यं निवर्तयति, नतु साक्षात्, तदनिवर्तकेदमित्यादि ज्ञाने सत्यपि कार्यस्यानिवृत्ते., ननु अविद्यानिवर्तक युगपदेव तदुभयं ज्ञान निवर्तयत्विति चेन्न,– केवलज्ञानस्य कार्यनिवृत्त्युपस्थिति विना अनुत्पादितभ्रमाज्ञाननिवर्तकतया क्लृप्तस्य, अन्यस्यापि तथाविधस्य तावन्मात्रतया कार्यनिवृत्तिहेतुत्वे प्रमाणाभावात्, गौरवाच्च, कार्यनिवृत्तरन्यथाप्युपपत्तेः; नचैव कार्यनिवृत्तौ ज्ञान हेतुरेव मास्त्विति वाच्यम् , उक्तश्रुतिविरोधात्, शुक्तिज्ञानाद्रजतादिभ्रमनिवृत्त्यनुभवाच्च , अज्ञानस्यापि मिथ्यात्वेनैव ज्ञाननिवर्त्यत्वात्तत्कार्यमपि मिथ्याभूत ज्ञाननिवर्त्यमेव, तस्मादविद्यानिवृत्तिसहकृतमेव ज्ञान तत्कार्यं निवर्तयतीति न तत्रातिव्याप्ति', स्मृतिनिवर्त्यसंस्कारेऽतिव्याप्तिपरिहाराय ज्ञानत्वेन निवर्तकता विवक्षिता, स्वपदन्तु जनकविशेष स्पष्टयति, इति । तन्न, पूर्वोक्तदोषानतिवृत्ते. ।

किञ्च– अविद्यानिवर्तक ज्ञान युगपदेवाविद्यातत्कार्यं निवर्तयतीति अविद्यावरणेऽतिव्याप्तिः ।

यदुक्त 'केवलज्ञानस्ये' त्यादि, तन्न, कार्याभावस्थले ज्ञानस्याज्ञानमात्रनिवर्तकत्वेपि यत्र कार्यमस्ति तत्र युगपदेवोभयनिवर्तकत्वसम्भवात्। नच ज्ञानस्य कार्यनिवृत्तिहेतुत्वे मानाभाव', "तथा विद्वान्नामरूपाद्विमुक्त" इत्यादेरेव मानत्वात्। नचोभयत्र साक्षात्कारणत्वकल्पने गौरवात्, अविद्यानिवृत्तावेव साक्षात्कारणत्व — तन्निवृत्तिद्वारैव तत्कार्यनिवृत्तौ कारणत्वमिति वाच्यम्,— ज्ञानस्याविद्यानिवृत्तावव्यवधानेन कारणत्व - तद्द्वारा कार्यनिवृत्तौ कारणत्वम् - अविद्यानिवृत्तेश्च कार्यनिवृत्तौ कारणत्वमिति कल्पनापेक्षया एकस्यैव ज्ञानस्योभयत्र कारणत्वकल्पने लाघवादिति।

यदपि स्वसमानविषयज्ञानप्राक्कालव्यापिसत्ताकत्वे सति तन्निवर्त्यत्वम्, स्वसमानविषयज्ञानासहकृतसामग्र्ययोग्यध्वसप्रतियोगित्व वा, ज्ञानातिरिक्तागन्तुकदृष्टकारणायोग्यध्वसप्रतियोगित्वं वा, जन्यज्ञानाजन्यध्वसप्रतियोगिवृत्तिबाह्यावृत्तिजातिमदन्यत्वे सति स्वसमानविषयज्ञाननिवर्त्यत्व वा अज्ञानलक्षणम्; नचाविद्यासम्बन्धादावतिव्याप्ति', तस्य निर्विषयत्वात्, अविद्यानिवृत्तिरूपदृष्टकारणयोग्यध्वसप्रतियोगित्वाच्चेति द्रष्टव्यमिति। तत्राद्यलक्षणमनुपपन्नम्, पूर्वज्ञानसत्ता हि ब्रह्मस्वरूपमेव, तच्चोत्तरज्ञानप्राक्कालव्यापकमेव। ज्ञाननिवर्त्यत्वदूषणञ्च पूर्ववद्द्रष्टव्यम्। उभयत्र ज्ञानपदवैयर्थ्यञ्च। द्वितीयलक्षणेपि तत्त्वज्ञाननिवर्त्यभ्रमेऽतिव्याप्तिः, उभयोरप्यधिष्ठानविषयत्वेन समानविषयत्वात्। नच यावत्स्वविषयविषयत्व विवक्षितमिति वाच्यम्, यादृशघटाद्यज्ञान स्वसमानविषयकज्ञानानुत्पत्तेश्चरमसाक्षात्कारेणैव निवृत्त तत्र यावत्स्वविषयकज्ञानाभावेनाव्याप्ते', अज्ञानस्यावच्छिन्नविषयतयाऽखण्डब्रह्मज्ञानापेक्षया भिन्नविषयत्वात्। प्रतियोगिनो ध्वसहेतुत्वात्सर्वस्यापि ज्ञानस्य स्वनिवर्त्यत्वात्तत्रातिव्याप्तिः। अविद्यानिवृत्त्यैव तदितरनिवृत्तिः, ज्ञानन्त्वविद्यानिवृत्तावन्यथासिद्धमिति मते स्वसमानविषयकज्ञानासहकृताविद्यानिवृत्तिरूपसामग्रीयोग्यब्रह्मात्मकध्वसप्रतियोगित्वाद्ब्रह्माज्ञाने अव्याप्ति'। असहकृतेति तदसहकारकत्व न विवक्षितम्, किन्तु तदनपेक्षत्वमात्रम्, अत्र चाविद्यानिवृत्तिघटिता सामग्री तद्धेतुभूततादृशज्ञानापेक्षैवेति चेत्? तर्हि इच्छाप्रयत्नादिष्वतिव्याप्ति', इच्छादेस्स्वनिवृत्तिहेतोर्ज्ञानापेक्षत्वात्। तृतीयलक्षणेपि अविद्यानिवृत्तेर्ब्रह्मस्वरूपतया आगन्तुकत्वाभावादविद्यासम्बन्धेऽतिव्याप्तिः। आगन्तुकशब्देन क्षेमसाधारणसाध्यत्वविवक्षायाम'यविद्यानिवृत्तेर्ब्रह्मस्वरूपतया ब्रह्म

स्वरूपाभिन्नसम्बन्धनिवृत्तावनपेक्ष्यत्वादतिव्याप्तिः । अविद्यानिवृत्तित्वसम्बन्ध निवृत्तित्वाकारभेदेनापेक्ष्य वापेक्षकत्वसम्भवेपि अविद्यानिवृत्तेर्ब्रह्मरूपाया ज्ञानातिरिक्तत्वाभावात्तत्रैवातिव्याप्तिः । ज्ञानपदेन वृत्तिविवक्षायामपि तादृशसामग्रीयोग्य ब्रह्मात्मकध्वंसप्रतियोगित्वमविद्यासम्बन्धवदविद्यायामप्यस्तीत्यसम्भवः । किञ्च त्रैवर्णिकस्य भाषाप्रबन्धजन्यज्ञानेन तज्जन्यदुरितापूर्वेण प्रतिबन्धादेवाज्ञानं न निवर्तत इति त्वयोक्तत्वाद्दुःखप्रागभावादेः प्रायश्चित्तादिसाध्यत्ववद्भ्रष्टापाजन्यदुरितापूर्वसाध्यत्वमज्ञानस्याप्यस्तीत्यसम्भवः । चतुर्थलक्षणेपि ज्ञानमात्रेऽतिव्याप्तिः, सर्वज्ञानस्यापि जन्यज्ञानजन्यध्वंसप्रतियोगित्वात् , स्वसमानविषयस्व-स्वरूपज्ञाननिवर्त्यत्वाच्च । भ्रान्तिपरिणामित्वमज्ञानत्वमित्यपि न, अन्तःकरणेऽतिव्याप्तेः । प्रातिभासिकविषयज्ञानपरिणामित्वविवक्षायामपि अन्तःकरणेऽतिव्याप्तिः, प्रातिभासिकविषयपरोक्षवृत्तिपरिणामवत्त्वात् । नच प्रातिभासिकविषयापरोक्षवृत्तिरूपपरिणामवत्त्व प्रातिभासिकपरिणामवत्त्व वा विवक्षितमिति वाच्यम्,-मूलाज्ञाने अनुत्पादितभ्रमाज्ञाने चाव्याप्तेः । अविद्यातिरिक्तदोषजन्यत्वस्य प्रातिभासिकलक्षणत्वोक्त्या अन्योन्याश्रयाच्च । द्वितीयादिषु सर्वेष्वपि लक्षणेषु अविद्याध्वंसस्य प्रातिभासिकत्वव्यावहारिकत्वपारमार्थिकत्वपञ्चमप्रकारत्वसम्भवस्यान्यत्रोपपादितत्वात् अविद्याया निवृत्तिप्रतियोगित्वाभावेनासम्भव एव दोषः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
अविद्यास्वरूपानुपपत्तिर्नाम
एकचत्वारिंश स्कन्धः ।



श्रीरस्तु ।

## अथ द्विचत्वारिंशोवादः ।

य एको दुर्लङ्घ्यत्रिगुणनिजमायानिगळितै
र्विचित्रैः क्षेत्रज्ञैर्विहरति सरोजासहचरः ।
जगत्सर्गक्षेमक्षपणपरिकर्मीणमहिमा
दयालुर्देवोसौ तुरगवदनस्तारयतु नः ॥

ये तु ब्रह्मणो दोषं परिजिहीर्षन्तः ब्रह्माज्ञानं मायाशब्देनोपचरन्ति, तान्प्रति ब्रूमः — मायाविद्ययोः को विशेष इति । परव्यामोह

---

विशदयतु नस्तत्त्वं श्रुत्यन्तवृन्ददरीशयं
श्रुतिसहचरी वेदान्ताचार्यसूक्तिरशेषतः ।
मनसि कृतयस्तात्पर्याणां दुरत्ययपद्धतिं
त्यजति भगवन्माया स्वायत्तविश्वजनापि नः ॥
व्यामोहयस्त्रिगुणया निजमाययाऽन्यान्
यत्प्रीतिभारपटलप्रतिरुद्धदृष्टिः ।
ईशो न पश्यति यदङ्घ्रिजुषामघाळीं
तं श्रीनिवासगुरुमाश्रयतोज्झितान्याः ॥

य एक इति । अनेन स्वमते त्रिगुणात्मिका प्रकृतिर्माया, कर्म मिथ्याज्ञानं वा अविद्या, इति मायाविद्याविभागः, ब्रह्मणो निर्दोषत्वम्, जीवस्य तु अविद्यया सदोषत्वं चोपपद्यते; परमते तु तन्न सम्भवतीति सूच्यते । अत्र च "दैवी ह्येषा गुणमयी" इत्यादिवचनार्थोऽनुसहितः । येत्विति । अविद्याश्रयत्वे सदोषत्वप्रसङ्गात् ब्रह्मणो नाविद्या, किन्तु मायैव, सा चैन्द्रजालिकादिष्विव न दोष इत्याहुः; तत्र तस्या अविद्यामोहनीयपरदर्शनरूपव्यामोहादिहेतुत्वेनाविद्यात्वं पर्यवस्यति, ततश्च तत्र मायाशब्द उपचारमात्रमिति न मायाशब्दप्रयोगमात्रात् ब्रह्मणो निर्दोषत्वसिद्धिरिति भावः । मायेति । ब्रह्मजीवयोर्निर्दोषत्वसदोषत्वनिर्वाहकत्वेनाभिमतयोर्मायाविद्ययोः को विशेष इत्यर्थः । परेति । मायावित्त्वेनाभिमतब्रह्मापेक्षया परः जीवः, अविद्याश्रयत्वेनाभिमतो जीवः स्वशब्दार्थः, ऐन्द्रजालिकव्यामुग्धयोस्तथैव दर्शनादिति भावः ।

नहेतुर्माया, स्वव्यामोहनहेतुरविद्येति चेत्? किं परेषामदर्शनेपि तद्व्यामोहनम्, उत तद्दर्शने? न प्रथमः, असम्भवात्; न हि मायाविन. परानपश्यन्तस्तन्मोहनमिच्छन्ति मोहयन्तिवा, मायाविशब्दस्य परव्यामोहनाभिसन्धिमत्पुरुषविशेषवाचित्वात् । अन्यथा मोहनहेतूनां मणिमन्त्रौषधीनामपि मायावित्त्वप्रसङ्गात् । नापि द्वितीयः, तद्धि परदर्शनं ब्रह्मणः किं स्वभावतः, उताज्ञानेन, अथ तयैव मायया? नाद्यः, निर्दोषदर्शनविषयतया परेषां सत्यत्वप्रसङ्गात्; ब्रह्मणि ज्ञातृत्वस्य स्वाभाविकत्वप्रसङ्गाच्च । न द्वितीयः, ब्रह्माज्ञानवादावतारात् । तथा [च] सति तेनैवाज्ञानेन सर्वसम्भवे तद्व्यतिरिक्तमायाभ्युपगमानुपपत्तिश्च । नच तृतीयः, परेषु दृष्टेषु तन्मोहनमात्रोपकरणत्वान्मायायाः परदर्शनहेतुत्वायोगात् । अथ ब्रह्मगतायाः मायायास्त्वयमतिशयो धर्मिग्राहकसिद्धः- यत्परदर्शन

---

अन्यत्र तथा वैषम्यसत्त्वेपि प्रकृते तन्निराकर्तुं विकल्पयति । किमि ति । किं ब्रह्म परान् दृष्ट्वा व्यामोहयति, उतादृष्ट्वेत्यर्थः । नही ति । इच्छाया ज्ञानपूर्वकत्वनियमात्परव्यामोहनेच्छा परज्ञानपूर्विकैवेति भावः । परव्यामोहनेच्छुत्वाभावेपि परव्यामोहकारित्वादेव मायावित्त्व ब्रह्मणः, तथाच न परज्ञानावश्यम्भाव इत्यत्राह– मायावी ति । अन्यथे ति । नच व्यामोहहेतुत्व मायावित्वम्, नच तन्मन्त्रादाविति वाच्यम्, मणिमन्त्राद्याश्रयभूतलाकाशादेरपि मायावित्त्वापत्तेरिति भाव । स्वाभाविकत्वे ति । उपाध्यन्तराप्रयुक्तत्वादिति भावः । ब्रह्माज्ञाने ति । अज्ञानस्य स्वाश्रय प्रत्येव मिथ्याभूतपरदर्शनहेतुत्वादिति भावः । तथासती ति । ब्रह्मणो निर्दोषत्वसिद्धये हि मायाकल्पनम्, मायाङ्गीकारेपि परदर्शनार्थमज्ञानस्यावश्यकत्वे निर्दोषत्वस्य भग्नत्वात्तत एव सर्वकार्योपपत्तेश्च न माया कल्पनीयेत्यर्थ. । परेष्वि ति । ऐन्द्रजालिकादौ तथा दर्शनादिति भावः । धर्मिग्राहके ति । श्रुत्या हि मायासिद्धिः, श्रुतिश्च "इन्द्रो मायाभि. पुरुरूपः" इत्यादिका मायया नानात्वदर्शनमाहेत्यर्थः ।

तद्व्यामोहनयोर्हेतुत्वमिति चेन्न, - मिथ्याभूतपरदर्शनहेतुत्वांशेन तस्या एवाविद्यात्वस्यापि दुर्वारत्वात् ।

अथ मन्यसे- विपरीतदर्शनहेतुरविद्या, यथा- शुक्तिरजतादि दर्शनहेतुः, मायातु न ब्रह्मणो विपरीतदर्शनहेतुः, मिथ्याभूतस्य ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेनैव बोधनात् ; नहि शुक्तिरजतमिथ्या त्वग्राहकस्याविद्यात्वम् , तथा सति बाधकज्ञानानां सर्वेषामप्यविद्या मूलत्वप्रसङ्गात् , भवदभिमतसर्वज्ञस्यापि सर्वेषा जीवाना भ्रमस्वरूपं विजानतस्तत्तद्भ्रमविषयैस्सह तत्तद्भ्रमग्रहणादविद्यावत्त्वप्रसङ्गात् ; नहि निर्विषयज्ञानग्रहण सम्भवति; नचेश्वरस्य भ्रमानभिज्ञता , असर्वज्ञत्वप्रसङ्गात् ; आश्रितव्यामोहनिबर्हणार्थप्रवृत्तिशून्यत्वप्रसङ्गाच्च, अतो मिथ्याभूत ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव बोधयन्ती ब्रह्मणो माया नाविद्येति । तदप्यसारम् । किमिदं ब्रह्म स्वव्यति रिक्त मिथ्याभूत स्वभ्रमसिद्धतया मिथ्यात्वेन, उत परभ्रमसिद्ध तया, अथ भ्रमसिद्धत्वमजानदपि मिथ्यात्वमात्रं जानातीति ? न प्रथमः, ब्रह्माज्ञानस्य दुस्त्यजत्वात् । न द्वितीय , परेषामदर्शने परभ्रमसिद्धत्वादर्शनात्; परदर्शने पुनरविद्यास्वीकारापाताच्च । परानपि

---

दुर्वारत्वा दिति । स्वव्यामोहहेतुत्वयोगादिति भावः । विपरीते ति । सत्य तया मिथ्यार्थप्रतिभासहेतुरविद्येत्यर्थः । तथासती ति । ततश्च तेषामपि बाध्यत्वप्रसङ्गात् बाध्यबाधकव्यवस्था न स्यादिति भावः । भवदभिमते ति । यद्यपि व्यधिकरणप्रकारकत्वाभावान्न भ्रमत्वप्रसङ्गः, तथाप्यनिर्वचनीयविषयत्व मेव भ्रमत्वमिति स्वमतानुसारेणेदमुक्तम् । नही ति । ईश्वरज्ञानस्य साक्षा त्काररूपत्वादित्यर्थः । किमिद मिति । कि मद्भ्रमसिद्धत्वादिद मिथ्येति जानाति, उत परभ्रमसिद्धत्वादिद मिथ्येति, उत भ्रमसिद्धत्वमगृहीत्वा मिथ्यात्वमात्रं जानातीत्यर्थः । परभ्रमसिद्धतये ति । मिथ्यात्वेनेत्यनुषङ्ग. । पूर्ववाक्ये इहच जानातीति शेषः । मिथ्यात्वेन परदर्शने नाविद्यास्वीकार इति शङ्कते– परानपी

परभ्रमसिद्धतया ब्रह्म पश्यतीति चेन्न, परान्तरस्वीकरणेऽनवस्थानात्। तेषामेव परेषां भ्रमेण तत्सिद्धत्वदर्शनेपि तथाविधविशिष्टपर दर्शने स्वस्याविद्यापेक्षणात्। नहि वन्ध्यासुतभ्रमसिद्धो वन्ध्यासुत इति ज्ञाने बन्ध्यासुतस्यैव भ्रमः–नतु तद्विज्ञातुरिति वक्तुं शक्यम्। नच तृतीयः, भ्रमसिद्धत्वाज्ञाने मिथ्यात्वस्य दुर्ग्रहत्वात्। नह्यसत्त्व मात्रं मिथ्यात्वम्, अपितु स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वादिकम्। परेषां मिथ्यात्वदर्शने च न ब्रह्मणः परव्यामोह नेच्छा सम्भवति, नहि प्रतिबिंबवन्ध्यासुतचित्रपुरुषादीना व्यामोहनाय मायाविनोपि मायां प्रयुञ्जते; प्रयुञ्जाना वा कथ स्वयमनुन्मत्ताः स्युः। आहुश्च- "अचेतनेषु मायावी मायामोचक एव वा। उभा वुन्मत्तपदवीमश्नुवाते मनीषिणाम्॥" इति। ततश्च ब्रह्मापि मिथ्यात्वेनावधारितपरव्यामोहनार्थं मायां प्रयुञ्जानमुन्मत्तपर्यायमिव स्यादिति तदेव ब्रह्माज्ञानम्।

अथ स्यात्- यद्यपि परव्यामोहने परदर्शनमवश्यम्भावि, मिथ्याभूतपरदर्शनं च न दोषमन्मतरेण, तथापि नात्र ब्रह्मणः

---

ति। स्वस्वभ्रमसिद्धतयैव परेषा दर्शने नानवस्थेत्यत्राह— तेषामेवे ति। भ्रमसिद्धत्वे ति। स्वपरौदासीन्येन भ्रमसिद्धत्वमात्रं ज्ञायतामिति चेन्न,— एवमपि भ्रमस्य स्वकीयत्वे ब्रह्मणोऽज्ञत्वप्रसगः, परकीयत्वे च तदीयत्वेनाज्ञाने असर्वज्ञत्वप्रसगः, तदीयत्वेन ज्ञाने च प्रागुक्त एव दोषः। स्वात्यन्ताभावे ति। आदिशब्देन प्रतिपन्नोपाधौ निषेधप्रतियोगित्व विवक्षितम्। परेषा मिति। एतेन स्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वमिति सूचितम्। ननु प्रतिबिम्ब चित्रादिषु व्यामोहनकार्याभावान्न तदर्थं प्रवर्तन्ते, इह व्यामोहलक्षणकार्यसद्भावात्प्रवृत्तिस्स्यादिति चेन्न,– भेदमिथ्यात्वे ज्ञाते अनिर्वचनीयस्वप्रतियोगिकभेदाश्रय तया ज्ञायमानत्वेन परव्यामोहनार्थं प्रवृत्त्ययोगात्। मनीषिणा मिति। ज्ञातृज्ञेयसम्बन्धे षष्ठी। मनीषिभिर्मननया ज्ञायेतेत्यर्थः। तथापी ति। ब्रह्मणोऽनर्थं

परदर्शनहेतोर्मायाख्यदोषस्याविद्यात्वम्, अपुरुषार्थपरमार्थदर्शन हेतुरविद्येति तल्लक्षणात्; ब्रह्मणस्तु व्यामोहनीयान् परान् प्रकाश यन्त्यपि माया नापुरुषार्थतया प्रकाशयति, स्वप्नसिद्ध (भोगो) लीलो पकरणादिवत्पुरुषार्थतयैव प्रकाशयति, अतस्तस्या नाविद्यात्वमिति । तदपि न, पुरुषार्थहेतोर्दोषत्वाभावात् । दोषत्वे त्वपुरुषार्थतान्वयस्या वर्जनीयत्वात् । नह्यनिष्टं किञ्चिदनन्तर्भाव्य क्वचिदपि दोषत्ववर्ण नम्, अन्यथा तत्तत्सामग्र्या तत्तत्कार्योत्पत्तौ सर्वेषां कारणानां दोषत्वमेव वा गुणत्वमेव वा स्यादिति गुणदोषविभागाभावप्रसङ्गात् ।

ननु किमिहेष्टानिष्टचिन्तनेन? स्वाभाविकाकारो गुणः, औपाधिका कारस्तु दोषस्स्यात्, यथा— द्विचन्द्रदर्शनदशायां चक्षुषस्तिमिरादि; नच द्विचन्द्रदर्शने कश्चिदपुरुषार्थस्पर्श इति चेत्? मैवम्, द्विचन्द्रदर्शनहेतोरपि पारम्पर्येणानिष्टमन्तर्भाव्यैव दोषत्ववर्णनात् । अन्यथा निधिदर्शनादिहेतोरञ्जनादेरप्यस्वाभाविकतया दोषत्व प्रसङ्गात् । यदि च द्विचन्द्रदर्शनहेतोर्दोषत्वमविद्यात्वं च न स्यात्, कथं तन्निरासाय प्रेक्षावन्तः प्रयस्यन्ते । नह्यस्पृष्टानिष्टगन्धं किंचि-

---

वहो दोष एवास्माकं परिजिहीर्षित इति भावः । नापुरुषार्थतये ति । शोकाद्य हेतुत्वादिति भावः । परदर्शनस्य भ्रान्तिरूपस्य शोकहेतुत्व स्यादित्यत्राह— स्वप्ने ति । अन्यथे ति । अनिष्टहेतुर्दोषः- इष्टहेतुर्गुण इति गुणदोषविभागः, यदिचा निष्टमनन्तर्भाव्यैव यत्किंचिद्धेतुत्वमात्रेण दोषत्व स्यात्, तदा हेतुमात्र दोष एव स्यान्न गुणः, यदि च गुणोऽवश्य वाच्यः तदा हेतुमात्र गुण इति दोषो न स्यात्, गुणदोषयोः परस्परप्रतिकोटित्वात्, ततश्च गुणदोषविभागो न स्या दित्यर्थः । यद्यपुरुषार्थपर्यवसान दोषत्वे आवश्यकम्, तर्हि लाघवात्तदेव दो- षत्वप्रयोजकं स्यात्, न भ्रमहेतुत्वमपि, तथा च लीलारसहेतुतया ब्रह्मणो माया

द्विमृश्यकारिणां निरसनीयम् । माभूत्तर्हि माया ब्रह्मणो दोष॰, पुरुषार्थैकपर्यवसायितया गुण एव तु स्यादिति चेत्? न,— सा किमुच्छेदनीया नवा? पूर्वत्रापि किं ब्रह्मेच्छया, अन्यतो वा? यदि ब्रह्मेच्छया, कथ पुरुषार्थैकपर्यवसायिता? नह्यस्पृष्टानिष्ट निरसनीयमित्युक्तम् । नचान्यतस्तदुच्छेद॰, ब्रह्ममायामोहितैरल्पज्ञानशक्तिभिः क्षेत्रज्ञैस्सर्वज्ञस्यापरिमितशक्तेर्ब्रह्मणोऽनन्तपुरुषार्थसाधिकायाः विश्वेन्द्रजालपिञ्छिकाया अपहर्तुमशक्यत्वात् । नच स्वतः कदाचिन्मायोच्छेदिनीति वाच्यम्;— अहेतुकविनाशेन क्षणभङ्गापातात्; अविशेषादितः पूर्वमेव तदुच्छेदकप्रसङ्गाच्च । ततश्चानुच्छेदपक्षाविशेषे नित्यैव माया ब्रह्मस्वरूपानुबन्धिनी स्यात् । अस्तु मायायाः नित्यत्वम्, तथापि न ब्रह्माज्ञानप्रसङ्ग इतीष्टप्रसङ्गत्वमेवेति चेन्न,— ब्रह्मस्वरूपानुबन्धिनी हि माया किं ब्रह्मवत्परमार्थभूता, उतापरमार्थभूता? नाद्यः, अद्वैतपरतया युष्माभिरभ्युपेतैः श्रुतिशतैर्विरोधप्रसङ्गात्; अपसिद्धान्ताच्च । अथपुनर्मायामपि ब्रह्मस्वरूपेऽन्तर्भाव्य श्रुतिविरोधादिक परिजिहीर्षसि? तथाच सति ब्रह्मण एव मायाशब्देनोपचारात्तस्य च स्वमात्रप्रकाशचिन्मात्रवपुष॰ परदर्शनहेतुत्वाभावात्परव्यामोहनादिकमेव न स्यात् । परदर्शनमपि ब्रह्मणः स्वभाव इति चेदिष्येत, हन्त जितं सगुणवादेन । नापि द्वितीय॰, नित्यायास्तस्या मिथ्यात्वस्य साधयितुमशक्यत्वात् । नह्यबाधितमपि

---

गुण एवास्त्विति शङ्कते माभूदिति । ब्रह्ममाये ति । सर्वज्ञस्सर्वशक्तिरीश्वरस्स्वप्रयोजनपर्यवसायिन्या मायायाः परैरुच्छेद न सहेतेति अन्यैस्तदुच्छेदोऽशक्य इत्यर्थः । नित्यैव माया अपरमार्थभूता इति द्वितीयपक्ष दूषयति— नापि द्वितीय इति । बाधितापि माया बाधितानुवृत्तिवशान्नित्यमनुवर्तते, अतो नित्या अपरमार्थ

मिथ्येति वक्तुं शक्यम्, बाधितापि द्विचन्द्रादिबुद्धिवन्नित्यमनुवर्तेत इति चेन्न,-भवत्पक्षे बाधितानुवृत्त्यसम्भवस्योक्तत्वात्। नित्यस्यापि मिथ्यात्वे कथं "अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते" इति पराशरादिवचनं निर्वक्ष्यसि, ब्रह्मणोपि मिथ्यात्वप्रसङ्गं कथं परिहरिष्यसि। अबाधादिति चेन्न,- तत्रापि यत्किञ्चिद्बाधकस्य सुवचत्वात्। प्रमाणाप्रमाणविभागस्य त्वयैव शिथिलीकृतत्वात्।

किंचेयं माया परमार्थत्वेन ब्रह्मणः प्रकाशते, उतापरमार्थत्वेन? पूर्वत्र सिद्धं ब्रह्माज्ञानम्। उत्तरत्र कथं तया क्रीडितुमिच्छेत्? कथञ्च तन्मूलां मिथ्यात्वेनैव प्रतीयमानां क्रीडामभिनिविशेत। नहि क्रीडोपकरणानि तन्मूलां क्रीडां तदुभयप्रतिभासस्वरूपञ्चापरमार्थतया जानता प्रेक्षावता क्रीडारसो निष्पद्यते। बालोन्मत्तादयः कथं प्रतिबिम्बादिभिः क्रीडन्तीति चेन्न,- तेषां तदानीं प्रतिबिंबादेस्तत्प्रतिभासस्य च मिथ्यात्वग्रहणाभावात्। अस्त्विहापि बालादिवद्ब्रह्म, तथाच स्मरन्ति- "बालः क्रीडनकैरिव" "क्रीडतो बालकस्येव चेष्टां तस्य निशामय" इत्यादि, इतिचेन्न,- उन्मत्तवदीश्वरस्याविस्रम्भणीयत्वप्रसङ्गात्; स्वयं व्यामुह्यतः परव्यामोहनसामर्थ्यासम्भवाच्च; मुमुक्षुभिरुपेक्ष्यत्वप्रसङ्गाच्च। बालकदृष्टान्तस्तर्हि कथमिति चेत्? सर्वथा सादृश्यस्य दृष्टान्तानङ्गत्वात्। अन्यथा बालत्वादेरपि प्रसङ्गात्।

---

भूता च, इति शङ्कते- **बाधितापी** ति। **निर्वक्ष्यसी** ति वहेर्लृट्। **ब्रह्मणोपी** ति। ज्ञाननिवर्त्यत्वाभावेपि मिथ्यात्वे ब्रह्मणोऽपि किं न स्यात्, अविशेषादिति भावः। **अबाधा** दिति। प्रपञ्चवद्ब्रह्मणो ऽनिषिद्धत्वादित्यर्थः। **तत्रापी** ति। सर्वं शून्यमित्यादिवाक्यस्य सुवचत्वादित्यर्थः। प्रमाणतो निषिद्धं मिथ्या, अनिषिद्धं सत्यम्, ब्रह्म च न प्रपञ्चवत्प्रमाणतो निषिद्धमित्यत्राह—**प्रमाणे** ति। उभयोर्नित्यत्वे उभयनिषेधस्यापि प्रामाण्यमप्रामाण्यं वा स्यात्, अविशेषादिति भावः।

किंच यस्य जीवब्रह्मणोरद्वैतं तत्त्वम्, तस्य कथं जीवाज्ञाने ब्रह्माज्ञान न स्यात् । अथ यदि जीवो ब्रह्मणस्तत्त्वतो भिन्नः ततः कथमैक्यज्ञानान्मोक्ष इत्यादिकं घटेत । अतो यस्य मते माया सत्या, मायाविनश्च भगवतो न भ्रमः . व्यामोहनीयाश्च जीवाः परस्मादत्यन्तभिन्नाः सत्याश्च, परेणच यथावद्दृश्यन्ते, तस्यैव मायाविद्याविभागेन ब्रह्माज्ञान सुपरिहरम्; नतु निर्विशेषैकचिन्मात्रवादिन इति।

इति शतदूषण्यां मायाविद्याविभागवादभङ्गो

द्विचत्वारिंशो वाद. ॥४२॥

——(*)——

ननु मायायाः ब्रह्मरूपाभावप्रतियोगित्वात्तन्निषेधः, ब्रह्मणश्चाभावप्रतियोगित्वाभावाच्च ब्रह्मनिषेधः प्रमाणमिति चेन्न,-मायाया अपि ब्रह्माभावत्वावश्यम्भावात्, अविशेषात्, त्वयाप्यविद्याया ब्रह्माभावत्वाङ्गीकारात्। नन्वस्माकं कल्पितसिद्ध्यधीना मायाया अभावप्रतियोगित्वसिद्धिरिति चेत्? किमतः, एवमप्यभावप्रतियोगित्वस्यानपायात्। अकल्पिताभावप्रतियोगिनिषेधः प्रमाणमिति चेत्? अकल्पितत्व यदि नित्यत्वम्, तन्मायाया अप्यस्ति, यदि सत्यत्वम्, तदा तद्यद्यबाधितत्व तन्न ब्रह्मणोपि, केनचिद्बाधादित्युक्तत्वात्, ज्ञानानिवर्त्यत्व मायाया अपि सिद्धमिति विपरीतदर्शनहेतुरविद्येति पक्षाभिप्रायेणोक्तम् । अपुरुषार्थापरमार्थदर्शनहेतुरविद्येत्यत्रतु मायाया अपारमार्थ्याज्ञानाद्ब्रह्मणोऽसर्वज्ञत्वप्रसङ्ग इति ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां मायाविद्याविभागवादभङ्गो

**द्विचत्वारिंशस्स्कन्धः ॥४२॥**

श्रीरस्तु ।

अथ त्रिचत्वारिंशो वादः ।

———(*)———

अनन्यानां पुंसामनवधिकभक्तिस्थितिजुषा-
मविद्याध्वंसो यच्चरणवरिवस्यापरिणतेः ।
तदेकं सत्संवित्सुखमवधिदूरीकृतगुणं
हताशेषावद्यं हयवदनमीडीमहि महः ॥

प्रतिष्ठितोयमर्थः प्रमाणपरतन्त्राणां- यदुत कर्मयोगज्ञानयोगपरिशोधितान्तःकरणस्य तत्तद्वर्णाश्रमोचितनित्यनैमित्तिकोपसंहृतिनिषिद्धपरिहारनिष्ठस्य अनवरतविहितध्यानार्चनादिक्रमपरिणतनिरतिशयप्रीतिरूपतापन्ननिदिध्यासनानिरुद्धसुहृद्द्विषत्संक्रमणीयपूर्वोत्तरपुण्य-पापस्य, फलोन्मुखकर्मपर्यवसाननिर्मुक्तस्थूलसूक्ष्माचित्ससर्गस्य तथाविधभजनाराधितपरमपुरुषप्रसादादेव सार्वज्ञ्यापरपर्याया निश्शेषाविद्यानिवृत्तिरिति । ये पुनरद्वैतविज्ञानादेव ब्रह्माज्ञाननिवृत्तिरिति जल्पन्ति, तान्प्रति ब्रूमः कथम्भूतमिदमद्वैतज्ञानमिति ? किं ब्रह्मस्वरूपभूतात् ज्ञानाद्भिन्नम्, उताभिन्नम्, यद्वा भिन्नाभिन्नम्, उतानुभयात्मकम्, उताशक्यवेदनकथम्भावं किञ्चिदिति । न प्रथमः, तद्धि निर्विषयम्, सविषयं वा? पूर्वत्र ज्ञानत्वमेव हीयेत ।

---

वादार्थं संगृह्णन्मङ्गलमाचरति– अनन्यानामिति । अत्र च स्वमतोपन्यासेन वादप्रतिपाद्यभूतमतान्तरनिरसनमर्थात्सिद्ध्यति । अद्वैतज्ञानस्याविद्यानिवर्तकत्वानङ्गीकारे अनिर्मोक्षप्रसङ्ग इत्याशङ्का निराकर्तुमुपोद्घातरीत्या स्वमतमुपन्यस्यति– प्रतिष्ठित इति । तद्धी ति । नन्वद्वैतज्ञानादेव ब्रह्माज्ञाननिवृत्तिरित्युक्तत्वात्कथं निर्विषयत्वविकल्प इति चेन्न,– पर्युदासलक्षणया द्वैतज्ञानादन्यदद्वैतज्ञानमिति विवक्षोपपत्तेः । पर्युदासे च नञिवयुक्तन्यायेन ज्ञानत्वेनाद्वैतज्ञानसदृश ज्ञानान्तरमेव लक्ष्यते । यथोक्तं वार्तिके– “ नञिवयुक्तमन्यसदृशाधिकरणे

वृत्तिरूपं हि ज्ञान सविषयमेवेति भवतामपि सिद्धान्तः । उत्तरत्रापि कस्तस्य विषय ? किं ब्रह्मस्वरूपम्, उत तदेवाविद्याशबलम्, यद्वा तद्व्यतिरिक्तं तस्य मिथ्यात्व वा. अथवाऽन्यदेव किञ्चिदिति । नाद्य', आत्मस्वरूपस्येव ज्ञानस्य तस्यापि भ्रमनिवर्तकत्वायोगात्, उभयोरपि यथावस्थितब्रह्मस्वरूपप्रकाशरूपत्वाविशेषात् । ननु स्वरूपप्रकाशोऽध्यासौपाधिकाधिष्ठानप्रकाशात्मकः, यथेद रजत

---

तथाह्यर्थगति " रिति । अत्र भाष्यम्– " नञ्युक्तमिवयुक्तञ्च कार्यमन्यस्मिंस्तत्सदृशे विज्ञायते, तथा ह्यर्थो गम्यते– अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशः क्षत्रिय आनीयते, नासौ लोष्ठमानीय कृतीभवति '' इति । निवर्तकज्ञानस्य ब्रह्मस्वरूपातिरिक्तत्वाङ्गीकारे तस्य वृत्तिरूपत्वलाभाद्वृत्तेश्च सविषयत्वात् । निर्विषयत्वाङ्गीकारे ऽपसिद्धान्तोपीत्याह– वृत्तिरूपंहीति । उत्तरत्रेति । ननु पर्युदासविवक्षाया कथ तदेवाविद्याशबलमित्यादिकोट्यन्तरादय. ? मैवम्, द्वैतशब्दस्याविद्याकार्यपरत्वविवक्षाया द्वैतमात्रविषयत्वविवक्षाया वा द्वितीयपक्षोत्थानात् । द्वयोर्भावः– द्विता, द्वितैव द्वैतम्, द्वैतप्रकारकमवधारण द्वैतज्ञानम्, अस्ति द्वय ब्रह्मव्यतिरिक्त सत्यमेवेति ज्ञान तदन्यज्ञानम्, सजातीयपर्युदासात्प्रपञ्चविषयकमज्ञानमिति लभ्यते, ततश्च ब्रह्मव्यतिरिक्त सत्यमेवेति ज्ञानातिरिक्त यत्प्रपञ्च स्वरूपमात्रविषयक ज्ञानम्, तत् तृतीयकोटिः, यच्च प्रपञ्चमिथ्यात्वविषयक सा चतुर्थकोटिः, एतदर्थविवक्षयैव पञ्चमकोट्युत्थिति' । अन्य दिति । ब्रह्मगता द्वितीयत्वादिकमित्यर्थः । गत्यन्तराभावादद्वैतज्ञानशब्दार्थत्वाभावेपि पञ्चमकोट्युत्थितिः । यद्वा अद्वैतज्ञानमित्यत्र समासान्तर्गतायाष्षष्ठ्यास्सम्बन्धसामान्यपरत्व विवक्षया सविषयत्वनिर्विषयत्वविकल्पः । तत एवोत्तरत्र तद्व्यतिरिक्तमित्यादि कोट्युत्थितिः । ननु समानविषयत्वे ऽप्यध्यासानुपयोग्यधिष्ठानज्ञान निवर्तकम्, अध्यासोपयोग्यधिष्ठानज्ञानन्तु न निवर्तकम्, इदमिति ज्ञानस्य शुक्तिरिति ज्ञानस्य च समानविषयत्वेपि तत एव निवर्तकत्वानिवर्तकत्वयोर्दर्शनादिति शङ्कते–ननु स्वरूपेति

मित्यत्र इदमर्थप्रकाशः, विषयप्रकाशस्त्वध्यासनिवर्तक, यथेदमर्थस्य शुक्तिरिति प्रकाश ,इति चेन्न,- दत्तोत्तरत्वात् । नहीदमिति प्रकाशस्य शुक्तिरिति प्रकाशस्य चात्यन्तसमानविषयता, इदमिति प्रकाशस्य शुक्तिरजतसाधारणाकारविशिष्टगोचरत्वात् ; शुक्तिरिति प्रकाशस्य रजतव्यावर्तकशुक्तित्वविशिष्टविषयत्वात् । अन्यथा तस्यापि भ्रमानिवर्तकत्वप्रसङ्गात् । नचात्राप्याकारभेदोधिको वृत्तिज्ञानेन बोध्यत इति वाच्यम् ;- तस्याकारस्य सत्यत्वे सगुणसिद्धान्तोररीकरणप्रसङ्गात् । मिथ्यात्वे भ्रान्तिज्ञानत्वादेव सुतरामनिवर्तकत्वप्रसङ्गात् । वसुन्धरारन्ध्रबोधे मालाभुजङ्गनिवृत्तिवदुपपद्यत इति चेन्न,- तस्यैव भ्रमरूपत्वेन तद्वदेव स्वय स्वविषयाबाधकत्वात् सर्वत्र भ्रमनिवृत्यसिद्धिप्रसङ्गात् । बाधकान्तरगवेषणायामनवस्थानात् स्वपरनिर्वाहकसमाधेरपि बाधकज्ञानविषयीभूतप्रपञ्चविरोधिमिथ्याकारा

---

दत्तोत्तरत्वादिति । उभयोरपि यथावस्थिते त्यादिनेति शेषः । दृष्टान्तेपि निवर्तकत्वानिवर्तकत्वयोर्विषयभेद एव प्रयोजक इत्याह- नही ति । साधारणाकारे ति- शुक्त्यसाधारणत्वेनागृहीतधर्मो विवक्षितः, तेन "इदन्त्वस्य तत्तद्व्यक्तिपर्यवसिततया न केवलान्वयित्व"मिति जिज्ञासानुपपत्तिवादोक्तेन न विरोध. । ननु इदंशुक्तिज्ञानयोरप्यत्यन्तसमानविषयकत्वमेव , तत्र च निवर्तकत्वानिवर्तकत्वे उक्तप्रयोजकाभ्यांभवेत्याशङ्क्याध्यासोपयोगानुपयोगावेव विषयवैलक्षण्याभावे न सम्भवत इत्याह- अन्यथे ति । ब्रह्मस्वरूप विषय इत्यत्र किं ब्रह्मस्वरूपमात्र विषयः, उतानन्दत्वादिविशिष्टब्रह्मस्वरूपमिति विकल्प हृदि निधायाद्यः पक्षो निरस्तः । इदानी द्वितीयमाशङ्क्य निराकरोति- नचे ति । न तस्यैवे ति । वसुधारन्ध्रभ्रमस्थले वसुधारन्ध्रभ्रमस्य स्वविषयाबाधकत्वात् सर्पभ्रमनिवृत्त्यभाववदधिकाकारविशिष्टब्रह्मज्ञानस्य स्वविषयाबाधकत्वात् स्वस्य च भ्रमरूपत्वात्सर्वभ्रमानिवृत्तिप्रसङ्गादित्यर्थः । बाधकज्ञानविषये ति । अध्यासस्तहप्रकाशातिरिक्तो ह्यधिष्ठानप्रकाशोऽध्यासनिवर्तकस्स्यात् , तस्माद्द्वितीयस्वरूपाधि

ध्याससहस्वरूपप्रकाशातिरिक्तप्रकाशाभावेन तस्याकारस्य बाध्यत्वा सिद्धेरेवेति परिहृतत्वात । स्वस्यैव स्वविषयार्थबाधकत्वे व्याघाताच्च । अस्तु तर्ह्यभिज्ञाप्रत्यभिज्ञयोरिव स्वरूपतद्विषयज्ञानयोस्सा ध्यभेद इति चेन्न,– दत्तोत्तरत्वात् । तत्रैतस्यात्, यथा देवदत्तगोचरत्वाविशेषे ऽप्यसावित्यवगाहमानाभिज्ञा न देवदत्तभेदभ्रम निवर्तयति- सोयमिति प्रत्यभिज्ञाबुद्धिस्तु तत्प्रतिक्षेपाय प्रगल्भते । तद्वदत्रापि स्वरूपप्रकाशस्सोहमिति कल्पिताकारप्रकाशश्चेति चेन्न, दत्तोत्तरत्वात् । तत्राप्यभिज्ञाप्रत्यभिज्ञयोः प्रकाश्याकारभेदोऽस्ति । अन्यथा

---

काकारविशिष्टविषयतया प्रपञ्चानिवर्तकत्वेपि तदाकाराध्याससहाधिष्ठानस्वरूप प्रकाशातिरिक्ततद्विरुद्धाकारप्रकाशाभावेन तस्याकारस्य बाध्यत्वासिद्धेरित्यर्थः । **परिहृतत्वा** दिति । परिहृतप्रायत्वादित्यर्थ. । **यथावस्थितेत्यत्रे**ति शेषः । **व्याघाताच्चे** ति । साक्षिणोविद्याभासकत्वान्न तद्बाधकत्वमिति स्ववचनेन व्याघातादित्यर्थः । स्वरूपरूपप्रकाशस्य तदतिरिक्तप्रकाशस्य च प्रकाश्यभेदाभावेपि देवदत्तविषयकाभिज्ञाप्रत्यभिज्ञयोरतत्त्वभ्रमनिवर्तकत्वतदभाववदविद्यानिवर्तकत्वतदभावावुपपद्येते, इति शङ्कते— **अस्तु तर्ही** ति । **दत्तोत्तरत्वा** दिति । पूर्ववदव शेषः । अभिज्ञाप्रत्यभिज्ञयोरपि भिन्नविषयत्वमेवेति भावः । नन्व भिज्ञाप्रत्यभिज्ञयोर्न विषयभेदः, स्वरूपमात्रविषयत्वात् , सोय देवदत्त इति वाक्यस्याखण्डार्थत्वव्यवस्थापनेन तत्समानविषयप्रत्यभिज्ञाया अपि स्वरूपमात्रविषयत्वावश्यम्भावात् , इत्यभिप्रायेण शङ्कते- **तत्रैतस्या** दिति । **असा** विति । अत्र देवदत्तत्व न विषयः, किन्त्वन्य एवेति विवक्षितम् । **दत्तोत्तरत्वा** दिति । पूर्ववदेव शेष. । अखण्डार्थत्वञ्च निरस्तमेवेति भावः । गत्यन्तराभावात् पूर्वदूषितामेव प्रकाश्याकारभेदशङ्का पुनरुत्थाप्य परिहरति– **तत्रे** ति । प्रकाश्याकारभेदाभावेपि सविषयत्वतदभावाभ्या वृत्तित्वतद्भिन्नत्वाभ्या च वैषम्यात् , ततएव निवर्तकत्वानिवर्तकत्वे उपपद्येते नहि विषयभेदादेव निवर्तकत्वानिवर्तकत्वे नियते, तथासति श्वेत्यप्रत्यक्षानुमितोश्शङ्खपीतभ्रमनिवर्तकत्व तदभावव्यव-

अभिज्ञाप्रत्यभिज्ञयोर्भेदासिद्धिप्रसङ्गात् । कोवा भवन्तमन्तरेण स इत्यादिकोल्लेखिनीम्प्रत्यभिज्ञामसावित्येतावन्मात्रोल्लेखिन्याभिज्ञया सह धारावाहिकवदत्यन्तसमानविषयामभिमन्येत । अत्रापि आकारातिरेकाभ्युपगमे तु दत्तमुत्तरम् । प्रकाशातिरेकिविषयित्वतदभावाभ्यां वैषम्यमिति चेत् ? किं ततः ? बाधकत्वाबाधकत्वे प्रत्यप्रयोजकत्वात् । वृत्तिज्ञानस्य हि बाधकत्व यथावस्थितब्रह्मस्वरूपप्रकाशात्मकत्वेन, नतु वृत्तित्वाद्याकारेण, तथासति विरोधिप्रकाशातिरिक्तवृत्तित्वाद्याकारबाध्यत्वेन मुद्गरादिनिवर्त्यसत्यसर्पघटादेरिव प्रपञ्चस्यापि सत्यत्वप्रसङ्गात् । एतेनाविद्याशबल तदेव विषय इति दत्तोत्तरम्, साक्षिप्रत्यक्षवदेव भ्रमोपकारकत्वप्रसङ्गात् । अन्यथा साक्षिप्रत्यक्षस्यापि भ्रमनिवर्तकत्वप्रसङ्गेन प्रपञ्च [प्रति] निर्भासस्याप्यनुदयप्रसङ्गात् । साक्षिप्रत्यक्षमपि हि अविद्याप्रकाशात्मकं स्व-

---

स्यानुपपत्तेरिति शङ्कते- **प्रकाशे** ति । अन्यप्रत्यक्षस्यापि विरोधिविषयप्रत्यक्षत्वेनैव निवर्तकत्वम्, नतु प्रत्यक्षत्वमात्रेण, अतिप्रसङ्गादिति परिहरति **कितत** इति । **वृत्तित्वादी**त्यादिशब्देन सविषयत्व गृह्यते । **तथासती** ति । प्रकाशपद वृत्तिपदञ्च भावप्रधानम् । आदिशब्देन सविषय गृह्यते । विरोधिविषयप्रकाशत्वातिरिक्तो वृत्तित्वाद्याकारो यस्य तद्बाध्यत्वेनेत्यर्थः । विरोधिसाक्षात्कारत्वेन ज्ञाननिवर्त्यत्वस्य मिथ्यात्वप्रयोजकतयाङ्गीकारादिति भावः । **एतेने** ति । भ्रान्तित्वादध्याससहाधिष्ठानस्वरूपप्रकाशातिरिक्तप्रकाशाभावात्स्वस्य स्वविषयार्थबाधकत्वे व्याघाताच्चेत्यर्थः । "एतेन" त्येतदेव विवृणोति- **साक्षी** ति । ननु कथमुपकारकत्वप्रसङ्गः, नहि साक्षिप्रत्यक्षस्याविद्याविषयत्वादेव भ्रमोपकारकत्वम्, किन्तु अविद्यायास्साक्ष्यधीनसिद्धिकत्वात्, प्रपञ्चभ्रमस्य च तदुपादानत्वात्, निवर्तकत्वाभिमतवृत्तेश्चाविद्यास्वरूपसाधकत्वाभावादिति चेन्न,— भ्रमोपकारकपदेन भ्रमानिवर्तकत्वस्य विवक्षितत्वात् । **अन्यथे** ति । अवि

प्रकाशश्च । ब्रह्मव्यतिरिक्तमात्रगोचरत्वपक्षे स्वयं तद्भ्रमरूपत्वा-त्तद्बाधकरूपत्वसम्भावनापि नास्ति । नहि शुक्तिकलधौतधीरेव कलधौतधियमवधुनोति । तन्मिथ्यात्वविषयपक्षस्तु तदा शोभते, यद्यधिष्ठानयाथात्म्यग्रहणमन्तरेणापि तन्मिथ्यात्वं सुग्रहं स्यात् । याथात्म्यग्रहरूपता च दूषितैव । किंच, इदं निवर्तकज्ञानं स्वविषयं ब्रह्मव्यतिरिक्तमिथ्यात्वं किं मिथ्यात्वेन गृह्णाति उत सत्यत्वेन, उतानिर्द्धारितविशेषात्मनेति । आद्ये व्याघात, मिथ्यात्वस्य च मिथ्यात्वग्रहणे प्रपञ्चस्य सत्यत्वेन प्रकाशप्रसङ्गात्, स्वप्नावगतपितृमरणमिथ्यात्वेन पितृसत्यतावत्, सम्यग्रजतमिथ्यात्वमिथ्यात्वेन रजतसत्यतावच्च । ब्रह्मव्यतिरिक्तत्वोपाधिक्रोडीकारवशात् प्रपञ्चस्य तन्मिथ्यात्वस्य च मिथ्यात्वमेकहेलया लभ्यते, यथा भवता प्रपञ्चस्य तत्स-

---

द्याविषयवृत्तेरविद्यानिवर्तकत्वे । तद्भ्रमरूपत्वा दिति । भ्रममात्ररूपत्वात्,-अधिष्ठानाविषयत्वादित्यर्थः । अधिष्ठानविषयकज्ञानस्यैव निवर्तकत्वादधिष्ठानाविषयकस्यास्य निवर्तकत्वसम्भावनापि नास्तीति भाव । नही ति । शुक्तिरजतज्ञानस्याधिष्ठानविषयस्याप्यारोप्यविषयत्वेनानिवर्तकत्वदर्शनादारोप्यमात्रविषयस्यानिवर्तकत्व कैमुत्यसिद्धमिति भाव । तन्मिथ्यात्वे ति । नन्वधिष्ठानयाथात्म्यग्रहणाभावे प्यारोपितमिथ्यात्व सुग्रहमेव, तद्रजत मिथ्येत्याप्तोपदेशादिव “ नेह नानास्ती ” ति वाक्यात्प्रपञ्चमिथ्यात्वग्रहसम्भवादिति चेन्न,—मिथ्यात्वसाक्षात्कारस्याधिष्ठानयाथात्म्यज्ञान विना असिद्धे । शाब्दज्ञानस्य च परोक्षतया ऽविद्यानिवर्तकत्वासिद्धेः । याथात्म्ये ति । याथात्म्यस्य स्वरूपत्वे ऽध्यासानुपपत्तेस्तदतिरिक्तत्वे वाच्ये तस्य सत्यत्वमिथ्यात्वयोर्दूषणमेवे त्यर्थः । व्याघात इति । मिथ्यात्व हि प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्, ततश्च मिथ्यात्वस्य प्रपञ्चनिष्ठात्यन्ताभावप्रतियोगित्वेन प्रतीतौ प्रपञ्चस्य सत्यत्वेनैव प्रतीतिप्रसङ्गो न मिथ्यात्वेनेति व्याघात इत्यर्थः । स्वप्ने ति । अन्यथाख्यात्यनुसारेणाय दृष्टान्तः । सर्वसाधारण दृष्टान्तमाह— सम्य गिति ।

त्यत्वस्य च सत्यत्वमिति चेन्न,– विरोधाविरोधाभ्यां वैषम्यात् । नहि रजतमिथ्यात्वमिथ्यात्वेऽपि रजतमपि मिथ्याभूत दृष्टम् । नच शुक्तिरजतमिथ्यात्वे तन्मिथ्यात्व मिथ्याभून दृष्टम् ।

तदथ सग्रह –मिथ्यात्वस्य च मिथ्यात्वे मिथ्यात्व बाधितं भवेत् ।
सत्यत्वस्य तु सत्यत्वे सत्यत्व स्थापित भवेत् ॥

ननु, वन्ध्यासुततन्मरणयोरिव द्वयोरपि मिथ्यात्वमुपपद्यत इति चेन्न,- निराश्रयतया तत्र धर्मिमिथ्यात्वोपपत्ते । नहि तत्रापि वन्ध्या सुतमिथ्यात्वं वा तन्मरणमिथ्यात्व वा मिथ्याभून दृष्टम् । द्वितीये तु- ब्रह्मव्यतिरिक्तस्य प्रपञ्चमिथ्यात्वस्य सत्यत्वेन प्रकाशनात् स द्वितीयत्वभ्रान्तित्वादिदोषो दुस्तरः ।

---

विरोधमुपपादयति– नही ति । शुक्तिरजतमिथ्यात्वस्य मिथ्यात्वेपि शुक्तिरजत मिथ्यैव दृष्टमिति कथ विरोध इत्याशङ्कय, शुक्तिरजनमिथ्यात्वस्य मिथ्या त्वे न मानमस्ति– प्रत्युत सत्यत्वेनैव प्रतीतेस्सत्यत्वमेवेत्यभिप्रायेणाह– नच शुक्ती ति । ननु देवदत्तमरणमिथ्यात्वे तदा तत्प्रागभावासिद्धौ तस्य सत्यत्वं दृश्यते, तथा वन्ध्यासुतमरणमिथ्यात्वे तत्प्रागभावाभावेपि तन्मिथ्यात्वं दृश्यते, तद्वदिहापि सम्यग्रजतमिथ्यात्वस्य मिथ्यात्वेन सम्यग्रजतसत्यत्वेपि शुक्तिरजत मिथ्यात्वस्य मिथ्यात्वेपि शुक्तिरजतस्य मिथ्यात्वमुपपद्यत इति शङ्कते- ननु वन्ध्ये ति । किं वन्ध्यासुतप्रतीतिरसद्विषया, उत मिथ्याविषया? इति विकल्प मभिप्रेत्याद्ये दोषमाह–ने ति। निराश्रयत्वम्–असदाश्रयत्वम्, मिथ्यात्वम्-असत्त्वम्। द्वितीये दोषमाह–नही ति ।नहि वन्ध्यासुतो मिथ्या, तस्याप्रसिद्धत्वेनारोपासम्भवात्, किन्तु सुतस्य वन्ध्याजन्यत्व सुतत्वे वन्ध्याप्रतियोगिकत्व वा मिथ्येति वक्तव्यम्, तथा मरणे तादृशारोपविषयप्रतियोगिकत्व मिथ्येति वक्तव्यम् , तच्च मिथ्यात्व सत्यमेवेत्यर्थः । मिथ्यात्वस्य सत्यत्वे दोषमाह– सद्वितीयत्वे ति । मिथ्यात्वस्य मिथ्यात्वे दोषमाह- भ्रान्तित्वे ति । आदिशब्देन प्रपञ्चस्य निवृत्तावपि मिथ्या त्वस्यानिवृत्ते सर्वभ्रमनिवृत्त्यसिद्धिप्रसङ्गो विवक्षितः । मिथ्यात्व सत्यत्वेनैव

ब्रह्माव्यतिरेके तु दत्तमुत्तरम् । तृतीयेऽप्यसम्भवः, ब्रह्म व्यतिरिक्तत्वग्रहणे प्रयोजकज्ञानवतो मिथ्यात्वेनैव ग्रहण प्रसङ्गात्, प्रयोजकज्ञानाभावे प्रपञ्चमिथ्यात्वस्याप्यग्रहण प्रसङ्गात् । ब्रह्मव्यतिरेकेणाग्रहणे गृह्यमाणस्य मिथ्यात्वस्य ब्रह्मणश्चागृह्यमाणव्यतिरेकयोश्शुक्तिरजतयोरिवैक्येन ग्रहणप्रसङ्गात् । ततश्च सत्यत्वेन प्रकाशाप्रसक्तेर्न साधारणाकारग्रहणसम्भव । अन्यस्य कस्य चिद्विषयत्वमपि परमार्थापरमार्थविकल्पेन दत्तैरेव दूषणैर्दूषितम्, परमार्थत्वे ब्रह्मव्यतिरेके द्वैतप्रसङ्गात्, तदव्यतिरेकेऽन्यत्वस्यैवासिद्धि प्रसङ्गात् । अपरमार्थत्वे अविद्यातत्कार्यकोट्य न्तर्भावेन बाध्याकार तया प्रागुक्तदोषापातात । बहिर्भावे तद्बाधकगवेषणप्रसङ्गात् । किंच ब्रह्मव्यतिरिक्तं तत् बाधक ज्ञानं सत्यमसत्यं वा? असत्यत्वे त्विदमपि बाध्याकारकोटौ घटमान कथमिव तद्बाधक स्यात् ।

---

गृह्णाति, तच्च मिथ्यात्व सत्यमेव, अतो न भ्रान्तित्वम्, नच सद्वितीयत्वम्, तस्य ब्रह्मस्वरूपत्वात्, इत्याशङ्क्य परिहरति ब्रह्माव्यतिरेक इति । मिथ्यात्वं ब्रह्म व्यतिरिक्तत्वेन गृह्यते नवेति विकल्पमभिप्रेत्याद्ये दोषमाह ब्रह्मव्यतिरिक्तत्वे ति । तत्रापि ब्रह्मव्यतिरिक्तत्वस्य मिथ्यात्वप्रयोजकत्वग्रहणमस्ति नवेति विकल्पमभि प्रेत्याद्ये दोषमाह- प्रयोजकेति । ब्रह्मव्यतिरिक्तत्वावच्छेदेन मिथ्यात्वज्ञाने हि मि- थ्यात्व ब्रह्मव्यतिरिक्तमिति ज्ञानवतो मिथ्यात्व मिथ्येति ज्ञानमवर्जनीयमेव । द्वितीये दोषमाह- प्रयोजकेति । ब्रह्मव्यतिरिक्त मिथ्येति ब्रह्मव्यतिरिक्तत्वावच्छेदेन मिथ्यात्वस्याग्रहणे प्रातिस्विकरूपेणापि गृहीतुमशक्यत्वात् कृत्स्नप्रपञ्चमिथ्यात्व ग्रहण न स्यादिति भावः । द्वितीये दोषमाह ब्रह्मव्यतिरेकेणे ति । साधारणेति । सत्यत्वेन ग्रहणादनिर्धारितविशेषात्मनेत्येतन्नोपपद्यत इति भावः । असत्यत्व इति । ज्ञानस्य बाध्यस्य बाधकत्व नोपपद्यते, तथा सति मिथ्यारजतस्यैव तद्बाधकत्व प्रसङ्गादित्यर्थः । बाध्यत्वमेवाकार, स एव कोटिः, तत्र सम्बद्धम् । ननु ब्रह्म ज्ञानत्वेनैव बाधकत्वम्, ब्रह्मभिन्नत्वेन बाध्यत्वम्, तदुभय ब्रह्मज्ञानेऽस्तीति तद्बाध्य बाधक च, रजते तद्बाधकताप्रयोजक न किंचिदस्तीति न शुक्तिरजत बा-

आकारभेदादविरोध इति चेन्न,- बाधकाकारभेदस्यापि बाध्यत्वा भ्युपगमात्। अन्यथा तस्य सत्यत्वप्रसङ्गात्। तत्राप्याकारभेदा भ्युपगमेऽनवस्थानात्। प्रमाणस्थापके [ने] प्रमाणविशेषस्थापकाकार विशेपस्यापि स्थाप्यत्ववदविरोध इति चेन्न,— स्थापकाकारविशेष स्थितेस्स्थाप्यसामान्यस्थित्युपयुक्तत्वात्। बाधकाकारविशेषबाध्य-त्वस्य विश्वबाधासिद्धिपर्यवसितत्वात्। किंचैतन्निवर्तकं ज्ञानमद्वैत श्रवणादिमात्रसमुद्भवमिदानीन्तनमेव ज्ञानम्, एष्यद्वा किमपि? पूर्वत्र भवन्मतश्रोत्रिणा तत्क्षणादेव प्रपञ्चविलयप्रसङ्ग। यद्वात्मैक्या द्विश्लेषामेव। बाधितानुवृत्तिस्तु दूषितैव। उत्तरत्रापि तत्किं पूर्वाविशिष्ट विषयमपि निवर्तकम्, उत विशिष्टविषयम्? अविशिष्टविषयत्वे तु

---

धकमित्यभिप्रायेण शङ्कते- आकारे ति। बाधकतावच्छेदकत्वेनाभिमतस्याप्याकार-स्य ब्रह्मभिन्नत्वेन बाध्यत्वाच्छुक्तिरजतत्ववन्न बाधकतावच्छेदकत्वमपीति परिहरति- ने ति। ननु बाधकतावच्छेदकताप्रयोजकं तत्त्वज्ञानत्वमिति तद्बाधकतावच्छेदकमेव, शुक्तिरजतत्वन्तु न बाधकतावच्छेदकम्, तत्प्रयोजकाभावादित्याशङ्कय, तत्त्वज्ञानत्वमपि बाध्यत्वादेव न बाधकतावच्छेदकताप्रयोजकं स्यात्, शुक्तिरजतत्ववत्, अवच्छेदकताप्रयोजकताप्रयोजकत्वयोरप्याकारभेदाधीनत्वा-भ्युपगमे तस्याप्याकारभेदस्य मिथ्यात्वादेव सम्प्रतिपन्नवदप्रयोजकत्वा पादने तत्रापि प्रयोजकान्तरान्वेषणपरम्परायामनवस्थेत्याह- तत्रापी ति। बाधकाकारस्य बाध्यत्वेपि बाधकतावच्छेदकत्वमुपपद्यते, साधकाकारस्य साध्यत्वेपि साधकतावच्छेदकत्ववत्, यथार्थप्रवृत्त्यनुपपत्त्यादिना प्रमाणमात्रसाधको यः प्रमाण विशेषः तस्य योयमसाधारणाकारः तस्य मानाधीना मेयसिद्धिरिति न्यायेन माना धीनसिद्धिकत्वेपि मानसाधनतावच्छेदकत्ववत्, इति शङ्कते- प्रमाणस्थापक इति। सामान्यतः प्रमाणमात्रसाधके प्रमाणविशेषे योयमसाधारणाकारः स सामान्येन प्रमाणासिद्ध्यनुगुण एव, तदाकारविशेषाभावे तदवच्छिन्नप्रमाणाभावेन तत्साध्य-स्याप्यसिद्धेः, बाधकतावच्छेदकविशेषाकारस्य बाध्यत्वे तु तदवच्छिन्नस्यासिद्ध्या तत्साध्यविश्वबाधो न सिध्येदिति परिहरति- ने ति। विश्लेषामेवे ति। विलयप्रसङ्ग

पूर्वस्यापि निवर्तकत्वप्रसगः। तस्य तदभावे उत्तरस्यापि तन्न स्यात्॥ विशिष्टविषयत्वन्तु न सम्भवत्येव। ब्रह्मणि प्रकाशिष्यमाणपरमार्थाकारान्तरानभ्युपगमात्। अपरमार्थाकारान्तरप्रकाशस्य प्रागुक्तन्यायेन दूषितत्वात्। प्रपञ्चमिथ्यात्वव्यवसायस्य च भवन्मतश्रद्धाजडानामिदानीमपि सिद्धत्वात्। परोक्षरूपमिदानीन्तनज्ञानमपरोक्षभ्रमबाधक न भवति, अपरोक्षन्तु भविष्यज्ज्ञानं बाधनायालमिति चेन्न,- परोक्षापरोक्षशब्दाभ्यामविशदविशदत्वविवक्षायामनतिरिक्तविषयतयैव तथाविधभेदासिद्धेः। करणभेदाधीनभेदस्य चाकिंचित्करत्वात्। नचास्य करणभेदः, भविष्यतोऽपि विशदज्ञानस्य भवद्भिर्वाक्यजन्यत्वाभ्युपगमात्। एतेन वेदान्तनैरर्थक्यमपि फलितम्, यतः कुतश्चिदनुमानादेरप्यद्वैतज्ञानसम्पादनोपपत्तेस्तदतिरिक्तस्य कस्यचिदंशस्य वेदान्तेपि भवद्भिः प्रतिपादनानभ्युपगमात्। सत्यस्य प्रामाण्य

---

इति शेषः। प्रागुक्तन्यायेने ति। भ्रान्तित्वादिनेत्यर्थः। अद्वितीयत्वस्य ब्रह्मस्वरूपाभिन्नतया तज्ज्ञानात्प्रपञ्चमिथ्यात्वज्ञान भिन्नविषयमेव, अतस्तद्विषयमेव भविष्यज्ज्ञान निवर्तकत्वमस्त्वित्याशङ्क्य निराकरोति- प्रपञ्चे ति। अनतिरिक्तविषयतयैवे ति। न्यूनविषयत्वाधिकविषयत्वाभ्यामेव लोके विशदत्वाविशदत्वव्यवहारादित्यर्थः। ननु परोक्षापरोक्षयोः कारणाधीनवैलक्षण्यमिन्द्रियकरणकत्वतदितरकरणकत्वरूपमस्त्येव, तदेव परोक्षापरोक्षशब्दाभ्या विवक्ष्यते, तत्राह— करणभेदे ति। शाब्दज्ञानानुमित्योः करणभेदाधीनभेदे सत्यपि निवर्तकत्वादर्शनादिति भावः। ननु अन्वयव्यतिरेकाभ्या इन्द्रियकरणस्य निवर्तकत्व नेतरस्येत्यत्राह- नचास्ये ति। एव ब्रह्मस्वरूपभूताज्ज्ञानाद्भिन्न ज्ञान निवर्तकमिति कल्पो विकल्प्य दूषित.। इदानी तत्रैव दूषणान्तरमाह एतेने ति। एष्यदिदानीन्तनज्ञानयोर्विषयभेदाभावे निवर्तकत्वानिवर्तकत्ववैधर्म्याभावापादनेनानिवर्तकज्ञानभूतानुमितिसमानविषयस्य वेदान्तवाक्यजन्यज्ञानस्याप्यनिवर्तकतया वेदान्ताना नैरर्थक्य फलितमित्यर्थः। ननु शाब्दानुमित्योः प्रामाण्याप्रामाण्याभ्या वैधर्म्यान्निवर्तकत्वानिवर्तकत्वे स्त इत्यत्राह सत्यस्ये ति। ननु यद्यप्यद्वैतविज्ञानमनुमानादेरपि

स्योभयत्रानभ्युपगमात, व्यावहारिकस्य तु तस्योभयत्र सम्मतत्वात्, उपासनादिपरवेदान्तभागस्य तत्तत्फलविशेषपर्यन्ततया बन्धकत्वेन बन्धनिवृत्तिं प्रति प्रतिकूलत्वाभिधानात्। अतो यदा प्रपञ्चमिथ्यात्वानुमानादिक न विश्वबाधकं तदा वेदान्तवाक्यान्यपि न तद्बाधकानि स्युः, तदविशिष्टज्ञानजनकत्वात्; यदि तानि बाधकानि स्युः, तदा तदविशिष्टादनुमानादेरपि तद्बाधः स्यादिति निरर्थकस्तत्त्वावेदको वेदान्तभागः। एवञ्च वेदान्तमन्तरेणापि यथावस्थितब्रह्मस्वरूपज्ञानसम्पादनोपपत्तेः शारीरकापशूद्राधिकरणानारम्भप्रसङ्गश्च। ननु भेदवासनाविक्षिप्तचेतसां बुभुत्सोद्बोधने शास्त्रोपयोग इति चेन्न,-सांख्यसौगतसमयेपि तत्त्वविचारमारभमाणै पुरुषैस्तापत्रया

---

सुसम्पाद, तथापि ब्रह्मोपासनतत्फलादिज्ञानस्यानुमानादिभिर्दुस्सम्पादत्वात् तत्प्रतिपादनद्वारा उपासनानुष्ठानार्थतया वेदान्तोऽर्थवानेवेत्याशङ्क्य अद्वैतोपासनपरवेदान्तवाक्यानामद्वैतज्ञानस्योक्तन्यायेन निवर्तकत्वासिद्ध्या नैष्फल्यस्य सिद्धत्वात् सगुणोपासनपरवेदान्तवाक्याना तत्फलसिद्ध्या सार्थकत्वेपि प्रपञ्चनिवृत्त्यर्थतयार्थवत्त्वासम्भवाद्वेदान्तवाक्य व्यर्थमेवेत्यभिप्रायेणाह– उपासने ति। प्रत्यक्षादिभिर्भेदस्यैव निश्चयेन कोट्यन्तरानुपस्थितेश्च सन्देहासम्भवात्तन्मूलतत्त्वबुभुत्सा नोपपद्यते, तद्विरुद्धाभेदप्रतिपादकशास्त्रदर्शने सति द्वैताद्वैतसन्देहाद्बुभुत्सोत्पद्यत इति बुभुत्सोत्पादकत्वान्न शास्त्रवैयर्थ्यमिति शङ्कते– नन्वि ति। साङ्ख्या हि ज्ञातृत्वकर्तृत्वादेर्बुद्धिधर्मत्वमङ्गीकुर्वन्त आत्मनो निर्गुणत्वमाहु, सौगताः प्रपञ्चस्यासत्यत्वमाहु, अतस्तन्मतश्रवणा प्रत्यक्षादावप्रामाण्यशङ्कया निर्गुणत्वसगुणत्वप्रपञ्चसत्यत्वासत्यत्वसन्देहादबुभुत्सोत्पत्तिसम्भवान्न बुभुत्सोत्पादकत्वेन वेदान्ताना सार्थक्यमित्याह– ने ति। **भेदवासनाविक्षिप्तचेतसामपि तत्त्वविचारमारभमाणैः पुरुषैस्तत्त्वबुभुत्सोत्पत्ते** रिति योजना। यद्वा– साख्यसौगत समयेपि आत्मनिर्गुणत्वप्रपञ्चासत्यत्वबुभुत्सया हि विचारमारभन्ते, अतस्तत्र येनैव हेतुना बुभुत्सोत्पादस्तेनैव हेतुना प्रकृतेऽपि बुभुत्सोत्पत्तिसम्भवात् किं

भिहतानां भेदवासनाविक्षिप्तचेतसामपि तत्वबुभुत्सोत्पत्तेः । नच प्रति पत्तृभेदेन शास्त्रमनुमानं च सप्रयोजनमिति वाच्यम्, सर्वात्मना साधक बाधकप्रमाणसम्भावनावैदेशिके विषये शास्त्रार्थतत्वस्य मीमांसि तत्वात् । अतस्तत्रभवता महत्तरेषु मतगह्वरेषु महावाक्य श्रवणमपि बालव्यामोहनमात्रमित्यापद्यते । अतो न निवर्तकज्ञानं ब्रह्मणो भिन्नम् । नापि द्वितीयः, ब्रह्मस्वरूपस्य विश्वनिवर्त कत्वे तस्यानादित्वेन प्रपञ्चाध्यासाभावप्रसङ्गेन प्रपञ्चप्रतिभासस्या प्यनुदयप्रसङ्गात् । एकस्यैव दण्डादेर्घटादिकारणत्वतन्नाश कत्ववदुपपद्यत इति चेत्? यौगपद्ये विरोधात्,

---

वेदान्तेनेत्याह– नेति । बुभुत्सोत्पत्ते रित्यनन्तरमङ्गीकारादिति शेषः । तत्त्वविचारमारभमाणै. तत्त्वबुभुत्सोत्पत्तेरङ्गीकारादित्यन्वयः । वादिवाक्याद्वा स्वयमेव त्वदुक्ततर्कानुसन्धानाद्वा बुभुत्सोपपत्तेर्वेदान्तनैरर्थक्यमिति तात्पर्यम् । एवं वेदान्ताना नैरर्थक्यात् त्वादृशा तच्छ्रवण तत्प्रतिवचनञ्च बालव्यामोहनमित्युपालभते– अत इति । तत्रभवता मित्युपालम्भोक्तिः । महावाक्यम्– जीवब्रह्मणोरभेदप्रतिपादक तत्त्वमस्यादिवाक्यम् । नापि द्वितीय इत्यादि । ननु ब्रह्मस्वरूपस्येति वाक्ये प्रपञ्चाध्यासाभावे निवर्तकस्यानादित्व हेतुतयोक्तम्, एकस्यैवेत्यत्र कारण स्यापि निवर्तकत्वसम्भव उपपाद्यः, तत्कथं युज्यते? पूर्वं कारणत्वस्य निवर्तकत्व विरोधित्वानुपन्यासात्, नच एकस्यैव यथा कारणत्वनाशकत्वे एवमेकस्यैव ब्रह्मस्वरूपस्याध्यासस्वरूपनिवर्तकत्वतत्सहिष्णुत्वे अप्युपपद्येते इत्येवम्परोऽय ग्रन्थ:, नतु ब्रह्मण एवाध्यासकारणत्वतन्निवर्तकत्वसम्भवोपपादनपर इति वाच्यम्,– तत्परिहारग्रन्थस्य यौगपद्ये विरोधा दित्यादेः ब्रह्मण एव जनकत्वनाशकत्वानुपपत्ति विषयत्वात्, नहि दण्ड इति वाक्ये दण्डवैषम्योक्तिपुरस्सरं ब्रह्मण अध्यास कारणत्वतन्निवर्तकत्वासम्भवोपपादनप्रतीतेश्च, अत्रापी त्यादिशङ्काग्रन्थे दण्डवदेव कारणत्वनिवर्तकत्वोपपादनविरोधाच्च, अतः कथमेते ग्रन्था उपपद्येरन्निति चेत्?

क्रमे तु सहकार्यवश्यम्भावात् । नहि दण्डो घटकारणसामग्री मध्यमध्यासीन एव घटं नाशयति, अपितु सिद्धे घटे अभिघातरूपसंयोगादिकमपेक्ष्य । अत्रापि तर्हि ब्रह्म स्वरूपेणाध्यासानुगुणम्, अध्यासमेव तु निवर्त्यं सहकारित्वेनापेक्ष्य तन्निवर्तकम्, निवर्तनशक्तस्यापि निवर्त्यासिद्धौ निवृत्तिजनकत्वायोगात्; इति चेन्न,– तथाप्यनादेरध्यासस्य चिरतरा-

---

उच्यते, ब्रह्मस्वरूपस्ये त्यादिवाक्ये निवर्तकस्य निवर्त्यस्वरूपासहिष्णुत्वात्तस्य चानादित्वात् कदापि प्रपञ्चाध्यासो न स्यादित्येवाभिप्रेतम् । एकस्यै वे त्यादिशङ्कावाक्ये दण्डादेरिव ब्रह्मण एवाध्यासकारणत्वनिवर्तकत्वे अभ्युपपद्येते, किं वक्तव्यं निवर्तकस्य तत्स्वरूपसहिष्णुत्वमुपपद्यत इत्यत्रेत्यभिप्रेतम् । अस्मिन् वाक्ये निवर्तकस्यापि कैमुत्यन्यायेनाध्यासस्वरूपसहिष्णुत्वोपपादनार्थं ब्रह्मण एवाध्यासकारणत्वतन्निवर्तकत्वयोरुक्तत्वात्तदनुसारेण सर्वोऽप्युत्तरग्रन्थ उपपद्यत इति । यद्वा– एकस्यैवे ति वाक्ये दण्डो यथा घटमुत्पाद्य नाशयति, एवं ब्रह्माप्यध्यासमुत्पाद्य निवर्तयतु, निवर्तनशक्तत्वेन निवृत्तिवदुत्पादनशक्तत्वेन तदुत्पत्तेरपि सम्भवात्, अतः कथं प्रपञ्चाध्यासाभावप्रसङ्ग इत्यभिप्रेतम् । क्वचित् कोशे प्रपञ्चाध्यासाभावप्रसङ्गा दित्यनन्तरं प्रपञ्चप्रतिभासस्याप्यनुदयप्रसङ्गादिति वाक्यं दृश्यते, तत्र पूर्ववाक्येनादित्वमध्यासाभावे हेतुतया विवक्षितं नतूत्तरत्र, तत्र प्रपञ्चप्रतिभासस्याप्यनुदयप्रसङ्गादित्यत्र तत इति विशेषः । ब्रह्मस्वरूपस्य विश्वनिवर्तकत्वे ततः प्रपञ्चप्रतिभासस्याप्यनुदयप्रसङ्गादित्यन्वयः । निवर्तकस्य कारणत्वासम्भवो वा विवक्षितः। उत्तरग्रन्थाश्च द्वितीयहेत्वनुसारिणः। क्रम इति । कार्यविलम्बस्य कारणविलम्बप्रयोज्यत्वादिति भावः। तथापी ति । कार्याध्यासे उक्तपरिहारसम्भवेपीत्यर्थः । अनादे रित्यादि । अविद्याध्यासस्येत्यर्थः । पूर्वं ह्युरविद्यासत्त्वे तदानीमेव तन्निवृत्त्यावश्यकतया नैतावत्कालमनुवृत्तिरुपपद्यते, तथा तत्पूर्वकालेपि निवृत्त्यावश्यकतया तदानीमपि नाविद्याध्याससम्भवः, एवं तत्पूर्वकालेपि त्वया निवृत्तिर्वाच्येति अविद्याध्यासाधिकरणत्वयोग्यक्षणस्य कस्याप्यलाभात् कदाप्यविद्याध्यासो न स्यात्, तदभावे तन्मूलः कार्याध्यासोपि न

नुवृत्तिभङ्गप्रसङ्गात् । एवं पूर्वपूर्वक्षणानुवृत्तिभङ्गे कदाचिदपि नाध्याससिद्धिः । किञ्च परिशुद्ध ब्रह्मस्वरूपमध्यासानुगुणम् , अशुद्धन्तु तन्निवर्तकमिति महदिदमुपपादनम् । अस्तु तर्हि सामग्र्यभावादितः पूर्वमनुत्पन्न सामग्रीसम्पत्तिदशायामुत्पत्स्यमानान्तःकरणवृत्तिविशेषमेव सहकारित्वेनापेक्ष्य ब्रह्मैव निवर्तकम्, तन्न, प्राप्ताप्राप्तविवेकेनान्तःकरणवृत्तेरेव निवर्तकत्वप्रसङ्गात । तथा च सति ब्रह्मस्वरूपान्तर्गतत्वपक्षव्याघातः । अत एव न तृतीयः, अपसिद्धान्ताच्च । किञ्च– तस्य सत्यत्वे भेदांशेन ब्रह्मणस्सद्वितीयत्वप्रसङ्गः । मिथ्यात्वे स्वभेदांशेन ब्रह्मणोपि मिथ्यात्वप्रसङ्गः। नित्यत्वानित्यत्वविकल्पेनापि दूषणमूह्यम् । चतुर्थस्तूभयप्रतिक्षेपरूपोनिर्वचनीयोक्तदूषणनयेनोभयासिद्ध्यनतिरेकात् दूषणेनैव दूषितः । पञ्चमस्तु परिशिष्यते । तथाभूत किं तज्ज्ञानं यथाकथचिदपि प्रतीतिपदवीं नावतरति, अथावतरति ? पूर्वत्र किं साधनदूषणप्रयासेन? उत्तरत्र कथचिदपि उक्तकोटिबहिर्भावासिद्धेः न पृथग्दूषणीयमवशिष्टमिति । किञ्च– निवर्तकज्ञानं निवर्तिष्यते नवा? पूर्वत्र तन्निवृत्तेरेवागन्तुकत्वाद्ब्रह्मस्वरूपातिरिक्ताविद्यास्थितिप्रसङ्गः । उत्तरत्र ब्रह्मस्वरूपातिरिक्तनिवर्तकज्ञानसद्भावेनैवाविद्यास्थितिरनिवार्या । अतो यदविद्याया निवर्तकत्वेन सम्मतं

---

स्यादित्यर्थः । एवमविद्याध्यासानुपपत्त्या कार्याध्यासानुपपत्तिरुक्ता । इदानी कार्याध्यासासम्भवे हेत्वन्तरमाह—किञ्चे ति । शुद्धम्– आरोप्याविषयकम् । अशुद्धम्– आरोप्यविषयकम् । अध्यासमेव तु निवर्त्यं सहकारित्वेनापेक्षेत्याध्यासस्यैव सहकारित्वोक्तेः तस्मिन् स्वस्यैव तद्भ्रमरूपत्वादशुद्धस्यैव निवर्तकत्वमित्युक्त भवति, एतत्प्रतिकोटितया ब्रह्म स्वरूपेणाध्यासानुगुणमित्यत्रारोप्याविषयकत्वलक्षणशुद्धिरेवाभिप्रेता स्यात् , ततश्चारोप्याविषयमध्यासानुगुणमारोप्यविषय तन्निवर्तकमिति व्याहतमित्यर्थः । प्राप्ताप्राप्तविवेकेने ति । एतेन

तदेव स्वात्मना स्वनिवृत्त्यावा तामेव स्थापयतीति विपरीता पत्तिरिति । निवर्तकज्ञानप्रध्वंसोपि निवर्तिष्यत इति चेत्? तर्हि तत्तन्निवर्तकनिवृत्त्यनुवृत्तिप्रसङ्गेन ब्रह्मणो यावदात्मभाविन्यविद्या नुवृत्तिस्स्यादिति वैपरीत्यस्थैर्यापत्तिः। इत्यल हिताहितविपर्यस्तचेतसां शोच्याना निग्रहणेति ।

इति शतदूषण्यां निवर्तकानुपपत्तिः
त्रिचत्वारिंशो वादः ॥४३॥

———(*)———

---

वृत्तिप्रतिबिम्बितचैतन्य निवर्तकमित्ययमपि पक्षो निरस्तो वेदितव्यः । प्राप्ता प्राप्तविवेकेन वृत्तेरेव निवर्तकत्वप्रसङ्गात् । किञ्च यथाह्ययमित्यादिभिरापात प्रतीत्यान्त.करणे प्रतिबिम्बकल्पनायामपि न निवृत्तौ प्रतिबिम्बकल्पनम्, तत्र तादृशस्यापि प्रमाणस्यादर्शनात् । नच तत्परिणामित्वादेव तत्र प्रतिबिम्ब कल्पना, जलपरिणामभूतायां करकाया प्रतिबिम्बादर्शनात् ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
निवर्तकानुपपत्तिभङ्गो नाम
**त्रिचत्वारिंशस्स्कन्धः ॥४३॥**

श्रीरस्तु ।

अथ चतुश्चत्वारिंशो वादः ।

———(*)———

सत्वानीव विरुद्धजातिजनुषा सिद्धानि सिद्धाश्रमे
वैरं यत्र मिथस्त्यजन्ति विषयस्सर्वैर्निषेधैस्सह ।
तं रङ्गेशयमंगसंगिकमलालक्ष्येश्वरप्रक्रियं
शान्तावद्यमनन्तमङ्गलगुणं देवं प्रपद्येमहि ॥

येयं ब्रह्मण श्रवणमनननिदिध्यासनादिक्रमपरिणतविशदा द्वैतवाक्यार्थविज्ञानहेतुका निश्शेषाविद्यानिवृत्तिरुच्यते, सा किं मध्यासरूपा, नवा? पूर्वत्र कथं निश्शेषाविद्यानिवृत्तिः, अध्यास रूपायां तस्यां सत्यां तन्मूलाविद्याया अपि विद्यमानत्वात्, उपादान मन्तरेणोपादेयस्थित्ययोगात् । आत्मोपादाना साऽस्त्विति चेन्न,-आत्मनः परिणामित्वप्रसंगात् । सत्योपादानायाश्च सत्यत्वेन सद्वितीयत्वप्रसंगात् । नच दोषमन्तरेणाध्यासो भवतामपीष्टः, तथा सत्यविद्याकल्पनस्यैव निर्मूलत्वप्रसंगात् । यदि सा ब्रह्मवदविद्यावच्च उपादानरहिता, तदा

---

अध्यासरूपे ति । अध्यासो— रूपं यस्यास्साध्यासरूपा, मिथ्येति यावत् । कथ मिति । अविद्यातत्कार्ययोस्सत्त्वादित्यर्थः, अपिना कार्यविद्यमानत्वस्य समुच्चयात् । सत्योपादानायाश्चे ति । उपादानोपादेययोस्तुल्यसत्ताकत्वस्य तेनैवाङ्गीकारादिति भाव. । नचे ति । दोषनिवृत्तावध्यासनिवृत्तेर्दर्शनाद्यावदध्यास दोषानुवृत्तिरास्थेयेति भावः । निर्मूलत्वप्रसङ्गा दिति । नच दोषत्वेन तद् कल्पनेऽप्युपादानत्वेन तत्कल्पनमस्त्विति वाच्यम्, अविद्यानिवृत्तिवदेव प्रपञ्च स्यात्मोपादानत्वसम्भवादिति भावः । यदी ति । निरुपादानत्वे अनादित्वादविद्यया सह स्थितिर्वाच्या, साचानुपपन्नेत्यर्थः । नच निरुपादानत्वेपि नानादित्वम्, ब्रह्मज्ञानरूपवृत्तिसापेक्षत्वादिति वाच्यम्,— कार्यत्वे अविद्योपादानत्व नियमात् । नन्वविद्यानिवृत्तिरविद्योपादानैव, न ब्रह्मोपादाना, नापि निरुपादाना, नच निश्शेषाविद्यानिवृत्त्यसम्भवः, अविद्यानिवृत्तेरपि निवृत्तेः, इति शङ्कते—

कथं तया सहाविद्या तिष्ठेत्। स्थिता वा किमिति पश्चान्नावतिष्ठते। निवृत्तिरपि ब्रह्मव्यतिरिक्तत्वैकप्रयोजकप्रयुक्तमिथ्यात्ववशान्निवर्तिष्यत इति निश्शेषाविद्यानिवृत्तिरिति चेन्न,- निवृत्तिनिवृत्तौ तन्मिथ्यात्वे च निवर्त्योन्मज्जनतत्सत्यत्वयोः प्रसंगात्। प्रागभावनिवृत्तिरूपस्य घटस्य निवृत्तावपि प्रागभावानुन्मज्जनवत्, जागरदशायां स्वाप्नान्धकारनिवृत्तिरूपस्य स्वाप्नप्रदीपस्य निवृत्तावपि स्वप्नान्धकारमिथ्यात्ववच्चानुन्मज्जनमिथ्यात्वयोस्सिद्धिरिति चेन्न;- घटतत्प्रागभावनिवृत्त्यात्मकस्य प्रध्वंसस्य स्वाप्नतेजस्तमोबाधकस्य जागरस्य च विद्यमानत्वेन तद्द्वयानुन्मज्जनमिथ्यात्वयोरुपपत्तेः। अत्र त्वविद्यातन्निवृत्त्योर्द्वयोरपि प्रत्यनीकमन्यन्न परिशिष्यते। अस्ति ब्रह्मस्वरूपमिति चेन्न;- तस्य तदुभयप्रत्यनीकत्वे तन्या नादित्वात्तयोः प्रागप्यारोपाभावप्रसङ्गात्। तथाच सति भेद

---

**निवृत्तिरपी** ति। निवृत्तिनिवृत्तेरपि कार्यत्वेनाविद्योपादानत्वावश्यम्भावात् अविद्यास्थितिरवर्जनीयैवेत्यभिप्रायेणाह—**नेति**। दूषणान्तरमाह— **निवृत्ती** ति। **तन्मिथ्यात्व** इति। निवृत्तेर्मिथ्यात्वे प्रतियोगिन एव प्रतिपन्नोपाधौ त्रैकालिकनिषेधरूपतया मोक्षकालेपि तत्सत्त्वेन प्रतियोगिरूपनिवर्त्यस्य सत्यत्व स्यादित्यर्थः। यद्वा घटे विद्यमान एव घटो नष्ट इति भ्रमे सति तत्र प्रातिभासिकनिवृत्तिप्रतियोगिनस्सत्यत्वदर्शनादविद्यानिवृत्तेर्मिथ्यात्वे निवर्त्यसत्यत्व स्यादित्यर्थः। निवृत्त्यपेक्षयोत्कृष्टसत्ताकत्वमापाद्यमिति न व्यावहारिकसत्यत्वसिद्धेरिष्टापादनम्। घटादिनिवृत्तिः पक्षसमेति बोध्यम्। **स्वाप्नान्धकारनिवृत्तिरूपस्ये** ति। इद भावान्तराभावमतेन प्रदीपपर तन्नियताभावपर वा। **प्रदीपस्य निवृत्तावपी** ति। निवृत्तिपद तत्प्रयोज्यमिथ्यात्वपरम्। **स्वाप्नतेजस्तमोबाधकस्ये** ति। बाधकपद विरोधिपरम्। जागरपद तत्कालीनाभावपरम्, भावान्तराभावमतेन जागरस्यैव तदभावत्वविवक्षया तत्परमेव वा। स्वाप्नतमःप्रतियोगिकायास्स्वाप्ननिवृत्तेर्मिथ्यात्वेपि न तमसस्सत्यत्वसिद्धिः, जागरकालीनाभावप्रतियोगित्वेन तेजसो मिथ्यात्व

प्रतिभासादेर्निर्मूलत्वे सर्वप्रमाणविरोधो मोक्षशास्त्रानारम्भश्च, पूर्वं तदविरोधित्वे पश्चादपि तद्वैरासम्भवात् । कैवल्येन रूपेण पश्चाद्विरोध इति चेन्न,- कैवल्यस्य स्वरूपमात्रत्वे दत्तोत्तरत्वात् । स्वरूपातिरिक्तत्वे सत्यत्वे सद्वितीयत्वप्रसङ्गात् , तन्मिथ्यात्वे तत एवाविद्यास्थित्यवश्यम्भावात् । एतेन प्रयोजक यदुक्तम् , तदपि दत्तोत्तरम् । अतएव न द्वितीयः, अनध्यासरूपाया निवृत्तेस्स्वरूपान्तर्भावादिविकल्पदुस्स्थत्वात् । अन्तर्भावे ब्रह्मणोऽनादित्वेनाविद्याया नित्यनिवृत्तिप्रसङ्गात् । यद्यपि घटादेः स्वरूपमेव तत्प्रागभावनिवृत्तिरितिवत् ज्ञानस्वरूप ब्रह्मैवाज्ञाननिवृत्तिरिति वक्तु शक्यम् , तथापि स्वप्रागभावनिवृत्तिरूपघटादेरिव स्वाज्ञाननिवृत्तिरूपब्रह्मणोपि तदनन्तरत्वावश्यम्भावे कादाचित्कत्वादयो दोषास्समुन्मिषेयुः । ननु पूर्वसिद्धभूतलस्वरूपमेव पश्चिमसिद्धघटादिनिवृत्तिरित्यभावापलापवादिभिरभ्युपगम्यत इति चेत् ?

---

सिद्ध्या तन्मिथ्यात्वसिद्धये प्रतियोगिनः प्रतिपन्नोपाधौ निषेधरूपत्वस्य, तत्रैककालिकत्वस्य वाऽनपेक्षणात् । तमसो मिथ्यात्वञ्च तेजोवज्जागरकालीनाभावप्रतियोगित्वादेवेत्यर्थः । अन्य दिति । प्रतियोगिन इति शेषः । तस्य तदुभयप्रत्यनीकत्वपि अद्वैतसाक्षात्कारात्प्राङ् न तद्विरोधित्वमिति शङ्कामनूद्य परिहरति- पूर्वं मिति । नित्यनिवृत्तिप्रसङ्गा दिति । अविद्यास्वरूपस्यैव कदाप्यसम्भवादिति तात्पर्यम् । ननु कथ ब्रह्मणोऽविद्यानिवृत्तित्वम् ? तथासति घटस्यापि पटनिवृत्तित्वप्रसङ्गात् , अतो ब्रह्मैवाविद्यानिवृत्तिरिति पक्षस्यानुत्थितिरेवेति किं तद्दूषणगवेषणेनेत्याशङ्क्य, कथञ्चित्तदुत्थान समर्थयन् दूषणान्तरमप्याह- यद्यपी त्यादिना । अज्ञानस्य ज्ञानप्रागभावरूपत्वाभावेपि ज्ञानप्रागभावप्रतिपादनयोग्याज्ञानशब्दबोध्यत्वमात्रेण भावरूपाज्ञानस्य ब्रह्मरूपज्ञानप्रागभावत्वाङ्गीकारेणवा तन्निवृत्तिरूपत्व ब्रह्मणो घटदृष्टान्तेन उपपाद्यत इति ध्येयम् । वस्तुतस्तु अन्यस्यासम्भवात् ब्रह्मैवाविद्यानिवृत्तिरिति वक्तव्यमिति विवक्षितम् ।

ननु कथं तदनन्तरत्वस्यावश्यकत्वम्? तन्निवृत्तेस्तत्साध्यत्वनियमात्, साध्यत्वस्य चानन्तर्यनियतत्वादिति चेत्? प्रागभावस्येव क्षेमसाधारणसाध्यत्वस्य प्रवृत्त्यङ्गस्य सम्भवात्; इति चेन्न;- यस्मिन् सत्युत्तरक्षणे यस्य सत्त्वं यदभावे यदभावस्तत्तत्साध्यमित्यादिना हि क्षेमसाधारणं साध्यत्वं निरुच्यते, तच्च प्रागभावादौ सम्भवत्येव, मङ्गले सति विघ्नप्रागभावः, तदभावे तदभाव इति सत्त्वात्, नच प्रकृते तथा सम्भवः, अविद्याभावे ब्रह्माभावासिद्धेः। ननु तत्साध्यत्वाभावेऽपि तन्निवृत्तित्वमस्तीति चेन्न,— तथाऽदर्शनात्। किञ्च तदानन्तर्याभावे तत्समानकालीनतया ब्रह्मणस्तद्विरोधित्वाभावेन तन्निवृत्तित्वमनुपपन्नमेव। आदिपदेनाविद्योपादानकत्वादिकं विवक्षितम्। अपिच- एवं ब्रह्मणोऽविद्यानिवृत्तिरूपत्वाभ्युपगमे ज्ञाननिवर्त्यत्वमविद्याया न स्यात्, ब्रह्मणस्सदातनत्वेन ज्ञानसाध्यत्वासम्भवात्, ज्ञानजन्यनिवृत्तिप्रतियोगित्वस्यैव ज्ञाननिवर्त्यत्वरूपत्वात्।

अत्राह नवीनः-- येन विना यत्तिष्ठत्येव यस्मिन् सति च न तिष्ठति, तत्तन्निवर्त्यम्, अविद्यानिवृत्तिर्ज्ञानेन साध्येत्युपचर्यते, इति। तदसत्, एवं पारिभाषिकनिवर्त्यत्वनिर्वचनेऽपि तत्त्वज्ञानवैयर्थ्यस्यानुद्धारात्। अविद्याया ज्ञाननिवर्त्यत्वसिद्ध्यर्थत्वान्न वैयर्थ्यमिति चेत्? न तावत् तदविद्यास्वरूपमेव, अनादित्वेनासाध्यत्वात्। नापि तदतिरिक्तम्, सत्यत्वे अद्वैतहानेः मिथ्यात्वे तस्यानिवर्त्यत्वे तदर्थं तदुपादानाविद्यास्थित्यवश्यम्भावात्, निवर्त्यत्वे च तस्यापि निवर्त्यत्वादनवस्थितनिवर्त्यत्वपरम्परासिद्धये तत्त्वज्ञानस्याविनाशितया तदुपादानाज्ञानस्यावस्थितिप्रसङ्गात्। किञ्चाविद्यायाः ब्रह्मरूपनिवृत्तिप्रतियोगित्वस्य सिद्धत्वात् ब्रह्मणो ज्ञानोत्तरकालीनत्वसिद्धये ज्ञानार्थप्रवृत्तिरित्यापन्नम्, तच्च न सम्भवति, ज्ञानोत्तरकालीनत्वस्यापुरुषार्थत्वात्। किञ्च तिष्ठत्येवेत्येवकारेणाविद्याभावो व्यावर्तनीयः,सच कथं व्यावर्तनीयः? ब्रह्मस्वरूपस्य तस्यानादित्वात्। ननु तद्व्यावृत्तिस्तदभाव एव, अतोऽविद्याभावस्य व्यावृत्तिरविद्यैवेति कथमविद्याभावस्य न व्यावर्त्यतेति चेन्न;- अविद्याया मानाभावेन ब्रह्माभावत्वासिद्धेः। तदभावप्रतियोगिनस्तत्प्रतियोगिकाभावत्वनियमादविद्यायास्स्वाभावरूपब्रह्मप्रतियोगिकाभावत्वं वाच्यम्; नचायं नियमोऽसिद्धः, घटत्वस्य घटान्योन्याभावाभावत्वेऽपि घटान्योन्याभावस्य घटत्वाभावत्वासिद्धेरिति वाच्यम्,— घटान्योन्याभावे घटत्वं नास्तीति व्यवहारस्य घटान्योन्याभावविषयतया घटान्योन्याभावस्य घटत्वाभावरूपत्वादिति चेन्न,—

अप्रयोजकत्वेन व्याप्त्यसिद्धेः । ध्वंसप्रतियोगी न ध्वंसात्यन्ताभाव इत्यपि नियम दर्शनेन ब्रह्मरूपध्वंसप्रतियोग्यविद्यायास्तदभावत्वासिद्धेश्च । नचाविद्याया ब्रह्म प्रागभावत्वं शङ्कनीयम् , मानाभावात् । ध्वंसप्रतियोगिनस्तत्प्रागभावत्वनियमो ऽस्तीति चेन्न,– अप्रयोजकत्वेन व्याप्त्यसिद्धेः । प्रतियोगिसमानकालीनत्वाच्च न प्रागभावत्वम् । ब्रह्मणस्सर्वदा सत्त्वेन कदाचिदपि ब्रह्म नास्तीत्यबाधितव्यवहारा सिद्धेः न ब्रह्मप्रतियोगिकसंसर्गाभावसम्भवः । नच विद्यमानत्वाभावो व्यावर्त्यः, तद्विद्यमानत्वाभावापेक्षया तदभावस्येव लघुत्वेन तस्यैव लक्षणानुप्रवेशात् । स्वा धिकरणक्षणोत्तरयावद्यत्प्रागभावकालसम्बन्धि यदिति येन विना यत्तिष्ठत्येवेत्यस्यार्थं इति विवक्षितमिति चेन्न,– एवमपि ब्रह्मस्वरूपमेव निवर्तकं वृत्तिरवच्छेदकैवेति मते असम्भव एव, ब्रह्मणः प्रागभावाप्रतियोगित्वात् । किञ्चैवमविद्यायास्सर्व प्रागभावप्रतियोगिनिवर्त्यत्वापत्तिः , अविद्यायाः यावद्घटादिप्रागभावकालवृत्ति त्वात् , घटादिसमानकालीनब्रह्मरूपाभावप्रतियोगितया यस्मिन् सति यन्न तिष्ठ- तीत्येतन्नास्त्येव, घटादौ सत्यप्यविद्यमानत्वादिति चेन्न,– यस्मिन् सति न तिष्ठती त्यनेन यदुत्तरकालीनध्वंसप्रतियोगीति विवक्षितत्वात् । ननु यदुत्तरकाले विद्य मानत्वाभाव एव विवक्षितः, नच घटोत्तरकाले ऽविद्याया विद्यमानत्वाभाव इति चेन्न,– विद्यमानत्वाभावस्य व्यावहारिकस्याविद्याकाले प्रतियोगिना साक्ष विरोधेनासम्भवात् , तदुत्तरकाले चोपादानविरहादसम्भवात् । सर्वोपशमादि श्रुतिबलाच्च विद्यमानत्वाभावस्य ब्रह्मस्वरूपत्वात्तस्य च घटोत्तरकाले सत्त्वात्तद विद्याया घटादिनिवृत्तित्वं स्यादेव । किंच– मोक्षदशायां परोक्षवृत्त्यभावात् अ- विद्याया अप्यभावात् येन विना यत्तिष्ठत्येवेत्यसिद्धम् । ननु येन विनेत्यत्र प्राग- भावो विवक्षित इति चेन्न,— एवमपि घटस्य मुद्गरादिनिवर्त्यत्वाभावापत्तेः, मुद्गरप्रागभावकाले घटावस्थाननियमाभावात् घटप्रागभावकाले घटस्यासत्त्वात् । नच येन विना यत् स्वोत्पत्त्युत्तरकाले तिष्ठत्येवेति विवक्षितमिति वाच्यम् , तथा सत्यविद्याया उत्पत्त्यभावेन निवर्त्यत्वाभावप्रसङ्गात् । नच येन विना यत् स्वाधि करणोत्तरक्षणे तिष्ठत्येवेति विवक्षितमिति वाच्यम् , एवमपि घटरूपप्रागभावस्य घटस्पर्शनिवर्त्यत्वापत्तेः । किंच– यस्मिन् सति यन्न तिष्ठतीत्यस्य यदधिकरण क्षणोत्तरक्षणवर्त्यभावप्रतियोगीति ह्यर्थः । स च प्रकृते न सम्भवति, अविद्या

निवृत्तिकाल एवाऽऽविद्यकस्य कृत्स्नस्यापि निवृत्त्या ज्ञानाधिकरणक्षणोत्तरक्षणस्या भावात्। नन्वविद्यानिवृत्तिसाध्यत्वादाविद्यकनिवृत्तेः कालस्य नाविद्यया सह निवृत्तिः, किन्त्वनन्तरमेवेति ज्ञानस्य द्वितीयक्षणोऽस्त्येवेति चेन्न,– अविद्यातत्कार्य निवृत्त्योर्ब्रह्मस्वरूपतया कार्यकारणभावासिद्धेः। घटकीभूतोत्तरक्षणस्योत्तरक्षणा भावेन तस्य निवर्त्यत्वाभावप्रसङ्गाच्च। ननु यस्मिन् सति यन्न तिष्ठतीत्यनेन उत्तर कालो न विवक्षितः, येन तदभावाद्दोषस्स्यात्, किन्तु यद्यत्सत्ताप्रागभावकालयो रविद्यमानाभावप्रतियोगीति विवक्षितमिति चेन्न,— ज्ञानतत्प्रागभावकालयोर्ब्रह्मणो विद्यमानत्वेनाविद्यायास्तत्कालाविद्यमानाभावप्रतियोगित्वाभावेन तन्निवर्त्यत्वास- म्भवात्।

यदप्याह– यस्मिन् सति यस्य अग्रिमक्षणे सत्त्वं यद्व्यतिरेके चाभाव स्तत्तत्साध्यम्, आत्मस्वरूपाविद्यानिवृत्तेश्च ज्ञाने सति सत्त्व तद्व्यतिरेके चाभावः, तत्प्रतियोग्यविद्याया एव तदभावरूपत्वात्तस्या ज्ञानात्पूर्वं कल्पितायाः विद्यमान त्वात्; नच यद्व्यतिरेके असत्त्वमिति कार्यमत्वाभाव उच्यते, सचाविद्या निवृत्तेः नास्ति, तस्यास्सदात्मरूपत्वादिति वाच्यम्;– यस्य सत्त्वाभावः इत्यस्माद्यस्याभाव इत्यस्यैव लघुत्वात्। तस्मान्नित्यसिद्धसत्यात्मस्वरूपैव मुक्ति- र्ज्ञानसाध्येति। अत्र ब्रूमः,– अविद्याया ब्रह्माभावत्वे मानाभावः। नच तदभावप्रतियोगिनस्तत्प्रतियोगिकाभावत्वनियमः, अप्रयोजकत्वेन व्याप्त्यसिद्धेः। नच घटस्य घटात्यन्ताभावाभावत्वं कथ सिद्ध्येदिति वाच्यम,– घटवति भूतले इह घटाभावो नास्तीति व्यवहारस्यातिरिक्ताभावविषयत्वे गौरवात्, घटविषयत्वमिष्यते, ब्रह्मणस्सदा सर्वत्र सत्त्वेन इहेदानीं ब्रह्म नास्तीत्यत्र।वित व्यवहारासिद्धेः न ब्रह्मप्रतियोगिकाभावत्वसम्भव.। किच यदभावे यदभावः इत्यत्र किमभावमात्रं विवक्षितम्, उत प्रतियोगिविरोध्यभाव.? नाद्य, प्रमेयत्वाभिधेयत्वयोः परस्परसाध्यत्वापत्तेः, व्यधिकरणधर्मावच्छिन्नतत्प्रतियोगि काभावस्य केवलान्वयित्वात्। किञ्चैव मोक्षसाधनत्वस्य केवलान्वयित्वापत्तिः। न द्वितीयः, ब्रह्मस्वरूपाया निवृत्तेरविद्यालक्षणप्रतियोगिविरोधित्वाभावात्। ननु विरोध्यभावो विवक्षितः, नच पूर्वोक्तदोष., कैवल्यविशिष्टस्य निवृत्ति- त्वात्, तस्य च विरोधित्वादिति चेन्न,– तथा सति क्षेमसाधारणसाध्यत्वोप

किमनेन, अस्माभिः तत्रापि घटसंसर्गप्रत्यनीकतारूपस्य पराभि
मतघटाभावाविनाभूतभावान्तरात्मककालविशेषसंसर्गतन्मूलपरिणामा
देः प्रत्यक्षसिद्धस्य भूतलावस्थाविशेषस्य यथायथं घटाभावत्वा
भ्युपगमात्तस्य घटसंसर्गोत्तरभावित्वेन पूर्वसिद्धत्वासिद्धिः ।
नन्वभाववादिनोपि कार्यप्रागभावस्य कारणाश्रयत्वात्कारणेपि कार्यो

---

'पादनवैयर्थ्यात्कैवल्यविशिष्टब्रह्मस्वरूपस्य साध्यत्व हि कैवल्यस्य साध्यत्वे पर्य
वस्यति, तस्य च साध्यत्व घटादिवदेवोपपद्यत इति । किंच कैवल्यस्य
स्वरूपान्तर्भावबहिर्भावयोरुक्तदोषाः प्रादुष्यु. ।

किंचैवमविद्या ब्रह्मणा सह भिन्नसत्ताकत्वेन विरोधाभावादद्वैतसाक्षा
त्कारात्प्रागिवानन्तरमपि स्यादेवेत्यनिर्मोक्षप्रसङ्गः । किंच— दु खानुत्पादस्य
दु.खाविरोधित्वभ्रमे न हि कश्चित्प्रायश्चित्तादौ प्रवर्तते, ततश्चानादिसहचरितयोः
प्रतियोग्यनुयागिनोरविद्याब्रह्मणोरविरोधित्वे ज्ञायमाने कथ कश्चिदपि ब्रह्मस्वरूपा
विद्यानिवृत्त्यर्थ श्रवणादौ प्रवर्तेत । किंच- ब्रह्मणस्सिद्धत्वेन इच्छाया असिद्ध
गोचरत्वनियतायास्तत्रासम्भवात् न तदर्थ श्रवणादौ प्रवृत्तिसम्भवः । उत्तर
कालदु खप्रागभावसम्बन्धस्यासिद्धत्वात्तदर्थ प्रायश्चित्तादौ युज्यत एव प्रवृत्ति ।
नच प्रकृतेपि ब्रह्मण उत्तरकालीनसम्बन्ध एव साध्यः, तत्त्वज्ञानाभावेपि
ब्रह्मणो नित्यतया उत्तरकालसम्बन्धस्याक्षतेः । प्रायश्चित्ताकरणे चोत्तरकाल
दुःखस्यैवोत्पत्त्या दु खप्रागभावो न स्यादेवेति युज्यत एव तदर्थिनः प्राय
श्चित्ते प्रवृत्तिः । किंच तत्त्वज्ञाने उत्पन्ने अविद्याया अविद्यमानत्वेन त
त्कार्यकालस्याप्यविद्यमानत्वेन कथ तत्कालसम्बन्धस्य साध्यता ? ननु कथ
दुःखप्रागभावोत्तरकालसम्बन्धस्यासिद्धता ? प्रतियोगिनोरेव सम्बन्धत्वात् ,
तयोश्च प्रतियोगिनोस्सिद्धत्वादिति चेन्न, — स्वस्य दु.खप्रागभावोत्तरकालसम्ब
न्धस्यासिद्धतया तदर्थिनः प्रायश्चित्ते प्रवृत्तिसम्भवात् ।

**घटसंसर्गप्रत्यनीकतारूपस्ये** ति । प्रत्यनीकता, रूप- धर्मो, यस्य तत्
प्रत्यनीकतारूपम् , तच्च कालविशेषससर्गादेर्विशेषणम् । **घटाभावाविनाभूते**
ति । घटाभावाधिकरणत्वेन पराभिमतदेशनिष्ठेत्यर्थः । **परिणामादे**रित्यादिपदेन
तदानीन्तनद्रव्यान्तरसयोगादिक गृह्यते । तच्चावस्थाविशेषस्य समानाधिकरण

प्रागभावस्य सम्बन्धोऽभ्युपगत, सम्बन्धिनः प्रागभावस्य निवृत्तौ च तत्सम्बन्धनिवृत्तिरास्थेया, सा च सम्बन्धनिवृत्तिः कारण स्वरूपानतिरेकिणीष्टा च, कार्यन्तु दृश्यमान स्वप्रागभावस्यैव निवृत्तिः, एवं कार्यकारणयोस्सम्बन्धोपि स्वप्रागभावनिवृत्तिरेवेति परिशेषात पूर्वसिद्धकारणस्वरूपमेव कार्यप्रागभावकारणयोस्सम्बन्ध निवृत्तिरिति, तदप्यसत् , कार्यतत्प्रागभावयो कारणेन सह स्वरूपातिरिक्तसम्बन्धमनभ्युपगच्छता पुरतो नेद चोद्यम् । अभ्युप गच्छतामपि कार्यसम्बन्धप्रागभाव कार्यप्रागभावकारणयोस्सम्बन्ध एवेति तस्य तन्निवृत्तित्व युक्तम् । कार्यमेव वा स्वप्रागभाव तत्सम्बन्धयोरप्यभावो भवतु, विरोधाविशेषात् । यथैक एव प्रध्वसः कार्यतत्प्रागभावयो. प्रतिपक्ष इत्यादि स्वयमूह्यम् । ननु भवतामप्यविद्यानिवृत्तिः पूर्वसिद्धजीवस्वरूपाविर्भाव एव, " स्वेन रूपेणाभिनिष्पद्यत " इति श्रुत्यनुसारात् , तद्वद्ब्रह्म स्वरूपाविर्भाव एवास्माकमविद्यानिवृत्तिरस्त्विति चेन्न, – संसार दशायामनाविर्भूतानेकाकारगोचरस्याविर्भावशब्दार्थस्य धर्मभूतज्ञान विकासविशेषस्य पूर्वं कर्मणा प्रतिबद्धस्य पश्चात्तन्निवृत्तौ स्वरू पानुबन्धित्वादनिवर्तनीयस्यास्माभिरभ्युपगमात् । भवतस्तु निराकारे ब्रह्मणि नित्याविर्भूतज्ञप्ति[व्यक्ति]मात्रस्वरूपे नापूर्वः कश्चिदावि र्भावः । ननु ब्रह्माकारविवर्तान्त.करणवृत्त्युपलक्षितस्वरूपेणापूर्वेण ब्रह्म स्वाज्ञाननिवृत्ति., कारणविनाशाच्चोपलक्षकान्त करणवृत्तिनाशे

---

विशेषणम् । नेदं चोद्य मिति । प्रागभावसम्बन्धस्य प्रागभावाभिन्नतया प्रागभावनिवृत्तिरूपस्य कार्यस्यैव स्वप्रागभावसम्बन्धनिवृत्तिरूपत्वादित्यर्थः । अभ्युपगच्छता मिति । कार्यसम्बन्धप्रागभाव एव कार्यप्रागभावकारणयो स्सम्बन्ध इति योजना । तस्य– कार्यसम्बन्धस्य । तन्निवृत्तित्वम्– कार्यप्रागभावसम्बन्धनिवृत्तित्वम् । स्वरूपानुबन्धित्वादनिवर्तनीयस्ये ति।

तदुपलक्षणाभावेन न सद्वितीयत्वादिप्रसङ्गावकाश इति चेत्[१] तदप्यतिमन्दम्, उपलक्षणस्वरूपस्यैव निष्कर्षवशान्निवृत्तिरूपत्वप्रसङ्गेनाध्यासरूपविकल्पानुप्रवेशात्, तस्य च दूषितत्वात् । उक्तानां च विकल्पोत्तराणां तथाविधान्तःकरणवृत्तिनाशे तन्मूलोपलक्षणनाशे च तुल्यप्रसरत्वात् । बहिर्भावे तु सद्वितीयत्वापत्तेः । समुच्चये विरोधात् । आकारभेदकल्पनेऽनवस्थानात् । आकारैक्ये भेदाभेदयोरैक्यप्रसङ्गात् । किंच बहिर्भावे च सा किमनादिरुतादिमती[१] पूर्वत्र नित्यमविद्यानिवृत्तिप्रसङ्गः । उत्तरत्र कारणाभावात् कार्या

---

कर्मनिबन्धनत्वाभावोऽनिवर्तनीयत्व च "स्वेन रूपेणे" त्यनेन विवक्षितमिति भावः । तदुपलक्षणाभावेने ति । उपलक्षककाकाधीनोत्क्रमणत्ववदत्राप्युपलक्षकवृत्त्यधीनः कश्चिद्धर्मविशेष. उपलक्षणशब्देन विवक्षितः । अत एवाह– तन्मूलोपलक्षणविनाशेचे ति । बहिर्भाव इति । ननु भावाद्वैताङ्गीकारादभावेन सद्वितीयत्वं न दोषायेति चेन्न,- अद्वितीयश्रुतेस्सङ्कोचप्रसङ्गात् । तदङ्गीकारे च मानान्तरश्रुत्यन्तराविरुद्धविषयत्वमेव युक्तम् । नन्वन्तर्भावान्न बहिर्भावप्रयुक्तो दोषः, बहिर्भावान्नान्तर्भावप्रयुक्तो दोष इति शङ्कामनूद्य परिहरति- समुच्चय इति । अन्तर्भावबहिर्भावयोः सत्त्वे उभयप्रयुक्तदोषस्स्यात्, नत्वन्यतरेण इतरप्रयुक्तदोषनिरास इत्यपि द्रष्टव्यम् । ननु स्वरूपेणैवैकस्यान्तर्भावबहिर्भावयो. कल्पने विरोध', नतु किञ्चिदाकारविशिष्टरूपेण तत्कल्पने, इत्याशङ्क्य, किं केन चिदाकारेणान्तर्भावः आकारान्तरेण बहिर्भाव इत्यन्तर्भावबहिर्भावप्रयोजकाकारभेद इष्यते, उतैक एवाकार उभयप्रयोजक इति विकल्पमभिप्रेत्याद्य दूषयति– आकारभेदे ति । तयोरप्याकारयोरन्तर्भावबहिर्भावान्यतराङ्गीकारे तत्तत्पक्षोक्तदोषप्रसङ्गेन समुच्चयस्यैवाङ्गीकर्तव्यत्वात्, तत्र च विरोधपरिहाराय तत्राप्याकारभेदो वाच्य', तत्रापि तथेत्यनवस्थेत्यर्थः । द्वितीय दूषयति– आकारैक्य इति । अन्तर्भावबहिर्भावपदाभ्यामभेदभेदौ विवक्षितौ । तयोर्भेद एकेनाकारेण विरुद्धयोस्सामानाधिकरण्योपपादनासम्भवात्तयोरैक्यं स्यादिति भावः । किञ्चे ति । सा अविद्यानिवृत्तिः । नित्य मिति । कदा

भाव., ।हि मिथ्याभूतमविद्यादिकं सत्यभूतायास्तस्याः कारण सम्भाते, असत्यात् सत्योत्पत्तेरन्यत्र दूषणात् । नच सत्य ब्रह्मैव तत्कारणमस्त्विति वाच्यम्,— तदनादित्वप्रसङ्गेन प्रागुक्तोपद्रवात् । नहि विगलितशबलभाव ब्रह्मैव तत्कारणम्, शबलभावविगलनस्यैव कारणान्वेषणेनात्माश्रयप्रसङ्गात् । नन्वविद्या निवृत्तिर्न सती ब्रह्मव्यतिरिक्तत्वात् , नापि सदसदात्मिका, व्याघातादिदोषशतोन्मेषात् , नच सदसद्विलक्षणा, सदसाद्विलक्षण निवृत्त्यात्मकत्वव्याघातात् , अत. परिशेषादसती वा, तामपि कोटि परित्यज्य पञ्चमप्रकारो वा[2] भावाभावयोरेव हि सदसदादि प्रकारा निवृत्तयः । सदसद्विलक्षणञ्चाज्ञानम् , तन्निवृत्तिश्च प्रमाण सिद्धेति सदसदनिर्वचनीयाज्ञानानुसारेण यक्षानुरूपो बलिरिति न्यायात् सदसदादिसर्वप्रकारविलक्षणा तन्निवृत्ति. कल्प्यत इति कि

---

प्यविद्यातत्कार्ययोरुपलम्भो न स्यादित्यर्थः । किच ब्रह्मव्यतिरिक्तायाः पारमार्थिकाया जन्याया निवृत्तेरभ्युपगमेपि भिन्नसत्ताकायाः अविद्यायास्तया सह विरोधाभावान्निवृत्त्युत्पत्तावप्यविद्या तिष्ठत्येवेति अनिर्मोक्षप्रसङ्गः । **व्याघातादी**ति । व्याघातपदेन सत्त्वासत्त्वयोस्स्वरूपतो विरोधो दर्शितः । आदिपदेनाद्वैतश्रुति विरोधादयो विवक्षिताः । **नचे** ति । मोक्षदशाया यावत्प्रपञ्चनिवृत्तेर्वक्तव्य तया निवृत्तेर्मिथ्यात्वे स्वप्रतियोगित्व वक्तव्यम् , तच्च व्याहतमित्यर्थः । ननु सत्त्वमसत्त्व मिथ्यात्व वा स्यात् , कथ पञ्चमप्रकारत्वमित्यत्राह— **भावाभावयो** रिति । सदसतोरित्यर्थः । आदिपदेन मिथ्यात्व विवक्षितम् । सतो घटादेस्सद्रूपा मिथ्यारूपा च, निरुपाख्यस्य निरुपाख्येत्यर्थः । ननु कथ सद्विलक्षणाया असद्विलक्षणायाश्च निवृत्तेस्सदसद्विलक्षणत्वम् , व्याघातादिति चेन्न,- सदसद्विलक्षणत्वेपि मिथ्यावैलक्षण्यसम्भवात् । ननु दृष्टानुसारेण सत्त्वमनिर्वचनीयत्व वा स्यात् , यदिच तथा नेष्यते, तर्हि निवृत्तिरसत्यैव स्या दित्यत्राह- **तन्निवृत्ति** रिति । सदादिरूपत्वस्यासम्भवात् ख्यातिबाधाभ्या प्रामा

नोपपन्नमिति चेत् ? अहो परापादनीयमात्मनः परिादमात्मनैं वाविष्कृत्य वैदुग्ध्यमभिनयसि । तथाहि- कोटित्रयस्यभवतैव दूषितत्वात् अलाशेण कृत शत्रुकार्यम् । यत्त्वसतीवेत्युक्तम्, तत्र भावान्तराभावनयेन भावान्तरविवक्षाया सद्वितीयत्वप्रसङ्गः । अतिरिक्ताभावविवक्षायाच सद्वितीयत्व तेनैव भावेन तत्प्रतियोगिना च सत्यत्वेन दुस्त्यजम् । अभाववादिना सत्यस्यैवाभाव प्रतियोगित्वात् । निरुपाख्यविवक्षायांच तस्य शशशृङ्गादिवद् कादाचित्कत्वप्रसङ्गः । ततश्च पूर्ववत् सर्वदैवाविद्यानिवृत्तिरनिवार्येत्यससारः । तस्यास्संसारस्य चाविरोधे अनिर्मोक्ष । परमार्थतस्सर्वदा ससाराभावात् तत एव परमार्थमोक्षाभावश्चेति नानिष्टप्रसङ्गाविमाविति चेन्न,— व्यावहारिकबन्धमोक्षव्यवस्था भङ्गस्यैव प्रसज्यमानत्वात् । तामपि व्यवस्थां परित्यजत. लौकिकवैदिकसर्वव्यवहारविलोपप्रसङ्ग । किंच अविद्यानिवृत्तेरसत्त्वे नित्यमविद्यासद्भावप्रसङ्गः । ननु घटप्रध्वसस्यासद्रूपत्वेपि घटादे कादाचित्कत्ववदविद्याप्रध्वसस्यासद्रूपत्वेप्यविद्याकादाचित्कत्वमुपपद्यत इति चेन्न,– घटप्रध्वसस्यासद्रूपत्वाभावात् । स ह्यभावात्मकोपि तत्कालीनतया प्रमाणतस्सिद्धः । अन्यथा घटनित्यत्वस्यापि दुर्निवारत्वात् । असद्रूपमेव घटप्रध्वसमभ्युपेत्य दूषण ब्रूया इति चेन्न,— शमल भक्षय शापितोसि गुरु

---

णिकार्थविलक्षणानिर्वचनीयवत् तद्विरणतन्निवृत्त्यङ्गीकारो युक्त इत्यर्थः । किमसतीत्यनेन भावरूपत्वम्, उत निरुपाख्यत्वमिति विकल्पमभिप्रेत्य आद्य दूषयति- तत्रेत्यादिना अभावप्रतियोगित्वा दित्यन्तेन । सद्वितीयत्वप्रसङ्ग इति । मिथ्यात्वस्य पूर्वोक्तन्यायेनासम्भवादिति भावः । तेनैवे ति । पूर्वोक्त न्याय एव विवक्षित । तत्प्रतियोगिनेत्यत्र हेतुमाह– अभाववादिना मिति । असत निरुपाख्यत्वमनभ्युपगच्छता तदन्यूनसत्ताकस्यैव तत्प्रतियो

णेत्यादिवदशक्यत्वात्। शक्यत्वाभ्युपगमे वा त्वयैव दूषणमनुमतमिति किमस्माकं तत्समर्थनेन। पञ्चमी कोटिमाटीकमानस्यापि ते न काचिद्गतिः। साहि माध्यमिकगोष्ठीमध्ये भवन्तमध्यारोप्यानिर्वचनीयाग्रहविशिष्टच सदद्वितीय ब्रह्म विलुपन्ती त्वय्यन्तवादवारवाणमवधूयान्तर्गतं प्रकाशयेत्। ते ह्येवमाहुः—
"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥" इति। नचैकदेशवैषम्याद्विशेषः, पञ्चमकोटिपरिग्रहस्य भिक्षुपादप्रसरणन्यायेन समस्तभवत्सिद्धान्तावस्कन्दात्। व्यवस्थाहेतूनामपि व्यावहारिकत्वेनाव्यवस्थितत्वस्यैव व्यवस्थितत्वात्। नच यक्षानुरूपो बलिरिति न्यायस्यात्रावकाशः, आनुरूप्यस्याविरोधित्वरूपत्वे सदसदनिर्वचनीयाज्ञाननिवृत्तेरप्यनिर्वचनीयरूपत्वप्रसङ्गात्। विरोधिरूपत्वे त्वनिर्वचनीयत्वप्रत्यनीकत्वस्य

---

गित्वादित्यर्थः। **अशक्यत्वा** दिति। अभ्युपगमस्येति शेषः। **दूषणमनुमत**मिति। अभ्युपगममापादयता त्वया तथा स्वरूपानङ्गीकाराद्दूषणमनुमतमेवेत्यर्थः। यद्वा निवृत्तेर्ब्रह्मस्वरूपत्वतदतिरिक्तत्वपारमार्थिकत्वपञ्चमप्रकारत्वान्यतरपक्षमेव समर्थयता त्वया अविद्यानिवृत्तेरसत्त्वे दूषणमनुमतमेवेत्यर्थः। **अविशिष्ट** मिति क्रियाविशेषणम्। अविशेषेणेत्यर्थः। **अन्तर्गत** मिति। त्वत्स्वान्तान्तर्गतं त्वद्गुरुपक्षपक्षपातमित्यर्थः। यद्वा कञ्चुकपिहितं बौद्धत्वमित्यर्थः। **नचे** ति। किञ्चित्साम्यमात्रात्तन्मतप्रवेशापादनेऽतिप्रसङ्ग इति भावः। **व्यवस्थाहेतूना** मिति। प्रातिभासिकव्यावृत्तव्यावहारिकव्यवस्थासिद्धये हि व्यावहारिकसत्यत्वमिष्यते, तदङ्गीकारेपि व्यवस्थाया असिद्धेर्न प्रपञ्चस्यापि व्यावहारिकत्वमेष्टव्यम्, तन्निवृत्तिवदेव पञ्चमप्रकारत्वसम्भवादित्यर्थः। **आनुरूप्यस्ये** ति। **अविरोधित्वम्**— सजातीयत्वम्। **विरोधिरूपत्व** इति। विजातीयत्वरूपत्व इत्यर्थः। निवृत्तेस्सदसदनिर्वचनीयाविद्याकल्पनप्रत्यानुकूल्यविजातीयत्व एव सिद्ध्यति सजातीयत्वे साम्यनिमिथ्यावस्तुनिवृत्त्यभावप्रसङ्गादित्यर्थः।

किञ्च निवृत्तेः प्रतियोगिसमानसत्ताकत्वाभावे तद्विरोधाभावादनिर्मोक्षप्रसङ्गः । नच निवृत्तित्वेनैव प्रतियोगिना साकं विरोधः, घटे विद्यमान एव प्रातिभासिकरूपायास्तन्निवृत्तेर्दर्शनात् । नच भिन्नसत्ताकत्वाभाव एव विरोधप्रयोजकः, लाघवेन तुल्यसत्ताकत्वस्यैव प्रयोजकत्वात् । किंचास्या निवृत्तेरध्यस्तत्वे पञ्चमप्रकारत्वभङ्गः, अनध्यस्तत्वे प्रकाशाभावप्रसङ्गः, स्वतस्संविद्रूपत्वविरहान्तदध्यस्तत्वविरहाच्च, संविदतिरिक्तस्य दृग्दृश्यसम्बन्धनिराकरणेन संविदध्यासादेव हि प्रकाश इष्टः । यदि चात्रान्यसम्बन्ध इष्यते, किं परार्थं घटादिना ।

अत्र पञ्चमप्रकारमुपपादयन् यदाह नवीनः– अविद्यानिवृत्तिर्नात्मा, अभावत्वात्, किन्तु पञ्चमप्रकारा, सा च न पुरुषार्थः, सद्विलक्षणत्वादसुखत्वाच्च, किंच आत्मैव परमानन्दः पुरुषार्थः, नचैवमविद्यानिवृत्तेरप्रार्थ्यत्वात्तदुपायज्ञानप्रयासो व्यर्थः, पुरुषार्थप्रतिबन्धकनिवृत्तित्वेन तस्याः काम्यमानत्वात् ; नन्वविद्या किं प्रतिबन्धाति ? नतावन्मोक्षस्वरूपम्, तस्यात्मस्वरूपतया सदानपायात् ; नापि तज्ज्ञानम् , तत एवेति चेन्न ,– आनन्दात्मस्वरूपो हि मोक्षः, अनर्थश्च दुःखात्मा तत्प्रतिकूलः, अविद्या च तद्धेतुः, एवञ्च आनन्दात्मकब्रह्मविपरीतानर्थदर्शनेन नित्याप्तमप्यनाप्तमिव मोक्षोऽसत्कल्पो नास्तीत्यादिव्यवहारयोग्यो बभूव, ततश्चाकृतार्थता, निवृत्ते चाज्ञाने निरस्तनिखिलानर्थपरमानन्द आत्माऽऽप्यत इवेत्यविद्यानिवृत्तिरपुरुषार्थापि काम्यत इति ।

तत्र किमिदमाप्यत इवेति? किमपारमार्थ्यं विवक्षितम् , उत सादृश्यम्? नाद्यः, ब्रह्मणो नित्याप्तत्वात् । पूर्वमनवाप्तत्वे सति इदानीमाप्तत्व नास्तीति चेत् ? तर्हीदानीमाप्यत इति बुद्ध्युत्पत्तये निवृत्तिः काम्यत इत्यायातम् । तत्र सा किं ब्रह्मस्वरूपमेव, उत वृत्तिः? नाद्यः, तस्य नित्यसिद्धत्वात् । न द्वितीयः, अविद्यायां निवृत्तायां कारणाभावेन वृत्त्युत्पत्तेरयोगात् । न द्वितीयः, आप्तत्वादेव । तस्मात्पुरुषार्थसाधनत्वरहिताया निवृत्तेस्स्वतः पुरुषार्थत्वाभावे काम्यत्वमेव न स्यादिति श्रवणादौ न कश्चित्प्रवर्तेत । यदुक्तमनर्थदर्शनेन नास्तीत्यादिव्यवहारयोग्यो बभूवेति, तत्स्ववचनव्याहतम् , अविद्याधीनातिरोधानेन हि कर्तृत्वाद्यध्यासरूपानर्थसम्बन्ध इष्टः, नास्तीति व्यवहारयोग्यतामेव च तिरोधानम् ।

निर्वचनीयत्वेन सदसत्त्वसमुच्चयकोटिवहिर्भावायोगात् । तस्याश्च दूषितत्वात् । यदा च भवदभिमता सदसद्विलक्षणकोटिरपि निशित तर्कशूलकोटिमारोपिता तदा कैव कथा निर्विशेषपरब्रह्माधिष्ठानानिर्वच नीयभावरूपाज्ञानविक्षेपात्मकव्यतिरिक्तजडरूपाहमर्थाहङ्कारवृत्तिविशे षरूपमिथ्यास्वरूपतत्त्वमस्यादिवाक्यलक्षणप्रभवब्रह्मात्मैक्यविज्ञानकृ तसदसदनिर्वचनीयविश्वनिवृत्तिरूपाया गन्धर्वनगरगोपुराधिरूढगग-नारविन्दमकरन्दपानमदभरमन्थरवन्ध्यासुतशुभकरतलकलितखरवि-षाणकोदण्डकोटिघटितकमठरोमशिञ्जनीनिर्यत्ननिर्यदैन्द्रजालिकशर शलाकाकृतभविष्यद्देवदत्तपुत्रशिरश्छेदसोदराया दुरभिलपकारक ज्ञापकायाः पञ्चम्याः कोटेरित्यलमपरिणतभणितिपरिहसनेनेति ॥

इति शतदूषण्यां निवृत्त्यनुपपत्तिः

चतुश्चत्वारिंशो वादः ॥४४॥

---

अत्रायमस्मदाचार्याणां संग्रहः—

" निवृत्तेश्चेत्सदन्यत्वमनिर्मोक्षः प्रसज्यते ।
निवृत्तेर्यदि सत्यत्वमनिर्मोक्षः प्रसज्यते ॥
सत्ताभेदाद्विरोधो न प्रतियोग्यनुयोगिनोः ।
मिथ्याकार्यं विना ऽविद्या न तिष्ठेत कदाचन ॥
यक्षानुरूपबलिना सत्तासाम्यं न विद्यते ।
गौरवाद्भिन्नसत्ताया विरहो न प्रयोजकः ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां निवृत्त्यनुपपत्तिभङ्गो नाम

**चतुश्चत्वारिंशस्स्कन्धः ॥४४॥**

श्रीरस्तु ।

अथ पञ्चचत्वारिंशो वादः ।

——(*)——

यन्नामानि परोरजांसि गृणतां यादृच्छिकैर्हेतुभिः
दुर्लङ्घोऽप्युपयाति गोष्पदतुलां संसारवारांनिधिः ।
दूरे नित्यमसीमभूमकतया वाचां यदाचक्षते
तद्वन्देमहि सर्वशब्दविषयं त्वय्यन्तवेद्यं महः ॥

---

स्वार्हाभिधानमपनीय परानुबद्धैरुत्सन्ननाम कथकैर्यदकारि मूर्खैः ।
तन्नामवर्गपरिरक्षणलब्धवर्णं सङ्कीर्तयामि सततं कविवादिसिंहम् ॥
समरतवचसा लक्ष्यमपि मुख्यं समर्थयन् ।
चित्रं ब्रह्म चिरं जीयाच्छ्रीनिवासगुरुर्महान् ॥

**यन्नामानी** ति । **परोरजांसी**त्यस्य रजसो दूरे विद्यमानानीत्यर्थः । 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणात्समासः । परश्शतामित्यत्र बहुल ग्रहणात्समास इति कैयटोक्तेः । पर इति च व्यत्ययेनासिप्रत्ययः । परस्ता दित्यर्थः । "यत्र सप्तर्षीन् पर एकमाहु" रित्यत्र भाष्ये व्यत्ययेन परशब्दा दसिप्रत्यय इति भट्टभास्करेणैवाभिधानात् । अयञ्च शब्दोऽव्ययं वैदूर्यवचनम् । "परो दिवा पर एने" त्यत्र भाष्ये परशब्दोयमन्तोदात्तसकारान्तोऽव्ययं वैदूर्य माचष्ट" इति भट्टभास्करेणैवाभिधानात् । वारां निधिरित्यत्र दिवस्पतिः याद सां पतिरित्यादाविव बहुलग्रहणात् षष्ठ्या अलुक् । अत्र पूर्वपक्षे सामान्येन वृत्तिविषयत्वम्, मुख्यवृत्तिविषयत्वं बोऽन्यसमानसत्ताकमुख्यवृत्तिविषयत्वं वा निराक्रियते । तत्र प्रथमयोजनायां– उपक्रमे वृत्तिशब्दनिर्देशः, द्वितीयतृतीय हेत्वोस्साधारण्यम्, शाखावदुपलक्षणत्वोक्ति, मौनं मन्त्रजप इत्युक्ति, इत्यादि निबन्धनम् । द्वितीययोजनायां तु 'नहि निमित्तमन्तरेणे' त्यत्र निमित्तपद स्वारस्यं, अनुमाने वाच्यत्वप्रतिज्ञास्वारस्यम्, प्रत्यनुमाने अवाच्यमिति निर्देश स्वारस्यम्, अतो न वाच्यमित्युपसंहारस्वारस्यम् । इत्यादि निबन्धनम्, तृतीय

यदूचिरे- निर्धूतनिखिलकल्पनाजाले स्वप्रकाशचिन्मात्रे ब्रह्मणि च कस्यचिच्छब्दस्य वृत्तिस्सम्भवति । नहि निमित्तमन्तरेण शब्दाः प्रवर्तेरन् , नचावेद्ये वेदकानामवकाशः । नच सर्वेषा मात्मसाक्षिकं प्रकाशमाने प्रकाशकापेक्षा । नचैवमुपदेशनैरर्थ क्यम् , स्वतएव प्रकाशमानेपि स्वरूपे कल्पितोपप्लवप्रशमन

---

योजनाया तु सिद्धसाधनोद्भावन निबन्धनम् । तत्तद्योजनास्वरसवाक्यानामितर योजनाया निर्वाह तत्तद्वाक्यव्याख्यानावसरे वक्ष्यामः । वृत्तिविषयत्वादेरुप हिते अङ्गीकारात्स्वरूपे तन्निषेधार्थं स्वरूपमनुवदति– निर्धूते ति । अत्र विशेषणत्रय हेतुगर्भम् । अत्र निर्धूतनिखिलकल्पनाजाल इत्याद्यो हेतु । वृत्ति-निषेधपक्षे शक्तिनिषेधपक्षे च निखिलकल्पनाशून्य इत्यर्थ । कल्पनापद कल्पित परम् । अविद्याविवर्तस्याविद्योपहितगतत्वेन स्वरूपे निमित्ताभावान्न तत्र वृत्ति-रिति वा शक्तिरिति वा तात्पर्यम् । बोध्यसमानसत्ताकशक्तिनिषेधपक्षे च मिथ्या भूतकल्पनाजाल इत्यर्थ. । अस्मिंश्च पक्षे स्वरूपे निमित्तमस्त्येव, तथा च स्वरूपे निमित्तसत्त्वेपि तस्य बोध्यसमानसत्ताकत्वाभावान्न बोध्यसमानसत्ता-कशक्तिरिति तात्पर्यम् । स्वप्रकाश इत्यन्यो हेतुः । स्वप्रकाशपदेन सजातीयानपेक्षप्रकाशत्व गृह्यते , मात्रचा सजातीयापेक्षप्रकाशत्वाभावरूप हेत्वन्तर गृह्यते । इमे चाभ्युच्चययुक्ती । शाखाचन्द्रन्यायेन लक्षणया शक्त्यैव वा शब्दादेव स्वरूपोपस्थितेर्वक्ष्यमाणत्वात् उपक्रमे निषेधमात्रे ता-त्पर्यम् , नतु प्रकारान्तरेण बोधनेपि, तेन हेत्वोरुत्थानसम्भवः । सिद्धान्तिना वैयर्थ्ये आपादिते प्रकारान्तरेण तद्बोधन विना तत्परिहारासम्भवात् तद्ग्युत्तर-त्राङ्गीक्रियते । आद्यहेतुमुपपादयति– नही ति । प्रवृत्तिनिमित्तलक्ष्यतावच्छेदक सादृश्यानि विना शब्दस्य वृत्तिरेव न सम्भवतीत्यर्थ. । यद्वा– प्रवृत्तिनिमित्ता भावात् शक्तिर्न सम्भवतीत्यर्थ. । यद्वा- बोध्यसमानसत्ताकनिमित्ताभावान्न तादृश शक्तिसम्भव इत्यर्थ. । मात्रचा विवक्षिता युक्ति विवृणोति- नचावेद्य इति । स्वप्रकाशपदोक्त हेतु विवृणोति । नच सर्वेषा मिति । कल्पिते ति । प्रशमनपद

मात्रार्थतया प्रतिपन्नार्थप्रतिष्ठापनार्थप्रत्यभिज्ञापकतया वोपदेशसाफल्यात् । अतएव वेदान्तानां ब्रह्मणि प्रवृत्तिरपि व्याख्याता । यद्यप्यविद्योपाधिकोपरागप्रशमनपरेषु वाक्येषु सद्ब्रह्मात्मज्ञानादि शब्दैर्ब्रह्म निर्दिश्यते, तथाप्युपलक्षणभूतैस्तैश्चन्द्रमस इव शाखया न ब्रह्मणस्संस्पर्शः ।

---

बाधपरम् । उपदेशेन प्रपञ्चमिथ्यात्वमेव बोध्यते, नतु ब्रह्मेत्यर्थः । प्रत्यभिज्ञापकतया वेति । स्वतः प्रकाशमानस्य पुनर्बोधनात् स्वरूपात्मकाभेदविषयत्वाच्च प्रत्यभिज्ञात्वोक्तिः । प्रत्यभिज्ञा विना स्वरूपप्रकाशमात्रात् नाविद्यानिवृत्तिरिति भावः । नन्वेव प्रत्यभिज्ञार्थं वृत्त्यङ्गीकारप्रसङ्गः, पूर्वाप्रतिपन्नवाक्यार्थे क्वचिद्गामानयेत्यादौ पदाना पदार्थे वृत्तिदर्शनात् वाक्यार्थस्यापूर्वत्व एव पदार्थस्य वृत्त्या बोधननियम., नतु वाक्यार्थस्य पूर्व प्रतिपत्तावपि, अतो ब्रह्मणो वाक्यार्थस्य स्वप्रकाशतया प्रतिपन्नत्वात् तद्विषयप्रत्यभिज्ञायाश्च वक्ष्यमाणनीत्या शाखाचन्द्रन्यायेनापि सम्भवान्न वृत्त्यपेक्षेति पूर्वपक्षिणोभिमानात् । यद्यपी ति । धर्मिनिर्देशाभावे तत्र निषेधासम्भवेन उपरागप्रशमनमेव न सम्भवतीति भावः । तथापी ति। यथा शाखा सयोगादिक विनैव केनचित्सम्बन्धविशेषेण चन्द्र ज्ञापयति तथा शब्दोपि वृत्त्या विनैव ब्रह्म अन्येन केनचित्सम्बन्धेन ज्ञापयतीत्यर्थः । सस्पर्श शब्दो वृत्तिविषयत्वपरः । यद्वा शक्त्या विना शाखापदवल्लक्षणया ज्ञापयतीत्यर्थः। सम्भवति हि काचिच्छाखापदेन चन्द्रलक्षणा । सस्पर्शशब्दः शक्तिविषयत्वपरः । व्यावहारिक शक्यत्वमङ्गीकृत्य पारमार्थिकशक्यत्वनिषेधपक्षे शक्त्या बोधनमस्त्येव, तथाप्यन्येषामिव बोध्यसमानसत्ताकशक्तिमच्छब्देन निर्देशो वाच्य इत्याशङ्कितु भावः । शक्त्या विनापि बोधदर्शनेन बोधमात्रे शक्तेरप्रयोजकत्वे विशिष्टाया स्सुतरामप्रयोजकत्वमिति परिहाराभिप्रायः । उपलक्षणशब्द. अन्यत्रैव शक्यसमानसत्ताकशक्त्यभावादौपचारिकः । सस्पर्शशब्दो बोध्यसमानसत्ताकशक्तिपरः । यद्यपि ब्रह्मादिशब्दैस्स्वरूप शक्त्या निर्दिश्यते, तथापि न पारमार्थिकशक्त्या निर्देशः कार्यः, अन्यथापि प्रतीतिसम्भवादित्यर्थः । ननु त्वया ब्रह्मशब्देन ब्रह्म निर्दिश्य तदवाच्यमिति प्रतिज्ञातव्यम् , ततश्च त्वयैव शब्देन ब्रह्मणो बोधनात्

अत एव न ब्रह्मादिशब्दनिर्देशेन स्ववचनविरोधः । नच नामकीर्तनविधीना विरोधः, सगुणब्रह्मविषयत्वा त्तेषाम् । अतएव हि परस्मिन् ब्रह्मणि ' मौनम्मन्त्रजप ' इत्या चार्याः । अन्यथा कथमसम्प्रज्ञातोपि समाधिस्स्यात् । नच विचित्रनामरूपभाक्त्वश्रुतिविरोधः, तस्यास्तत्कार्योपहितविषयत्वस्य युष्माभिरप्यङ्गीकारात् । नच शब्दतत्त्वमेव ब्रह्मेति स्वप्रका-शत्वे स्ववाच्यतया शब्दवाच्यता, शब्दब्रह्मणोपि ब्रह्मविवर्त मात्रत्वात् । अतएव स्मरन्ति– " शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती " ति । आह च साम्बः " शब्दार्थत्वविवर्त

---

स्ववचनविरोध इति शङ्कापि उक्तयुक्त्यैव निरस्तेत्याह– **अत एवे** ति । वृत्त्यभावे वा शक्त्यभावे वा बोध्यसमानसत्ताकशक्त्यभावे वा नामत्वमनुपपन्नमित्याशङ्क्याह **नच नामे** ति । **मौनं मन्त्रजप** इति । वृत्तिनिषेधपक्षे स्पष्ट एवार्थः । शक्ति निषेधपक्षे सौदर्शनादिमन्त्रस्थपदाना सुदर्शनादाविव शक्त्या बोधनाभावात् त द्विषये मन्त्रजपो मौनप्राय इत्यर्थः । यद्वा अन्यत्रैव मन्त्रस्थपदाना ब्रह्मणि श– क्त्यभावात्तद्विषये मौनमेव कर्तव्यम् , न मन्त्रजप इत्यर्थः । बोध्यसमानसत्ताक शक्तिनिषेधपक्षे तादृगशक्त्यभावान्मौनप्राय इति वा तत एव मौनमेव कार्यमिति वार्थः । **नच विचित्रे** ति । वृत्त्यभावश्शक्त्यभावो बोध्यसमानसत्ताकशक्त्यभावो वा विरोधहेतुः । ननु शब्दस्य ब्रह्माभेदस्त्वयाङ्गीक्रियत एव, ब्रह्मणस्स्वप्रकाश तया तदभिन्नशब्दस्यापि स्वप्रकाशत्व वक्तव्यम् , शब्दप्रकाश्यत्वमेव च शब्द वाच्यत्वमिति शब्दस्य शब्दवाच्यतया तदभिन्नब्रह्मणोपि शब्दवाच्यत्वमवर्जनीय मेवेत्यत्राह- **नचे** ति । यद्यपि शब्दशक्तिविषयत्वमेव शब्दवाच्यत्व ननु प्रकाश्यत्व मात्रमिति अभेदे सत्यपि न शब्दवाच्यत्वसिद्धिः, तथापि अभेदे सत्येवहीय चिन्ता, स एव नास्ति, किन्तु ब्रह्माधिष्ठानकतया तत्तादात्म्यमात्रमित्याह– **शब्दब्रह्मण** इति । **अतएवे** ति । यतो भेदः, अत एव 'शब्दब्रह्म परं ब्रह्मे' ति भेदेन स्मरन्तीत्यर्थः । **शब्दे** ति ।

मानपरमज्योतीरुचो गोपते " रिति । नच ब्रह्म शब्दवाच्यं वस्तुत्वात् घटवदित्यनुमानोदय, काल्पनिकवाच्यत्वेन सिद्ध साधनात् । तदतिरिक्तस्य तु दृष्टान्तेप्यस्मन्मतेनासिद्धे । घटादिषु च वस्तुत्वानभ्युपगमेन साधनविकलत्वाच्च । नच प्रकाशमानत्वादिमात्र वस्तुत्वमिति विवक्षितमिति वाच्यम्,— तथापि प्रकाशमानैश्शुक्तिरजताभिश्शशविषाणादिभिश्चानैकान्त्यात् । नहि तेषां पारमार्थिक वाच्यत्व वोपीष्टम्, स्वयमसत. परमार्थ

---

" शब्दार्थत्वविवर्तमानपरमज्योतीरुचो गोपतेरुद्गीथोभ्युदित पुरोरुणतया यस्य त्रयीमण्डले । भास्वद्वर्णपदक्रमेग्गिततनुस्सतस्वराश्वैर्वियद्वित्र्यास्यन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे।। " इति साम्बकृतसूर्यस्तोत्रस्याय प्रथमः श्लोकः । शब्द रूपेणार्थरूपेण च विवर्त्तमानमित्यर्थं । **नचे** ति । वृत्तिनिषेधपक्षेपि वाच्यत्व साधनशङ्का विरुध्यते, सामान्य विना विशेषासिद्धे, तस्यापि तत एव सिद्धे. । **काल्पनिके**ति। वाच्यत्वमङ्गीकृत्य बोध्यसमानसत्ताकशक्तिनिषेधपक्षे सिद्धसाधनमेव। वृत्तिनिषेधपक्षे शक्तिनिषेधपक्षे च ब्रह्म शब्दवाच्यमिति केषा चित्प्रतीत्या प्रातिभासिकवाच्यत्व ब्रह्मण्यभ्युपगम्य प्रौढ्या सिद्धसाधनोद्भावनमिति मन्तव्यम्। पारमार्थिकमेव शक्यत्व साध्यत इत्यत्राह- **तदतिरिक्तस्ये** ति । **घटादिष्वि** ति। व्यावहारिकसत्त्वन्तु स्वरूपासिद्धमिति भावः । **नचे** ति । आदिपदेन सत्त्व सामान्य विवक्षितम् । **तथापी** ति । सत्त्वसामान्यस्यापि शुक्तिरजतादावेव व्यभिचार इति भावः । **नही** ति । पारमार्थिकपद हेतुगर्भम्, नतु सत्त्वान्तरव्यावर्तकम्, सिद्धान्ते सत्त्वभेदाभावात् । एवञ्च वाच्यत्वस्य सिद्धान्ते पारमार्थिकत्वाच्छुक्तिरजतादौ तन्नेष्टम्, तथाच सिद्धान्ते शुक्तिरजतादौ व्यभिचार इति भावः । यद्वा पारमार्थिकवाच्यत्वसाधन एवेद व्यभिचारोद्भावनम् । प्रपञ्च पारमार्थिकत्व वदतामपि भवता शुक्तिरजतपारमार्थिकत्व नेष्टमित्यर्थः । अत्र च पक्षे मतद्वयेपि व्यभिचार एव । **वोपीष्ट** मिति । युष्माभिरपि नाभ्युपगम्यत इत्यर्थः । **स्वयमसत** इति । सिद्धान्तिन प्रति व्यभिचारोद्भावने भवद्भिश्शुक्तिरजतादेः प्रातिभासिकत्वानभ्युपगमात् तेषामसत्त्वमेवेष्टव्यम्, अतः कथमसतः

धर्मानाधारत्वात् । किंच यदि वाच्यत्व वाच्यम् , ततस्तस्यापि वाच्यत्वान्तरमेव तस्यापीत्यनवस्था । यदि पुनरवाच्यं नेनैवानैकान्त्य दुष्परिहरम् । ब्रह्म न शब्दवाच्य निर्विशेषत्वादिति, प्रत्यनुमानच । आगमे च परिपन्थिनि कथमनुमानगन्धः । तथाहि— " यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह । " " न शब्दगोचरो यस्य योगिध्येय पर पद " मित्यादिश्रुतिस्मृति शतैर्बाधस्स्फुट एव । नच सामान्यपरत्वम् , ब्रह्मस्वरूपोपदेश परतयैव प्रवृत्ते । नच कतिपयशब्दनिषेधपरतया सङ्कोच, तथा सति सर्ववस्तुसाधारण्येनातिशयासिद्धेः । असङ्कोचे चास्म दुक्तविषयव्यवस्थायास्सङ्ग्राह्यत्वात् । तदेतत्सर्वमभिप्रेत्य भगवान् पराशर – " प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसा मात्मसवेद्य तज्ज्ञानं ब्रह्मसञ्ज्ञितम् ॥ " इति । अतो न ब्रह्म कस्य चिदपि शब्दवाच्यमिति ।

---

सदाधारत्वमित्यर्थः । पारमार्थिकवाच्यत्वव्यभिचारोद्भावने मतद्वयेपि व्यभिचारोपपादनमेव । किञ्चेत्या दि । अनवस्थाभयाद्वाच्यत्वे वाच्यत्वासम्भवादनैकान्त्यमित्यर्थ । न शब्दवाच्य मिति । व्यावहारिकवाच्यत्वाङ्गीकारिणोपि तस्य मिथ्यात्वान्न शब्दवाच्यत्वमिति प्रत्यनुमानमुपपद्यते । घटो व्यतिरेक इति दृष्टान्तः। इतिशब्द: प्रकारार्थः । एवविधानुमानान्तराणि स्वप्रकाशत्वावेद्यत्वशक्यतावच्छेदकधर्मवदन्यत्वादिलिङ्गानि विवक्षितानि । आगमबाधमाह– आगमेचे ति । आगमादेरपि वृत्तिनिषेधशक्तिन्निषेध: पारमार्थिकशक्तिनिषेधो वार्थतया विवक्षितः । आसामर्थवादत्वमाशङ्क्य विधिशेषत्वाभावान्नार्थवादत्वमित्याह–नचे ति । तत्स्वरूपपरता च सिद्धान्तिनाप्यङ्गीक्रियत एवेति भाव । नच कतिपये ति । कतिपयशब्दवाच्यत्व ब्रह्मणोङ्गीकृत्य निषेधस्य कतिपयशब्दवाच्यत्वविषयतया सङ्कोचो न युक्त इत्यर्थः । नन्वसङ्कोचेन निषेधे निर्देशोनुपपन्न इत्यत्राह- असङ्कोचेन चे ति। असङ्कोचस्यैव कर्तव्यत्वे सिद्धे निषेधस्य वृत्तिविषयत्व शक्तिविषयत्व

अत्रोच्यते,– यदुक्त समस्तविशेषराहित्ये ब्रह्मणि निमित्ताभावेन न शब्दप्रवृत्तिरिति, तत्र सविशेषत्वोपपादनादेव हेतुरसिद्धः । यथा च निमित्त निमित्तान्तरमन्तरेण शब्दवाच्य भवति तथा स्वरूप मपीति निरूप्यता त्वया । येषा शब्दाना यत्र यन्निमित्तद्वारेण

---

पारमार्थिकशक्तिविषयत्व वा ग्राह्यम्, तथाच शाखाचन्द्रन्यायेन लक्षणया व्यावहारिकशक्त्यैव वा स्वरूपोपस्थितिसम्भवात् न कश्चिद्विरोध इति भाव । अत्रैव विकल्पेनान्यतरपक्षपरखण्डो ग्रन्थ इति व्याख्यातम् । अथवा खण्डशो वा तत्तत्पक्षपरो ग्रन्थः । तथाहि– वृत्तिमात्रनिषेधक आह निर्धूते ति । शक्ति निरासवाद्याह- नहीं ति । वृत्तिसामान्यनिषेधाद्याह- नयावेद्य इत्यारभ्य स्ववचन विरोध इत्येतदन्तम् । नच नामे ति वाक्य मतद्वयसाधारणम् । अतएवहीं त्यादिवाक्य अन्यथे त्यादिवाक्यञ्च वृत्तिनिषेधकस्य । नच विचित्र त्यादि वाक्यन्तु साधारणम् । वाच्यत्वाभाववादिन एकदेशी पारमार्थिकवाच्यत्वनिषेध वाद्याह– सिद्धसाधना दिति । साधनवैकल्योद्भावनम्, किञ्चेत्यादिक सर्व साधारणम् ।

तदेव बहुधा निरस्त पूर्वपक्षमनुवदति—यदुक्त मिति । अत्र सिद्धान्तिना पारमार्थिकशक्तिरेव साध्यते । प्रवृत्तिनिमित्ताभावेपि न दोष इत्याह- यथे ति । निर्विकल्पकस्य शब्दे तज्जनकत्वस्य च त्वयाङ्गीकारात्प्रवृत्तिनिमित्त विनापि शक्त्य ङ्गीकारे न किंचिद्बाधकमिति भाव । युक्त चैतदित्याह येषा मिति । येषा शब्दा ना निमित्तद्वारेण प्रवृत्ति तेषा तदभावे निवृत्तिरित्युक्तेरसम्भव, सर्वत्र कस्यचि न्निमित्तस्य सत्त्वात् । अत उक्तम्– यन्निमित्त ति । एव सति निमित्ते प्रवृत्तिर्न स्यादित्यत उक्तम् यत्र ति । अत्र निमित्तद्वारा प्रवर्तमानशब्दानामेव हि निमित्ता भावे निवृत्तिः, नतु निर्निमित्तकशब्दानामपि, अतो ब्रह्मणि निर्निमित्तकशब्द प्रवृत्तौ न विरोध इत्यतात्पर्यमिहोपजीव्यम् । शक्तिनिवृत्तिप्रयोजकनिमित्तनिवृत्ति शिक्षण यत्र त्यादिना क्रियत इति मन्तव्यम् । नन्विद व्याहतमिव प्रतिभाति । यत्र यन्निमित्तपुरस्कारेण प्रवृत्तिस्तत्र तदभावासम्भवात्, इति चेन्न,– यत्र ति ।

प्रवृत्ति तेषामेव हि तत्र तदभावे निवृत्ति । अन्यादृशस्तु शब्दो ब्रह्मणि न दृश्यत इति चेत्? किं कुर्मः, सङ्केतयता व्यवहाराय तथाविधशब्दोऽपि । यच्च- जडेषु वेदशब्दानां नावकाश,

---

यद्धर्मावच्छिन्न इत्यर्थस्य विवक्षितत्वात् । अत एव घटत्वनिमित्तपुरस्कारेण द्रव्ये प्रवर्तमानो घटशब्द, पटरूपद्रव्ये तदभावान्निवर्तते । घटत्वस्याद्रव्यत्वात्तत्र तदभावेपि न ततो निवर्तते। ननु यद्धर्मावच्छिन्न इत्यस्य यदि यद्धर्मवत इत्यर्थ, तदा प्रमेयत्ववति घटे घटत्वनिमित्तद्वारा प्रवर्तमानस्य घटशब्दस्य प्रमेयत्ववत्यैव घटत्वे निमित्तशून्येपि प्रवृत्तेर्व्यभिचार, किंच नानार्थेषु सैन्धवादिशब्देषु लवणत्वादिरूपनिमित्ताभावेपि तुरगादिषु प्रवृत्तेर्व्यभिचार, यदि धर्मस्य वाच्यतावच्छेदकत्वं विवक्ष्यते, तदा द्रव्यत्वस्य वाच्यतावच्छेदकत्वाद्याश्रयासिद्धिः, इति चेन्न — यद्धर्मवति प्रवृत्तिर्यन्निमित्तद्वारैव तद्धर्मावच्छिन्ने तदभाव इत्यर्थस्य विवक्षितत्वात्। सच धर्मो द्रव्यत्वादिरेव। नतु प्रमेयत्वादि । नानार्थेषु तु तुरगाद्यन्वे सति द्रव्यत्वादि । तथा च यच्छब्दवाच्यत्वं यद्धर्मसामानाधिकरण्यावच्छिन्नयादृशनिमित्तव्याप्यताकं तद्धर्मवति तादृशनिमित्तनिवृत्तौ तच्छब्दवाच्यत्वनिवृत्ति । भवति हि व्यापकनिवृत्त्या विशेषणवति विशिष्टनिवृत्तौ विशेष्यनिवृत्ति । अतो द्रव्यत्वे सति घटपदशक्तिविषयत्वस्य घटत्वव्याप्यतया पटरूपद्रव्यान्निमित्तनिवृत्तौ घटपदशक्तिर्निवर्तते। ननु ब्रह्मादिशब्दास्सन्निमित्तका एव, "बृहति बृंहयती" त्याद्यनुशासनात् । निर्निमित्तकस्तु शब्दो ब्रह्मणि नास्त्येवेति शङ्कते- **अन्यादृशस्त्वि** ति। **संकेतयता** मिति। **तथाविध** – निर्निमित्तक । नच सकेतस्य विषयोपस्थितिपूर्वकत्वात्तस्याश्च शब्दान्तराधीनत्वेनानवस्थेति वाच्यम्,— तेन तर्कोपस्थितेर्लक्षणाङ्गीकारेण तत्रैव सङ्केते बाधकाभावात् । वस्तुतस्तु उपहितशक्तेनैव पदेन तदन्तर्गतस्वरूपस्याप्युपस्थितौ तत्र सङ्केतस्सम्भवत्येव । नच उपहितशक्तेन पदेन लक्षणया स्वरूपव्यवहारसम्भवान्न सङ्केत इति वाच्यम्,– निमित्तवदेव मुख्यार्थसम्बन्धादेरप्यभावेन लक्षणाया असम्भवात् । एवं गत्यन्तराभावाभिप्रायेणैव किं कुर्म इत्युक्तम् । अत, स्वरूपे येन केनापि यस्य कस्याप्यनुशिष्टस्य शक्तेतसम्भवेन

नच स्वयम्प्रकाशे प्रकाशकापेक्षेति, तच्च स्वप्रकाशस्यापि ज्ञाना न्तरवेद्यत्वस्थापनादेव परिहृतम् , यच्चोपदेशाना वेदान्ताना च कल्पितोपप्लवप्रशमनमात्रार्थत्वमुक्तम् , तदपि तदा शोभते, यदि स्वरूपमनिर्देश्योपरागाश्शमयितु शक्येरन् । अन्यथा ब्रह्मणो निर्विशेषत्वमपि नोक्त स्यात् । ननु कि ब्रह्मणो निर्देशेन, विशेषा एव प्रतीयमाना मिथ्यात्वेन ज्ञाप्यन्ते, ब्रह्म तु स्वप्रकाश तिष्ठ त्येवेति चेत् ? तदपि न, " निर्गुण निरञ्जन " मित्यादीना ब्रह्मणो विशेषणतयैव प्रयोगात् । प्रकाशमानमात्रनिषेधे च ब्रह्मणोपि निषेधप्रसङ्गात् । यदि ब्रह्मव्यतिरिक्तमिति विशेष्येत, तदापि सिद्धस्तन्निर्देश. । प्रतियोगितयेति तु विशेषः । यच्चोप देशादे. प्रत्यभिज्ञापकत्वमिति, ततः किमायातमवाच्यत्वस्य ?

---

तद्वाच्यत्वमवर्जनीयमेवेत्यपि द्रष्टव्यम् । ज्ञानान्तरवेद्यत्वस्थापना दिति । अवे द्यत्वभङ्गे ज्ञानान्तरवेद्यत्वस्य स्थापनादेव " अवेद्येे वेदकाना नावकाश " इत्ये तत्परिहृतम् । स्व प्रति स्वसत्तयैव प्रकाशमानत्वेपि पुरुषान्तर प्रति तदीय ज्ञानेनैव प्रकाशमानतया ज्ञानान्तरवेद्यत्वस्थापनादेव, " नच स्वप्रकाशे प्रका- शापेक्षे " त्येतच्च निरस्तमित्यर्थः । अपी ति– प्राधान्येन स्थाप्यमानत्व सूच्यते । ननु ब्रह्मज्ञानाभावे कथमविद्यानिवृत्ति. ? ब्रह्मज्ञानस्यैव मोक्षसाधनतया श्रुत त्वादित्यत्राह– ब्रह्मत्वि ति । विशेषमिथ्यात्वज्ञानसहकृतेन स्वरूपप्रकाशेन निवृत्तिरिति भाव । विशेषणतये ति । ततश्च ब्रह्मणो विशेष्यत्वमवर्जनीयमिति भाव. । किञ्च, कि प्रकाशमानमात्रस्य निषेध , उत ब्रह्मव्यतिरिक्तस्य ? नाद्य इत्याह प्रकाशमानमात्रे ति । द्वितीये दोषमाह– यदी ति । प्रतियोगितये ति । अतस्तन्निर्देशाभावे तदतिरिक्तत्वप्रतीत्यसम्भवात्,तन्निर्देश आवश्यक इति भावः । विशेष इति । पूर्वं ब्रह्म निर्दिश्य प्रपञ्चमिथ्यात्वबोधने सम्भवत्यपि निर्गुणमित्यादौ ब्रह्म निर्देशो दृश्यत इत्युक्तम्, इदानी त्वया ब्रह्मव्यतिरिक्तस्य मिथ्यात्वबोधना ङ्गीकारे ब्रह्मनिर्देशाभावे प्रपञ्चमिथ्यात्वबोधनमेव न सम्भवतीति पूर्वोक्तयुक्ते र्विशेषसिद्ध्यतीत्यर्थः । ततः किमायात मिति । प्रत्यभिज्ञापकत्वेपि वाच्यत्व

पूर्वप्रतिपन्नेपि शब्दप्रवृत्तिमात्रस्यानभ्युपगमात् । यत्तु शाखा चन्द्रन्यायेन सद्ब्रह्मादिशब्दैरुपलक्षणभूतैर्न ब्रह्मणस्स्पर्श इति, तदप्यसत् । उपलक्ष्योपलक्षणयोरपि बोध्यबोधकभावलक्षणस्स्पर्शस्य सर्वत्र दुस्त्यजत्वात् । तावतैव च शब्दवेद्यत्वसिद्धेः । लक्षणामात्रन्तु तत्र न तु वाच्यत्वमिति चेत् ? किमतः तावतापि शब्दवेद्यत्वस्य स्थितत्वात् । मुख्यार्थसम्बन्धादेश्च लक्षणानिमित्तस्य लाक्षणिकशब्देनाप्यपेक्षणीयत्वाच्च । एतावन्मात्रं शब्दवेद्यत्वमिष्यत इति चेत् ? किमन्यन्नेष्यते ? न तावन्निमित्ताभावादे

---

निर्बाधमेवेत्यर्थः । तदेव विवृणोति- पूर्वे ति । पूर्वप्रतिपत्तिर्हि विधिविरोधिनी नतु शक्तिविरोधिनीति भावः । गूढाभिसन्धिराह- तदप्यस दिति । अभिसन्धिमजानानश्शङ्कते– लक्षणामात्र मिति । नहि वयं शब्दबोध्यत्वं निषेधामः, किन्तु वाच्यत्वमात्रम् , ततश्च शाखावद्वा लक्षणया वा बोधेपि न दोष इत्यर्थः। अभिसन्धिमुद्घाटयन्नेव पूर्वोक्तं परिहारं स्मारयति- किमत इति । ननु शाखावद्बोधकत्वपक्षे कथं शब्दवेद्यम् , व्यक्त्या बोधनाभावात् ? कथं किञ्चिद्बोधनमात्रेण शब्दवेद्यत्वे घटशब्देन गुणित्वेनानुमीयमानस्याप्याकाशस्य घटशब्दवेद्यत्वप्रसङ्गादिति चेन्न् ? शाखावद्वाक्यस्यापि तत्तात्पर्यकतया वृत्तिमत्पदतुल्यत्वात् । ननु घटशब्देनायमाकाशमनुमिनोत्विति तात्पर्येण यदि घटशब्दः प्रयुज्यते तदा तस्यापि वृत्तिमत्पदतुल्यतया आकाशस्यापि तेनानुमीयमानस्य तद्वेद्यत्वप्रसङ्ग इति चेन्न,— घटपदेनानुमीयमानस्य घटपदसमभिव्याहृतपदान्तरार्थान्वययोग्यताविरहात् । चन्द्रवदुपलक्षितस्य ब्रह्मणः पदान्तरार्थान्वयसत्त्वात् येनैव विशेषेण तद्योग्यता तेनैव शब्दवेद्यत्वसिद्धेः । दूषणान्तरमाह–मुख्यार्थे ति। ननु उपहितेनानुपहितस्य स्वाभाविकाभेदरूपस्सम्बन्धोऽस्तीति चेन्न,– तथासति वाच्यत्वस्यैवापत्त्या लक्षणाया असम्भवात् । आदिपदेन लक्ष्यतावच्छेदकं गृह्यते । लाक्षणिकेने त्येतदुपलक्षकस्याप्युपलक्षणम् । तावतापि शब्दवेद्यत्वस्य स्थितत्वादित्यत्र शङ्कते- एतावन्मात्र मिति । उपलक्षकेण वा बोधनमिष्यत इत्यर्थः । अभिसन्धिमुद्घाटयति- किमि ति। शक्त्याबोधनं कुतो नेष्यत इत्यर्थः।

रित्युक्तम् । न च वाङ्मनसनिषेधश्रुतिर्लक्षणामनुजानातीति नियामकं पश्याम. । विरोधपरिहाराय वृत्तिविशेषविषयत्वेन व्यवस्था क्रियत इति चेत् ? तर्हि लक्षणावृत्तिरेव निषिद्ध्यताम् , नियामकाभावात् । अस्मन्नयेन सर्वप्रमाणाविरुद्धेनापरिच्छेद्यमाहात्म्य तदर्थमातिष्ठस्व । अतस्सर्वप्रकारशब्दवेद्यत्वनिषेधस्य दुश्शक

---

शक्यनङ्गीकारे श्रुतिरेव हेतुरित्यत्राह- नचे ति । वाङ्निवृत्तिरेव हि श्रूयते, नतु शक्तिनिवृत्तिरितिभाव· । अनेन अभिसन्धिरुद्घाटितो भवति । ननु 'अप्राप्ये' ति शक्तिरव निषिद्ध इति चेन्न,- "मनसा सहे" ति श्रुतेर्मनस्साधारणसम्बन्धस्यैव वाच्यत्वात् , मनसो वृत्त्यात्मकशक्त्यसिद्ध्या परिच्छिद्यतद्बोधनसामर्थ्याभाव स्यैवाप्राप्तिशब्देन विवक्षणीयत्वात् । एतदाभिप्रेत्यैव वाङ्निषेधश्रुतिरित्यनुक्त्वा वाङ्मनसनिषेधश्रुतिरित्युक्तम् । किंच, शक्तिरूपप्राप्तिनिषेधे लक्षणारूपप्राप्तिनिषेधोपि कथं न स्यात् ? ननु शक्तिर्हि शब्दार्थयोस्सम्बन्ध·, नतु लक्षणा , तस्याश्शक्यार्थसम्बन्धत्वेन परम्परासम्बन्धत्वादिति चेत् ? तर्हि सम्बन्धान्तरसत्त्वेपि शक्तिरूपसम्बन्ध एव निषिद्ध्यत इति कुतोवगम्यते ? शब्दस्यार्थावबोधकत्वे शक्तिरूपसम्बन्धस्यैव प्रयोजकतया तदभावस्यैवार्थानवबोधरूपनिवृत्तिप्रयोजकत्वादिति चेत्? तथासति लक्षणाया अपि बोधप्रयोजकत्वात् सापि निषेध्येति तुल्यम् । अन्यथा निवृत्त्यसिद्धे· । नच निवृत्तिपदं शक्त्यधीनबोधाभावपरम् , सङ्कोचकाभावात् । उपक्रमस्थत्वेन प्राधान्येनच तस्यैवानुरोद्धव्यतया तदनुसारेणैवाप्राप्तेर्वर्णनीयत्वात् । एतदेवाभिप्रेत्योक्तं लक्षणामनुजानाती ति- नियामकं पश्याम इति । विरोधे ति । "यत" इति निर्देशस्य वाङ्निषेधस्य च विरोधपरिहारायेत्यर्थः । नियामकाभावा दिति । तथा च शब्दबोध्यत्व सामान्यमेव त्वत्पक्षे निषेध्यं स्यादिति भाव· । श्रुतेः कथं निर्वाह इत्यत्राह— अस्मन्नयेने ति । एवं शक्तिनिषेधासिद्धेरविद्योपरागप्रशमनपरेषु वाक्येषु सदादिशब्दैश्शक्त्यैव स्वरूपनिर्देशः कर्तव्य इति स्थितम् , उक्तहेतोरेव पूर्वपक्षोक्तस्ववचनविरोधोपि दुस्तर इत्याह— अत इति । स्वरूपमनिर्दिश्येति शेषः । एवं श्रुतेः शब्दवेद्यत्वसामान्यनिषेधपरत्वस्य त्वया वाच्यत्वादेव ब्रह्म श्रुतिबला

त्वात् स्ववचनविरोधो दुष्परिहार । यत्तु नामकीर्तनाववनां सगुणब्रह्मविष.येति, तत्तादत्सत्यम् , यदि तदतिरिक्तं ब्रह्म नाभि सन्दध्याः । यश्चासौ 'मौन म..जप' इति व्याहृतोपदेश, सोपि मौनप्रशंसापरश्चेदुपपद्यते, नतु मन्त्रजप विहित प्रतिषेद्धु क्षमते । नचाधिकारिविशेषणविषयव्यवस्था, समाधिनिष्ठमधि कृत्यैव तद्विधानात् । असम्प्रज्ञातसमाधिरपि न शब्दवाच्यता विरोधी, अपितु केवल तदातनशब्दानुसन्धानपरिपन्थीति समाधि शास्त्रविद । यत्तु विचिलनामरूपभाक्त्वश्रुतिस्तत्कार्योपहितविषय तयेति, तदस्माभिरपीष्यत एव, तथापि तदुपहितब्रह्मण्यपि तत्त न्नामपर्यवसानाविवक्षा दुर्वारा । अन्यथा "बहुस्या" मिति

---

च्छब्दवेद्य न भवतीति प्रतिज्ञाने प्रतिज्ञास्थब्रह्मपदनिषेधयोर्विरोध इत्यर्थ । यत्त्वि ति । यदि सगुणब्रह्मातिरिक्त किञ्चिन्निर्गुण ब्रह्म ब्रूया, तदा नाम कीर्तनविधेस्सगुणब्रह्मविषयत्वमवाच्यत्वविधेर्निर्गुणविषयत्वमिति वक्तु शक्येत, नच तदस्ति, परमार्थतो निर्गुणस्यैव ब्रह्मणो मिथ्याभूतगुणाश्रयत्वाङ्गीकारा दित्यर्थः । नाभिसन्दध्या इति पाठे सगुणपदव्यावर्तनीय निर्गुण ब्रह्म यदि नाभिसन्दध्या, किन्तु वस्तुतस्सगुणमेव ब्रह्म तादृशमेव च नामविषय इत्यभि सन्दध्या, तदास्मन्मतप्रवेशात्त्वदुक्त सम्यगेवेत्यर्थ. । विषयव्यवस्थे ति । जपविधेः मौन मन्त्रजप इत्यस्य चेति शेष. । मौन मन्त्रजप इत्यस्य समाधिनिष्ठमुमुक्षुविषयत्वात्स्वरूपे जपनिषेधविषयत्व जपविधे. काम्यविषयत्वा त्सगुणविषयत्वामित्यर्थ । समाधी ति । "य पुनरेत त्रिमात्रेण ओमित्य नेनैवाक्षरेण परमपुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एव ह वै पाप्मभिर्निर्मुक्तस्स सामभिरुन्नीयते ब्रह्मलोक" "ओ- मित्यात्मान युञ्जीत" इत्यादिभिस्समाधिनिष्ठमधिकृत्यैव मन्त्रविधानादित्यर्थः । तत्तदुपहिते ति । उपधेयविशेष्यभूतब्रह्मस्वरूप इत्यर्थ । विवक्षे ति । नामरूपभाक्त्वश्रुतेरिति शेष । दुर्वारे ति । ततश्च तदतिरिक्तब्रह्मणोसिद्धे रेवावाच्यत्व दुरुपपादमिति भाव. । अन्यथे ति । ब्रह्मणस्तत्कार्यवाचिशब्दे

सङ्कल्पस्य, "तन्नामरूपाभ्यां व्याक्रियते" त्यादेश्च दुर्निर्वहत्वात् । शब्दनत्त्वस्य ब्रह्मातिरेकसाधन त्विष्टमेव । विवर्तता तु प्रकृतानुपयोगिनी पराकृता च । यत्तु शब्दवाच्यत्वसाधने काल्पनिकवाच्यत्वाभ्युपगमात् सिद्धसाधनत्वमुक्तम् , तदपि स्ववाधपर्यवसितम् , घटाद्यविशेषप्रसङ्गात् । घटादीनां शब्दवाच्यत्वमभ्युपगम्य ब्रह्मणि तन्निषेधप्रवृत्तत्वात् । घटादितुल्यशब्दवाच्यत्वाभ्युपगमे च विवादाभावात् । नहि वयं ब्रह्मणि लोकसिद्धातिरिक्तप्रकारं वा वाच्यत्वमिच्छाम, येन तन्निषेधसिद्धिः । नच वाच्यत्वमात्रस्य दुर्निरूपतया ब्रह्मणि तदभावः सामान्यतो दुर्निरूपत्वप्रक्रियायाः प्रपञ्चमिथ्यात्वसाधकानां च निरस्तत्वात् । अत एव वस्तुत्वादिहेत्वसिद्धिरपि परिहृता । यत्तु प्रकाशमानत्वादिति हेतोश्शुक्तिरजतादिभिरनैकान्त्यमिति, तत्रापि प्रकाशमानस्य सर्वस्याधिष्ठानारोप्यसम्बन्धादेश्शब्दवाच्यत्वासिद्धेः तदतिरिक्तस्य

---

वाच्यत्वाभावे तद्वाचकब्रह्मशब्देन 'ब्रह्मणा' मिति सामानाधिकरण्यायोगात् , "तद्व्याक्रियते" ति नामरूपव्याकरणकर्मत्वप्रतिपादनायोगाच्चेत्यर्थं । **स्वबाधपर्यवसित** मिति । स्वाभ्युपगतावाच्यत्वपरित्यागपर्यवसितमित्यर्थः । घटाद्यविशेषेपि कथं बाधपर्यवसानमित्यत्राह— **घटादीना** मिति । ननु घटादितुल्यवाच्यत्वं नास्माभिर्निषिध्यते, किन्त्वन्यादृशमेवेत्यत्राह— **नहि वयं** मिति । ननु घटादितुल्यस्यैव वाच्यत्वस्य मिथ्यात्वाद्ब्रह्मणि तदभावस्साध्यते, घटादेश्चानधिष्ठानत्वान्न तत्र तदभाव इति न घटाद्यविशेषप्रसङ्ग इत्येकदेशिमतं दूषयति **नचे** ति । अयं च सिद्धसाधनोद्धारः पारमार्थिकवाच्यत्वप्रतिषेधवादिनं प्रत्येव , मतान्तरे घटाद्यविशेषासिद्धेः । अस्तु वा वाद्यन्तरं प्रत्यपि, तत्र च यदि कल्पितं वाच्यत्वमिष्यते तदा सर्वत्राधिष्ठानसत्ताया अविशेषाद्घटाद्यविशेष इत्येवम्भावो बोध्यः । **तत्रापी** ति । तत्रापीत्यतः पूर्वं तन्नेति पूरणीयम् । **तत्र**—शुक्तिरजतादौ । अन्यथाख्यातिमतेनाह— **सर्वस्ये** ति । अधिष्ठानस्यारोप्यस्य तत्सम्बन्धस्य च वाच्यत्वादित्यर्थः । आदिपदेन यथार्थख्यातिवाद्यभिमतशुक्तिसम्पृष्टरजतावयवो गृह्यते ।

कस्यचिदस्माभिः प्रकाशमानत्वानभ्युपगमात् । असद्व्यवहारप्रसङ्ग स्यान्यत्र निस्तीर्णत्वात् । यत्तु वाच्यत्वधर्मेणानैकान्त्यमुक्तम् ; तदप्यसत्, तस्यापि वाच्यत्वशब्देन वाच्यत्वात् । अन्यथा वाच्यत्वमिति वक्तुमशक्यत्वात् । नचानवस्था, घटादिगत वाच्यत्वस्य वाच्यत्वगतवाच्यत्वस्य च वाच्यत्वशब्दवाच्यसामान्य रूपेणैकतया तद्‌तिरिक्तगवेषणाभावात् । प्रतिवस्तुनियतशब्द व्यापारभेदेपि दोषाभावात । स्वपरनिर्वाहकसमाधिं च स्वप्रकाश वादादौ परिगृहीत किमत्र विस्मरसि ? यत्तु निर्विशेषत्वादिति प्रत्यनुमानम ; तत्र केषाचित् स्वरूपासिद्धिः । सिद्धानामपि स्वयम्प्रकाशत्वादीना स्ववचनविरोधादिभिर्निरास । ब्रह्मेति धर्मि निर्देशात्तत्पर्यवसितसाध्यहेतुनिर्देशाच्च । अन्यथा आश्रयासिद्ध्य नन्वयस्वरूपासिद्ध्यादिदोषप्रसङ्गात् । मुख्यवृत्तिनिषेधस्साध्यते, लक्षणया तु धर्मिस्वरूपादिनिर्देश इति चेन्न,- ब्रह्म न लक्ष्य निर्वि शेषत्वादित्यपि वक्तु शक्यत्वात् ।

---

शशविषाणादिभिरनैकान्त्यं परिहरति— असद्व्यवहारे ति । तत्रापि प्रकाश मानशशविषाणसम्बन्धाना सत्यत्वमेवेति भावः । नचानवस्थे ति । घटादौ प्रवृत्तिनिमित्तभेदाद्वाच्यत्वभेद, ततश्च घटादिगतवाच्यत्वे वाच्यत्वगतवाच्यत्वे च वाच्यत्वमेकमिति तेन रूपेणानुगतीकृतेषु वाच्यत्वशब्दवाच्यत्वमेकमेव, ततश्च घटादिवाच्यत्वगतमेव स्वस्मिन्नपि वाच्यत्वमिति नानवस्थेत्यर्थ । वाच्यत्व शब्दवाच्यत्वशब्दवाच्यसामान्य वाच्यत्वत्वम्, यदिच्च प्रवृत्तिनिवृत्ताभेदेऽया- श्रयभेदाद्वाच्यत्वभेदः तदानीमपि प्रामाणिकत्वान्नानवस्था दोषायेत्याह— प्रति वस्त्वि ति । नन्वेवमप्यात्माश्रय इत्यत्राह- स्वपरे ति । अन्यथे ति । आश्रया सिद्धिराश्रयाज्ञानात्, अनन्वयः साध्यविशिष्टपक्षप्रतिपादनाभावः पर्वतो धूम वत्त्वादीतवत्, स्वरूपासिद्धिर्हेतो. पक्षे अज्ञानात् । असाधारण्य परिहरति—

सर्वस्य च ब्रह्मव्यतिरिक्तस्य येन केनापि शब्देन लक्ष्यत्वसिद्धेर्न सपक्षत्वप्रसङ्गः । माभूल्लक्ष्यत्वमपीति चेत् ? तर्हि धर्मिनिर्देशादित्यागे कथमनुमानकथा । " यतो वाचो निवर्तन्त " इत्यादिकं तु न ब्रह्मणश्शब्दवाच्यतां बाधते, तस्य शतगुणितोत्तरक्रमेण ब्रह्मगुणानन्त्यं प्रतिपाद्य तथाविधापरिच्छेद्यत्वनिबन्धनवाङ्निवृत्तिप्रतिपादनपरत्वात् । 'आनन्दं ब्रह्मणो विद्वा'निति व्यतिरेकनिर्देशेन च गुणविषयत्वं व्यक्तम् । अन्यथा वाच्यत्वमात्रनिषेधे त्वत्रत्ययच्छब्दादेस्समुद्रघोषत्वप्रसङ्गः । एवंच यत्र गुणप्रकर्षप्रसङ्गमन्तरेणैव शब्दवाच्यत्वं निषिद्धं तत्रा प्ययमेव शास्त्रार्थोऽनुगमयितव्यः । नचैवंविधा वाचोनिवृत्तिर्वस्त्व न्तरेषु विद्यते, येन कतिपयशब्दमात्रागोचरत्वे अतिशयासिद्धिं शङ्केथाः । या पुनस्तवासङ्कोचेन विषयव्यवस्थाभिमता, साप्याशा मात्रसिद्धा, लक्षणावृत्तेर्ब्रह्मणि काल्पनिकवाच्यत्वस्य वा दुस्त्यज त्वात् । अन्यथा स्ववचनविरोधादेः प्रतिपादितत्वात् ।

अवाच्यमिति वाच्यं चेत् ब्रह्मवाच्यत्वमृच्छति ।
अवाच्यमित्यवाच्यं चेत् ब्रह्मवाच्यत्वमृच्छति ॥

---

सर्वस्य चे ति । न ब्रह्मण इति । अस्याः श्रुतेः गुणविषयत्वादिति भावः । वाच्यत्वनिषेधपरत्वमप्यसिद्धमित्याह– तस्ये ति । असङ्कोचेने ति । वाच्यत्व निषेधस्येति शेषः । ब्रह्मणि, अनुपहित इति शेषः । धर्मिसमानसत्ताकवाच्यत्वा भावेपि विषमसत्ताकवाच्यत्वं वा लक्षणा वाङ्गीकार्या, ततश्च वाङ्निवृत्तिश्रुते र्नासङ्कोचसिद्धिरित्यर्थः । अनुपहितबोधनाङ्गीकारे बाधकमाह– अन्यथे ति । अवाच्य मिति । अवाच्यपदेनेत्यर्थः । नचावाच्यमित्येतद्वाक्यमेव, नच तथापि अवाच्यमिति वाक्यैकदेशभूतनञ्वाच्यत्वमस्तीति वाच्यम्, नञः पर्युदासलक्ष कत्वात्, इति वाच्यम्,– अवाच्यमित्यत्र प्रातिपदिकार्थमात्रे विहितप्रथमा वाच्यत्वस्यावर्जनीयत्वात् । इदञ्चोपलक्षणं लक्ष्यादिपदे प्रत्ययवाच्यत्वमावश्यक

यत्तु- "प्रत्यस्तमितभेद" मित्यादि, तदपि परिशुद्धात्म स्वरूपोपदेशपरमिति प्रकरणानुसारेण व्याख्यात भाष्ये । भवतु वा तस्य परब्रह्मविषयत्वम्, तथापि न सर्वशब्दवाच्यत्वनिषेधशङ्का, स्ववचनविरोधादेरत्रापि दुर्निरासत्वात् । येन महर्षिणैवमुक्तन्- "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगवच्छब्द स्सर्वकारणकारणे॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वित । शब्दोयं नोपचारेण ह्यन्यत्र ह्युपचारत. ॥ एवमेष महाशब्दो मैत्रेय भगवा निति । परमब्रह्मभूतस्य वासुदेवस्य नान्यग ॥" इति, स कथ ब्रह्मणश्शब्दवाच्यत्व प्रतिक्षिपेत् । नच त्वदुक्ता एव श्रुतिस्मृतय, "बृहति बृहयति तस्मादुच्यते पर ब्रह्म" "तस्यो दिति नाम" "तस्योपनिषदहरित्यधिदैवत" "तस्योपनिषद हरित्यध्यात्म" "सर्वाधार धाम विष्णुसज्ञ" मित्यादिश्रुतिशतै स्तत्तच्छब्दानां ब्रह्मणश्च नामनामिभावेनैव व्यपदेशात् । "ओ मिति ब्रह्मे" त्यादिना प्रणववाच्यत्वम् । स्मरन्ति च "नतास्स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" "वचसा वाच्यमुत्तमम्" इति । आहच स्वयमेव— "वेदैश्च सर्वैरहमेव वेद्यः" "सर्वे वेदा यत्पदमामनन्ती" त्यादि ।

अतस्सर्वश्रुत्याद्यविरोधाय स्ववचनविरोधादिपरिहाराय मुमुक्षूपा देयब्रह्मनामवर्गसरक्षणायापरिच्छेद्यमाहात्म्यादिनिबन्धनैव ब्रह्मणि वाचोनिवृत्तिश्श्रुतिस्मृतिभिर्विवक्षितेति न ब्रह्मणि शब्दवाच्यत्व मात्र प्रतिक्षेप्तु शक्यमिति ।

इति शतदूषण्यां शब्दावेद्यत्वनिरासः

**पञ्चचत्वारिंशोवादः ॥४५॥**

---

मित्यपि द्रष्टव्यम् । शुद्ध इति । नन्विय स्मृतिरुपहितविषयैव, नच शुद्धपदवि- रोध., अविद्यामनङ्गीकुर्वता भवता हेयगुणराहित्यपरत्वस्य वाच्यतया तस्यैव

मयाप्यङ्गीकारे दोषाभावादिति चेन्न,– अविद्यामङ्गीकुर्वता त्वया शुद्धपदस्य तदनुपहितपरत्वस्यैव वाच्यत्वात् , इति भावः ।

अत्रायमस्मदाचार्याणां निष्कर्षः—

" ब्रह्मण्यशब्दवाच्ये स्याद्वचसा वाच्यमुत्तमम् ।
इत्यादिमानविद्वेषो वाच्यतोपहितस्य चेत् ॥
स्वरूपस्यापि वाच्यत्व तदन्तर्भावतो भवेत् ।
उपधानेन शून्यस्यावाच्यत्वे व्याहतिर्भवेत् ॥
वाच्यत्व ब्रह्मणो वाच्येनुपधाने न लक्षणा ।
समानसत्ववाच्यत्वाभावे तौल्य घटादिना ॥
निमित्तोपहिते शब्दस्वरूप चेन्न गोचर. ।
यतो वाचो निवर्तन्ते श्रुतिस्तु गुणगोचरा ॥
स्वरूपगोचरत्वेपि कथ शक्तिर्निवार्यते ।
अप्राप्येति निषेधे तु कथ मृष्येत लक्षणाम् ॥
निर्देश्यवृत्तिमात्रस्य निषेधव्याहतिस्ततः ।
शक्तेर्निषेधश्चेत्तर्हि लक्षणा वा निषिध्यताम् ॥
लक्षणाया निषेधे हि वाच्यत्वश्रुत्यनुग्रह. ।
तात्पर्यमपरिच्छेदे श्रुते· प्रकरणात्तत. ॥
मनसा सममाम्नानान्निवृत्तिर्दुर्वचा गिर· ।
इष्यते हि मनोवृत्ति. परैरपि परात्मनि ॥ " इति ।

अयमर्थः—ब्रह्मणश्शब्दवाच्यत्वाभावे " वचसा वाच्यमुत्तम " मित्यादिविरोधः। उपहितस्य वाच्यत्वे न विरोध इति चेत् ? किं तर्ह्यवाच्यम् ? अनुपहितमिति चेत् ? किं तदनुपहितम् ? किं स्वरूपमेव, उतोपधानशून्य स्वरूपम् , किं वा उपधानाभाव:? आद्ये– उपहितस्य वाच्यत्वे स्वरूपस्यापि तत्प्रवेशेन वाच्यत्व मनिवार्यमेव । द्वितीयेपि किमुपहितस्वरूपमेवोपधानशून्य विवक्षितम् , किं वा ततोन्यत् ? आद्ये व्याघात. । यदि चोपहितस्याप्युपधानस्यापारमार्थिकतया पारमार्थिकोपधानशून्यत्वान्न व्याघात·, एवमपि तादृश ब्रह्म वाच्यमेवेति कथ मवाच्यता । द्वितीयमसिद्धमनङ्गीकृत च । एतेन तृतीयमपि निरस्तम् । ब्रह्मणो वाच्यत्वाविरोधाच्च । यदि चोपहितान्तर्भावेन स्वरूपस्य वाच्यत्वेपि घटादिवद्धर्मि

समानसत्ताकवाच्यत्वाभावमात्रेणावाच्यत्वसिद्धिं मन्यसे, तर्ह्यवाच्यमिव ब्रह्म लक्ष्यमपि स्यात् । लक्षणावैयर्थ्यं च । यदि च प्रवृत्तिनिमित्तोपहितप्रतीतेः शक्त्यधीनत्वेपि स्वरूपमात्रप्रतीतेश्शक्त्यधीनत्वाभावात् स्वरूपमवाच्यम् , प्रवृत्तिनिमित्तस्य मिथ्यात्वेन तद्विषयकप्रतीतेरविद्यानिवर्तकत्वाभावात् , शब्दजन्य स्वरूपमात्रविषयकापरोक्षवृत्तये स्वरूपलक्षणेति ब्रूषे, तर्हि घटाद्यविशेषः । नहि घटत्वाद्युपहिता शक्तिस्तदनुपहितं बोधयति । ननु वाच्यत्वे ब्रह्मणो ' यतो वाचो निवर्तन्ते '' इति श्रुतिविरोध , तस्या गुणापरिच्छेदतात्पर्यकत्वात् । स्वरूपा नन्दविषयत्वेपि वाङ्मात्रनिवृत्तिप्रतीत्या कथं शक्तिनिवृत्तिः । ननु ''अप्राप्य निवर्तन्त'' इति शक्तिरूपसम्बन्धाभावाद्वाङ्निवृत्तिः प्रतीयत इति चेन्न,– वृत्ति मात्रस्य शब्दार्थसम्बन्धतया लक्षणाया अपि निषेधप्रसङ्गात् । यत इति निर्दिश्य वृत्तिमात्रनिषेधे व्याघाताच्छक्तिर्निषिद्ध्यत इति चेन्न,– विपरीतस्य सुवचत्वात् । तथासति हि ''वचसा वाच्यमुत्तम ' मित्याद्यनुग्रहश्च । किञ्चैव सङ्कोचे प्रक रणानुसारात् मानुषादीनां प्राजापत्यपर्यन्तानामिवानन्दानां ब्रह्मानन्दस्य परि च्छेदाभावात् शब्दो न मानुषाद्यानन्दानिव प्राप्नोति- प्रकर्षेण सम्बन्ध्यते, न तथा बोधनसमर्थः, अतो निवर्तत इत्येव श्रुत्यर्थ एष्टव्य. । किञ्च मनोवृत्तिनिषेधासम्भ वेन तन्निषेधस्य उक्तार्थपरत्वे वाच्ये वाङ्निषेधस्यापि तत्परत्वमेव युक्तमिति ।

अन्येतु– न ब्रह्म सर्वशब्दावाच्यम्, अवाच्यशब्देनाभिधानात् , नच तेनापि लक्ष्यते, अवाच्यरूपमुख्यार्थस्याभावात् , भावे वा ब्रह्म वाच्यमेव अवा च्यपदवाच्यरूपमुख्यार्थसम्बन्धीति स्यात । मुख्यार्थहीनस्य ब्रह्मलक्षकत्वे घट शब्दोपि घटलक्षकस्स्यात् । एवं निर्विशेष स्वप्रकाश परमार्थ सदित्यादिभि र्ब्रह्मोच्यते चेत् वाच्यत्वसिद्धि । नच तैर्लक्ष्यते, निर्विशेषस्वप्रकाशादिरूप मुख्यार्थस्यान्यस्याभावात् । एवं लक्ष्यशब्देनोच्यते चेत् ? वाच्यत्वसिद्धिः । लक्ष्यते चेत् लक्ष्यत्वहानि , गङ्गाशब्दलक्ष्यस्यागङ्गात्ववल्लक्ष्यपदलक्ष्यस्यालक्ष्य त्वात् । ननु निर्विशेषादिशब्दानां विशेषाभावादिविशिष्टं वाच्यम् , तच्च न ब्रह्म, तस्य विशेषाभावाद्युपलक्षितत्वादितिचेत् ? तर्हि विशेषाभावोपलक्षितशब्द वाच्यत्वम् । ननु विशेषाभावोपलक्षितत्वादिकं तद्विशिष्टं वा निर्विशेषादिपदवाच्यम् , तच्च न ब्रह्म, किन्तु तदाश्रयव्यक्तिभूतं

विशेष्य वा, एवञ्च मुख्यार्थ'वसिद्धि. , ब्रह्मणो निर्विशेषादिशब्दवाच्य त्वेपि निर्विशेषत्वाद्यहानिरिति चेन्न,— व्यक्तिश्शब्दार्थो जातिस्तुप्रधानमिति मते जातिविशिष्टा व्यक्तिश्शब्दार्थ इति मते च यत्र विशेष्ये निर्विशेषत्वा दिक तस्य तत्पदवाच्यत्वायोगात् । 'जातिश्शब्दार्थ' इति मते तु घटादि व्यक्तेरपि घटादिशब्दावाच्यत्वेन ब्रह्मणस्ततो विशेषार्थं जातिवाचिभिश्शब्दैर्ब्रह्म जात्याधारव्यक्तिसम्बन्धितयैव लक्ष्यत इति वक्तव्यत्वेन मुख्यार्थाभावादिदोष तादवस्थ्यात् ; ' सत्य ज्ञानमनन्त ' मित्यादौ ब्रह्मणस्सत्यत्वादिधर्माश्रयतयैव लक्ष्यत्वाल्लक्ष्यघटादिवत्सखण्डत्वापाताच्च । निर्गुणस्वप्रकाशादेरब्रह्मत्वे यद्यद्ब्रह्म तयेष्यते तत्तदब्रह्मेति साधु समर्थितो ब्रह्मवादः । नन्ववाच्यादिशब्दास्समास रूपाः, लक्ष्यादिशब्दास्तु यौगिकाः, उभयेषामपि वाक्यतुल्यत्वान्न वाचकतेति चेन्न,— समासे पदार्थसंसर्गस्य यौगिके प्रकृतिप्रत्ययार्थसंसर्गस्य चानभिधेय त्वेपि पदार्थस्य प्रत्ययार्थस्य च वाच्यत्वेन तदर्थस्य ब्रह्मणो वाच्यत्वापरिहा रात् । यदि च ब्रह्म न पदार्थः, किन्तु पदार्थसंसर्गरूपम् , तर्हि सखण्ड स्यात् । यदि त्ववाच्यत्वमित्यादि न पदार्थद्वयाधिकरणार्थसंसर्गपरम् , किन्तु ब्रह्ममात्रलक्षकम् , तर्हि न तेनावाच्यत्वादिसिद्धि. । तस्मान्निर्विशेषादिशब्द वाच्यत्व दुर्वारम् । ' यतो वाचो निवर्तन्ते ' ' अशब्दमस्पर्श ' इत्यादिश्रुतिस्तु अद्भुतत्वाद्यभिप्राया । ' नहीदृगितिविज्ञेय ' ' न वाच्य नच दृश्यते' 'पश्य न्तोपि न पश्यन्ति ' इत्यादिश्रुतौ तद्दर्शनात् । पराभिमते अर्थे अशब्दमि त्यादि शब्दवाच्यत्वस्यापि निषेधेन तदसिद्धेः । ' यतो वाच ' इत्यत्रापि 'मनसा सहे' ति श्रुतौ मनोवृत्तेरिव अन्तःकरणवृत्तिव्याप्ये ब्रह्मणि वाग्वृत्तेरपि निषेधा योगाच्च । आनन्दाद्यनेकशब्दमुख्यार्थत्वाय ' निवर्तन्त ' इत्येकस्यैवामुख्यार्थ त्वस्य न्याय्यत्वाच्च । ' अथ कस्मादुच्यते ब्रह्म ' ' यस्मादुच्यते पर ब्रह्म ' ' वचसा वाच्यमुत्तमम् ' इत्यादिश्रुतेश्च । वेदान्ततात्पर्यविषयो ब्रह्म वाच्यम् , वस्तुत्वाल्लक्ष्यत्वात्तीरवत् , परमार्थसदादिपद कस्यचिद्वाचक, पदत्वात् , घ- टादिपदवत् , सत्यज्ञानादिवाक्य वाच्यार्थतात्पर्यवत् , वाक्यत्वात् , अग्नि होत्रादिवाक्यवत् , इत्यनुमानैश्च विरोधाच्च । विपक्षे लक्ष्यत्व न स्यात्, तथाहि लाक्षणिकश्शब्दो न श्रुत एवार्थान्तरधीहेतुः , तत्रागृहीतशक्तित्वात् ।

किन्तु स्ववाच्यार्थे अनुपपत्तिदर्शने सति तत्त्यागे स्वार्थसम्बन्धित्वेनावगतस्याव बोधकः, गङ्गादिशब्दादौ तथा दर्शनात् । अन्यथातिप्रसंगाच्च । तथाच ब्रह्मणोपि लक्ष्यत्वे वाच्यार्थसंसर्गितया ज्ञेयत्वादौपनिषदस्य चाशब्देनाज्ञेयत्वात्, स्वप्रकाशतया नित्यसिद्धौ च शब्दवैयर्थ्यात्, अवाच्ये लक्षकस्यैतस्य वक्तव्यत्वात्, तत्रापि स्वार्थसम्बन्धित्वेन ज्ञेयत्वेनानवस्थेति कथमवाच्ये लक्षणा? नच वाचकस्यापि गृहीतसङ्केतस्यैव बोधकत्वात्, सम्बन्धग्रहणस्य च सम्बन्धिज्ञानाधीनत्वात्, तदर्थस्य च ब्रह्मणश्शब्दैकमेयत्वात्, तत्राप्यनवस्थेति वाच्यम्,— यौगिकशब्दानां वाक्यतुल्यत्वेनानपेक्षणात् । ननु प्रवृत्तिनिमित्ताभावात्कथं वाच्यत्वम्? नच गुणक्रियाजात्यन्यतमदात्मन्यस्ति. नच घटादाविवारोपितनिमित्तमस्तीति शङ्कनीयम्, आरोपिते श्रुतितात्पर्यायोगेन तात्पर्यविषयस्य वाच्यत्वायोगादिति चेन्न,— सत्यादिशब्दानां लक्षकत्वे सिद्धे निमित्ताभावः, तस्मिन् सिद्धे च लक्षकत्वमित्यन्योन्याश्रयात् । स्वरूपमात्रप्रश्नोत्तरत्वेन लक्षकत्वमित्यस्याखण्डार्थत्वभङ्ग एव निरस्तत्वात् । निर्विशेषवाक्यस्य स्वरूपमात्रपरत्वे विशेषाविरोधात्, तस्य निर्विशेषत्वविशिष्टपरत्वे तु निमित्तस्य सत्त्वेन निर्विशेषशब्दवाच्यतापातात्, अभावनिमित्तकशब्दवाच्यत्वे प्रामाणिकत्वाविशेषेण भावनिमित्तकशब्दवाच्यत्वस्यापि दुरपह्नवत्वात् । तस्मात् ब्रह्मणि सर्वेषां वेदान्तानां लक्षणेत्येतदयुक्तमिति ।

अत्र नवीनः— तात्पर्येण सत्यादिवाक्यप्रतिपाद्यं ब्रह्म न तद्वाक्यस्थपदशक्यम्, तद्वाक्यार्थत्वात्, सम्मतवत्, "वेदैश्च सर्वैरहमेव वेद्यः" "औपनिषदम्" इत्यादिश्रुत्या च वाक्यार्थत्वसिद्धिः । नचान्विताभिधानवादे नियोगादौ व्यभिचारः, अन्वयविशेषस्य तद्विशिष्टस्य वा वाक्यार्थस्य तत्पदाशक्यत्वात् । नहि धात्वर्थविशेषपुरुषविशेषान्वितो नियोगस्तेन तदन्यतो वा केनचित्प्रतीयते ? अप्रतीतेः पदान्तरवैयर्थ्याच्च । नच प्रमेयो घट इत्यत्र प्रमेयघटाभेदस्य वाक्यार्थस्य प्रमेयपदाभिधेयत्वात् व्यभिचार इति वाच्यम् । प्रमेयत्वस्यैकस्यासम्भवेन तारादिशब्दवदनेकार्थत्वस्यैव वक्तव्यतया पदार्थवाक्यार्थयोरेकपदानभिधेयत्वात् । एवं सम्बन्धपदार्थोप्येको दुर्वच इति दण्डस्सम्बन्धीतिवाक्यार्थे न व्यभिचारः ।

नच विशिष्टधीनियामकत्व सम्बन्धत्वम्, वैशिष्ट्यस्यैव सम्बन्धत्वेनान्योन्याश्रयात् । नापि विशेषणधीजन्यज्ञानासाधारणविषयत्व सम्बन्धत्वम्, असाधारणत्व यदि तदजन्यज्ञानाविषयत्व तदा असम्भवः, स्वरूपसम्बन्धाव्याप्तिश्च, विषयत्वस्याप्यननुगतत्वात् । तद्वाक्यस्थपदशक्यतावच्छेदकधर्मवदन्यत्वादिति वा हेतुः । शक्तिविषयत्वस्य च निषेधान्न साध्याविशेषः । नचासिद्धिः, वक्ष्यमाणन्यायात् । नचाप्रयोजकत्वम्, सत्यज्ञानानन्दात्मनि ब्रह्मणि सत्यादिपदस्यैकैकस्य शक्तावेकपदेनैव तादृगुपस्थिते पदान्तरवैयर्थ्यस्य च प्रसङ्गात् । नच सिद्धान्ते ब्रह्मणस्सन्मात्रत्वात् सतश्च सत्पदात्प्रतीतेरनुपस्थितांशः कोपि नास्तीति वाच्यम्, सतो ज्ञानानन्दाद्यभेदसंशयविरोधिप्रतीतेरेवापादनात् । नचैकस्मात्पदात्सा इश्यम्, तेन च तत्र ज्ञायमानेपि दोषादेव संशय इति वाच्यम्,— ज्ञानादिपदसामानाधिकरण्यप्रतिसन्धान विना तत्संशयनिवृत्त्यदर्शनेन तत्प्रतीतेर्वाक्यकृत्यत्वात् । किञ्च सर्वपदाना तत्र शक्तौ सत्यज्ञानादिपदाना पर्यायतापत्तिश्च । प्रवृत्तिनिमित्तभेदे च तद्विशिष्टस्य धर्ममात्रस्य वा शक्यतापातात् नागमाभिमतब्रह्मणश्शक्यत्वम् । सत्यादिपदमपि न ब्रह्मवाचकम्, तत्प्रतिपादकवाक्यैकदेशपदत्वात्, यद्यदर्थवाक्यैकदेशपद न तत्तद्वाचकम् । घटानयनादिसंसर्गप्रतिपादकघटमानयेतिवाक्यस्थघटादिपदवत् । वाक्यार्थस्य तदेकदेशपदार्थत्वे सहश्रुतनिखिलपदाना परस्परान्वितस्वार्थबोधकता व्युत्पत्तिसिद्धा बाध्येत । नच लक्ष्यत्वेऽप्ययं दोषः प्राशस्त्यस्येव एकस्याप्यनेकपदलक्ष्यत्वसम्भवात् । नच लक्ष्यस्यापि शक्यसम्बन्धितया पूर्वमवगमनीयत्वात् ब्रह्मणोऽपूर्वताक्षतिः, मानान्तर विनापि विचारेण शक्येन सत्यत्वादिविशिष्टेन लक्ष्यस्य विशेष्यस्य तादात्म्यसम्बन्धावगमात् । किञ्चाभिहितान्वयवादिना अन्विताभिधानवादिना वा वाक्यार्थमात्र लक्ष्यमेव च वक्तव्यम्, अन्यथा तत्प्रतीत्यनुपपत्तेः । नच शक्त्यैव पदार्थज्ञानद्वारा वाक्यार्थप्रमा, अपर्यवसानालभ्यस्य शक्तिजन्यज्ञानविषयस्य शक्यत्वनियमात् । नहि जातिपदार्थवादिना व्यक्तिरिव पदार्थसंसर्गो पर्यवसानलभ्यः, येन शक्तिजन्यज्ञानविषयत्वेपि वाच्यत्व न स्यात् । अन्यथा एकपदादपि संसर्गविशेषो भायात् । आकाङ्क्षाद्यपेक्षाभावप्रसङ्गाच्च । विनिगमकाभावेन पर्यायतापत्तेश्च । नच विनापि वृत्त्या पदानामाकाङ्क्षादिमहिम्नैव संसर्गबोधकत्वमस्तीति वाच्यम्,— प्रतिपादनसामर्थ्यस्य हि आकाङ्क्षादिसहकार्ये

पेक्षणम् , सामर्थ्यञ्च शब्दस्यार्थे वृत्तिरेव । तथाच वाक्यार्थज्ञानं लक्षणाजन्यम् , शक्त्यजन्यत्वे सति शब्दजन्यत्वात् , सम्मतवत् । अन्यथा वाक्यार्थे शाब्दत्वं न स्यात् । नच लाक्षणिकत्वे पदाना संसर्गानुभावकत्व न स्यात् ; संसर्गस्यैव सर्वपदैर्लक्ष्यत्वात् , तस्य च पूर्वमननुभूतत्वात् । लाक्षणिकगङ्गापदस्याप्यन्वयप्रतियोग्युपस्थापकतया पदान्तरवदनुभवजनकत्वाच्च । पदस्यानुभावकत्वे ऽन्वयप्रतियोग्युपस्थापकत्वमेव तन्त्रम् , नतु शक्तत्वम् , अशक्तादपि तदुपस्थितिदशाया ततोऽनुभवदर्शनात् । समभिव्याहृतपदाना सम्भूयकारित्वव्युत्पत्तिविरोधाच्च । विभक्तेस्स्वप्रकृत्या सह स्वार्थान्वयबोधकत्वानुभवाच्च । नच वाक्ये शक्त्यभावात् कथ तेन संसर्गो लक्षणीय, शक्यसम्बन्धाभावादिति वाच्यम् ,– पदसमूहो हि वाक्यम् , समूहश्चैकधर्मावच्छिन्नपदान्येव, तानि च शक्तानीति तत्संसर्गस्तदर्थसम्बन्ध्येव । लाक्षणिकपदार्थसंसर्गोऽपि परम्परया शक्यसम्बन्ध्येव, अन्यथा अर्थवादपदसमुदाये लक्षणा न स्यात् । वाक्यार्थप्रतीत्युद्देशेन वाक्यप्रयोगानुपपत्तिर्लक्षणाबीजम् । नन्वेवमपि वाक्यार्थस्य शक्यसम्बन्धित्वेनानवगमात् कथं तत्र लक्षणेति चेन्न,– स्मृत्यर्थं हि पूर्वमनुभवापेक्षा, नहि वाक्यार्थस्य स्मृतिरपेक्षिता ?

नन्वेवमेकस्मिन् प्रयोगे पदेषु वृत्तिद्वय विरुद्धमिति चेन्न,– एकस्य ज्ञानस्य वृत्तिद्वयाजन्यत्वात् । गङ्गाया मत्स्याश्च घोषश्चेत्यत्र तात्पर्यज्ञाने युगपदन्वयबोधस्य परैरभ्युपेयत्वाच्च । ननु संसर्गविशेष एव वाक्येन लक्षणीय, संसर्गे च विशेषः पदार्थ एवेत्यजहल्लक्षणा स्यात् , सा चानुपपन्ना, शक्यलक्ष्यसाधारणरूपाभावात् , इति चेन्न,– तीरत्वावच्छिन्ने तीर इव पदार्थविशेषावच्छिन्ने संसर्गे ऽजहल्लक्षणोपपत्ते । एकधर्मावच्छेदेन पदार्थद्वयोपस्थितौ ह्यजहल्लक्षणा । अतो वाक्यार्थस्य ब्रह्मणो लक्ष्यत्वमविरुद्धम् । किञ्च— विशिष्टब्रह्मशक्तैः केवलधर्मशक्तैर्वा पदैर्निर्गुणब्रह्मप्रमितिसिद्धौ न तत्रापि शक्तिः कल्प्या, अन्यलभ्ये तदयोगात् । मुख्यार्थत्वाय शक्तिकल्पनाया गङ्गापदस्यापि तीरे शक्तिः प्रसज्येत । ततश्च ब्रह्मपद वृद्धिविशिष्टवाचकम् , वृद्धिश्चोपचयः, स चात्र सर्वात्मत्वयोग्यता, नत्ववयवोपचयः; नापि गुणाधिक्यम्, गुणाधिक्यमात्रस्य सर्वत्र

सुलभत्वात्, सर्वगुणवैशिष्ट्यस्य तदर्थत्वे सर्वात्मत्वस्याप्यन्तर्भावात् आत्र इयकत्वात् स्वरूपोपचयरूपत्वाच्च तदेव ब्रह्मशब्दार्थः । आत्मशब्दार्थोऽपि व्याप्तिरूपसातत्यविशिष्ट । एवं सत्यादिशब्दार्थोऽपि बाधायोग्यत्वादिविशिष्ट । अतस्सत्यज्ञानाद्यात्मकब्रह्मणि ब्रह्मादिपदानां लक्षणैव । यत्तु लक्ष्यमवाच्य मित्यादिपदवाच्यत्वाद्ब्रह्मणो न सर्वपदलक्ष्यत्वमिति, तन्न, तत्र प्रमाणाभावात् । किं सर्वशब्दलक्ष्यत्वमुपपादयतु तस्य तत्पदवाच्यत्वम्, उत लक्ष्यादिपद प्रवृत्तिनिमित्तस्य ब्रह्मणि सत्त्वेन, त्वदुक्तानवस्थापरिहारायवा ? नाद्य, लक्ष्यादि पदवाच्यत्वे तदयोगात् । ननु ब्रह्मणो लक्ष्यादिपदवाच्यत्वाभावे कथं ब्रह्म सर्वपदलक्ष्यमिति प्रतिपादनीयमिति चेत् ? का तर्हि प्रतिपादनेनुपपत्ति ? न तावत् तेन विना योग्यताद्यभाव, प्रत्युत तस्मिन् सत्येव न योग्यता, नापि लक्ष्यादिपदवाच्याप्रसिद्ध्या तल्लक्षणानुपपत्ति, तत्तत्पदलक्ष्यतारादे. लक्ष्य पदार्थत्वात् । ननु लक्ष्यपदेनापि तस्य लक्ष्यत्वे कथ वाक्यार्थप्रतीति ? लक्ष्यपदवाच्यसम्बन्धित्वेन हि ज्ञाते लक्ष्यपदस्य लक्षणा, तज्ज्ञान च सिद्धान्ते लाक्षणिकपदेनैव वक्तव्यमिति तत्तल्लक्ष्यज्ञानार्थं तत्तल्लाक्षणिकपदापेक्षया अनव स्थानादिति चेत् ? तर्हि स एव दोषः । स च निरासिष्यते । नापि द्वितीय, तत्तद्धर्मविशिष्टस्य ब्रह्मणो वाच्यत्वेपि तदधिष्ठानस्य विशेष्यस्य तदभावात् । विशेष्यस्य सर्वस्मादपि विशिष्टादन्यत्वात्तल्लक्ष्यते । अतएव यद्यद्ब्रह्मत्वेनोपेत तद्ब्रह्मेति परोक्तं निरस्तम्, विशेष्यस्य निर्धर्मकस्यैव ब्रह्मत्वात् । नन्वानन्दादि पदलक्ष्यस्य तद्वाच्याद्विशिष्टादन्यत्वे आनन्दत्वादिकं न स्यादिति चेन्न,— दण्डि देवदत्तादन्यत्वेपि विशेष्यदेवदत्ते देवदत्तस्वरूपस्येव विशेष्यानन्देपि तत्स्वरूपा नपायात् । सत्यादिपदलक्ष्ये वाच्यान्यस्वरूपे सत्यादिपदवाच्यत्व नाम कश्चि-द्धर्म, तद्विशिष्टमवाच्यशब्दार्थ इति तस्यापि विशिष्टवाचकत्वमेव । तथाच वाच्य पदमपि लक्षणयैव वाच्यार्थ प्रत्युपस्थापयति । अन्यथा शब्दवाच्यान्यत्वप्रतिपादका वाच्यपदस्य योग्यताया अभावात् । अतएवावाच्यपदलक्ष्यत्वे अवाच्य न भवेदिति निरस्तम्, अवाच्यस्वरूप एव व्यावहारिकावाच्यत्वस्य कल्पिततया अवाच्यपदलक्ष्य स्यापि ब्रह्म तत्स्वरूपानपायात् । वस्तुतस्त्ववाच्यमिति वाक्यमेव, नञ् लक्षणया

ब्रह्मान्यत्प्रतिपादयति । ननु स्वरूपमात्रमेव लक्ष्यादिपदशक्य भवत्विति चेत् ? नस्क परमतेपि विशिष्टविषयत्वात् । नापि त्वदुक्तानवस्था, विचारादिना तस्य वाच्यसम्बन्धित्वेन निर्णीतत्वात् । लक्ष्यतावच्छेदक च नात्रापेक्षितम्, लक्ष्य स्वरूपस्य स्वतः व्यावृत्तत्वादेकत्वाच्च । ननु लक्ष्यस्य लक्षकशब्दैरेव पर प्रति-पादनेनवस्थेति मूकतापत्तिरिति चेन्न,– ब्रह्मण उक्तविधया निर्धर्मत्व सत्यज्ञाना द्यात्मत्व तस्मिन् सत्यादिपदव्युत्पत्तिप्रकारमानन्दादिस्वरूपस्यैवानन्दादिपदलक्ष्यत्व मवगच्छत आनन्द एव ब्रह्मत्युपदेशादेव योग्यतानुसारेण धर्मिणोरेवाभेदावगम सम्भवात् । विशेषणभेदप्रयुक्तमेव भेद विशिष्टयोरवगच्छत. सदभेदप्रतीतिस्स्व-रूपविषयत्वात् । प्रवृत्तिनिमित्ताभावादपि न ब्रह्मणि पदाना शक्ति, पारमार्थिक जातिगुणक्रियादेरसम्भवात् । तदसम्भवश्च लक्षणा विनापि दृश्यत्वाद्यनुमानैर्निषेध वाक्यैश्च निरूपयितु शक्यत इति न त्वदुक्तान्योन्याश्रय । कल्पितगुणक्रियाविशि-ष्टत्वे च वेदान्ततात्पर्यायोगात् । ननु वेदान्ततात्पर्यगोचरत्वविशिष्टब्रह्मणस्स्वप्रति पादकवाक्यस्थपदाशक्यत्वसिद्धावपि न विशेष्यब्रह्मणस्तत्सिद्धिरिति चेन्न,– अनु मितिर्हि पक्षतावच्छेदकधर्माश्रयस्यैव शक्यान्यत्व विषयीकरोति, सर्वत्रापि साध्यस्य पक्षताश्रयवैशिष्ट्यस्यैवानुमितिविषयत्वात् । नन्वेवमपि वेदान्ततात्पर्यगोचर इति पदाद्विशेष्यस्यानुपस्थित कथ तत्पक्षकानुमितिरिति चेन्न,— निर्धर्मके ब्रह्मणि वेदान्ततात्पर्य विदुष. वेदान्ततात्पर्यगोचर इति पदाल्लक्षणया तस्यैवोपस्थितेर्वक्त व्यत्वात् । अन्यथा योग्यतासम्भवात् । अन्यथा त्वदीयानुमानमपि नास्मदभि मतब्रह्मणो वाच्यत्व विषयीकुर्यात् । ब्रह्मादिपद विशिष्टस्य धर्ममात्रस्य वा वाचकम्, पदत्वात्सम्प्रतिपन्नवत्, इति वानुमानमस्तु । एव " यतो वाचो निवर्तन्ते अप्राप्य मनसा सह " ति श्रुतिरपि शब्दस्य प्राप्ति वारयन्ती तस्य शक्तिं ब्रह्मणि निषेधति, शब्दस्यार्थेन शक्तेरेव प्राप्तित्वात् । लक्षणा तु शक्य सम्बन्धरूपा परम्परयैव शब्दसम्बन्ध इति अमुख्यप्राप्तिरेवेति तन्निषेधायोगात् । लक्षणानिषेधे " सर्वे वेदा यत्पदमामनन्ति " इत्यादिश्रुतिविरोधाच्च । मनसा सहेति च मनस करणत्वमेव निषिध्यते, स्वरूपेण निषेधायोगात् वृत्तिमात्रस्य मनोजन्यत्वात । 'मनसै वानुद्रष्टव्यम्' इति श्रुतिविरोधाच्च । केवलमनोगम्यत्व वा

निषिध्यते । नन्वमेयगुणत्व 'यतो वाचो निवर्तन्ते' इति श्रुतेरर्थ इति चेत्? अमेयत्वं यदि गुणस्य मानागोचरत्व तदा निर्गुणमेव ब्रह्मेति वाच्यत्वनिषेधः प्रवृत्ति निमित्ताभावात् । अथ सख्याशून्यत्वम् , तन्न, " आनन्द ब्रह्मणो विद्वान्न बिभेती " ति वाक्यशेषेण ब्रह्मस्वरूपभूतानन्दस्यैव ज्ञानात् भयनिवृत्तिश्रवणेन गुणान्तरैर्विना ऽनुपपत्त्यभावेन लक्षणायोगात् । मुक्तिसाधनज्ञानाविषयस्य श्रुति प्रतिपाद्यत्वायोगाच्च । प्रत्युत वाक्योपक्रमे अनन्तगुण प्रक्रम्यानन्दज्ञानान्मोक्ष इत्युक्ते देवदत्तो वामेन चक्षुषा पश्यतात्युक्ते दक्षिणेन दर्शननिषेधवत् गुणान्तराणा मपुरुषार्थत्वमेव प्रतिपादित भवेत् । ततश्च ब्रह्मणोपि हेयगुणवत्त्वमिति साधु समर्थितस्तन्त्रसमयः । नचानन्दमित्यत्रापि गुणान्तरलक्षणा, सिद्धान्तेपि तच्छब्दे लक्षणाभ्युपगमादिति वाच्यम्,– आत्ममात्रज्ञानस्यैव सर्वत्र श्रुतौ मुक्तिसाधनत्वा वगमात्, त्वदुक्तलक्षणायोगात् । अस्मन्मतसिद्धलक्षणायास्तयैव श्रुत्याभ्युपेयत्वात् । किंचास्मन्मतसिद्धलक्षणा श्रुतितुल्यैव, प्रसिद्धार्थानपायात् । यथा रेवतीवाक्ये एतच्छब्दस्य प्रकृतानिष्टधर्मलक्षणायामपि श्रुतितुल्यता । न वाच्यमिति त्वदुदाहृत श्रुतौ साक्षाद्वाच्यत्वनिषेधाच्च । यत्तु अनया श्रुत्या अद्भुतत्व प्रतिपाद्यत इति, तन्न,– तस्य पदार्थवाक्यार्थयोरन्यतरत्वाभावात् । नापि तत्र लक्षणा, तत्र न तावदन्वयानुपपत्त्याद्भुतत्वलक्षणा, वाच इत्यस्य तेनाप्यन्वयायोगात् । नापि यतोद्भुता वाचो भवन्तीत्यर्थ', भवन्त्यश्रवणात् । सृष्टेरतीतत्वाच्च । नापि तात्प र्यानुपपत्त्या सर्वपदलक्षणा, अद्भुतत्वस्य तस्मिन् प्रकरणे उपक्रमानवगतस्य ता- त्पर्यगोचरत्वायोगात । सर्वपदलक्षणायाश्च तवाभावात् । तस्य सम्बन्धित्वेना प्रतीतेश्च । वाक्यशेषपर्यालोचनया तस्याप्यपुरुषार्थत्वेन श्रुत्या अप्रतिपाद्यत्वाच्च । ' अथ कस्मादुच्यते ब्रह्म ' इत्यादि तु ब्रह्मशब्दतात्पर्यविषयत्वाभिप्रायम् , गङ्गा पदेन तीरमुच्यत इति प्रयोगात् ।

तस्मादखण्डवाक्यार्थे सत्यज्ञानसुखात्मनि ।
न कस्यापि पदस्यास्ति शक्तिरित्यात्मवित्स्थितिरिति ॥

अत्रोच्यते—तात्पर्येण सत्यादिवाक्यप्रतिपाद्य ब्रह्मेत्यत्राखण्डार्थत्वपक्षे स्व रूपस्यैव वाक्यप्रतिपाद्यत्वात् व्यर्थ तात्पर्यविषयविशेषणम् । सत्यादिवाक्यप्रति

पाद्यत्वविशेषण च व्यर्थम् । तदप्रतिपाद्य व्यावृत्तयेतद्विशेषणमिति चेत् ? तद प्रतिपाद्य कि घटादि, उत ब्रह्म? नाद्य., ब्रह्मपदादेव तद्व्यावृत्तिसिद्धेः । द्वितीयेपि कि तदभिन्न सत्यज्ञानादिवाक्यार्थापेक्षया उत भिन्नम् ? नाद्य , व्यावृत्त्यसिद्धे·, अव्यावर्तनीयत्वाच्च । द्वितीयेत्वसिद्धमेव । उपहित ब्रह्म सत्यज्ञानादिं वाक्यार्थापेक्षया भिन्नमेवेति चेत् ? कि सत्यज्ञानादिवाक्यार्थोपि केनचित् उपहित., उत अनुपहित ? नाद्य , उपहितस्य वाच्यत्वस्य त्वदिष्टत्वात् । उपहितस्यावाच्यत्वसाधने स्वरूस्यावाच्यत्वासिद्धिश्च । न द्वितीय·, तस्य स्वरूपमात्रतया उपहितस्य ततो भेदासिद्धे । किञ्चिदुपाध्युपहित उपाध्यन्तरोपहितापेक्षया भिद्यते नतु स्वरूपापेक्षयापि, तथा सति घटाकाशस्यानाकाशत्वापत्ते । किंचैवमौपाधिकभेदे सत्यपि स्वाभाविकाभेदस्यानपायात् विशेष्यशक्तेरनपायाद्बाधः । किंच तात्पर्यविषयपदेनापि स्वरूप लक्ष्यम् , अन्यथा योग्यताविरहात् । ब्रह्मपदेनैव च तत्सम्भवति । तस्माद्व्यर्थ विशेषणम् । किंच उपहितानुपहितस्य तात्पर्यविपयादिपदेन लक्षणीयतया त्वयोच्यमानस्य पक्षतयाभिमतस्यासिद्धेराश्रयासिद्धि । वाक्यार्थत्व च कि विवक्षितम् ? कि पदार्थससर्गत्वम् , उत वाक्यजन्यप्रतीतिविषयत्वम् , वाक्यजन्यप्रतीतिविशेष्यत्व वा ? नाद्यः स्वरूपासिद्धेः । न द्वितीय , पदार्थे व्यभिचारात् । न तृतीय ,स्वरूपासिद्धे । सत्यादिवाक्यान्निष्प्रकारकस्वरूपमात्रविपयप्रतीतेस्त्वयाङ्गीकारात् । पदार्थे व्यभिचाराच्च । नच तदन्यत्वेन विशेषणम् , पदजन्यप्रतीतिविषयान्यत्वविवक्षायामसिद्धे·, पदानामेव वाक्यार्थबोधहेतुत्वात् । पदशक्तिविषयभिन्नविवक्षाया साध्याविशेषात् ।

नच स्वविषयत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयपदमात्रघटितस्यप्रतिपादकवाक्यकत्वादिति हेतु , वाक्यार्थप्रतीतौ हि तत्पदार्थान्वयानुभवत्व तत्तत्पदजन्यतावच्छेदकमिति वाच्यम् ,– अधिकरणे अधिकरणत्वमित्यत्राधिकरणत्वस्य प्रकृतिप्रत्ययपदान्तररूपसकलप्रतिपाद्यत्वात् , नीलमुत्पलमित्यत्र पदद्वयस्यापि विशेष्यवाचित्वेन विशेष्ये व्यभिचाराच्च । सयोगिदण्डवान् देवदत्त इत्यत्र व्यभिचाराच्च । घटान्यवान् घटः नित्यवदाकाश प्रपञ्चो मिथ्येत्यादौ व्यभिचाराच्च । ननु स्वप्रकारकस्वाविशेष्यकज्ञाननिष्ठत्वमपि स्व

विषयत्वावच्छिन्नकार्यताविशेषणमिति चेन्न,– सत्यज्ञानादिवाक्यजन्यप्रतीतौ ब्रह्मणो विशेष्यतया स्वरूपासिद्धेः । नच वाक्यस्याखण्डार्थत्वात् तज्जन्यप्रतीतौ ब्रह्म न प्रकारो विशेष्यं वेति वाच्यम् ,– तथासति प्रकृष्टप्रकाशादिवाक्यस्यापि तथात्वेन चन्द्रादिपदार्थे व्यभिचारात् । नच तत्रापि स्वरूपमात्रस्य वाक्यार्थत्वाच्चन्द्रत्वादिविशिष्टस्य शक्यत्वेपि स्वरूपस्याशक्यत्वात् न व्यभिचार इति वाच्यम् , — तथापि शब्दवदाकाशमिति लक्षणवाक्यार्थे आकाशे व्यभिचारात् , आकाशस्वरूपमात्रस्याकाशपदशक्यत्वात् । नच पदजन्यस्मृत्यविषयत्वे सति वाक्यजन्यप्रतीतिविषयत्वं विवक्षितम् ; विशिष्टस्यार्थत्वेपि स्वरूपस्यापि तदन्तर्भावेन हेत्वसिद्धेः, साध्याविशेषात् , विशेष्यवैयर्थ्याच्च ।

तद्वाक्यस्थपदशक्यतावच्छेदकधर्मवदन्यत्वादित्यपि न हेतुः, शक्यतावच्छेदकधर्माश्रयान्यत्वविवक्षाया यत्किञ्चिद्घटभिन्नत्वाद्घटे व्यभिचारात् । शक्यप्रतियोगिकयावद्भेदविवक्षया सुन्दरं मुखमित्यादौ बिम्बात्मना मुखभेदस्य प्रतिबिम्बात्मनि तस्मिन्नेव सत्त्वाद्व्यभिचारः । धर्मिसमानसत्ताकान्यत्वविवक्षाया स्वरूपासिद्धिः । अतएवाभेदविरोध्यन्यत्वविवक्षापि निरस्ता । व्यावहारिकान्यत्वविवक्षायामपि संयोगवति वृक्षादौ तद्भेदस्य त्वयाङ्गीकारात् वृक्षत्वाश्रयत्वावद्भेदसत्त्वाद्वृक्षे व्यभिचारः । ननु वाच्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिकान्योन्याभाववत्त्वं विवक्षितम् , वृक्षे च न तादृशान्योन्यान्याभावः, अन्योन्याभावस्य प्रतियोगितावच्छेदकेन विरोधादिति चेन्न – ब्रह्मणोपि प्रवृत्तिनिमित्ताश्रयत्वेनासिद्धेः । यावद्विशेषाभावातिरिक्तसामान्याभावस्य त्वयानङ्गीकाराच्च । प्रवृत्तिनिमित्ते व्यभिचाराच्च । शक्यतावच्छेदकधर्मविशिष्टान्यत्वविवक्षाया व्यर्थविशेषणत्वम् , विशिष्टान्यत्वस्यैव व्याप्यत्वात् । आकाशे व्यभिचारश्च, आकाशपदशक्यत्वात् । आकाशपदस्य स्वरूपमात्रशक्तत्वाच्च पदपक्षकानुमानेपि बाधः । अनुपहितत्वविवक्षायामपि उपहितार्थस्य भेदासिद्धेर्बाध एव । अनुपधानशक्तत्वसाधने स्वरूपस्य वाच्यत्वं निर्बाधमेव । तत्प्रतिपादकत्वंच यदि तद्विषयप्रतीतिजनकत्वम् , तदा व्यभिचारः । यदि पदजन्यस्मृत्यविषयतत्प्रतीतिजनकत्वम् , तदा स्वरूपासिद्धिः । यदि तत्तात्पर्यकत्वम् , तदानीमपि व्यभिचारः । प्राधान्येन तत्तात्पर्यकत्वविवक्षायामपि

यदि प्राधान्य विशेष्यत्वं तदा व्यभिचार एव । यदि पदार्थप्रतीत्यविषयत्वं तदा स्वरूपासिद्धिः । अप्रयोजकत्वं च । नच सत्यज्ञानानन्दात्मनि ब्रह्मणि सत्यादिपदस्य एकैकस्य शक्तौ एकैकपदेनैव तादृगुपस्थितेः पदान्तरवैयर्थ्यस्य प्रसङ्गः, एकैकस्मात्तादृगुपस्थितेरिष्टत्वात् । तवापि सत्यज्ञानानन्दात्मक ब्रह्मणः सन्मात्रत्वात् मतश्च सत्पदेन प्रतीतेरेकस्मात् पदात्तादृगुपस्थितेरावश्य कत्वात्। यदुक्त— सतो ज्ञानानन्दाद्यभेदसंशयविरोधिप्रतीतेरेवापादनादिति, किं तत्रा पादकम् ? सत्यत्वादिप्रकारत्रयविशिष्टार्थस्य सत्याद्येकैकपदशक्यत्वम् , उत वस्तुतस्तादृगस्वरूपस्य ? नाद्यः- असिद्धेः, तस्य त्वया वाक्यार्थत्वानङ्गीका राच्च । न द्वितीयः, तत्प्रकाराविशिष्टस्वरूपप्रतीतेस्तादृगसंशयविरोधित्वाभावात् । वस्तुतस्तादृगस्वरूपशक्ताद्वस्तुतस्तादृगविषयमेव ज्ञानमुत्पाद्यते । स्वरूपमात्र प्रतीतेस्संशयविरोधित्वे धर्मिज्ञानाभावे संशयासिद्धेः तस्मिन् सति तद्विरोधा देवासिद्धेः संशयमात्रोच्छेदप्रसङ्गः । ननु वाक्यार्थभूतसत्यज्ञानानन्दा त्मकब्रह्मणि अवधारणरूपा प्रतीतिर्या वाक्यलक्षणया जन्यते सा शक्तिजन्या चे देकैकस्मात्पदात्तादृशप्रतीतेरुत्पत्ते पदान्तरवैयर्थ्यं स्यादित्यापाद्यत इति चेन्न,— यथा तव एकस्मात् सदानन्दज्ञानात्मकस्वरूपप्रतीतावपि तद्विषयावधारणस्याजन नात् तादृशावधारणं लक्षणया वाक्यकृत्यम् , तथा ममापि शक्तपदसमुदाया देव तादृशावधारणोत्पत्तेर्वक्तुं शक्यत्वात् । किंच सत्पदाद्ब्रह्मणोनुपस्थितांशः कोपि नास्तीति त्वयोक्तत्वात् बाधो दुर्वारः ।

नच स्वगोचरसंशयविरोधिज्ञानजनकतद्वाक्यस्थपदशक्तिविषयो नेति साध्यम् , अर्थान्तरत्वात् । शक्यत्वेपि शक्तेस्स्वगोचरसंशयविरोधिज्ञानजनकत्वाभावेन सा- ध्यपर्यवसानात् । कश्चाय स्वगोचरसंशय ? यदि स्वधर्मिकसंशयः, तदा सत्य ज्ञानानन्दात्मकवाक्यार्थधर्मिकसंशयविरोधिज्ञानजनकशक्त्यविषयत्वेपि सत्यस्य ज्ञानाद्यभेदसंशयविरोधिज्ञानजनकशक्तिविषयत्वसम्भवेनार्थान्तरत्वम् । स्वकोटिकसंशयस्त्वप्रसिद्धः । तद्वाक्यजन्यज्ञाननिवर्तनीयसंशयविवक्षायामप्रसिद्धिः सत्यादिवाक्यजन्यज्ञाननिवर्तनीयसंशयविरोधिज्ञानजनकतद्वाक्यस्थपदशक्तिविषया - प्रसिद्धेः । वाक्यार्थमात्रस्य लक्ष्यत्वपक्षे सर्वत्राप्यप्रसिद्धेश्च । पदा र्थेपि तद्वाक्यजन्यज्ञाननिवर्तनीयसंशयविरोधिज्ञानजनकशक्त्यसम्भवात् , पदार्थ स्मृतेस्संशयाविरोधित्वात् वाक्यार्थज्ञानस्य लक्षणाजन्यत्वात् ।

यदुक्तं विशिष्टस्य शक्यत्वे नागमाभिमतब्रह्मणश्शक्यत्वमिति । तन्न, आगमाभिमतब्रह्मणोपि विशिष्टान्तर्भावेन शक्यत्वात् । आगमाभिमत ब्रह्मस्वरूप मेव, न त्वन्यत् ।

यच्च द्वितीयानुमानस्याप्रयोजकत्वनिराकरणार्थमुक्तम्—वाक्यार्थस्य पदार्थत्वे सम्भूयकारित्वव्युत्पत्तिहानिरिति , तन्न, पदार्थसाधारणस्य वाक्यजन्यज्ञान विषयत्वमात्रस्य सम्भूयकारित्वाविरोधित्वात् पदार्थप्रतिपन्नससर्गबोधाय तदुपपत्तेः । वाक्यजन्यप्रतीतिविशेष्यत्वस्यापि दण्डी देवदत्त इत्यादौ देवदत्तादिपदवाच्ये सत्त्वेन तदविरोधित्वात् । पदेभ्यो ऽप्रत्याय्यत्वे सति वाक्यप्रत्ययस्य वाक्यार्थ पदेन विवक्षाया तु इष्टापत्ति , तादृशस्य ससर्गस्यास्माभिर्वाच्यत्वानङ्गीकारात् । ब्रह्मण. पदेभ्यो ऽप्रत्याय्यत्वाभावेन वाक्यार्थत्वविरोधाच्च ।

यदप्युक्त- वाक्यार्थमात्र लक्ष्यमेवेति । तन्न, कल्पकाभावात् । आकाङ्क्षाद्युपेतव्युत्पन्नपदसमुदायादेव वाक्यार्थप्रतीत्युपपत्तौ गौरवेण वृत्तेरकल्पनात्

यदुक्त प्रतिपादनसमर्थस्य ह्याकाङक्षादिसहकार्यपेक्षणम् , सामर्थ्यंच शब्दस्यार्थे वृत्तिरेवेति । किं तत् सामर्थ्यम् ? किं कारणत्वम् , उतान्यत् ? नाद्य , तत्र वृत्तिपद सङ्केत्य कारणत्वसमर्थने अस्मदिष्टत्वात् । न द्वितीयः, कारण त्वस्यैव सहकार्यपेक्षाप्रयोजकत्वेन तस्य तदप्रयोजकत्वात् । नच तदेवाकाङ्क्षादिसहकारिविशेषापेक्षाप्रयोजकमिति वाच्यम् , मानाभावात् । पदे तादृश सामर्थ्यसत्त्वेन पदार्थस्मृतौ आकाङ्क्षाद्यपेक्षाप्रसङ्गात् । पदे तदसत्त्वे च वाक्येपि वृत्तिंसिसाधयिषिता पदादप्यपहृतेति महादद कौशलम् ।

किंचास्तु यत्किंचित् सामर्थ्यम् , अस्तु च वृत्तिरेव तत् । तथापि तादृश सामर्थ्यवत एवार्थप्रतिपादने आकाङ्क्षादिसहकार्यपेक्षण कुत्र दृष्टम् ? येन तद्दृष्टान्तेन वाक्यार्थससर्गेपि सामर्थ्यात्मकवृत्ति कल्प्येत । न तावत्पदे, पदार्थस्मृतिदशायामसिद्धेः । नापि वाक्यार्थानुभवदशायम् , वाक्यार्थे अद्यापि वृत्तेरसिद्धेः । अथ मतम्- पदानि हि वाक्यार्थज्ञान जनयन्ति पदार्थांशे शक्त्यैव जनयन्ति, तथाच तत्र वृत्तिरूपसामर्थ्यवत एव तत्प्रतिपादने आकाङ्क्षादिसहकार्यपेक्षण पदाना पदार्थांशानुभवे दृष्टमिति, तदपि मन्दम् ,

सिद्धयविरोधात् , पूर्वोक्तोपस्थितिभेदेन परिहारानुपपत्तेश्च , तीरत्वाव-च्छिन्ने तीर इव पदार्थविशेषावच्छिन्ने संसर्गे ऽजहल्लक्षणा, तथैव पदार्थो अन्य-वच्छेदकतया भासन्त इत्युक्तिविरोधाच्च ।

यच्च लक्षणाजन्यत्वे अनुमानमुक्तम् , तत्र हेतुरसिद्धः, वाक्यार्थज्ञानस्य शक्तिजन्यत्वात् । नचैवमन्वयस्य शक्यत्वप्रसङ्गः, शक्यत्वेपि दोषाभावात् । नचैकपदादपि संसर्गबोधापत्तिः, अन्वयव्यतिरेकाभ्यां तद्वाक्यस्थपदशक्तिसमुदाय-स्यैवान्वयधीहेतुत्वकल्पनात् । नचान्वयेपि व्युत्पत्तिग्रहापेक्षाप्रसङ्गः, पदार्थे व्युत्पत्तिग्रहमात्रेण शक्तिसमुदायाद्वाक्यार्थप्रतीत्युपपत्तौ संसर्गे तदनपेक्षणात् ।

किञ्च किमिदं शक्यत्वम् ? किं शक्तिजन्यज्ञानविषयत्वमात्रम्, उत स-म्बन्धविशेषः? आद्ये आपाद्यापादकयोरभेदप्रसङ्गः । न द्वितीयः, कल्पका भावात् । नच शक्तिजन्यप्रतीतिविषयत्वमेव कल्पकम्, अप्रयोजकत्वात् । अथ शक्तेर्ज्ञानस्य च समानविषयत्वेन कार्यकारणभावः, तदा लक्षणायामपि तथा स्यात् । नचेष्टापत्तिः, शक्यार्थसम्बन्धरूपलक्षणायाः क्वचिदतीतादिरूपतया व्यभिचारात् । एवञ्च तज्ज्ञानस्य कारणत्वे वाच्ये तस्य संसर्गांशानुभवे व्यभिचा रात् । संसर्गस्यापूर्वत्वात्तदर्थं लक्षणाज्ञानं समानविषयस्मृतौ हेतुरिति कल्पने शक्तावपि तथात्वापत्तेः ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां अशब्दवेद्यत्वभङ्गो नाम

पञ्चचत्वारिंशस्स्कन्धः ॥४५॥

श्रीरस्तु ।

## अथ षट्चत्वारिंशो वादः ।

(४६)

आविर्भावतिरोभावजन्मनाशविकल्पवत् ।
यस्यैतदक्षयं नित्यं जगत्तं विष्णुमाश्रये ॥

ये पुनस्सर्वशब्दानां कार्यपरत्वं वदतां मतमपि कटाक्षयन्त स्सिद्धरूपे ब्रह्मणि स्वतो निरतिशयपुरुषार्थरूपे ज्ञानजननमात्रेण प्रयोजनपर्यवसाने वेदान्तानां सम्भवत्यपि प्रत्यक्षाद्यबाधितनिरतिशयपुरुषार्थरूपब्रह्मज्ञाने स्वतः प्रामाण्यमपि विस्मरन्तस्तथाविधपारि

---

आविर्भावे त्यादि । जगन्नित्यताप्रतीतेः निष्प्रपञ्चीकरणासम्भवाद्वादार्थः सूचितः । ये पुनरिति । सर्वशब्दानां कार्य एव प्रामाण्याद्वेदान्तानामपि नियोगपरत्वं वाच्यम्, सिद्धे प्रामाण्येऽपि प्रयोजनपर्यवसानार्थं तद्वाच्यम्, परमपुरुषार्थरूपब्रह्मप्रतिपादनेन सद्यः प्रीतिहेतुतया प्रयोजनपर्यवसानसम्भवेऽपि तत्प्रयोजनस्य काव्यनाटकादिवदतत्त्वप्रतिपादनेनाप्युपपत्तेः ब्रह्मणि प्रामाण्यं न स्यादिति पराशयः, सच न युक्तः, सिद्धेऽपि प्रामाण्यस्थापनात्, ब्रह्मणश्च निरतिशयानन्दरूपतया तत्प्रतिपत्तेः स्वयम्प्रयोजनत्वात्, प्रामाण्यस्वतस्त्वस्थापनेन प्रामाण्यस्यापि तत्र सिद्धेरित्याशयः । तथाविधे ति । यथा पूर्वतन्त्रे "सूक्तवाकेन प्रस्तरं प्रहरती" त्यत्र द्वितीयाबलात् संस्कारकर्मत्वं सूक्तवाकमन्त्रप्रकाश्यदेवतान्वयबलाद्यागरूपतया नियोगविषयत्वञ्च प्रहरणस्य, यथा स्वाहाकारप्रयाजस्य इष्टदेवताप्रतिपादनस्य नियोगविषयत्वम्, यथा वन्दुपलवादिविवरणमते अध्ययनस्य नियोगविषयत्वेऽपि अधिकारापेक्षितत्वात् द्वितीयाबलात् साध्यत्वेन प्रतीतस्याध्ययनस्य निराकाङ्क्षत्वेन स्वीकारात् संस्कार्यत्वम्, यथा आधानस्य नियोगविषयत्वेऽपि द्वितीयाश्रुत्यागतसाध्यत्वानामग्नीनामधिकारिविशेषणत्वेन स्वीकारात्संस्कारकर्मत्वमुक्तम्, एवमिहाप्यविद्यामलनिरासशुद्धब्रह्मशुद्ध्यर्थत्वेन संस्कारकर्मत्वं कर्मान्तरानन्वयात् विना निष्प्रपञ्चीकरणस्य नियोगविषयत्वम् । नच भूतानामुपयोगाभावात् कथं ब्रह्मणः संस्कार्यत्वमिति वाच्यम्, — प्रयोजनान्व

निष्पन्नब्रह्मस्वरूपशुद्ध्यर्थं तस्य निष्प्रपञ्चताकरणनियोगविषयता माहुः, तेषां तथाविधनियोगादिविधिवाक्यासम्भवात् सपरिकरनियोगा सिद्धेश्च निर्मूलः प्रलापः । तथाहि— न तावन्निष्प्रपञ्चं ब्रह्म कुर्या दिति विधिवाक्यमधीमहे । नच फलकरणदर्शनाद्विधिः कल्प्यते । नच स्मृत्याद्यनुसारेण तथाविधश्रुतिरनुमीयते । नच नित्यानुमेया श्रुतिरुपपद्यते । नच तदनुमितिलिङ्गतया निष्प्रपञ्चताकरणाचारः केनचित् क्वचिदपि दृष्टपूर्वः । नच निष्प्रमाणकोऽपि विधिरस्तीति वाङ्मात्रेणापि सिद्ध्यति । ननु किमनेन कदर्थनेन ? नानात्व दर्शननिन्दावचनैर्नानात्वनिषेधवचनैर्निर्गुणादिश्रुतिभिर्मायोपादानत्वा न्यथानुपपत्त्यादिभिश्चानुगृहीतो "न दृष्टेर्द्रष्टारं पश्येः" इत्येव मादिको विधिरुपलक्षणपरस्सन् द्रष्टृदृश्यादिसमस्तभेदशून्यं दृप्ति मात्रं ब्रह्म कुर्यादिति नियुञ्जानः प्रकृतार्थे परिपूर्णं प्रमाणम्, नित्य सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण साध्यत्वमप्यविरुद्धमिति चेन्न,— अनुग्राहकत्वेनाभिमतानां सर्वेषां प्रत्येकं विस्तरतो दूषणात् । विधिस्वरूपमपि न पश्यामः, कोऽत्र ब्रह्मवाचकशब्दः, कश्च तस्य निष्प्रपञ्चताकरणवाचीति ? दृष्टि- मति- श्रुत्यादयश्शब्दाः संविद्रूपब्रह्मवाचकाः, द्रष्टृमन्तृप्रभृतिदर्शननिषेधो निष्प्रपञ्चताकरण वाचीति चेत् ? किं व्युत्पत्तिसिद्धोऽयमर्थः, उत तदनुपपत्त्या लक्षणादि

---

र्थं ह्युपयोगापेक्षा, शुद्धञ्च ब्रह्म स्वयमेव प्रयोजनमिति न तत्र तदपेक्षेति भावः । तस्ये ति । ब्रह्मणः । नियोगविषयत्वं निष्प्रपञ्चीकरणद्वारा विवक्षितम् । एवं दूषितमिमं सपरिकरनियोगतत्प्रामाण्यासिद्ध्यापि दूषयति नचे ति । "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति अर्थवादे फलकरणदर्शनाद्विधिः कल्प्यते, न तथेह दर्शनमित्यर्थः । स्मर्तृभिर्दृष्टा नित्यानुमेया श्रुतिरनुमीयत इत्यत्राह— नचेति । तदनुपपत्त्ये ति । वाक्यार्थानुपपत्त्येत्यर्थः ।

वशादङ्गीक्रियते, किंवा भवत्सैद्धान्तिकसङ्केतादिति ? न प्रथमः, दृष्टिमतिश्रुत्यादिशब्दानां तावद्ब्रह्मशब्दपर्यायत्वाभावात् । तत्त त्करणायत्तबुद्धिविशेषा एव तैरभिधीयन्ते । अन्यथा पुनरुक्ति स्स्यात् । द्रष्टृप्रभृतिदर्शननिषेधोपि तत्तज्ज्ञाननिवृत्तिमेव वदति, नतु तत्तन्निवृत्तिम् । नापि द्वितीयः, अनुपपत्तेरदर्शनात् । उचि तार्थान्तरादर्शनमेवानुपपत्तिरिति चेन्न,— तथाप्यनुचितार्थान्तरक ल्पनायोगात्। दृश्यते च अर्थान्तरमुचितम् । तथाहि "यदा दृष्टेरति रिक्तं द्रष्टार न पश्ये " रित्यतिरिक्तपदाध्याहारेण योजना तदा द्रष्टुः पुरुषस्यापि स्वयंज्योतिषः स्वधर्मभूतदृष्टिमत्यादिशब्दाभि लप्यज्ञानसाजात्येन तदतिरिक्तत्वनिषेधोपपत्तेः न कस्यचिदपि मिथ्यात्वसिद्धिः; अनध्याहारे तु दृष्टे द्रष्टेति जीवात्मा निर्दिश्यते, ओदनपाकं पचतीतिवत्कर्तृत्वमात्रविवक्षया द्रष्ट्रादिशब्दः; तत्त त्करणायत्तज्ञानकर्तार जीवात्मान नोपासीथा.— अपितु तदन्त र्यामिण करणनिरपेक्षस्वाभाविकनिरतिशयज्ञानादिगुणगणं अशेष दोषवैदेशिकं परमात्मानमुपास्स्वेत्युक्तम्भवति । नच जीवस्यापि विशेषणतया उपास्यत्वाभ्युपगमात्तद्दर्शननिषेधानुपपत्तिरिति वाच्यम्; करणप्रवृत्तिलङ्घिस्वाभाविकविकासशालिपरिशुद्धस्वरूपजीवविशिष्ट- स्य परमात्मन उपास्यत्वात् । एवमर्थान्तराण्यपि कर्तृत्वाभिमानत्या

---

उचिते ति । ज्ञानस्याविधेयत्वेन तन्निषेधस्यापि विध्य नर्हत्वादित्यर्थः । तथापी ति । दर्शनवाचिपदानन्वयप्रसङ्गेन सम्भ यकारित्वव्युत्पत्तिविरोधादयमर्थो ऽनुचित इति भावः । तदति रिक्तत्वेति । इदमस्मान्नातिरिच्यत इत्यादावविशेषे ऽनतिरेकव्यवहारादति रिक्तपद विशेषपरमिति भाव. । कर्तृत्वाभिमान.— स्वतन्त्रकर्तृत्वाभिमान. ।

गादिरूपाणि प्रत्यक्षाद्यविरुद्धानि समुचितानि कल्पयितु शक्यानि। अतो नानुपपत्तिलेशः। नापि तृतीय, अतिप्रसङ्गात्। पर सिद्धान्तासिद्धसङ्केतवशादपि भवत्पक्षस्य कात्स्न्र्येन भङ्गप्रसङ्गात्। एवं विधिवाक्यासम्भवो दर्शितः।

अथ सपरिकरनियोगासिद्धिं ब्रूमः। तथाहि– नियोगवाक्यार्थ वादिना नियोगो नियोज्य· तद्विशेषणं विषय, करणमितिकर्तव्यता प्रयोक्ता च वक्तव्याः। तत्रासौ नियोगस्तावत्सामान्यतो विशेषतोपि प्रमाणादर्शनादेव निरस्तः। कश्चात्र नियोज्य. ? न तावद्ब्रह्म, त्वन्मते तस्याज्ञत्वात् अनियोज्यत्वात्। अस्मन्मते तु सर्वज्ञत्वादेव नियोक्तव्यत्वाभावात्। अतएव नाप्यविद्या। नाप्यहङ्कारादिकम्, तत्प्रतिफलितचैतन्यादिकं वा, तेषामपि विमृश्यकारिणा स्वोच्छेद करणे नियोक्तुमशक्यत्वात्। अविमृश्यकरणे तु न शास्त्रयोग्यता। नच निर्विशेषानुभूतिस्थितये निरूपको बालो वा कश्चित् स्वोच्छेद मनुमन्यते। अतएव तेषामधिकारित्वप्रयोक्तृत्वाद्यवस्थान्तरमपि भग्नम्। नच शास्त्रं वायूदकादिवद्विवक्षामनुत्पाद्यैव प्रवर्तयति, अशास्त्रत्वप्रसङ्गात्। ततोपि नियोगस्य मूलोच्छेदः। किं तावन्नि योज्यविशेषणम् ? ब्रह्मस्वरूपयाथात्म्यानुभव इति चेत् ? तत् किं निमित्ततया स्थित्वा नियोज्य विशिनष्टि, उत फलतया ? नाद्य·,- जीवनपुत्रजन्मादिवत्तस्यासिद्धत्वात्, सिद्धत्वे वा किं नियोगेन ? तत एव तत्फलसिद्धेः। अथ श्रवणजन्यः परोक्षानुभवस्सिद्धस्सन्

---

आदिशब्देन द्रष्टार नपश्येरिति परमात्मनि करणायत्तज्ञाननिषेध इत्यादिकं सङ्गृहीतम्। सामान्यत इति। "फलमत उपपत्ते" रिति सामान्यतो ऽपूर्व निरस्तम्, निष्प्रपञ्च ब्रह्म कुर्यादिति वाक्य नार्थमह इति पूर्वोक्तेरयं नियोगो विशिष्यापि निरस्त इत्यर्थः। अतएवे ति। "त्वन्मत" इत्यु क्तपरामर्शः। त्रिवक्षे ति ज्ञान विवक्षितम्। परोक्षानुभव इति। तथाचा

विशेषणमिति चेन्न,- श्रवणेन तथाविधानुभवजननस्यैव निष्प्रपञ्ची करणरूपत्वात् । नहि ततो ऽतिरिक्त किंचिदत्र पुरुषव्यापार विषय पश्यामः । साक्षात्कारज्ञान तद्विषय इति चेन्न,— साक्षात्कारस्य नियोगसाध्यत्वाभ्युपगमात् ततः पूर्व तद सिद्धेः । तत्सिद्धौ वा किं नियोगेनेत्युक्तम् । अथ यदि नित्यब्रह्मस्वरूपप्रकाश एव निमित्तमित्युच्येत, न तर्हि तत्क- स्यचिद्विशेषणम् , अनन्यनिष्ठत्वात् । तस्यच निमित्तत्वे तन्नित्य त्वेन जीवननिमित्ताग्निहोत्रवन्नित्यं विषयानुष्ठानप्रसङ्गः । नापि द्वितीयः, तथापि हि याथात्म्यानुभवश्शब्दजन्यो वा, अक्षजन्यो वा, स्वरूपभूतानुभव एव वा ? आद्ये नियोगात्पूर्वं सिद्धस्य कथं नि- योगफलत्वम् ? द्वितीये त्वसम्भवः, नहि निष्प्रपञ्चताया सिद्धायां अक्षाणि तज्जन्य वा ज्ञानं सम्भवति। सम्भवे वा कथ निष्प्रपञ्चता? तृतीये तु कथ नित्यसिद्धस्य फलत्वम् ? स यदि साध्यः, तदा स्वर्गादिवदनित्यस्स्यात् । प्रपञ्चनिवृत्तिरूपेण साध्यत्वमिति चेत् ? नह्यन्यरूपेणान्यस्साध्यस्स्यात् । अतः प्रपञ्चनिवृत्तिरेव साध्ये त्युक्त भवति । ततश्च हेतुसाध्ययोरैक्यप्रसङ्गः । कश्चात्र नियोग

---

परोक्षज्ञानेनैवाविद्यानिवृत्तेर्न नियोगवैफल्यमिति भावः । तथाविधे ति । तस्य च विषयत्वान्न नियोज्यविशेषणत्वमिति भावः । साक्षात्कारस्ये ति । उत्पत्तिफलावच्छिन्नक्रियाक्षणनिचय उत्पादनम , तदेवात्र जननम् , तथा च साक्षात्कारो नियोगात्प्राक् स्यादित्यर्थः । आद्य इति । अपरोक्षज्ञानस्यापि निष्प्रपञ्चीकरणानन्तरमसम्भवात्तद्विषयनियोगस्य न फलत्वमिति भावः । नच श्रवणजन्यशाब्दानुभवस्य निष्प्रपञ्चताकरणरूपत्वादपरोक्षज्ञान फलमस्त्विति वाच्य, शाब्दापरोक्षनिरासात् , प्रपञ्चनिवृत्तिफलावच्छिन्नक्रियाक्षणनिचयस्य निष्प्रपञ्ची करणशब्दार्थत्वाच्चेति भाव. । प्रपञ्चे ति । तथा च निवृत्तेः प्रायश्चित्त

विषय.? किं ब्रह्मैव, उत निष्प्रपञ्चब्रह्म, अथ प्रपञ्चनिवृत्तिरेव ? न प्रथमः, तस्य नित्यत्वेनाभाव्यत्वात् , अभावार्थत्वाच्च । अत एव नद्वितीयः, नहि निष्प्रपञ्चमपि ब्रह्म भावार्थं । तथापि तस्य साध्यत्वं सम्भवतीति चेत ' कि तत ' नहि स्वर्गादिकं साध्यमित्येतावता विधिविषयो भवति । अतोत्रापि केवल फलत्वमात्र सम्भाव्येत, तत्रच प्राप्ताप्राप्तविवेकेन विशेषणस्यैव साध्यत्वमिति कथ ब्रह्मस्वरूपस्य विधिविषयत्वम् । अतएव न तृतीयः, तस्या फलत्वाच्च । नहि प्रपचनि[illegible] [illegible]क्तो [illegible] [illegible] भदन्नते । किमर्थंच तया नियोगस्साध्यते ? नहि [illegible] तदतिरिक्त किंचित् । कथञ्च सर्वप्र[illegible]निवृत्तौ नियोगस्वरूपलाभ ? तस्याश्च नियोग विषयत्वे तथा नियोगस्तेन च [illegible] [illegible]पराश्रयण च । उक्तञ्च येन प्रपचनिवृत्ते. करणत्व[illegible]पि निरस्तम् , विषयकरणयोरतीव भेदाभावात् । स चायं नि[illegible] कि स्वयमेव प्रपच निवर्तयति. उत तत्वज्ञानमुत्पाद्य ? पूर्वत्र किं मिथ्याभूतस्य प्रपचस्य ज्ञानबाध्यत्वं परित्यज्य नियोगबाध्यत्वमङ्गीकरोषि ? तथासति प्रायश्चित्तनिवर्त्य

---

जन्यपापध्वमवदनन्तत्वान्नानित्यत्वमिति भाव । **अभाव्यत्वात्** । असाध्यत्वादित्यर्थः । **अभावार्थत्वा** दिति । भावार्थाधिकरणविरोधान्न विषयत्वमित्यर्थः । अभ्युपेत्य च ब्रह्मणः साध्यत्वमिदमुक्तम् , वस्तुनस्तदेवासिद्धमित्याह– **तत्रचे** ति । निष्प्रपचत्वविशिष्टब्रह्मणीत्यर्थः । **अतएवे** ति । असाध्यत्वादेवेत्यर्थः । पारमार्थिकतया तस्या ब्रह्मस्वरूपत्वादिति भावः । **विषये** ति । कृत्यवच्छेदद्वारा कार्यावच्छेदकत्व विषयत्वम् , ज्ञानतया नियोगाख्यकार्यनिरूपककृतेर्विषयनिरूप्यत्वात् , नियोगकरणत्वन्तु नियोगोद्देशप्रवृत्तकृतिव्याप्यत्वमिति भेद. । **स्वयमेवे** ति तत्वज्ञानव्यापारकत्व व्यवच्छिद्यते , नतु तत्वज्ञानम् । किं तत्वज्ञानमनिवर्तक निबोग एव निवर्तक इत्यभिमतम् , कि वा नियोगतत्वज्ञानाभ्यां बाध्यत इति विकल्प हृदि निधायाद्यमनूद्य निराकरोति **केचि**

दुरितवत्सत्यता प्रपंचस्य । अन्यथा तत्वज्ञानेनैव बाध्यत्वे नियोगकृत्यं न पश्यामः । उत्तरत्राप्याकाक्षादित्रयवता वाक्येनैव तत्वज्ञानं जायत इति किं नियोगात् । तेनैव च तत्व ज्ञानेन ब्रह्मव्यतिरिक्तसमस्तबाधात्कथं सपरिकरनियोगोत्पत्तिश्च ? परोक्षापरोक्षनिवर्तकज्ञानयोरविशेषोपपादनादिकमन्यत्र ग्राह्यम् ।

किंच प्रपचनिवर्तकोय नियोगो न तावद्ब्रह्मस्वरूपम् , निवर्तकस्य नित्यतया नित्य प्रपंचाभावप्रसङ्गात् , नित्यस्य विषयानुष्ठानसाध्यत्वायोगाच्च । अतो ब्रह्मस्वरूपव्यतिरिक्त एष्टव्यः । सच कृत्स्नप्रपंचनिवृत्तिरूपविषयानुष्ठानेन प्रयोक्तुरपि नष्टत्वान्निराश्रय. कथमुत्पद्येत ? आश्रयस्थितौ वा कथ विषयलाभः ? निराश्रयोत्पत्तावपि नियोगाख्यमिथ्यापदार्थस्थितौ कथं कृत्स्न प्रपंचनिवृत्तिः ? सिद्धावपि किमन्यन्नियोगसाध्यं मोक्षाख्यं फलमिति ।

किंच करणभूतायाः प्रपचनिवृत्तेः का नामेतिकर्तव्यता ? न काचिदिति चेन्न,- अनुपकृतस्य करणत्वायोगात् । यथाहुः—

" नहि तत्करण लोके वेदे वा किंचिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ " इति ।

---

त्यादिना । प्रत्याह अन्यथे ति । केवलनियोगस्यानिवर्तकत्वकोटावित्यर्थः । तेनैवे ति । प्रथम वाक्योत्पन्नज्ञानेनैवेत्यर्थः । ननु प्राथमिकज्ञानस्य परोक्षत्वम् , न तेन प्रपञ्चनिवृत्तिः, किन्तु नियोगसाध्यापरोक्षज्ञानादेवेत्यत्राह परोक्षे ति । परोक्षञ्चापरोक्षनिवर्तकज्ञानञ्चेति द्वन्द्वः । अविशेषे ति । स्वरूपप्रकाशानधिकविषयत्व मवश्यम्भावि, अन्यथा भ्रान्तित्वप्रसङ्गात् , ततश्चानिवर्तकत्वमित्यर्थः । आदि

अस्तु वा काचिद्भावरूपेति चेन्न;—सा हि सन्निपत्योपकारिका वा स्यात् , आरादुपकारिका वा? नाद्य.,—कृत्स्नप्रपञ्चनिवृत्तिरूपकरणशरीरनिवर्तकस्य कस्यचिददर्शनात् । अद्वैतज्ञानं दृश्यत इति चेन्न,—तेनैव प्रपञ्चनिवृत्तिरूपमोक्षसिद्धौ करणादिनिष्पाद्यासिद्धिप्रसङ्गात् । नापि द्वितीय., कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः । तत्सिद्धौ तदनुग्राहकाशानवस्थानमित्युभयतः पाशारज्जुः। अथाभावरूपानुग्राहकस्थितौ न विरोध इति मन्यसे ! तन्न, तस्य कृत्स्नप्रपचनिवृत्त्यन्तर्गतत्वेन करणेतिकर्तव्यताभेदासिद्धेः ।

तदेतदभिप्रेत्याह— "अभावरूपत्वे चाभावादेव न करणशरीरं निष्पादयति, नाप्यनुग्राहक" मिति । अभावात्—कृत्स्नप्रपंचनिवृत्त्यन्तर्गतत्वेन करणात्पृथगभावाभावादित्यर्थ' । केचित्तु अस्य भाष्यस्यैवमर्थमाहुः,- अभावत्वादेव न हेतुत्वमित्युच्यत इति, तत्र शब्दास्वारस्यार्थानौचित्यादिकं च द्रष्टव्यम् ।

तदेवं विधायकादर्शनात सपरिकरनियोगानुपपत्तेश्च निष्प्रपंचब्रह्मविषयो विधिर्न सम्भवतीति सिद्धम् ।

इति शतदूषण्यां निष्प्रपञ्चीकरणनियोगभङ्गः

षट्चत्वारिंशोवादः ॥

---

शब्देनापरोक्षत्वासम्भवो विवक्षितः । अनुग्राहकांश.— इतिकर्तव्यतासाध्यः करणोपकारः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां निष्प्रपञ्चीकरणनियोगभङ्गो नाम षट्चत्वारिंशस्स्कन्धः ॥६४॥

———(ग)———

श्रीरस्तु ।

अथ सप्तचत्वारिंशो वादः ।

——(*)——

संसारसागरोत्तारकारणं वारणाचले ।
अविकल्पविकल्पाभ्यामध्यक्षितमुपास्महे ॥

यदुच्यते—विप्रतिपन्नो विकल्पो मिथ्याविषयः विकल्पत्वात्, यथा शुक्तिरजतविकल्पः, नासौ जात्यादिविशिष्टप्रत्यय इति सर्वस्यापि भेदस्य विकल्पविषयतया मिथ्यात्वे परिशेषादद्वैतसिद्धिः

---

निर्दिष्टेषु हरेर्गुणादिषु गलद्भोग्यान्तरैरागमै-
र्यन्मत्याभिनिविष्टया वहुतपस्सिद्धाः परेषां धियः ।
रम्यन्ते स्फुटनिर्विकल्पगणना वाधूलवंशोद्भवं
तं श्रीरामगुरुं प्रमोदभरिताकृतास्सदोपास्महे ॥

हरिगुणमणिपूरितान्तराले श्रुतिगणदुग्धपयोनिधौ गभीरे ।
मतिमयमतिजाङ्घिका दधानो मनसि विभातु ममागमान्तसूरिः ॥

अविकल्पेति । निर्विकल्पकसविकल्पकभेदेन समाधिशास्त्रे प्रतिपादिताभ्यां समाधिभ्यामित्यर्थः । न्यूनाकारविषयं निर्विकल्पकम्, अधिकाकारविषयञ्च सविकल्पकं स्वाभिमतम् । विप्रतिपन्न इति । ननु एकस्य विषयस्य मिथ्यात्वमात्रेणापि उक्तसाध्योपपत्तेः कथं परिशेषादद्वैतसिद्धिरिति चेन्न, ब्रह्मान्ययावत्स्वविषयविषयकत्वस्य पक्षतावच्छेदकतया सर्वविषयमिथ्यात्वसिद्धेः । ब्रह्मान्यत्वञ्च परमतेऽनवतारणार्थम् । यद्वा मिथ्याभूतयावत्स्वविषयकत्वं साध्यम् । न च ब्रह्मणस्सत्यत्वाद्बाधः, दृष्टान्ते च साध्यवैकल्यम्, शुक्तेर्मिथ्यात्वासिद्धेरिति वाच्यम्;— यत्किञ्चित्स्वविषयापेक्षया अन्यूनसत्ताकेतरत्वस्य यावत्स्वविषयविशेषणत्वात् । नन्वेवमपि अयं घटः इत्यादिविकल्पेऽपि स्वविषयभूतघटाद्यन्यूनसत्ताकत्वेन घटस्य तदन्यस्य च घटत्वादेर्निश्चितत्वात् बाध इति चेन्न;— तत्समानसत्ताकत्वेनानिश्चितत्वस्य इतरप्रतियोगिविशेषणत्वात्, तथाच मिथ्याभूतयत्किञ्चित्स्वविषयान्यून

रिति । तदेतद् सविकल्पकमपि प्रत्यक्षविभागतयोदाहरद्भिर्भाष्यकारै र्निरस्तप्रायम् । तद्विस्तूष्णीमहे । तत्र तावत्पक्षादयो न निर्विकल्पकविषयतया सिद्धाः, तथा सत्यभिलापसम्बन्धानर्हत्वप्रसङ्गात् । विकल्पविषयतया सिद्धौ तु, य एते पक्षादिग्राहिणो विकल्पाः, किं तेपि पक्षीक्रियन्ते, उत तद्व्यतिरिक्ताः? इति । न प्रथमः, व्याघातात् । विकल्पानां विसंवादित्वविकल्पस्य विसंवादे पुनस्तेषामपि संवादपर्यवसानात् आश्रयाद्यसिद्धिप्रसङ्गात् । अविसंवादातिरिक्तायाश्च तत्सिद्धेरनिरूपणात् । विसंवादेपि वा तत्सिद्धौ सर्वत्र विशिष्टार्थसिद्धेर्दुर्निवारत्वात् । नापि द्वितीयः, तैरेवानैकान्त्यात् । अविसंवादोपि

---

सत्ताकतत्समानसत्ताकत्वेनानिश्चितेतरयावत्स्वविषयकत्वं पर्यवस्यति । यत्किञ्चित्स्वविषयान्यूनसत्ताकञ्च तत्तत्समानसत्ताकत्वेनानिश्चितञ्चेति कर्मधारयः । तच्छब्देन प्रकृतस्य यत्किञ्चित्स्वविषयपदस्यार्थः परामृश्यते । मिथ्याभूतशब्दस्य कृत्स्नेत्तरखण्डेन बहुव्रीहिः । नच शुक्तिरजतविकल्पे रजतान्यूनसत्ताकब्रह्मेतरशुक्तौ मिथ्यात्वासिद्धेः साध्यवैकल्यमिति वाच्यम् ,— इतरपदेन सामान्याभावस्य विवक्षितत्वात् । नचैवमपि स्वविषयीभूतशुक्त्यन्यूनसत्ताकतत्समानसत्ताकत्वेनानिश्चित ब्रह्मेतरशुक्तौ मिथ्यात्वासिद्धेस्साध्यवैकल्य शङ्क्यम् , स्वविषयीभूतरजतान्यूनसत्ताकब्रह्मशुक्तीतर रजतमादाय साध्यसत्त्वात् । एतदर्थमेव यत्किञ्चित्स्वविषयेत्युक्तम् । तदेत दिति—॥*॥ स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् , तथाहि यः । प्रत्ययस्स मृषा दृष्टस्स्वप्नादिप्रत्ययो यथा॥*॥''इति बौद्धोक्तमिदमनुमानमिति प्रत्यभिजानाति । तथासती ति । निर्विकल्पकस्य प्रवृत्तिनिमित्ताद्यविषयकत्वादिति भावः । पक्षादी त्यादिशब्देन साध्यानुमितिहेतुपरामर्शादयो गृह्यन्ते । व्याघातमेव विवृणोति । विकल्पाना मिति । विकल्पाना विसंवादित्वग्राहिण्या अनुमितेरित्यर्थः । दोषान्तरमाह आश्रयादी ति । आश्रयग्राहिविकल्पस्य मिथ्याविषयत्वे आश्रयासिद्धिः । आदिशब्देन हेतुग्राहिविकल्पस्य विसंवादित्वे स्वरूपासिद्धिरित्यादि विवक्षितम् । सर्वत्रे ति । ह्रदेपि बाष्पादिना वह्न्यनुमित्या वह्निसिद्धिप्रसङ्ग इति भावः । अविसंवादोपी ति । विकल्पस्य मिथ्याविषयत्वानुमितेः प्राक् पक्षादि

तेषामनिश्चित इति चेन्न;—तथापि सन्दिग्धानैकान्त्यस्य स्थित-त्वात् । अन्यतस्तेषां विसंवादसाधने ऽप्युक्तदोषानुधावनात् । यदि च सर्वे विकल्पा विसंवादिनः, कथमनुमानादिविकल्पास्ते प्रमाण भवेयुः । परम्परया अर्थप्रतिबन्धादिति चेत् ? तुल्यं विकल्पेपि । माभूत्तेषां प्रामाण्यमिति चेत् ? तथापि कथमेतदनुमानं समीहित साधनायोदाहरसि । लोकव्यवहारसिद्धतया परमतसिद्धतयेति चेन्न;-आत्मघातिनामीदृशानां बालिशैः परीक्षकैश्च साध्यसिद्ध्यंगत्वानभ्यु पगमात् ।

किंच निर्विकल्पकस्यापि संवादः किं विकल्पगृहीतः, उत निर्वि कल्पकगृहीतः? नाद्य, निर्विकल्पकस्य विसवादित्वप्रसगात् । अ-न्यथा क्वचिद्विकल्पप्रामाण्यानभ्युपगमेऽनैकान्त्यादिदोषात् । न द्विती-

---

ग्राहिविकल्पेषु विसवादित्वस्यानिश्चयादित्यर्थ. । पूर्वोक्त व्याघात विस्मृत्य या व्यभिचारपरिहारशङ्का तामनूद्य पूर्वोक्तव्याघातेन परिहरति अन्यतस्तेषा मिति । यद्वा तस्मिन्नप्यनुमाने पक्षादिग्राहिविकल्पानां पक्षीकरणापक्षीकरणयोः पूर्वानु मानोक्तदोषप्रसङ्ग इति उक्तदोषानुधावनादित्य स्यार्थः । अस्यानुमानस्य बौद्धोप देशलब्धत्वात्तेन चानुमानस्य प्रामाण्याङ्गीकारात्तदन्तेवासिनामपि तदेवमतमा-पाद्य दूषयति यदिचे ति । "स्वलक्षणप्रसूतनिर्विकल्पकजनिते" त्यादिवक्ष्यमाण वाक्यानामप्ययमेवाशयः । तुल्यमि ति । प्रत्यक्षविकल्पस्याप्रामाण्यमनुमानविकल्प स्य तु प्रामाण्यमिति विभागो न सिद्ध्येदिति भावः । तथापी ति । यथानु मानादेः प्रामाण्याङ्गीकारे तेषामप्रामाण्यप्रसङ्गात्सर्वविकल्पाप्रामाण्यसाधकानुमान स्यासम्भवः, तथानुमानाद्यप्रामाण्येप्येतदनुमानासम्भवः, स्वस्याप्यप्रमाणत्वा दिति भावः । निर्विकल्पकस्ये ति । तदविसवादिग्राहिविकल्पस्यापि विसंवादित्वादिति भावः । अन्यथे ति । निर्विकल्पकाविसवादित्व-ग्राहिविकल्पस्य प्रामाण्य इत्यर्थ. । अनैकान्त्यादी ति । क्वचित्प्रा-माण्याङ्गीकारे तुल्यन्यायतया विकल्पान्तरेपि प्रामाण्यप्रसङ्ग इत्यादिशब्देन विव

यः, स्वस्यापि संवादित्वग्रहणे तस्यानधिकारात्। अधिकारे वा विक
ल्पत्वप्रसगात्। तेन विकल्पवन्निर्विकल्पकस्यापि प्रामाण्यनिर्मूलना
दप्रयत्नविजयिनो माध्यमिकाः।

कश्चायं विसवाद.? किं संवादिज्ञानान्तरराहित्यम्, आहो
स्वित् अर्थक्रियाभित्यभाव, बाधकज्ञानान्तरोदयो वा, यद्वा
अनर्थभूतत्वम्, अथवा अनर्थविषयत्वम्, यद्वा अन्यस्यान्या
त्मनोल्लेख', अन्यद्वा किंचित्? इति। न प्रथमः,– कचि
द्बाधात्; कचिदिष्टप्रसङ्गात्, आकिंचित्करत्वाच्च। संवादका
भावे कथमध्यवसाय इति चेत्? यथा संवादकस्येति पश्य।
परस्परसंवादादुभयाध्यवसाय इति चेन्न;— शुक्तिरजतबोधधारा
बाहिकसन्ततौ तदसिद्धेः। अर्थक्रियाविरहव्यवसायविसंवादात्तत्र
सर्वत्राप्रमात्वमिति चेत्? एतेन द्वितीय. कल्पः परिजिघृक्षितः।
सोपि न, सर्वासामर्थक्रियाणां विकल्पोपज्ञत्वात्।

---

क्षितम्। अनधिकारा दिति। असामर्थ्या दित्यर्थः। निर्विकल्पकेनाविसवादित्व
ग्रहे बाधमाह अधिकार इति। इष्टापत्तिशङ्कायामाह तेने ति। निर्विकल्पक
प्रामाण्यग्राहिणोपि विकल्पत्वेन तद्विषयीभूतनिर्विकल्पकप्रामाण्यस्य मिथ्यात्वादि·
त्यर्थः। ब्रह्मविषयनिर्विकल्पकस्यापि अप्रामाण्यात् सर्वशून्यता स्यादिति भावः।
साध्ये मिथ्याविषयत्व विसवाद इति तं विकल्पयति कश्चाय मिति। अनर्थ
भूतत्वम्— अनर्थाद्भूतत्वम्, अनर्थजत्वमिति यावत्। इष्टप्रसङ्गा दिति।
सिद्धसाधनादित्यर्थ.। अकिंचित्करत्वा दिति। सवादिज्ञानाभावेपि बाधा
भावे याथार्थ्याक्षतेरिति भावः। अध्यवसायः– तत्प्रामाण्याध्यवसायः। ततश्च
प्रामाण्यासिद्धेः तद्विषयो न परमार्थ इति भावः। शुक्ती ति। बाधे सति परस्पर
सवादेपि प्रामाण्यानध्यवसायादित्यर्थः। अर्थक्रिये ति। अर्थक्रियाविरहव्यवसाय
रूपो विसवाद इत्यर्थ·। एतेने ति। अर्थक्रियाविरहव्यवसायः– अर्थक्रियाविरह
प्रमा, तथाच अर्थक्रियाविरहो विसवाद इत्यत्र पर्यवसितमिति भावः। सर्वासा
मिति। विकल्पेन तद्विषये प्रवृत्तौ अर्थक्रियादर्शनाद्विकल्पविषयस्यैवार्थक्रिया

नहि निर्विकल्पकेन कश्चित्प्रवर्तते। नच विकल्पतः प्रवृत्तस्यार्थक्रिया न सम्भवति । मणिप्रभाविषयमणिविकल्पप्रवृत्तस्येव स्वलक्षणप्रसूत निर्विकल्पकजनिततदारोपितार्थोल्लेखविकल्पप्रवृत्तस्यापि पारम्पर्येणार्थ सम्बन्धात् निर्विकल्पकनिदान एव संवाद इति चेन्न; नियामका भावात् । बाधितत्वमिति चेत् ? ततस्तृतीयः पक्षः स्वीकृतः । सोप्यसारः, असिद्धेः । अतएवानुमानात्तत्सिद्धिरिति चेन्न, - अद्यापि तत्प्रामाण्यानिश्चयात् । अर्थजत्वात्तत्सिद्धिरिति चेन्न;- साक्षादसिद्धेः । परम्परया त्वविशेषात् । अतएव न चतुर्थः । नच जात्यादिविशिष्टस्य जात्यादिविशेषणस्य वा दृढोपलम्भासिद्धस्या बाधितस्याप्यनर्थत्व निश्चिनुमः , यतस्तत्प्रसूतस्य विकल्पस्या नर्थत्वम् ।

---

बत्वम् , ततश्चानुमाने बाध इति भाव. । सर्वासा मित्यनेन निर्विकल्पकस्या प्रामाण्यप्रसङ्गो विवक्षितः । एतदुपपादयति - नही ति । बाधमुपपादयति— नचे ति । शङ्कते- मणिप्रभे ति । जनितान्त विकल्पविशेषणम् । तदारो पितः- स्वलक्षणाध्यस्त', उल्लेखात्मको विकल्पः । निर्विकल्पकनिदान इति । स्वलक्षणविषयानिर्विकल्पकजन्यत्वादेव स्वलक्षणारोपितार्थोल्लेखित्वम् , ततश्च विकल्पविषयस्य स्वलक्षणारोपिततया स्वलक्षणरूपार्थसम्बन्धाद्विकल्पस्य पारम्पर्ये- णार्थसम्बन्धित्वम् , तथाच निर्विकल्पकविषय एवार्थक्रियालक्षणसवाद इति सविकल्पकविषयो ऽर्थक्रियाशून्य एवेत्यर्थः । निगूढाभिसन्धिराह असिद्धेरि ति। अभिसन्धिमजानानश्चोदयति अतएवे ति । एतदनुमानादेवेत्यर्थः । अभिसन्धि मुद्घाटयति । अद्यापी ति । अनुमितरपि विकल्पत्वेनाप्रामाण्याद्विकल्पस्य बाधि तत्व न सिद्ध्यतीत्यर्थः । यद्वा असिद्धे रिति । बाधस्यानुपलब्धिबाधितत्वादि त्यर्थः । इदानीं बाधानुपलम्भेपि कालान्तरीयबाधो नानुपलब्धिबाध्य इत्याह अतएवानुमाना दिति । अतएव ने ति । साक्षात्परम्पराविकल्पयोरुक्तदूषणा दित्यर्थः । दूषणान्तरमाह नचे ति। अनर्थत्वम्–अपरमार्थत्वम् । प्रत्युत पारमार्थ्य

अतएव न पञ्चमः, अनुमानादिनिर्मूलनाच्च । षष्ठोपि स्वलक्षणाकारतयैव जात्यादिसिद्धेर्निरस्तः । नचाशब्दात्मार्थः शब्दात्मना विकल्पे भातीति वाच्यम् ; सर्वेषु विकल्पेषु शब्दानुवेधाभावात् । यत्र च शब्दानुवेधः तत्रापि शब्दोर्थात्मना प्रतिभाति, अशब्दात्मनैव पूर्वमेवाध्यवसायात् । नच गौरित्यत्र गकारौकारविसर्जनीयात्मकोयमिति मन्यते, अपितु गोशब्दप्रवृत्तिनिमित्तभूतगोत्वाश्रय इति । एकार्थानेकशब्देष्वनेकार्थैकशब्देषु च शब्दानामर्थानाच परस्परविरोधादेव नैकतादात्म्याध्यवसायसम्भवः । नचात्र साम्यसन्निकर्षादिकमध्यासनिमित्तं पश्यामः । नच चाक्षुषनीलादिप्रत्यये श्रावणनीलादिशब्दात्मनोल्लेखो युक्तः । नच विकल्पास्सर्वे समानाः, मानसबाह्येन्द्रियव्यापारान्वयव्यतिरेकानुविधानविरोधात् । नच गोशब्दात्मना खण्डशब्दात्मना च गोव्यक्तौ विकल्पितायां जातिव्यक्तिशब्दविभागनिमित्तं स-

---

मेव निश्चिनुमः, अतो बाध इत्यर्थः । **अत एवे** ति । अनर्थत्वानिश्चयादित्यर्थः । **अनुमानादी** ति । अनुमानादेरपि जात्यादिविषयत्वेन विसंवादे एतदनुमानमप्यप्रमाणं स्यादित्यर्थः । **स्वलक्षणे** ति । परमार्थतयेत्यर्थः । अन्यस्यान्यात्मना भानमस्तीति शङ्कते । **नचाशब्दे** ति । शब्दात्मना प्रतिभानाभावं विशेषदर्शनानुपलम्भेन चोपपादयति **अशब्दात्मनैवे** त्यादिवाक्यद्वयेन । **अपित्वि** ति । इदमुपलक्षणम्, क्वचिद्गोशब्दवाच्य इत्यपि भासत इति भावः । शब्दार्थभेदग्रहस्याबाध्यकत्वमाह **एकार्थेत्या** दिना । कारणाभावाच्च न शब्दाध्यासम्भव इत्याह— **नचे** ति । **नच विकल्पा** इति । एकेन्द्रियग्राह्यत्वात् आरोप उपपद्यत इति भावः । नच निर्विकल्पके तदुपक्षयः, मनसोपि तथा प्रसङ्गादिति भावः । **नच गोशब्दात्मने** ति । जातिव्यक्तिवाचकत्वनिबन्धनत्वात्तद्विभागस्येति भावः । शब्दाध्यासपक्षे वाच्यवाचकभावग्रहो न समयग्रहः, समयग्रहाभावे विकल्पे शब्दानुवेधाभावेन तस्य शब्दानुवेधोपयोगित्वात्, शब्दाध्यासरूपशब्दानुवेधे च पूर्वं शब्द

म्भवति । नच जातिशब्दो व्यक्तौ नाध्यस्यत इति वाच्यम्;- गौरयमित्येव प्रतिभासात् । तथाच व्यक्तिशब्दस्यापि तुल्य न्यायतया नाध्यासः । अतस्तटस्थ एव शब्दस्स्वविषयमावे दयति वस्त्वन्तराच्च व्यवच्छिनत्तीति न शब्दाध्याससम्भवः । नापि सप्तमः,- बाधपर्यवसितस्य कस्यचिदन्यस्यानुपलम्भात् , अन्यादृशस्य साधनेपि विरोधाभावादिति ।

नच संस्कारप्रसूततामात्रेण विकल्पस्याप्रामाण्यम् , स्मृति प्रामाण्यवादिषु तस्य दुर्वचत्वात् , संस्कारमात्रासाधारणकारणस्य

---

तादात्म्यग्रहस्यैव उपयोगितया तस्यैव समयग्रहत्वात् , अतो जातिवाचित्वादि विभागो नास्तीति तात्पर्यम् । नचजाती ति । जातिशब्दो जातिवाचक एव, तदितरश्च व्यक्तिशब्द इति विभाग इति भावः । गौरि ति । यादृश्या प्रतीत्या त्वया क्वचिच्छब्दाध्यास उच्यते तादृश्येवेय प्रतीतिरिति जातिशब्दस्याप्यध्यासो दुर्वार इति भावः। अस्तु तर्हि जातिशब्दस्याध्यासः, व्यक्तिशब्दस्य तु माभूत् , अतस्सिद्धो विभाग इत्यत्राह- तथाचे ति । अतइ ति । ततश्शब्दाध्यासे प्रत्यक्षादिविरोधादिः, अतश्शब्दस्तटस्थस्सन् विषयानन्तर्भूत एव व्युत्पन्नमर्थं बोधयति, प्रत्यक्षादिष्वपि क्वचिद्वाच्यवाचकभावसम्बन्धेन विशेषणतया भासमानो वस्त्वन्तराद्व्यवच्छिनत्तीत्यर्थः । उपसहरति- इति न शब्दाध्याससम्भव इति । सप्तमोपि किं बाधपर्यवसितः, उत नेति विकल्प्याद्य दूषयति- बाधे ति । ननु संस्कारप्रसूतायास्स्मृतेरप्रामाण्यदर्शनात्संस्कारजन्यत्वमप्रामाण्यप्रयोजकम् , अतस्तादृशत्वाद्विकल्पस्याप्रामाण्य वाच्यमित्यत्राह- नच संस्कारे ति । सस्कारजन्यत्वच परेण स्वमतानुसारेणोक्तम् । अभ्युपगमेन परिहारः । न वयमयाथार्थ्यलक्षणमप्रामाण्यमापादयाम', परन्तु स्मृतित्वलक्षणाप्रामाण्यमित्यत्राह- संस्कारमात्रेति । मात्रपदं प्रत्यभिज्ञायामतिव्याप्तिवारणाय । असाधारणपदमसम्भववारणार्थम् ।

स्मृतित्वात् । स्मृत्यनुभवात्मकपक्षेप्यंशे स्मृतित्वलक्षणमप्रामाण्यं प्रसज्येत, न पुनर्विसंवादत्वलक्षणम् । विकल्पत्वादिति हेतुश्च विशिष्टप्रत्ययत्वमात्रम्? तद्विशेषो वा? नाद्य; निर्विकल्पकस्याप्यस्मन्मतेन यत्किञ्चिद्विशिष्टप्रत्ययत्वेनाऽनैकान्त्यात्; तस्यापि पक्षीकारे तद्व्यतिरिक्तनिर्विकल्पकस्याऽनुपपत्त्या सर्वप्रत्यक्षोच्छेदप्रसङ्गात् । नापि द्वितीय, प्रथमाक्षसन्निपातजविशिष्टप्रत्ययादुपरितनविशिष्टप्रत्ययस्य कारणदोषादिविशेषाभावात्; संसारसम्भेदादेश्चाऽदोषत्वस्थापनात् । अतो विशिष्टप्रत्ययमात्राप्रामाण्यवादिना सर्वप्रत्यक्षानिर्मूलने, पारिशेष्योपि शून्यतत्वमुपस्थापयेत्-न पुनरद्वैतम् । किञ्च कल्पितबाह्यविषयनिर्विकल्पकस्य त्वन्मतेन मिथ्याविषयत्वात् तद्दृष्टान्तेनाऽद्वैतविषयनिर्विकल्पकस्यापि मिथ्याविषयत्वमनुमेयमिति।

किञ्च— विकल्पाविषयत्वं चेत् ब्रह्मणः प्रतिपाद्यते ।
श्रोतव्यादिविधीनां स्यादश्रोतव्यत्वमेव ते ॥

अतो न निर्विशेषस्यापि ब्रह्मणो विकल्पाविषयत्वमपीति ।

इति शतदूषण्यां विकल्पप्रामाण्यभङ्गः सप्तचत्वारिंशो वादः ॥

---

स्मृत्यनुभवेति । स्मृत्यनुभवात्मकत्वाकारेणेत्यर्थः । तद्विशेष-विशिष्टप्रत्ययत्वव्याप्यः प्रथमाक्षसन्निपातजप्रत्ययोत्तरविशिष्टप्रत्ययत्वादिरित्यर्थः । किमुभयसम्प्रतिपन्नो विकल्पः पक्षः? उत विशिष्टप्रत्ययमात्रम्? आद्ये दोषमाह, निर्विकल्पकस्यापीति । अनैकान्त्यात्—सन्दिग्धाऽनैकान्त्यात् । पक्षसमत्वे च वक्ष्यमाणप्रत्यक्षोच्छेदो द्रष्टव्य । द्वितीये दोषमाह तस्यापी ति । उच्छेदः अप्रामाण्यम् । द्वितीये अप्रयोजकत्वमाह प्रथमाक्षे ति । सर्वप्रत्यक्षे ति । निर्विकल्पकाभिमतस्य ब्रह्मप्रत्यक्षस्यापि विशिष्टप्रत्ययत्वात् प्रत्यक्षमात्र निर्मूलमिति भाव । श्रोतव्यादीति। श्रवणादीना विशिष्टप्रत्ययत्वेन विकल्पाविषये ब्रह्मण्यसम्भवात् श्रवणादिविधीनामप्रामाण्येनाऽनुष्ठेयत्व स्यादित्यर्थः । अत इति । अश्रोतव्यत्वप्रसङ्गादित्यर्थ । ततो ब्रह्मणोपि मिथ्यात्व स्यादिति भावः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
विकल्पप्रामाण्यभङ्गो नाम
सप्तचत्वारिंशः स्कन्धः ॥४७॥

श्रीरस्तु ।

अथाऽष्टाचत्वारिंशो वादः ।



गुणविभूतिविशेषविचित्रित निगमसीमनि यत्समधीमहे ।

स्मृतिपुराणशतैरुपबृंहित तदिदमस्तु सदा हृदयेषु नः ॥

यदुच्यते—निर्विशेषचिन्मात्रब्रह्मात्मैक्य अत्यन्तसिद्ध स्मृतिपुराणादी न्युपबृंहयन्तीति ; तत्र तावत् तत्तत्प्रकरणादिपरामर्शेन भाष्यकारैरेव तेषा यथावस्थितोऽर्थः प्रदर्शित । सामान्यतः किञ्चिदुच्यते ।

यदा शब्दमात्रस्य निर्विशेषबोधनसामर्थ्यं नास्तीत्युपापीपदाम तदा कैव कथा तद्विशेषाणाम् ? यदा च श्रुतिपरिषदशेषापि विशिष्टविषयेति निरणैष्म,

---

उपनिषदुपबृंहणप्रतीपप्रशमपटूरमृतस्रुते रसिष्ठाः ।

हयमुखहृदयङ्गमा पिबेम श्रवणपुटैः कविवादिसिंहवाचः ॥

हयवक्त्रानालीढाखिलगुणविभूतिं स्मृतिमुखैः

सह क्रोशन्तीना हयमुखमिदङ्कारमनिशम् ।

श्रुतीना प्रत्यूहानसुरजनमोहाय विहितान्

निरुन्धन् शैवादीन् स जयति भृश श्रीनिधिगुरु ॥

गुणविभूतीति । अनेनानुक्तविशेषैः सहावगतार्थव्यक्तीकरणमुपबृंहण स्वमते उपपद्यते, परमते तु तद्वैयर्थ्यमिति सूच्यते । तेन वादार्थःसङ्गृहीतो भवति। निगमसीमनि—वेदान्त इत्यर्थः । इह तत्तद्वाक्याना प्रकरणादिपर्यालोचनया सविशेषपरत्वोपपादनमुखेन निर्विशेषवस्तूपबृंहणासम्भवानुपपादने हेतुमाह तत्र ताव दिति । अनेन प्रकरणादिविरोधान्न निर्विशेषोपबृंहकत्वमि सूच्यते । यद्वा निर्विशेषोपबृंहणासम्भवे हेतुमाह तत्र ताव दिति । "भाष्य कारैः प्रदर्शित" इत्यनेन निर्विशेषे प्रकरणादिविरोधस्याविचाल्यत्व मिहानुपपादने हेतुश्च सूच्यन । हेत्वन्तर प्रतिजानीते सामान्यत इति। किमर्थं

तदा कथं तदुपबृंहणानि तत्प्रतिपादकानि प्रतिपद्येमहि । यदा पुनः निर्विशेषपरा सेति पश्यसि, तदा तत्रोपबृंहणं नाम किं यथोक्तानुवाद मात्रम् उत तद्व्यक्तीकरणम् अथानुक्तवस्त्वन्तरवर्णनम् अन्यद्वा किञ्चित् [2] इति ।

न प्रथमः—अनुवादमात्रेषूपबृंहणत्वप्रसिद्ध्यभावात्, प्रयोजना भावाच्च । ज्ञातस्थिरीकरणं प्रयोजनमिति चेन्न,—श्रुतिप्रामाण्ये तदर्थे च यथावन्मीमांसिते तदनुवादमात्रेण तदतिरिक्तास्थिरीकरणासम्भवात् । यदि तत्रानाश्वासः, तदा कैव कथा सम्भवद्भ्रमप्रमादादिदोषेषु पौरुषेयेषु वाक्येषु । न च साक्षात्सौगतमतमाश्रित्य संवादात्प्रामाण्यमनुमन्तुमर्हसि! नचैवमुपबृंहणान्तरसापेक्षम्, अनवस्थाप्रसङ्गात् । न च तन्निरपेक्षम्, श्रुति वदेव तव तत्राप्यनाश्वासप्रसङ्गात् । परस्परसंवादादुभयत्राश्वास इति

---

निश्चय एव स्थिरीकरणम् उतान्यत् किञ्चित्? नाद्य , तस्य निश्चितप्रामाण्येन मीमांसि तेन श्रुतिवाक्येन सिद्धतयाऽनुवादनैरपेक्ष्यात् न द्वितीयः, अनुवादात् स्थिरीकरणाख्य स्यान्यस्य कस्यचिद्दर्शनादित्याह न श्रुतिप्रामाण्य इत्यादिना । तादृश्यापि श्रुत्या अर्थानवधारणे हेतुमाह यदी ति । तत्रे ति । कैव कथे ति । अर्थनिश्चयहेतुगौष्क स्येऽपि श्रुतेरर्थनिश्चयाभावे सन्देहहेतौ जागरूके स्मृत्यादिना अर्थनिश्चयः सुतरां न सम्भवतीति भावः । ननु संवादादेव शब्दस्य प्रामाण्यनिश्चयः, ततश्चोपबृंहणसंवा दात्प्राक् श्रुतेरर्थनिश्चयाभावादुपबृंहणाधीनमेवात्रार्थावधारणात्मकं स्थिरीकरणमित्य त्राह नचे ति । साक्षा दिति । बाह्यत्वप्रच्छादनं विनेत्यर्थः । तथा च संवादेन वेदप्रामाण्योक्तौ सौगतमतप्रवेशापत्तिरिति भावः । संवादात्प्रामाण्ये दोषान्तरमाह नचैव मिति । किं संवादिवचनान्तरप्रामाण्यनिश्चयाधीन आश्वासः किं वा संवाद मात्राधीनः? नाद्यः- अन्योन्याश्रयप्रसङ्गादित्यभिप्रेत्य द्वितीये दोषमाह

चेत्; मास्तु, असकृदनुसंहितैकश्रुतिवाक्यमात्रजन्मनि तत्प्रत्ययप्रवाहेऽपि तस्य कर्तुं शक्यत्वात्, अतिप्रसङ्गश्च तदाऽऽति ।

नापि द्वितीयः—निर्विशेषपक्षे तदयोगात् । तथाहि—यन्निर्विशेषं श्रुतं तच्छ्रुत्वैव व्यक्तम् । तदतिरिक्तप्रकाशने तु सविशेषत्वावश्यम्भावादुपबृंहणोपबृंहणीयवैघट्यम् । मिथ्याभूतातिरिक्ताकारबोधनेऽपि कथं तत्त्वावेदकस्यातत्त्वावेदकमुपबृंहणं स्यात्? अथ श्रुतौ कस्यचिदप्रतिपन्नं कस्यचित्प्रतिपन्नं ब्रह्मस्वरूपमेवात्र व्यज्यत इति मन्यसे, तदपि न, श्रुतिष्वप्यनङ्गत्वप्रसङ्गात् । तदाभिमुख्यजननात्तदङ्गत्वमिति चेत्? तत्फलसिद्धौ किं तदाभिमुख्येन? असिद्धौ वा कुतस्तत्?

नापि तृतीयः—अनुपबृंहणत्वप्रसङ्गादेव । अन्यथा परस्पराभिन्नार्थानां वेदभागानामेव परस्परोपबृंहणत्वप्रसङ्गात् ।

नापि चतुर्थः—अत्यन्ताभिन्नार्थत्वस्याभिन्नार्थत्वेऽप्यन्यूनानतिरिक्त

---

असकृदनुसंहितेति । तस्येति । आश्वासस्येत्यर्थः । न च प्रमाणान्तरसंवाद एवाश्वासहेतुरिति वाच्यम्, अनिश्चितप्रामाण्यत्वाविशेषे स्वसंवादादप्याश्वाससम्भवादिति भावः । अतिप्रसंगश्चेति । बाह्यागमानामपि परस्परसंवादात्प्रामाण्यप्रसङ्ग इति भावः । किं निश्चयमात्रं व्यक्तीकरणम् उत सामान्यतः प्रतिपन्नस्य विशेषाकारनिश्चयः? आद्ये दोषमाह यन्निर्विशेषमिति । द्वितीये तदतिरिक्ताकारः किं सत्य उत मिथ्या? आद्ये आह तदतिरिक्तेति । द्वितीये मिथ्याभूतेति । अतेति । उपबृंहणं इत्यर्थः । श्रुतिप्रतीति न श्रुत्या प्रतिपन्नेऽपि विशेषबाधनेन श्रुतौ संशयितार्थव्यक्तीकरणादिना वा अत्युपकारकत्व एव उपबृंहणत्वं स्यात्, न तु स्वातन्त्र्येण कञ्चित्प्रति बोधकत्वमात्रेणेति भावः । तदाभिमुख्यजननादिति स्वमूलभूतश्रुतौ प्रवर्तनेनेत्यर्थः । तत्फलेति फलमर्थावधारणम् । असिद्धाविति तदाभिमुख्यम् । उपबृंहणावधारितस्यार्थस्य उपादेयत्वबुद्ध्या हि तत्प्रतिपादकश्रुतौ तन्मूलभूतायां प्रवृत्तिः स्यादिति भावः । अनुक्तवस्त्वन्तरमात्रवर्णनमिति तृतीयः पक्षः, तं दूषयति नापि तृतीय इति । नापि चतुर्थ इति । अन्तूपबृंहणत्वं यत्कि-

विषयत्वस्यातिरिक्तविषयत्वेऽपि सत्यमिथ्यार्थत्वयोर्दूषितत्वात् न्यूनबोधनमव शिष्यते । न च तदाप्युपबृंहणता, उक्तांशस्य तुल्यतया नैरपेक्ष्यात् । अनुक्तांशेऽनुक्तेरेवोपबृंहणत्वगन्धाभावादिति ।

किञ्च—यच्चाधिकं श्रुतौ बोध्यते तत्सत्यत्वे सविशेषता, तन्मिथ्यात्वे श्रुतिरतत्त्वावेदिका, पुवाक्यं तु न तथेत्यापन्नम् ।

नच माभूदुपबृंहणमिति वाच्यम्, शारीरकाधिकरणेषु तत्र तत्र स्मृति संवादोदाहरणादिविरोधात् । अन्यथा चेदनुग्राहकतर्कस्यापि प्रहाणप्रसङ्गात् । तत्प्रहाणे पुन "आर्षं धर्मोपदेश" मित्यादिमहर्षिवचनविरोध ।

---

श्रुत्, तथाऽप्युपबृंहणत्वेनाभिमतमत्यन्त उपबृंहणीयेन भिन्नार्थं अभिन्नार्थं वा? अभिन्नार्थत्वेपि अतिरिक्तविषय न वा? अतिरिक्तविषयत्वेपि सत्यविषय मिथ्याविषय वा? अतिरिक्तविषयत्वाभावेपि अन्यूनानतिरिक्तविषय न्यूनविषय वा? तत्र पक्षान्तरषूपबृंहणत्वस्य त्वया वक्तुमशक्यत्वाच्चरम पक्ष· परिशिष्यत, तत्राप्युपबृंहणत्व न सम्भवति तथाहि—किं स्मृत्यादि स्वप्रतिपाद्य श्रुत्यर्थांशमुपबृंहयति उत स्वाप्रतिपाद्य श्रुत्यर्थांशम्? नाद्य.-स्वोक्तांशो यथा श्रुत्या प्रतिपाद्यते तथैव स्वेनापि प्रतिपाद्यमानो दृश्यते नत्वाकारविशेषेणेति तस्य स्वनैरपेक्ष्यात् । न द्वितीय , तदंशस्य स्वाविषयत्वादित्यर्थ. । यच्चाधिक मिति उपबृंहणस्य न्यूनविषयत्व । श्रुतेस्तदधिकविषयत्वादिति भाव: । न च उपबृंहणविषयोंऽशो मिथ्या, तद्विषयस्तु सत्य इति, अस्योपबृंहणत्वस्य तथासत्यनुपपत्त. । उपबृंहणविषयांशेनैव श्रुतेरतत्त्वावेदकत्वप्रसङ्गाच्च ।

इयता ग्रन्थेन पूर्वं परोक्तयानूदित निर्विशेषचिन्मात्रोपबृंहकत्व दूषितम् । यदि कश्चिदुपबृंहण कान्यनपेक्षितमिति त्रयात्तमपि प्रसङ्गान्निराकरोति न च माभूदिति। अन्यथा चे दिति अन्यथोच्यते चेत्, उपबृंहणापेक्षा नास्तीति चेदित्यर्थ । श्रुत्यनुग्राहकतया प्रसिद्धयोस्तर्कोपबृंहणयोरन्यतरस्य त्यागे तर्कोपि त्याज्य. स्यात् । ननु भवतामपि स्मृतिर्न श्रुतिप्रतिपन्नार्थस्योपबृंहणम्, तदंशे

नचैवमस्मन्मते प्रसङ्गः, श्रुतिप्रतिपन्नस्यैव ब्रह्मणोऽनन्तगुणविभूते रप्रतिपन्नानन्तगुणविभूतिवैशिष्ट्यबोधनेन व्यक्तीकरणोपपत्तेः । नचाप्रति पन्नस्यांशस्यावेदार्थत्वम्, [वि] प्रकीर्णानन्तशाखे महति वेदवृक्षे यत्र क्वचित्कोटरे तस्यापि लीनत्वात्, तस्य चाल्पभागश्राविभिरयोगिभिरधि गन्तुमशक्यत्वात्, तत्कृते च योगिभिरुपबृंहणप्रणयनोपपत्तेः । कति

---

भवदुक्तन्यायेन वैयर्थ्यात्, न च श्रुत्यप्रतिपन्नांश, तद्विषयत्वे श्रुतिमूलत्वाभावेना प्रामाण्यप्रसङ्गात्, तस्माद्भवन्मतेऽप्युपबृंहणानुपपत्तिस्तुल्येत्याशङ्क्य परिहरति नचैवमिति । [वि] प्रकीर्णेति तथा चाधीयमानश्रुत्यर्थस्य श्रुत्यन्तरप्रतिपाद्यविशेष स्यह प्रतिपादनमुपबृंहणमिति भाव. । उपबृंहणप्रणयनेति ।

ननु कथमत्र समास ? "उभयप्राप्तौ कर्मणी" ति ह्यत्र षष्ठी, अन्यथा कर्म ण्येवेति नियमाभावे "कर्तृकर्मणो" रिति षष्ठीप्रसङ्गे योगिभिरिति कर्तरि तृती यानुपपत्तेः, तस्याश्च षष्ठ्या. 'कर्मणिचे' ति समासो निषिद्ध इति चेत्, उच्यते, शेषषष्ठीयम्, अत. समासोपपत्ति । न च तृतीयानुपपत्ति, 'उभयप्राप्तौ कर्मणी' त्यस्य नैवमर्थः, कर्तरि कर्मणि चोभयस्मिन् कारके विवक्षिते "कर्तृकर्मणो" रिति षष्ठी कर्मण्येव न कर्तरीति, यनाथ दोष, स्यात् यदि कर्तृकर्मोभयविवक्षा तदानम नियमेन कर्तृकर्मणोरिति षष्ठ्या भाव्यम्, तस्याश्च समासो निषिद्ध, यदि तु न विवक्षा तदा उभयप्राप्ताविति नियमाभावात् "कर्तृकर्मणो" रिति षष्ठीप्राप्त्या तृतीयानुपपत्तिरिति । किन्तूभयत्र कर्तरि कर्मणि च षष्ठी यत्र प्राप्नोति, प्रसज्यते, भवितुमर्हतीति यावत्, तत्र कर्ता यदि विवक्षित तत्र षष्ठी न भवति कर्मणि तु विवक्षिते षष्ठी भवतीति इदमेव प्राप्तिग्रहणस्य प्रयोजनम्, अत एव "अन्तर्द्धौ ये नादर्शन" मिति निर्देश. । अत्र तु यद्यपि कर्तृकारक विवक्षित कर्मकारकमवि वक्षितम्, तथापि कदाचिदुभयविवक्षायां स यामुभयत्र षष्ठी भवितुमर्हतीति नियमोऽय वर्तते, तेन तृतीयोपपद्यते । कर्मकारकन्त्वविवक्षितमिति कृत्वा न तन्नानेन षष्ठी नापि समासनिषेध. । शेषार्थस्तु विवक्षित इति तदाश्रया षष्ठी । तस्याश्च समासो भवति ।

**कति च न दृश्यन्ते अधीयमानास्वपि शाखास्वप्रतिपन्ना स्सन्ति वेदाश्च उपबृंहणाधीनाध्यवसायाः सन्त्यर्थाः ? अन्यथा कथं वेदार्थे वादिनां मतभेदसमुत्थानम्? नचोपबृंहणानां मिथो विरोधान्निर्णयासिद्धि , उपबृंह**

---

ननु यद्युभययोग्यतामात्रादय नियमः, नतूभयोपादानमपेक्ष्य तदा 'अथ शब्दानुशासन' मित्यत्र "आचार्यस्य कर्तुः प्रयोजनाभावात्तदनुपादानादुभयप्राप्तौ कर्मणि त्यनन षष्ठी" ति कैयटविरोध इति चन्न,—यत्र कर्तृकर्मणोरुभयोरपि तात्पर्यविषयत्व तस्यैवोभयप्राप्ति , आचार्यस्य कर्तुः प्रयोजनाभावात्तदनुपादानाच्च तात्पर्यविषयत्वाभावान्नोभयप्राप्तिरित्येव कैयटतात्पर्यात् । अन्यथा "येनादर्शन" मिति प्रयोगानुपपत्ते । "येनादर्शन" मित्यत्र आत्मन इति व्याख्यातत्वात् तत्र तात्पर्यमवगम्यते । "योगिभिरुपबृंहणप्रणयनोपपत्ते" रित्यत्र कर्तृकर्मोभयसम्बन्धस्यापि तात्पर्यविषयत्वादस्त्युभयप्राप्ति. । इयानेवानयोर्विशेष. 'येनादर्शन' मित्यत्र कर्मस्वरूप तस्य कारकत्वमित्युभयञ्च न शब्दत प्रतिपाद्यते, प्रकृते तु वस्तुत. कर्मभूतमुपबृंहणस्वरूप शब्दत उपादीयते, तस्य कर्मकारकत्वन्तु शब्दतो न प्रतिपाद्यते किन्तु शेषविवक्षाया सम्बन्धमात्र प्रतिपाद्यत इति। कर्मकारकत्वस्य तात्पर्यविषयत्व उभयत्रापि विशिष्टमिति ।

यत्तु पदमञ्जर्याम्—" यदा उभयप्राप्ताविति नियमेन कर्तरि तृतीया तदा कर्मणिचेति निषेधात्पाणिनिना सूत्रकृति', 'आचार्येण शब्दानुशासन' मित्यसाधु.समास " इति, तदपि यदा कर्मणि षष्ठी तदा न साधुरित्यभिप्रायम्। शेषषष्ठ्यान्तु साधुरेव । तत्रैव प्राप्तिग्रहणाच्च प्राप्तिमात्रे नियम इति कर्मणोऽप्रयोगेपि कर्तरि तृतीया भवति, यथा "अन्तर्द्धौ येनादर्शनमिच्छ" तीति। कर्मापि यदा शेषत्वेन विवक्ष्यते तदा तत्रापि शेषषष्ठी भवत्येव । तस्याश्च "कर्मणिचे" ति निषेधाभावात् समासो भवतीति चोक्तत्वात् । तस्मान्निरवद्य एवञ्जातीयकः प्रयोगः ।

ननूपबृंहणापेक्षाया श्रुत्या निर्णयो न सिद्ध्येत् , उपबृंहणाना परस्परविरोधात्, अन्यतरपरित्यागे नियामकाभावादित्याशङ्क्य निराकरोति **नचोपबृंहणाना**

णीयाविरोधाविरोधाभ्यां विशेषात् । अत एव हि शारीरकस्मृत्यधिकरणे कापिलादिस्मृतेर्निरासः । उपबृंहणीयाविरुद्धमन्वादिस्मृतिसङ्ग्रहः तद्विरुद्धकपिलादिस्मृतेरप्रमाणत्वात् तैरुपबृंहणं नाप्युपबृंहणीयबाधः इति हि तत्रार्थः । तेन तामसराजससङ्कीर्णपुराणादिभिर्वेदोपबृंहणं पुराणविवेकपरिज्ञानशून्यनामाविवेकितानिबन्धनमिति तन्नाद्रियामहे । उक्तं हि मात्स्ये—“ अग्नेः शिवस्य माहात्म्य ” मित्यारभ्य—

“ सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥ ”

इत्यन्तम् । तदेतत्सर्वमर्थजातं निदर्शितं भाष्ये—“ उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम्, सकलशाखानुगतस्य वाक्यार्थस्याल्पभागश्रवणादुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेवे ” ति ।

एवञ्च सामान्यतो निर्विशेषतया उपबृंहणासम्भवेऽनुपबृंहितेन वेदेनार्थनिश्चयायोगाद्वेदविप्लवक एव निर्विशेषवादः । स्मरन्ति च—

“ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ ” इति ।

इति शतदूषण्यामुपबृंहणवैघट्यवादः
॥ अष्टाचत्वारिंशो वादः ॥

---

मिति ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
उपबृंहणवैघट्यं नाम
अष्टाचत्वारिंशः स्कन्धः ॥४८॥

श्रीरस्तु ।

॥ एकोनपञ्चाशो वादः ॥

त्रिविधचिदचिदन्तर्यामिता प्राप्य तिष्ठन्
निखिलनिगमनिष्ठैर्नित्यमैक्योपदेशैः ।
भ्रममकृदिया यो वारयत्यैकभक्त्या
भवतु शरणवाणी तत्पदे शाश्वती नः ॥

यदाहुः—"तत्त्वमसि" "क्षेत्रज्ञं चापि मां विद्धि" त्याद्यैक्योपदेशान्यथानुपपत्त्या परिशुद्धे ब्रह्मण्येवाज्ञानं भेदभ्रमश्चावश्यं कल्पनीयम्, नचात्रैक्यं न प्रतीयते, नचाविवक्षितम्; सामानाधिकरण्यस्य

त्रिविधेति । अन्यभक्त्या सहितैरैक्योपदेशादिशास्त्रैः शरीरात्मभावनिबन्धनैः शुद्धभावगतानां स्वनिष्ठत्वभ्रमं स्वरूपैक्यभ्रमं च यो वारयति, तस्य जनार्दनस्य, पदे, नः, भगवतः फलप्रदानोत्तरमिवाद्यापि चरितार्थम्मन्यतामापादयन्ती मम शरणवाणी भवत्वित्यर्थः । इह अन्तर्यामिब्राह्मणादि "शुद्धभाव गतः" "क्षण प्रबुद्धमिव मे" इत्यादीनि विवक्षितानि । त्रिविधे त्यादिना अन्ययोगपपत्तिरुक्ता । भ्रमं वारयती त्यनेनान्यथैवोपपत्तिरुक्ता, तेन वादार्थसंग्रहः । यदाहु रिति, ऐक्योपदेशो हि तत्त्वज्ञानद्वारा मोक्षार्थः । नचैतदैक्यस्यापारमार्थ्ये उपपद्यते, अतः श्रुतिसिद्धस्य जीवब्रह्मैक्यस्य पारमार्थ्यात् तदनुपपत्त्या भेदज्ञानस्य भ्रमत्वं परिशुद्धेपि ब्रह्मणि भ्रमोपपादकमज्ञानं तन्निवृत्त्या उपदेशस्य सप्रयोजनत्वञ्च कल्पनीयमित्यर्थः । भेदभ्रमनिवृत्तिरूपमोक्षणोपदेशस्य सप्रयोजनत्वं चेत्यपि विवक्षितम् । "अतो जीवपरयो" रित्यादिना तस्याप्युपसंहरिष्यमाणत्वात् । 'नपुंसकमनपुंसकेने" त्येकशेषात् कल्पनीय मिति निर्देशः । भेदप्रतीतिबलात् ऐक्योपदेशोऽन्यपरं इत्यत्राह नचात्रैक्य मिति। सम्भाव्यमानान्यथा सिद्धेः प्रत्यक्षादप्रमाणदोषगन्धा श्रुतिर्बलीयसीत्यभिप्रायेणाह सामानाधिकरण्यस्येति । एवमाविष्

तन्निष्ठत्वात् विशिष्टैक्यवादिनाप्यैक्यमात्रस्याश्रितत्वाच्च, नचेदमारोपवृत्त्या सामानाधिकरण्यम्, तत्त्वोपदेशप्रकरणविरोधात्, न च सम्बन्धादिद्वारोपचारः, बाधकाभावात्; यद्यप्यस्मन्मतेऽपि लक्षणा, तथापि प्रधानभूतसामानाधिकरण्यप्रतिपाद्यस्य मुख्यस्यैक्यस्यापरित्यागात्, तत्संरक्षणाय च स्वरूपोपलक्षणभूतनिमित्तमात्रग्रहणादिकं न दोषाय भवति। न च भेदाभेदसमुच्चयः, व्याघातात्, अत एव नोभयत्यागः,

---

आगामपरिसिद्धान्तमाह विशिष्टैक्ये ति। आश्रितत्वादि ति। श्रुतितात्पर्यविषयतया अङ्गीकारादित्यर्थः। "समुद्रः कुण्डिकानिष्ठो" "वर्द्धितकः" इत्यादाविव स्तुत्यर्थमारोपोऽस्त्विति सामानाधिकरण्यस्यान्यथासिद्धिमाशङ्क्य विनियोजकत्वाभावान्नैवमित्याह नचेदमिति। न च सम्बन्धे ति। आदिशब्देन मुख्यार्थानुपपत्तिर्विवक्षिता। द्वारशब्दः प्रयोजकपरः। क्वचित्सम्बन्धमादाय द्वारेणेव पाठः। बाधकाभावादिति। मुख्यार्थानुपपत्त्यभावादित्यर्थः। ननु बाधकाभावात्तवापि लक्षणा न स्यात्, यदि च विशिष्टाभेदबोधानुपपत्तिर्बाधिका, तर्ह्यस्माकमपि जीवब्रह्मसामानाधिकरण्यानुपपत्त्यैव लक्षणास्त्वित्यत आह यद्यपी ति। तथापी ति। वाक्यं हि पदात्प्रधानम्, अतस्तदर्थ एवानुरोध्यः, समानाधिकरणवाक्यस्य च मुख्यविशेष्यैक्यं मुख्यतात्पर्यविषयः– तदभावे त्वमुख्यार्थत्वमिति सर्वसम्मतम्, अतस्तत्त्वमस्यादिवाक्ये त्वदभिमतोपचाराङ्गीकारे मुख्यार्थैक्यपरित्यागो दोषः, अस्मन्मते तु मुख्यैक्यापरित्यागान्न लक्षणा दोषः। किञ्च निमित्तग्रहणेन स्वरूपलक्षणा मुख्यैक्यसिद्ध्यर्थमेवाङ्गीक्रियते, तव तु न तदर्थम्, अतोऽपि स्वरूपलक्षणा न दोषः प्रत्युत मुख्यैक्यार्थत्वात् अनुकूलैवेत्यर्थः। भेदाभेदाङ्गीकारात् न भेदज्ञानस्य भ्रमत्वं कल्प्यमिति कस्यचिन्मतं निरस्यति न च भेदे ति। भेदप्रतीतेरभेदाभावो विषयः, ऐक्योपदेशस्य च भेदाभावो विषयः, अतो भेदाभेदोभयत्यागे न दोष इत्यत आह अत एवे ति। अन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन व्याघातादित्यर्थः। एवं भेदाभेदयोः परस्पराभावात्मकत्वपक्षे दोष उक्तः।

तात्पर्यविरोधस्योक्तत्वाच्च, अन्यथा शून्यतैव पर्यवस्येत्। नचैव दृष्टिविधिः ; उपासनैकवाक्यत्वाभावात्; तत्सद्भावेपि तल्लिङ्गाभावाच्च, अतो जीवपरयोरैक्ये तद्भेदे च प्रतीयमाने द्विचन्द्रदर्शनमूलभूतदोषवदात्मभेददर्शनहेतुरविद्याऽभ्युपगन्तव्या, तन्मूलभेदभ्रमोन्मूलनेन सप्रयोजन एवैक्योपदेशः यथैकश्चन्द्र इति, इति ।

अत्र ब्रूमः—यद्यैक्योपदेशोऽन्यथानुपपन्नः स्यात्तदैवं परिशुद्धे ब्रह्मण्यज्ञानभेदभ्रमादयः कल्प्येरन्, स त्वन्यथाप्युपपन्नः अन्यथैवोपपन्नश्च । तथा हि— शरीरात्मभावनिबन्धनं सामानाधिकरण्यं व्युत्पादितमस्माभिः । नचात्र द्वयोः स्वरूपैक्यं विवक्षितुं शक्यम् । विरुद्धयोस्तदसम्भवात् । अन्यथा यूपादित्यैक्यवाक्येपि भेदभ्रमहेतुदोषकल्पनप्रसङ्गात् ।

---

यदि भेदाभेदयोः भावाभावात्मकत्वाभावः, तदा दूषणमाह तात्पर्ये ति । भेदाभावापेक्षया लाघवादैक्य एव तात्पर्यमिति भावः । उक्तत्वा दिति । "तथापि प्रधानभूते" त्यादिवाक्ये इत्यर्थः । उभयत्यागे दोषान्तरमाह अन्यथे ति । तत्सद्भाव इति । क्वचिदुपासनैकवाक्यतोपि ऐहिकामुष्मिकफलादिरूपलिङ्गाभावा दित्यर्थः । तद्भेद इत्यतः पूर्वं सिद्ध इति शेषः । जीवपरयोरैक्ये तत्त्वत इति क्वचित्पाठः । सप्रयोजन एवैक्योपदेश इति । एवकारो भिन्नक्रमः । भेदभ्रमोन्मूलनेनैव सप्रयोजन इत्यन्वयः । क्वचित्सप्रयोजनतयैक्योपदेश इति पाठः । [illegible]ऽभ्युपगन्तव्या इत्यनुषङ्गः । यद्ये ति । आदिशब्देन भ्रमोन्मूलनं विवक्षितम्, अन्यथापीत्यभ्युपगमवादः । वास्तवान्यथोपपत्तिनिरासात् । तत्रार्थमाह अन्यथैवोपपन्न इति । वस्तुतस्त्विति शेषः । तथाही ति । शरीरात्मभावनिबन्धन सामानाधिकरण्यमित्यन्यथोपपादितत्वात् तथा निर्वाहे सम्भवति अत्यन्तविरुद्धार्थयोरैक्यं न विवक्षितुं योग्यमिति ऐक्योपदेशः शरीरात्मभावनोपपादकः, न तु परिशुद्धे ब्रह्मणि भ्रमादिकल्पनेन । अन्यथे ति । अविरुद्धार्थतामन्तरेणापि विरुद्ध

विरोधादेश्च समानत्वात् । न च लाक्षणिकसामानाधिकरण्येप्यैक्यं परित्यक्तम्, यया कयाचि वृत्त्या एकस्मिन्नेव वृत्तेरङ्गीकृतत्वात् । अत सामानाधिकरण्यस्य सम्भवति गत्यन्तरे परिशुद्धब्रह्मणि तन्मूलविरुद्धाज्ञानादिपरिकल्पन निर्मूलम् । अज्ञानमूलभेदभ्रमवादे च उपदेश एव नोपपद्यत इति स्थितमन्यत्र । नचानुपपन्नत्वस्योपपादकतया स्वयमनुपपन्नान्तर कल्प्यम्, नचाविद्यादेः स्वरूपमुपपत्तिमादिति दर्शितम् । यदि च दूर गत्वा दुर्घटत्वमेव भूषणमिति वक्ष्यसि, तर्ह्यैक्योपदेशमेवादौ दुर्घटमभिमन्यस्व ।

अप्रामाण्यं तर्हि तस्य स्यादिति चेत्, अस्मन्मतप्रतिपादितप्रकारेण

---

कल्पने । एव शरीरात्मभावेनान्यथासिद्धिरुक्ता, इदानीं पूर्वपक्षिणा दूषितमुपचारपक्षमुद्धरति न च लाक्षणिक ति । भागत्यागलक्षणया गौण्या वा वृत्त्या एकस्मिन्नेव वृत्त्यङ्गीकारात् समानाधिकरणवाक्यप्रधानार्थस्यैक्यस्यापरित्यागादुपचारो न दोषायेत्यर्थ । ननु भागत्यागलक्षणाया स्वारसिक मुख्य विशेष्यैक्यपरत्व न सिद्ध्यतीत्युक्तमित्यत आह अत इति । अविरुद्धगत्यन्तरे सति विरुद्ध मुख्यविशेष्यैक्यमपि त्याज्यमेव अन्यथा निमित्तमपि न त्यज्येत यूपादित्यवाक्येपि भ्रमहेतुदोषश्च कल्प्येतेत्यर्थः । तन्मूले ति । सामानाधिकरण्यमूलमज्ञानादिपरिकल्पनमित्यर्थः । न केवलमविरुद्धगत्यन्तरसद्भावात् भेदभ्रमकल्पनस्योपपादकत्वाभावमात्रम्, प्रत्युत प्रतिकूलत्वञ्चेत्याह अज्ञानमूले ति । अविद्यास्वरूपस्यैवानुपपन्नत्वात् तेनैक्योपदेशोपपादनमितिदूषणान्तरमाह नचानुपपन्नस्ये ति । स्वयं स्वेनरूपेणेत्यर्थ. । स्वयमनुपपन्नेत्यत्र "स्वय क्तेन" ति तृतीयासमास ।

दर्शित मिति । स्वरूपानुपपत्तिनिवृत्त्यनुपपत्तिबाह्यप्रकाशानुपपत्तिभिरित्यर्थ । एक्योपदेश मिति । अविद्यायामिव उपपादकाभावेन दुर्घटत्व उपदेशस्य भूषणमेवास्त्वित्यर्थ । ननु भेदस्य मिथ्यात्वादेरकल्पने ऐक्योपदेशाप्रामाण्यं स्यादिति शङ्कते अप्रामाण्य मिति । अस्मन्मते ति । यदि प्रामाण्यार्थमुपपादकापेक्षा, तर्ह्यस्म

प्रामाण्यस्य सिद्धत्वात् । यदि वा माभूत्प्रामाण्यम्, यदज्ञानादिपरिकल्पने ऽप्यन्ततः फलति तच्चेदादौ तदप्रामाण्यं सिद्ध्यति, किं दूरं धावसि ?

किञ्च—भेदोपदेशान्यथानुपपत्त्या परमार्थभिन्नेऽप्यात्मन्यैक्यभ्रममूलमज्ञानं किं न कल्प्यते ? ऐक्यश्रुतीनामतत्त्वावेदकत्वप्रसङ्गभयादिति चेत्, तर्हि भेदश्रुतीनां तत्प्रसङ्गभयात् भेदभ्रममूलाज्ञानमपि न कल्प्यम्। न चैका श्रुतिरितरस्या दासी, येन तदर्थं तासु त्रुट्येम । प्रत्यक्षादिसंवादाच्च भेदश्रुतेरेव बलीयस्त्वम् । न च भेदस्वरूपं दुर्निरूपमिति तदप्रामाण्यस्वीकारः, अभेदस्वरूपस्यापि तथाविधयुक्तिभिर्दुर्निरूपतया तत्प्रतिपादकानां तत्स्वीकारप्रसङ्गात् ।

किञ्च त्वदुक्तैक्यानुपपत्त्या नान्यैव भेदप्रतीतिरिति किं न कल्प्यते ? प्रत्यक्षादिविरोधादिति चेत्,

---

दभिमतेन सुघटेन शरीरात्मभावेनैवोपपाद्यताम्, किं दुर्घटाविद्ययेत्यर्थः । यदि वे ति । यद्वेत्यर्थः । यदी ति । भेदप्रतीतिमिथ्यात्वादिकल्पने उपदेशप्रामाण्यरूपभेदस्यापि मिथ्यात्वेन प्रामाण्याभासलक्षणमप्रामाण्यं फलतीत्यर्थः । तदप्रामाण्य मिति । तस्य उपदेशस्य अप्रामाण्यम् । त्वदभिलक्षितस्याप्रामाण्यस्य सिद्धौ 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् दूरधावनमनुचितमित्यर्थः । किञ्चे ति । न च भेदशास्त्रवैदिकस्य शास्त्रस्य लोके असिद्धत्वात् कस्य मूलमज्ञानं कल्प्यत इति वाच्यम्, तत्र श्रुत्येकगम्याया अपि सार्वज्ञ्यादिभेदप्रतीतेः भ्रमत्वेनाज्ञानमूलत्ववच्छ्रुतिजन्यस्यैक्यज्ञानस्य भ्रमतया तन्मूलाज्ञानस्य कल्प्यत्वादिति भावः । ननु भेदश्रुतिर्निषेध्यार्पकतया ऽभेदश्रुतितो दुर्बलेत्यत आह न चैके ति । श्रुत्येकगम्यस्य सार्वज्ञ्यादिभेदस्य च निषेधार्थमनुवादासम्भवात् प्रत्यक्षादिसिद्धभेदस्य च निषेधासम्भवाच्च भेदश्रुतिर्निषेधार्थानुवाद इति भावः । बलीयस्त्व मिति । तत्त्वावेदकत्वाध्यवसाय इत्यर्थः । किञ्चे ति । ऐक्योपदेशानुप

तर्हि निरवद्यभेदश्रुतिविरोधो दुष्परिहर । भ्रान्तिसिद्धे भेदेऽप्यैक्योपदेशा द्विचन्द्रादिष्विव घटत इति चेत्, अज्ञानादिरहितेऽपि ब्रह्मणि भ्रान्तिसिद्धैक्येन तदुपदेशोऽपि सम्भवत्येव ।

भिन्ने ब्रह्मण्यभिन्नत्वभ्रमः किमर्थमुत्पाद्यत इति चेत्, अभिन्ने ब्रह्मणि भिन्नत्वभ्रमः किमर्थमुत्पाद्यते? अथोपासनेन फलविशेषार्थमिति चेत्? तुल्यम्। उपासनविध्येकवाक्यत्वे दृष्टिलिङ्गं यत्र न दृश्यत इति चेत्तुल्यम् । दूरानुकर्षाद्यत्र दृश्यत इति चेत् न किमत्रापि?

अपि च ब्रह्मणः शुद्धत्वान्यथानुपपत्त्यैव तस्य जीवैक्योपदेशो नास्त्येवेति वा तदन्यपर इति वा तत्परोऽपि भ्रान्तिमूल इति वा कश्च नतु युक्तम् । नचाशुद्धिमिथ्यात्वेनाविरोध , उपदेशमिथ्यात्वेन तदुपपादकाभावेऽप्यविरोधप्रसङ्गात् ।

---

पश्या भेदप्रतीतिनिरूपणेन नास्तीत्युच्यताम्, कृतं तस्य भ्रमत्वकल्पनेनेत्यर्थः । तर्हीति । यदि प्रत्यक्षादिविरोधान्न भेदप्रतीत्यपह्नवः शक्यः, तर्हि निर्दोषभेदश्रुतिविरोधात् तद्भ्रमत्वकल्पनमप्ययुक्तमित्यर्थः । भेदप्रतीतेः प्रामाण्यत्यागमात्रादैक्योपदेशासम्भवान्न धर्मिस्वरूपनिह्नव इति शङ्कते भ्रान्तिसिद्ध इति । अज्ञानादिति । ऐक्योपदेशस्य भेदज्ञानप्रामाण्यत्यागेनेव स्वप्रामाण्यत्यागेनापि सम्भवादज्ञानादिकल्पनागौरवादित्यर्थः । प्रदेशान्तरे उपासनविधेः सत्त्वात्तदेकवाक्यतया दृष्टिविधिरुपपद्यत इति शङ्कते दूर इति । अत्रापि तथा किं न स्यादित्याह न किमिति । अविरोध इति । शुद्धत्वस्येति शेषः । उपदेश इति । ऐक्योपदेश इत्यर्थः । उपपादकत्वेन कल्पिताविद्यादिषु दौर्घट्योक्तेरपि आदौ दौर्घट्यपरिहारस्य सुवचत्वादिति भावः ।

यश्चासौ " क्षेत्रज्ञं चापि मां विद्धी " ति तत्त्वविज्ञानसापेक्षस्त दुपदेशः, तेनैव च तदज्ञानं कल्प्यत इति चित्रम् ! तदेतच्छ्रीमद्गीताभाष्येपि स्पष्टमाह । तथा भाष्येप्यदर्शयत्— " नाप्यैक्योपदेशान्यथानुपपत्त्ये " त्यादिना ॥

इति शतदूषण्यां ऐक्योपदेशान्यथानुपपत्तिभङ्गः

एकोनपञ्चाशो वादः ॥

---

श्रौतैक्योपदेशान्यथानुपपत्तिं दूषयित्वा स्मार्तोपदेशानुपपत्तिं दूषयति यश्चासा विति ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
ऐक्योपदेशान्यथानुपपत्तिभङ्गो नाम
एकोनपञ्चाशः स्कन्धः ॥४९॥



श्रीरस्तु ।

॥ पञ्चाशो वादः ॥

हताशेषक्लेशा निरवधिमहानन्दधनिनो
वयं भूयास्मेति स्थिरमनघवर्गेऽधिकृताः ।
अनाघ्रातद्वन्द्वा हृदयजुषर्पदद्वन्द्वरुचयः
स्वदन्तां मे सन्तः श्रुतिजलधिमुष्टिन्धयगिरः ॥

साधनचतुष्टय पूर्ववृत्तमिति वदद्भिर्मुमुक्षुत्वं तावदधिकारिविशेषण मित्यङ्गीकृतम् । सा च मुमुक्षा मोक्षो मे स्यादित्येवमाकारा । तथाविधा सा कस्याधिकारिणो विशेषणमिति कथयन्तु कथयन्तु कलिब्रह्ममीमांसकाः, किं नित्यमुक्तस्वभावस्य सचिदात्मनः, उत तस्यैवाविद्यासाक्षितामापन्नस्य, उतान्तःकरणप्रतिफलितचिदाभासस्य, तद्वृत्तिसमारोपिताक्रियात्वस्य वा चैतन्यस्य, अन्तःकरणस्यैव वा, अथ यस्य कस्यचिदनभिलप्यस्य, न वा कस्यचित्' इति ।

न प्रथमः, विरोधात्; तस्य नित्यमुक्तत्वादेव मोक्षेच्छाविरहात्, अन्यथा नित्यमपि तत्प्रसङ्गात् । मुक्तमप्यात्मानं बद्धमिवाभिमत्य मुमुक्षतीति चेन्न, तस्य तथाविधाभिमानेऽप्यनधिकारात्, तत्सद्भावे वा नित्यमुक्तत्वव्याघातात् । भ्रान्त्या वस्तुवृत्त्या च द्वयोरविरोध इति चेन्न,—

---

अत्र वयं भूयास्मेत्यधिकृता इत्यनेन एतादृशीच्छाधिकार इति लभ्यते, तेनाहमर्थविनाशपक्षे तदसम्भवः सूच्यते । तेन वादार्थसंग्रहः । कथयन्त्विति । "चापले द्वे भवत इति वक्तव्य"मिति [चापले च] द्विर्वचनम् । त्वरा—चापलम् । अन्यथेति । इदानीमपि तस्य नित्यानित्यविवेकाद्यसम्भवेन मुमुक्षायास्तदनपेक्षत्वात् कारणाभावादपि मुमुक्षाभावो न वक्तुं शक्यत इति भावः । तथाविधेति । अभिमानस्यैव संसारत्वादिति भावः । इममभिप्रायमजानानो बद्धाभिमानसत्वेऽभिमानसिद्धबन्धसत्वान्मुक्तत्वव्याघात उक्त इति भ्रान्त्या शङ्कते भ्रान्त्येति ।

भ्रान्तेरेव तद्विरोधितया तदनधिकारस्योच्यमानत्वात् । सापि भ्रान्तिसिद्धे त्यविरोध इति चेन्न, दूरं गत्वापि तद्भ्रान्तेर्दुस्त्यजत्वात् ।

न द्वितीय , भवत्पक्षे साक्षित्वानुपपत्ते', अविद्यानुभवानुपपत्तेश्च पृथगुपपादनात् । अस्तु वा साक्षित्वम् , तस्याप्यत्यन्तमव्यवस्थतयोदासीनस्वभावस्यानुकूलप्रतिकूलपक्षपातविरहात् संसारोद्वेगतन्मूलमोक्षेच्छा तदायत्तश्रवणमननादिप्रयत्नासम्भवात् , न तरामधिकारः । सर्वसाक्षिणश्च तस्य मुमुक्षायां युगपत्सर्वात्ममोक्षश्च प्रसजति । नचैतन्नानाजीववादिभिरिष्यते एकजीववादिनोपि शुको मुक्तो वामदेवो मुक्त इत्यादि प्रतिनियतमोक्षोपदेशः प्रतिनियतमोक्षेच्छाधीनः, साचेच्छा यदि साक्षिण , तदा शुकादिमोक्षदशायामेव सर्वमोक्षे संसारानुवृत्त्यसम्भवः । अथ स्वप्नदृष्टस्येव साक्षितया कल्पितस्य कस्यचित्[१] तर्हि मिथ्याभूतस्य मोक्षो नामात्यन्तभवनिवृत्त्यात्मा स्वरूपनिवृत्तिपर्यवसित इति साधु मोक्ष

---

अभिसन्धिमुद्धाट्य परिहरन्ति भ्रान्ते रिति । सापी ति । भ्रान्तेरपि मिथ्यात्वाद्ब्रह्मत्वनित्यमुक्त्या न विरोध इति भावः । दूरं गत्वे ति । अनवस्थाभयेन क्वचित्सत्यभूतभ्रान्तेर्दुस्त्यजत्वादिति भावः । उदासीने ति । औदासीन्यबोधाभ्यां साक्षात्वमिति त्वदिष्टत्वादिति भावः । सर्वे ति । सर्वपुरुषसाधारणस्याविद्यानुभवरूपसाक्षिण इत्यर्थ. । इष्टापत्तिं परिहरति नचैत दिति । ननु यत्सत्यं ब्रह्मस्वरूपं कल्पितसाक्षितामापन्नं तस्य मुमुक्षा न ब्रूम', किन्तु अन्यस्य स्वरूपतः कल्पितस्य साक्षिणः, तथा च न तन्मुक्त्या सर्वमोक्ष इत्याशङ्क्य निराकरोति सा चेत्या दिना। साध्वि ति । आश्रयाभावान्मोक्षो न स्यादिति भावः । मोक्षेच्छाश्रयस्य कल्पितसाक्षिणो नाशेपि मोक्षाश्रयतयान्यस्येवेष्यमाणत्वान्नोक्तदोष इति शङ्कते

समर्थित । अथ स्वस्मिन् विनष्टे अज्ञाने स्वसाक्षीभूतायाः संविदः सा क्षित्वेऽप्यतिक्रान्ते स्वप्रकाशानन्दपात्ररूपा संविदवतिष्ठत इति तदर्थमयम पवर्गारम्भ इति चेत्, प्रेक्षावत्प्रवृत्तेस्तथात्व सम्भवात् । तदाहुः—

" निरस्ताखिलदुःखोहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेपि मत्तोन्या काचिज्ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥ " इति ।

अत एव न तृतीयः—तस्यापि चिदाभासत्वादेव विनाशावश्य म्भावात् । प्रतिबिम्बस्य नाशेपि बिम्बात्मनावस्थानवदन्तःकरणप्रतिफलितरूपविनाशेपि प्रमात्मना स एव तिष्ठतीति चेन्न, प्रतिबिम्बस्य मिथ्याभूतस्य सत्यबिम्बात्मनावस्थान सम्भवात् । बिम्बप्रतिबिम्बयोर्भेदनिषेधे स्वरूपमेकमेव भवतीति चेन्न;—सत्यमिथ्यार्थयोर्भेदनिषेधस्यैवासम्भवात् । सम्भवे वा सर्वसत्यत्वं सर्वशून्यत्वमनेकान्तवादो वा प्रसज्येरन् ।

---

अथेति । स्वसाक्षीति स्वकल्पकसाक्षिरूपसत्यसंविद इत्यर्थः । अहमर्थेति अहमर्थविनाशकदोष उक्तम क्षितिविनाशेपि तुल्य इत्यभिप्रायेण एतच्छ्लोकोपादानम् । किञ्चैव मुमुक्षाधिकारो न स्यात्, समानकर्तृकेच्छाया एव मुमुक्षात्वात्, न च मुमुक्षाशब्देन इच्छामात्रमत्र लक्ष्यत इति वाच्यम्, ' मुमुक्षुर्वै शरणमहं" मित्यादि मुमुक्षाधिकारबोधकश्रुतिस्मृत्यादिविरोधात् । दृष्टान्तमुखेन शङ्कते प्रतिबिम्बस्येति । दृष्टान्तासम्प्रतिपत्त्या परिहरति प्रतिबिम्बस्येति । ननु मदीयमेवेद मुखं दर्पणे दृश्यत इत्यादि प्रत्यभिज्ञया तदभेदसिद्धेर्भेदनिषेधात् प्रतिबिम्बस्यापि सत्यत्वं बिम्बाभेदश्च युज्यत इति शङ्कते बिम्बेति । दर्पणे मुखं नास्तीति बुद्ध्या बाधितस्य मुखस्य शुक्तिरजताद्यविशेषेण मिथ्यात्वात्तदभेदनिषेध एव न सम्भवति, प्रत्यभिज्ञा तु मिथ्यार्थानभ्युपगमपक्षे उपपद्यते, तदभ्युपगमपक्षे तु कर्दमलग्नादर्शमुद्राया मम पादाविति प्रत्यभिज्ञा

अस्तु वात्र भेदनिषेधः, तद्, प्रतिफलितचिदाभासस्य ब्रह्मणश्च स्वरूपैक्ये ब्रह्मण एव सर्वोपरागप्रसङ्गात् प्रतिफलनादिक्लृप्तिरपि निरर्थिका । प्रतिफलनादिकं च दुरुपपादमिति स्थितमन्यत्र ।

न चतुर्थः—तस्य क्रियात्वेनैव प्रकाशमानस्य मोक्षेच्छातदर्थप्रयत्नाद्याश्रयत्वस्य तद्भ्रमस्य वा दूरनिरस्तत्वात् । अत एव वृत्तिमदन्तःकरणभेदाग्रहणात्तस्य तदभिमान इति निरस्तम् ।

न पञ्चमः—अपवर्गेऽन्तःकरणस्यापि स्वरूपोच्छेदाभ्युपगमात् सुषुप्तिप्रलयादिषु स्वयमेव नश्वरतयाभ्युपगतस्य किं मोक्षार्थेन महता प्रयासेन ? नचान्तःकरणाख्यस्य द्रव्यस्य ज्ञानेच्छादिसम्भवः । ज्ञातृत्वाध्यासश्च न सम्भवतीति सिद्धमन्यत्र ।

नापि षष्ठः, तस्यापि मिथ्यात्वेन विनाशावश्यम्भावात्, सत्यत्वे ब्रह्मस्वरूपान्तर्भावबहिर्भावयोरनधिकारत्वसद्वितीयत्वादिप्रसङ्गात्।नचानभिलपनीयंमोक्षाधिकारिस्वरूपमपरिज्ञायैव स्वयमधिकरोतीति वाच्यम्,अविदि

---

वदुपपाद्या, मावोपपादीति भावः । अस्त्विति । अस्तुवान्यत्र मिथ्यार्थाभ्युपगमेऽपत्र तदनभ्युपगमः, किन्तु बिम्बप्रतियोगिकभेदमात्रस्य मिथ्यात्वं ततश्च प्रतिबिम्बस्य बिम्बात्मनावस्थानमित्यर्थः । तदिति । ब्रह्मणो बन्धाश्रयत्वे अवद्यप्रसङ्गपरिहारार्थं हि जीवस्य तदाश्रयस्य प्रतिबिम्बत्वकल्पनम्, प्रतिबिम्बस्य बिम्बाभेदे तदपरिहारात्तत्कल्पनं व्यर्थमित्यर्थः । अतएवेति । क्रियात्वेन प्रकाशमानस्य तदाश्रयान्तःकरणाद्भेदस्यैव गृहीतत्वादित्यर्थः । ननु उच्छेद एव पुरुषार्थ इत्यत आह सुषुप्तीति । द्रव्यस्येति । जडत्वमभिप्रेतम् । ननु जीवस्यैव किञ्चिन्मोक्षाधिकारिस्वरूपमस्ति तच्च दुर्विज्ञेयत्वादनभिलपनीयम्, जीवश्च तदज्ञात्वैव प्रवर्तत इत्यत्राह नचेति । स्वयमिति । ब्रह्मकल्पितस्याविकारिण स्वगताधिकारि

ताधिकारिस्वरूपाय कश्चिदप्यनधिकारात् । विदितत्वेपि इक्षुक्षीररसादि वद् दुरभिलपत्वं तस्येति चेन्न ; अहमर्थातिरिक्तस्य कस्य चिन्मुमुक्षो. स्वात्मसाक्षिकोपलम्भादर्शनात् । उक्तं हि--" निरस्ताखिलदुःखोहं " मित्यादिना ।

नापि सप्तम --अधिकारितद्विशेषवर्णनप्रयासनैष्फल्यात्, तन्मूल श्रवणादिप्रवृत्त्यनुपपत्तेः, शास्त्रारम्भभङ्गप्रसङ्गाच्च । नास्त्येव वस्तुत कश्चिदधिकारी, तथापि सन्निव भातीति । तस्य मुमुक्षा विशेषणमिति चेत्? कस्यासौ सन्निव भातीति वक्तव्यम् । न कस्यचिदिति चेत्? तर्हि कथ सन्निव भातीति । ब्रह्मण इति चेन्न ,-तस्य परानुसन्धानादि सामर्थ्यविरहस्योक्तत्वात् । तत्सद्भावेपि ब्रह्मैवेद विशेषणमित्यनुसन्दध्यात् स्ववमनुसन्धानाभावे च न प्रवृत्ति. । अधिकारतन्मूलप्रवृत्त्यादिविशि ष्टतयैव ब्रह्मणा तदनुसन्धानमिति चेत्? किमत? नहि तावतापि स्वना शरूपेऽपवर्गे ब्रह्मदृष्टस्य तस्य मुमुक्षोपपादिता भवति । स्वनाशमविदि त्वैव स्वावस्थानाभिमानेन तस्य मुमुक्षापि जायत इत्येव रूपोयं ब्रह्मण स्समोह इति चेन्न, एव रूपस्य समोहस्यापि शास्त्रतोवसाये स्वनाशवेद नसिद्धौ पुनरप्रवृत्तिप्रसङ्गात् ।

ननु यदि स्वनाश एवापवर्ग इति तत्त्वम्, तदा तदपेक्षायां को विरोध इति चेन्न,-माध्यमिकवदौपनिषदै. स्वनाशापत्तिर्मोक्ष

---

विशेषणप्रतिसन्धानाभावात्प्रवृत्तिर्नस्यादित्यर्थः । ननु अधिकारतदनुसन्धानतन्मूल प्रवृत्तिविशिष्टतया ब्रह्मणा कल्पितत्वात्तस्य मोक्षार्थप्रवृत्त्युपपत्तिरित्याशङ्कते। अधिकारे ति । नहितावते ति । अधिकारतदनुसन्धानसिद्धावपि मुमुक्षानुपपत्ते. प्रवृत्तिर्न स्या दित्यर्थ. । स्वनाशाज्ञानमुमुक्षयोरपि ब्रह्मकल्पिततया सर्वोपपत्तिरिति शङ्कते स्वनाश मिति । शास्त्रतोवसाय इति । अनवसाये तु मिथ्यात्वज्ञानाभावादवि

इत्यनभ्युपगमात् । अभ्युपगमे वा कथमस्य पुरुषार्थत्वमुपपाद यिष्यसि ? दुःखात्यन्तनिवृत्तिरूपत्वादिति चेन्न,— "रसं ह्येवायं लब्ध्वानन्दी भवती" त्यादिश्रुतिशतकोपप्रसङ्गात् । अस्तु वा स्वनाशः पुरुषार्थः, तथापि तदर्थाप्रवृत्तिरस्य न सम्भवति, ब्रह्माज्ञाननिवृत्तिमन्तरेण तत्कल्पितस्वरूपनिवृत्तेर्दुस्साधत्वात् । ब्रह्माज्ञानमपि तत्प्रवृत्त्यैव निवर्तत इति चेत् ? तर्ह्येकमोक्षे सर्वमोक्षप्रसङ्गात् ब्रह्मदृष्टेषु जीवेषु बद्धमुक्तव्यवस्थाभङ्गः । तत एव च प्रतिनियतमुमुक्षाद्यसम्भवः । स्वभावतः कश्चिदेव मुमुक्षादिसमीह कदाचिद्ब्रह्माज्ञानं निवर्तयतीति चेत् ? तर्हि किमर्थमिदानीं भवद्भिः प्रत्येकमुमुक्षादिपूर्वकं शास्त्रमारभ्यते । न वयं वस्तुतश्शास्त्रमारभामहे,- किन्तु अस्मदारम्भात्मना ब्रह्मण एवायं समीह इति चेन्न, ब्रह्मण एव शास्त्रारम्भतज्जन्यज्ञानादिपरिज्ञाने तावतैवापवर्ग सिद्धौ पुनस्संसारानुवृत्त्यभावप्रसङ्गादिति दुर्वचस्ते शास्त्राधिकारी ।

ननु भवतोपि समानोयम् दोषः, ईश्वरस्य कारणावस्थस्य कार्यावस्थस्यावताराद्यवस्थस्य च नित्यमुक्तत्वादेव तस्य मुमुक्षाद्यसम्भवात् , जीवस्यापि स्वतोपहतपाप्मत्वादिस्वभावत्वाभ्युपगमेन तस्यापि

---

त्यन्निवृत्त्यर्थप्रवृत्तिर्न स्यादिति भावः । तत इति । एकमोक्षे सर्वेषां मोक्षसम्भवा दन्यस्य मुमुक्षादिकं व्यर्थमित्यर्थः । ननु बद्धमुक्तव्यवस्थाभङ्ग इष्ट एव, इदानीञ्च संसारोपलम्भः कस्यापीति पूर्वमुक्तत्वादुपपन्नः, इतः परञ्च कल्पान्तरादिषु कल्पिता मुमुक्षा संसारनिवृत्तिपर्यन्ता भविष्यति स्वभावात् , न त्विदानीं कल्पिता, अत स्सर्वोपपत्तिरित्यत्राह स्वभावत इति । ननु भुक्तवति परेण कल्पितं भोजनं यथा प्रयोजनाभावपर्यनुयोगास्यानर्हं तथास्माकं ब्रह्मणा कल्पितशास्त्रारम्भतज्जन्यज्ञानादि कमिति शङ्कते न वयमिति । शास्त्रारम्भादिकं सर्वं ब्रह्मणा कल्पितमिति परिज्ञाने तत एव सर्वमिथ्यात्वज्ञानात् सद्य एव मोक्षः स्यात् , नच कालान्तरभाविज्ञानस्य

तदसम्भवादिति चेन्न,—स्वत उष्णस्य वह्नेर्मणिमन्त्रादिवशात्प्रतिबन्धवत् स्वतश्शुद्धियोगिनोऽपि जीवस्य कर्मवशात्संसारे तन्निवृत्त्यपेक्षापत्तेः । नहि वयं तन्निवृत्तिर्नित्येति वदामः, येन नित्यमुक्तत्वादिचोद्यावकाशः । नचात्मानं ज्ञप्तिमात्ररूपं, येनेच्छाप्रयत्नाद्यनुपपत्तिः स्यात् । नच सर्वदा सर्वज्ञत्वेन मुमुक्षुत्वार्थप्रवृत्त्याद्यसम्भवे कर्मशास्त्रस्य निर्मूलता भवेत् । अतो नित्यमुक्तब्रह्मात्मैकत्ववादे दुर्लभो मोक्षशास्त्राधिकारीति ॥

इति शतदूषण्यां परमतशास्त्राधिकारिभङ्गः
पञ्चाशो वादः ॥

---

एतस्मात्कश्चिद्विशेषो मिथ्यात्वपक्षे युज्यत इत्यभिप्रायः । स्वत उष्णस्येति । आनन्दात्मकज्ञानविकासरूपा पाप्मनिवृत्तिश्शुद्धिः, सा चासाधारणकारणान्तरानिरपेक्षत्वात् स्वाभाविकी, स्वतश्शुद्धियोगित्वञ्च तादृशशुद्धियोग्यता, सा च सर्वदा विद्यमानापि कर्मप्रतिबन्धात्र शुद्धिरूपफलोपहितेत्यर्थः । परमते नित्यमुक्तत्वात् निर्विशेषत्वेन मुमुक्षाद्यसम्भवत्वानुपपत्तेश्च हि दोष उक्तः । स्वमते तदभावमाह नहि वयमिति । स्वतोपहतपाप्मत्वप्रयुक्तमोक्षानधिकारशङ्कायां परिहृतायां प्रसङ्गात् स्वाभाविकज्ञातृत्वप्रयुक्तां कर्मानधिकारशङ्कां परिहरति । नचेति । परमते च सर्वज्ञेश्वराभेदात् कर्मशास्त्राधिकार्यपि न स्यादिति फलितम् ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतशारीरकशास्त्रयाथार्थ्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
शास्त्राधिकारभङ्गो नाम
पञ्चाशस्स्कन्धः ॥५०॥



श्रीरस्तु ।

## एकपञ्चाशो वादः ।



अनुकूलतया सर्वे पश्यन्त्या मुक्तसंविदः ।
आन्ध्यं निर्विषयत्वेन वदतोऽर्थान्निरुन्ध्महे ॥

"धीसन्ततिस्स्फुरति निर्विषयोपरागे" ति सौगतोपदिष्टमेव स न्तनिराब्दप्रहाणमात्रेण सगृह्णन्तः श्रुतिभिस्तावद्बाह्यतया ख्याप्यन्ते । तथाहि-"ब्रह्मविदाप्नोति पर' मित्युपक्रम्य 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते" ति ब्रह्मवेदनफलत्वेन विभूतिगुणविशिष्टब्रह्मानुभव एव

---

यत्कटाक्षा वितन्वन्ति जीवान् ब्रह्मसधर्मणः ।
श्रीनिवासगुरौ तस्मिन्ननन्या भक्तिरस्तु नः ॥
मुक्तानिव परं ब्रह्म स्वैस्साधनमिलैर्गुणैः ।
मोदयन्त्यमध्यास्ता मम वेदान्तदेशिक ॥

ब्रह्मविदिति । अत्राच यैरनुगृहीतम् । "ब्रह्मविदाप्नोति परमि" ति ब्राह्मणे ब्रह्म तद्वेदन प्राप्ति प्राप्यञ्चेति चतुष्टयमुक्तम्, एतद्विवरण "सत्य ज्ञान पि' त्यादिमन्त्रेण क्रियत इति श्रुतिरेवाह "तदेषाभ्युक्ते" ति । तदेव ब्रह्माभिमुखीकृत्य ऋगेषाऽभ्युक्तेत्यर्थः । "सत्य ज्ञानमनन्तं ब्रह्मे" ति ब्रह्मशब्दो विवृतः, "यो वेद निहितं गुहायामि" ति विच्छब्दः, "परमे व्योमन् सोऽश्नुत" इति प्राप्तिः "सर्वान् कामानि" त्यादिना प्राप्यमिति । ब्रह्मानुभव एवे ति । "सह ब्रह्मणे" त्यत्र सहशब्दस्य भोग्यसाहित्यपरत्वादिति भावः । तथाच भाष्यम् । ब्रह्मणा सह तद्गुणान् सर्वानश्नुत इत्यर्थः । दहरविद्यायां "तस्मिन्यदन्तस्तदन्वेष्टव्यमि" तिवत् गुणप्राधान्य वक्तु सहशब्द इति । एतच्चप्रकाशितमाचार्यैः । "अस्य वाक्यस्य प्राप्यवाचिपरशब्दविवरणरूपत्वात् 'सर्वान् कामान् सह ब्रह्मणे' ति भोग्यवाचिपदेनाव्यवहितप्रयोगस्वारस्याच्च सहशब्दो भोग्यसाहित्यपर इति । उक्तयुक्तेः, "परस्य विपश्चितो ब्रह्मण" इति पूर्वभाष्येण

प्रपद्यते । "यदा पश्य" इत्यादौ "निरञ्जनः परम साम्यमुपैती" त्यीश्वरपरमसाम्यापत्तिवचनाच्च सार्वज्ञ्यादिकं मुक्तस्य सिद्धम् । "मम साधर्म्यमागताः" इति च भगवान् स्वयमेवाह । "ब्रह्म वेद ब्रह्मैव भवती" त्यादिकमपि "वैष्णव वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वे" त्यादाविव साधर्म्यमात्रविषयमेव । नहि स्पर्धमानस्य यागविशेषमात्रेण साक्षाद्विष्णुत्वोपपत्तिः [2] जयरूपश्च फला न्तर स्फुटमभिधीयते । "इववद्वेवमेवे" ति च नैघण्टुका । प्रकारैक्येच

मन्त्रस्थविपश्चिदब्रह्मशब्दयोर्भोग्यनाचिब्राह्मणस्थपरशब्दव्याख्यानपरत्वख्यापनाच्च, श्रुतेर्भोग्यसाहित्यपरत्वे उदाहृतभाष्यस्य तात्पर्यमवगम्यत इत्याचार्यस्य भाव. ।

एव भाष्यतात्पर्योक्तयने हेत्वन्तरमभ्याहाचार्य· "गुणप्राधान्यं वक्तुमित्यने नापि भोग्यसाहित्यपरत्व सिद्धम्, अन्यथा भोक्तृप्रधान्य हि सिध्येत् नतु भोग्य गुणप्राधान्यमि" ति । भोक्तृशब्दा जीवविषय. । यदा पश्य इति । मुक्तोपसृ प्यस्य ब्रह्मणो ज्ञानादियोग परमसाम्यप्रतियोगित्व मोक्षदशायां च रूपयितु यदापश्य इत्यादावि त्युक्तम् ।

परकल्पितार्थमपि निराकुर्वन् प्रमाणान्तरमाह ब्रह्मवेदे ति । वैष्णव मिति। साम्यमात्रे दृष्टान्त·, नतु परमसाम्ये। नही ति । भोग्य फलकामेनानुष्ठित तदनुरूप च कर्म तत्फल जनयेत् नचाय तत्कामी शत्रुजयस्यैव काम्यत्वात् नचेद क्षुद्रफल साधन कर्म तद्योग्यम्, नापि तत्साधयितु शक्यमन्यस्यान्यत्वमित्यर्थः। ततश्च यथा सा श्रुतिस्साम्यपरा तथैषापि जीवस्य ब्रह्मभावस्य सिद्धासिद्धौ च साध्यत्वासम्भ वात्साम्यपरैवेति भाव ।

नन्वेवकारस्साक्षात्त्वमेवावेदयतीत्याशङ्क्य, एवकार उभयत्रापि इवार्थ इत्याह इवे ति । अवधारणार्थत्वेऽपि न दोष इत्याह प्रकारैक्ये चे ति । यथा मुख्यार्थे प्रयोगो नापह्नवार्हो लोकसिद्धत्वात् , तथाऽमुख्यार्थे प्रयोगोऽपि ततएव नापह्नवमर्हति, अन्यथा ब्रह्मपदस्य लाक्षणिकत्वोक्तिविरोधात् , परन्त्वमुख्यप्रयोगो

...व्यवहारो मुख्यवत्प्रसिद्ध इव । एवकारादिश्च साधर्म्यातिरेकादमुख्ये मुख्यार्थोपचारद्योतको द्रष्टव्यः ।

यथा " नेदं मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव न च दन्तार्चिषस्तव ॥ " इत्यादिषु ।

नच तद्रूपस्य तद्रूपतापत्तिः फलं, सिद्धत्वात् । नाप्यतद्रूपस्य, अपसिद्धान्तात् ; अशक्यत्वाच्च । यथोक्तं भगवता पराशरेणापि "परमा

मुख्यार्थवाधापेक्ष स्यानुपदस्यैव घटते । एवकारस्तत्समानार्थोन्यश्च अमुख्ये प्रयोगस्य सौसादृश्यनिबन्धनत्वद्योतको द्रष्टव्यः ॥ तस्मादेवकारस्यावधारणार्थत्वेऽपि वाक्यस्य सौसादृश्यपरत्वं सिध्यत्येवेत्यर्थः ।

यद्वा एवकारस्यैवार्थत्वसम्भवात् सौसादृश्यपरत्वसम्भवमात्रमेव न परन्तु सादृश्यपरत्वमेव वाक्यस्य युक्तम् । नत्वभेदपरत्वम्, ब्रह्म भवतीत्येतावतैव तत्सिद्धौ एवकारस्य व्यर्थत्वात्, नच भेदवाद्यापादितब्रह्मभावानुपपत्तिनिरासार्थ एवकारः, तथासति भवत्येवेति व्यवहितान्वयप्रसङ्गात्; न च ब्रह्मैव भवति न ब्रह्मणो भिन्न इत्येवमाविद्यकभेदनिवृत्तिपरत्वादस्य वाक्यस्य नयकारवैयर्थ्यमिति वाच्यम्, ब्रह्म भवतीति ब्रह्मभावसाध्यत्वप्रतीतिस्वारस्यभङ्गापत्तेः, भेदनिवृत्तेर्ब्रह्मस्वरूपान्तर्भावबहिर्भावयोरनुपपत्तेरविद्यानिवृत्त्यनुपपत्तिवादे प्रपञ्चितत्वाच्च, नच सादृश्यपरत्वेऽमुख्यवृत्त्यङ्गीकारो दोषः, त्वत्पक्षेऽपि ब्रह्मपदस्य स्वरूपलक्षकत्वात्, पदान्तरावैयर्थ्याय जघन्यवृत्तेरेव त्यागस्त्वाच्च, तस्माद्वाक्यस्यायोग्यार्थत्वप्रसङ्गपरिहाराय सादृश्यपरत्वाङ्गीकारेऽपि सौसादृश्यासिद्धेस्तत्पर एवकारस्सार्थ इति, तस्माद्ब्रह्मैव भवति नान्य इति वैसादृश्यनिषेधपरेणैवकारेण वाक्यस्य सौसादृश्यपरत्वमेव युक्तम्, तथैव लोके दर्शनादित्यभिप्रायेणाह प्रकाशैक्ये चे ति । नेद मिति । एवकारसमानार्थवाक्यस्य सादृश्यद्योतकत्वोक्तौ एवकारस्यापि तत्सिद्धत्येवेति भावः । अभेदस्यैव साध्यत्वपक्षे दोषमाह नचे ति । यथोक्त मिति । अत्रानुगृहीतमाचार्यैः

' योगशब्द ऐक्यपरः, अन्यथा अन्यद् द्रव्य हि तद्द्रव्यतां नैतीति प्रतिक्षेपानु
पपत्तेः । ननु मिथ्यैतदित्युत्तरवाक्यस्य, अन्यद्द्रव्य तद्द्रव्यता नैतीत्येतन्मिथ्ये
त्यर्थ इति चेत्,—नैवम्, अन्यस्यान्यद्द्रव्यतानापत्तेः सत्यत्वात् इतरथा जडा
जडयोस्तादात्म्यप्रसङ्गः । ' ऋग्यजुस्सामनिष्पाद्य यज्ञकर्म मतान्तरे' त्येतत् इष्यत
इत्यनेन पूर्वार्धोक्तार्थस्य परमतत्वद्योतनात् । अन्येष्यत इति पदेनैकार्थ्यात् ।
किञ्च " परमार्थस्तु भूतानां संयोगोऽप्युपलभ्यतामि " ति वक्ष्यमाणपक्षस्य तात्त्विकत्व
निराकरणपरत्वाच्च प्रकरणस्य । एतच्छ्लोकपूर्वार्धस्य तत्त्वसमर्थनपरत्वमुत्तरार्धस्य नो
पपद्यते, 'धर्माय त्यज्यते' इत्यादिभिर्भोगैस्तत्तदर्थानां परमार्थत्वं हि निरस्यते ।
स्वतः प्रकृतार्थे स्वरसस्य एतच्छब्दस्य प्रकृतार्थे सत्यपि वक्ष्यमाणपरत्वाश्रयणमप्य
युक्तम् । अन्यद्द्रव्य तद्द्रव्यता नैतीति यत् एतन्मिथ्येति हि तदानीमर्थः, तथा
च सति यतःशब्दस्वारस्यभङ्गः यतःशब्दस्य हि हेतुपरत्वं स्वरससिद्धम्, न तु यच्छ
ब्दवत् प्रकृतार्थशरीरमात्रपरत्वम् । अन्यद्द्रव्य तद्द्रव्यता नैतीत्येतन्मिथ्येति यत
स्तत ऐक्यं परमार्थ इत्यन्वये तच्छब्दस्याध्याहारप्रसङ्गः, स चानध्याहारेण नि
र्वाहे सम्भवति नोपपद्यते । यद्युच्येत पूर्वं पृथक्भूतयोः परमात्मात्मनोरैक्यं पर
मार्थ इत्युच्यत इति चेत्, मिथ्यैतत् अन्यद्द्रव्यं हि द्रव्यता नैतीति यतः तस्मा
त्पूर्वमपि परमात्मात्मनोर्भेदो नास्तीति, नैव पूर्वं भ्रान्त्या पृथक्भूतयोरित्यस्याश्रुत
त्वेनाध्याहारप्रसङ्गात् । स चानध्याहारेण निर्वाहे सम्भवति नोपपद्यते । किञ्च
तस्मात् पूर्वमपि भेदो नास्तीति अश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं
स्यात्, तच्च तन्निरपेक्षनिर्वाहे सम्भवति नोपपद्यते । तस्मात् प्रागपि भेदो नास्ती
ति वाक्यं नाध्याहर्तव्यं पूर्वं भिन्नयोः परमात्मात्मनोः पश्चादभेद इति पक्षनिराकर
णमात्रपरत्वात् ग्रन्थस्येति चेत् ? किन्तेन प्रयोजनम् ? पूर्वमप्यैक्यसिद्धिरिति
चेत्,—पूर्वं पृथक् भूतयोः पश्चादैक्ययोगेऽभिहिते सति पश्चादपि भेदसिद्धेः ।
अतः स्वरसिद्ध एवार्थः स्वीकार्य " इति ।

"तत्केन कं पश्येत्, नहि द्रष्टुर्द्दष्टेर्विपरिलोपो विद्यते" इत्यादिकं तु भाष्य एव सुव्यक्तं व्याख्यातम् । "सर्वं ह पश्यः पश्यती" त्यादिश्रुतयश्च मुक्तस्य साक्षात्सर्वज्ञतां स्फुटतरमुपपादयन्ति । "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः" इत्यारभ्य—"यथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥" इति च स्मर्यते । तथाच "पश्चादुद्भूतबोधाश्च" इत्यादि । सूत्रञ्च "जगद्व्यापारवर्जमि" त्यादौ "भोगमात्रसाम्यलिङ्गाच्चेति ।" अतः श्रुतिस्मृतिसूत्रानुवर्तिनामीश्वरपरमसाम्यापत्त्या सार्वज्ञ्यमेव मुक्तस्य स्फुटम् ।

किञ्च—स्वप्रकाशैकस्वरूपस्य ब्रह्मणः कदाचित्स्वेतरविषयत्वं कदाचिच्च निर्विषयत्वमिति (त्वया) उभयमपि किं तत्त्वम्, उभयमप्यतत्त्वम्, उतान्यतरत्तत्त्वम्-अन्यतरदतत्त्वम्? इति । न प्रथमः-विषयविषयितत्सम्बन्धादिभेदस्य सत्यत्वप्रसङ्गात् । न द्वितीयः-उभयस्वरूपमात्रनिषेधे व्याघातात्, कालोपश्लेषेण निषेधो द्वयोरपि नित्यतामापादयेदिति पुनरपि व्याघातः । अथ कालावच्छिन्नान्यतरनिषेधार्थोऽन्यतरानुवाद इति मन्यसे, तदा

भाष्य न सर्वद्रष्टृत्वेन साम्यसम्भवः, इत्यत आह तत्केने ति । कदाचित्सविषयत्वं कदाचिन्निर्विषयत्वमित्येतदुभयमप्यतात्त्विकमिति द्वितीयः पक्षः किं विशेष्यद्वयनिषेधात्तयोः काद्माचित्कत्वरूपविशेषणनिषेधाद्वेति विकल्पमभिप्रेत्याद्ये दूषणमाह उभये ति । भावाभावयोरन्यतरनिषेधेन्यतरस्यावर्जनीयत्वादित्यर्थः । द्वितीयमनूद्य दूषयति काले ति । कादाचित्कत्वरूपविशेषणमात्रनिषेधे विशेष्ययोस्सविषयत्वनिर्विषयत्वयोर्नित्यत्वपर्यवसानाद्व्याघात इत्यर्थः । व्यावृत्ययहितधर्मपुरस्कारेण निषेध इति शङ्कते अथे ति । घटवति भूतले घटपटौ न स्त इत्यत्र यथा घटनिषेधार्थ एव घटानुवादः तद्वत् कादाचित्कसविषयत्वकादाचित्कनिर्विषयत्वयोर्मध्ये व्यावृत्यनुहितधर्मपुरस्कारेणान्यतरनिषेधार्थत्वादितरानुवाद इत्यर्थः ।

नहि शुक्तिकारजतादिसंविदा रजतादिविषयाणामपि बाधने बाधकाः । अबा
धितस्यापि मिथ्यात्वमित्यतिसाहसम् । अतोऽपि मिथ्याविषयगोचरत्वल
क्षणं सविषयत्वं ब्रह्मणस्तात्त्विकं किं तदन्यदिति चेन्न,—तन्नित्यत्वे
नित्यसंसारप्रसङ्गात् । तदनित्यत्वे तात्त्विकत्वपरिग्रहायोगात् । नह्यनित्य
मपि किञ्चित्पारमार्थिकं भवन्तो मन्यन्ते । स्वरूपानुप्रवेशात्तात्त्विकमिति
न दोष इति चेन्न,—स्वरूपस्याप्यनित्यत्वप्रसङ्गात् । तन्नित्यतया तदा
त्मना तन्नित्यत्वे पुनर्नित्यसंसारप्रसङ्गात् ।

किञ्चानादिकालं सविषयायाः संविदो निर्विषयता कुत आगता ?
विषयग्रहणसामग्रीसन्तानात्यन्तोच्छेदादिति चेत्,—किं नित्यायास्साम
ग्र्यपेक्षा? संविदन्तरसिद्ध्यर्थं सेति चेत् ? किं संविद्भेदमङ्गीकरोषि ?

---

सिद्धिरित्यादिकमुखम् । बाधाभावेऽपि सविषयत्वं तात्त्विकमित्याह नहीति । ता
त्त्विकसविषयत्वाङ्गीकारे तस्य नित्यत्वावश्यम्भावेन नित्यसंसारप्रसङ्ग इत्याह नेति।
तात्त्विकत्वे कथं नानित्यतेत्यत आह । नहीति । सत्यस्य ज्ञानानिवर्त्यत्वात्, अस
त्येन च सत्यनिवृत्त्ययोगात्, सत्यान्तरस्य चानङ्गीकारात् तदङ्गीकारे च तदनाशसंसा
रानिवृत्तिप्रसङ्गात्, तन्नाशस्य चोक्तरीत्या सत्यान्तरेण वाच्यतया तस्यापि तथेत्य
नवस्थाप्रसङ्गान्न परमार्थस्याप्यनित्यत्वाङ्गीकारः परस्योपपद्यत इति भावः । अनि
त्यस्यापि ब्रह्मस्वरूपान्तर्गतत्वाङ्गीकारात् पारमार्थिकत्वं युज्यत इति शङ्कते ।
स्वरूपानुप्रवेशादिति । किञ्च ब्रह्मणो नित्यतया तदभिन्नस्य मिथ्याविषयत्वस्यापि
नित्यतया नित्यसंसारप्रसङ्ग इत्याह तदिति । विषयग्रहणेति । विषयावगाहनं
विवक्षितम्, अन्यथा पूर्ववाक्योक्तदूषणपरिहारस्यानुपपत्तेः । ग्रहणशब्दश्रावण
मात्रेण किं ग्रहणशब्देन संविद्विवक्षिता उत विषयावगाहनमिति विकल्पमभिप्रेत्या
द्येऽपि किमनादिसिद्धा संविदेव विवक्षिता उत संविदन्तराणीति विकल्प्याद्यं दूषयति
किं नित्याया इति । संविद्भेदमिति । भेदः—नानात्वम् । द्वितीयपक्षं शङ्कते

विषयावगाहनार्थं सेति चेत्? किमिदमवगाहनं संवित्स्वरूपम्, उतान्यत्? पूर्वत्र नैरपेक्ष्यमेव, उत्तरत्र, किमसौ विषयिधर्मः, उत विषयधर्मः, उतोभयधर्मः, यद्वा विषयस्वरूपमेव। आद्ये सविशेषत्वम्। मिथ्यार्थधर्मप्रलपदूषणं तु स्थलान्तरेऽनुसन्धेयम्। द्वितीये—तदुत्पत्तावपि रूपाद्युत्पत्ताविव संविदस्तत्सम्बन्धाभावेन तादवस्थ्यमेव। तृतीयेपि—सविकारत्वगवर्जनीयमेव। चतुर्थे सम्बन्धासिद्धिः। विषयग्रहणसामग्र्या विषयोत्पादनमिति हास्यमलम्। सिद्धे हि विषये प्रकाशार्थं सा भ्रान्तौ तु तदुत्पादनमप्यह इति न भेद इति चेन्न,—आत्मख्यातिवदप्रसङ्गात्। प्रत्यक्षेण हि विषयग्रहणार्थं प्रमाणकल्पनं व्यावहारिकमपि सङ्घातैर्गृहीतं, अन्यथा क्षणभङ्गनिराकरणस्याप्ययोगात्, अतस्सा

---

विषयेति। स्थलान्तरे मिथ्यात्वभङ्गे। मुक्तिदशायां सविषयत्वनिवृत्तेः ब्रह्मस्वरूपतद्व्यतिरेकविकल्पेनाव्यवस्थितिदोषदर्शनं चानुसन्धेयम्। विषयधर्म इति पक्षेऽपि किं संविद उत्कर्षनिरूपकत्वमस्ति उत न। आद्ये पूर्ववत् सविशेषत्वादिकमित्यभिप्रेत्य द्वितीयं दूषयति। द्वितीय इति। तादवस्थ्यमिति। विषयधर्मात्मकावगाहनोत्पत्तेः प्रागवस्थावदनन्तरमपि तदवस्थत्वमेवेत्यर्थः। प्रागिव पश्चादपि निर्विषयत्वमेव स्यादित्याशयः। सविकारत्वं सविशेषत्वमित्यर्थः। चतुर्थ इति। संविदि तन्निरूपकत्वस्य पूर्ववदभावादित्यर्थः। विषयग्रहणेति। साक्षात्कारात्मकविषयग्रहणसामग्र्या विषयस्यापि प्रविष्टत्वेनात्माश्रयप्रसङ्गात्। सर्वथापि ज्ञानसामग्र्या विषयानुत्पत्तेः, अतीतादीनां ज्ञानस्थलेऽप्यतीतादिविषयस्य पुनरुत्पत्तिप्रसङ्गाच्च। हास्यत्वमित्यर्थः। यदि हि ज्ञानात्प्रागेव विषयस्सिद्धस्स्यात्, तदानीं हि विषयग्रहणसामग्री विषयार्था न स्यात्, भ्रान्तौ तु विषयस्य प्रागसत्त्वात् सामग्र्यास्तादर्थ्यमविरुद्धमिति शङ्कते। सिद्धे हीति। आत्मख्यातीति। ज्ञानार्थयोरभेदादिति भावः। सिद्धान्तविरोधमप्याह। प्रागिति। अन्यथेति। इन्द्रियसन्निकर्षस्य प्रत्यक्षकारणत्वादिन्द्रियसंयोगदशायामपि विषयस्य वाच्यत्वादेव हि क्षणभङ्गनिराकरणमिति भावः। अत इति। संविदः स्वरूपेण प्रकाशः

मग्रीनिरपेक्षसंवित्स्वरूपप्रकाशवादिनस्ते न निर्विषयदशा सिद्ध्यति । अस्तु तर्हि विषयविनाशादेव निर्विषयतासिद्धिरिति चेन्न,—नष्टस्यापि विषयत्वाविशेषात् । अन्यथा अतीतादिविषयस्मृत्यनुमानादिभङ्गप्रसङ्गात्।

---

संवित्स्वरूप प्रकाश., प्रकाशो भासमानता । सामग्रीनैरपेक्ष्यस्य उपपादितत्वान्न सामग्रीसन्तानोच्छेदान्निर्विषयदशोपपादनसम्भव इत्यर्थः । माभूत्सामग्रीविरहान्निर्विषयदशा, विषयाभावात्तु स्यादिति सिद्धान्तमेवाशङ्कते । अस्त्वि ति । निर्विषयता विषयानुल्लेखः । नष्टस्यापी ति । ततश्च निर्विषयत्वाभावस्सदारश्च प्रवण्येते इति भावः ।

एतेनेद निरस्तम्, यदाह नवीनः स्वतः शुक्लस्यापि पटस्य रक्तद्रव्योपरागे रक्तत्ववत् स्वतो निर्विषयस्य प्रकाशरूपात्मनो विषयोपरागे सविषयत्व तदपाये रक्तद्रव्यापाये पटशौक्ल्यवत् स्वाभाविकनिर्विषयप्रकाशस्वरूपत्वमेव, तथाच स्वरूपज्ञानस्य स्वसृष्टार्थमात्रप्रकाशकत्वान्मुक्तौ नातीतविषयोपप्लव', अतएव च न तस्य मुक्तौ विषयानुल्लेखेऽपि निस्स्वभावत्वप्रसङ्ग', अर्थप्रकाशत्वस्य उपलक्षणत्वात् ; त्वयाप्येवमेवाभ्युपगन्तव्यत्वात्, अन्यथा त्वदभिमतेश्वरज्ञानस्य नित्यस्य स्वविषयापायदशाया निस्स्वभावत्वप्रसङ्गात्, नचातीतमपि तद्विषयीकरोतीति वाच्यम्, ईश्वरज्ञानस्यातीतार्थसम्बन्धाभावेन तदविषयत्वात्, अतीतादेश्च तव मते निस्स्वरूपत्वेन स्वरूपद्वयात्मकस्या स्वरूपसम्बन्धस्यापि वक्तुमशक्यत्वात्; तस्यापि सस्वरूपत्वे प्रागभावध्वसाभ्या प्रतियोगिन एककालत्वप्रसङ्गात्, ततश्च तदानीमसत्त्वे वाच्ये निस्स्वरूपत्वस्यावश्यकत्वात् , नचातीतादेरभाव एव न स्वसत्त्वमिति वाच्यम्,—अनिर्वचनीयानङ्गीकारिण असत्त्वनिषेधे सत्त्वापत्ते , एतेन कालविशेषे तस्याभावप्रतियोगित्वमेव न स्वसत्त्वमिति निरस्तम् , असत्त्वनिषेधे सत्त्वापत्तेः, अभावप्रतियोगित्वस्याभावविरहात्मकप्रतियोगिस्वरूपत्वेन प्रागभावादिनैककालत्वापत्तेश्च , तथा चेश्वरज्ञानमर्थसम्बन्धाभावात् कथमर्थप्रकाशस्यात् कथ तर्हि ईश्वरस्य सार्वज्ञ जगन्निर्माण वा, भूतभाविप्रतिसन्धानाभावादिति चेत्, स्वात्मानमुपालम्भस्व, यस्त्वमीश्वरेऽतीताद्याकारामविद्यावृत्तिन्न स्वीकुरुषे , नच साम्बसम्बन्धात् कथमतीतादिक विषयीकुर्यादिति वाच्यम् । अनिर्वचनीयवादे

आमोक्षान्निरन्वयविनाशाभावात् असत उत्पत्त्यभावाच्च दुर्निरूपसूक्ष्मरूपेण पदार्थमा लस्यातीतादिकालेऽपि विद्यमानतया कल्पितसम्बन्धेन सार्वज्ञ्याद्युपपत्तेरिति ।

अत्र यदुक्तम्—स्वतो निर्विषयस्यात्मनो विषयोपरागे सविषयत्वमिति । तन्न, उपाधिसम्बन्धाद्धि उपाधिगतो धर्मस्तत्संसर्गिणः भासते नच सविषयत्वं विषयगतम्, येन तदुपरागात् सविषयत्वं स्यात् । किं च को नाम सविषयत्वोपपादको विषयोपरागः ? न तावत्सम्बन्धमात्रम्, रक्तद्रव्यसंसृष्टपटस्य रक्तद्रव्यविषयतापत्तेः । नापि विषयविषयिभाव एव, आत्माश्रयप्रसङ्गात् ।

यच्चोमीश्वरस्तज्ञानस्य सर्वविषयस्यापि कार्यविरहकाले तद्विषयत्वं त्वयापि वक्तव्यम्, असता तेन सम्बन्धाभावादिति । तन्न, अतीतादिगतस्य ज्ञानविषयत्वस्येदानीमसत्त्वेपि तत्काले सत्त्वात्तन्निरूपितविषयीकरणस्य च नित्येश्वरज्ञाने सर्वदा सत्त्वात् । अतीतादिविषयकास्मदादिज्ञानेऽपि विषयकाले ज्ञाननिरूपित विषयत्वं ज्ञानदशायां च तस्मिन्विषयित्वमिति न कश्चिद्दोषः ।। नच विषयकाले एतज्ज्ञान विषयत्वप्रतीतिप्रसङ्गः, तदानीमेतज्ज्ञाननिरूपकस्याप्रतीतेः इदानीं च ज्ञानोपस्थितेस्त द्विषयत्वम् । तत्कालेपि भूतभविष्यज्ज्ञानोपस्थितिर्यस्यास्ति तेन विषयत्वं ज्ञायत एव ज्ञातो घटो ज्ञास्यते घट इति । नह्यत्र विषयत्वस्य भूतत्वभावित्वे प्रतीयेते, धात्वर्थगतभूतत्वभविष्यत्त्वयोरेव निष्ठालृटोर्विधानात् । प्रतीतेरिदानीन्तनत्वादेव च इदानीमतीत प्रतीतिविषय इत्यादिप्रतीतिः ।। कथमन्यथा ईश्वरस्य सार्वज्ञ्यं जगन्निर्माणं वा, भूतभाविप्रतिसन्धानाभावात् ।

यत्तूक्तमविद्यावृत्त्या विषयस्यानिर्वचनीयत्वाच्च स्वमत एव तदुपपत्तिरिति। तन्न, अनिर्वचनीयस्य सूक्ष्मरूपस्य विद्यमानस्य विषयत्वेऽप्यविद्यमानस्य मूलरूपस्याविषयतया सार्वज्ञ्यायोगात् । सूक्ष्मरूपस्य विद्यमानत्वे अविद्यावृत्त्या परिहार वैयर्थ्यम्, प्रकाशस्यैव तद्विषयत्वसम्भवात् ।। किञ्चैवमनिर्वचनीयस्य सम्बन्धस्या सताप्यङ्गीकर्तुं शक्यत्वात् सूक्ष्मरूपान्तरकल्पनया परिहारवैयर्थ्यम् । शुक्तिसाक्षात्कारात्तदज्ञानतत्कार्यरजतादेर्निरन्वयविनाशा नानाजीववादे तत्तज्जीवानां ब्रह्मसाक्षात्कारेण तत्तत्संसारस्य तदज्ञानान्तःकरणादेर्निरन्वयविनाशे ईश्वरस्यास्मदादेर्वा त-

तद्विषयत्वे स्थितेऽपि तन्नाशान्न संसारादिप्रसङ्ग इति चेत्? किमसौ नाशो ऽप्रकाशात्मा उत प्रध्वंसात्मा? आद्ये तद्विषयत्वे स्थितेऽपि तन्नाशादिति स्ववचनविरोध । द्वितीये निवर्त्यसत्यत्व निवृत्त्या सद्वितीयत्वमित्यादिदोष प्रसङ्ग । निवृत्तान् निवृत्ततया विषयीकरोतीति न दोष इति चेत्? विषयीकरणं किं स्वरूपम्, उत तदतिरिक्तम्? स्वरूपपक्षे संसारदशाया

---

ज्ञानाभावप्रसङ्ग । किञ्च मुक्तसंविद संसारिसंविद्भिरीश्वरसंविदा चाभिन्नतया सर्वविषयत्वमवर्जनीयम् । तस्या निर्विषयत्वे "यस्मिंस्तु संसारिणि दु खमस्ति तदपि तन्निष्ठत्वेन ब्रह्मीभूतो मुक्तोऽवगच्छती" ति स्ववचनविरोधाच्च ॥

यत्तु मोक्षे दु खादितादात्म्याभावादेव तदस्फुरण न तु स्फुरणविरहादिति । तन्न, तादात्म्य ह्यभिन्नसत्ताकत्वम्, तच्च दु खदशायामिव मुक्तदशायामप्य-स्त्येव । किञ्च वृत्तेस्ताकत्व तन्निरूपणाधीननिरूपणार्हत्वमित्युक्तम्, ततश्चेद ज्ञान एव तद्विषयात्मकमस्तु, अत एवेश्वरादिज्ञानानामतीतादिविषयत्व चो-पपद्यते ।

तद्विषयत्व इति । आदिपदेननिर्विषयत्वाभावो गृह्यते । मुक्तसंविद्दस्तवि षयत्वे सत्यप्यनीतविषयकत्वेन तदानीं विषयाभावादेव निर्विषयत्वव्यपदेशोऽपि घटत इति भाव । अद्य इति । प्रकाशस्य निवृत्तया तत्प्रकाशाभाववचनस्य तद्विषयत्वाभावपर्यवसान दिति भाव: । द्वितीय इति । मोक्षदशायामपि विद्यमा नस्य स्वस्याभिव्यञ्जकत्वाभावेन सत्यस्याद्विरोधिनो निवर्त्यस्य समानसत्ताकयोरेव विरोधात् सत्यत्वं निवृत्त्या सद्वितीयत्व च प्रसज्यत इत्यर्थ: । आदिपदेन निवृत्ते ब्रह्मस्वरूपत्वे तत्सामार्थ्येन श्रवणादिवैयर्थ्यम् । भिन्नसत्ताकत्वेन ब्रह्मस्वरूपेणा विरोधित्वात् पूर्वमिवोत्तरकालेऽपि संसारप्रसङ्ग इत्यादिक ग्राह्यम् । नष्टस्यापि विषयत्वाविरोधादित्यत्र पुनश्चेत । निवृत्ता निति । अनिवृत्ततयाभेददर्शनमेव स सार अतो न संसारप्रसङ्ग, निवृत्ततया विषयीकरणमेव निर्विषयत्वमिति भाव: । स्वरूपपक्ष इति । ततश्च समाधिदशायामपि संसारभावनिर्विषयत्वे प्रसङ्ग इति

मपि नित्यं निवृत्ततया विषयीकारप्रसङ्ग., सर्वत्र स्वरूपस्य तद्.नीमपि विद्यमानत्व त्। अतिरिक्तपक्षे तत्किं सत्यम्, उतमिथ्या[२] सत्यत्वे सद्वितीयत्वादिप्रसङ्गः। मिथ्यात्वे तु तस्यैव दृगधीनसिद्धेः प्रकाशात्तत्कारणाविद्यानुवृत्त्यावश्यम्भावाच्च पुनरपि संसारानुच्छेदः। तावन्मात्र क्षम्यन इति चेन्न;—तस्य तस्याश्च निवर्त्यत्वे। सत्यत्वप्रसङ्गे सद्वितीयत्वादिप्रसङ्गात्, तुल्यन्यायात् प्रपञ्चबाधादिमूर्खप्रलापानां निरोधप्रसङ्गात्। अतस्संविदि नित्यायां सामग्रीनिवृत्त्या विषयनिवृत्त्या वा निर्विषयत्वापादनं त्वया वक्तुं न शक्यम्।

ननु भवतामात्मस्वरूपस्य संविद्रूपत्वेपि यथा निर्विषयत्वं तथास्माकमपि स्यात्? न स्यात्, अस्माकमात्मस्वरूपस्य प्रतीतः कदाचिदपि बाह्यार्थगोचरत्वानभ्युपगमात्। भवतस्तद्विषयाया एव तद्विषयत्वनिवृत्तेर्दुर्वचत्वात्। अस्तु तर्हि भवतां धर्मभूतज्ञानवत्कदाचित्सविषयत्वम्, कदाचिच्च निर्विषयत्वमिति चेन्न; अस्माभिः परमार्थाकारान्तराभ्युपगमात्, भवतां तु तदनभ्युपगमात्तदयोगात्। अतो नित्यसंवित्स्वरूपप्रकाशनमात्राधीनसिद्धीनां सर्वेषामपि पदार्थानां नित्यत्वमपि प्रसज्येत। तदधीनसिद्धित्वाभावे तु सिद्धिनिषेधे तुच्छत्वम्। तादधीन्यनिषेधे तु सत्यत्वम्। अतस्तन्मात्राधीनसिद्ध्यभ्युपगमे तद्वदेव तदधीनस्यापि नित्यत्वमवर्जनीयमेव। तथा च सति सर्वः प्रपञ्चस्तस्य इति

---

भावः। सद्वितीयत्वेति। आदिपदेन नित्यत्वं गृह्यते। मिथ्यात्वेत्विति। अविद्याविषयीकरणयोर्निवृत्तत्वेनाविषयीकरणादिति भावः। तस्य—विषयीकरणस्य। तस्या—अविद्यायाः। आदिपदेनाविद्याया सत्यत्वे तन्मूलकप्रपञ्चस्य पि सत्यत्व ज्ञानानिवर्त्यत्वमित्यादि विवक्षितम्। तुल्यन्यायादिति। मिथ्यात्वेऽप्यविद्याविषयीकरणयोर्ज्ञाननाश्ये तुल्यन्याय त्। प्रपञ्चबाधकवादेऽपि निरुध्येतेत्यर्थः। आदिपदेनशुक्त्यादिज्ञानाद्रजतादिर्बाधो विवक्षितः। अस्माभिरिति। आकारान्तरम्—विषयीकरणम्। भवतांत्विति। स्वरूपातिरिक्तस्य परमार्थ

जितं यथार्थवादिभिः । तद्भयात्संविन्नित्यत्वपरित्यागे साक्षात्सौगतत्वादि प्रसङ्गः । अतएव स्वापगदमूर्च्छादिषु निर्विषया संविदित्यपि भवद्भिर्दुर्वच मेव, निर्विषयनिराश्रयसंवित्प्रकाशस्तदानीमनुभूयत इति कस्यचिदपि सावधानस्यापि समस्तसंस्कारतिरस्कारकदेहविगमादिक्लेशाभावेपि न परामर्शोरित । किं तु अहमपि न विनष्टः, विषया अपि स्थिताः, प्रकाश एव सुषुप्त्यादौ निवृत्त इति सर्वे प्रत्यवमृशन्ति । " नाह खल्वि " त्यादिश्रुतिरपि ज्ञाननिषेधपरैव, नजानार्मात्यत्रैव तात्पर्यात् । अस्माभिस्तु विषयप्रकाशलक्षणावस्थाविशेषराहितज्ञानद्रव्यमात्रसत्ता ' न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत ' इत्यादिश्रुतिबलादभ्युपेयते । नचास्ति तत्र प्रत्यक्षविरोधः, विषयप्रकाशव्यतिरिक्तदशायां तस्याः स्वप्रकाशायोग्यत्वात्, ज्ञानान्तरस्य तु तदानीं सामग्र्यभावादेवानुदयात्, तावतापि तदातन ज्ञाननिषेधश्रुतेश्चरितार्थत्वात् । अतस्त्वत्पक्षे ज्ञानस्य कदाचिदपि निर्विषयदशा दुरुपपादा । मुक्तौ तु सुतरामिति यथाश्रुति सार्वज्ञ्यमेव तदा

---

स्यानभ्युपगमात् स्वरूपमेव विषयीकरणमिति वक्तव्यम् । तस्य च निवृत्तिर्दुर्वचेत्यर्थः ।

ननु स्वापादिषु प्राक्सविषयाया एव संविदो निर्विषयत्ववन्मुक्तौ निर्विषयत्वं स्यादित्यत्राह । अतएवेति । न केवलं भवता दुर्वचत्वम्, निर्विषयनिराश्रयसंविदो मानाभावात् बाधाच्च तदानीमसिद्धेरेवेत्याह निर्विषयेति ।

ननु " नाह खल्वि " ति श्रुतौ " सम्प्रत्ययमहमस्मी " ति सुषुप्तौ सविषयत्वस्य निषेधात् तदा संविन्निर्विषयेत्यत्राह नाहेति । विषयीकरणस्य ज्ञानस्वरू

स्वीकार्यम् । अन्यपरास्ताः श्रुतय इति चेन्न,—परब्रह्मोपासनप्रकरणात् तत्फलप्रतिपादनपरत्वेन च सांसारिकफलित्वायोगात्, तत्र तत्रैव च निवृत्तसमस्तपुण्यपापत्वादिप्रतिपादनात्, विध्यपेक्षिते फले समर्प्यमाणे केवलार्थवादत्वकल्पनायोगात् । अन्यथा श्रुतहानाश्रुतकल्पनादिदोषसमुद्भवात् । अतस्सिद्धं न कथंचिदपि मुक्तिदशाया सर्वविषयत्वे मुख्यलक्षणमान्ध्य संविदश्शङ्कनीयमिति ॥

इति शतदूषण्यां मुक्तसंविन्निर्विषयत्वभङ्गः

एकपञ्चाशो वादः ॥

---

परत्वस्यैव वाच्यतया सविषयत्वविशिष्टज्ञाननिषेधस्य न ज्ञानमित्यत्रैव पर्यवसानेन ज्ञाननिषेधपरत्वस्यैव त्वया वाच्यत्वादित्यर्थः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां मुक्तसंविन्निर्विषयत्वभङ्गो नाम

एकपञ्चाशस्कन्धः ॥५१॥



श्रीरस्तु ।

## द्विपञ्चाशो वादः ।



सत्वानीव विरुद्धजातिजनुषां सिद्धानि सिद्धाश्रमे ।
वैरं यत्र मिथस्त्यजन्ति विषयास्सर्वे निषेधैस्सह ।
तद्ब्रह्मेशयमङ्गसङ्गिकमलालक्ष्म्येश्वरप्रक्रिय
शान्तावद्यमनन्तमङ्गलगुणं ब्रह्म प्रपद्येमहि ।
निर्गुणश्रुतिभिः केचिद्बाधन्ते सगुणश्रुती ।
तासामन्योन्यसौहार्दमाहुर्यतिवराश्रयाः ॥

अस्ति तावदुपनिषत्सु ब्रह्मण्येव सगुणवादो निर्गुणवादश्च । यथा—"यस्सर्वज्ञस्सर्ववित्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च," 'सत्यकामस्सत्यसङ्कल्प," "ब्रह्मणा विपश्चिते" त्याद्याः परस्सहस्रास्सगुणश्रुतयः । एवं "निर्गुणं निरञ्जनं निष्कलं निष्क्रियं शान्तं, अपहतपाप्मा विजरः, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं, अस्थूलमनण्वि" त्याद्या निर्गुणश्रुतयः । आसामन्योन्यविरोधस्तावदापततः प्रतीयते, न च सिद्धे वस्तुनि विकल्पसम्भवः । तत्र विरोधस्थिरीकरणेन बाध्यबाधकभाव इति नीचाः, विषयव्यवस्थया सन्धिरिति साधवः ।

ननु कथं विषयव्यवस्था ? सा ह्याश्रयभेदेन वा शीतोष्णवत्; देशभेदेन वा, चित्रे नीलपीतादिवत्, कालभेदेन वा, पाकजपरमाणुगुणवत्? समुच्चयेन वा, प्रदेशवर्तिसंयोगतदभाववत्; प्रतिसम्बन्धिभेदेन वा,

तत्रेति । अत्र साधुनीचपदाभ्यां "नीचाः कलहमिच्छन्ति सन्धिमिच्छन्ति साधवः" इति न्यायो द्योत्यते । कालभेदेनेति । घटादिषु पाकजनीलरक्तादीनां प्रदेशभेदेनापि व्यवस्थासम्भवात् परमाणुग्रहणम् । समुच्चयेनेति । यथा संयोगस्य स्वाभावविरोधपरिहारः स्वावच्छेदेन कालभेदेन, प्रदेशान्तरे तु

पितृत्वापितृत्ववत्; अहरूभेदेन वा, रूपस्पर्शवत्; गृहीतृभेदेन वा, जातिव्यवस्थितभोगादिवत्; विधेयनिषेध्यभेदेन वा, ब्रह्महत्याग्नीषोमीयादिवत्; अन्येन वा केनचित्, श्वेतपीतादिविरोधवदिति? न तावदाद्यः—परमेव ब्रह्माधिकृत्य सगुणनिर्गुणश्रुत्योरुदयात्; न च जीवविषयाः काश्चित्, अन्यास्तु परविषया इति विवेक्तुं शक्यं, विशेषाभावात्; न च सर्वज्ञत्वादिश्रुतीनां जीवविषयत्वं, प्रत्यक्षविरोधात्; संसारोच्छेदप्रसङ्गाच्च; नचेद् यौगिकं सार्वज्ञ्यं, नित्यसर्वज्ञत्वोक्तेः, नापि निर्गुणश्रुतीनां, तत एव; उपलभ्यते हि बुद्धिसुखादिम-

देशभेदेन, एवमिहापि देशकालभेदाभ्यां विरोधपरिहार इत्यर्थः। गृहीतृभेदेनेति। "परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ। कुणपङ्कामिनी भक्ष्यमिति तिस्रो विकल्पना." इत्युक्तरीत्या एकस्यामेव प्रमदातनौ मनुष्यश्वादजातीयभोक्तृभेदाद्भोग्यत्वविकल्पाद्य इव तद्वदिति भावः। आदिशब्देन परिव्राट्कामुकयोः गुणत्वदर्शिनौ भोग्यत्वतदभावौ गृह्यते। विधेयेति। यथा अग्नीषोमीयहिंसाविधेः "न हिंस्यादि" ति हिंसानिषेधस्य च ब्रह्महत्याग्नीषोमीयाभ्यां व्यवस्था तद्वदित्यर्थः। अन्येनवेति। श्वेतपीतयोर्विरोधस्तावदस्ति विरोधः, एकस्यैव पुरुषस्य एकस्मिन्नेव विषये एकस्मिन्नेव काले श्वेतः पीत इति बोधादर्शनात्, एवं च श्वेतः पटः पीतो घटः इति समूहालम्बनस्य स्वेनापि विरोधप्रसङ्गे उक्तप्रकारेभ्योऽन्येनैव व्यवस्थोच्यते, तत्र चान्यः प्रकारो घटपटरूपविषयभेदः, तद्वदिहाप्युक्तप्रकारेभ्योऽन्यो यः कश्चित् प्रकारो व्यवस्थापकोऽस्त्वित्यर्थः।

ननु विरोधादेकविषयत्वासम्भवादेव भिन्नविषयता कल्प्यते, तत एव तत्प्रकरणस्थब्रह्मशब्दानलिङ्गादिकमपि अन्यथा नीयत इत्यत्राह नचजीवेति। न केवलं जीवपरोयमिति निर्धारणासम्भवः, द्विविधयोरपि श्रुत्योर्जीवपरत्वमसम्भवि चेत्याह नचेति। संसारेति। मोक्षसाधनतत्त्वज्ञानस्य सत्त्वादिति भावः।

ननु योगार्जितं सार्वज्ञ्यं श्रुतिप्रतिपाद्यम्, तस्य चेदानीमभावान्न प्रत्यक्षविरोधादीत्याशङ्क्य नचेद् मिति। नापि निर्गुणेति। जीवविषयत्वमित्यनुषङ्गः। तत एवेति। प्रत्यक्षविरोधसंसारोच्छेदाभ्यामित्यर्थः। तदुपपादयति उपलभ्यते हीति

चया जीवः, तदभावे च तस्य संसरण निर्बीजम् ; न द्वितीयः—स हि सम्बन्धिदेशभेदो वा स्यात् स्वप्रदेशभेदो वा ? आद्ये रूपाद्यवच्छिन्न प्रदेशभेदेन सगुणत्वनिर्गुणत्वयोर्व्यवस्थेति स्यात् , तत्र तावदेकस्यैव पुंसः क्वचित्सर्वज्ञत्व क्वचिदान्ध्यमिति स्यात्; तत्तु व्याहतम्, धर्मिभेदाभावात् । प्रदेशवर्तिगुणोत्पत्तिवदेवेति चेन्न—प्रदेशवर्तिनोपि ज्ञानस्य सर्वविषयीकरणे तद्धर्मिणः कार्त्स्न्येन सर्वज्ञत्वानपायात् , यद्यपि प्रदेशान्तरे तस्य समवायो नास्ति, तथापि तत्र भ्रान्त्यादियोगित्व काचित्केनापि सार्वज्ञ्येन विरुद्धमेव, यथावत्प्रकाशमाने अध्यासाद्यसम्भवात्ः औपाधिकब्रह्मभेदाभेदवादनिराकरणेन चायमर्थो व्यक्तमनुसन्धेयः ; प्रादेशिकगुणसमवायाभावकथनेन च न ब्रह्मण. कश्चिदतिशय., सर्वद्रव्यसमत्वात् , एतेनैव स्वप्रदेशभेदोपि निरस्तः, स ह्यौपाधिकस्तावन्निरस्त एव,

---

त्यादिना । तदभावेचे ति । ज्ञातृत्वकर्तृत्वभोक्तृत्वाभावात् ससरण निर्बीजमित्यर्थः । सम्बन्धिदेशे ति । सम्बन्धो यो देशस्तद्भेद', उपाधिभेद इति यावत् । उपाध्यवच्छिन्नेत्या दि । सम्बन्धिवस्त्वन्तरभेदमात्राद्व्यवस्थाया अयोगात् । भिन्नोपाध्यवच्छेदेन वृत्तया भिन्नदेशत्वादेव व्यवस्था वक्तव्येति भावः । धर्मिभेदे ति । औपाधिकप्रदेशभेदे सत्यपि वस्तुतो धर्मिण एकत्वादित्यर्थः । ननु स्वतो धर्म्यभेदे सत्यपि सयोगतदभाववदौपाधिकप्रदेशभेदेनैव व्यवस्थाऽस्त्वित्यताह प्रदेशे ति । कार्त्स्न्येने ति । कार्त्स्न्येन सार्वज्ञ्ये यत् कार्य कृत्स्नेऽपि प्रदेशे भ्रमासम्भवरूप भवति तदेकदेशवर्तिनापि सार्वज्ञ्येन भवतीत्यर्थः । अयमेवार्थो यद्यपी त्यादिना स्पष्टीकरणार्थमुच्यते यथावदि ति । ज्ञान स्वाश्रये भ्रमविरोधि न तु स्वावच्छेदेन, गौरवादिति भावः । प्रादेशिके ति । कार्त्स्न्येन गुणनिषेधे ह्यद्वितीयत्वसिद्धेरतिशयस्सिध्यति, नैवमेकदेशानिषेधे तत्र गुणसामान्यनिषेधे हेयगुणस्यापि निषेधादतिशयो वक्तव्यः, नचैकदेशे हेयगुणा न सन्ति इत्युक्तया कश्चिदतिशयस्सिध्येत् , हेयगुणाकरद्रव्यस्याप्येकदेशे तदभावोपपत्तेः, पादाद्यवच्छेदेन दुःखिनोऽपि जीवस्य प्रदेशान्तरे तदभावदर्शनादित्यर्थ । एतेने ति ।

स्वाभाविकोऽपि तुल्यन्यायतया निरस्त एव; न च स्वाभाविकोंशस्तत्र सम्भवति, निरवयवत्वश्रुतिविरोधात्; निरवयवत्वमशभेदेन सम्भवत्विति चेत्? अशनिरवयवत्वादशिनोऽपि निरवयवत्ववचने सर्वस्याप्यवयविनो निरवयवत्वाविरोधेन सावयवत्वलक्षणनिषेध्यासिद्धौ निषेधासिद्धे, समुदायेषु सांशतया तत्सिद्धिरिति चेन्न; अत्रापि तत्सम्भवात्तन्निषेधासिद्धेः; एकदेशस्य त्वेकदेशत्वनिषेध इति निरर्थोक्तिः; नापि तृतीयः,—प्रागुक्त

---

उपाधिगत एव भेद उपाधिसम्बन्धिनि धर्मिणि परम्परासम्बन्धेन भेदकार्यनिमित्तमित्येक मतम्, उपाधिभेदेन धर्मिणि भेद उत्पद्यत इत्यपर मतम्, तत्र पूर्वं प्रागुक्तं द्वितीयमधुनोच्यत इति भेदः। एव भेदे सत्यौपाधिकभेदशब्दवाच्यत्वादुभयाः पूर्वपक्षनिरासेनैवाय पक्षो निरस्तः इत्युक्तम्।

नन्वेकस्मिन्नेव सगुणत्वनिर्गुणत्वयोरप्यशभेदेन यथा व्यवस्थेष्यते एवं सावयवत्वनिरवयवत्वयोरप्यशभेदेन व्यवस्थेष्यत इत्याशङ्कते निरवयवत्व मिति। सर्वस्ये ति। घटादेरपि निरवयवाशसम्भवे तदंशेन निरवयवत्वात् सावयवानामप्यशाना निरवयवाशकत्वे निरवयवत्वप्रसङ्गे तदवयविनो घटादेस्तैरप्यशैर्निरवयवतया तदवच्छेदेनापि सावयवत्वासम्भवात् घटादावपि सावयवत्वाप्रसिद्धेस्तन्निषेधायोग इत्यर्थः।

ननु प्रत्येकांशावच्छेदेन निरवयवत्वेऽपि घटादीना निरवयवाशसमुदायावच्छेदेनैव सावयवत्वात् निषेध्यप्रसिद्धिरिति शङ्कते। समुदायेष्वि ति अत्रापी ति। निरवयवत्वसावयवत्वव्यवस्थापकाशाभ्यामेव ब्रह्मणः सावयवत्वादित्यर्थः।

ननु समुदायस्य सावयवत्वेऽपि सावयवत्वनिषेधस्य तदेकदेशविषयत्वान्न निरवयवत्वश्रुतिविरोध इत्याशङ्क्य, तस्य सावयवसर्वद्रव्यसाधारणत्वान्न तन्निषेधेन ब्रह्मणः कश्चिदतिशय इत्याह एकदेशस्ये ति। प्रागुक्ते ति। आश्रयभेदेन व्यवस्थेति प्रथमकल्पे यथा कस्मिन् आश्रये गुणः कस्मिन् तदभाव इति विकल्पः,

विकल्पायोगात् , पूर्वमत्यन्तनिर्गुणत्वे पश्चादपि कारणाभावेन गुणोत्प-त्ययोगात् , पश्चान्निर्गुणता हेतुत सम्भवन्त्यपि सर्वविशेषमिथ्यात्वाभावे नात्यन्तार्यं स्यात्, वस्त्वन्तरसत्यत्वे तत्संयोगादिलक्षणस्यावर्जनीयत्वात्, वस्त्वन्तराणां च मिथ्यात्वमन्तरेणात्यन्तोच्छेदासम्भवात्, सत्कार्यवादस मर्थनेन निरन्वयविनाशादिनिराकरणात्; अत एव चतुर्थोऽपि निरस्तः, प्रत्येकपक्षोक्तदोषस्य समुच्चये समुच्चयस्याप्यपरिहार्यत्वात् ; न हि ब्रह्मां शस्य कदाचित्संसरणं कदाचिदपवर्ग इति भास्करयादवप्रकाशमताद्वी श', दूषितश्चैतत् कालावच्छिन्नसार्वज्ञ्यदूषणादिना, यथोक्तम् ।

“ सार्वज्ञ्यसर्वशक्त्यादिगुणकः केन सिद्ध्यति ।
नेश्वरस्यापि विज्ञेयः स्वतः सर्वगुणश्रुतेः ॥
सार्वज्ञ्यादिस्वतस्त्वे तु विवादो यदि कल्प्यते ।
सत्यत्वादौ विवादः किं न स्यान्निर्गुणवादिनाम् ॥ इति;

---

एवमिहापि कस्मिन् काले गुणः कस्मिन् तदभाव इति विकल्पः कार्य इत्यर्थः । तदेवोपपादयति पूर्वे मिति । कारणाभावेने ति । द्रव्यान्तरस्य कारणत्वे पूर्वं तत्स योगप्रसङ्गः, तद्गतगुणस्य कारणत्वेऽपि स एव दोषः । पूर्वस्वगतगुणानामुत्तरगुण हेतुत्वशङ्का न कार्येत्याभिप्रायेणा त्यन्तनिर्गुणत्व इत्युक्तम् । स्वस्यैव स्वगुणहेतुत्वे पूर्वमेव गुणोत्पत्तेर्गुणत्वानुपपत्तिरिति भावः । अत्यन्ताय कार्त्स्न्येनेत्यर्थः । वस्त्वन्तरे ति । द्रव्यान्तरसत्यत्व विवक्षितम् । तस्य च मूर्तत्वे विभागः संयो गादी त्यादिपदेन विवक्षितः । सत्कार्यवादे ति । सतो द्रव्यस्यावस्थान्तरयोगः कार्यतेति समर्थनात् कार्यस्य सतो नाशोऽप्यवस्थान्तरमेव स्यात् । अतोवस्थान्तर विशिष्टं द्रव्य तिष्ठेदेवेत्यर्थः । प्रत्येके ति । यद्यप्यस्मिन् पक्षे पूर्वं निर्गुणप्रदेशस्यापि द्रव्यान्तरतद्गुणादिना पश्चाद्गुणोत्पत्तिः सम्भवति , न च प्रागपि तत्प्रदेशस्य तत्संयोगादिना सगुणत्वापत्तिः, प्राक् प्रदेशान्तरस्थितेनापि निर्गुणप्रदेशे पश्चात्संयो गाद्युत्पादनसम्भवात् , एव पूर्वं सगुणस्य पश्चान्निर्गुणतायामपि नोक्तदोषः, निर

न पञ्चमः—पितृत्वपितृत्वादिवत्सगुणनिर्गुणत्वयोः प्रतिसम्बन्ध्युपाधिकत्वाभावात् ; नीलपीतादिवन्निरपेक्षत्वेनैवोपलम्भात् ; न हि तत्वतो नीलमेव कञ्चित् प्रति पीतम् ; पुरुषभेदेनोऽनुष्णश्च कृष्णवर्त्मा कदाचिद्भवतीति चेन्न ; तत्रानुष्णत्वाभावात् , प्रतिबन्धकबलेन तु कश्चिदुष्णत्वं नोपलभते, तत्कार्यं च स्फोटादिकं तदा न जायते ; "शीतो भव हनूमतः" "तवैष वह्निः पवनेरितोपि न मा दहत्यत्र समन्ततोऽहम् । पश्यामि पद्मास्तरणास्तृणानि शीतानि सर्वाणि दिशां मुखानि॥" इत्यादि कथमिति चेत् ? इत्थम्, तत्र हि प्रभावविशेषप्रतिबद्धतया दाहकत्वाभाव एव हि तात्पर्यम् ; यद्वा चान्द्रमसमहस इव देवताप्रभावोपनीतसलिलावयवनिवहसवलनवशादनुद्भूतौष्ण्यस्य दहनस्योपलभ्यमानशीतिमारोपेण शीतव्यपदेशः , नापि षष्ठः—ग्राह्यभेदस्य ग्राहकभेदा

---

न्वयविनाभावेऽपि द्रव्यस्य ध्वसाख्योत्तरावस्थायाः प्रदेशान्तरे वृत्तिसम्भवात् गुणप्रदेशावच्छेदेनात्यन्तनैर्गुण्योपपत्तेः , तथापि यत्प्रदेशे द्रव्यवत्त्वं तत्प्रदेशे संयोगस्यावर्जनीयत्वात् सगुणप्रदेशत्वमेव स्यात्, तथा च प्रदेशभेदेन व्यवस्थाया अयोगः, अत समुच्चयपेक्ष निर्गुणप्रदेशे न कदापि द्रव्यसम्भव इति सगुणप्रदेश एव प्राग्वा पश्चाद्वा द्रव्यस्य सत्वं वाच्यम्, तथाचोक्तदूषणद्वयमव्याहतमिति भावः। किं रूपादीनां धर्म्यनतिरेकपक्षे रूपोपलम्भेऽपि स्पर्शानुपलम्भार्थं रूपस्पर्शयोर्भेदो वाच्यः, तथा च रूपात्मकस्य धर्मिणस्तद्भिन्नत्वविरोधे प्रसक्ते ग्राहकभेदाद्व्यवस्थोच्यते— चक्षुषा गृह्यमाणं रूपात्मकं त्वचा गृह्यमाणं तदनात्मकम्, किन्तु स्पर्शात्मकमिति, तद्वदत्रापीत्यभिप्रायः ? किं वा रूपस्य विजातीयरूपान्तरेणेव स्पर्शेनाप्यसामानाधिकरण्यात्मकविरोधे प्रसक्ते ग्राहकव्यवस्थया विरोधपरिहारो वाच्यः, तद्वदत्रापीत्यभिप्रायः ? इति विकल्प हृदि निधायाद्यं दूषयति ग्राह्यभेदस्येति।

धीनत्वे रूपस्पर्शादिभेदविलयप्रसङ्गात्, हिंसाऽहिंसावाक्ययोरेकस्मिन्नेव क्रतावन्वयेपि विरोधाभावप्रसङ्गाच्च, न च भिन्नकरणग्राह्यरूपस्पर्शयोरिव सगुणत्वनिर्गुणत्वयोरविरोधः, भावाभावरूपत्वात्, रूपस्पर्शयोस्तु सहानवस्थानहेतोः कस्यचिदप्यदर्शनात्; नापि सप्तमः—आनुकूल्यप्रातिकूल्यादेः सप्रतिसम्बन्धिकत्वेन जातिव्यवस्थितभोगाद्युपपत्तेः, सगुणत्वनिर्गुणत्वयोस्तु तदभावेनानुपपत्तेः; उपपत्तौ वा ब्रह्मणोऽव्यवस्थितस्वभावत्वप्रसङ्गात्; नचाष्टमः—निर्गुणश्रुतीनां सर्वगुणनिषेधपरत्वेन विधेयगुणविशेषपरिशेषासिद्धेः; गुणविधिवशादेव निर्गुणश्रुतयः सङ्कोचमर्हन्तीति चेन्न, असङ्कुचितनिर्वाहे सति सङ्कोचानुपपत्तेः, तथा सति सगुणश्रुतीनामप्रामाण्यं प्रसज्येतेति चेन्न,—अपच्छेदनयेन प्रमाणत्वेपि

---

रूपे ति। ग्राह्यभेदादेव ग्राहकभेदस्य कल्पनीयतया ग्राह्यभेदस्य ग्राहकभेदाधीनत्वे अन्योऽन्याश्रयादिति भावः। नीलपीतशीतोष्णाद्यवान्तरभेदोऽत्र विवक्षितः। हिंसे ति। एकस्यैव ग्राहकभेदेन धर्माधर्मात्मकत्वसम्भवादिति भावः। द्वितीयं दूषयति नचे ति।

ननु भावाभावयोरिव प्रसक्तविरोधयोः रूपस्पर्शयोः कथं तर्हि सामानाधिकरण्यमित्यत आह रूपस्पर्शयोस्त्वि ति। कस्यचिदि ति। भावाभावरूपत्वस्य चाभावादित्यर्थः। आनुकूल्ये त्यादि। आदिशब्देनानुकूलप्रतिकूलानात्मकत्वं गृह्यते। द्वितीयादिशब्देन भोगाभावः। तदभावेन— सप्रतिसम्बन्धिकत्वाभावेनेत्यर्थः। अभ्युपगम्याप्याह उपपत्तौ वे ति। आनुकूल्यादिकं प्रतिसम्बन्धिभेदेन व्यवस्थितमिति भावः। अव्यवस्थितेति पदच्छेदः।

ननु प्रमाणत्वेऽपि यदि बाध्यत्वं तदा विपरीतो बाध्यबाधकभावः कुतो न स्यात्, तथा च कथं निर्गुणत्वं तात्त्विकमित्यत आह अपच्छेदनयेने ति।

बाध्यत्वोपपत्तेः ; पौर्वापर्यायोगेनापच्छेदनयानवतार इति चेन्न ; अप च्छेदनये प्रमाणपौर्वापर्यस्य निमित्तपौर्वापर्यमात्राधीनत्वात्, अत्राप्यर्थतो विधिनिषेधयो पौर्वापर्यसिद्धेः। विधिर्ह्यन्यानपेक्षतया पूर्वो भवति, निषे धस्तु निषेध्यप्रसङ्गसाकांक्षतया परः। एवं सति हिंसाविधिनिषेधवाक्ययोर प्यपच्छेदनयावतार इति चेन्न, तत्र विधिवाक्यस्यात्यन्ताप्रामाण्यप्रस ङ्गात्, अत्र तु सगुणवाक्याना विद्यादिविषयाणामपि दृष्टिविशेषणोक्ति न्यायेनतत्तत्फलाभिलाषवक्ष्यमाणपुरुषविशेषविषयोपासनविधिशेषतयापि प्रामाण्योपपत्तेः। अत उभयोः प्रामाण्येपि बाध्यबाधकव्यवस्था। अत एव तत्वतो निर्गुणत्व च सिध्यतीति न निर्गुणश्रुतीनां सङ्कोचहेतुमुपल भामहे। अत एव नवमोपि दत्तोत्तरः— अस्मत्सिद्धान्तनीतिमन्तरेणो भयप्रामाण्यनिर्वहणासिद्धेः। उभयाप्रामाण्यस्य वैदिकैः सामान्यतस्तावद नभ्युपगमात्, उभयोरप्यान्यपर्यवादिनां निरीश्वरमीमांसकनिगमलरुवःद

---

पौर्वापर्येति। न हि सगुणनिर्गुणवाक्ययोः पाठक्रमोऽस्तीति भाव। निमित्ते ति। मात्रपदेन पाठक्रमो व्यावर्त्यते। निमित्तपौर्वापर्यस्याप्यत्राभावात् कथमप- च्छेदनयावतार इत्यत आह अत्रापीति। प्रमाणपौर्वापर्यमात्र हि तन्न्यायापेक्षि- तम्, तच्च निमित्तपौर्वापर्यादिव प्रकारान्तरेणापीति भावः। तत्रेति। अपच्छेदे प्रयोगान्तरे प्रामाण्य संभवति। सगुणवाक्यानामपि वक्ष्यमाणरीत्या तदुभयव्या- वृत्त्यर्थमत्यन्त पदम्।

ननु सगुणवाक्यानामप्यत्यन्ताप्रामाण्यं स्यात्, न च व्यावहारिकविषयतया प्रामाण्यम्। मिथ्यार्थप्रतिपादने प्रयोजनाभावेन तात्पर्याभावात्तत्राप्रामाण्यात्, सत्यत्वे तु तत्तत्त्वज्ञानेन मोक्षफलसम्भवादित्यत आह अत्रत्विति। निर्गुणत्वस्य तात्त्विकत्वासिद्धमात्रे अभिनिवेशवत शङ्कां परिहरति उभयेति। उक्ताभि- निवेशवत एव कर्मविधिशेषतया आन्यपर्यशङ्का परिहरति उभयोरिति। तत्त्व-

कानां सिद्धार्थतात्पर्यसमर्थनादिभिरुन्मूलितत्वात् । अन्यतराप्रामाण्यपक्षे प्यन्ततोऽस्मन्नयमन्तरेण गत्यभावात् । न हि निर्गुणवाक्यमेव बाधितुं युक्तम्, तदुपदेशनैष्फल्यप्रसङ्गात् ; न च स्वरूपपराणां वाक्यानामु- पासनविधिशेषत्वेन यथाकथञ्चन नेयता शङ्क्या, त्र्यन्तराद्धान्तापराधप्र सङ्गात् ; अतः पारिशेष्यान्निर्गुणवाक्यैः सगुणवाक्यानामेव बाधः ; य- द्यपि सत्यज्ञानादिवाक्यं स्वरूपपरमपि सामानाधिकरण्यं पदसाधारण्यम्,

---

न्यतरदेवतास्तु प्रमाणम्, एवञ्चोभयोः प्रामाण्यनिर्वाहाय न त्वत्सिद्धान्तानुसरणम्, तथाच निर्गुणवाक्यस्यैवाप्रामाण्यसम्भवात्र सगुणत्वविरोध इत्यत्राह अन्यतरे ति। तदुपदेशे ति । नचेष्टापत्तिः, "तमेव विदित्वातिमृत्युमेति" "तमेवै क जानथात्मान" "एकधैवानुद्रष्टव्यमि" त्यादिना निर्गुणज्ञानान्मोक्षश्रवणात्, नच सगुणवाक्यानामप्रामाण्ये नैष्फल्यप्रसङ्गदोषः, तत्र फलाश्रवणेन इष्टापादन त्वात् । न च तदुपासनादपि फल श्रूयत इति वाच्यम्, तथात्वारोपितेनापि उपासनोपपत्त्या गुणाना तात्विकत्वासिद्ध्या तेन निर्गुणवाक्यस्य बाधा— योगादिति भावः ।

नन्वस्तूभयोः प्रामाण्यम्, तथापि निर्गुणवाक्यानां उपासनाविधिशेषतया प्रामाण्य सगुणवाक्याना तत्त्वपरतयेति विपरीतं कुतो नेष्यत इत्याशंक्य निराक रोति नचे ति । निर्गुणज्ञानस्य हि ब्रह्मैक्यावाप्ति· फलमिति राद्धान्त, तत्फलश्रव णात्, न च तत्त्वतो यद्भिन्न तेनाभेद.सम्भवति, तथाचाभिन्नस्यैवाभेद फलमिति वाच्यम्, इद च न भेदमिथ्यात्वमन्तरेण, न च मिथ्याभूतभेदोपमर्देन पूर्वसिद्धा भेदावाप्तिस्तत्त्वज्ञानादन्येन भवति, अतस्तादृशफलहेतुज्ञानं तत्त्वज्ञानमेव—न त्वारोपितविषयमुपासनमिति निर्गुणवाक्यस्य नोपासनाविधिशेषतासम्भव इति भावः । ननु "सत्य ज्ञानमनन्त ब्रह्म" "विज्ञानमानन्द ब्रह्म" त्यादिवाक्या नामुपासनेपरत्वाभावस्य सर्वसम्प्रतिपन्नत्वात् सामानाधिकरण्यनिर्वाहाय नैर्गुणसिद्धि र्निवार्येत्यत्राह यद्यपी ति । निर्विशेषपरमेव सविशेषपरत्वेन यद्यपि सामानाधिक

शरणयद्भिः भवद्भिस्तत्तत्प्रवृत्तिनिमित्तविशिष्टस्वरूपपरमित्युपपादितम् , तथापि ज्ञानानन्दादिशब्दावगतं ब्रह्मस्वरूपं न ज्ञातृत्वानन्दित्वादिविशेष सहमित्युपपनीपद्यते ; न हि ज्ञानस्य ज्ञानमानन्दस्यानन्दो वा गुणपक्ष पातिभिरपि भवद्भिरभ्युपजिगमिष्यते; अतः शब्दादर्थाच्च गुणनिषेधसिद्धिः। न च वाच्यं सुखमात्ररूपत्वे तद्भावापत्तेर्मोक्षस्य पुरुषार्थता न स्यात् , न हि सुखं स्यामिति कश्चिदिच्छति, अपि तु सुखी स्यामित्येव। अतः सुखसम्बन्धेन वैशिष्ट्यमवर्जनीयमिति सुखापरोक्षमात्रेण पुरुषार्थता–

---

रण्यबलादुच्यते , अथापि सामानाधिकरण्यस्यान्यथोपपन्नत्वादर्थतो गुणनिषेधप्रती तेश्च गुणनिषेधपरत्वमेव सत्यादिवाक्यस्य अन्यथासिद्धिश्चाखण्डार्थवादने द्रष्टव्येति भावः । शब्दा दिति दृष्टान्तार्थम् । यद्वा शब्दतो गुणनिषेधकश्रुतिभिर्बाध मुक्त्वा अर्थतो गुणनिषेधकश्रुत्यापि सार्वज्ञ्यादिगुणश्रुतेर्बाधमाह यद्यपी त्यादिना। वस्तुतोऽखण्डार्थवादोक्तरीत्या स्वरूपपरमेवेदम्, त्वदुक्तन्यायेन विशिष्टपरत्वाभ्युपग मेऽपि ज्ञानानन्दादिगुणनिषेधसिद्धेः सर्वज्ञत्वादिश्रुतेर्बाधः सिद्ध इत्यर्थः । उक्तमुभ यथा गुणनिषेधमुपसंहरति अत शब्दा दिति। आर्थनिषेधो हि तर्कमूलः , तस्मिश्च तर्के बलवत्प्रतितर्के निरस्ते श्रुतेरार्थनिषेधपरत्वमेवासिद्धमिति शङ्कां निराकरोति नचे ति । सुखमात्रे ति । ब्रह्मणः सुखित्वे तदभेदे स्वस्यापि सुखावाप्तेस्तद्भावा पत्तिः पुरुषार्थो भवति , सुखरूपत्वे तु ब्रह्माभेदेऽपि सुखानवाप्तेः पुरुषार्थो न स्यादित्यर्थः । वैशिष्ट्यं—विशिष्टत्वम्, सविशेषत्वमित्यर्थः । सुखापरोक्षमात्रेणे ति । आपरोक्ष्यम्—अपरोक्षम् , स्वार्थेः ष्यञ् । आत्म न सुखाप रोक्षमात्रेण सुखस्य पुरुषार्थतासिद्धौ सुखसम्बन्धः पुरुषार्थतायामप्रयोजकः, तथाच ब्रह्मणि तत्कल्पनमयुक्तमित्यर्थः । नचैवमपि सुखापरोक्ष्यसम्बन्धाभ्युपगमप्रसङ्गः सर्वत्र ज्ञानस्यात्मस्वरूपत्वसमर्थनात्, यं प्रति सुखमपरोक्षं तं प्रति पुरुषार्थः , तदभेदेऽप्यविरुद्धम् , निर्गुणश्रुतेस्तर्कसहकृतसगुणश्रुत्य बाधः इत्यभिप्रा

सिद्धौ सम्बन्धस्याप्रयोजकस्य कल्पनायोगात् ; द्रव्यत्वोपादानत्वादिभिः स्सगुणत्वमनुमीयत इति चेन्न , द्रव्यशब्देन वस्तुत्वादिमात्रविवक्षायां मुख्यामुख्यविकल्पे न दोषात् , अन्ततस्तयोरपि परिहरणीयत्वात् । एतेनोपादानत्वमपि निरस्तम् ; आत्मत्वमप्यात्मभेदानभ्युपगात् दृष्टान्त हीनम् , तथात्मशब्देन आत्मत्वजातिचैतन्यादिगुणविशिष्टाकारविव— क्षाया असिद्धिः, ज्ञानत्वविवक्षायां अप्रयोजकत्वम् , विरोधो वा, एवम न्यदपि दूष्यम् , न च वाच्यं—अहं जानामीत्यादिप्रत्यक्षेणैव बुद्धि सुखादिविशिष्ट एवात्मा प्रतीयत इति, तत्तद्वृत्तिविशेषविशिष्टस्यैवाह— ङ्कारस्य तथा प्रतीते , अन्यथा स्थूलोऽहमित्यादिप्रत्यक्षेण स्थौल्यादि गुणवैशिष्ट्यस्यापि प्रसङ्गात् , देहव्यतिरेकसाधनात्तन्निषेधे अहङ्कारव्य तिरेकसाधनात्तद्धर्मनिषेधस्यापि सिद्धेः ; अतः प्रत्यक्षाद्यप्राप्तार्थप्रतिपादक

---

येण शङ्कते द्रव्यत्वे ति। आत्मत्व मिति। अभेदे दृष्टान्तत्वासम्भवात् ब्रह्माभिन्नो जीवो दृष्टान्तो वाच्यः, तादृशस्य चानभ्युपगमाद्दृष्टान्तहीनमित्यर्थः। विरो धोवे ति। ज्ञानत्वस्य गुणाभावव्याप्तेर्घटज्ञानादिषु दर्शनाद्विरुद्धो हेतुरित्यर्थः।

ननु ईश्वरः सदावाप्तसमस्तकल्याणगुणः तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् , अत्र स्वज्ञानाबाध्यधर्मवत् विचार्यत्वादित्यादिकमाशङ्क्य निराकरोति एवमन्य- दूषी ति। प्रेप्सावत्वे प्रमाणाभावात् प्रथमहेतोरसिद्धिः, सत्तानवधारणात्मकस्वरू पज्ञानादेव विचारोपपात्तेः स्वरूपसत्तानिश्चयस्यैव विचारफलत्वोपपत्तेश्च द्वितीयहेतो रप्रयोजकतेति भावः। प्रत्यक्षविरोधान्निर्गुणश्रुतिर्दुर्बलेत्यभिप्रायवतः शङ्कान्निराकरो ति न च वाच्य मिति। तत्तद्वृत्तिः—बुद्धिसुखदुःखाद्यात्मवृत्तिः। अन्यथे ति। एतादृशप्रतीतिबलात्तत्सिद्धावित्यर्थः। अहंकारव्यतिरेके ति। नचाहमर्थस्य द्वि रूपत्वादात्मधर्म एवाहङ्कारे प्रतीयत इति कुतो न स्यादिति वाच्यम्, " काम सं कल्पो विचिकित्सा श्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे " ति श्रुत्याहङ्का रधर्मत्वसिद्धेरित्यभिप्रायात्। निर्गुणश्रुतेः प्राबल्ये कारणान्तर वदन्नेवोपसंहरति अत इति। प्रत्यक्षाद्यप्राप्ते ति। सर्वज्ञत्वादिक तु जगत्कारणत्वाद्याक्षिप्तमिति

निर्गुणश्रुतिसामर्थ्यादेव निर्गुणे ब्रह्मणि सिद्धे, मायावच्छिन्नमिथ्यागुण विशिष्टेश्वरगोचराः सगुणश्रुतय इति।

अत्रोच्यते। यदुक्तं सगुणनिर्गुणश्रुतीनामाश्रयभेदादिना निर्वाहे दूषणम्, तदस्माकमपीष्टमेव। यत्तु विधेयनिषेध्यभेदेन विषयव्यवस्थाया मुक्तम्—'असंकुचितनिर्वाहे सति सङ्कोचोनुपपन्न' इति; तत्तदा शोभेत यदि सगुणश्रुतिबाधमन्तरेणासंकुचितनिर्वाहः स्यात्। बाधात् सङ्कोच एव न्याय्यः। सङ्कोचोपि क्वाचित्कबाध एवेति चेत्; सत्यम्, न तु सार्वत्रिकः, तत एव तस्य संग्रहणीयता। अन्यथा उत्सर्गापवादनय एव निर्मूलः स्यात्।

यच्चोक्तमपच्छेदनयेन प्रमाणत्वेपि बाध्यत्वमुपपद्यत इति। तदपि मीमांसा मांसलितचेतसां जुगुप्सनीयम्, अनियतविरोधपौर्वापर्ये ह्यपच्छेदनयः,

---

न तत्र श्रुतेस्तात्पर्यम्, सगुणवादिनैव सगुणत्वे प्रत्यक्षाद्युपन्यासाच्च न श्रुतेस्तत्र तात्पर्यमिति भावः। अन्यथेति। सार्वत्रिकबाधस्य सङ्कोचादपि ग्राह्यत्वे हिंसा निषेधकश्रुत्यसङ्कोचाय पश्वालम्भश्रुतेर्बाधः स्यादित्यर्थः।

ननु सगुणवाक्यस्य सार्वत्रिकबाधेऽपि व्यावहारिकविषयतया सर्वत्र स्ववि- षये प्रामाण्य सम्भवति, सङ्कोचे तु निर्गुणवाक्यस्य यस्मात् सङ्कोचः तत्र न कथ चिदपि प्रामाण्यमिति बाधात् सङ्कोचाद्बाध एवात्र न्याय्यः, हिंसावाक्यस्य तु अ- त्यन्तबाधे न कथञ्चिदपि प्रामाण्यम्, प्रातिभासिकस्य विधानायोग्यत्वात्, अहिंसा वाक्यसङ्कोचे तु प्रामाण्यमिति बाधात् सङ्कोचस्तत्र न्याय्यः, इति चेत्, उ- च्यते, सगुणवाक्याना बाधे तेषामुत्सर्गप्राप्त तत्त्वावेदकत्वलक्षणप्रामाण्य हीयेत, निर्गुणवाक्याना सङ्कोचे सर्वेषा सगुणनिर्गुणवाक्याना तत्त्वावेदकत्वमेव सिध्यति, तत्त्वावेदकत्व यदि नौत्सर्गिक तदा निर्गुणवाक्यानामपि तत्त्वावेदकता न स्यात्।

ननु निर्गुणवाक्यानां सङ्कोचे यस्मात् सङ्कोचः तत्र प्रामाण्य न स्यादिति चेत्, एवमपि सर्ववाक्याना तत्वावेदकत्वसिद्धये तदपि सोढव्यमेव । किञ्च यदि तत्राप्रामाण्य दोषः तर्हि निर्गुणवाक्याना गुणविषये प्रामाण्याभावेऽपि दोषः स्यात् ।

ननु तद्वाक्यार्थतया प्रतीयमाने अप्रामाण्य दोष इति चेन्न,—लक्षणाद्युच्छेद प्रसङ्गात् । तस्मान्निर्गुणवाक्ये निषेधप्रतियोगिपदसङ्कोचमात्र सर्वेषा प्रामाण्य—सिद्धेर्युक्तम् ।

ननु सगुणवाक्याना निषेध्यानुवादकत्वेन निषेधतात्पर्यात्तत्त्वावेदकत्वमस्तु ; आह च नवीनः " एकवाक्यत्वस्याभ्यर्हितत्वात् सगुणवाक्याना गुणानुवादकतया निर्गुणवाक्यैरेकवाक्यत्वमेव युक्तम् , किञ्च परमते क्वचित्प्रमितब्रह्मानुवादेन किं तत्र सर्वज्ञत्वादिगुणा विधीयन्ते ? किंवारुणैकहायनीन्यायेन युगपत्सर्वगुणविशिष्टं ब्रह्म वेदान्तैः प्रतीयते ? नाद्यः, उद्दिश्यानेकगुणविधाने वाक्यभेदप्रसङ्गात्, चित्राज्यनयवत् , तत्र हि " चित्रया यजेत पशुकाम " इत्यादिवाक्ये अग्नीषोमीयपशूद्देशेन गुणविधिमाशंक्य उद्दिश्य स्त्रीत्वचित्रत्वगुणद्वयविधौ वाक्यभेदात् नामधेयत्व चित्रापदस्य समर्थितम् , नापि द्वितीयः, अगृहीते ब्रह्मपदार्थे वाक्यार्थप्रतिपत्तेरयोगेन सत्यादिवाक्येन तत्प्राप्तेर्वाच्यतया ब्रह्मपदेन तदनूद्य सार्वज्ञ्यादि विधानमित्येव स्यात्, न तु विशिष्टविधानम्, तथा च वाक्यभेदो दुर्वारः , किञ्च प्रयोजनाभावात् श्रुतेर्न गुणे तात्पर्यम्, निर्गुणज्ञानस्य तु मोक्षः फलम्, जगत्कारणत्वाद्याक्षिप्तत्वाच्च न सर्वज्ञत्वादिश्रुतेस्तत्र तात्पर्यमिति निषेधार्थत्वमेव युक्त " मिति, तन्न, तथा सति ब्रह्मणि सार्वज्ञ्यादीना व्यावहारिकत्वस्याप्यसिद्धिप्रसङ्गात्।

ननु क्वचिद्विद्यमानस्यैव निषेधात् सार्वज्ञ्यादेश्चान्यत्रासम्भवात् ब्रह्मण्येव विद्यमानता वाच्येति चेन्न;—सर्वविषयकैकज्ञानाप्रसिद्धावपि तत्तद्वस्तुज्ञानाना प्रसिद्धतया तत्समुदायनिषेधोपपत्तेः । किञ्च " अथात आदेशो नेति नेति " इति निषेधेन सत्यादिवाक्यमनुवादतया एकवाक्य स्यात् , तथा च शून्यवादावतारः । किञ्च अप्राप्तत्वाच्च ब्रह्मणि गुणाना नानुवादः, जगत्कारणत्वादिना कथञ्चित्सार्वज्ञ्यादिप्राप्तावपीतरेषामप्राप्तेस्तेषामपि स्वाभाविकत्वाद्यप्राप्तेश्च । अन्यथा अनुभूति

निर्विशेषेत्याद्यनुमानैस्त्वदुक्तधर्मधर्मिभावखण्डनतर्कैश्च निर्गुणत्वस्यापि प्राप्ततया तद्विधानमनुपपन्नम्। प्रत्युत निर्गुणत्वसाधकतर्काणा प्राबल्यस्य त्वदभिमतत्वात् सगुणत्वस्य न्यायाप्राप्तत्वात तत्रैव तात्पर्यं युक्तम्। किञ्चाधिष्ठानत्वाक्षिप्ते ब्रह्मण॰ सत्यत्वे ज्ञाननिवर्त्यत्वाक्षिप्ते जगतो मिथ्यात्वे जीवब्रह्मणोरभेदे च श्रुतेस्तात्पर्या भावप्रसङ्गः। एवञ्च यदुक्त सर्वज्ञवाक्यं जगत्कारणस्य ज्ञप्तिस्वरूपप्रतिपादनार्थ मिति तदपि न स्यात्, प्रपञ्चमिथ्यात्वेन ब्रह्मणो वित्तिरूपस्याक्षेपात्। न हि वित्तेर्ब्रह्मस्वरूपाद्यन्यत्वे ब्रह्मसिद्धिसम्भव॰, तस्या अपि मिथ्यात्वात्।

यच्चोक्तं प्रयोजनाभावान्न श्रुतेर्गुणे तात्पर्यमिति। तन्न, ब्रह्मण: फल प्रदत्वौपयिकगुणप्रतिपादनेन ब्रह्मोपासने प्रवृत्त्यौत्कट्यसिद्धेः। एव प्राप्त्योत्कर्ष—त्वाच्च सार्वज्ञ्यादेः तज्ज्ञाने प्रवृत्त्यौत्कट्यसिद्धिः। सार्वज्ञ्यादेरुपास्यत्वाच्च तत्प्रति पादन सप्रयोजनमेव। " तमेव विदित्वे " ति व्यवच्छेदान्न तस्योपास्यतेति चेत्, सजातीयदेवतान्तरस्यैव निषेधात्, " त " मिति प्रकृतकारण॰त्वादिगुण विशिष्टस्यैव ब्रह्मणः परामर्शात्, " तमेव विद्वानमृत " इत्येवशब्देन प्रकृत प्रकारपरामर्शाच्च।

यदुक्तम् अत्रापि 'पुरुष एवेदं सर्वं' मिति प्रस्तुतसार्वात्म्यमेवशब्दार्थ॰, विराडादिप्रपञ्चसृष्टेः तदर्थमेवाभिधानात्, तच्च सार्वात्म्य जडप्रपञ्चस्य परमार्थत्वे चिद्रूपात्मनो वस्तुतस्तद्भावत्वायोगात् मिथ्याप्रपचस्य अधिष्ठानब्रह्ममात्रतया परिशेषादेव भवति, अन्यथा प्रस्तुतपृथिव्यादिज्ञानस्यापि मुक्तिहेतुत्वाभिधाने " तमेवे " त्येवकारविरोधादिति। तन्न, किं " पुरुषएवे " ति अधिष्ठानत्व प्रयुक्तं सर्वतादात्म्यमेव प्रतिपाद्यते? किं वा सार्वात्म्योपपादकसर्वाधिष्ठानत्वासिद्धं सर्वाभावस्वरूपम्? आद्ये अतत्त्वावेदकत्व स्यात्, तस्यैव " एव विद्वा " निति परामर्शादतत्त्वज्ञानान्मोक्षश्च। द्वितीये अनेन वाक्येन ब्रह्मस्वरूपे कस्यचिद्विशे षस्याप्रतिपन्नत्व " एव " मिति परापर्शासम्भव॰। स्वरूपमात्रपरामर्शश्च 'त' मित्येव सिद्धः। अशक्यश्च प्रकारवाचिना एवशब्देन स्वरूप—परामर्शः।

अन्यतरापच्छेदे बाधकाभावेन प्रामाण्यसिद्धेः, युगपदपच्छेदे विकल्पत उभयोः प्रामाण्यसम्भवात्, क्रमेणापच्छेद एव केवलं "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यती" ति न्यायेन पूर्वबाधः । तथापि प्रयोगान्तरे प्रामाण्य सिध्यत्येव, नियतविरोधपौर्वापर्ये तूपक्रमाधिकरणन्यायेन परानुत्पत्तिरेव । ततश्चोत्सर्गापवादन्यायस्यैव सगुणनिर्गुणश्रुत्योर्विषयता, अतो विहितव्यतिरिक्तगुणविषयो निषेधः ।

यच्चोक्तं सगुणवाक्यानां मिथ्याविषयाणामपि दृष्टिविधिवत् फलविशेषार्थोपासनार्थतया प्रामाण्यमिति । तदपि न, तत्रैव मोक्षाख्यस्य फलस्य बहुलमुपलब्धेः । पुण्यपापप्रहाणपूर्वकस्वाभाविकरूपाविर्भावरूपफलविशेषस्य सांसारिकत्वोक्तिः साहसिकेभ्य एव स्वदते । अस्तु तर्हि मिथ्यार्थविषयसगुणोपासनेनापि विधिबलान्मोक्ष इति चेन्न, तथा सति निर्गुणवाक्यानामेव मिथ्यार्थविषयत्वकल्पनं किं न स्यात् ? तत्ववेदनस्यैव मोक्षहेतुत्वमिति नियमनिष्कासनात् । तथा च तत्वोपदेशश्च

---

ननु माभूद्गुणश्रुतिरनुवादः, किन्तु विधिरेव, एवं च निषेधस्य प्रसङ्गसाकाङ्क्षतया गुणविधायकानामपि निषेध्यगुणप्रसञ्जनमुखेन निषेधतात्पर्यकतया निषेधैकवाक्यत्वेन तत्त्वावेदकत्वमिति चेन्न,—पश्वालम्भवाक्यस्यापि प्रसञ्जकत्वप्रसङ्गात् । प्रसञ्जकान्तरसद्भावस्तु उभयत्र तुल्यः । व्यर्थहिंसाया इवात्रापि हेयगुणानां प्रसक्तत्वात् । हेयगुणप्रसक्तिश्चात्मत्वादिसाधारणधर्मात् । सार्वज्ञ्यादीनामप्रसक्तत्वात् तत्प्रसक्त्यर्थं सगुणवाक्यमिति यदि, तदा अग्नीषोमीयपश्वालम्भस्याप्रसक्तत्वात् तत्प्रसक्त्यर्थं तद्वाक्यमित्यपि तुल्यम् । सर्वज्ञत्वादिकं कारणत्वेन प्रसक्तमिति त्वयैवाभिहितम् । किं च यदि सार्वज्ञ्यादिकमप्रसक्तं तर्हि प्रक्षालनादितिन्यायेनाप्रसञ्जनमेव वरम् । किंचैवं 'नेति नेती' ति निषेधार्थं सत्यादिवाक्यस्य प्रसञ्जकत्वेनैकवाक्यत्वं स्यात् । तस्मान्न निषेधैकवाक्यत्वसम्भवः ।

किन्तर्हि निर्गुणश्रुतेरत्यन्तबाध एवेष्यत इत्याकाङ्क्षायामाह ततश्चे ति ।

तत्रैवे ति । मोक्षस्य सत्यज्ञानसाध्यत्वान्नारोपितविषयमुपासनमिति भावः ।

ननु तत्प्रकरणे श्रूयमाण फलं न मोक्ष इत्यत्राह पुण्यपापे ति । दोषान्तरमाह तथाचे ति । तत्ववेदनस्यैव मोक्षहेतुत्वमिति नियमाभावादित्यर्थः ।

निष्प्रयोजनः स्यात्, अन्यथापि मोक्षसिद्धेः । अतो विषयव्यवस्थयै- वोभयप्रामाण्यासिद्धिः । अतो नवमस्य कल्पस्यानवतार एव ।

यत्पुनरुक्तं न ज्ञानस्य ज्ञानमानन्दस्यानन्दो वा जाघटीतीत्यर्थतो गुणनिषेधसिद्धिरिति । किं तत्र धर्मस्य धर्मान्तराभ्युपगमेनानवस्थादि रभिप्रेतः ? उतैकजातीययोर्धर्मधर्मिभावो नोपपद्यत इति? यद्वा ज्ञानान- न्दाद्यवान्तरजातीयस्य तत्तदवान्तरजातीयाश्रयत्वं न दृष्टमिति ? अथ ज्ञानानन्दयोरज्ञानानन्दरूप एवाश्रयो दृष्ट इति? अथ वा ज्ञानानन्दरूप स्यात्मनो ज्ञानानन्दादिकं शशादेरिव शृङ्गादिकमुपलम्भबाधितमिति ? नाद्य, अनुक्तोपालम्भरूपत्वात् । न हि वयं धर्मभूतचैतन्यादेश्चैतन्या- न्तरादिकं ब्रूमः । धर्मस्य चोपलम्भादेव धर्मान्तराभ्युपगमे कथमन- वस्था ? नापि द्वितीयः, धर्मधर्मिणोः सर्वत्र सत्तादिभिर्यथाकथञ्चिदेक जातीयत्वावश्यम्भावात् । प्रभाप्रभावदादिषु विशेषतोऽपि सजातीययोर्धर्म

---

ननु कथं तत्त्वोपदेशस्य निष्प्रयोजनत्वम् ? मिथ्यार्थविषयोपासनवत्तत्त्व ज्ञानस्यापि मोक्षार्थत्वात्, सगुणविद्यानामनेकासामुपदेशात्, अन्यथातत्त्वोपदेशा- दपि मोक्षसिद्धौ मिथ्यात्वोपासनस्यापि उपदेशो निष्प्रयोजनः स्यादिति चेन्न;- तत्त्वज्ञानादेव मोक्ष इति नियमानङ्गीकारे तत्त्वोपदेशातत्त्वोपदेशविभागो न स्यादि त्यत्र तात्पर्यात् । अनवस्थादि रिति । धर्मे धर्ममङ्गीकृत्य तस्मिन् धर्मे धर्मव्यव हारासिद्धये धर्मिण एव स्वधर्मगतत्वाङ्गीकारेऽन्योन्याश्रयः, धर्मे धर्मव्यवहारस्य स्वरूपविषयत्वाङ्गीकारे पृथगधर्मस्याप्यभावप्रसङ्गः इत्यादिरादिशब्देन विवक्षितः । अथ ज्ञाने ति । ज्ञानस्य ज्ञानाश्रयत्वं ज्ञानाश्रयस्य ज्ञानत्वाभावदर्शनबाधितमि त्यर्थः । धर्मस्य धर्मान्तराभ्युपगमेऽनवस्थामभ्युपगम्य परिहार उक्तः, इदानीन्तद भ्युपगमे ऽप्यनवस्था नास्तीत्याह धर्मस्यचे ति । यद्यपि भूतलघटयोरपि सजातीय धर्मधर्मिभावे निदर्शनत्वं सम्भवति, तथाप्यपृथक्सिद्धधर्मधर्मिभावे सजातीययो

धर्मिभावो दृष्टः । अवयविवादे च परमाणुद्व्यणुकादिष्वाश्रयिषु पार्थिव त्वादिविशेषसाजात्यमिष्टम् । नापि तृतीयः , अन्यत्रादृष्टेरन्यत्र निषेधक त्वाभावात् । अन्यथातिप्रसङ्गात् । तत्र दृष्टान्तेनानुमाने तु श्रुत्यादि बलेन कालात्ययापदेशात् । नापि चतुर्थः, असिद्धेः । ननु किं ज्ञानतया आनन्दतया च ज्ञात्रोपलभ्यत इति चेत् ; किं वा जडतया दुःखतया चोपलभ्यते ? तदपि नास्तीति चेत् ? कस्तर्हि विरोधः ? सन्दिग्धस्व रूपत्वमिति चेन्न , तावता विरोधहेतुत्वासिद्धेः । शास्त्रादिभिस्तु विशेष निष्कर्षात् । पञ्चमस्तु प्रत्यक्षश्रुतिभ्यामेव प्रतिक्षिप्यत इति नानुप-पत्तिं पश्यामः ।

यत्तूक्तं सुखापरोक्ष्यमात्रेण पुरुषार्थ(ता)सिद्धौ सम्बन्धस्याप्रयोजक स्य कल्पनमयुक्तमिति । तदपि निजहृदयविसंवादि जल्पितम् ।

---

नेति विशेषणेऽपि दूषणार्थ मवयविवाद इत्याद्युक्तम् । अन्यथे ति । शशशृङ्गा-नुपलब्ध्या शश इव गव्यपि शृङ्गाभावनिश्चयप्रसङ्गादित्यर्थः ।

नन्वन्यत्र ज्ञानस्यानुपलब्धे प्रत्यक्षसहकारितया वा स्वातन्त्र्येण वा ऽत्मनि ज्ञानाभावसाधकत्वं न विवक्षितम् , किन्त्वयं घट इत्यादिज्ञाने ज्ञानत्वस्य ज्ञानाभावव्याप्तिग्रहोपयोगितयेत्यत्राह दृष्टान्तेने ति । श्रुत्या दीति । ईश्वरे " यः सर्वज्ञ " इत्यादिश्रुतिबाधः जीवे ' एषहि द्रष्टे ' त्यादिश्रुत्या जानामीत्यादिप्रत्य क्षेण च बाध इत्यर्थः । विरोध इति । विरोधहेतुरित्यर्थः ।

ननु साधकबाधकाभावेन नित्यसंशयान्न कदापि ज्ञानत्वनिर्णयसम्भवः, अतः कथं विरोधहेतुत्वासिद्धिरित्यत्राह शास्त्रादिभि रिति । ' एष हि द्रष्टा श्रोता घ्राता रसयिता बोद्धा कर्ता विज्ञानात्मा पुरुषः, ' ' आनन्दो ब्रह्म ' 'आ नन्दं ब्रह्मणो विद्वा ' निति श्रुतिः । आदिशब्देन सुखमहमस्वाप्समिति परामर्श हेतुभूतसौषुप्तिकाहमर्थानुभवः प्रत्यक्त्वस्वयम्प्रकाशत्वानुकूलत्वादिविशिष्टविषयो गृह्यते । प्रत्यक्षश्रुतिभ्या मिति । प्रत्यक्षेण श्रुत्या च ज्ञानानन्दत्वोपलम्भात्तदभाव

तथा हि । न हि परस्य सुखापरोक्ष्यमात्रेण स्वयमपि लब्धपुरुषार्थो भवति, तथा सत्येकस्य सुखस्य दुःखस्य सर्वार्थत्वप्रसङ्गेन प्रत्यक्षानुमान शास्त्रादिसमस्तप्रमाणक्षोभप्रसङ्गात् । स्वरसतश्च परोपकारापकारयोरपि प्रवृत्तिनिवृत्तिप्रसङ्गात् । अतः स्वसम्बन्धितयैव सुखमपरोक्षतयार्थनीयं भवति । स्वरूपस्य तर्हि भवतां कथ सुखत्वमिति चेत् ; सच्चिदानन्द रूप आत्मेति वदता भवता नैवं चोदनीयम् । स हि सदात्मा सुखत्व विशिष्टाकारेण प्रकाशात्मतया सम्बध्यत इति निपुणं चिन्तय ।

---

स्यासम्भवात् त प्रत्यक्षमसिद्धमित्यर्थ. । न ही ति । यदि स्वसम्बन्धि वा स्वास म्बन्धि वा सुखं आपरोक्ष्यमात्रेण पुरुषार्थ. तदा सुखमात्र किंचित्प्रत्यपरोक्षतः प्रकाशत इति सर्वान् प्रति पुरुषार्थः स्यात्, एव दुःखमपि, न च यस्यापरोक्ष– विषय. तम्प्रति पुरुषार्थ., मुक्तस्य सुखप्रत्यक्षराहित्येनापुरुषार्थत्वप्रसङ्गादिति भावः । अनुमाने ति । मुखविकारादिना सुखदुःखादिक परस्मिन्ननुमीयते । शास्त्रे ति । ‘ स्वर्गकामो यजेत ’ ‘ योपगुरुते त शतेन यातया ’ दित्यादि । आदिपदेन पराभिमतार्थापत्त्यभावौ विवक्षितौ । स्वरसत इति । परोपकारेऽपि प्रवर्तन्ते परापकारादपि निवर्तन्ते साधव इत्याशङ्कावारणार्थमिदमुक्तम् । स्वप्रयो– जनोद्देशेन परोपकारे प्रवर्तन्ते स्वदुःखभयादेव परापकारान्निवर्तन्ते इति भावः । परिहारसाम्याभिप्रायेण हि प्रतिबन्द्युद्भावनम् , न च प्रकृते तत्सम्भवति, सत्यत्व चित्त्वानन्दत्वादिधर्मशून्यस्वरूपमात्रवादिनस्तव तदवलम्बिपरिहारायोगादित्यभि– प्रायेणाह सच्चि दिति । स ही ति । आकार.—स्वरूपम् । आत्मा सुखत्वविशि ष्टाकारेण प्रकाशात्मतया सम्बध्यते प्रकाशतया आत्मतया च सम्बध्यते, प्रका शत्वेन रूपेण सम्बन्धात् सुखस्य प्रकाशः प्रकाशत्वेन रूपेण सम्बन्ध्यात्मा सुखी, एवञ्च स्वरूपसुखस्य स्वकीयत्व स्वप्रकाशात्मनस्तस्यैव सुखप्रकाशत्वञ्च सिद्धमिति स्वसम्बन्धिसुखापरोक्षसिद्धेः स्वरूपसुखस्य पुरुषार्थतोपपन्नेत्यर्थः । सुखापरोक्षप्रति बन्धित्वमपि आत्मत्वेनैव, तेन सुखस्य स्व प्रत्यपरोक्षत्वमिति भावः । सम्बन्धिभेदा भावेऽपि सम्बन्धितावच्छेदकभेदात्सम्बन्ध उपपद्यते, घटस्य स्वरूपमित्यादौ तथा

यत्तु सगुणत्वानुमाने दूषणमुक्तम्—न तेनास्माकं चेतसि चमत्कारः । जीवेश्वरयोः प्रत्यक्षागमाभ्यां सगुणत्वसिद्धेः । यत्तु अहञ्जानामीत्यादिप्रत्यक्षस्य वृत्तिविशेषविशिष्टाहङ्कारविषयत्वमुक्तम्, तत्तु अहमर्थात्मत्वसमर्थनादौ परिहृतं द्रष्टव्यम् । अतो जीवस्य सर्वगुणशून्यत्ववचनं प्रत्यक्षादिसर्वप्रमाणविरुद्धम् । ईश्वरस्य तु आगमैकसमधिगम्यस्यागमविरुद्धम् ।

एतदुक्तं भवति—निर्गुणश्रुतिवदेव सगुणश्रुतयोपि तत्वविषयाः प्रमाणभूताश्च, अत एव न तासां मिथो बाध्यबाधकभावः । उत्सर्गापवादनयाच्च विहितव्यतिरिक्तविषयोऽत्र निषेधः, अतो भिन्नविषयत्वान्न विरोधगन्धः । विरोधाभावाच्च न बाध्यबाधकभावः । तदुभयाचोभयप्रामाण्यं यथार्थरूपं स्वतः प्रतीयमानमनपोदितमिति । उक्तं च श्रीवरदगुरुभिस्तत्वसारे—

" यद् ब्रह्मणो गुणशरीरविकारजन्म
कर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्ध
मर्हन्ति तन्न विधय प्रतिषेधबोध्याः ॥ " इति ।

इति शतदूषण्या सगुणनिर्गुणश्रुतिव्यवस्था
द्विपञ्चाशो वादः ॥

---

दर्शनादिति भावः । प्रत्यक्षादीति । उपादानत्वादिहेतुकानुमानदूषण यद्यप्यनुपदमेवाभ्युपगतम्, तथापि मुखविकासादिहेतुकानुमानस्य सम्भवात् सर्वप्रामाणविरुद्ध मित्युक्तम् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यपरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
सगुणनिर्गुणश्रुतिविषयव्यवस्था नाम
द्विपञ्चाशः स्कन्धः ॥५२॥



श्रीरस्तु ।

॥ त्रिपञ्चाशो वादः ॥



सङ्कल्पादिमुखैः पदैः श्रुतिषु यत्तत्वं समुद्घोषितं
स्यामित्येव चराचरं जगदिदं सृष्ट्वा प्रविश्याभवत् ।
तस्मै विस्मयनीयमङ्गळगुणस्थेम्ने सदा स्थायिने
सर्वावस्थसमस्तवस्तुवपुषे धाम्ने परस्मै नमः ॥

अस्तु तर्हि ब्रह्मोपादानत्वान्यथानुपपत्त्या विश्वमिथ्यात्वसिद्धिः । तथा हि—

केवलनिमित्तेश्वरवादप्रतिक्षेपेण ( मुखेन ) ब्रह्मण एवोपादानत्वमपि " प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा " दित्यादिभिः समर्थितम् ।

---

स्यामित्येवे ति । ' बहु स्या ' मिति सङ्कल्पैव, ननु बहु स्यादिति सङ्कल्प, इत्यर्थः । अनेनोपादानत्वमुक्तम् । अभव दिति । यथासङ्कल्प बहुभव दित्यर्थः । उपादानत्वेऽपि चेतनाचेतनगतदोषासस्पृष्टत्वमाह विस्मयनीये त्यादि । दोषाणा विशेषणगतत्वप्रदर्शनार्थमुपादानत्वोपादेयत्वासिद्ध्यर्थं इदसदादिपदाना परमात्मपरत्वसिद्ध्यर्थं चाह सर्वावस्थे ति । केवले ति । ब्रह्म न जगदुपादानम्, ईक्षापूर्वकस्रष्टृत्वात्, अचेतनाशुद्धजगद्विरूपत्वाच्चेति प्राप्ते—सिद्धान्तितं ' प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा ' दिति । प्रकृतिश्च उपादानकारण च, ब्रह्माभ्युपगन्तव्यम्, प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञा तावत् ' येनाश्रुत श्रुत भवती ' त्यादिका, सा चोपादानकारणत्व एव युज्यते, तज्ज्ञानेन सर्वस्य तत्कार्यस्य ज्ञानात् ; दृष्टान्तोऽपि ' यथा सोम्यैकेन मृत्पिण्डेने ' त्यादिरुपादानगोचर एवाम्नायते ; स चोपादानत्व एव ब्रह्मणो युज्यते । किञ्च ' यतो वा इमानी ' ति पञ्चम्युपादान एव, ' जनिकर्तुः प्रकृति ' रित्यपादानसञ्ज्ञाविधानात्, तस्मात् ब्रह्मोपादानम् । ' सोऽकामयत बहु स्या ' मिति बहुभवनकामनाविषयत्वोपदेशाच्च, ' तदात्मानं स्वयमकुरुते ' ति आत्मन एव जगद्रूपेण कृतिश्रवणाच्चेति ।

ननु नात्र पञ्चम्योपादानत्वसिद्धिः, तस्या अनेकार्थत्वात्, अपादानार्थत्वेऽपि 'ध्रुवमपायेऽपादान' मित्यपादानसञ्ज्ञासिद्धेः, 'जनिकर्तुः प्रकृति' रित्यनेनापादानसञ्ज्ञायामपिप्रकृतिग्रहणस्य कारणमात्रार्थत्वेनोपादानत्वासिद्धेः, अन्यथा पुत्रात्प्रमोदो जायत इत्यत्रानुपपत्तेः, अत एव न्यासकृता 'ध्रुवपदानुवृत्त्या जनिकर्तृसम्बन्धिनोऽपादानसञ्ज्ञाया प्रत्यासत्त्योपादानस्यैव स्यात्, प्रकृतिग्रहणात्सर्वत्र भवति, तेन पुत्रात्प्रमोदो जायत इत्यादि सिद्ध्यती' त्युक्तम्, अत एव 'यदिन्दोरन्वेति व्यसनमुदय वा निधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिते' ति मुरारिणा कारणमात्रे प्रकृतिपद प्रयुक्तम्, नापि 'सोऽकामयत बहु स्या' मिति श्रुत्या तत्सिद्धिः, तस्याः 'यदेकमव्यक्तमनन्तरूप' मिति श्रुतिसिद्धानन्ततत्त्वपदार्थप्रेरकानन्तरूपै. बहुभवनसकल्पपरत्वात्, 'सच्च त्यच्चाभव' दिति च सत्त्वादिगुणाभिव्यक्तिपरम्, सृष्ट्यनुप्रवेशानन्तरभावित्वात्, अन्यथोपादानस्य सङ्कल्पपूर्वकमुपादेयं सृष्ट्वा तदनुप्रविश्य पुनस्तद्भवनायोगेन वाक्य अयुक्तार्थं स्यात्, एतेन 'तदैक्षत बहु स्या प्रजायेये' त्येतदपि व्याख्यातम्; एतेनैव 'तदात्मानँ स्वयमकुरुते' त्येतदपि व्याख्यातम् । "तदात्मान सृजाम्यहम्" इतिवदुपपत्तेः, नह्यात्मान प्रपञ्चात्मनाकुरुतेति श्रूयते इति । उच्यते, जनिकर्तृसूत्रं प्रत्याचक्षाणो भाष्यकार एव सूत्रस्येममर्थं प्रस्याह । 'ध्रुवमपाये पादान' मिति सूत्रेण एतद्विषयसिद्ध्या हीदं सूत्रं प्रत्याचख्यौ। "अयमपि योगः शक्यो ऽवक्तुम्, कथम्? गोलोमाविलोमभ्यो दूर्वा जायत इति अपक्रामन्ति तास्तेभ्य" इत्यादि प्रत्याख्यानभाष्यम्, यदिहीदं हेतुमात्रार्थं स्यात्तदा पुत्रादौ 'ध्रुवमपाय' इति सूत्राप्रवृत्तेः सूत्रस्य तदर्थत्वान्न प्रत्याख्यानावकाशः । पुत्रात् प्रमोद इत्यत्र का गतिरिति चेत्? प्रक्रियामञ्जरीपदमञ्जर्यादिषूक्तो 'विभाषा गुणे स्त्रिया' मित्यत्र विभाषेति योगविभागः । नन्वेव तत एव 'यतो वे' त्यत्रापि पञ्चम्यस्त्विति चेन्न,—योगविभागस्योन्नेयत्वेन प्रत्यक्षसिद्ध्यपेक्षया दुर्बलत्वात । तद्विषयत्वमपि प्रयोगान्यथानुपपत्तिकल्प्यम्, बाहुळकविधिविषयत्ववत्, इह च 'जनिकर्तुः प्रकृति' रिति प्रत्यक्षशास्त्रसिद्धापादानविषयत्वोपपत्तेः नान्यथानुपपत्तिः । मुरारिप्रयोगस्तुप्रकृतिपदं कारणमात्रार्थमिति त्वयुक्तम्,

चन्द्रस्य समुद्रैकदेशपरिणामत्वेऽपि बाधकाभावात्। यथाकथञ्चिद्रसोत्पत्त्यर्थककाव्य प्रयोगमात्रादर्थसिद्धौ 'कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुण' इति श्रीहर्षप्रयोगाच्चक्रभ्रमहेतुत्वस्य गुणत्वं दण्डस्य समवायिकारणत्वञ्च स्यात्। यच्चोक्तम्, 'ध्रुवमपायेऽपादान' मित्यपादानसंज्ञेति। तन्न, अपायहेतुक्रियां प्रत्यवधित्वेन कारकस्यापादानसंज्ञाविधानात्, अत्र च तादृशक्रियाया अश्रवणादपायाभावाच्च।

न च शृङ्गाच्छरो जायत इत्यादावपि अपरिणतभागसत्वात्तस्यापायावधित्वादपादानत्वमिहापि तद्वदेव सम्भवतीति वाच्यम्,—तद्वदेवैकदेशोपादानत्वासिद्धेः विभोरात्मनोपायायोगाच्च। 'सोऽकामयत बहु स्या' मित्यत्र यदि विग्रहद्वारा बहुभवनं विवक्षितं तदा ब्रह्मशरीरतया श्रुतिशतसिद्धप्रकृतत्वदभिमतप्रपञ्चरूपविग्रहद्वारा बहुभवने कः प्रद्वेषः? किंच 'बहु स्या' मिति विग्रहसृष्टिसङ्कल्पाभिधाने असङ्कल्पितप्रपञ्चसृष्ट्यभिधानं सङ्कल्पितविग्रहस्य सृष्ट्यनभिधानञ्चायुक्तम्।

"सच्च त्यच्चाभव" दिति च सत्त्वादिगुणाभिव्यक्तिपरमित्य प्ययुक्तम्, ब्रह्मणः सत्त्वादिगुणासिद्धेः। न च सृष्ट्यनुप्रवेशानन्तरं सद्भवनाभिधानानुपपत्तिः; सृष्ट्यभिधानेन विवर्तत्वासिद्धया तत्सिद्ध्यर्थं सत्यद्भवनाभिधानात्, पूर्वकालत्वस्य चाविवक्षितत्वात्। एतेन 'तदैक्षत बहु स्या' मित्येतदपि व्याख्यातम्॥

ननु तेजःप्रभृतिरूपेण त्वया बहुभावो वाच्यः, तेजः प्रभृति चेतनधर्मेक्षणादिश्रवणात्, न च चेतनं प्रत्युपादानत्वं ब्रह्मणः सम्भवतीति चेन्न,—अत्र हि योग्यतावशात् प्रथमतेजःपदेन भूतात्मकं तेजो गृह्यते, द्वितीयेन तदवच्छिन्नमुत्तरकार्यस्य निमित्तमपादानञ्च ब्रह्मोच्यते, उभयत्र भगवत्पर्यन्तमेव वा। 'तदात्मानं स्वयमकुरुते' त्यत्रापि विग्रहसृष्टिपरत्वमनुपपन्नम्, तदित्यसतः परामर्शात्।

ननु 'सोऽकामयते' त्युक्त आत्मा 'ततो वै सदजायते' ति तच्छब्देन परामृश्यते, तदेव 'तदात्मान' मित्यत्रापीति चेन्न,—तदिति नपुंसकलिङ्गानुपपत्तेः। इदं सर्वमभिप्रेत्य सूत्रकारेण समर्थितमिति।

तदेतदुपादानत्वं किं मृद्घटादिवत् स्वरूपतः[1] उत बाल्ययुवादिवत् सूक्ष्म-चिदचिद्विशिष्टवेषेण[2] अथवा रज्जुसर्पादिवदविद्यादोषत्र्यानिबन्धनभ्रान्त्या येति । न तावत् प्रथमः, निर्विकारत्वनिरवद्यत्वश्रुति[कोप]क्षोभप्रसङ्गात् । नन्वंशभेदेन कालभेदेन वा विषयव्यवस्था, निरवयवत्वाकाल-कालत्वादिस्वभावविरोधप्रसङ्गात् । न च सावयवत्वादिकमपि तथैव व्यव-स्थाप्यम् तथापि तदात्मके ब्रह्मण्येव समस्तदोषप्रसङ्गस्य दुष्परिहर-त्वात् । न च ब्रह्मांशानां ब्रह्मणो ऽत्यन्तभेदं वा ब्रह्माध्यस्तत्वं वा स्वीकर्तुमङ्गीकरोषि । श्रुतिबलादेव ब्रह्मणि सर्वात्मके सावयवत्वनिरवयवत्व सदोषत्वनिर्दोषत्वोपादानत्वादि सर्वमभ्युपगच्छाम इति चेन्न , व्याघातो स्यादे पूर्वपक्षस्यापि अप्रतिक्षेप्यत्वात् । तथाचाल ब्रह्ममीमांसानिरूपण क्लेशेन । नापि द्वितीयः, विशिष्टस्योपादानत्वे प्रामाण्याविवेकेन विशे-षणस्यैवोपादानत्वापातात् । यदि पुनर्विशिष्टमुपादानमित्यत्र विशेषण विशेष्य चरुमुभयमप्युपादानमिति विवक्षितम्, तदा विशेष्यस्यापि सविकार त्वप्रसङ्गो दुर्वारः । तथा च किं विशेषणवैशिष्ट्यवृथाग्रहेण ? किञ्च यदि चिदचिदीश्वरैः सम्भूय जगदाख्यं कार्यमारभ्यते, तदा कार्याणा

---

अकालकालये ति । 'कालकालो गुणी' ति श्रुत्याऽकालकालत्वमर्थात् सिद्धम् । तथे ति । अवयवकालभेदाभ्यामित्यर्थः । सावयवत्वनिरवयवत्वव्यव स्थापकावयवभेदस्यापि सङ्कोचकाभावेन श्रुत्या निषिद्धत्वादवयवादिभेदेन व्यवस्था न सम्भवति, अभ्युपेत्य तूच्यत इति भावेन तथापी त्युक्तम् । अंशानां ब्रह्मणो भिन्नत्वादभ्यस्तत्वाद्वा तद्गतदोषैर्न ब्रह्मणो निरवद्यत्वश्रुतिविरोध इत्यत्राह नन्वे ति। उपादानत्वा दीत्यादिपदेन उपास्यत्वग्रहः । किञ्च यदी ति । त्रिवृत्करणानन्तर

सर्वेषां त्रिस्वभावत्वप्रसङ्गः, यथा शुक्लकृष्णरक्ततन्त्वारब्धे पटे शुक्लकृष्ण रक्तस्वभावत्वम्, सीसताम्रारब्धकार्यस्येव वा तृतयोत्तीर्णस्वभावत्वप्रसङ्गः, लाक्षारसावसिक्तकार्पासकुसुमरागवत् रुमाप्रक्षिप्तकाष्ठलावण्यवद्वा विश्व-स्याप्यनभिभवनीयेश्वरस्वभावत्वापत्तिः । किञ्च विशिष्टस्योपादानत्वं किं श्रौतं उत कल्पितम्? न पूर्वः कारणवाक्यस्थसद्ब्रह्मात्मादि—शब्दानां ब्रह्मस्वरूपमात्रे रूढत्वात्; उक्तं च भवतां भाष्येपि—" शरीरी भूतपरमात्माभिधायिभिः सद्ब्रह्मादिभिः शब्दै " रिति । न च स्वरूपे च विशिष्टे च शक्तिरित्यनेकार्थताक्लृप्तिः, कल्पकाभावात्; कल्पनागौरवोपहतत्वाच्च । एवं " ब्रह्म वनं ब्रह्म स वृक्ष आसीत् " "तदात्मानं स्वयमकुरुत" "यद्भूतयोनिं परिपश्यन्ति धीरा " इत्यादिभिरपि ब्रह्मस्व-रूपस्यैवोपादानत्वं श्रूयते । नाप्युत्तरं, कल्पकाभावात्; प्रत्युत समस्त भेदरहितस्यैकस्यैव कारणवाक्यवधारणात् तद्विरोधिविशेषणकल्पनं वाक्य तात्पर्यविरुद्धं च । अत इदमितिनिर्दिष्टकृत्स्नप्रपञ्चरूपेण 'बहु स्या' मिति स्वरूपस्यैव बहुभवनसङ्कल्पपूर्वकोयं विश्वारम्भः । मृद्घटादिदृष्टा-न्तानुसाराच्च स्वरूपस्यैवोपादानत्वं सिद्धमिति स्वरूपनिर्विकारश्रुतिविरोध परिहारे तृतीयपक्षः परिशिष्यते । यथा चैकैव रज्जुः सर्पभूदलनाम्बुधारा दिरूपेण प्रमादनुवर्तते, यथा चैकस्मिन्नेव निरवयवे गगने युगपदनन्त

---

भाविकार्याणां चिदचिदीश्वरसंघातारब्धत्वात्तदभिप्रायेण सर्वेषा मित्युक्तम् । यथे ति । केषाञ्चित् चित्स्वभावत्वमेव केषाञ्चित् अचित्स्वभावत्वमेव दृश्यत इति भावः ।

ननु भाष्ये स्वरूपरूढिरुक्ता, न तु विशिष्टशक्तिर्निषिद्धा, अत उभयत्र शक्तिक्लृप्तिः स्यादित्यत आह न चे ति । कारणवाक्यस्थसदादिपदानां ब्रह्मस्वरूप परत्वस्य भाष्येऽभिहितत्वात् न विशिष्टशक्तावपि किञ्चित्प्रयोजनमित्यपि हृदयम् ।

जगत्कारणविधिपराणि वाक्यानि कारणवाक्यशब्देन पूर्वं विवक्षितानि, अथ सिद्धे जगत्कारणे तद्विशेषादिपराणि वाक्यान्युदाहरति एव मिति ।

भेदमिदुरगन्धर्वनगरारम्भः, यथा च मुखचन्द्रादे. दर्पणतरङ्गाद्युपाधि-भेदेन मुखचन्द्रगतनानात्वोपलम्भः, तथा निरंशेपि निर्विशेषस्वप्रकाशे स्वत. शुद्धे ब्रह्मण्यसम्भवद्विकारे दुर्निरूपदोषमूलविकल्पासहविचित्र चिदचिदात्मकजगदध्यास इत्यभ्युपगन्तव्यमिति तत्वावेदकनिर्विकार जगदुपादानश्रुतितात्पर्यम् । अविद्यया च सर्वमन्यत्प्रपञ्चसत्यत्वग्राहकं ग्रहवन्निग्राह्यमिति ।

अत्र प्रतिविधीयते—स्वरूपपरिणामपक्षदूषणं तावदस्माकमपि सम्मतमेव । तथापि बहुप्रमाणोपस्थापितबहुमुखव्याघातशतसादिताद्वय-न्मतात् त्रिचतुरविरोधसितासितभास्करादिमतानुरोधेन कार्यकारणसंरक्षण मेव समुचितम् ।

यत्तु विचिष्टपक्षे प्राप्ताप्राप्तविवेकेन विशेषणस्यैवोपादानत्वमापन्नमिति। तत्र विशेषणस्य साक्षाद्विकाराश्रयत्वमसङ्ग इष्टः, विशेष्यस्यापि परम्पर-याश्रयत्वेऽप्याश्रयत्वमात्राविशेषादुपादानशब्दवाच्यत्वप्रतिक्षेपस्त्वशक्यः ।

---

विकल्पासहः-सत्त्वासत्त्वविचारासहः । त्रिचतुरे ति । भास्करमते निर्विकारत्व श्रुतिविरोधः निरवद्यत्वश्रुतिविरोधः भेदाभेदसमावेश इति त्रयः स्थूलदोषाः, यादवप्रकाशमते एतैः सह जीवाद्यनादित्वभङ्ग इति चत्वारो दोषाः। कार्यकारण संरक्षणम्- कार्यत्वकारणत्वयोरबाध्यत्वकल्पनम् । साक्षा दिति । साक्षादाश्रय त्वमद्वारकमाश्रयत्व, परम्परयाऽश्रयत्व सद्वारकमाश्रयत्वम् । यथा यागस्य सद्वारक स्वर्गकारणत्वं प्रोक्षणादेश्च सद्वारकमपूर्वविशेषत्वम् । अशक्य इति । अवस्था श्रयत्वमेवोपादानत्वम्, न तु साक्षादवस्थाश्रयत्वम्, गौरवात्, आश्रयत्वे सति साक्षात्वविरहेणानुपादानत्वादर्शनाच्चेति भावः ॥

ननु यदि क्वचित्सद्वारकाश्रयत्वमुपलभ्येत तदोपादानत्वश्रुतेर्निर्विकारत्व श्रुत्यविरोधेन तद्विषयता स्यात् ; न च कारणत्वशेषत्वादिवत्तदुपलभामहे, इति चेन्न;— " तदभावो नाडीषु तच्छ्रुतेरात्मनि च " इत्युक्तप्रासादखट्वान्यायेन सद्वा

यथा भवतोप्यविद्याया एव साक्षाद्विवर्ताश्रयत्वेपि तस्या एव साक्षिभूतब्रह्माधीनसत्ताकत्वात् ब्रह्म विवर्तत इत्युक्तिः, तथा परिणामस्यापि साक्षात् ब्रह्मशरीरभूतद्रव्यगतत्वेपि तस्य तदारब्धतया तदधीनतामात्राद् ब्रह्म परिणमतीति वक्तुं शक्यम् । नैतावता विशेष्यस्य साक्षाद्विकाराश्रयत्वप्रसङ्गः । परम्परया श्रयत्व तु भवत इवास्माकमपि सम्मतमदोषावहं च । यथा बालो युवा जात इत्यादौ विशेष्यभूतात्मस्वरूपस्य निर्विकारत्वे विशेषणे साक्षाद्बाल-त्वाद्यवस्थायोगेन आत्मपर्यन्तो बालयुवशब्दप्रयोगः तद्वदत्राप्युपादान कार्यशब्दयोः प्रयोग इति न दोषः । एवं विशेष्यस्य निर्विकारत्वं विशिष्टग्रहणशक्तिश्चेत्युक्तं भवति । अन्यथाष्टवर्षत्वब्राह्मणत्वादीनामात्मा

---

रकाश्रयत्वस्य लोकसिद्धेः । खट्वाया पर्यङ्के शयनेऽपि प्रासादे शेत इति हि प्रती-यते ॥ न च निर्विकारत्वश्रुतेः साक्षात्सम्बन्धविषयतानियामकाभावः, उपादान त्वश्रुतेरेव नियामकत्वात् । किञ्च निर्विकारश्रुतेर्हेयसम्बन्धनिषेधपरत्वाद्येन सम्बन्धे नान्यत्र हेयत्व दृष्ट तेनैव सम्बन्धेन प्रसक्तौ तत्सम्बन्धनिषेधस्यैव स्वरसत्वात् । किञ्च विकारो हि स्वरूपान्यथाभावः, तस्यैव निषेधान्न विरोधशङ्कालेशः । एकदे-शिमतेन प्रतिबन्धभिप्रायेण दृष्टान्तमाह यथे ति । साक्षा दिति । द्रव्यगतत्वे ऽपीत्यनेनान्वयः । साक्षाद्ब्रह्माश्रितत्वाभावेऽपीति भावः । तदारब्धतये ति । ब्रह्मोपादानत्व सम्प्रतिपन्नम्, परिणामविवर्तयोरेव विवादः । अनेन स्वापृथक् सिद्धावस्थाश्रयताद्वारत्व द्वार्यपृथक्सिद्धस्यैवेत्युक्तं भवति । अनेन घटस्य भूतलता दधीन्यात्सदाश्रयभूतलस्य घटावस्थाश्रयत्वप्रसङ्गः प्रत्युक्तः । एतावता-परिणामा-श्रयत्वमात्रेण ।

ननु विवर्तपक्षे मिथ्यात्वान्न दोषावहत्वम्, परिणामपक्षे सत्यत्वाद्दोषावहत्वं स्यादित्यत्राह यथा बाल इति । उपसंहरति एव मिति । विशिष्टे ति । विशि-ष्टस्योपादानत्वेन ग्रहणमस्माभिः कर्तुं शक्यत इत्यर्थः । यद्वा उपादानशब्दस्य

सम्बन्धेनोपनयनादिविधीनामप्रवृत्तिरिति कर्मब्रह्ममीमांसयोरारम्भ एव कापेयकल्प. स्यात् । तथापि कथमवस्थाद्वयरहितस्वरूपे कस्य चिदुपादानोपादेयवाचो युक्तिश्चित्तमारोहेदिति चेन्न,— विशेषणवद्विशेष्येप्यवस्थाद्वययोगात्, तत्तदवस्थतत्तद्वैशिष्ट्यानामागन्तुकत्वेनावस्थात्वात्, मिथो भिन्नत्वाच्च; आत्मनो बाल्युवदेहवैशिष्ट्यवत् ।

आगन्तुरपृथक्सिद्धो धर्मोऽवस्थेति कीर्त्यते ।
विशेष्येपि च वैशिष्ट्यभेदोऽवस्थान्तरायते ॥

एतेन स्वभावसङ्करादयो दोषा न प्रसङ्गमर्हन्ति । न हि बालस्य युवभावे देहदेहिनो· प्रतिनियता· स्वभावा· सङ्कीर्यन्ते । न च शुक्लकृष्णरक्ततन्त्वारब्धे स्वभावसङ्कर । विभक्तदशायामिव संसर्गदशायामपि शौक्ल्यादीनां यथास्व प्रतिनियतांशविषयत्वात्, एवमत्रापि विशिष्टकार्ये यथास्वमशप्रतिनियतत्रिस्वभावत्वे प्रसज्यमाने अस्माकमिष्टप्रसङ्ग· । अत एवोत्तीर्णस्वभावत्वोद्भूतस्वभावत्वमित्यादिचोद्यमपि परिहृतम्, ब्रह्मस्वरूपस्य निर्विकारत्वात्, जगदात्मकपरिणामदशायामपि व्यव-

---

विशिष्टबोधनशक्तिरिति वार्थः । पारिप्लवमत्यनुग्रहार्थं शङ्कापूर्वक मतान्तरमाह तथापीति । अवस्थाद्वययोगमुपपादयति तत्तदवस्थेति । अवस्थाद्वित्वोपपादनार्थं मिथो भिन्नत्वादित्युक्तम् । वैशिष्ट्यभेदः—वैशिष्ट्यविशेषः । एतेनेति । सविकारत्वस्य साधाद्विधेन अगन्त्वाश्रयणादित्यर्थः । त्रिस्वभावत्वस्य स्वभावसङ्करपर्यन्ततयैव दोषत्वात्तन्मुखेन तन्निह्नगम् । आदिपदेनोत्तीर्णस्वभावत्वेश्वरस्वभावत्वे गृह्येते । अत एवेति । व्यवस्थितत्रिस्वभावत्वाङ्गीकारादित्यर्थः । उत्तीर्णस्वभावत्वोद्भूतस्वभावत्वानङ्गीकारे हेतुमाह ब्रह्मेति । निर्विकारत्वात्, स्वस्वभावपरित्यागेन स्वभावान्तरग्रहण न सम्भवति, व्यवस्थितस्वभावत्वात् स्वसृष्टे स्वभावापत्तिहेतुत्व च न सम्भवतीत्यर्थः । शुक्लकृष्णतन्त्वारब्धे स्वभावसाङ्कर्ये नास्तीत्युक्तम्, इदानीं तदङ्गी

स्थितस्वभावत्वात् । न च दृष्टान्तमात्रेणार्थसिद्धि , नचात्र व्याप्तिसम्भव', अन्यथा त्वत्पक्षेप्यविद्य विशिष्टब्रह्मविवर्ते स्वभावसङ्करादयस्तदवस्था. ।

यदुक्तम्—विशिष्टस्योपादानत्व किं श्रौतं उत कल्पितमिति । तत्र कचिच्छ्रौत कचित् श्रुतार्थापत्तिकल्पितमिति वाक्यशेषशाखान्तर—नयसिद्धमिति वा विभागः । तथा हि—" तद्धेद तर्ह्यव्याकृतमासीत्तन्नाम रूपाभ्यां व्याक्रियते " त्यादिषु कारणवाक्येष्वव्याकृतादिशब्देन न ब्रह्म स्वरूपमात्रं प्रतिपाद्यते ब्रह्मादिशब्दवत् ब्रह्मस्वरूपे रूपाभावात् , " तन्नामरूपाभ्या व्याक्रियते " त्यनेनैव योगविवक्षाया' स्पष्टत्वाच्च । अत इदमर्थस्यैव प्रलयकाले नामरूपव्याकरणनिवृत्तिमात्रं विवक्षितम् । इदमर्थश्चिदचिदात्मकः प्रत्यक्षादिसिद्ध , स एव कदाचित् सूक्ष्मावस्था प्राप्त्या व्यष्टिसमष्टिरूपविकाररहित इत्युक्तं भवति । एवं स्थिते प्रलय दशायामपि सूक्ष्मयोश्चिदचिद्वस्तुनो. सद्भाव उक्तो भवति । तर्हि ब्रह्मण स्तत्र कथं प्रसङ्ग इति चेत्; 'तम एकीभवती' त्यादिप्रतिपन्नस्य सूक्ष्म तमसोपि " यस्य तम. शरीर " मित्यादिभि. ब्रह्मशरीरत्वप्रतीते. कारणवाक्यान्तरेषु ब्रह्म.वस्थानप्रतीतेश्च अव्याकृतशब्द एवाव्याकृतचिदचिद्विशिष्टब्रह्मपर इति निश्चीयते । एवं " असद्वा इदमग्र आसीत् " " असदेवेदमग्र आसीत् " इत्यत्राप्यसच्छब्देन स्थूलाकारप्रध्वंसाय—

कृत्याह न च दृष्टान्ते ति । स्वभावत्व साङ्कर्यव्याप्तमित्यत्राह नचात्रे ति । बालस्य युवभावे साङ्कर्यादर्शनादित्यर्थ. । अन्यथे ति । स्वभावसाङ्कर्यव्याप्त्यङ्गीकारे स्वभावत्वमङ्गीकृत्य स्वभावसाङ्कर्यानभ्युपगमेन परिहारस्यासम्भवे असत्पक्षोक्ता दोषा स्तव स्युरित्यर्थः । ' तम एकीभवती ' त्यादि । तमस. शरीरत्वोक्तिस्तद्वाचका व्याकृतशब्दस्य ब्रह्मपरत्वसम्भवद्योतनार्था । कारणे ति । ' ब्रह्म वा इदमेक एवाग्र आसी ' दिति ब्रह्मण. अप्ययस्थ नत्वेनावस्थानप्रतीतेरित्यर्थ. । ततश्च वाक्यद्वये नाव्याकृतब्रह्मणोरुभयोरपि लयस्थानत्वप्रतीतेरव्याकृतस्य ब्रह्मशरीरतयाऽव्याकृतशब्दस्य ब्रह्मपर्यन्ताभिधानसामर्थ्याच्चाव्याकृतशब्दस्य विशिष्टपरत्वात् । 'तद्धेद तर्ही' ति श्रुतिर्विशिष्टोपादानत्वे मानमिति सिद्धम् । असच्छब्देने ति । ' असद्वा

मानसूक्ष्माकारविशिष्टचिदचिच्छरीरकं ब्रह्माभिधीयते, न तु केवलं ब्रह्म, असत्त्वविरोधात्; नापि प्रागभावमात्रम्, "तदसदेव सन्मनोकुरुत स्यामिति" "तदात्मानं स्वयमकुरुते" त्यादिवाक्यशेषविरोधात् । सूत्रितं च—"असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च" इति । अत एव "तदात्मानँ स्वयमकुरुत" इत्यत्रापि नात्मशब्दो ब्रह्मस्वरूपमात्रविषय, असच्छब्दनिर्दिष्टसूक्ष्मद्रव्यविशिष्टविषयत्वात्, यथा खल्वव्यतिरेकाद्विवक्षया विशेष्ये स्वशब्दपर्यायोयमात्मशब्द तथा धर्मविशिष्टेऽपि विशिष्टाव्यतिरेकविवक्षया तत्प्रयोगो युज्यते । अत एव हि शरीरविषयेऽप्यात्मानमवलोकयतीत्यादिरभि

---

इदमग्र आसी' दिति वाक्यस्य लयपरत्वात् पूर्वं स्थूलाकारप्रध्वसायमानत्वमुक्तम्, तच्च वास्तव [त्व] न स्वसच्छब्दार्थः, 'इदमसदासी' दित्येतत्प्रतियोगिकत्वावगमात् । प्रध्वसशब्देनाभावमात्र वा विवक्षितम् । इदमग्रेऽसदासीदिति प्रागभावमात्र प्रतीयते न ब्रह्मेत्यत्राह नापी ति । एतेन सूक्ष्मावस्थचिदचिन्मात्रमुच्यत इत्यपि निरस्तम्, मनस्कारासम्भवात् । 'असद्वा इदमग्र आसी' दिति कार्यस्य प्रागसत्त्वव्यपदेशात् कार्यकारणयोरन्यत्व नेति चेन्न,—पूर्वं सत एव कार्यस्वरूपस्य स्थूलावस्थाविरोधिसूक्ष्मावस्थारूपधर्मान्तरेण योगादसत्त्वव्यपदेशः; कुत इदमवगम्यते ? 'तदसदेव सन्मनोकुरुत' 'तदात्मानँ स्वयमकुरुते' इति वाक्यशेषात् । युक्तेः पिण्डावस्थाया घटो नास्तीति व्यवहारस्य पिण्डावस्थाविषयस्य दर्शनात् । शब्दान्तरात्- 'सदेव सौम्येदमग्र आसी' दिति शब्दान्तराच्चेति सूत्रार्थः । असच्छब्दनिर्दिष्टे ति । तच्छब्दस्यासद्विषयत्वात्तत्समानविषयत्वादात्मशब्दस्येत्यर्थः । स्वरूपशब्दवदात्मशब्दस्य विशेष्यपरामर्शित्वं स्वरसमिपयन्नाह यथाखल्वि ति । अत एव ही ति । अत्रावलोकयतीत्यत्र चाक्षुषज्ञानविषयत्व गम्यते, तच्छरीरस्यैव साक्षादिति तद्वारैव शरीरिणोऽवलोकनविषयत्वम्, अतोऽवलोकनकर्तृपरामर्श्यात्मशब्दो विशिष्टपर एवेति भावः। शरीरविषयेऽपीति।

युक्तानां प्रयोगः । न चात्र भ्रमो निदानम्, परिशुद्धात्मवेदिभिरपि तथा प्रयोगात् । न च तत्रोपचारः, निमित्तैक्ये सम्भवति तत्कल्पनानुपपत्तेः । अस्तु वा ब्रह्मस्वरूपवाची तत्रात्मशब्दः, तथापि वैशिष्ट्यं दुस्त्यजम्, यथा भगवान् श्वेत इत्यत्र विग्रहद्वारा सिध्यति तथात्रापि 'अकुरुते' त्यादिसामर्थ्याच्छरीरद्वारेति सिध्यत्येव । अतः 'ब्रह्मवन' मित्यादिनोपादानत्वोद्देशोपि विशिष्टविषयः । मृत्तत्कार्यदृष्टान्तादिकं च विशिष्टप्रदर्शनार्थमेवेति न ततोपि विरोधः । एवं च सति ब्रह्मस्वरूपवाचिब्रह्मात्मादिशब्दैः कारणनिर्देशोपि निर्विकारश्रुत्यन्यथानुपपत्त्या विशिष्टस्योपादानत्वं कल्प्यताम् ।

---

विशेषणीभूतशरीरविषयेऽपीत्यर्थ । निमित्त मव्यतिरेकः । अत इति । विशिष्टोपादानतया उपादानत्वविधेवाक्यसिद्धत्वादुपादानत्वोद्देशोऽपि विशिष्टविधानार्थ इत्यर्थः । ततश्चोपादानोद्देशेन ब्रह्मत्वविधिपरो ब्रह्मशब्दः सूक्ष्मचिदचिद्विशिष्टपर इत्यर्थः ॥

ननु दृष्टान्ते साक्षादवस्थाश्रयमृदाद्युक्त्या दार्ष्टान्तिकेऽपि साक्षादवस्थाश्रयत्वेनोपादानत्वं प्रतीयते, तत्कथं विशिष्टोपादानत्वसिद्धिरित्यत्राह मृत्तत्कार्येति । दृष्टान्तवाक्यं विशिष्टस्य उपादानभावमुपपादयितुं प्रसिद्धोपादानमाह, नैतावता साक्षाद्विकाराश्रयत्वप्रसङ्गः, तदंशे दृष्टान्तविवक्षाया अभावात् । एकविज्ञानेन सर्वविज्ञानप्रसिद्ध्यर्थमुपादानोपादेयभावेनैक्यमात्रं हि दृष्टान्तेन साध्यते । ब्रह्मस्वरूपवाचीति । 'इदं ब्रह्मासी' दिति कृत्स्नस्यापि कार्यवर्गस्य ब्रह्मभावः प्रतीयते, 'अग्र' इत्युक्त्या अयं ब्रह्मभावोपदेशो न स्वतःसिद्धशरीरात्मभावनिबन्धनः–किन्तूपादानोपादेयभावनिबन्धन इत्यवगम्यते, स्वरूपेण चोपादानत्वं निर्विकारत्वश्रुतिविरुद्धम्, अतोऽद्वारकसाधनत्वस्य सद्वारकसाधनत्वस्य च लोके दर्शनात् साक्षात्साधनत्वस्यासम्भवेन श्रुतसाधनत्वान्यथानुपपत्त्याऽपूर्वद्वारकत्ववदुपादानत्वस्यापि चिदचिद्द्वारकत्वङ्कल्प्यते । अद्वारकाश्रयत्वस्य सद्वारकाश्रयत्वस्य च

यद्वा वाक्यशेषशाखान्तरादिसिद्धानुप्रवेशसर्वशरीरत्वादिवशेनात्रापि 'इद' मिति निर्दिष्टस्य 'अग्र' इति निर्दिश्यमानकालविशेषोपलक्षितसूक्ष्मावस्थस्य तदानीमब्रह्मात्मकत्वप्रतिक्षेपाय ब्रह्मादिशब्दसमानाधिकरणनिर्देश इति सिध्यतीति न स्वरूपपरिणामवादस्य विवर्तवादस्य वा कश्चिदवकाशो दृश्यते ।

यत्तु—समस्तभेदरहितस्यैकस्यैव कारणवाक्ये अवधारणात् तद्विरुद्ध विशेषणकल्पनमित्यादि । तदपि स्वपक्षमपरामृश्योक्तम्, प्रलय-

---

लोके दर्शनात् अवस्थाश्रयत्वं सद्वारकं कल्प्यते, घटेनाह्रियमाणस्योदकस्य देवदत्तोऽप्याश्रय एव, अन्यथा श्रमानुपपत्तेः । एवं सद्वारकाश्रयत्वं प्रासादे खट्वायां शेत इत्यादौ प्रसिद्धमेव । एवञ्च ब्रह्मभावश्रवणसहितनिर्विकारत्वश्रुतमन्यथानुपपद्यमानं विशिष्टोपादानत्वकल्पकम् । यद्वेति । तृतीयान्तस्य सूक्ष्मावस्थस्येत्यनेनान्वयः । वशेन लब्धस्य कालविशेषोपलक्षितसूक्ष्मावस्थस्येत्यर्थः । इममग्र एक सदासीदित्यनेन इदंशब्दनिर्दिष्टस्य स्थूलावस्थाप्रहीणब्रह्मभावः प्रतीयते, एकशब्दस्य स्थूलावस्थाप्रहाणार्थत्वात्, स्थूलावस्थाश्रयत्वस्य च साक्षात्परम्परया च सम्भवात्, तत्प्रहाणमपि तथा, तत्र ब्रह्मणः साक्षात्परम्परया वा स्थूलावस्थाप्रहाणमित्यपेक्षायां 'अनेन जीवेनात्मनानुप्रविश्य' ति तेजःप्रभृतिकार्यस्यानुप्रवेशश्रवणादनुप्रवेश्यस्य चानुप्रवेष्टृब्रह्मणो भेदावश्यम्भावात् कार्यस्य तेजःप्रभृतेरग्रकाले ब्रह्मातिरिक्तं सूक्ष्मावस्थात्मकरूपान्तरं लब्धम्, तदेवोपस्थितत्वादपेक्षितत्वाच्च द्वारतयोपादानभूतस्य ब्रह्मणो विशेषणत्वेन स्वीक्रियते; 'ब्रह्म वा इद' मित्यादौ तु शाखान्तरे तेजःप्रभृतिसूक्ष्मावस्थारूपस्य तमसो 'यस्य तमः शरीर' मित्यादिश्रुत्या ब्रह्मशरीरत्वप्रतीतेः शरीरत्वेन तदतिरिक्तत्वात्तदेव द्वारतया उपादानभूतब्रह्मविशेषणत्वेन स्वीक्रियते । एवं न्यायाद्विशेषणलाभः । आदिशब्देन पृषदाज्यन्यायो विवक्षितः । एवञ्च ब्रह्मशब्दसमानाधिकरणनिर्देशो न ब्रह्मस्वरूपपरिणामप्रतिपादनार्थः, अपि तु कारणस्य स्थूलावस्थाप्रहाणाश्रयस्याब्रह्मात्मकताप्रतिक्षेपार्थः । इदंशब्दस्य ब्रह्मपर्यन्तत्वात्सामानाधिकरण्योपपत्तिः । तदपीत्यवधारणम् ।

दशायामपि अविद्याया सूक्ष्मोपाधेः शक्तेर्वा ब्रह्मसम्बन्धित्वेन त्वया त्व दासन्नैश्च स्वीकारात्। वयं तु वाक्यान्तरानुसारेण निर्विकारनिरवद्यश्रुतिविरोधपरिहारार्थं च प्रपञ्चोपादानभूतब्रह्मविशेषण तच्छरीरमित्यनुमन्यामह इति विशेष। अविद्यामिथ्यात्वपक्षे अवधारणमसंकुचितमिति चेन्न,-'अग्र' इत्यादि वैयर्थ्यस्य सद्विद्यानिरूपणे स्थापनात्। किञ्च--ब्रह्मात्मादिशब्देषु स्वरूपपरेष्वपि वैशिष्ट्यलाभो दर्शित.। सच्छब्दं तु विमृशाम-इदमग्रे सदेवासीदिति इदमर्थसत्ताविधिपरे वाक्ये न तावत्स च्छब्देन ब्रह्मस्वरूपमात्र प्रतिपाद्यम्, अनन्तरवाक्यविरोधात्, अनन्तरमेव हि 'तद्धैक आहुरसदेवेदमग्र आसी' दिति। तत्र 'कुतस्तु खलु सोम्यैव स्यात् कथमसत सज्जायेतेति सत्त्वेव सोम्येदमग्र आसी' दित्युच्यते। अत्र हि कार्यद्रव्यस्य पूर्वमविद्यमानत्वपक्ष, प्रतिक्षिप्यते, न पुनरब्रह्मात्मकत्वपक्ष. तथा सति 'कथमसत सज्जाये ते'ति

---

सर्वैरपि संकुचितविषयमेव वाच्यमिति भाव·। सर्वमतेऽप्यवधारणसंकोचाविशेषे पराभिहितविशेषणमेव कुतो नाद्रियते इत्यत्राह वयंत्वि ति। वाक्यान्तरे कृत्स्नस्य ब्रह्मशरीरत्वावगमात् शरीरतया सिद्धस्यैव ब्रह्मविशेषणत्वमङ्गीक्रियते, अविद्याविशेषणाङ्गीकारे ब्रह्मण· सावद्यत्वप्रसङ्गात्, शक्त्यङ्गीकारे ब्रह्माभिन्नोपाध्यङ्गीकारे च ब्रह्मण· सविकारत्वप्रसङ्ग·, शरीरस्य विशेषणत्वाङ्गीकारे न सावद्यत्वम्, विकारस्य शरीरगतत्वात् न स्वरूपमन्यथमिति। वैयर्थ्यस्ये ति। इदानीमप्यवधारणासम्भवादिति भाव·। अनन्तरवाक्यविरोधादि त्यादि। सच्छब्दस्य ब्रह्मस्वरूपपरत्वे 'असदेवे' त्यादिना अब्रह्मात्मकत्वपक्ष एव प्रतिक्षेप्यः स्यात्, तच्चायुक्तमिति भाव.। तथासती ति। अब्रह्मणो मृदादेर्घटाद्युत्पत्ति दर्शनादिति भावः।

ननु 'कथमसत सज्जायेते' त्यत्राब्रह्मणो ब्रह्मात्मक कथं जायेतेत्यर्थ, तत्र च न व्याप्तिसम्भव इति चेन्न,—तथापि ब्रह्मात्मकमिदं जगद्ब्रह्मणः

लोकदृष्ट्या व्याप्तिप्रदर्शनायोगात्, अतः ‘ सदे ’ वेत्यत्र वाक्ये प्रपञ्चस्यैव ‘ बहु स्या ’ मिति वक्ष्यमाणबहुत्वावच्छिन्नसत्ताप्रतिपक्षभूतै कत्वावच्छिन्नसत्तायोग एव प्रतिपाद्यते । अतो ब्रह्मैवात्र मृग्यं न तु सूक्ष्मचिदचिद्वस्तुसद्भावः । ननु सच्छब्दनिर्दिष्टस्यैव ‘ बहु स्या ’ मिति ‘ तदैक्षत बहु स्या ’ मिति बहुभवनसङ्कल्परूपेक्षणश्रवणात् अचेतने प्रतिसंहृतकरणग्रामे चेतनेप्ययोगात् उत्तरत्र सर्वत्र ‘ सन्मूला. सोम्येमाः सर्वा. प्रजा. सदायतना· सत्प्रतिष्ठाः ’ ‘सता सोम्य तदा सम्पन्नो भवति ’ ‘ सति सम्पद्य न विदु ’ रित्यादिषु सच्छब्दस्य नामवत्प्रयोगाच्च ‘ सदेव सोम्ये ’ त्यत्रापि सच्छब्देनानवच्छिन्नसत्ताविशिष्टब्रह्मस्वरूपमेव विवक्षितमिति चेत्? सत्यम्, तथापि पूर्वोक्तानुपपत्त्या स्वरूपमात्रविषयत्वासंभवेऽनुपपत्त्यन्तरेण ब्रह्मस्वरूपपरत्वे चावश्यम्भाविनि अगत्या

---

कथ जायत इति प्रदर्शनायोगात्, ब्रह्मात्मकत्वस्य जगति सिद्धवत्कारासम्भवात् । नात्वे ति । अस्मिन् वाक्ये सूक्ष्मचिदचिद्वस्तुसद्भावो न मृग्य इत्यर्थः ।

ननु ब्रह्म न मृग्यमीक्षणादिना तस्यैव स्पष्ट प्रतीतेरित्याक्षिपति नन्वि ति ।

उत्तरत्रे ति । ‘ सन्मूला ’ इत्यादिषु सच्छब्दस्य विशेष्याप्रयोगात्सापेक्षस्य समासायोगाच्च नैरपेक्ष्येण नामत्वात्, बहुत्वावच्छिन्नसत्ताप्रतिपक्षैकत्वावच्छिन्नसत्तायोगस्य च ‘ एकमासी ’ दिति क्रियापदेन कृतत्वात्, ‘ सन्मूला ’ इत्यादिष्विव ‘सदेवे’त्यत्रापि सच्छब्दस्तत्कालेक्षणकर्तुर्ब्रह्मण एव नाम, न च तदसाधारणप्रवृत्तिनिमित्तासम्भव·, अनवच्छिन्नसत्तायोगस्य प्रवृत्तिनिमित्तत्वादित्यर्थ· । नामव दि ति । ‘ तदर्ह ’ मिति वतिः । नामत्वानुरूपमित्यर्थः । सत्य मिति । ब्रह्मपरत्वमङ्गीकृतम्, स्वरूपमेवविवक्षितमित्यवधारणार्थचिदचिद्विशिष्ट्याभावेऽनङ्गीकारः । पूर्वोक्ते ति । लोकदृष्ट्याप्तिप्रदर्शनायोगादित्यर्थः । अनुपपत्त्यन्तरेण— ईक्षणनामभ्यामित्यर्थः । अगत्ये त्यादि । निर्विकारत्वश्रुत्यनुपपत्त्या विशेषणविशिष्ट

श्रुत्यर्थापत्तिबलेन सूक्ष्मचिदचिद्वैशिष्ट्यव्यवहितसत्तावच्छिन्नं ब्रह्मात्र 'सत्' इति प्रतिपाद्यत इति निश्चीयते । तथा सति 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत ' ' आत्मा वा इदमेक एवाग्र आसी ' दित्यादिश्रुतिभिरपि सङ्गति सिध्यति । अस्तु वा ' सदेव सोम्येदमग्र आसी ' दित्यत्र सच्छब्देन ब्रह्मस्वरूपनिर्देशः; तथापि ' तद्धैक आहु ' रित्यादिना असत्कार्यवादप्रतिक्षेपात् कार्यद्रव्यस्य पूर्वं विद्यमानत्वप्रतीते. तद्विशिष्ट ब्रह्मैवात्र सच्छब्दार्थ इति शक्यतेऽवगन्तुम् । अत एव ' शरीरिभूतपरमात्माभिधायिभि. सद्ब्रह्मादिशब्दै ' रिति भाष्यमपि सुघटितम् ।

---

परत्वमावश्यकम्, लोकदृष्ट्या व्याप्तिप्रदर्शनार्थञ्च सत्त्वपुरस्कारेण प्रवृत्तिर्वाच्या, एवञ्च साक्षात् सत्त्वविशिष्टरूपेणाभिधाने चिदचिद्विशेषणविशिष्टप्रतिपादनासम्भवादगत्या चिदचिद्द्वारा सत्तावच्छिन्न ब्रह्म सदिति प्रतिपाद्यत इत्यर्थः । चिदचिद्वैशिष्ट्येन हेतुना व्यवहिता चिदचिद्गतत्वाद्व्यवहिता या सत्तेत्यर्थः । न च शब्दस्य योगात् प्रवृत्तौ विशेष्यसाकाङ्क्षता, ' प्रोक्षणीरासादय ' तीत्यादिषु प्रोक्षणीशब्दस्य यौगिकत्वेऽपि अप्स्वेव शास्त्रस्थाना प्रचुरप्रयोगादपा प्रतीत्या विशेष्यनिराकाङ्क्षत्ववत् ' प्रोक्षणीपात्र ' मित्यादौ तत एव समासवच्च , विशेष्यनिराकाङ्क्षत्वस्य ' सन्मूला ' इत्यादौ समासस्य चोपपत्ते. । नन्वर्थापत्त्या उपादानत्वे विशेषणवैशिष्ट्यकल्पनेऽपि न तस्य किञ्चिच्छब्दवाच्यत्वकल्पकमस्ति, एवञ्चाव्यवहित सत्तावैशिष्ट्य सच्छब्दार्थोऽस्त्वित्यत्राह तथा सती ति । ' तद्धेद ' मित्यत्र विशेषणस्य ' आत्मा वा इद ' मिति विशेष्यशब्दत. प्रतीतेस्तदुभयश्रुत्यैकार्थ्याय व्यवहितसत्तायोग एवालाश्रीयत इति भावः । अस्तुवे ति । ब्रह्मस्वरूपनिर्देशः– ब्रह्मस्वरूपे ऽनवच्छिन्नसत्ताप्रवृत्तिनिमित्तपुरस्कारेण मुख्यवृत्ति. । ' तद्धैक आहु ' रिति कार्यद्रव्यस्य प्राग्विद्यमानतयावगतस्यैव परिणामित्वात् ब्रह्मशब्दस्तद्विशिष्टपर इत्यर्थः । अत एवे ति । स्वरूप एव शक्त्यङ्गीकारादित्यर्थ. ।

न च अत्र शक्तिद्वयकल्पनागौरवम्, विशिष्टपरत्वे पर्यवसानेन ब्रह्मणि सच्छब्दवृत्ते , स्वरूपपरत्वे तु श्रुता[त्य]र्थापत्त्या शाखान्तरानुसारेण वा चिदचिद्वैशिष्ट्यस्यापि क्रोडीकारोपपत्ते. । न च अत्र लक्षणा दोष., तथापि सर्वशब्दलक्षणापक्षादस्यैवोपादेयतमत्वात् । य. पुन सर्वपदार्थानुवृत्तसत्तामात्रमेवात्र सच्छब्दार्थ , स एव च ब्रह्मे-त्याह, तत्पक्षे तु सकलश्रुतिस्मृतिन्यायविरोध , प्रपञ्चमिथ्यात्वप्रसङ्गका भावेनाप्रकृतत्वात्, इदानीं तत्रोदास्महे । तत्रापि हि प्रपञ्चस्यैव सत्त्वं प्रतीयमान कार्यदशायां कारणदशायां च दशाद्वयविषयसच्छब्दद्वयेन प्रतिष्ठित भवति ।

---

ननु पक्षद्वयेऽपि विशिष्टपरत्वाङ्गीकारात् ब्रह्मणि प्रकृता च शक्तिद्वय स्यादित्यत आह न चे ति । अपर्यवसानम्–विशेषणस्य केवलविशेष्यपर्यन्तता । श्रुत्यर्थापत्त्ये ति प्रसङ्गादुक्तम् । शाखान्तरानुसारेणे ति । प्रकृताभिप्रायम् । ' तद्धेद तर्ह्यव्याकृतमासी ' दित्येतच्छाखान्तरम्, तत्समानार्थत्वायेहापि विशिष्ट-परत्वमित्यर्थ । स्वरूपवाचिना विशेषक्रोडीकारे लक्षणा स्यादित्यताह न चात्रे ति । न्यायानुसारिणी लक्षणा न दोषायेत्यर्थ । दोषत्वमङ्गीकृत्याह तथापी ति । किं प्रपञ्चस्य मिथ्यात्वेन तदधिष्ठानतयानुगता सत्ता सच्छब्दार्थ इत्युच्यते । किं वा सत्यभूत एव प्रपञ्चे व्यापकीभूतं ब्रह्मैव सर्वानुगता सत्ता सैव सच्छब्दार्थ इति ? आद्य आह प्रपंचे ति । सत्यभूतप्रपञ्चात्मकसत्तायास्तदुपादानत्व हि न प्रपञ्चमि थ्यात्वापादकम्, अतस्तदिह निराक्रियत इत्यर्थः । न तस्य प्रपञ्चमिथ्यात्वसाध कत्वाभावमात्रम् , प्रस्तुतास्मिन् पक्षे कारणवाक्येन कार्यकारणावस्थयो सत्त्व व्यवस्थाप्यत इत्याह तत्रापिही ति । तस्मिन् पक्ष इत्यर्थ. । प्रतीयमान मिति प्रत्यक्षादिनेति शेष । ' इद सदेव ' त्येकः सच्छब्द., ' कथमसत: सज्जायेत 'ततो वै सजायत ' इत्यपर. । सिद्धान्त इवेत्यपिशब्दस्य भाव. ।

किञ्च यदिदं विशिष्टस्योपादानत्वं श्रौतं कल्पितं वेति । तत्र भवन्तमपि पृच्छामः, अविद्याविशिष्टस्योपादानत्वं श्रौतं कल्पितं वेति, न प्रथमः, सद्ब्रह्मादिशब्देष्वविद्यासौरभस्याप्यनाघ्राणात् । नाप्युत्तरः,

---

[१८४-पु] यद्वा तत्पक्ष इति । सत्तैव सच्छब्दार्थः सैव च ब्रह्मेत्ययमर्थः सकल श्रुतिस्मृतिन्यायविरुद्ध इत्यर्थः । ब्रह्मस्वरूपं सच्छब्दार्थ इत्यस्य पक्षेऽङ्गीकृतत्वात्ततो विशेषद्योतनार्थः तु शब्दः । कथं श्रुत्यादिविरोध इत्यत्राह प्रपंचे ति । सत्तैव ब्रह्म सच्छब्दार्थश्च इत्येतन्निरासस्याप्रकृतत्वान्न तत्प्रपञ्च्यत इत्यर्थः । सच्छब्दस्यात्र सत्तापरत्वस्य निराकार्यत्वेऽपि सत्तार्थकत्वमात्रस्यानिराकार्यत्वादिति भावः । अप्रकृतत्वं कुत इत्यत्राह प्रपंचे ति । मिथ्यात्वप्रसञ्जकस्य कस्यापि तेनालाभादित्यर्थः । नन्वग्रे सत्तादात्म्यप्रतिपादनादुपादानत्वपर्यवसानात्तदेव मिथ्यात्वप्रसञ्जकमित्यत्राह तत्रापिहीं ति । ब्रह्मस्वरूपं सच्छब्दार्थ इति पक्षे वर्णितरीत्या अनन्तरवाक्यपर्यालोचनादिवशेन कार्यकारणावस्थयोः सच्छब्दस्य सत्तायोगिपरत्वान्न सत्तातादात्म्यमिह प्रतिपाद्यम्, एवञ्च प्रत्यक्षप्रमितसत्तायोगस्य श्रुत्यापि प्रतिपादनात् सत्यत्वमेव प्रतिष्ठितं भवति, न तु मिथ्यात्वप्रसङ्ग इत्यर्थः । ब्रह्मणः सत्तारूपत्वे तन्निराश्रयत्वादिश्रुतिस्मृतिविरोधः, नीरूपस्य चक्षुरादिना सन् घट इत्यादिरूपेण ग्रहणासम्भवान्न्यायविरोधः, सत्तार्थत्वे तु व्याकरणविरोधः, सच्छब्दप्रवृत्तिनिमित्तानुशिष्ट तल्प्रत्ययान्तत्वेन सत्सत्ताशब्दयोर्भिन्नार्थत्वात् घटादिशब्दवत् प्रवृत्तिनिमित्तविशिष्टवाचकत्वस्यावश्यकतया प्रवृत्तिनिमित्तमात्रवाचकत्वमात्रमयुक्तम्, यथाऽवेष्ट्यधिकरणे राजशब्दार्थसिद्ध्युपजीवनेन राज्यशब्दार्थसिद्धेर्न राज्ययोगो राजशब्दार्थ इत्युक्तम्, तथा सच्छब्दार्थसिद्ध्युपजीवनेन सत्ताशब्दार्थसिद्धेस्तदधिकरणन्यायविरोधश्चेत्यर्थः ।

कल्पकाभावादेरविशेषात् । तत्सद्भावेपि प्रत्यक्षादिसमस्तप्रमाणप्रत्यनीक दुर्घटिताभिमतार्थक्लृप्तेरपि सहृदयसंवादिसमीचीनप्रक्रियाकल्पनस्योपपन्नत्वात् । मृद्घटादिदृष्टान्तेन स्वरूपोपादानत्वप्रतिपादनप्रसङ्गं तु यदि भास्करादयः शृणुयुः तदा ते प्रथमप्रतीतनिर्विकारतादिमात्रव्याघातरक्षण कल्पितव्याघातक्षतिशतविशरारुणा भवन्मतेन नन्देयुः। नन्वविद्याविशिष्टं ब्रह्मास्माकं जगदुपादानम्' भवतान्तु सूक्ष्मप्रकृतिपुरुषविशिष्टमिति व्यवहितविकाराश्रयत्वाविशेषादावयोः को विशेष इति ; अहो महदिदमवधानम्! यत्प्रत्यक्षादिप्रमाणगणदृढावधारिताचिदचिदात्मकप्रपञ्चबाधाबाधाभ्यामावयोर्विशेष· प्रदर्शित इति। नन्वेवमपि व्यवहितोपादानप्रतिपादनप्रयासमुत्सृज्य प्रपञ्चसत्यत्ववृथाग्रहानुरूपे स्वारसिके स्वरूपोपादानपक्षे स्थीयता

---

कल्पकाभावादे रिति । आदिशब्देन विशेषणकल्पनस्य 'एकमेवे' त्यवधारणविरुद्धत्व गृह्यते ।

ननु निर्विकारश्रुत्यन्यथानुपपत्तिरेव कल्पिकेत्यत्राह तत्सद्भाव इति । समस्ते ति । अविद्याविशेषणकल्पने तत्कार्यस्य मिथ्यात्व स्यात्, तच्च सर्वप्रमाणविरुद्धमित्यर्थः । दुर्घटिताभिमते ति । सहृदयसंवा दीति वक्ष्यमाणवैलक्षण्य विवक्षितम् । प्रथमे ति । ब्रह्मस्वरूपस्य उपादानत्वे निर्विकारत्वसविकारत्वयोः सावद्यत्वनिरवद्यत्वयोश्च यो व्याघात. प्रथम प्रतीतः तस्माद्रक्षणाय विवर्तवादस्त्वयागीकृत·, स च व्याघातशतविशीर्ण·, ततश्च तद्दर्शनात्तावद्व्याघातरहिते स्वाभिमतस्वरूप परिणामवादे भास्करादय· प्रीतिमन्तो भवेयुरित्यर्थः । विशरारुर्विशरणशीलः। यद्यपि 'शॄवन्द्योरारु' रिति ताच्छीलिकोऽय कर्तृप्रत्ययः,ततश्च विदारयितेत्यर्थः स्यात, तथापि कर्मकर्तृत्वस्य विवक्षितत्वात्, भिदुर काष्ठमिति 'विदिभिदिच्छिदे कुर' जिति कर्तरिविहितकुरच्प्रत्ययान्तभिदुरशब्दवत् कर्मण्यि प्रयोगः । प्रदर्शित इति । "वयन्तु वाक्यान्तरानुसारेण त्याद्वि" नेत्यर्थ. ।

मिति चेत् ; मैवम्, सर्वतादात्म्ये समस्तविकारावद्याश्रयत्वावश्यंभावेन निर्विकारनिरवद्यत्वश्रुतिविरोधस्य दुष्परिहरत्वात् । स्वारस्यमपि मरीचिका सलिलकल्पम् । तथाहि—तत्र भास्करमतं तावत्पृच्छामः, ब्रह्मस्वरूपमेव परिणमतीत्यत्र किमीश्वरो ब्रह्मशब्दवाच्यः? उत तदंशभूतः सूक्ष्मोचिदुपाधिः? उत समुदायः? उत तदुभयानुवृत्तसद्द्रव्यमात्रम्? यद्वा ब्रह्म-धर्मभूतः शक्तिविशेष एवेति; व्यतिरेकादिपक्षस्त्वत्यन्तदूरस्थतया नोपक्षिप्यते । तत्र तावन्न प्रथमः, ईश्वरांशस्य विकारानभ्युपगमात् । न द्वितीयः, ब्रह्मोपादानत्वप्रहाणप्रसङ्गात् । न तृतीय, समुदायस्य समुदायिभ्यां भिन्नत्वे सति न ब्रह्मोपादानत्वसिद्धिः, अभिन्नत्वे पक्षद्वयोक्तदूषणस्य पुनरुन्मज्जनम् । चतुर्थेऽपि पक्षे सन्मात्रस्य सर्वतादात्म्ये चेतनाचेतनात्मकविश्वप्रपञ्चस्थदोषाधारत्वेन तदात्मकस्य ब्रह्मणो निर्दोषत्वश्रुतिविरोधः । पञ्चमस्तु पक्षः परिशिष्यते । तत्रापि शक्तेः ब्रह्माव्यतिरेके पुनः स एव श्रुतिविरोधः । व्यतिरेके ब्रह्मोपादानत्वभङ्गप्रसङ्गः । व्यतिरेकाव्यतिरेकपक्षस्तु दुस्थत्वादेव दूरपरिहरणीयः । स्वाभाविकभेदाभेदवादश्च सर्वलोकविरुद्धत्वात् दुर्विचारमूल एव । तेन पक्षद्वयप्रतिक्षेपे मृषावादः परिशिष्यते । सोऽपि स्वतः प्रतिक्षेप्य एव, प्रस्फुटदोषसङ्करविघटितत्वात् ।

---

पंचमस्त्वि ति । शक्तेरन्तरङ्गत्वात् तत्परिशेष इति भावः । तत्रापि न ब्रह्मोपादानत्वश्रुतेः स्वारस्यमित्यभिप्रायेणोपपादयति तत्रापी ति । दुस्थत्वा दिति । ब्रह्मस्वरूपाव्यतिरिक्तायाः शक्तेर्व्यतिरेक उपाधित इति वाच्यम्, तस्यापि तथेत्यनवस्थेत्यर्थः । शक्तिशक्तिमतोर्व्यतिरेकाव्यतिरेकौ स्वाभाविकावित्यत्राह स्वाभाविके ति। भास्करमतप्रतिक्षेपप्रकारेणैव यादवमतस्य प्रतिक्षिप्ततामभिप्रेत्याह तेने ति। मृषावादः—विवर्ततया ब्रह्मोपादानकत्ववादः । स्वत इति । स्वेनैव प्रतिक्षेप्तु

अवस्थान्तरयोगित्वमुपादानत्वमुच्यते ।
मृत्पिण्डघटदृष्टान्तस्तत्रैव ह्युपपद्यते ॥
सर्पभूरन्ध्रमालादिरूपावस्थान्तरान्वयः ।
रज्जौ न विद्यते तस्मान्नोपादानत्वमिष्यते ॥
इत्थमध्यस्तविश्वस्य ब्रह्मोपादानभाषणम् ।
लोकवेदविरुद्धत्वात्स्वयमेव निरुध्यते ॥
अतः उपादानत्वानुपपत्तिरद्वैतवादिन एवेति ॥

इति शतदूषण्यां ब्रह्मोपादानत्वान्यथानुपपत्तिभङ्गः

॥ त्रिपञ्चाशो वादः ॥

---

योग्यः, स्वव्याहत इत्यर्थः । तदेवोपपादयति । अवस्थान्तरे ति । लोकसिद्धतामुक्त्वा श्रुतिसिद्धतामाह मृत्पिण्डे ति । ब्रह्मणोऽधिष्ठानत्वाद्विकारान्वयः स्यादित्याशङ्कयाह सर्पे ति । इत्थ मित्यादि । अवस्थानाश्रयस्योपादानत्वस्य लोकवेदविरुद्धत्वाद्विश्वस्याध्यस्ततोक्तिर्ब्रह्मण उपादानत्वोक्तिश्च परस्परव्याहते इत्यर्थः ।

एतेनेद निरस्तम्, यदाह नवीनः—अवस्थान्तरयोगित्व नोपादनत्वम् ; तद्धि विकारवत्कारणत्व परिणामित्वं वा ? नाद्य , यत्किञ्चित्समवायित्वस्य निमित्तसाधारणत्वात्, तद्विकारसमवायित्वस्याप्येकसमुदायवादे तत्र सत्त्वात्, तन्नानात्वेऽपि अनित्यमृद्घटादेर्नित्यसम्बन्धासम्भवः, सम्बन्धस्य सम्बन्ध्याश्रयत्वनियमात्, अनित्यत्वे च भावकार्यस्य सोपादानत्वनियमात्, तदुपादाने तत्समवायसत्त्वे अनवस्था, असत्त्वे उपादानलक्षणाव्याप्तिः, नापि द्वितीय', तद्धि तात्त्विकरूपान्तराभेद , तच्च न अभेदे, रूपान्तरत्वव्याघातात् ; तस्मात्परमते नोपादानलक्षण निर्वहति; अस्मन्मते तु यदभिन्न कार्यमुत्पद्यते तत्कारणमुपादानम्, अभेदश्च मृद्घट इति सामानाधिकरण्यानुभवसिद्धः, अय घट इत्यत्र स्वप्रकारीभूतधर्मद्वयविशिष्टाभेदविषयत्वस्य क्लृप्तत्वात् ; स चाभेद. प्रकृते तादात्म्य भिन्नत्वे सत्यभिन्नसत्ताकत्वम्, अस्ति हि मृद्घटयोरेतत्तादात्म्यम्, भेदाभावे कार्यकारणभावायोगात्, उपादानो

पादेययोः सत्ताभेदाभावाच्च, दण्डघटयोस्तु नैवम्, भेदे भासमानेऽपि दण्डाधिष्ठा नात्तदुपहितात्तत्सत्त्वात् घटसत्ताया अन्यत्वात्, अन्यत्वं च दण्डाद्यभावेऽपि सन् घट इति अनुभवात् दण्डो घट इत्यननुभवाच्च सिद्धम्; नीलो घट इत्यादौ गुणगुण्याद्ययुतसिद्धसामानाधिकरण्यानुभवस्थले सर्वत्र इदमेव तादात्म्य विषयः ; नन्वेवमेकघटाश्रितरूपरसादीना घटसत्तैकैव सत्तेति रूपरसादेरन्योन्य सामानाधिक रण्यानुभवः स्यादिति चेन्न, रूपाद्यवच्छिन्नतया घटसत्ताया रसादिसत्तात्मत्वाभा वात्, ननु मृद्घटयोर्भेदे कथमेकसत्ताकत्वम्, दण्डघटयोरदर्शनादिति चेत् ? दण्डघटभेदवत् मृद्घटभेदस्य सत्तावच्छेदकत्वाभावात्, रूपरसयोरप्यन्योऽन्यं भेदः सत्तावच्छेदकः नत्वाश्रयाद्भेद , अथवा कश्चिदनिर्वचनीयो धर्मस्तादात्म्यम् ; अतो यदभिन्न कार्यमुत्पद्यते तत्कारणमुपादानम्, एवञ्च जगद्विवर्ताधिष्ठान ब्रह्मा प्युपादानम्, विवर्तस्याधिष्ठानाभिन्नत्व त् , ब्रह्मणः कारणत्वाच्च अभेदश्च सन् घट इति प्रतीतिसिद्धः सद्रूपाधिष्ठानतादात्म्यविषयत्वात्, न हि सदिति घटस्वरूप मेव प्रतीयते, तस्य पटादावननुगतत्वात्, नापि सत्ताजातिवैशिष्ट्यम्, अतिरि क्तसत्ताकल्पने गौरवात्, प्रतीतेरधिष्ठानतया सत्तादात्म्यविषयत्वेनाप्युपपत्तेः, सामा न्यादौ सद्बुध्ययोगाच्च, न च बाधायोग्यत्व सत्त्वं सामान्याद्यनुगतमिति वाच्यम्, तस्या एव सत्ताया लाघवानुगृहीतानुभवेन "न ह्यसति द्वैतसिद्धिः आत्मैव सिद्धो द्वितीयः" इत्यादिश्रुत्या चात्ममात्रतया सिद्धत्वात् ; अन्यथासिद्धानुभवेन श्रुत्यर्थान्यथाकरणायोगात् , नापि प्रमाणयोग्यत्त्वम्, अबाधितानुभवस्य प्रमाणत्वे बाधायोग्यत्वपर्यवसानात् , यथार्थानुभवस्य तत्त्वे मिथ्यारजतादिसाधारण्यात् ; तस्मात्कार्याभिन्न ब्रह्म कारण चेत्युपादानम्; अभेदश्चाधिष्ठानतयेति ब्रह्मविवर्तभूतं जगदिति ।

अथभाव.— समवायानङ्गीकारादाश्रयाश्रयिभावाङ्गीकाराच्च अवस्थान्तर योगित्वमुपादानत्वमित्यत्र न कश्चिद्दोष', एतदेव परिणामित्वमपीति, तदपि सुस्थम् ; रूपान्तरवदभेदो वा, परिणामित्वम् रूपान्तर च कार्यावस्था।ता।त्त्विकरूपान्तराभेदः परिणामित्वमित्यसङ्गतम्, रूपान्तरस्य तात्त्विकत्वे अद्वैतहानेः । स्वसमानसत्ताकत्व विवक्षाया यदभिन्न कार्यमुत्पद्यत इत्यत्र वक्ष्यमाणो दोषोऽनुसन्धेय. । सिद्धान्ते

त्विदमपि पूर्वत्रैव पर्यवसितम् । यदभिन्न कार्यमुत्पद्यते तत्कारणमुपादानमित्यत्रापि न दोषः, उपादानस्यैव सद्वारकोत्पत्तेः सद्वारककार्यतायाश्च सत्त्वात् । त्वत्पक्षेत्व तदयुक्तम्, कार्यकारणयोर्भेदाङ्गीकारात् ।

ननु भिन्नत्वे सत्यभिन्नसत्ताकत्वलक्षणोऽभेदोऽस्तीत्युक्तम् , सत्यमुक्तम, दुरुक्तन्तु तत्, तस्य मृद्घट इति सामानाधिकरण्यानुभवसिद्धत्वाभावात्; अय घटः अय कम्बुग्रीव. इति सामानाधिकरण्यानुभवाविषयस्यैवैतत्सामानाधिकरण्यानुभवाविषयत्वात् , त्वयैवाभेदस्यैतत्सामानाधिकरण्यानुभवसिद्धत्वेऽय घट इत्यत्र स्वप्रकारीभूतधर्मद्वयविशिष्टाभेदाविषयत्वस्य क्लृप्तत्वादिति ह्येवाभिधानात्, अय घटः अय कम्बुग्रीवः सोऽय देवदत्तः तत्त्वमसि सत्य ज्ञानमित्यादिषु भिन्नत्वे सत्यभिन्नसत्ताकत्वासम्भवात् । किञ्च भिन्नत्वे सत्यभिन्नसत्ताकत्व यदि सामानाधिकरण्यप्रतीतेर्विषयः तदा मृद्घटौ भिन्नौ अभिन्नसत्ताकौ चेति प्रयोगः स्यात् ; ससर्गमर्यादया भानाद्यदि न तथा प्रयोगस्तदा मृद्घटावभिन्नाविति प्रयोगो न स्यात् । किञ्च तादात्म्य हि तत्स्वरूपकत्वम्, तत्स्वरूवकत्व च तत्स्वरूपाभिन्नत्वम्, इद कथ भेदाभिन्नसत्ताकत्वघटितशरीर स्यात् ? यदि तादात्म्यशब्दो रूढ इत्युच्यते एवमपि मृदात्मको घट इति प्रयोगो न स्यात्, मृत्स्वरूपं यस्येति हि तदर्थः । किञ्च सघीभवन्ति ब्राह्मणा इत्यत्रेव तन्तवः पटीभन्तीति सप द्यकर्तरि च्विर्न स्यात्, जायमानात् पटाद्भिन्नतया सम्पद्यकर्तृत्वासम्भवात् । कार्यकारणयोर्भेदे अवयविभङ्गे त्वयोक्तो गुरुत्वाधिक्यप्रसङ्गोऽवर्जनीयः ।

अपि च असत उत्पत्त्यसम्भवात् घटस्य सूक्ष्मरूपेणावस्थान कार्यस्य त्वयोच्यते, तत्राजातस्य सूक्ष्मरूपस्य जातस्य घटस्य चाभेदः कथमुपपद्यते ? नचात्रापि भेद एव, असत उत्पत्तिप्रसङ्गात्, सूक्ष्मरूपकल्पनावैयर्थ्याच्च । तथा च पिण्डरूपेण प्रागवस्थान पश्चात् घटरूपेणोत्पत्तिरित्येव वक्तुमुचितम् ।

किञ्च । मृत्पिण्डो घट आसीदिति प्रतीतिर्न स्यात् । "पुनरावृत्तः स्वर्णपिण्डः खादिराङ्गारसवर्णे कुण्डले भवत" इति च भाष्यम् । पिण्डरूपकार्ये घटरूपकार्याद्भिन्नमेव हि मतम् । न च तत्र तादात्म्यसम्भवः, तत्राभिन्नसत्ताक

त्वासिद्धेः, सा च पिण्डाभावेऽपि घट इत्यनुभवात् घटाभावेऽपि पिण्ड इत्यनुभ वाच्च भिन्नैव सिद्धा । किञ्च द्रव्य घट इत्यत्र द्रव्याभिन्नसत्ताकत्वं रूपी घट इत्यत्र रूप्यभिन्नसत्ताकत्व च विषय इति स्यात्, ततश्च घटे द्रव्यत्वरूपे न स्याताम् । किञ्च–' यवमयश्चरुर्भवती ' त्यादौ विकारार्थप्रत्ययानुपपत्तिः, यवस्य चर्वपेक्षया भिन्नसत्ताकत्वात , अवघातादिना यवनाशेऽपि चरुप्रतीते । एकविज्ञानेन सर्व-विज्ञानप्रतिज्ञाया एकस्य कारणस्य स्वरूपे ज्ञाते कार्यस्य सर्वस्य स्वरूप ज्ञातं स्वरूप स्यैकत्वात्, स्वरूपं चाधिष्ठानसत्तेति ग्रर्थस्त्वयोच्यते, तथा च " मृत्पिण्डेन सर्वं मृण्मयं विज्ञात स्या " दित्यसङ्गतम् , पिण्डघटयोरभिन्नसत्ताकत्वाभवात् । एवं " सदेव सोम्येदमग्र आसी ' दित्यनुपपन्नम्, एकथा हि सत्तया उभयोस्तुल्यः सम्बन्धो वाच्यः, अस्य हि सर्वस्य ब्रह्मण्यध्यस्तत्वं सम्बन्धः, ब्रह्म तु नाध्यस्तम्, अतो ' बहु स्या प्रजायेय ' ' सच्च त्यच्चाभव ' दित्यादि बहसामञ्जस्यम् । सदे-वेति सच्छब्देन प्रकृतिविवक्षायामपसिद्धान्त., ईक्षणश्रुतीक्षत्यधिकरणव्याघातः, अद्वितीयान्वयानुपपत्तिश्च ।

यत्तु सन् घट इत्यादौ सद्रूपाधिष्ठानसद्भेदाभाव एव विषय इति । तन्न, मृद्घट इत्यादावभिन्नसत्ताकस्यैव विषयत्वोक्तेरननुगमात् । न च सर्वत्र तत्प्र तियोगिकसद्भेदाभाव एव तादात्म्यं विषय इति वाच्यम्, सद्भेद इति भेदस्य पारमार्थिकत्वविवक्षायां दण्डघटयोरपि तादात्म्यप्रसङ्ग, व्यावहारिकत्वविवक्षायां मृद्घटयोरपि भेदस्य व्यावहारिकत्वेन तत्रापि तादात्म्याभावप्रसङ्गात् । सद्भेदा-भावशब्देन सत्तावच्छेदकभेदाभावविवक्षाया भेदत्वाविशेषेण सर्वस्यापि भेदस्य सत्तावच्छेदकत्वात् मृद्घटयोस्तादात्म्य न स्यात् ।

किञ्च–किमिदमभिन्नसत्ताकत्वम् ? उभयोरेकसदध्यस्तत्वञ्चेत् ; घट पटयोरपि तादात्म्यप्रसङ्ग., प्रपञ्चब्रह्मणोः तदभावप्रसङ्गश्च । घटेनाकाशवत् एकेन भिन्ने सदंशे इतरस्याध्यासश्चेदुभयाधिष्ठाने औपाधिकभेदस्याप्यभाव इति पर्यवसि-तम् । ततश्च रूपस्पर्शयोस्तादात्म्यप्रसङ्गः, घटसत्ताया एव रूपस्पर्शाधिष्ठानत्वात्, एकरज्वारोपितयोः सर्पभूदलनयोस्तादात्म्यप्रसङ्गश्च । अन्यतराधिष्ठानतावच्छिन्ना

धिकरणताक.त भेतर.विष्ठानतायाश्चे त् , अवच्छेकत्वस्यानतिरिक्तवृत्तित्वरूपत्वे रूपस्पर्शयोस्तादात्म्यप्रसङ्ग एव । अवच्छेदकत्व सम्ब धविशेषश्चेतिकिमेतावद्दूरधावतेन? सम्बन्धविशेषः तादात्म्यमिति सुवचत्वात् । किञ्च–इद सामानाधिकरण्यनिबन्धनमिति कुत इष्टम् ? इद रजतमित्यत्रेति चेत् ; इदानीं प्रपञ्चमिथ्यात्वस्य विप्रतिपन्नतया तत्र सार्त्ताधिष्ठानकत्वासिद्धेः । सामानाधिकरण्यप्रतीत्यन्यथानुपपत्त्या कल्पने अय घट इत्यत्रेवाभेद एव कल्प्येत, तस्यैवोपपादकत्वात् , अन्यत्रोपपादकत्वेनाक्लृप्तस्या.पि कल्पने इदमेव कुतः कल्प्यते? सप्रतिपन्नमयुतसिद्धत्वमेव तादात्म्यमिति कुतो न कल्प्यते ? त.सम्बन्धिन्याभेदप्रवेशादिति चेत् , साक्षात्स्वरूपे भेदप्रवेशात्सिद्धमर्हम् । अभिन्नसत्ताकत्वमेव तादात्म्यं चेत् , इतोऽप्यन्यत्र क्लृप्तस्वरूपाभेदभेदाविशेषात् क्लृप्तत्वात् घटकलशसामानाधिकरण्यप्रसङ्गाच्चायुतसिद्धेरेव तादात्म्यरूपत्वं कल्पयितुमुचितम् । अकल्पनमेव वा । कथ तर्हि मृद्घटः नीलो घट इति सामानाधिकरण्यम् ? अय घट इत्यत्र कथं सामानाधिकरण्यम् ? अभेदादिति चेत् , कथमिह तन्न स्यात् ? बाधादिति चेत् , कथ तर्हि अग्निर्माणवक इति ? उपचारादितिचेदिहापि तथास्तु ।

ननु प्रतीतौ कथमुपचार.? तस्य शब्दधर्मत्वादिति चेत् , सामानाधिकरण्यमपि शब्दधर्म एवेति कथमुपचारो न तस्योपपादकः ? अस्तु वा सामानाधिकरण्य प्रतीतिधर्मोऽपि, तच्चाभेदगोचरत्वान्नातिरिच्यते, ततश्चाभेदस्यैव प्रतीतेः कथं भेदः ? युक्ति इति चेत् , तर्ह्यभेदप्रतीतिभ्रम इति किन्तदुपपादनाय शशविषाणकल्पनतया ? श्रुतिरपि मुख्यार्थासम्भवे तत्त्वमसिवल्लक्षणया नेतव्या ।

ननु मृद्घट इति तावत् समानाधिकरणप्रयोगो दृश्यते, अय च प्रयोगोऽर्थविशेषप्रतीत्या विना नोपपद्यते, अतः प्रयोगनिमित्तज्ञानस्य विषये निरूपिते मृद्घटयोः कार्यकारणयोरभेदासम्भवात् , अभेद विना सामानाधिकरण्यायोगात् , घटकलशयोरिवापर्यायत्वाच्च भिन्नत्वे सत्यभिन्नसत्ताकत्वं विषय इति कल्प्यत इति चेन्न ; अन्यत्र क्लृप्ताभेदभ्रमस्यैव सामानाधिकरण्यनिमित्तत्वकल्पनौचित्यात् , मृद्घटयोर्भेदादपर्यायत्वम् । किंच–तयोरभेदगोचरायाः प्रतीतेरन्यविषयत्व

कल्पनादपि निर्विषयत्वकल्पनमेव वरम् । किञ्च कार्यकारणयोरभेदप्रतीतिस्ताव द्दुरपह्नवा, " यथा सोम्ये " ति वाक्येनापि दृढीकृता, अतोऽभेदस्य दुरपह्न वत्वात् कार्यत्वमनिर्वचनीयत्वादुपपादय, किमनया अभेदप्रत्यक्षापह्नवसामानाधि करण्यानिर्वाहकखपुष्पकल्पनावैयाकुल्या, अवस्थाया एव कार्यत्व द्रव्ये कार्यत्वव्य- पदेश औपचारिकः, कादाचित्कावस्थायोग एव वा कार्यत्वमिति वा कल्पय । एतेन पृथक् सत्ताशून्यत्वं तादात्म्यमिति निरस्तम्, तस्यापृथक्सत्ताकत्व एव पर्यवसानात्, सत्ताशून्यत्वस्य दण्डघटादिसाधारणत्वात्, ब्रह्मण्यभावात् पृथक् पदवैयर्थ्यात् । सत्तावच्छेदकभेदशून्यत्व तादात्म्यमित्यपि न, अवच्छेदकत्व यदि तदन्यस्तत्वम्, तदा सत्तावच्छेदकेति व्यर्थम् । भेदाभावे कार्यत्वानुपपत्तिश्च त्वयैवोक्ता भेदस्य सत्ताभेदकत्वाभावविवक्षाया भेदे वैषम्याभावाद्विशेषणवैयर्थ्यात्। भेदो हि सत्ताभेदकताप्रयोजकः, यथा दण्डघटयोः स्वयं भिन्नत्वात् सत्ता भिन्ना, मृद्घटभेदस्तु मृद्घटयोर्न सत्ताभेदकताप्रयोजकः, अतस्सत्तावच्छेदकभेदशून्यत्वं तादात्म्यमिति चेत् ? भेदत्वाविशेषे कथमिदं वैषम्यम्, वैपरीत्यस्यापि सुवचत्वात् ।

ननु भिन्नाविमाविति दण्डघटयोः प्रत्यक्षेण भेदो गृह्यते, मृद्घटयो- स्तु नैवम्, किन्त्वनुमीयते—इति वैषम्यान्मृद्घटयोर्भेदो न सत्तावच्छेदक इति चेन्न,– परोक्षत्वापरोक्षत्ववैषम्यस्यापि वैपरीत्यप्रयोजकत्वशङ्काया निवारकाभावात्। एतेन सत्तानवच्छेदकभेदवत्त्वमित्यपि निरस्तम् । किञ्च अभिन्नसत्ताकत्वमित्यत्र सत्तया कः सम्बन्धो विवक्षितः ? नतावत्तादात्म्यमेव, आत्माश्रयात् । नापि तत्स त्तातिरिक्तसत्ताशून्यत्वं सम्बन्ध । सर्वस्यापि सत्तासम्बन्धराहित्येनातिप्रसङ्गात् । घटादेर्मृत्सत्तातिरिक्तवाय्वाद्यवच्छिन्नसत्तासंयोगित्वाद्द्रव्येष्वव्याप्तेः । अस्य सम्ब- न्धत्वासम्भवाच्च । न हि जलगतशैत्यातिरिक्तशैत्यराहित्याद्वह्नौ शैत्यविशिष्टप्र- त्ययः । नापि संयोगः अद्रव्येष्वसम्भवात् । न च सत्तासम्बन्धस्सत्ताप्रतियोगिक भेदाभावः, मिथ्यात्वेन प्रपञ्चस्य सत्तया भिन्नत्वात् । न च पारमार्थिकभेदाभावः, पारमार्थिकभेदस्याप्रसिद्धेः । न च ब्रह्मैव तादृशोभेदः, प्रपञ्चेन सम्बन्धस्यानिरू-

पणात् , निरधिकरणत्वाच्चातिप्रसङ्गतादवस्थ्यात् । नाप्यधिष्ठानाध्यस्यमानभावः सम्बन्धः, तस्य सन् घट इति प्रतीतिविषयत्वासम्भवात् । अध्यस्यमानत्वञ्च तद्भेदेनोत्पन्नत्व तदभेदेन प्रतीयमानत्व वा न सम्भवति, अभेदासम्भवात् प्रतीति विषयत्वाभावाच्च । न च सत्तावच्छेदकत्व सम्बन्धः, सम्बन्धमन्तरेणावच्छेदकत्वासम्भवात , तस्य प्रतीतिविषयत्वासम्भवाच्च । अनिर्वचनीयः कश्चिद्धर्मस्तादात्म्यमित्यपि न, तस्याभेदादन्यत्वे सामानाधिकरण्यनिमित्तत्वाभावात् । अनन्यत्वे तद्या[प्य]त्वे च भेदे विद्यमाने तदयोगात् , उभयोस्तुल्यसत्ताकत्वात् ।

नन्वभेदः प्रातिभासिकः, यौक्तिको भेदो व्यावहारिक इति चेन्न, " यथा सोम्येति " श्रुतिविरोधात् । न हि प्रातिभासिकाभेदमात्रेण ततो भिन्नस्य तज्ज्ञानेन ज्ञातता सम्भवति । यच्च ब्रह्माभेदः सन् घट इति प्रतीतिसिद्ध इति , तन्न, घटादेरेव सत्त्वात्, अन्यथा तस्याः प्रतीतेर्भ्रमत्वप्रसङ्गात् । किन्तर्हि सत्त्वम् ? उच्यते । अस्तिनास्त्योः परस्परप्रतिक्षेपकता तावत् सर्वलोकविदिता, नास्तीति चेह नास्तीति इदानीं नास्तीत्यधिकरणसापेक्षाभावप्रतियोगित्वं प्रतीयते, यत्र चाधिकरणविशेषाप्रयोगः तत्रापि विवक्षित एव स , प्रकरणादिना तन्निर्द्धारणम् , योऽपि समवायो नास्तीत्यादिप्रयोगस्सोऽपि सर्वदेशसर्वकालाभावप्रतियोगित्वगोचरः , न च तादृशाभावाप्रसिद्धिः, अभावे एकत्वस्याविवक्षितत्वात्तत्र तत्र प्रसिद्धा एवाभावा विवक्षिताः, संयोगादतिरिक्ते प्रसिद्धे उक्तमभावप्रतियोगित्वमारोप्यते, अनारोपमूलकसमवायनिषेधस्तु संयोगादतिरिक्तः प्रतियोग्यतिरिक्त सम्बन्धो न भवतीत्यादिरूपः , एवं चेह घटो नास्तीत्येतत्प्रतिक्षेपकतया इह घटोऽस्तीत्यस्य एतद्देशीयाभावप्रतियोगित्वाभावो विषयः , इदंवस्तुस्वरूपमस्तीत्यादेः सर्वकालवर्त्यभावप्रतियोगित्वप्रतिक्षेपात्मकत्वात्तादृशाभावप्रतियोगित्वाभावो विषय इति । यद्वा अस्तीति स्वार्थिकप्रत्ययवदनतिरिक्तार्थः, अत एव ह्यात्मभरणवचनत्वमुच्यते, आत्मशब्दः स्वरूपवचनः , तिङन्तस्य साध्यरूपेण प्रत्यायकत्वमर्यादानुसारेण भरणशब्दप्रयोगः, अस्तिप्रयोगश्च अनतिरिक्तार्थत्वेऽपि कारकपदानां क्रियापदेन विना बोधकत्वाभावात् । कालान्वयार्थञ्च इह घटस्सन्नित्यत्र सन्निति प्रयोगस्तु

इह घट इत्येतावन्मात्रोक्तौ उत्पत्तिविनाशादिसाधारणतया तदाकाङ्क्षानिवृत्तये । क्रियान्तराप्रयोगादेव तदाकाङ्क्षा निवर्तत इति चेत्? सत्यम् अत एव हि क्वचिदिह घट इत्येतावन्मात्रं प्रयुज्यते । प्रकारस्य प्रकारान्तराद्व्यवच्छेदकत्वादयमपि प्रयोगो युज्यत एव । न तु सत्त्वप्रतीत्यर्थोऽयमस्तेः प्रयोगः, देवदत्तो भुङ्क्ते यज्ञदत्तः पचति विष्णुमित्रो गच्छतीत्यादौ अस्तेरप्रयोगात् । तत्राप्रयोगो हि क्रियापदान्तरसत्त्वेन वाक्यस्यान्वयबोधसामर्थ्यात् । सार्वत्रिकः प्रयोग. कालार्थश्च । यद्वा प्रामाणिकत्वं सत्त्वम्, तच्च प्रमाविषयत्वम्, स च प्रामाण्यस्य स्वतस्त्वात् परोक्षापरोक्षसर्वप्रमाणगोचरः, अत एव घटज्ञानमात्रात् ज्ञानान्तरमनपेक्ष्य घटोऽस्तीति प्रयोगः । सत्त्वस्य सर्वज्ञानगोचरत्वात् । अस्तेः प्रयोग पूर्ववत् क्वचिद्वाक्यसिद्धये क्वचिद्विप्रतिपत्तौ साधनप्रतिज्ञार्थम् । अथ वा बाधायोग्यत्वं सत्त्वम् । न च लाघवानुगृहीतप्रत्यक्षानुभवेनात्ममात्रस्यैव सत्त्वम्, अनन्तरपदार्थानां बाधितत्वकल्पने गौरवात्; सर्वप्रतीत्यप्रामाण्यकल्पनानुपपत्तेश्च । नचाबाधितत्वं ब्रह्मणि प्रत्यक्षं विषयीकर्तुं शक्नोति । ब्रह्मस्फुरणस्य प्रकाशमात्रत्वात्, तेन बाधायोग्यत्वप्रकाशासम्भवादद्वैतश्रुतिरीश्वराद्वित्वनिषेधादिपरा ।

एतेन विवर्तोपादानत्वव्याघातप्रदर्शनेन श्रुतिव्याघातोऽपि दर्शितः । सद्विद्यया तावद्विवर्तपक्षो व्यवहन्यते, स्तब्धोसीत्यनेन आदेशमपृाक्ष्य: येनाश्रुतमित्यादिप्रतिपन्ननिमित्तोपादानत्वविशिष्टज्ञानस्य मोक्षसाधनत्वं प्रतिपन्नम् । अतस्तद्विरुद्धो विवर्तवाद. । आदेशशब्दस्य नियन्तृपरत्वमाचार्यैरेव उपपादितम् ।

एवं "येनाश्रुत" मित्यनेनापि व्याघातः, प्रपञ्चब्रह्मणोस्सत्यमिथ्यावस्तुनोरत्यन्तविलक्षणतया अन्यतरज्ञानेनान्यतरस्य ज्ञातत्वासम्भवात् । अधिष्ठानज्ञानेनाध्यस्तं ज्ञातं भवतीति यद्युच्येत, तदा भ्रान्त्यभ्रान्त्योस्सङ्करप्रसङ्गः, शुक्तिज्ञानस्यैव रजतज्ञानत्वप्रसङ्गात् । नन्वज्ञातस्य स्वरूपं ज्ञातं भवतीत्यर्थः, मिथ्याभूतस्याधिष्ठानातिरेकेण स्वरूपाभावादधिष्ठानमेव तस्य स्वरूपमिति चेत्? किमत्र स्वरूपशब्दो लोकव्युत्पन्न एव, उत त्वया परिभाषितः? नाद्यः, घटस्वरूपमित्यत्र स्वरूपशब्दस्य घटार्थकत्वेनैव व्युत्पत्तेः इहापि तथैव विवक्षायां

ज्ञातत्वासम्भवरूपदोषतादवस्थ्यात् । न द्वितीयः, अश्रुतशब्देन पारिभाषिकस्वरूप शब्दार्थोपस्थाने लक्षणाप्रसङ्गात् ।

" कथन्नु भगव इत्य " नेनापि व्याघातः, विवर्तपक्षे शङ्कानुदयात् । एवं दृष्टान्तवैयर्थ्यञ्च, मृज्ज्ञानेन सर्वस्य ज्ञातता हि तत्र प्रतिपाद्यते, तच्च कार्य-कारणयोरभेद एव युज्यते, न तु कार्यस्य मिथ्यात्वे ।

एवमन्यज्ञानेनान्यस्य ज्ञातता कथं भवति ? कार्यञ्च भिन्नमेव, पृथुबुध्नोदराकाररूपरूपभेदात् नामभेदाच्चेति नैयायिकाशङ्कानिरासार्थेन 'वाचारम्भण' मित्यनेनापि व्याघातः । तत्र " वाचारम्भणं मृत्तिकेत्येव सत्य " मिति कार्य मिथ्यात्वं कारणसत्यत्वं च प्रतिपाद्यत इति चेत् ? किमिदं कारणसत्यत्वम् । पारमार्थिकत्वे अद्वैतहानिः, व्यावहारिकत्वे कार्यस्य मिथ्यात्वं यदि प्रातिभासिकत्वेन तदा मृदोऽपि कार्यत्वात् मृद्घटयोस्सत्त्वे न विशेषः । यदि व्यावहारिकत्वेन मिथ्यात्वं तदाप्ययमेव दोषः, कार्यस्यैव मिथ्यात्वस्य वाच्यत्वात् नामधेयग्रहण-वैयर्थ्यञ्च । " मृत्तिकैव सत्ये " ति वाच्य इति करणवैयर्थ्यञ्च । सिद्धान्ते तु वाचा वागर्थं, अध्ययनेन वसतीतिवत् प्रयोजनस्यहेतुतया निर्देशः, इदमुपलक्षणम्—रूपस्यापि ग्रहणात्, वागर्थं द्दानाद्यर्थंच, विकारः—अवस्था, नामधेयच आरभ्यते—स्पृश्यते । हेतुमाहमृत्तिकेति, या सा मया पूर्वाह्णे मृत्तिका दृष्टा सैवेदानीं घट आसीदित्यबाधितप्रत्यभिज्ञानान्न द्रव्यस्य भेद इति भावः ।

एतेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः ब्रह्मव्यतिरिक्तस्य कृत्स्नस्यापि मिथ्यात्वात् ब्रह्मव्यतिरेकेण ज्ञातव्यान्तरं नास्तीत्यत्र तात्पर्यम्, अत एव हि वाचारम्भणमिति दृष्टान्ते सर्वस्य मिथ्यात्वेन ज्ञातता प्रतिपाद्यते इति निरस्तम् । किञ्च यदि ब्रह्मणि ज्ञाते सर्वं ज्ञातं भवतीत्युच्येत, तदा सर्वशब्दस्याशेषपरत्वमङ्गीकृत्य ब्रह्मणि ज्ञाते ज्ञातव्यमशेषं ज्ञातं भवति, इतरस्य मिथ्यात्वेनाज्ञातव्यत्वादिति वक्तुं शक्येतापि, नचैव श्रूयते, अपित्वश्रुतं श्रुतं भवतीति । तत्र ब्रह्मणि श्रुते पूर्वमश्रुतं तदेव ब्रह्म श्रुतं भवतीत्य-सङ्गत्यतया अन्यच्छ्रुतं भवतीत्यर्थः प्रतीयते ।

ननु दृष्टान्ते " सर्वं मृण्मयं विज्ञातं स्या " दित्युक्तेः दार्ष्टान्तिके तद्वि वक्षितमेवेति चेन्न , दृष्टान्तबलात् सर्वत्वलाभे तत्समानार्थत्वाय तद्वत् कृत्स्नस्य तत्कार्यतया तदभिन्नत्वेन ज्ञाततैव विवक्षणीया, न तु कृत्स्नस्याज्ञातव्यता । दृष्टान्ते हि सर्वं मृण्मयं विज्ञातं स्या दित्युच्यते, न हि तत्र कृत्स्नस्य मृण्मयस्याज्ञातत्वं मृत्पिण्डस्य ज्ञातव्यत्वं च विवक्ष्यते ।

एतेन दार्ष्टान्तिक एवासङ्कोचात् सर्वत्वलाभ इति निरस्तम् , तल्लाभेऽपि दृष्टान्तवैघर्म्येण इतरज्ञातव्यत्वविवक्षाया असम्भवादेव । तदसम्भवश्च, जलाहरणाद्युद्देश्यसिद्धये घटस्यैव ज्ञातव्यत्वात् । तदर्थमेव हि मृत्पिण्डस्य ज्ञातव्यता ।

एवं " सदेव सोम्येदमग्र आसी " दित्यत्र विवर्तपक्षे इदङ्ग्रहण वैयर्थ्यम् । स्वरूपोपादानत्वपक्षे ' अग्रे सदेवासीत् तदैक्षत तत्तेजोऽसृजत ' इत्येव पर्याप्तेः । सिद्धान्ते तु इदं ग्रहणाभावे ब्रह्ममात्रस्य पूर्वमवस्थानोक्तौ तस्यैव बहुभवनाभिधाने स्वरूपोपादानत्वशङ्का स्यादिति अस्यैव सूक्ष्मरूपेणावस्थानमुच्यते ' इदं सदासी ' दिति, ईक्षणसहकारादनेन विशिष्टोपादानसिद्धिः । किञ्च नहीदं सदिति सत्यमिथ्यावस्तुनोस्सामानाधिकरण्यव्यपदेशस्सम्भवति । नहि रजतं शुक्ति रासीदिति व्यपदिशन्ति । व्यपदिशन्ति हीदं रजतमिति इति चेत् ? किन्ततः ? स व्यपदेशो भ्रान्तिमूलः । तदभावे च कथं श्रौतो व्यपदेशः । सदेवासीदिदं नासीदित्युक्तावध्याहारः । वृद्धिमिच्छतो मूलतो हानिश्च, उपादानत्वप्रतीतिर्हि मिथ्यात्वं सिसाधयिषितम्, सैवासिद्धा, नहि गेहे देवदत्त एवासीन्नान्य इत्युक्ते देवदत्त इतरेषामुपादानमिति प्रतीयते । अयं घटः पूर्वं मृण्मात्रमासीदितिवदि दमग्रे सन्मात्रमासीदित्युक्तौ हि उपादानत्वं सिध्येत् । तथोक्तौ चानेन वाक्येन सजातीयविजातीयस्वगतभेदनिषेधात् प्रपञ्चमिथ्यात्वसिद्धिरित्येतत् व्याहन्यते । सजातीयादिविशेषशून्यं यदस्ति तदासीदित्युक्तौ न दोष इति चेन्न,—पूर्वं कार्याभावमात्रप्रतिपादनस्यैव कारणत्वप्रतिपादनोपयोगितया मिथ्यात्वप्रतिपादनस्यानुपयोगात् ।

एव " तद्धैक आहु " रित्यादिना कार्यस्य प्रळयकालेऽपि सत्त्वप्रतिपादनेन तार्किकमतनिराकरणेनापि व्याघातः । न च तद्वाक्य शून्यवादिनिराकरणार्थमिति वक्तु शक्यम्, सर्वदा शून्यत्ववादिभिरग्र इति विशेषानभिधानात्, जायत इत्यनभिधानाच्च । अ ोऽनुवादस्यायमर्थ.—इद प्रळयकाले अविद्यमानमेवासीत्, कथं तर्हि सर्गसम्भव इत्याशङ्क्य कर्तृसद्भावमाह एकमेवेति, एकशब्दः प्रधानपरः, ईश्वरो विवक्षित.; घटादिरूपकार्यं इव कर्तापेक्षितः, न च जीवस्य तदानी करणकळेबरादिविधुरस्य कर्तृत्वमुपपद्यते । ततस्तद्वैधुर्यात् कथं सर्ग इत्यत्राह अद्वितीयमिति, कर्त्रन्तरनिरपेक्षमित्यर्थ. । कार्यत्व हि सकर्तृकत्वेन व्याप्तं, न तु द्विकर्तृकत्वेनाप्रयोजकत्वात्, क्वचिद्बहुकर्तृकत्वदर्शनात्तत्प्रसङ्गाच्चेति भावः, सहकार्यपेक्षायामाह असत इति । तस्मादेकशब्दोदितादीश्वरादसतः प्रागभावाच्चेत्यर्थः, कार्योत्पत्तिक्षणे अविद्यमानात् हेतुत्वमात्रविवक्षया पञ्चमी । उत्तरस्याय भावः । कथमिति मृदादेर्विकारादिस्पर्शमात्रदर्शनात् कार्यद्रव्यस्य कारणाभेदात् प्रागभावासिद्धेश्चेति ।

एव " बहुस्या प्रजायेये " ति व्याघातः, अभेदानुपपत्तेरेव । प्रजायेयेति च व्यर्थम् । सिद्धान्ते तु स्वस्य बहुभावसिद्धिद्वारा सर्गसङ्कल्प उच्यते ' प्रजाये ' येति, प्रजनयेयेत्यर्थ. । ' तत्तेजोऽभव ' दिति वक्तव्ये ' तत्तेजो सृजते ' त्यस्वरसम् । सिद्धान्ते तु द्वारसर्गोऽभिधीयते—स्वरूपाभेदभ्रमव्यावृत्तये । एवं ब्रह्मोपादानत्वस्य विशेषणस्य चाभ्यासाद्विशिष्टोपादानत्वतात्पर्य स्पष्टम् । अपागादग्नेरग्नित्वमित्यादिना कार्यमिथ्यात्व प्रतीयत इति चेन्न,— अग्निस्वरूपमङ्गीकृत्याग्नित्वस्यैव निरासात् । तस्मादवयविनिराकरणमिह क्रियते, समुदायातिरेकेणावयविनोऽभावादग्नित्वजातिर्दूरोत्सारितेत्यर्थः ।

" ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मे " त्यनेनापि व्याघातः । कथमैतदात्म्यम् । चेतनाचेतनगतदोषस्य ब्रह्मण्यपि प्रसङ्गादित्यत्र ह ' तत्सत्य ' मिति । तत्र हेतुः ' स आत्म ' ति, शरीरीत्यर्थ. । समभिव्याहारविशेषविधुरस्यात्मशब्दस्य शरीरप्रतिसम्बन्धिन्येव स्वारस्यात् । एव " तत्त्वमसी " त्यनेनापि

व्याघात', शरीरत्वेन विशिष्टोपादानत्वमुपपाद्य कार्यविशेषे तदुपसंहारात् । एवं "ब्रह्मवा इदं" मित्यादिश्रुत्यन्तैररपि व्याघातः ।

संद्विद्यामहावाक्यतात्पर्येणापि व्याहन्यते विवर्तवादः । तथाहि—पुत्रानुकम्पया तस्य मोक्षसाधनज्ञानमुत्पिपादयिषुर्निमित्तोपादानत्वविशिष्टब्रह्मज्ञानस्य मोक्षसाधनत्वम्मन्वानस्तदुपदेशायोद्युक्तोऽर्थगौरवमनुसन्धाय जिज्ञासामुखेनेममर्थमुपदेष्टुं तस्य जिज्ञासोत्पादनाय एकविज्ञानेन सर्वविज्ञानमुपक्षिप्य तस्य जिज्ञासामुत्पाद्य तेन पृष्टस्सन् 'सदेवे' त्यारभ्य षड्भिः खण्डैः कारणत्वमुपदिदेश । पुत्रोऽपि जिज्ञासितमर्थं ज्ञातवान् । पुनर्ज्ञातव्यान्तराभावात् । "तद्धास्य विजज्ञाविति विजिज्ञावि' त्युपसंहृतम् । जिज्ञासानिवृत्तेश्च श्वेतकेतुः पुनर्न पप्रच्छ । अतो निमित्तोपादानत्वविशिष्टब्रह्मज्ञानस्य मोक्षसाधनतया महावाक्यतात्पर्यविषयत्वात्, तद्विरुद्धो विवर्तवादः । उत्तरखण्डानां किं प्रयोजनमिति चेत् ? उक्तार्थस्थिरीकरणमिति ब्रूमः । शिष्यस्य जिज्ञासाविरहेऽपि स्वोत्पादितं ज्ञानं दृढीकर्तुं आचार्यः शिष्यानुकम्पया उक्तमेवार्थं दृष्टान्तादिभिरुपपाद्य उपसञ्जहार । तत्र चेतनोपादानत्वं सद्वारकत्वञ्च द्रढयति, "स्वप्नान्त" मिति । चेतनस्य सुषुप्तौ लयोपपादनात्तस्य प्रळयोत्पत्तिसम्भव उक्तः इति चेतनानुपादानत्वशङ्काव्यावृत्तिमुखे कारणवाक्ये 'इदं' मिति चेतनोऽपि सगृहीत इत्युक्तं भवति । स च लयः सद्वारकावस्थाप्रहाणमेव, न तु द्रव्यस्वरूपनाश इत्यभिप्रायेणाह "यथाशकुनि" रिति । बन्धनं सूत्रबन्धनशाखा, मनो-जीवः, प्राणः-परमात्मा । शकुनिर्निर्व्यापारतया बन्धनं प्राप्य यथा तिष्ठति तथा जीवः स्वव्यापारभूतज्ञानविकासावस्थां विहाय परमात्मानं प्राप्य तिष्ठतीत्यर्थः । चेतनोपादानत्वमेव प्रकारान्तरेणोपपादयति, "अशनाये" ति शरीरस्य सृष्टिवाक्योक्तभूतत्रयात्मकत्वं युक्त्या प्रसाध्य, तद्विशिष्टचेतनोपादानत्वमिह प्रतिपाद्यते । "सदायतना" इति स्थितिरुक्ता, 'सत्प्रतिष्ठा' इति लयः । प्रागुक्तं शरीरस्य भूतत्रयात्मकत्वं स्मारयति 'यथात्वि' ति । त्रिवृत्करणार्थं भागत्रयसम्भावनार्थमन्नमशितमित्यादिनोक्तमिह स्मारितम् । सुषुप्तिवल्लयान्तरमप्याह 'अस्य सोम्ये' ति । तेजःशब्दो जीवपरः, स्वप्रकाश

त्वात्प्रकाशवत्त्वाच्च । ‘ स य ’ इति । ‘ सदेवे ’ त्यत्र यत्सूक्ष्मचिदचिद्विशिष्टं वस्तूक्तं तदेवेदानीं सुषुप्तौ लयस्थानत्वेनोक्तमित्यर्थः । सद्वारकत्वस्पष्टयार्थमाह ‘ ऐतदात्म्य ’ मिति । एष आत्मा यस्य तदैतदात्म्यम्, स्वार्थे ष्यञ् । दोषान्वयप्रसङ्गादिदमनुपपन्नमित्याशङ्क्य स्वरूपाभेदो न विवक्षित इत्यभिप्रायेणाह· ‘ तत्सत्य ’ मिति । हेतु माह ‘ स आत्मे ’ ति । उक्तमुपादानत्व विशेषे उप संहरति, ‘ तत्त्वमसी ’ ति । उक्त सद्वारकावस्थाश्रयत्वेनोपादानत्व नवकृत्वोऽभ्यस्य दृढीक्रियते । यादि स पत्तिमात्र लयः कथ सुप्ता न जानीयुः, शकुनिर्हि जानातीत्य भिप्रायेणाह भूय ’ इति । सुषुप्तिदशाया शरीरविशिष्टस्य न लयः, किन्तुज्ञान विकासावस्थाविशिष्टस्यैवेत्यभिप्रायेणाह, ‘ त इहे ’ ति । शकुनेर्बन्धनादागतस्य तज्ज्ञानदर्शनात् तद्वदिहापिज्ञान स्यादिति शङ्कापि दृष्टान्तेन परिहार्येत्यभिप्रायेणाह ‘ भूय ’ इति । ‘ समुद्रा ’ दिति । मेघैः समुद्रादप उद्धृत्य वर्षणाद्धि नद्यः पूव हन्तीति भावः । इय समुद्रादागता उत्थाने न शरीरसृष्टिरित्यभिप्रायेणाह ‘ त इहे ’ ति । नदीदृष्टान्तेन स्वरूपविकारः प्रतीयत इत्यभिप्रायेणाह ‘ भूय ’ इति । नन्वणिम्नः कथं महत्त्वम्, अतः कार्ये द्रव्यान्तरमेव, तच्च पूर्वमेव कारणे वर्तते सामग्र्या तदभिव्यज्यते, इति ह्येक आहुरित्यभिप्रायेणाह ‘ भूय ’ इति । यदि पूर्वमेव कारणे कार्य स्यात् तदा तत्तत्रोपलभ्येत, नचाभिव्यञ्जकाभावादनभिव्यक्तिः, सामग्र्या व्यञ्जकत्वे तद्विरहे कार्याप्रतीतिप्रसङ्गात्, तस्मादण्वेवावयवान्तरैः सह पृथुकार्यतां भजत इत्यर्थः । यदि परमात्मा कार्यकारणान्तर्गतः, स कथं नोपलभ्यत इत्यत्राह ‘ भूय ’ इति । लवणवत् परमात्मग्रहणे उपायान्तर ब्रूहीत्याह ‘ भूय ’ इति । पूर्वोक्तवाङ्मनस्संपत्तिकालोपपादनाभिप्रायेणाह ‘ भूय ’ इति उक्तार्थस्य सत्यतोपपादनाभिप्रायेणाह ‘ भूय ’ इति । सर्वेषा प्रश्नाना मदीयप्रश्नमनपेक्ष्य स्वप्रान्तरवद्वक्तव्यं स्वयमेव ब्रूहीति वाभिप्रायः । ‘ यथा तत्र न दह्येते ’ ति । येन सत्येन न दह्यते तथैव सत्यमिद विशिष्टोपादानत्व, अतस्तप्तपरशुग्रहणेनापीममर्थं साधयामीत्यभिप्रायः । एवं निमित्तत्व विशिष्टोपादानत्वयोरेव सद्विद्यातात्पर्यावगमात् तद्विरुद्धो विवर्तवादः इति ।

एवं सूत्रव्याघातोऽपि, " तदन्यत्वमारम्भणशब्दादिभ्यः " इत्यनन्यत्व प्रतिपादनात् । तस्य ब्रह्मणः अन्यत्वं न विद्यते यस्मादन्यत्तदनन्यत्, तस्य भावः—अनन्यत्वमिति विवक्षाया इत्वनन्वय·, नामरूपस्पर्शस्य हेतुत्वेनाभिधानात् । न च तस्य मिथ्यात्वे हेतुत्वसम्भवः । " वाचारम्भण " मिति व्यावहारिकत्वमुक्तम् । तदेवात्र सूत्रे आरम्भणशब्दविवक्षितमिति चेन्न;–'वाचारम्भण' मित्यस्य एतदर्थपरत्वस्या " रम्भणशब्दादिभ्य " इत्यनेनैव निरासात् । न हि वाचारम्भणशब्दादिभ्य इत्युक्तम् ।

एवं श्रुतिव्याघातादेव माध्वाश्च ध्वस्ताः । अयं हि माध्वानां भ्रमः, जगन्निमित्तमेव ब्रह्म, नोपादानमपि , परिणामित्व ह्युपादानत्वम्, तच्च निर्विकारत्वश्रुतिविरुद्धम् ; न च चिदचिद्विशिष्टस्य जगदुपादानत्व, विशिष्टस्य विशेषण विशेष्याभ्या मनन्यत्वेन विशेष्यस्योभयोर्वोपादानत्वविवक्षायामुक्त एव दोषः, विशेषणोपादानत्वोक्तिर्ब्रह्मणोऽनुपादानत्वपर्यवसायिनी ; तस्मान्निमित्तमेव ब्रह्मेति । श्रुत्या विशिष्टोपादानत्वप्रतिपादनादेव ते निरस्ताः । मृद्रूपं कारण त्रिवृत्करणोपदेशात् भूतत्रयात्मकम्, तथा तत एव घटोऽपि भूतत्रयात्मकः, ततश्च विशिष्टमेव कारणम्, विशिष्टमेव कार्यं, तत्राप्यंशभेदनिरूपणे कार्यगततत्तद्भूतांशे कारण गततत्तद्भूतांशः कारणम्, एवमिहापि चिदचिद्ब्रह्मसवलित कारणं कार्यमपि, तथा अंशभेदनिरूपणे तत्तदंशे तत्तदंशः कारणम् । अचितः कार्यत्वमवस्थाद्वारकम्, द्रव्यस्य नित्यत्वात्, चिद्ब्रह्मणोः कार्यत्व सद्वारकावस्थाद्वारकम् । सम्भवति च द्वारस्याव्यवधायकत्व, कारणत्ववत् । दृश्यते चाश्रयत्वेऽपि द्वारस्याव्यवधायकत्वम्, खट्वाया शयितेऽपि प्रासादे शेत इत्यत्र, घट वहत्यप्युदक वहती त्यत्र च । उदकानाश्रयत्वे हि घटवहनाच्छ्रमाधिक्य नोपलभ्येत, गुरुद्रव्याश्रयतायाः श्रमहेतुत्वस्य क्लृप्तत्वात् , ततोऽन्यस्य स जलकुम्भवहनस्यापि प्रयोजकत्व मनुपपन्नम् । " काठिन्यवान्यो बिभर्ती " त्यादिकमपि दृश्यते । नचैव भूतलस्य घटगतरूप श्रयत्वप्रसङ्गः, अपृथक्सिद्धस्य स्वापृथक्सिद्ध प्रति पृथक् सिद्धस्य स्वपृथक् सिद्ध प्रति च द्वारत्वात् । ब्रह्मणि सद्वारकावस्थान्वये ' बहुस्या ' मित्यादि प्रमाण

सद्रूपमुपलभ्यते । अन्यत्रादर्शनेऽपि श्रुतिबलादेव सद्वारकाश्रयत्वमङ्गीकर्तुं शक्यम्, किं पुनस्तद्दर्शने । द्वारसापेक्षत्वाच्च न निर्विकारत्वश्रुतिविरोधः । निषेधो हि यथा प्रसक्ति, प्रसक्तिश्च यथान्यत्रदर्शनम, अचेतने च विकारः साक्षादेव दृष्टः, तथैवेह प्रसक्तो निषिध्यते । यथा भूतले घटो नास्तीत्यत्र संयोगसम्बन्धेन प्रसक्तेः तथैव निषेधः, न सम्बन्धान्तरेण । नच साक्षात्वविवक्षाया लक्षणा, अधिकरणप्रतियोग्यभावपदेषु कस्यापि लक्षणाविरहात् । घटघटत्वयोः प्रतियोगित्वप्रतियोगितावच्छेदकत्ववदवच्छेदकीभूतस्य ससर्गस्यापि वाक्येनैव भानात् । एवं चेतनगत दोषान्वयनिषेधेऽपि द्रष्टव्यम् । एवञ्च श्रुतिसिद्धोपादानत्वनिरासे श्रुतिविद्वेष एव निमित्तम् । श्रुतिहृदयविसवाद्यर्थस्य श्रुत्यर्थतया कीर्तनादपि श्रुतिविद्वेषः सिद्धः । तथाहि— एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सादृश्यप्राधान्यनिबन्धना, सादृश्यनिबन्धनत्वे दृष्टान्तत्रय वाचारम्भणमित्युक्तम् , तदनुपपन्नम् । तज्ज्ञानस्य तत्सदृश ज्ञाने कथं हेतुत्वम् ? सर्वेषा सर्वज्ञत्वप्रसङ्गात् तत्सदृशमिति ज्ञाने हेतुत्व तु सर्व साधारणत्वान्न ब्रह्मासाधारणमिति तमप्राक्ष्यः येनाश्रुतमिति निर्देशानुपपत्तिः । दृष्टान्तवैधर्म्य च । दार्ष्टान्तिके हि प्रमेयत्वादिना यथाकथञ्चित्सदृशत्वेन ज्ञानं विवक्षितम्, तत्र किमर्थं तत्कार्यस्य दृष्टान्तत्रयोपादानम्, विशेषोपादानस्य प्रयोजनाभावात् । किञ्च सादृश्ये किमर्थो निर्बन्धः ? ततोऽपि तद्विसदृशत्वेन ज्ञातं भवतीत्येव वक्तु युक्तम्, ब्रह्मापेक्षया कृत्स्नस्यात्यन्तविसदृशत्वात्, तत्प्रतियोगित्वस्य कथञ्चिद्ब्रह्मासाधारण्यसम्भवात् । ततोऽपि तज्जन्यत्वेन ज्ञात भवतीत्येत द्वरम्, दृष्टान्तस्वारस्यात् । प्राधान्यात् ज्ञानमित्यनुपपन्नम् । इतरज्ज्ञातप्रायम्, तज्ज्ञानफलस्यैतज्ज्ञानेनैव सिद्धत्वादिति ह्यर्थः, तथा च लक्षणा ' वाचारम्भण ' मित्यस्यादृष्टान्तत्वाच्च ।

ननु वाचा वागिन्द्रियेणारम्भण—उत्पादन यस्य साकेतिकस्य भाषाशब्दस्य तन्नामधेयं विकारः, कर्मणि घञ् विकृतम्, सस्कृतापभ्रंशरूपेण विक्रियमाणत्वात् । ' वाङ्ग्ये ', त्याकारान्त', ' मृत्तिके ' त्यादि, सस्कृतनामधेयन्तु सत्य नित्य अतस्संस्कृतस्य नित्यत्वात् सार्वत्रिक. प्रयोगः, भाषाया विकारत्वात्

काचित्कः, अतो व्यापकत्वात् संस्कृतस्य भाषाविशेषेण यत्फल देशविशेषे व्यवहार लक्षणं तत्संस्कृतज्ञानेन भवति तथेहापि ब्रह्मज्ञानेन इतरज्ञानकार्यं भवतीत्यर्थ इति चेन्न;– संस्कृतस्यैव काचित्कत्वात् । सम्यगधीतव्याकरणानामेव संस्कृतप्रयोगसामर्थ्यात् । अन्यथा ह्यपभ्रंश एव स्यात् । यथेति पदाभावेन दृष्टान्तत्व चानुपपन्नम् । न च ' यथासोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या ' दित्यनुषज्यते, तस्योपपादक ' वाचारम्भण ' मितीति वाच्यम् , अनुषङ्गस्यैव दोषत्वात् । अनुषङ्गेऽपि पिण्डमणिपदानन्वयाच्च । नखनिकृन्तनेन कार्ष्णायसमित्येतदत्यन्तासङ्गतम् । तस्मात् श्रुत्यैव सर्वे वादिनो निरस्ताः ।

श्रुत्यैवैव समस्ताश्च निरस्ताः प्रतिवादिनः ।
तथैव हृदय सम्यक् बोधिता मम देशिकाः ॥

एवं मध्वमते सूत्रव्याघातेऽपि स्पष्टः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यपरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्याया चण्डमारुताख्याया
ब्रह्मोपादानत्वान्यथानुपपत्तिर्नाम
त्रिपञ्चाशः स्कन्ध ॥५३॥



॥ श्रीरस्तु ॥

## ॥ चतु पचाशोवाद ॥



यत्प्रपत्तिं विना सर्वैर्यस्य माया दुरत्यया ।
धनञ्जयरथोत्तसं तत्प्रपद्ये परं महः ॥

यदुच्यते—"माया तु प्रकृति विद्या" दिति विश्वस्य मायोपादानकत्वश्रवणात्, मायाशब्दस्य च मिथ्यार्थत्वात् मिथ्योपादानकस्य च सत्यत्वायोगाद्विश्वमिथ्यात्व सिद्धमिति । तदपि स्तनन्धयकथितम् । तत्र तावत् श्रुतौ वचनव्यक्तिर्विपर्यासिता । न हि तत्र प्रकृत्यनुवादेन मिथ्यात्व विधीयते, अपि तु मायानुवादेन प्रकृतित्वम् । तु शब्दोपि तस्यैवानुकूलः । पूर्वस्मिन्वाक्ये 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः,' इति प्रसक्तयोर्मायामायिशब्दयोरर्थमविदुषस्तज्ज्ञानोपजननायैव हि "माया तु प्रकृतिं विद्यान्मायिन तु महेश्वर" मित्युच्यते । अतो मायेत्युक्ता सा जगदुपादानतयोपनिषत्प्रसिद्धा प्रकृतिरेव। यश्च मायीति निर्दिष्ट स च प्रकृत्यधिष्ठाता चिदचिच्छरीरको महेश्वर एवेति वचनव्यक्तिः ।

---

यत्प्रपत्तिं विनेति । अनेन भगवत्प्रसादैकनिवर्त्यतया ज्ञाननिवर्त्यत्वाभावप्रतीतेर्जगदुपादानस्य मिथ्यात्वाभावसिद्ध्या वादार्थस्संगृहीत । मायान्त्विति । प्रकृतिशब्देन जगदुपादान निर्दिश्य तस्य मायाशब्देन मिथ्यात्वं विधीयत इति भावः । विपर्यासितेति । त्वयेति शेष. । तुशब्द इति । तुशब्दो यच्छब्दवदुद्देश्यत्वसूचक इति भावः । मायानुवादेन प्रकृतित्व किमर्थं विधीयत इत्यत आह पूर्वस्मिन्निति । इति वचनेति । इत्यर्थप्रतिपादिका वचनव्यक्तिरित्यर्थः ।

स्ववाक्येपि यच्छब्दाद्यभावेपि प्रथमचरमभावेनोद्देश्योपादेयव्यवस्था सिद्धा । तथा ह्याहु —" यद्वृत्त(च्छब्द)योगः प्राथम्यमित्याद्युद्देश्यलक्षण " मिति । अस्त्वेव वचनव्यक्तिः, तथापि प्रकृतेर्मायाशब्दवाच्यत्वसिद्धेर्मिथ्यात्वमपि सिध्यतीति चेन्न,—मायाशब्दस्य मिथ्यार्थपरत्वेऽप्युपचारतोपि तत्र तत्प्रयोगसम्भवेन वाच्यतानिर्णयासिद्धेः । न हि प्रकृतेर्मायाशब्दवाच्येति श्रुत्यर्थः, अपि तु अत्र मायाशब्देन प्रकृतिर्विवक्षितेति । तथापि मुख्यार्थे बाधकाभावादुपचारवृत्तिरत्रानुचितेति चेत् ? न, प्रकृतित्वान्यथानुपपत्त्यैव बाधात् । कारणसत्यत्वं बहुशो मृद्दृष्टान्तादिभिर्निदर्शितम् । " अचेतनापरार्था च नि

---

यच्छब्दाद्यभावेऽपी ति । तुशब्दाभावोऽभ्युपगत । मिथ्यार्थ मिथ्यात्व प्रवृत्तान भित्तमि त भाव. । अपी त्यभ्युपगमस्य मायाश ब्दार्थ इति भावः । तत्र प्रकृतौ । मायाशब्देने ति । मायाशब्दे प्रकृतिरिति योजना ।

ननु मायाशब्देन, मायाशब्दविवक्षितत्वोक्तौ लक्षणं स्यात् विपर्यास एवेति चेन्न,—अनुवादतात्पर्ये अवगते वाक्यतात्पर्यानुसारेण अदोषत्वात् ।

ननु मा भूद्विपर्यास , नापि लक्षणा, मायाशब्दमुख्यार्थोद्देशेन प्रकृतिः विधीयतामिति चेन्न,—पदव्याख्यानरूपताया ' विद्या ' दिति पदस्वारस्यसिद्धत्वात् । अस्त्वेव व्याख्यानरूपता, अथापि मायाशब्दो मुख्यवृत्त्यैव प्रकृतौ वर्तते, मुख्यार्थश्च मिथ्यैवेति शङ्कते तथापी ति । अनिर्वचनीयनिरासाभिप्रायेण वा शुक्तिरजतादेरुपादानत्वाभिप्रायेण वाह प्रकृतित्वे ति । तदभ्युपगमेन प्याह कारणे ति । मृद्दृष्टान्तेन कार्यकारणयोरभेदः प्रतीयते, एवञ्चेदमर्थः सदभेदः प्रकृतेर्विशेषणतया सच्छब्दवाच्यत्व एव सम्भवति, न च सच्छब्द बाधो युक्त इति भावः । निदर्शित मि ति । निदर्शनेन समर्थितमित्यर्थः । ' मृत्तिकेत्येव सत्य ' मित्यादेः कारणसत्यत्वप्रतिपादनपरत्वं हि [illegible]

विक्रिया ।" "गौरनाद्यन्तवती सा जनित्री भूतभाविनी" इत्यादिभिः प्रकृतिनित्यत्वसिद्धेश्च तन्मिथ्यात्वं निरस्तम् । सत्यत्वेपि केन मिथ्यात्वोपचारः किमर्थश्चेति चेत् ? अस्थिरतरभोगप्रसाधकत्वेन स्वप्नार्थतुल्यतया जिहासिततत्त्वज्ञापनार्थं इति मन्वीथाः । न च मायाशब्दो मिथ्यार्थवाची, विचित्रसृष्ट्युपकरणभूतार्थाभिधायित्वात् । सर्वप्रयोगानुगतनिमित्तसम्भवे नानारूपार्थोपादानस्य निरस्तत्वात् । न च मिथ्यार्थेष्वेव तत्प्रयोग येन तत्रैव तच्छक्तिः कल्प्येत, अपि तु सत्येष्वपि यथा—"यावन्तः पांसवो भूमेः सङ्ख्याता देवमायये" ति । न हि

---

मिथ्यात्ववर्णनमित्यर्थः । गौरि त्यादि । मिथ्यात्वे ज्ञाननिवर्त्यत्वं । केने ति । उपचारनिमित्तगुणविशेषप्रश्नः । अस्थिरतरभोग ग. । मायाशब्दस्य मिथ्यार्थवाचित्वमभ्युपगम्योक्तम् । इदानीं नचे ति । मिथ्यात्व न प्रवृत्तिनिमित्त, किन्तु विचित्रसृष्ट्युपकरण 'तस्मा उक्थ्यमेव प्रायच्छत् , त न्निर्मायमभूत्, महान् यज्ञो हि त्, ' इति यज्ञे मायाशब्दः प्रयुक्त , स च न मिथ्यार्थः, यज्ञस्य द्धेः, मिथ्यात्व च न सप्रतिसम्बन्धिकम्, अतः 'तस्य मायासी' त्रसृष्ट्युपकरणत्वेन यज्ञस्यावस्थानमेव वाच्यमिति भावः । क्वचित्तत्प्र त्रकत्वेन प्रयोग., क्वचित्तु तत्पुरस्कारेणैव लक्षणया गौण्यावा, एवमनुगमो विवक्षित', एतच्चोत्तरत्र स्पष्टीभविष्यति ।

ननु ऐन्द्रजालिके गजे मायागज इति प्रयुज्यते, तस्य गजस्य मिथ्यात्वात्तत्र च मायाशब्दप्रयोगात् मिथ्यात्वमप्यर्थस्स्यादित्यत्राह सर्वप्रयोगे ति ।

नन्वनुगतप्रवृत्तिनिमित्त न कल्पनीयं ।ाशब्दस्य सत्ये प्रयोगाभावात् मिथ्यार्थ एव हि मायाशब्द प्रयुज्यत इत्यत्राह नचे ति । यद्येवं कञ्चित्प्रयोग श्रित्य प्रयोगान्तर निह्नूयते, तर्हि सत्ये प्रयोगमाश्रित्य मिथ्याप्रयोग एव निह्नूय ने प्रतिबन्द्यभिप्रायेणाह अपि तु सत्येष्वेवे ति । स्यादेवम्प्रतिबन्दी, यदि स्यत्राह यथे ति ।

मिथ्याभूतस्य कस्यचित्संख्यानकरणत्वं प्रतीमः । "माया वयुनं ज्ञान" मिति नैघण्टुकानुसारात् अर्थौचित्याच्च ज्ञानविषयत्वमेव तत्रोचितम् । तथा " मायया सततं वेत्ति प्राणिनां तु शुभाशुभ " मिति च । तथा " तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षता देहमेकैकं श्येन सूदित " मिति । न हि मिथ्याभूतस्य कस्यचिच्छस्त्रच्छेद्यत्वं, अपि तु तत्वोपदेशादेव तन्निवृत्तिः । तथाप्यनेकशक्तिकल्पनाया गौर- वात्तत्रौपचारिकोऽयं प्रयोग इति चेन्न,—विपर्यासस्य दुर्वारत्वात् । प्रसिद्धिप्रकर्षान्मिथ्यात्वे[र्थे] शक्तिरङ्गीक्रियत इति चेन्न;—मिथ्यापर्याय- त्वेन मायाशब्दस्य प्रसिद्धेरेवाभावात् । न हि स्वदृग्दोषादिमात्रमूलभ्रम विषयेषु शुक्तिरजतरज्जुसर्पादिषु मिथ्याशब्दप्रयोगविषयेष्वपि क्वचित् कदाचिदपि मायाशब्दप्रयोगो दृष्टचरः । अतो यत्रेन्द्रजालादिमूलभ्रा- न्तिविषयेषु मायाशब्दप्रयोगः तत्रापि मिथ्यात्वमन्तरेण निबन्धनान्तर मस्तीति निश्चीयते । तच्च किमिति निरूप्यमाणेप्यैन्द्रजालिकवदिन्द्राजि त्वादौ मायाविशब्दप्रयोगात् तत्र चालीकत्वस्याविवक्षितत्वात्

---

ननु न वयं प्रयोगं निह्नुमहे, अपित्वनेकशक्तिकल्पनागौरवभयेन अनुगतप्रवृत्तिनिमित्तं न कल्पनीयं किन्तु मिथ्यात्वमेव प्रवृत्तिनिमित्तं सत्ये प्रयोग औपचारिक इत्येव वक्तव्यमिति गूढाभिसन्धिश्शङ्कते तथापी ति । विपर्यासस्ये ति । प्रतिबन्दीमात्रेणापि मिथ्यार्थकत्वनिश्चयप्रतिबन्धात् पूर्वपक्ष्यभिमतान्यथानुप- पत्तिर्न सिध्यतीति भावः । अभिसन्धिमुद्घाट्यश्चोदयति प्रसिद्धी ति । मिथ्यात्वं प्रवृत्तिनिमित्ततया विवक्षितम् । प्रसिद्धेरेवे ति । प्रसिद्धिरेव नास्ति, कुतः प्रकर्ष इत्येवकाराभिप्रायः । प्रसिध्यभावमुपपादयति नही ति । स्वदृक्दोषे ति । ऐन्द्र जालिकव्यावृत्तिः । नन्वैन्द्रजालिके मिथ्यात्वे प्रसिद्धिरस्त्येवेत्यत्राह अतो यत्रे ति । शुक्तिरजतादिषु मिथ्यात्वे सत्यपि प्रयोगाभावात् अन्यत्र प्रयोगे न तन्निब- न्धनं किन्त्वन्यदेवेत्यर्थः । अलीकत्वस्ये ति । परमते मिथ्यात्वे सत्यपि लौकि-

सत्यस्य वाऽसत्यस्य वा विचित्रार्थस्य सृष्टौ प्रकाशने वा सामर्थ्यवानित्येव मायाविशब्दार्थः, तच्च सामर्थ्यं सत्यो मन्त्रौषधादिरेव, तदनुबन्ध्यतीन्द्रियशक्तिविशेषो वा ततश्च मायाजन्यज्ञानविषयतया मिथ्याभूतेष्वप्यर्थेषु लक्षणया मायाशब्दप्रयोग उपपद्यते ।

मायोत्थज्ञानवेद्यर्थे युक्ता मायेति लक्षणा ।
मिथ्यासम्बन्धरहिते नास्त्रादौ सत्यकारणे ॥

न हि पर्वतसमुद्रपावकादिहेतुष्वस्त्रविशेषेषु, मिथ्यासम्बन्धगन्धरहितेषु मायाशब्दोपचारस्सम्भवति । मिथ्यार्थसादृश्यात् तत्र गौणोऽयं प्रयोग इति चेन्न,—विपरिवर्तप्रसङ्गस्य प्रागेवोक्तत्वात् । लक्षणापेक्षया गौणवृत्तेर्जघन्यत्वाच्च । मुख्यलक्षणावृत्तिभ्यां प्रयोगनिर्वाहे सम्भवति मुख्यगौणवृत्तिभ्यां निर्वाहस्यानुचितत्वात् । अतो विचित्रसृष्ट्युपकरणभूतार्थविशेष एव मायाशब्दशक्तिः ।

---

कैस्तदज्ञानात् मिथ्यात्वस्य साधारणत्वाच्चेति भावः । सत्यस्य वाऽसत्यस्येवे ति । सत्यासत्याभ्यां याथासङ्ख्येन सृष्टिप्रकाशनयोरन्वयो न विवक्षितः, प्रवृत्तिनिमित्तद्वित्वप्रसङ्गात् , किन्तु उभयोरुभयत्राप्यन्वयः । सत्यस्य वाऽसत्यस्य वा सर्गे सामर्थ्यवानिति परमते, सत्यस्यासत्यस्य वा प्रकाशेन सामर्थ्यवानिति सर्वसाधारणम् , क्वचित्प्रकाशने सामर्थ्यमर्थसृष्टिद्वारा; यद्वा याथासङ्ख्येनैवान्वयः, विचित्रसर्गकरत्वविचित्रप्रकाशकत्वान्यतरसामर्थ्यं प्रवृत्तिनिमित्ततया विवक्षितम् । तस्मात् सामर्थ्यविशेषो मायाशब्दप्रवृत्तिनिमित्तमिति भावः । किञ्च मायाशब्दस्य मिथ्यार्थकत्वे शस्त्रादौ प्रयोगोऽनुपपन्न इत्याह मन्त्रौऽषधे ति । मिथ्यासम्बन्धराहित्येहेतुः सत्यकारण इति । सत्यस्य कारणम् । नही ति । समुद्रशब्दो महाजलपरः । लक्षणापेक्षये ति । 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणते' ति वार्तिकेन मुख्यलाक्षणिकाभ्या उभाभ्या व्यवधानोक्तेः । लक्षणाया मुख्यव्यवधानमात्रमेव मुख्यगौणवृत्तिभ्या मिति उपलक्षणम् । ऐन्द्रजालिकमन्त्रादौ मिथ्यार्थसम्बन्धा-

नन्वेवमपि सर्वप्रयोगानुगत निमित्त न सिध्यति, 'मेघोदय स्सागरसन्निवृत्ति' ' इत्यारभ्य विष्णोर्विचित्राः प्रभवन्ति माया ' इति प्रयुज्यते, तथा देवमायेव निर्मिता ' सख्याता देवमायया ' ' मायया सततं वेत्ती ' त्यादिषु निर्दिष्टनिमित्तासिद्धेरिति चेन्न ?—आद्ययोर्माया कार्यतया लक्षणयापि प्रयोगोपपत्ते. । मुख्यत्वेऽपि तत्र न दोषः, मेघो दयादीनामपि विचित्रवर्षादिस्रष्टुरीश्वरस्य तत्तत्सृष्ट्युपकरणत्वाविशेषात् । ' देवमायेव निर्मिते ' त्यत्रापि स्त्रीरूपेण परिणता देवानां मायेत्यर्थ. । न चात्र कस्यचिदपि शब्दस्य लक्षणा, अभूतोपमामात्रस्य विवक्षितत्वात् । ' संख्याता देवमायये ' त्यत्र तु निखण्ड्वनुसारादौचित्याच्च ज्ञानमेव विवक्षितम् । तथापि घटज्ञानमित्यादिषु घटमायेति प्रयोगादर्शनादाश्च र्यावहत्वमात्रेण तत्र मायात्वोक्ति. । नैघण्डुकाश्च शक्तिविषयमनादृत्य

लक्षणासम्भवात् । स्त्रीरूपेणे ति । निर्मिता देवाना विचित्रसर्गशक्तिरिव स्थिती त्यर्थः । मात्रेणे ति । गुणवृत्तिरेव न मुख्यवृत्ति , अतो नानेकार्थत्वमिति भाव ।

ननु भवद्भिरपि गौणवृत्त्या निर्वाहस्य स्वीकारात् कथ गौणवृत्या निर्वाहः परस्य दोषतयोद्घाटित इति चेन्न,—गत्यन्तराभावेनात्र गौणी वृत्तिरुभाभ्याम ङ्गीकार्या, तथा च यत्र मुख्यलक्षणाभ्यामेव निर्वाहस्सुकरः, तत्रापि त्वया गौणवृत्ति रङ्गीकार्या, इति वैषम्यस्याभिप्रेतत्वात् ।

एतेनेदं निरस्तम् । मिथ्यापरिणाम्यज्ञान मायाशब्दार्थ., ऐन्द्रजालिकग जतुरगादौ मायाशब्दप्रयोगो मृद्घट इति वत्तादात्म्यात्, ऐन्द्रजालिकमणिमन्त्रादौ मायाशब्दप्रयोगो मायाक्षोभकत्वाल्लक्षणया, अस्त्रादौ अघटित कार्यजनकत्वगुणयोगात्, एकत्रैवाज्ञाने साधारणभ्रमानुकूलशक्तिनिमित्तको मायाश ब्दप्रयोगः, तेन ऐन्द्रजालिके मायाविशब्दः असाधारणभ्रमानुकूलशक्तिनिमित्त', तत्रै वाज्ञानशब्दः, तेन शुक्तिरजतादौ न मायाशब्दप्रयोग इति । इन्द्रजिदस्त्रादौ गौ णवृत्त्यङ्गीकारात् तत्कार्ये सत्यपर्वतपावकादौ कथञ्चिदपि प्रयोगासम्भवात्, शुक्ति- रजते मायाशब्दप्रयोगप्रसङ्गाच्च ॥

प्रयोगविषयमात्रं संगृह्णन्तीति बहुलमुपलभ्यते । सम्भवति चास्मदुक्तं मुख्यनिमित्तमत्रापि, इतराशक्याश्चर्यतरभूमिपांसुसख्यानसर्वप्राणिशुभाशुभविवेकादिहेतुत्वात् । अस्तु वा ज्ञानपर्यायत्वं क्वचिन्मायाशब्दस्य, तथापि तद्व्यतिरिक्तविषयेषु पूर्वोक्तमेव निमित्तम् । न हि गत्यभावात् क्वचिच्छक्तिभेदकल्पनेत्यत्रापि तथा क्लृप्तिः, गौर्वाहीक इत्यत्रापि शक्त्यन्तरक्लृप्तिप्रसङ्गात् । किञ्च मिथ्यारूपमायोपादानत्वेपि तदुत्पन्न

---

ननु साधारणभ्रमानुकूलशक्तिनिमित्तकत्वात् मायाशब्दस्य न तत्र मायाशब्दप्रयोग इति चेन्न,-एवमपि कारणताद्रात्म्यप्रयुक्तप्रयोगस्यानिवार्यत्वात् । न च साधारणभ्रमजनकत्वशक्तियोगोऽज्ञानशब्दप्रवृत्तिनिमित्तम्, ज्ञाननिवर्त्यत्वस्य तन्निमित्तत्वोक्तिविरोधात् । न च साधारणभ्रमानुकूलशक्तियोगो मायाशब्दप्रवृत्ति निमित्त, मन्त्रादिसाधारणतया तत्र गौणवृत्त्युक्तिविरोधात् । न च भ्रमपरिणामित्व विवक्षितमिति वाच्यम्, अस्मादौ त्वयोक्ताघटितकार्यजनकत्वस्यैव लाघवेन माया शब्दप्रवृत्तिनिमित्तत्वसम्भवात् । इदमेव च प्रागुक्त विचित्रकार्यजनकत्व मन्त्रौष धाद्यतिरिक्तस्य त्वदभिमतस्य परिणामिनोऽज्ञानात न तत्र लोके मायाशब्दप्रयोगसम्भव. । एतेन मायाक्षोभकत्व मन्त्रादौ प्रयोगनिमित्तमित्यपि निरस्तम् । 'यज्ञो हि तस्य मायासी' दिति सप्रतिसम्बन्धित्वप्रतीतेश्च । विचित्रसृष्ट्युपकरणमर्थः । बहुल मिति । 'अध्वर्यूद्गातृहोतारो यजुस्सामर्ग्विदः क्रमात् ।' इत्यमरकोशे तत्तद्वेदोक्तकार्यकारिषु चतुर्षु चतुर्षु अध्वर्य्वादयः शब्दा अभिधानतयोक्ताः पूर्वतन्त्रे 'उद्गातृणा चमसभक्ष' इत्यत्र उद्गातृशब्द एकत्रैव मुख्य', उद्गातृ प्रस्तोतृप्रतिहर्तृसुब्रह्मण्येषु प्रवचनान्वयाद्रूढिपूर्वकलक्षणेत्युक्तम् । एवमध्वर्य्वादिष्वपि । तथा 'दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथ' गिति दर्शपूर्णमासशब्दौ कर्माभिधानतयोक्तौ, पूर्वतन्त्रे दर्शपूर्णमासशब्दाभ्या काल्युक्तकर्मलक्षणे त्युक्तम्, तथा पृषदाज्यशब्द. नामतया नामपाठे उक्त', पूर्वतन्त्रे पृषच्छब्दाश्रित तांवाची, दध्ना चित्रितत्वात् सदध्याज्यं योगवृत्त्या पृषदाज्यमित्युच्यत इत्युक्तम् । एव कल्पकासिद्धिरुक्ता । इदानी कल्पकत्वासिद्धिमाह । किंचे ति । उपादानत्वे ति ।

मात्रस्य प्रपञ्चस्य मिथ्यात्व न सिध्यति, 'न विलक्षणाधिकरण' न्यायेन विलक्षणादपि विलक्षणकार्योत्पत्तिसम्भवात् । असत्यात्सत्योत्पत्ते र्युष्माभिरेव स्वीकारात् । असत्यस्य सत्यनिमित्तत्वमात्रमुदाहियते, न तु सत्योपादानत्वमिति चेन्न,—तुल्यन्यायत्वात् । नह्यस्ति राजशासन मिथ्याभूतेन निमित्तेनैव भाव्य न तूपादानेनेति । उपादानोपादेययोस्तादात्म्यादुपादानस्य मिथ्यात्वे कार्यस्य सत्यत्वे च सत्यमिथ्यार्थयोरैकताप्रसक्तिरिति चेन्न,—उपादानत्वोपादेयत्वादिवत्सत्यत्वमिथ्यात्वयोः क्रमेणा विरोधात् । नन्वेकस्य पूर्वापरीभूतावस्थाभेदवत्त्वमुपपन्नम्, एतावता कथं स्वरूपतो मिथ्याभूतमुत्तरस्मिन् काले सत्यं भवेदिति चेन्न,—पूर्वस्मिन् काले स्वरूपेणासत एव द्रव्यस्यावस्थाविशेषस्येवोत्तरकाले सत्त्ववदविरोधात् । तयोरुत्तरकालवर्तित्वेन सत्त्वं पूर्वकालेप्यस्तीति चेन्न,—तस्य तत्कालेपि प्रामाणिकत्वमात्रस्यात्रापि समानत्वात् । तत्कालसंसर्गावि वक्षायां विरोधात्। अत उपादानमिथ्यात्वे श्रुतिसिद्धेपि न कार्यमिथ्यात्व

---

उपादान त्वोपादेयत्वप्रयोजकधर्मवदित्यर्थः । उपादानत्वप्रयोजको धर्मः पिण्डावस्था उपादेयत्वप्रयोजको धर्मो घटावस्था । पूर्वस्मिन्काल इति । अत्र सत्वशब्देन मिथ्यार्थनिष्ठतया परैरुक्तं विद्यमानत्व विवक्षितम् । कार्यस्य पूर्वं सत्वे कार्यत्वानुपपत्तेः असत्त्वे च सत्वासत्वयोर्व्याघातेनानन्तर सत्वानुपपत्तेश्च कार्यं मिथ्या, मिथ्यात्वे च व्याघाताभावात् पूर्वमसतोपि अनन्तर विद्यमानत्वं युज्यत इति हि परैरुच्यते । एव चासत्त्वमिथ्यात्वयोरिव सत्व मिथ्यात्वयोरपि न व्याघात., अन्यथाऽसत्त्वमिथ्यात्वयोरपि व्याघातप्रसङ्गात् , किञ्च कार्यकारणयोर्भेद. परैरङ्गीकृत एव, ततश्चभेदाभेदसत्यत्वमिथ्यात्वाभ्या मिथ्यार्थस्य सत्योपादानत्वमुपपद्यत एवेति भावः । तत्कालेपि प्रामाणिकत्वे ति । तद्गोचरप्रमाणस्य तत्कालीनत्वं विवक्षितम् । यद्येव मिथ्यार्थस्य सत्योपादानत्वसम्भव , तर्हि 'असद्वा इदमग्र आसीत्ततो वै सदजाय' तेति श्रुत्यनुसारात् । मिथ्यार्थस्य सत्योपादानत्वं भवद्भिः कुतो नेष्यत इत्यत्राह उपादाने ति । दृष्टान्तेन उपादानोपादेययोरैक्यप्रतिपाद

सिद्धिः । उपादानसत्यत्वमेव च सद्विद्यादिष्वसत्कार्यवादनिरासपूर्वकं 'मृत्तिकेत्येवसत्य' मिति 'सन्मूलास्सोम्येमा' इत्यादिभिरभिधीयते । एवमुपादानमिथ्यात्वेपि कार्यसत्यत्वाविरोधोपपादनन्यायेन कार्यमिथ्यात्वेप्युपादानसत्यत्वाविरोधोऽप्युपपादित एवेति मिथ्याभूतस्य मिथ्याभूतमेवोपादानं भवितुमर्हतीत्यनिर्वचनीयाज्ञानकल्पनमपि निरस्तमिति ॥

इति शतदूषण्यां मायोपादानत्वान्यथानुपपत्तिभङ्गः

॥ चतुःपञ्चाशो वादः ॥

---

नात् उपादानस्य सत्यत्वकण्ठोक्तेश्च सत्यस्यैवोपादानत्वम् । असद्वेत्यत्र स्थूलावस्थाभावो विवक्षित इति भावः । प्रसङ्गादाह एवमिति ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां मायोपादानत्वान्यथानुपपत्तिर्नाम चतुःपञ्चाशः स्कन्धः ॥५४॥



॥ श्रीरस्तु ॥

॥ पंचपंचाशो वादः ॥



बालः क्रीडनकैरिव स्थिरचरैः स्वेनैव निर्वर्तितै
स्सङ्कल्पैकवंशवदो विहरति ब्रह्मादिभिर्जन्तुभिः ।
जिज्ञास्याय मुमुक्षतामिह पुनः प्राप्याय मुक्तात्मनां
लक्ष्मीकौस्तुभलक्ष्मणे नम इदं तस्मै परब्रह्मणे ॥

यदाहुः—प्रत्यक्षसिद्धं श्रुत्यादिसिद्धं च सर्वं कार्यं मिथ्यैव, विकल्पासहत्वात् । तथाहि—किं कारणेन कार्यं सम्बद्धमारभ्यते, उतासम्बद्धम्? आद्ये सम्बन्धाश्रयतया द्वयोरपि सत्त्वाविशेषात्सव्येतरविषाणयोरिव किं कस्य कारणं कार्यं वा? असम्बद्धत्वे तु असम्बन्धाविशेषात्

---

बालः क्रीडनकैरिति । स्वेनैवेति । कार्यानुपपत्तिपरिहारस्य विवक्षितत्वात्, निर्वर्तितैरिति । विवर्तव्यावृत्ते, संकल्पैकवशंवद इति पराभिमताविद्यावशत्वाभावप्रतीते, मुमुक्षतां प्राप्याये ति सत्ययोरेव मोक्षब्रह्मप्राप्त्योस्साध्यत्वप्रतीतेश्च वादार्थः सगृहीत ।

ननु बन्धविस्रंसफलकर्तृव्यापारो यदा धातुना विवक्ष्यते तदा मुञ्चति वत्समिति भवति, बन्धविश्लेषलक्षणकर्मव्यापारो यदा धातुना विवक्ष्यते तदा कर्तुरपि वत्सस्य कर्मवद्भावविधानात् मुच्यते वत्सः स्वयमेवेत्यात्मनेपदमेव भवति, एवञ्च ' पशवः पाशिताः पूर्वं परमेण स्वलीलया । तेनैव मोचनीयास्ते ' इति ईश्वरस्यैव मोचकत्वात् बन्धविश्लेषलक्षणकर्मव्यापारविवक्षयैव जीवे मुमुक्षतेः प्रयोगो वाच्यः, तत्र च कर्मवद्भावादात्मनेपदमव स्यात् अत. कथ शत्रन्तप्रयोग इति चेत्? अन्तर्भावितण्यर्थतया कर्तृव्यापारप्रयोजकव्यापार[illegible] प्रयोगात्; स च व्यापार उपासनम्, ततश्च [illegible] ध्यायेत्यर्थः । मोचकव्यापारप्रयोजकव्यापारविवक्षायाश्च ज्ञाननिवर्त्यत्वाभावात्

सर्वं सर्वस्य कारणं भवेत् न वा किञ्चित् कस्यचित् । तथाभिव्याक्त्वा दिभिरुक्तम्—“ असत्वान्नास्ति सम्बन्धः कारणैस्सत्त्वसङ्गिभिः । असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थिति ” रिति । तथा कार्यं कारणाद्भिन्नमभिन्नं वा ? पूर्वत्र भिन्नत्वाविशेषात्सर्वं सर्वतः स्यात्. नवा कुतश्चित् । उत्तरत्रात्माश्रयप्रसङ्गः । नियतपूर्वसत्कारणं नियतोत्तरसत्कार्यमिति विभजसे, तथाच स्वप्रागभावकाले स्वयमेव नास्तीति कथं ब्रूयाः । तथा विकृतादविकृताद्वा उपादानात् कार्योत्पत्तिः ? पूर्वत्रापि विकृतिरपि विकृतादविकृताद्वेति विकल्पेनानवस्था । उत्तरत्राविकृतत्वाविशेषात् यावदुपादानसत्त्वमुपादेयारम्भप्रसङ्गः । सहकारिसम्बन्धादिति चेन्न,—तत्सम्बन्धोत्पत्तिरपि विकृतस्य वा अविकृतस्य वेति विकल्पदुस्थत्वात् । अस्तु च विकृतं कार्यारम्भकम् । तत्र किं रुचकादिविकृतिविशिष्टं हेमादि स्वस्तिकारम्भकम्, उत रुचकादिमात्रं, अथ हेमादिमात्रमिति ? नाद्यः, स्वस्तिके रुचकाकृतिविशिष्टहेमानुपलम्भात् । अत एव न द्वितीयः, हेमानुवृत्तिदर्शनविरोधाच्च । न च तृतीयः, आरम्भकहेमातिरिक्ता दर्शनात्, तत्प्रत्यभिज्ञानाच्च । वदन्ति हि स्वस्तिकमपि तदेवेदं हेमेति । न च व्यवस्थितबुद्धिशब्दसङ्ख्यापरिमाणकार्यकारणकालादिभेदात्पिण्ड

---

मिथ्यात्वाभावे तात्पर्यम् । किञ्चिदिति । ‘ कारणं भवेदि ’ त्यनुषङ्गः । सर्वतस्स्यादिति । सर्वं सर्वस्य कारणं स्यादित्यर्थः । नवा कुतश्चिदिति । ‘ किञ्चित्स्या दिति शेषः । दोषतामाह नियते ति । सहकारिसम्बन्धादिति । अविकृतात्कार्योत्पत्तिरिति शेषः ।

नन्वस्त्यतिरिक्तस्वस्तिकोपलम्भ इत्यत्राह तदि ति । तदुपपादयति वदन्तिही ति । बुद्धी ति । एकत्र तन्तव इति बुद्धिः परत्र पट इति बुद्धिरिति बुद्धिभेदः, तथैव शब्दभेदः, तन्तुषु बहुत्वं पटे एकत्वमिति सङ्ख्याभेदः, सूक्ष्मत्वं महत्वमिति परिमाणभेदः, तन्तुषु कारणत्वं पटे कार्यत्वमिति भेदः, तन्तूनाम्पूर्वं

घटयोर्नष्टत्वानष्टत्वभेदात्कारकव्यापारवैयर्थ्यप्रसङ्गान्नित्यानित्यविभागानुपपत्तिप्रसङ्गाच्च कारणातिरिक्तकार्यसिद्धिरिति वाच्यम् ,—रज्ज्वाद्यधिष्ठान सर्पभूदलनाबुधारादिबुद्धिशब्दान्तरादिभिरनैकान्तिकत्वात् । नचाबाधितत्वे सतीति विशेष्टव्यम् ,—विशेषणासिद्धेः ; प्रत्युत तन्निषेधात् विगीता बुद्धिशब्दान्तरादयो भ्रान्तिसिद्धभेदावलम्बना., दुर्निरूपबुद्धिशब्दान्तरादित्वात्, कम्बुकलधौतबुद्धिशब्दान्तरादिवत् ; मध्येप्यसत् कार्यं, आद्यन्तयोरसत्वात्, शुक्तिकारजतवत्, विवादगोचरो भेदव्यवहारः स्वविषयसर्वभेदानुगतैकवस्तुमात्रावलम्बन', भेदव्यवहारत्वात् , रज्ज्वादिविषयसर्पभूदलनादिभेदव्यवहारवदित्यादिभि । नचैषां प्रत्यक्ष बाध , तर्कानुगृहीतानुमानात्तस्य दुर्बलत्वात् । अन्यथा ज्वालैक्यप्रत्यक्षविजयप्रसङ्गात् । किंच यदि कारणे पूर्वं कार्यमसत्, कथं तेन जनयितुं शक्यम् , न हि प्रलयोदकावसिक्तेष्वपि प्रस्तरेषु अङ्कुराः प्ररोहन्ति । न च पीते विश्वकर्मणापि नीलमुत्कीर्यते । अथ पूर्वमेव तत्र सत् सिद्धत्वादेव न साध्यं स्यात् । तत एव कारकव्यापारनैरर्थ्यं च ।

---

काले सत्त्व पटस्योत्तरकाल एवेति कालभेद. । नित्ये ति । आत्मा नित्यः घटादेकमनित्यमिति विभागो नित्यप्रकृत्यभिन्नत्वेन स्यादित्यर्थ । रज्वादी ति । तन्तुपटगोचरबुद्धिशब्दान्तरादयस्तत्त्वतोभिन्नविषया., बुद्धिशब्दान्तरत्वात् , परस्ख्यापरिमाणे तत्वतो भिन्नाश्रिते, सख्यापरिमाणान्तरत्वादित्याद्यनुमान विवक्षितम् । तत्र रज्वाद्यधिष्ठानसर्पादिबुद्धिशब्दान्तरादिभिरनैकान्त्यमित्यर्थ. । असिद्धे रिति । सन्दिग्धासिद्धेरित्यर्थः । तन्निषेधा दिति । अत्राधितत्वनिषेधादित्यर्थः । एतस्य इत्यादिभि रित्यनेनान्वय' । किं बुद्धेर्बाधो भ्रमत्वज्ञानं उत विषयापहार इति विकल्पमभिप्रेत्याद्येऽबाधितत्वाभावमाह विगीते ति । भिद्यत इति भेदो घटा—र्थः द्वितीय आह मध्येऽपी ति । तर्के ति । सम्बन्धासम्बन्धविकल्पानुपपत्त्या

व्यङ्ग्यत्वमस्त्विति चेन्न,—व्यक्तिसदसद्भावयोरप्यनुयोगावतारात्। व्यक्तेरपि व्यंग्यत्वेऽनवस्थानात्, नित्यव्यक्तत्वे घटादेरपि नित्यव्यक्तिप्रसङ्गात्। किञ्च भावादभावाद्वा घटाद्युत्पत्तिः नाद्यः, अनुपमृदितात्पिण्डादेर्घटाद्युत्पत्तेरदर्शनात्। न द्वितीयः, घटादेरप्यभावात्मकत्वप्रसङ्गात्। एवमन्येऽपि परश्शता विकल्पास्सुलभाः। एवं जन्मनि निरस्ते विनाशोऽपि निरस्त एव, तुल्यन्यायत्वात्। सदसद्व्यावृत्तविनाशोपलब्ध्ययोगाच्च तदुभयकोटिविलक्षणतया मिथ्यात्वस्वध्यवसानम्। स्मरन्ति च, "अनाशी परमार्थश्च प्राज्ञैरप्युपगम्यते। तत्तु नाशि न संदेहो नाशि द्रव्योपपादित" मिति। "यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्व" मिति च। श्रुतिश्च तदुपबृंहिता "वाचारम्भणं विकारो नामधेय" मित्यादिका। न च "मृत्तिकेत्येव सत्य" मित्यादिना ब्रह्मव्यतिरिक्तस्य कार्यभूतस्यापि मृत्तिकादिद्रव्यस्य सत्यत्वमिह कण्ठोक्तमिति भ्रमितव्यम्, भिक्षुपादप्रसारणन्यायेन व्यावहारिकसत्य—

---

दिम्तर्कः। व्यक्तिसदसद्भावयो रिति। पूर्वमेवाभिव्यक्तेः सत्त्वे कारकव्यापारवैयर्थ्यादि, असत्त्वे सर्वकालासत्त्वोत्पत्त्यसम्भवादि।

नन्वभिव्यक्तिः प्रागेव सती, सैव कारकव्यापारेणाभिव्यज्यत इत्यत आह व्यक्ते रिति। नित्ये ति। तथा च कारकव्यापारवैयर्थ्यमिति भावः। एवं जन्मनी ति। घटः किमिदानीं सन् उतासन्? आद्ये सतः पश्चादसत्त्वानुपपत्तेर्विनाशानुपपत्तिः, द्वितीये विनाशकव्यापारवैयर्थ्यम्, प्रागेवासत्वादित्यर्थः। एवमसम्भावितोत्पत्तिविनाशत्वात् उत्पत्तिविनाशवत्त्वेन भासमानं कार्यं मिथ्येत्युक्तम्। अत. सदसद्व्यावृत्तविनाशोपलब्धियोगान्यथानुपपत्त्या च मिथ्यात्वमध्यवसीयते इत्याह सदस दिति। विनाश उत्पत्तेरप्युपलक्षणार्थः। कार्यानुपपत्तिलक्षणो मिथ्यात्वतर्क. श्रुतिस्मृतिभ्यामप्यनुज्ञात इत्याह स्मरन्तिचे त्यादि।

त्वानुपमर्देन घटादिमिथ्यात्वप्रतिपादने तात्पर्यात् । अन्यथा दार्ष्टान्तिक प्रतिकूलत्वप्रसङ्गात् । मृत्तिकातिरेकितद्विकारमिथ्यात्ववन्मूलकारणातिरेकि मृत्तिकादिसमस्तसद्विकारमिथ्यात्वे हि वाक्यतात्पर्यम् । एतेन " प्राणा वै सत्य " मिति श्रुत्यन्तरमपि निर्व्यूढम् । तत्रापि हि-" अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्य " मिति पूर्वोत्तरवाक्यांश परामर्शेन मध्यगतप्राणविषयसत्यतोक्तिः व्यावहारिकीं सत्यतामभिसन्धायेति गम्यते । तदेवं श्रुतिस्मृत्यनुमानतर्कैः सिद्धं कार्यमिथ्यात्वम् । नश्वरत्वाच्च जगतो मिथ्यात्वं निपुणधियां स्वध्यवसानमिति ।

तत्र ब्रूमः-यदुक्तं कारणेन कार्यं सम्बद्धमारभ्यते उतासम्बद्ध मिति, तत्रासम्बद्धमित्येव पक्षः, न हि कारणाना मिथस्सम्बन्धमन्तरेण कार्येणापि सह सम्बन्धः कार्योत्पत्त्यङ्गतया दृष्टचरः, येन तदङ्गीकुर्मः । यत्तु असम्बन्धाविशेषात्सर्वं सर्वस्य कारणं भवेदिति, तत्तदा स्यात्, यद्यसम्बद्धत्वमेव कार्यारम्भप्रयोजकं स्यात् । न च तदस्ति, तत्तद्वस्तूना प्रतिनियतशक्तीनां प्रतिनियतकार्यारम्भकत्वस्यान्वयव्यतिरेकसिद्धत्वात् । यदि कारणाना कार्यसम्बन्धोपि कार्यारंभाङ्गमिष्यते, तदानङ्गाङ्गीकारः, अविषयवृत्तित्वं वा, कारणानां परस्परदृष्टस्य सम्बन्धस्य कार्ये सञ्चर-

---

ननु ' प्राणा वै सत्य ' मिति श्रुत्या प्राणसत्यत्व प्रतिपाद्यते , न च तद्व्यतिरेकेण कार्यमिथ्यात्वे तात्पर्यमिति निर्वाह. शक्यः, कार्यस्य तत्रानुक्तेः , अतस्तद्विरोध इत्यत आह एतेने ति । वक्ष्यमाणेनेत्यर्थः। तत्रापि हीति । यथा राजराजो मन्मथमन्मथः पवित्राणां पवित्रमित्यादौ ऐश्वर्यसौन्दर्यपावनत्वानामुत्कर्षापकर्षौ गम्येते , तथात्र सत्यत्वोत्कर्षापकर्षौ गम्येते , तत्रापकृष्ट प्राणगत सत्यत्व व्यावहारिकसत्यत्व उत्कृष्ट ब्रह्मगत पारमार्थिक सत्यत्वमित्यर्थः । . नश्वरत्वा दिति । तावदेव च बाधितत्वमित्याभि

णात्, युक्ताङ्गत्यागो वा, असिद्धत्वेनासम्बन्धस्य साध्यता प्रत्युपयुक्तस्य त्यागादिति । एतेन भिन्नत्वाभिन्नत्वविकल्पोपि निरस्तः, दण्डचक्रादिविलक्षणस्यैव घटादेस्तत उत्पत्तिदर्शनात् । उपादानेपि हि कार्यकारणयोरत्यन्तभेद एव दृश्यते । अवयविवादिना तु द्रव्ययोरपि । एवमपि चेदभेदोऽभ्युपगम्येत, तर्हि युक्ताङ्गत्यागः, कार्यकारणभावोपयुक्तस्यैव भेदस्य परित्यागात् । अयुक्ताङ्गस्वीकारो वा, तद्विरोधिन एवाभेदस्य स्वीकारादिति । अन्यथा स्वव्याघातः सार्वभौमः । एवमुत्तरेष्वपि विवेक्तव्यम् ।

यत्तु विकृतादविकृताद्वोपादानात्कार्यारम्भ इति । तत्र विकारशब्देन यत्किञ्चिदागन्तुकधर्मविवक्षायां विकृतादिति ब्रूमः, सहकारिसम्बन्धोपि हि विकार एव । अथ कार्यरूपेण विकृतत्वं विवक्ष्यते, तदा त्वविकृतादिति वदामः, अन्यथा आत्माश्रयप्रसङ्गात् । यत्तु अविकृतत्वाविशेषात्सर्वदोत्पादकत्वप्रसङ्ग इति, तन्न, अविकृतस्यैव सहकारिचक्रसन्निपातेन कालविशेषनियतकार्यारम्भोपपत्तेः । यत्तु सहकारिसम्बन्धोपि विकृतस्य वाऽविकृतस्य वेति विकल्पितम्, तदपि सहकार्यन्तरसम्बद्धस्यै

---

मान । युक्ताङ्गत्यागमुपपादयति असिद्धत्वेनेति । कार्यकारणयोरिति । द्रव्यस्य कार्यत्वघटकीभूता साक्षादुपत्तियोगिन्यवस्थात्र कार्यशब्देन विवक्षिता। अन्यथेति । एवमप्यनेन तर्काभासेन कार्यनिरासे मिथ्याभूतमपि कार्यमेव निराक्रियेत । मिथ्यात्वादेव सर्वमुपपद्यत इति चेत्, तत्किं राजशासनेन ? दर्शनादिति चेत्; तर्हि तत एवासत्पक्षेऽपि कारणासम्बद्धं ततो भिन्नं च कार्यमिति किं न सेत्स्यति? एवमिति । विकृताविकृतादिविकल्पेष्वपि स्वव्याघातकत्वपर्यन्ता दोषा ग्राह्या इत्यर्थः । स्वपक्षनिर्वाहमाह यत्तु विकृतादिति । सहकार्यन्तरसम्बद्धस्येति । सिद्धान्ते उपादानस्य नित्यत्वात् सहकार्यन्तरसम्बद्धस्य सहकार्यन्तरसम्बन्धे नानवस्था दोष इति भावः । यथा निश्चितप्रामाण्यस्यैव ज्ञानस्य संशयनिवृत्त्याद्युपयोगित्वे प्रामाण्यस्य परतस्त्वमते प्रामाण्यज्ञानेऽनवस्था सा च साध्यत्वान्मूलक्षय

वेति परिहृतम् । नचात्रानवस्था दोष, सिद्धानवस्थारूपत्वात् । न हि पूर्वं पूर्वं कारणं नास्तीत्युत्तरोत्तरासिद्धिः । न च पूर्वपूर्वाभावे प्रमाणमस्ति, प्रत्युत कार्यमेव प्रमितं सत् कारणप्रवाहे प्रमाणं भवति । अन्यथा कार्यानुदयप्रसङ्गात् । न च नोपलभ्यते कार्यम्, उपलभ्यमानमपि वा किं बाध्यते ? सर्वकार्यबाधे स्वप्रवृत्तिविरोधात् । कतिपयकार्यबाधे त्वबाधितकार्यान्तरसद्भावेन कार्यकारणभावमात्रस्यापलपितुमशक्यत्वात् । अन्ततो बाधस्यापि कार्यत्वेन कर्तुमेवाशक्यत्वप्रसङ्गः । बाधस्यापि बाधे व्याघात स्यादिति ।

यत्तु रुचकादिविकृतिविशिष्ट हेमादि रुचकादिमात्र वा हेमादिमात्रं वा स्वस्तिकारम्भकमिति विकल्पितम्, तत्रारम्भकमिति किं स्वस्तिकनिर्माणोपयुक्ताकारविशिष्ट विवक्षितम् ? उत तदुपयुक्ताकार एव? अथवा रुच[स्वस्ति]काश्रयमात्रमिति, आद्ये रुचकादिविकृतिविशिष्टमिति ब्रूम. । न च स्वस्तिके रुचकाकाराकारिनहेमानुपलम्भविरोध., कार्योपयुक्ताकाराणा कार्येप्यनुवृत्तेरनपेक्षितत्वात् । तदपेक्षणे

---

करीति दोष. न तथेयमित्यभिप्रायेणाह सिद्धेति । अनवस्थाया दोषत्वप्रयोजकमूलक्षयकरत्वमसिद्धत्व च नास्तीति क्रमेणाह न हीत्यादिना । सर्वकार्यबाध इति । असद्विलक्षणकार्यस्वरूपाविरोधिबाधविवक्षाया तादृशेनापि कार्येण कारणप्रवाहस्यानुमातु शक्यत्वात् सहकार्यन्तरसम्बन्धस्य सहकारिसम्बन्धसम्भवात् सहकार्यन्तरसम्बन्धस्य कार्यारम्भकत्वे दोषाभावाद्विकृताविकृतादिविकल्पमूलतर्काप्रवृत्तेर्मिथ्यात्वसाधनायोगात् तथा मिथ्यात्व साधयता स्वरूपासत्त्वपर्यवसित एव बाधो वाच्य., एवञ्च स्वप्रवृत्तिविरोध', मिथ्यात्वसाधनलक्षणकार्यस्याप्यसिद्धेरित्यर्थ । सर्वकार्यबाधपक्षे दोषान्तरमाह अन्तत इति । [illegible] परिहरति बाधस्यापीति। प्रपञ्चबाधस्य बाधे प्रपञ्चसत्यत्वसिद्धेरित्यर्थ.। नचेति। रुचकादिमात्र

चानङ्गाङ्गीकारप्रसङ्गात् । के चन कारणाकाराः कार्येऽप्यनुवर्तन्ते के चित्तु निवर्तन्त इति यथादर्शनमङ्गीकार्यत्वात् । द्वितीये तु रुचकादिमात्रमिति वदामः । न च हेमानुवृत्तिदर्शनविरोध., उक्तोत्तरत्वात् , कारणदशावच्छेदकाकारनिवृत्तावप्याश्रयतयोपयुक्तस्य द्रव्यस्य तदाकारविशेषस्य चः नाशकाभावादनुवृत्तत्वस्य दुर्निवारत्वात् । तृतीये तु हेममात्रमित्येव तत्वम्। नचारम्भकहेमातिरिक्तं न दृश्यत इति वाच्यम् ,—स्वहृदयविसंवादात् ; अन्यथा आरम्भकमपि न दृश्यत इति वक्तु शक्यत्वात् । अतिरिक्तं तु दृश्यते, . तत्किमवयविद्रव्यान्तर उत तदारम्भकतयाऽभिमतावस्थान्तरमात्रम् उत विवर्तविशेष इत्येवमादिको हि विवाद । हेमप्रत्यभिज्ञान तु न स्वस्तिकप्रतीत्यपह्नवक्षमम् । हेम्न एव स्वस्तिकविशेषितत्वेन प्रत्यभिज्ञोपपत्ते· । अन्यथा पूर्वानुभूतातिरिक्ताकारमन्तरेण कथ सा प्रत्यभिज्ञा? न हि यत्किञ्चिद्देशकालावस्थादिविशेषमन्तरेण सोऽयमित्युल्लेख. । अन्यथा स इत्येव वा स्यादयमित्येव वा ।

यत्तु बुद्धिशब्दान्तरादौ कारकव्यापारवैयर्थ्यप्रसङ्गे नित्यानित्यविभागानुपपत्तिप्रसङ्गे च रज्ज्वाद्यधिष्ठानसर्पादिक निदर्शितम्, तदपि देशकालादिप्रतिपन्नोपाधौ बाधाभावादेव परिहृतम् । बाधकतया अभ्युपगताश्चे प्रत्येकं परिह्रियन्त एव । अत एव दुर्निरूपबुद्धिशब्दान्तरादित्वादिति हेतुरपि निरस्त· ।

---

स्यारम्भकत्वे य पूर्वपक्षे दोष उक्तः , स इह नास्तीत्यर्थ । उक्तोत्तरत्वादिति । त्वयैव रुचकाकृतिमात्रस्य कार्योपयुक्ताकारत्वस्योक्तत्वादित्यर्थः । एवञ्च हेम्न उपादानत्वस्यानिवर्तितत्वात्तदनुवृत्तौ न विरोध इति भावः । तदाकारेति। हेमाकारम् । तदारम्भकतयेति । अभिमतस्य द्रव्यस्यावस्थान्तरमित्यर्थ । अन्यथा-अतिरिक्ताकारयोगस्य प्रत्यभिज्ञाविरोधित्व इत्यर्थ. । पूर्वेति । पूर्वानुभूताकारं अतिरिक्ताकार चान्तरेणेत्यर्थ । अवस्थादिविशेष –अवस्थादिभेद । कालद्वयादिविषयीकरणमन्तरेण प्रत्यभिज्ञा न सम्भवतीत्यर्थ । निदर्शितमिति ।

यत्तु मध्येप्यसत् कार्यं आद्यन्तयोरसत्वादिति प्रयुक्तम् , तदप्य बाधितसत्त्वोपलम्भेन बाधितम् । अन्यथा मध्येप्यनारोपित कार्यं आद्य-न्तयोरनारोपितत्वादिति वक्तु शक्यत्वात् । अस्य चोपलम्भानुवर्तित्वेन प्रबलत्वादनेन पूर्वस्य बाध एव वा । अपि च कार्यमाद्यन्तयो. सदध्य स्तं वा मध्ये सत्वात् मध्येध्यस्तत्वाद्वेति सांख्यनयेन त्वन्नयेन वा प्र-योगे किं वक्ष्यसि ? उपलम्भविरोधादिकमिति चेत्तुल्यम् ।

यच्च विवादगोचरो भेदव्यवहार स्वविषयसर्वभेदानुगतैकवस्तुमा त्रालम्बन इति प्रतिज्ञातम्, तत्र किं मृत्पिण्डाद्येकैकोपादानकघटशरावादि भेदव्यवहारमात्रं पक्षीक्रियते उत सर्पभूदलनादिभेदव्यवहारविलक्षणः सर्वोपि ? पूर्वत्र श्रुतिनिदर्शितमृत्पिण्डलोहमणिनखनिकृन्तनादिभेदव्यव हारैरनैकान्त्यम् , न हि तत्र मृदादिकमनुवर्तते । पृथिव्यादिकमनुवर्तत इति चेत् ; तदास्तु पृथिव्यादिभेदव्यवहारै । अथ तत्रापि प्रकृतिभू ताविद्यानुवृत्तिं पश्यसि, तथापि ब्रह्माविद्ययो' भेदव्यवहारेणानैकान्त्यं दुस्त्यजम् । न हि ब्रह्माविद्यानुगतं वस्त्वन्तरमिष्यते । न च ब्रह्मैवोभय त्रानुवर्तते, ब्रह्मणि ब्रह्माध्यासानभ्युपगमात्, ब्रह्मभेदानभ्युपगमाच्च ।

---

व्यभिचारस्थानतयोदाहृतमित्यर्थः । अबाधितत्वे सतीति विशेष्यने, बाधश्च प्रति-पन्नदेशकालोपाधौ निषेध., तदभावश्च घटादे सिद्ध एवेत्यर्थ । प्रतिरोधमुक्त्वा बाधमप्याह अस्यचे ति । सांख्यनयेन—साख्यप्रयोगमनुसृत्येत्यर्थ' । त्वन्नये नेति । त्वदङ्गीकृतहेतुनेत्यर्थ । उपलम्भे ति । वक्ष्याम इत्यनुषङ्ग । मृत्पिण्डेत्या दि । एतद्घटशरावादिभेदव्यवहार. स्वविषयसर्वभेदानुगततदुपादा नैकवस्त्वालम्बन इत्यनुमानं विवक्षितम् । श्रुतिनिदर्शितेत्य नेन पक्षसमत्वशङ्का परिहृता, तत्र मृत्तिकासत्यत्वश्रुते. । एकोपादानालम्बनत्व एकाधिकरणवस्त्वालम्ब नत्व वा साध्यते, नत्वेकाधिष्ठानारोपितत्वम् , अतस्तत्राप्यनुगतमस्त्येवेति शङ्कते पृथिव्यादिकमि ति।ब्रह्मपर्य तगमने मिथ्यात्व सेत्स्यतीत्यभिप्रायेणेदानीमृदादेर्मिथ्या त्वानाविष्करणेनैव शङ्कितम्। व्यवहारै रिति। अनैकान्त्य इत्यनुषङ्ग. । अनभ्युप मे हेतुमाह ब्रह्मभेदे ति। स्वास्मिन्नध्यासोऽनुपपन्न इति भाव.। यद्वा ब्रह्मणी ति ।

अभ्युपगमे च तद्भेदव्यवहारेण तदेव स्यात् । एतेनोत्तर कल्पोपि दत्तोत्तर । ब्रह्मविद्याभेदस्यापि पक्षीकारे बाधात् । तद्बहिष्कारे तु तेनैवानैकान्त्यादिति । किञ्च–वस्तुशब्देन परमार्थविवक्षाया दृष्टान्ता–सिद्धि, न हि रज्ज्वादे सत्यत्वमिच्छसि। अथ प्रतीयमानमात्रविवक्षा, तदा वस्तुमात्रावलम्बन इति वक्तु न शक्यते । आरोपितस्यापि घटादेरालम्बनत्वस्य वर्ननीयत्वादिति ।

यत्तु तर्कानुगृहीतानुमानात् प्रत्यक्षस्य दौर्बल्यं ज्वालैक्यप्रत्यक्षे निदर्शितम्, तदप्यसत्, अनुग्राहकतयाभिमताना तर्काणामप्रकृतत्वात्। ज्वालैक्यप्रत्यक्ष तु सादृश्यादिदोषसम्भवात् निर्वापितारोपितेपि तथैव प्रत्यभिज्ञानदर्शनात् अनन्यथासिद्धमामप्रत्यनुवृत्त्यादिहेतुबलात्तत्र च स्वोपजीव्यविरोधादिप्रसङ्गाभावाच्च बाध्यतामनुभवतीति युक्तम् । इह तु विपरीतमिति विशेष ।

यत्पुन कारणे कार्यं पूर्वं सदसद्वेति, तस्य कोऽर्थ ? किं कार्यद्रव्य कारणावस्थाया द्रव्यरूपेण विद्यते नवेति ? तदा सदित्यभ्युपगच्छामि । तथापि न साध्यत्वविरोध, अवस्थापत्तिरूपेण तदुपपत्ते ।

---

अभेदाद्व्यासोनुपपन्न इत्यर्थ. । अस्तु तर्हि ब्रह्मभेदः, तथा च तत्र ब्रह्माभ्याससम्भव इत्यत आह ब्रह्मभेदे ति । तदेव अनैकान्त्यमेव । बाधोऽशत. । तदावस्त्वि ति । यदा वस्तुशब्देन परमार्थो विवक्ष्यते तदानुगतैकवस्तुमात्रालम्बना इत्यत्र परमार्थव्यवच्छेदसम्भवादनुगतैकपरमार्थालम्बनत्वे सति तदन्यपरमार्थानालम्बना इत्यर्थो भवति, तच्च वक्तु न शक्यते, घटादेः परमार्थत्वानङ्गीकारात् , यदा तु प्रतीयमान विवक्ष्यते तदाऽनुगतैकार्थालम्बनत्वे सति तदन्यार्थानालम्बना इत्यर्थो भवति , अत्र चार्थशब्द स्वरूपकथनपर., तच्च पक्षे बाधितम्, घटादेरालम्बनत्वादिति भाव. । प्रत्यक्षात्तर्कसहकृतानुमानस्य प्राबल्यमङ्गीकृत्योक्तम् , इदानीं प्रत्यक्षस्य न तदृशानुमानप्राबल्यात् बाध्यत्व किन्तु दृष्टदोषसजातीयदेनाप्रामाण्यशङ्काग्रस्तत्वादित्याह ज्वालैक्ये ति ।

तत एव कारकव्यापारसाफल्यं च । एतावानेव च न सत्कार्यवादः । अथ कार्यावस्था कारणदशायामस्ति न वेति पृच्छसि, तदा नास्त्येव सा । कथमसती तेन जनयितुं शक्येतेति चेत्, किं पूर्वं सतीमेव दशा पश्चादुत्पद्यमाना पश्यसि? येनैव विरोधमाशङ्कसे । तथाचायुक्ताङ्गस्वीकारः । अवस्थासत्त्वस्य जन्यत्वविरोधिनः स्वीकारात् । असत उत्पत्तौ प्रस्तरादयोऽप्यङ्कुरेयुः शशादयोऽपि शृङ्गादिमन्तः स्युरिति चेत्; किमियं राजाज्ञा? उत शापः? न हि नियतशक्तिकेषु कारणेषु देशकालस्वरूपप्रतिनियतकार्यविशेषारम्भकेषु परिदृश्यमानेषु तच्छक्तिविधुरादपि तदुत्पत्तिराशङ्कितुमपि शक्यते । प्रागसतीं दशां पश्चात्सतीमिच्छतोऽवयविद्रव्ये कः प्रद्वेष इति चेत्, न कश्चित्, अदर्शनादेव तु नाङ्गीकुर्मः ।

यत्तु भावादभावाद्वा घटाद्युत्पत्तिरिति, तत्र किं विद्यमाने द्रव्ये घटाद्यवस्था जायते उताविद्यमान इति प्रश्नार्थः? तदा विद्यमान एवेति मन्वीथाः । न हि घटाद्यवस्थोत्पत्तौ मृदादिकं नास्ति । उपमर्दितेऽपि हि पिण्डे पिण्डत्वमेव निवृत्तं न तु द्रव्यम् । अनुपमृदितेभ्यश्च तन्त्वादिभ्यः पटाद्युत्पत्तिरपि दृश्यते । अथासतो घटाद्युत्पत्तिः सतो वेति पृच्छसि, तदा सत एवेत्युत्तरम् । पूर्वं सतः पिण्डात्तदानीं सत एव वा मृदादेः घटाद्युत्पत्तिदर्शनात् । अथ कारणविशेषावच्छेदकावस्था कार्योत्पत्तिदशायां निवृत्ता न वेति पृच्छसि; तदा पिण्डादौ निवृत्ता तन्त्वादौ त्वनुवृत्तेति सान्दृष्टिकमिदम् । नचाभावादुत्पत्तौ कार्यस्याभावात्मकत्वप्रसङ्गः, कार्यकारणयोरत्यन्तसालक्षण्यस्य "न विलक्षणत्वा"

---

किं पूर्वमिति। दशां अवस्था। किमियमिति। किं राजाज्ञयैव शंक्यते उत शापवशादित्यर्थः । प्रागसती मिति । न हि साङ्ख्यवदसत उत्पत्त्यनुपपत्तेरवयविनि द्वेषस्तव सम्भवतीति भावः । अनुपमृदितेभ्य इति । तत्र च न द्रव्यविनाशशङ्कालेशोऽपीति भावः । नन्वभावपदेन प्रसिद्धाभावं विवक्षित्वैव विकल्प्य दूषितमित्यत आह न चाभावा दिति । भावरूपाज्ञानपरिणामस्य घटादिध्वंसस्याभावत्व

धिकरणे निरस्तत्वात् । भावान्तराभाववादिन इष्टप्रसङ्गाच्च । घटत्वादि कमपि हि पिण्डाद्यपेक्षया प्रध्वंसकोटिघटितं कपालाद्यपेक्षया तु प्रागभावपक्षनिक्षिप्तं कुड्याद्यपेक्षयात्वन्योन्याभावायत इति । ये चान्ये पश्यतो हराणा प्रलापाः–"न चेदुत्पत्तिरुत्पत्तेर्नित्यत्वमनवस्थिति. । उत्पत्तावप्यतः

---

दभावोपादानकस्यापि तव भावत्वमविरुद्धमिति भावः । भावान्तरेति । अभावादुत्पन्नं हि घटत्वाद्येव, तच्च भावरूपमप्यभावात्मकमित्यर्थः । तदुपपादयति घटत्वादिक मिति । उत्पत्तेरुत्पत्तिरस्ति नवेति विकल्प्य दूषणार्थं. श्लोक. । उत्पत्तावनवस्थि तिरित्यन्वय. । " कुर्वत्कार्यमकुर्वद्वा करण कारण भवेत । कुर्वच्चेदनवस्थानमकुर्वत्यनवस्थिति. ॥ " इत्यादय. । एव द्वितन्तुकादिपूर्वपूर्व पटाभेदेनैवोत्तरोत्तरः पटो जायते, स एव पट एतावानासीदिति विवेकिनामप्यनुभवात् , न च जातस्य जायमानाभेदोऽविद्या विना सम्भवति, तस्मादविद्यामहिम्ना प्रथमपटस्तत्परिमाण च दुर्निरूपस्वरूपेण वर्धत इति कार्यमनिर्वचनीयमेव ; एवमेकस्मात्तन्त्वादेरज्जुद्रव्यस्योत्पत्तिरप्यत्र मानम्, तत्र एकस्य परमार्थत. सयोगो न सम्भवति, अत एकस्मिन् चन्द्रे द्वित्ववदेकस्मिंस्तत्वादौ द्वित्वस्य मायात्मकत्वात् तन्निघ्नस्य सयोगोऽपि तदात्मक इति तत्कार्यमपि तथैव, अत एवाधिकपरिमाणात्तन्वादेर्न्यूनपरिमाणरज्ज्वारम्भोऽपि, अविद्या विना तदयोगात् , मायया तु गिरिशिखरस्थाधिकपरिमाणवृक्षादौ न्यूनपरिमाणकार्यारम्भो दृष्ट इत्यनिर्वचनीय कार्यम्, एवं बाल्यादिशरीरमप्युत्तरोत्तरशरीराकारेण वर्धमानमविद्याकारणत्वे प्रमाणम्, माया विना शरीराभेदे परिमाणभेदायोगात् , न च तद्भेदोऽनुपलम्भबाधात् , पूर्वोत्तरशरीरयो विनाशोत्पत्तिहेत्वभावाच्च, अननुसन्धानप्रसङ्गाच्च, एव क्षीरस्य दधिभावोऽपि मायया, क्षीरस्वभावे स्थिते तस्य दधिभावानुपपत्तेः , क्षीरविनाशे क्षीरारम्भकैः परमाणुभिर्दध्यारम्भ इत्ययुक्तम् , परमाणूना सर्वत्र सुलभतया दध्यर्थं क्षीरानुपादानप्रसङ्गात् , क्षीरध्वंसानामपि सुलभत्वात्, उपात्त क्षीरध्वंसस्यैव हेतुत्वे पीताद्भूमौ पतिताद्वा दध्युत्पत्तिप्रसङ्गात् , माहिषात् क्षीरादुत्पन्न माहिषमित्यादिव्यवस्थायोगात् क्षीरदध्नोः नियततुल्यपरिमाणत्वा-

कार्यं कारणं च निरूपित" मित्येवमादयः, तेप्यनयैव दिशा प्रशमनीया इति ।

" सिद्धानवस्थितिः सामग्र्यात्मकोत्पत्तिसंग्रहे ।
अन्यथा स्वपरत्राणान्न काचिदनवस्थिति " रिति ।

---

योगाच्च। तस्माच्छुक्तिरिव रजतरूपेण क्षीरमेव दध्याकारेण परिणमत इति तन्मिथ्ये त्येवमादयश्च गृह्यन्ते । तेपी ति । उत्पत्तिशब्देन किं प्रथमक्षणसम्बन्धो विव क्षित ? अथ सामग्री? अन्यद्वा ? आद्ये अयुक्ताङ्गस्वीकारः, अनेकक्षणवर्तिना पदार्थानामेव प्रथमक्षणवत्त्वेन द्वितीयक्षणस्य द्वितीयक्षणापेक्षाया इव प्रथमक्षणस्य प्रथमक्षणापेक्षाया अभावादित्यभिप्रेत्य द्वितीयं दूषयति सिद्धे ति । सामग्री ति । सामग्र्यानन्तर्यसम्बन्धादुत्पन्नमिति विशिष्टव्यवहार इति भावः । तृतीयं दूषयति अन्यथे ति ।

यत्तु स एव पट एतावानासीदिति प्रत्यभिज्ञया मिथ्यात्वसमर्थनम्, तत्र किमियं प्रत्यभिज्ञा बाधितविषया उताबाधितविषया ? आद्ये धर्मिसत्यत्वं निष्प्रत्यूहम् । द्वितीये अभेदतद्धर्मिणोः सत्यत्वं त्वयैव समर्थितम् । किञ्च त्वत्पक्षे ाभेदस्य मिथ्यात्वात्तत्र कथं भेदः, समानसत्ताकयोर्विरोधात् ; नचान्यतरस्य ातिभासिकत्वम्; विनिगमकाभावात्, अभेदस्य प्रातिभासिकत्वे पटयोः सत्यत्वात्, दस्य प्रातिभासिकत्वे पटस्य सत्यत्वाच्च । अथ नात्र विरोधः, अभेदस्याधिष्ठा ानागतत्वात् , स एवाभेदः प्रत्यभिज्ञासामानाधिकरण्ययोर्निमित्तमिति चेन्न,— रभेदाभावेऽपि तत्सम्बन्ध्यभेदमात्रेण तदुपपत्तेः । कुविन्दाभेदाद्वा पटयोरे क न स्याताम् ? अथ कुविन्दस्य न हि पटद्वयतादात्म्यम्, अस्ति तु सतः, अतस्तदभेदस्तेन तादात्म्यवतोः पटयोः सामानाधिकरण्यनिमित्त स्यादिति चेन्न; तथा सति पटत्वस्यैव निमित्तताप्रसङ्गात् । तत एव सर्वपटाना सर्वघटानां सर्वद्रव्याणां च सामानाधिकरण्यप्रसङ्गात् । तस्मात्तयोः स्वरूपाभेद एव निमित्तम् । तस्मादरत्निमात्रपटीभूता एव तन्तवस्तन्त्वन्तरैः सह षोडशारत्निमात्रपटीभवन्ति । एवञ्च प्रत्यभिज्ञाप्युपपन्ना, पूर्वतन्तुप्रवेशात् । भेदोऽप्युपपन्नः, तन्त्वन्तरप्रवेशात् ।

यत्तु सदसद्व्यावृत्तविनाशोपलब्ध्ययोगात्तदुभयकोटिविलक्षणतया मिथ्यात्वमिति, तदपि मन्दम्; उपलब्धिविनाशाभ्यामपि कादाचित्कत्वमात्र सिद्धेः । न ह्युत्तरकालीनो विनाशः स्वकालेऽप्यसत्त्वं साधयितुमलम् । अथ नित्यमेव सच्छब्दार्थतया परिगृह्य तद्वैलक्षण्यान्मिथ्यात्वमिष्यते, तथाप्यनित्यत्वमेव मिथ्यात्वमिति विवक्षितं स्यात्, तथा च वस्तुनो न काचित् क्षतिः । अत एव "अनाशी परमार्थश्च" इत्यादिस्मृतिरपि निर्मूला । "वाचारम्भणं विकारो नामधेय" मित्यादिका तु श्रुतिरवयविद्रव्यान्तरनिरासपरेति सद्विद्यानिरूपणे व्यक्तमनुसन्धेयम् । अत एव 'मृत्तिकेत्येव सत्य' मित्यादावपि परमार्थसत्यत्वमेव विवक्षित

---

रज्ज्वनुपपत्तिस्त्ववयविवादिनामिव । त्वत्पक्षे पूर्वोक्तदूषणान्यपि रज्जुसर्पपरिमाणानि न मुञ्चन्ति । क्षीरदध्यनुपपत्तिस्तवैव, नास्माकम् । क्षीरद्रव्यस्यैव गन्धरस क्षीरावस्थाप्रहाणेन दध्यवस्थागन्धरसोत्पत्तेः सवलाविद्यायाः सुलभत्वात् सर्वत्र दध्युपलम्भप्रसङ्गात् । अनाशीत्यादि । निर्मूला–सदसद्व्यावृत्तविनाशयोगान्मिथ्येति न त्वदुक्तन्यायमूलेत्यर्थः । अनाशीत्यादिस्मृतिश्च प्राशस्त्य परमार्थशब्दप्रयोगनिमित्तप्रदर्शनपरा, तत्प्रदर्शनं च श्रेयसामल्पकालतया तदभावकालस्यैव भूयस्त्वमध्याल्पकालसत्त्वं तिरस्कृत्य तस्यासत्कल्पतया हेयत्वं परमात्मनः सर्वदा स उपादेयत्वं च प्रदर्शयितुम् । अयं चार्थस्तत्प्रकरणे स्पष्टः ॥

तत्तु नाशि न सन्देह इत्यस्यायमर्थः -नाश्युपपादितस्य नाशित्वे उपासनस्यापि शित्वात्तदुपपादितस्य मोक्षस्यापि नाशिता स्यादित्यत उक्तं 'द्रव्ये' ति । शब्दो देयद्रव्यपरः, नश्वरद्रव्यप्रदानेन देवताभ्यः प्राप्य फलं स्वप्रदत्तद्रव्येन नश्वरमेव भवति, उपासनस्य नश्वरत्वेऽपि तस्य स्नेहरूपत्वात्तेन स्निग्धे पुरुषेणात्युदारेण सर्वशक्तेन दीयमानस्य पुरुषार्थस्य तादृशशक्त्यानुगुण्यमेव तीति नित्यपुरुषार्थदानमुपपद्यत इति भावः । अत एवेति । घटादेर्मृत्तिकानन्यता न तु तद्व्यतिरेकेणात्यवयविनिराकरणपरत्वेन प्रपञ्चमिथ्यात्वतात्पर्यमत्र पारमार्थिकसत्यत्वमेवोच्यत इत्यर्थः । आदिशब्देन "प्राणा वै सत्यं"

---- ----शब्देन साङ्ख्यानां जीवा उच्यन्ते, ते सत्यम्, स्वरू

गिति सिद्धम् । अतः प्रत्यक्षादिशरणैः श्रुतिशरणैरपि कार्यजातस्य सर्वस्य सत्यत्वमेष्टव्यम् । अन्यथा प्रागुक्ततर्काभासैः कारणमपि किं न खण्ड्यते ? प्रत्यक्षश्रुत्यादिबलादिति तु समानम् । अथ यदि कारण- स्यापि भङ्ग इष्ट इत्याशयः, तथा सति कारणसत्यत्वमत्यादरेण प्रतिपादू- यन्ती श्रुतिर्बाध्येत । एतेन कारणसामान्यं तद्विशेषांश्च खण्डयता वेद- बाह्यत्वं तावत्सुव्यक्तम् । विशेषदूषणानि तु स्वावसरे ग्राह्याणि ।

यश्चासौ व्यामोह —नश्वरत्वादेव विश्वमिथ्यात्वमिति, स किं नाशबाधविवेकाभावात् ? उत तयोर्व्याप्यव्यापकभावाभिमानात् ? न प्रथमः, उभयोरपि विवेकस्य सुप्रसिद्धत्वात् । स्वकाले सत एवार्थस्य स्वोत्तरकालासत्त्वं नाशः, बाध्यत्वं तु स्वप्रतीतिकालेप्यसत्त्वलक्षणमिति । असत्त्वमेव नाश इत्येतावता पर्याप्तौ किं विशेष्यत इति चेन्न;—प्राग- भावेपि विनाशशब्दप्रयोगप्रसङ्गात् । तथाप्युत्तरकालासत्त्वमित्येतावता लमिति चेन्न,—गगनकुसुमादावपि प्रसङ्गात् । स्वकाले सत एवार्थस्या न्यापेक्षयोत्तरकाले स्वप्रागभावकालेप्यसत्त्वसम्भवात् तद्व्यवच्छेदार्थं स्वो त्तरकालासत्त्वमिति विशेष्यते, एतावदेव निष्कर्षलक्षणम्, पूर्वं तु वैश द्यार्थम् । यदि वस्तुनो यथाकथञ्चिदसत्त्वं मिथ्यात्वमिति विवक्षितम्, तदास्माकमिष्टापादनम् । परस्पराभावादिमत्तया केनचिदाकारेण सर्वेषा मसत्त्वाभ्युपगमात्, कार्याणां च विनाशाभ्युपगमात् । तावन्मात्रमेव मिथ्यात्वशब्देनोपचर्यमाणमपि नास्माकमनिष्टमापादयति । नापि

---

भावराहित्यात् । इद जीवब्रह्मसाधारणम्, जीववत्कर्मकृतस्वभावविकाराभावात् परमात्मा ततोऽपि सत्य इत्युच्यते, कर्मकृतविकारो हि साक्षाज्जीवे स्वनिष्ठत्वभ्रम योग्य, परमात्मनस्तु स्वभावविकारो न तथेतीदं वैषम्यमाश्रित्य 'सत्यस्य सत्य' मित्युक्तम् । कारणमिति । मृदादिकमित्यर्थः । अत्यादरेणेति । " मृत्तिके-

द्वितीय, व्याप्त्यभावात् । रज्जुसर्पादिषु व्याप्ति. सिध्यतीति चेन्न;—तत्र विनाशस्यानभ्युपगमात् । अर्थबाध एव हि तत्र व्यक्त. । गन्धर्वनगरादिषु विनाशोपि प्रत्यक्षसिद्ध इति चेन्न,—तत्रापि मिथ्यात्वपक्षे बाध एव । विनाशभ्रमस्तु स्यात्, सत्यत्वभ्रमवत् । तत्सत्यत्वपक्षे तु कथ तत्र विनाशमिथ्यात्वयो. व्याप्तिर्ग्राह्या । अत. उत्पत्तिविनाशयोरपि सर्वं कार्यं स्वकाले सदेवेति सिद्धम् ॥

इति शतदूषण्यां कार्यानुपपत्तिभङ्गः

॥ पञ्चपञ्चाशो वादः ॥

---

त्येव सत्यम्" "कार्ष्णायसमित्येव सत्यम्" 'लोह इत्येव सत्य' मित्यभ्यासादादरावगति ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्याभिनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां कार्यान्यथानुपपत्तिभङ्गो नाम पंचपञ्चाश स्कन्ध ॥५५॥



श्रीरस्तु ।

अथ षट्पञ्चाशो वादः ।

देशानामपि देशतामुपगतं स्वाभाविकाद्वैभवात्

कालस्यापि कलाद्युपाधिकलनात्काल्यत्वहेतुं स्तुमः ।

निश्शेषेऽपि विभूतिकोटिघटिते निम्नोन्नते वस्तुनि

स्वाच्छन्द्येन जहत्समाधिककथासम्भावनं तन्महः ॥

यत्पुनः परिभाषन्ते—अनन्तपदसामर्थ्यादेव ब्रह्मव्यतिरिक्तानन्तवस्तुमिथ्यात्वं सिध्यति ; तथाहि—अनन्तशब्देन प्रसक्तत्वात्सर्वविधपरिच्छेदाभावोऽप्युच्यते, परिच्छेदश्चतुर्धा—देशतः कालतो वस्तुतः स्वरूपतश्चेति । तत्र गगनकुसुमादिवत् स्वरूपपरिच्छेदः सद्रूपत्वेन प्रतिक्षिप्यते, तच्च सत्यपदेनैव सिद्धमित्यनन्तपदेन तद्विवक्षा भवतु वा मा वा, त्रिविधपरिच्छेदाभावस्तावद्विवक्षित एव । तत्र सर्वदेशसर्वकालव्यापित्वादत्र देशे नास्ति अत्र काले नास्तीत्येवंरूपयोर्देशकालपरिच्छेदयोरभावः सिद्धः । वस्तुपरिच्छेदस्तु इदमिदं न भवतीत्येवंरूपः । आश्रयप्रतियोगिविशिष्टस्य भेदस्याभावो [भवन्] भेदतत्प्रतियोगितदाश्रयाणां सर्वेषामभावाद्वा अन्यतमाभावाद्वा ? आद्ये शून्यवादावतारः । द्वितीयेऽपि सर्ववस्तुनाद्यत्म्याद्वा स्वव्यतिरिक्तसमस्तमिथ्यात्वाद्वा स्वस्य तुच्छत्वाद्वा

---

देशानामपीति । देशकालवस्तुपरिच्छेदाभावाः क्रमेण संगृह्यन्ते । निश्शेषे वस्तुनि जहत्समाधिककथासम्भावनमित्यन्वयः । सप्तमी च निर्धारणे । समाधिकवस्तुनी निर्धार्ये । विभूतिकोटिघटित इति हेतुगर्भविशेषणम् । निम्नोन्नत इति यथा निम्नं स्तम्बादि तथा हिरण्यगर्भाद्युन्नतमपि सर्वेश्वरापेक्षयेत्यभिप्रायम् । स्वाच्छन्द्येनेति । उपगतत्वादिना सम्बध्यते । जहती समाधिककथासम्भावना यदिति विग्रहः ।

परिभाषन्त इति । अनेन युक्तिशून्यत्वं विवक्षितम् । वस्त्वन्तरभेदाभावो वस्तुपरिच्छेदः, अयं च वस्त्वन्तरमिथ्यात्वेनैव निर्वाह्य इत्यभिप्रायेण सामर्थ्यादिति । वस्तुपरिच्छेदस्त्विति । इदमिदं न भवतीत्येवं रूप—एवं प्रतीयमानो भेद इत्यर्थः, सर्वेषामित्विति। भेदाभावप्रयुक्त

सम्भवति , तत्राद्यः पक्षोऽभ्यर्हितविरोधानामर्हन्मताहार्णां भास्करादीना-
मेव युज्यते। अन्तिमस्त्वर्थो लोकायतिकाना निरीश्वरमीमासकादीनाम् ।
अतो मध्यम· पक्ष परिशिष्यते । न च वाच्य वस्त्वन्तराभावे तन्नि-
रूपितपरिच्छेदाभावेन तन्निरूपणीयवस्तुपरिच्छेदाभावो दुर्वच इति ;
वस्तुपरिच्छेदाभावेन वस्तुपरिच्छेदाभावो दुर्वच इति स्ववचनव्याघा-
तात् । ननु प्रत्यक्षाद्यविरोधेन वस्तुपरिच्छेदाभावो वर्णनीयः, अन्यथा
प्रागुक्तपक्षयोरपि प्रतिक्षेपायोगात् , शक्यते चाविरोधेन निर्वहणम् ,
तथा हि-वस्तुना परिच्छेदो वस्तुपरिच्छेद -यथा कुड्यादिभिरालोकादेः,
स चास्य नास्तीति वस्तुपरिच्छेदरहित ब्रह्मेति , तदसत् , देशपरि-
च्छेदादीदृशस्य वस्तुपरिच्छेदस्य विशेषाभावात् । स्वतः परिमितदेशा
घटादयः, आलोकादयस्तु प्रसृमरतया स्वतोनेकदेशव्यापिनोपि कुड्यादि
भिरुपाधिभि· परिच्छिद्यन्ते, इह तु कथ परिच्छेद इति चेन्न,—तथा-

---

त्रिशिष्टाभावकोट्यभिप्रायेणोक्तम् । अभ्यर्हिते ति । तादात्म्य हि भदसहिष्णव
भेदः , स च सप्तभङ्गीवादवद्विरोध बहुमन्यमानाना भास्करादीनामेव
युज्यत इत्यर्थः ।

भावाभावसमावेशप्रसङ्गो विरोध , स च तैरिष्टप्रसङ्गत्वेन स्वीक्रियत
इति तस्य तैर्बहुमतत्वम् । अत्यन्ताभेदपक्षस्तु स्वप्रवृत्तिव्याघातेन सयौक्तिकाभासै
रप्यनभ्युपगत इति वक्ष्यमाणत्वाच्छङ्कानर्ह एवेति भाव· । असद्व्यावृत्तस्वरूपाङ्गी
कारात् तत एव परिच्छेदतदभावौ सुनिरूपावित्यभिप्रायेण परिहरति वस्तुपरि
च्छेदाभावेने ति ।

ननु प्रत्यक्षे ति । सति सम्भव इति भावः । [ शक्यते चेति—
चस्त्वर्थः । विशेषाभावा दिति । गूढाभिसन्ध्युत्तरम् । अभ
दोक्तिभ्रमाभिसन्धिमजानानश्चोदयति स्वत इति । अभिसन्धिमुद्घाटयति तथापी

प्यदूरविप्रकर्षेण पृथक्प्रतिपादनप्रयोजनाभावात् । एतेन वस्तुपरिच्छेदो वस्तुन. परिमाण देशपरिच्छेदस्तु तत्कार्यं—इति विभागोपि प्रत्युक्तः । न च वाच्यं इदमिद न भवतीति [प्रतिषेधो] परिच्छेदो वस्तुपरिच्छेदः, स च सर्वशरीरिणो न सम्भवतीति । 'अस्थलमनण्वहूस्व' मित्यादिनिषेध शतश्रवणात् । अन्यथा चिदचिदीश्वरस्वरूपविवेकाद्यनुपपत्तेश्च । न च सर्ववस्तुसामानाधिकरण्ययोग्यत्वेनेदमिदं न भवतीति निषेधैकान्त्याभावा द्वस्तुपरिच्छेदाभाव इति वाच्यम् , अमुख्यसामानाधिकरण्यस्यान्यत्रापि सम्भवात् , " आपो वा इदँ सर्व " मित्यादिवत् । मुख्यसामानाधिकरण्यस्य तु ब्रह्मणोपि सर्वत्रासम्भवात् । न हि शरीर ब्रह्मेत्यादिसामानाधिकरण्यं दृष्टं इष्ट श्रुतं वा । एवमूहान्तरेष्वपि दूषणमूहनीयम् । ततश्च स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वादेव ब्रह्मणो वस्तुपरिच्छेदाभाव इति ।

अत्रोच्यते । शास्त्रप्रत्यक्षयोर्विरोधे प्रत्यक्षप्राबल्य तावत् स्थित मन्यत्र । अत एव अनन्तपदश्रुत्यन्यथानुपपत्त्यापि न प्रत्यक्षादिविरुद्धं

---

ति । एतेने ति । द्रव्यस्य परिमाणाभाव एव विभुत्वमिति भावः । **निषेधैकान्त्यम्**-इदमिद नेति प्रतिषेधयोग्यत्वे सति सामानाधिकरण्यायोग्यत्वम , **स एव** वस्तुपरिच्छेद', तदभावोऽपरिच्छेदः, इद च सामानाधिकरण्ययोग्यत्वे पर्यवसित मिति तदेव सामानाधिकरण्यं किममुख्यसाधारण विवक्षितं उत मुख्यमेवेति विकल्पमभिप्रेत्य दूषयति अमुख्यत्या दिना । असम्भवा दिति । शरीरशरीरिभावस्य ब्रह्मणो देवादिशब्दवाच्यत्वस्य चासिद्धेरिति भाव । अभ्युपेत्याप्याह **नही ति** । ऊहान्तरष्वि ति । स्वतन्त्रवस्त्वन्तरासम्भव , उत्कृष्टवस्त्वन्तराभाव', असख्यातगुणत्व मित्यादयः । लाघवाद्वस्त्वन्तरसद्भाव एव परिच्छेद इत्याद्ययोर्निरास । असख्यातत्वन्तु गुणगतमिति न ब्रह्मणोऽनन्तत्वसिद्धिः । तावतैव तदनन्तत्वव्यपदेश औपचारिकत्वप्रसङ्ग. ।

प्रपञ्चमिथ्यात्वं सुसाधम् । अतो भवदभिमतवस्तुपरिच्छेदाभावो दुरुपपादः । भास्करादिपक्षेपि सर्ववस्त्वैक्ये सत्यपि भेदस्यापि विद्यमानत्वात्परिच्छेदनिषेधोनुपपन्नः , अन्यथा भेदाभेदस्यापि विलयप्रसङ्गात् । केवलाभेदपक्षस्तु सर्वव्यवहारविलोपप्रसङ्गेन यौक्तिकाभासैरपि नाभ्युपगम्यते । अभेदमात्रमस्तीत्येतावता वस्तुपरिच्छेदाभाववचनं त्वमुख्यम् ।

यत्तूक्त-वस्तुना परिच्छेद इति पक्षे वस्तुपरिमाणपक्षे च देशपरिच्छेदात् पृथग्व्यपदेशप्रयोजनं नास्तीति । तदयुक्तम्, विरुद्धार्थप्रतिपादनादत्रप्रयोजनार्थप्रतिपादनस्यैव वरिष्ठत्वात् । भवत्पक्षेपि वस्तुपरिच्छेदाद्देशकालपरिच्छेदयोरनतिभेदेन पृथग्व्यपदेशप्रयोजनाभावप्रसङ्गः । यदा हि स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वेन वस्तुपरिच्छेदाभावः तदा देशकालयोरेवाभावात्तदधीनपरिच्छेदस्याप्रसक्तत्वेन तन्निषेधो निरर्थकः । यदि पुनः त्रयाणां परिच्छेदानां स्वरूपभेदात् घटादिषु च दृष्टेरत्र तन्निषेध इति, तत्परोक्तयोरप्यर्थयोः समानमेव ।

---

अत इति । मिथ्यात्वस्य स्वयमेव बाधितत्वान्न त्वदभिमतवस्तुपरिच्छेदाभावोपपादनं तेन शक्यमित्यर्थः ।

ननु भास्करादिमते प्रपञ्चस्य मिथ्यात्वाभावान्न प्रत्यक्षादिविरोध इत्याकाङ्क्षायामाह भास्करादीति । अन्यथेति । भेदस्याभावे । अपि शब्देन तदस्यन्ताभिमतिः सूच्यते ।

ननु आनन्त्यश्रुतिसिद्ध्यर्थं विलयोप्यस्तु, तत्राह केवलेति। सर्वेति। नित्यब्रह्माभेदेन सर्वस्य नित्यत्वात् किञ्चित्प्रयोजनोद्देशेन प्रवृत्तिर्न स्यादित्यर्थः । यौक्तिकाभासैरप्यस्वीकृतं कथं वैदिकाभासैः स्वीकार्यम्, आमुष्मिकप्रवृत्तेरपि विरोधादित्याशयेनापिशब्दः । ननु सत्यपि भेदे तदभावात्मकाभेदस्य सत्त्वात् भेदस्य वस्तुपरिच्छेदाभाव इत्यत आह अभेदेति । भेदाभावमात्रान्नापरिच्छेदः-अन्यथा अपरिच्छिन्नब्रह्माभेदात् घटादेरप्यनन्तत्वप्रसङ्गात् , तत्र च पटभेदसहचरितत्वात् विद्यमानोप्यभेदो नापरिच्छेदः, भेदासहचरितस्यैव तस्यापरिच्छेदशब्दार्थत्वादिति वाच्यम्, तथाचाभेदमात्रे परिच्छेदाभाववचनं अमुख्यमित्यर्थः । परिच्छेदयोरित्यनन्तरं चकारोऽध्याहार्यः ।

यच्चोक्तं सर्ववस्तुसामानाधिकरण्ये मुख्यामुख्यविकल्पेन दूषणम्, तदपि मन्दम् ; स्वव्यतिरिक्तसमस्तद्रव्यशरीरिणस्तद्द्रव्यवाचिभिरनिष्कर्षकैः शब्दैः प्रतिपादने विवक्षिते दोषकथाभावात् । ततश्चात्र वस्तुपरिच्छेदो नाम स्वस्मात्पृथक्सिद्धाद्वस्तुनो भेदः, स च सर्वप्रकारस्य ब्रह्मणो न सम्भवतीति, स्वरूपभेदमात्रस्य निषेधो निषेधशब्दस्थत्वाद विवक्षित एवेति विवेकानुपपत्तिचोद्यं नावतरति । अयन्त्वर्थः प्रत्यक्षाद्यविरुद्धश्रुतिस्मृतिसूत्रानुगृहीतश्चेत्ययमेवारम्भणाधिकरणभाष्ये प्रदर्शितः । यथा—"भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतः परिच्छेदोऽपि न विद्यत" इति ।

नन्वेवमपि सर्वविधपरिच्छेदनिवृत्तिर्न सिध्यति, स्वरूपविवेकदशायामिदमिदं न भवतीति परिच्छेदस्य विद्यमानत्वादिति चेत्; सत्यम्, तथाविधवस्तुपरिच्छेदस्य श्रुतिभिरेव प्रतिपाद्यमानत्वात् , विश्वमिथ्यात्व पक्षेपि ततः परिच्छेदोक्तेः त्वयाभ्युपेतत्वाच्च तन्निषेधो न शक्यः । यदि च वस्त्वन्तराभावाद्वस्तुपरिच्छेदाभाव उच्यते, तर्हि भवत्पक्षे घटादेरपि वस्त्वन्तराभावात्तत्सिद्धि स्यात् । ब्रह्माख्यं वस्त्वन्तर तस्य विद्यत इति चेन्न ; तत्स्वरूपसद्भावेपि तयोर्भेदस्य मिथ्यात्वेन तस्य वस्त्वन्तरत्वा—

---

तदपी ति । मुख्यसर्ववस्तुसामानाधिकरण्याईत्व वस्त्वपरिच्छेद., "ब्रह्मात्मा शरीर" मित्यादिभिश्च सर्वस्य ब्रह्मशरीरत्वेन ब्रह्मप्रकारत्वात् प्रकारवाचिना च प्रकारिपर्यन्तत्वस्याकृत्यधिकरणासिद्धत्वाच्च न तदसम्भवः , न च कैश्चित् शब्दैरसामानाधिकरण्यात्तदभावः, अनिष्कर्षकैस्तद्वाचिशब्दैः सामानाधिकरण्यादित्याशय. । तदर्हत्वञ्च स्वतन्त्रवस्तुभेदाभाव इत्यभिप्रायेण परिच्छेदस्वरूपमाह ततश्चे ति । भाष्यमुदाहरति भेदवादिनस्त्वि ति। स्वत इति वस्तुपरिच्छेदाभावो विवक्षितः, तत्र हेतुः सर्वप्रकारत्वा दिति । अस्य हेतुत्वेनाभिधानात् , पृथक्सिद्धवस्तुभेदो वस्तुपरिच्छेद इत्युक्तं भवति । परत इति तत्कार्यभूतदेशकालपरिच्छेदाभावो विवक्षित. । तत इति । अनृत-

योगात् , व्यावहारिकं वस्त्वन्तरत्व तस्य नियत इति चेत्तद्ब्रह्मापेक्षया घटादेरपि समानम् । न च तदपेक्षया ब्रह्मणः परिच्छेदोऽपि मिथ्याभूतः; जडाजडैक्यप्रसङ्गादेरन्यत्रोक्ते. । स्वसजातीयवस्त्वन्तरसद्भावो वस्तुपरि–च्छेद इति विशेष इति चेन्न,—यथाकथञ्चित्सजातीयत्वविवक्षाया प्रका शमानत्व दिरूपेण ब्रह्मणः सजातीयस्याविद्यादेर्विद्यमानत्वात् । नचा-विद्यादेरवस्तुत्वेन परिहार., घट देरपि समानत्वस्योक्तत्वात् । नहि घटा द्यपेक्षया वस्तुत' सजातीयत्वादिक ब्रह्मण. । घटादिस्वरूपस्यापि मिथ्या-त्वाद्विशेष इति चेत् , किमतः? मिथ्यात्वेपि घटादेः पटत्वाद्यभाववद्वस्तु परिच्छेदभावस्यापि सिद्धे. । अस्त्वेवम् , तथापि सत्यस्य ब्रह्मणोपि तत्सिद्धिरस्त्विवेति चेन्न,-इतरवैलक्षण्यार्थानि सत्यज्ञानानन्तपदानीति स्व सिद्धान्तभङ्गप्रसङ्गात् । सर्वथा सजातीयवस्त्वन्तरसद्भावो वस्तुपरिच्छेद इति तदभावविवक्षाया प्रपञ्चसत्यत्वेपि न कश्चिद्दोषः । ब्रह्मणस्तद्विभूति प्रपञ्चेन अत्यन्तसाजात्याभावस्य ब्रह्मलक्षणादिवशादेव सिद्धे. ।

---

जडपरिच्छिन्नावत्रेकस्य परेणापि वाच्यत्वादित्यर्थः । नहि घटा दीति । सजातीय त्व विशिष्टत्वेन ब्रह्मणोऽपि वस्तुत्व नास्तीत्यर्थः ।

ननु सजातीयनिष्ठवस्तुभेदप्रतियोगित्वरूपं सजातीयवस्त्वन्तरवत्त्व परि-च्छेद., तस्य मिथ्यात्वात् ब्रह्मणः सत्यत्वात् ब्रह्मणि तदभावोऽस्ति , घटे तु ता-दृशप्रतियोगिमिथ्यात्वेऽपि घटस्यापि मिथ्यात्वान्न तत्र तदभावः , मिथ्याभूतस्य ह्यधिष्ठान एवाभावः , न तु स्वसमानसत्त्व के स्वाश्रयेऽपीति शङ्कते घटा दीति । स्वरूपस्यापी ति । भेदप्रतियोगित्ववदिति भावः । मिथ्यात्वेऽपी ति । मिथ्या त्वेऽपि घटस्य तत्र पटत्वाभावस्तत्र विरोध्यसन्निधानादेव, ततश्च सजातीयवस्तु निष्ठ भेदप्रतियोगित्वस्य मिथ्यात्वेन तत्र पारमार्थिकाभाव प्रत्यविरोधित्वात्, अभावाधि करणत्व च विरोध्यसन्निधानस्यैव प्रयोजकत्वात्पटत्वाभाववत्परिच्छेदाभावोपि स्यादित्यर्थ. । अस्त्वेव मिति । यद्यपि त्वदुक्तरीत्या सत्यत्वमभाववत्त्वे न प्रयो

किञ्च—देशकालपरिच्छेदाभावोऽपि न घटादिव्यावर्तकः, सत्यदेश कालपरिच्छेदस्य घटादावप्यभावात्, मिथ्यादेशकालपरिच्छेदस्य ब्रह्मण्यपि विद्यमानत्वस्य भवतैव स्वीकारात्।

किञ्च—देशकालपरिच्छेदाभावो न देशकालयोः स्वरूपनिषेधगर्भः, वस्तुपरिच्छेदाभावेनैव तत्सिद्धेः; तद्वद्वस्त्वन्तरस्वरूपे सत्येव तत्प्रयुक्त परिच्छेदाभावो वर्णनीयः, अन्यथा वैरूप्यात्; सम्भवतश्चैकरूप्यस्य परित्यागायोगात्, सम्भवति तदस्मत्पक्षे सर्वेषु वस्तुषु यथाप्रमाणमवस्थितेष्वेव प्रतिघातपरिणामपृथक्सिद्ध्यादिलक्षणपरिच्छेदस्य प्रतिक्षेपात्।

किञ्च—अनन्यथासिद्धानेकश्रुतिगणप्रतिपन्नस्य ब्रह्मविभूत्यादेरनेकार्थसाधारणैकानन्तपदस्वारस्यानुरोधाय[धेन] बाधो न युक्तः। तदनुरोधे नैवत्वेकानन्तपदस्वारस्यं सङ्कोचनीयम्। ततश्च प्रत्यक्षाद्यविरुद्धाविविध परिच्छेदाभाव एवात्र विवक्षित इत्यङ्गीक्रियताम्। अन्यथानन्तपदश्रुत्य सङ्कोचाय संख्यातोऽपि परिच्छेदाभावस्वीकारेण ब्रह्मबहुत्वप्रसङ्गात्। एकत्वश्रुतिवशाद्वस्तुपरिच्छेदाभावेनान्योन्यव्याघाताच्च तत्परित्याग इति चेत्तर्हि प्रपञ्चसत्यत्वप्रतिपादकप्रत्यक्षश्रुत्यादिवशात्तत एव व्याघाताद्देश

---

जकम्, तथाप्यविरोधीत्यभिप्रायेणासत्यत्वकीर्तनम्। स्वीकारादिति। जीवस्य मिथ्यात्वस्वीकारात् तस्य च प्रतिबिम्बस्य ब्रह्माभिन्नत्वात् घटाद्यपरोक्षज्ञानस्य च वृत्त्यवच्छिन्नचैतन्यरूपस्योत्पत्तिविनाशस्वीकारादित्यर्थः। वस्तुपरिच्छेदाभावेनेति। तथा च देशकालयोः सतोरेव सर्वदेशकालसम्बन्धात् तत्कृतपरिच्छेदाभावाद्देशकालपरिच्छेदो वाच्यः, तद्वैरूप्यार्थं तद्वस्तुपरिच्छेदाभावोऽपि देशकालयोः सतोरेव वाच्य इत्यर्थः। स्वारस्यानुरोधे नेति। वस्त्वन्तरभेदमात्र वस्तुपरिच्छेद इत्यभ्युपगमवादः। तत एवेति। अनन्तशब्दार्थवस्तुपरिच्छेदाभावयोर्व्याघातादित्यर्थः।

वस्तुपरिच्छेदाभावोपि परित्याज्य एव । यदि च त्रिविधपरिच्छेदाभावे वश्यमभिसन्धिः, तर्ह्यविरुद्धः परिच्छेदाभावोऽत्र स्वीक्रियताम् । सम्भवन्ति चान्येपि व्यवच्छेद्याः परिच्छेदभेदाः वस्त्वन्तरप्रतिघातवस्तुपरिमाणस्वतन्त्रवस्त्वन्तरसद्भावादयः । एवं वास्तु[वस्तु]परिच्छेदाभाव— उत्कृष्टेन वस्तुना उत्तरावधिभूतेन परिच्छिन्न ह्यपकृष्ट वस्तु, तथाविधो पकर्षो ब्रह्मणो नास्तीति । अस्मिश्चार्थे विवक्षिते तस्य सर्ववस्तुशरीरित्वेन सर्वात्मकत्वमप्यन्तर्गतं भवति । एव सति “ उल्लङ्घितत्रिविध— सीमसमातिशायिसम्भावनं तव परिब्रढिमस्वभाव ” मिति भगवद्यामुनाचार्यवचन गोबलीवर्दन्यायेन फलफलिनिर्देशेन वा नेतव्यम् । आरम्भणाधिकरणभाष्यमप्येतत्परमेव योजनीयम् ।

---

अस्मिश्चे ति । वस्त्वन्तरप्रतियोगिकापकर्षो वस्तुपरिच्छेदः, तदभावश्चोत्कर्षः, भावान्तरस्याभावत्वात् , स च सर्वशरीरत्वादि, तदपि तदन्तर्गत मित्यर्थः । उल्लङ्घितेत्यादि । यद्यपि परिब्रढिमा प्रभुत्वम् , ‘ प्रभौ परिबृढ ’ इति निपातनात् , तथापि तस्य धर्मिद्वारानन्तत्वान्वय इत्यभिप्रेत्येदमुक्तम् । स्तोत्र भाष्ये साक्षात्प्रभुत्वगननयैवोक्तम्—‘ देशत कालतो विषयतश्चे’ ति । प्रभुत्वस्य ब्रह्मादिवदेकाण्डादिमात्रगतत्वाभावो देशापरिच्छेदः, एतल्लोके पुण्यपापविवेक प्रभोरपि वैवस्वतस्य ‘ प्रभुरहमन्यनृणा न वैष्णवाना ’ मिति विषयविशेषादिव सङ्कोचो विषयपरिच्छेदः, तदभावो ब्रह्मादिसर्वविषयत्वमपरिच्छेद इति तत्र भेद । तत्र च न पौनरुक्त्यशङ्कापि, तिस्रो विधा यस्येति बहुव्रीहावन्यपदार्थत्वये समातिक्रमाद्दित्यस्य पृथक्वचनात् । सख्याया (इतो) उल्लङ्घनानन्वयात् गोबलीवर्दन्यायसम्भव । फले ति । त्रिविधा सीमा समातिशायिसम्भावना चोल्लङ्घिता येनेति विग्रह , तत्र सम्भावनोल्लङ्घन फलमित्याशयः । आरम्भणे ति । ‘स्वत’ इति स्वरूपमन्यापरिच्छेदः, स च देशकालाभ्याम्, ‘परत इति गुणविभूतिभ्य

अतः सिद्धं सत्यैरेव देशकालवस्तुभिरपरिच्छिन्नं सर्वदेशकाल-
व्यापि सर्वान्तरात्मभूतं सर्वमङ्गलगुणैः समस्तहेयप्रतिभटतया च सर्वस्मा
त्परं ब्रह्मानन्तपदनिर्दिष्टमिति नातः प्रपञ्चमिथ्यात्वसिद्धिरिति ॥

इति शतदूषण्यां आनन्त्यनिरूपणवादः

॥ षट्पञ्चाशो वादः ॥



---

परिच्छेदः, तदभाव एव वस्त्वपरिच्छेद इति भावः । सत्यैरेवे ति । सत्यैरेवा-
परिच्छेद उपपादयितुं शक्यः, नासत्यैः, घटस्य सत्यात्पटादिवासत्यात् शुक्तिरज
तादेरपि भेदस्य परिच्छेदरूपत्वात्, न चैतन्नास्ति,परिभाषामात्रपरिशेषापत्तेः ।

अयमत्रनिष्कर्षः —त्वया वस्तुपरिच्छेदशब्देन परिभाषितोऽन्तशब्दार्थ
इति किमभिधानकोशसिद्धम् ? उत व्यवहारसिद्धम् ? किं वा वस्तुपरिच्छेदशब्द
वदन्तशब्दोपि त्वया परिभाषितः ? आद्यौ न क्वापि दृष्टचरौ । परिभाषा तु न
निषेधामः, परन्तु श्रुतेस्तत्परिभाषापारतन्त्र्यम् ।

ननु देशपरिच्छेदस्यात्यन्ताभावरूपत्वात् कालपरिच्छेदस्य प्रागभावध्वंस
रूपत्वात् तत्र चान्तशब्दप्रयोगात् नानाशक्तिकल्पने संसर्गाभावत्वेन शक्तिकल्पने
च गौरवाच्चाभावत्वेनैव लाघवाच्छक्तिः कल्प्यते, ततश्च भेदोऽप्यन्तशब्दार्थ इति
चेत्, यद्येवं तर्हि लाघवाद्वस्तुत्वमेवान्तशब्दप्रवृत्तिनिमित्तम् ततोपि लाघ-
वात् सर्वशब्देपि वा वस्तुत्वमिति किं न कल्प्यते ? व्यवहारस्य शक्तिकल्पक
त्वात् तदनुसारेण गौरवं तिरस्कृत्य तत्तच्छब्दानां तत्तत्प्रवृत्तिनिमित्तकल्पनमिति
परिहारः प्रकृतेपि तुल्यः । [अ]भेदे अन्तशब्दप्रयोगाभावात् ।

किञ्च देशकालपरिच्छेदयोरन्तशब्दश्चरमभागार्थः, ग्रामान्तः कर्मान्त
इत्यादौ तथा दर्शनात्, क्वचित्प्रयोगबलात् अवसार्थोपि, तथा समीपार्थश्च,
प्रागभावात्यन्ताभावान्योन्याभावेषु न कश्चिदप्यन्तशब्दप्रयोगो दृष्टचरः । कथं तर्हि

सिद्धान्ते वस्तुपरिच्छेदार्थकताभिधानम् ? उच्यते, उत्कृष्ट वस्त्वपकृष्टवस्तुपरिच्छेदकतया लोकव्यवहारसिद्धम्, अतः परिच्छेदशब्दार्थतामात्रेण तदपि विवक्षितु शक्यत इत्येतावता तदङ्गीकारः, क्वचित्तदन्तर्गतस्वतन्त्रवस्त्वन्तरशून्यपरत्वाङ्गीकारश्च । अस्तु वा भेदोऽप्यन्तशब्दार्थः, अथाप्यन्तशब्दस्यानेकार्थत्वात् देशकाल परिच्छेदे तयो: प्रचुरप्रयोगाच्च अत्रापि तन्निषेध एव युक्त । नानार्थत्वाच्च न सङ्कोचगन्ध: । अस्तु वा त्वदुक्तरीत्या एकार्थत्वम्, तथापि प्रचुरप्रयोगान्मानान्तराविरोधाच्च उक्तरीत्या सङ्कोच एव युक्तः । अन्यथा "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यत" इति अन्तशब्देन कालस्यापि वस्तुपरिच्छेदाभावप्रसङ्गात् । अन्तशब्देन भेदस्याप्युक्तौ निषेधानुपपत्तिश्च, ब्रह्मणः प्रपञ्चभिन्नत्वात् । सत्यादिपदैः प्रपञ्चभेद: प्रतिपाद्यते, अनन्तशब्देन भेदनिषेधः क्रियते, इद च वाक्य तत्त्वावेदकम्, पदत्रयमपि स्वरूपलक्षकमिति कस्मादुपाध्यायादधीतोऽयं वृषलोद्वाहमन्त्र ? क्षम्यता अयमसदृष्टप्रलाप, पदद्वयमपि स्वरूपलक्षकमित्येतावदेवोच्यत इति चेत्, तर्हि आनन्त्यश्रुतितः कथ मिथ्यात्वसिद्धि ? अतः पुनरावृत्तः स एव मन्त्रः । अपि च प्रपञ्चमिथ्यात्व कथ भेदनिषेधोपपादकम् ? सत्यपदात्तानृतव्यावृत्त्युपपादकत्वात् ।

ननु प्रपञ्चस्य सत्यत्वे तद्भेदोऽपि सत्य: स्यात् । मिथ्यात्वे तु भेदोऽपि मिथ्येति निषेधोपपत्तिरिति चेन्न,—अनृतव्यावृत्तेर्मिथ्यात्वप्रसङ्गात् । सत्यादिपदाना तत्त्वावेदकत्वप्रसङ्गाच्च तेषा व्यावृत्तिपर वोक्तेः ।

ननु सा व्यावृत्ति स्वरूपात्मिका, निषिध्यमानस्तु भेदः स्वरूपातिरिक्तो मिथ्येति चेत्, तर्हि सत्य एव परिच्छेद इति कथमानन्त्यासिद्धिः ? न हि स परिच्छेदो न भवतीति राजाज्ञा, अविद्याया अपि परिच्छेदप्रसङ्गात् । तत्रापि भेदाङ्गीकारे अनवस्थाप्रसङ्गेन स्वरूपात्मकतयैव भेदस्य स्वीकार्यत्वात् ।

ननु देशकालपरिच्छेदवदयमपि परिच्छेदः अभावप्रतियोगित्वात्मक एव, अभेदप्रतियोगित्व वस्तुपरिच्छेद:, तदेवात्र निषिध्यते, न तु भेदाश्रयत्वमिति चेन्न, सदसद्विलक्षणत्व वदता ब्रह्मभेदस्य प्रपञ्चेऽङ्गीकारात् । स्वसम ।

सत्ताकभेदप्रतियोगित्व परिच्छेद इति चेन्न,—प्रपञ्चमिथ्यात्वसिद्धेः प्राक् सत्ता-भेदासिद्धेः । प्रातिभासिकसत्ताङ्गीकारेऽपि न विशेषणस्य प्रयोजन पश्यामः ।

ननु भेदप्रतियोगित्वस्य ब्रह्मणि निषेधात् विद्यमानमपि भेदप्रतियो-गित्व मिथ्यैव , एव च , तन्मिथ्यात्वस्य भेदतदाश्रयमिथ्यात्वं विनानुपपत्तेः तत्सिद्धिः , न च भेदप्रतियोगित्वस्य मिथ्यात्वमभेदप्रतियोगित्वस्य सत्यत्वेना-प्युपपन्नम् , तत्सत्यत्व चाभेदसत्यत्वाधीनम् , तच्च प्रपञ्चसत्यत्वाधीनम् , अतः प्रपञ्चसत्यत्वेनोपपन्न प्रपञ्चभेदप्रतियोगित्वमिथ्यात्व कथ प्रपञ्चमिथ्यात्व साधयेत् ? प्रपञ्चसत्यत्वेनैव वा तदुपपत्तिः, भेदप्रतियोगित्वस्यासत्यत्वे अभेदप्रतियोगित्वस्य सत्यत्वावश्यभावात् , अतोऽनन्तपद प्रपञ्चसत्यत्वस्यैव साधकमिति वाच्यम् , जडाजडयोः पारमार्थिकाभेदासम्भवादिति चेन्न,—अभेदप्रतियोगित्वस्यापारमार्थ्ये भेदप्रतियोगित्वपारमार्थ्यस्यावर्जनीयत्वात् , ब्रह्मणोऽधिष्ठानतया प्रपञ्चस्य तदभे-दाच्च । सोऽपि मिथ्येति चेत्तर्हि समानसत्ताकयोर्विरोधाङ्गीकारात्तथाविधयोरेव भेदप्रतियोगित्वाभेदप्रतियोगित्वयोरङ्गीकाराच्च पुनरावृत्तस्स एव मन्त्रः ।

ननु सत्यभूतभेदप्रतियोगित्वस्याभाव एवाभेदः, तेनाधिष्ठानत्वोपपत्तिः, अयमेव चानन्तशब्दार्थोऽपीति चेत् , तर्हि सत्यभूतभेदप्रतियोगित्व परिच्छेद इति घटादेः तदभावात् तेषामपि अपरिच्छिन्नत्वप्रसङ्गः । ब्रह्मणः प्रपञ्चभिन्नत्वात् भेदस्य च ब्रह्मस्वरूपत्वात् सत्यभूतभेदप्रतियोगित्वात् घटादेः कथं तदपरिच्छेद इति चेत् , तर्हि घटादेः पटादिभेदः परिच्छेदो न स्यात् । न चेष्टापत्तिः, अविशेषात् ब्रह्मनिष्ठभेदप्रतियोगित्वस्यापि अपरिच्छेदत्वप्रसङ्गात् । आश्रयसमान सत्ताक भेदप्रतियोगित्व परिच्छेद इति तु दत्तोत्तरम् , समानसत्तापदवैयर्थ्य-स्योक्तत्वात् ।

ननु घटादौ भेदप्रतियोगित्वस्य मिथ्यात्वात् समानसत्ताकयोर्भावाभाव योर्विरोधाच्च भेदप्रतियोगित्वाभावो मिथ्याभूतो घटादौ न सम्भवति , सत्यभूत-स्तु नास्त्येव । अनन्तपदेन कृत्स्नमिथ्यात्वावगमदशायामभेदप्रतियोगित्वाभावस्यापि मिथ्यात्वावगमात् । तस्मान्नापरिच्छेदप्रसङ्गो घटादेरिति चेत्, एव तर्हि ब्रह्मणोऽपि नापरिच्छेदसिद्धिः । भेदप्रतियोगित्वस्य तत्रापि मिथ्यात्वेन मिथ्याभूततदभावस्या

सम्भवात्, सत्यभूताभावासिद्धेश्च । अथोच्येत ब्रह्मणि भेदप्रतियोगित्वाभावः स्वरूपमेवेति, सिद्धं तर्हि घटादेरपरिच्छेदः, ब्रह्मणीव ब्रह्मस्वरूपस्य प्रतियोगित्वाभावस्य घटादावप्यवश्यम्भावात्, प्रतियोगित्वस्य मिथ्यात्वेन तदविरोधस्याविशेषात्, सद्वैलक्षण्यस्य मिथ्यात्वे प्रपञ्चसत्यत्वप्रसङ्गेन ब्रह्मण एव सद्वैलक्षण्यरूपताया वाच्यत्वेन भेदत्ववत् भेदप्रतियोगित्वाभावरूपताया अवर्जनीयत्वात् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यपरनामधेयेन रामानुजदासेन विरचितायाः
शतदूषणीव्याख्यायाः चण्डमारुताख्यायाः
आनन्त्यनिरूपणं नाम
षट्पञ्चाशः स्कन्धः ॥५६॥



॥ श्रीरस्तु ॥

॥ सप्तपंचाशो वादः ॥



ब्रह्मण्यानन्दशब्देन दर्शितां गुडजिह्विकाम् ।
निर्विशेषगृहीतानां वादिना विलुम्पाम्यहम् ॥

श्रूयते हि—" विज्ञानमानन्दं ब्रह्म " " आनन्दो ब्रह्म " " कं ब्रह्म खं ब्रह्मे " त्यादि । तत्र किमिदं ब्रह्मण आनन्दत्वं नाम? सुखत्वमिति चेत्तदपि किमिति विचारयाम. । किमनुकूलवेदनीयत्वम्? उतानुकूलवेदनत्वम्? अथानुकूलत्वमात्रम्? यद्वा दुःखनिवृत्तिरूपता मात्रम्? उत ज्ञानात्मकत्वमेव? किञ्चिद्धर्मान्तर वा? न प्रथमः, वेद नीयत्वस्यानभ्युपगमात् । व्यावहारिकं तदस्त्वितिचेत्तर्हि ब्रह्मण आनन्द त्वं व्यावहारिकमिति ब्रह्मणोऽनानन्दत्वमेव परमार्थः स्यात् । ततश्च

क्षिप्तानासुरयोनिषु प्रतिमुहुर्मूढानधोधोगता
नप्राप्यैव तु पार्यसूतपरमानन्द ततो निन्दतः ।
नैर्गुण्येन सता तदाश्रितयशसा दग्धान् सदा वादिनो
नीचान् भाति नुदन् सतां परिबृढस्त्रय्यन्तसद्देशिकः ॥
निरुपममिह वैराग्य वः क्षमा च विनिन्दथ
प्रगुणमपि यत ब्रह्मानन्द स्ततो गुणवत्तया ।
यदपि निरय मूढा न द्विष्ट भावि वय पुन
र्जनितभगवत्प्रेमाणः श्रीनिवासगुरूक्तिभिः ॥

आनन्दत्वस्य परपक्षे असम्भवं दर्शयिष्यन् तस्येष्टापादनत्वनिरासायाह श्रूयत इति । किमिद मिति । न तावत्स्वरूपम्, तथा सति हि स्वरूपमानन्दो न स्यात् ; नापि धर्मः, अनिर्वचनात्, अतो दुर्निरूपमित्यर्थः । व्यावहा- रिक मिति । वेद्यत्वस्य घटादाविव धर्मिसमसत्ताकत्वाभावान्नाभ्युपगमविरोध

व्यावहारिकदशायामनुकूलत्वं तन्निवृत्तिदशायां तन्निवृत्तिरपीति संसार-स्यैव ग्राह्यत्वं मोक्षस्य दूरपरिहरणीयत्वमिति स्यात् । यदा कदाचिदनु-कूलवेदनीयत्वं यावद्द्रव्यभाविन आनन्दत्वस्य उपलक्षणमिति चेत्तर्हि सांसारिकस्य सर्वस्यापि वस्तुजातस्य "वस्त्वेकमेव दुःखाय" "तदेव प्रीतये भूत्वे" ति श्लोकद्वयोक्तप्रकारेण कदाचिदनुकूलवेदनीयत्वस्य सद्भावाद्यावद्द्रव्यमानन्दत्वं स्यात् । ततश्च सप्रपञ्चतयैवानुभव उपा-देयः स्यात्; सहस्रवतः पञ्चशतं किमधिकमिति न्यायात् । विषयानु कूल्यानुभवदशाया ब्रह्मानन्दानुभवो न सिध्येदिति चेन्न;—तस्य नित्य स्वयम्प्रकाशत्वाभ्युपगमात् । वैशद्यावैशद्यादिदूषणं त्वन्यत्रैव । एवं वेदितु रभावादपि वेदनीयत्वासिद्धेः । व्यावहारिकदशायां तत्सद्भावमात्रमपि

---

इति भावः । व्यावहारिके ति । संसारदशायामित्यर्थः । तदि ति । संसार-निवृत्तिदशायामित्यर्थः । यथा प्रपञ्चस्य कल्पितत्वात्निष्प्रपञ्चत्वं ब्रह्मणः परमार्थ-स्तथाऽऽनन्दत्वस्य कल्पितत्वे तद्विपरीतमनानन्दत्वमेव परमार्थः स्यादिति भाव. । एतेन वृत्तिविषयत्वभावादायानुकूलवेद्यत्वमित्यापि निरस्तम् । आनन्दत्वस्ये ति । आनन्दात्मकस्वरूपस्येत्यर्थः । आनन्दत्वं स्यादि ति । उपादेयस्वरूपं स्यादि-त्यर्थः । अनुभव —ब्रह्मानुभव. । ननु अपरिच्छिन्नब्रह्मानन्दलाभात् क्षुद्रसुख रूपप्रपञ्चस्य नोपादेयतेत्यत्राह सहस्रवत इति । अधिकम्—अपेक्षितादधिक-मनपेक्षितमित्यर्थं ।

ननु अधिकब्रह्मानन्दानुभवविरोधित्वात् विषयानन्दानुभवो नोपादे इति शङ्कते विषयानुकूल्ये ति । तस्ये ति । ब्रह्मस्वरूपस्येत्यर्थः । तथा च तन्मात्रा नन्दस्य नाप्रकाश इति भावः । यद्वा ब्रह्मानन्दस्येत्यर्थः । उक्तं हि युष्माभिः "भासत एव परमप्रेमास्पदत्वलक्षणं सुखं" मिति । संसारदशायामप्यात्मनि परमप्रेमास्पदत्वप्रयोजकं सुखासाधारणं स्वरूपं भासत इति हि तदर्थः । संसार-दशायामविशदब्रह्मानन्दानुभवेऽपि विशदानुभवाभावादस्त्येव विरोध इत्यत्रा वैशद्ये ति । अतिरिक्ताकारप्रकाश एव च वैशद्यम्, तस्मिन्नप्याकारे स एव सत्यत्वमिथ्यात्वविकल्प इत्यादिना जिज्ञासानुपपत्तिवादे वैशद्यदूषणमित्यर्थः आदि शब्देनावरणानावरणारम्भाणांवानवधारणत्वादिकं तत्र तत्र दूषितमित्यर्थः दूषणान्तरमाह एव मिति । वेदनीयत्वासिद्धे न प्रथम इत्यन्वयः ।

दत्तोत्तरमेव । नापि द्वितीयः, वेदनरूपत्वातिरिक्तानुकूलत्वाभ्युपगमे निर्विशेषवादापक्रमात्, तदनभ्युपगमे व्यर्थविशेषणत्वात्, पर्यायत्वादिप्रसङ्गाच्च । भिन्नार्थत्वे विशेषणत्वाभावे च घटः पट इतिवत् अनन्वयात् । न तृतीयः, आनुकूल्यस्यापेक्षिकत्वेन किञ्चिदपेक्ष्येत्यभ्युपगम्यत्वात् भवतश्च तदयोगात् । स्वात्मानं प्रतीदमानुकूल्यमिति चेन्न,—प्रतिसम्बन्धित्वलक्षणस्वभावविशेषाभ्युपगमेऽपसिद्धान्तात्, अनभ्युपगमे तदुपाधिकानुकूलत्वस्यापि विनिवृत्तेः । अविद्याशबलितं स्वात्मानं प्रतीति चेत्तर्हि तन्निवृत्तिदशायामानुकूल्यनिवृत्तिप्रसङ्गः प्राग्वदेव । नापि चतुर्थः, औपनिषदमर्यादाबहिष्कारात्, अभावात्मकत्वप्रसङ्गाच्च ।

---

वृत्ते ति। मोक्षदशाया वेदितुरभावेनानानन्दत्वापत्त्येत्यर्थः। वेदने ति। वेदनस्वरूपातिरिक्तानुकूलत्वाभ्युपगम इत्यर्थः । व्यर्थे ति। विशेषणवाचित्वाभिमतमनुकूलपदं विशेषणाभावाद्व्यर्थमित्यर्थः । पर्यायत्वा दीति । अनुकूलवेदनपदयोरुभयोरपि स्वरूपप्रवृत्तिनिमित्तकत्वे पर्यायत्वम्, अन्यथा तु प्रवृत्तिनिमित्तान्तरस्याप्यभावादबोधकत्वमेव स्यादित्यर्थः ।

ननु वेदनानुकूलपदयोर्भिन्नार्थत्वान्न पर्यायत्वम्, नचैवं सविशेषत्वं तद्गतविशेषणवाचित्वाभावादित्यत्राह भिन्नार्थत्व इति । विशेषणवाचित्वाभावे विशेष्यतो भिन्नार्थं वाच्यम्, तथा च न सामानाधिकरण्येनान्वयः—घटः पट इतिवदिति भावः । आपेक्षिकत्वेन—पुरुषविशेषापेक्षत्वेनेत्यर्थः । विनिवृत्तेरिति । स्वरूपे प्रतिसम्बन्धित्वानभ्युपगमे तद्घटितानुकूलत्वस्याप्यभावादित्यर्थः । औपनिषदे ति । दुःखनिवृत्तेः पुरुषार्थत्व इत्यर्थः । वैशेषिकाद्यविशेष इति भावः । सुखरूपं भावान्तरमेव दुःखनिवृत्तिः, अतो नाभावात्मकमिति शङ्कते

ब्रह्मणो दुःखनिवृत्तिरेव सुखशब्दवाच्यं भावान्तरमिति चेन्न,—उदासीनावस्थाया. सर्वसम्मतत्वात् , पूर्वं निर्दु.खस्यापि शार्करादिरसास्वादजन्यसुखानुभवदर्शनाच्च । अन्यथा सुखनिवृत्तिरेव दुःखमिति वदन्तं प्रति किमुत्तरम्भवेत् । अभ्युपगम एवोत्तरमिति चेन्न,—द्वयोरपि भावरूपत्वासिद्धिप्रसङ्गात् ? भावान्तराभाववादिना नैवं चोदनीयमिति चेन्न; भिन्नोपाधिक्रोडीकरणोदासीनावस्थासङ्ग्रहासिद्धे', स्वरूपत एव निरूपण[ा]सिद्धेश्च ।

किञ्च-समस्तदुःखनिवृत्तिरूपा सुषुप्त्यवस्थामुद्दिश्य, नाहमत्र भोग्यं पश्यामीति वदन्तं प्रति भोग्यतमस्वरूपोपदेशदर्शनाद्दुःखनिवृत्त्यतिरिक्तसुखरूपमात्मस्वरूपमिति ज्ञायते । नापि पञ्चमः, 'विज्ञानमानन्दं ब्रह्मे' ति सहप्रयोगेण व्यतिरेकसिद्धे , न हीदं निखण्डुवत्पर्यायबोधनोपक्षीण सङ्कीर्तनरूप वा वाक्यम् , येन सहप्रयोगः सह्येत ।

---

ब्रह्मण इति । उदासीने ति । कदाचिद्दुःखावस्था अन्यदा तु दुःखनिवृत्त्यात्मकसुखावस्था इत्यवस्थाद्वयमेव स्यात्, नोपेक्षावस्थेत्यर्थ. । इतोऽपि न दुःखनिवृत्ति. सुखमित्याह पूर्वमिति । अन्यथा उदासीनावस्थानङ्गीकार इत्यर्थ. द्वयोरिति द्वयोरपि प्रतियोगिनिरूपणनियतनिरूपणकत्वादिति भाव.। भावान्तरेति भावान्तराभाववादिना भावयोरेव सुखदुःखयो. परस्पराभावात्मकत्वस्य वक्तव्यत्वात् उदासीनावस्थासङ्ग्रहाभावतौल्यात्, अन्यथा सुखनिवृत्तिरित्यादिचोदनद्वयस्यापीत्यादिचोदनञ्च न सम्भवतीत्यर्थ.। भिन्नोपाधी ति । न वयं सुखत्वे दुःखाभावत्व दुःखत्वेन सुखाभावत्व ब्रूम, किन्तु तत्तद्धेतुक- विशिष्टभावान्तरत्वेन, अत उदासीनावस्था सिध्यतीत्यर्थ. । एवमुदासीनावस्थासङ्ग्रहाभावप्रतिबन्दी पराकृता, द्वयोरपि भावरूपत्वासिद्धिप्रसङ्गप्रतिबन्दीमप्युद्धरति स्वरूपत इति । किञ्चे ति । 'नाहमत्रे' त्यत्र अत्र शब्देन सुषुप्त्यवस्था परामृश्यते, सा च ज्ञानेच्छादुःखादिसकलवृत्तिनिवृत्तिरूपा, ततश्च

यावता च विज्ञानत्वं ब्रह्मण. समर्थितं तावतैव हि भवताप्युपरन्तव्यम्, किमानन्दत्वोपपादनप्रयासेन । अपर्यायताबोधनिवृत्यर्थोयं प्रयास इति चेन्न,-तथाविधविवादाभावात् । तत्सद्भावेपि महता प्रयासेनापि सर्वलोकप्रसिद्धस्य पर्यायत्वस्यापि दुरपह्नवत्व त् । दु खरूपाणि च कानिचिद्विज्ञानान्युपलभ्यन्ते, तदपि ज्ञानमात्रस्य सुखरूपत्वे विरुद्धम् । भ्रान्त्या तदुपलम्भ इति चेन्न;-विरोधिनि विज्ञानात्मकत्वे प्रकाशमाने तद्विरोधिनो दु खरूपत्वस्यारोपासम्भवात् । न हि सुखरूपतया प्रकाशमाने दुःखरूपत्व कदाचिदध्यस्यति । नापि षष्ठ., बहिष्कृतानुकूल्यस्य तस्यानन्दशब्दवाच्यत्वायोगात् । तत्प्रतीकारे उक्तदूषणानु—

---

दु खाभावे ज्ञायमानेऽपि 'नाहमत्र भोग्य'मित्युक्तेर्दु.खाभावस्य भोग्यत्वाभाव उक्तः उत्तरे चात्मनो भोग्यत्वमुक्तम् , अतो भोग्यत्वेनोक्तस्यात्मनोऽभोग्यत्वेनोक्त दु.ख निवृत्तिमात्रत्व दुर्वचनमिति भावः । किञ्च ज्ञानत्वस्यैव आनन्दत्वरूपत्वे ज्ञानत्वं प्रसाध्यापि पुनरानन्दत्वसाधनप्रयासात्मकस्वप्रवृत्तिव्याघात इत्याह यावताचे ति । अपर्यायते ति । ज्ञानस्यानन्दशब्दवाच्यत्वमेव साध्यत इत्याशय । तथाविधे ति। आनन्दस्यानन्दशब्दवाच्यत्वे अविप्रतिपत्तेः, ज्ञानत्वानन्दत्वयोरभेदे ज्ञानेऽपि न तद्विप्रतिपत्तिरिति भाव । किञ्च न ज्ञानत्वमानन्दत्व दु.खेऽपि गतत्वादित्याह दु खे ति । दुःखादिकमपि ज्ञानविशेष इति स्वमतेनेदमुक्तम् । तदुपलम्भ इति। ज्ञाने दु खत्वोपलम्भ इत्यर्थः । ज्ञानत्वस्य विरोधित्वाभावादारोपसम्भव इत्यत्राह न हीति तथाच ज्ञानत्वमेव सुखत्वमित्युक्तत्वात् ज्ञानत्वे प्रकाशमाने दु खत्वारोपो न सम्भवतीत्यर्थ' ।

अस्तु यत्किञ्चिदानन्दत्वम् , आनन्दत्वेनाभिमतस्यानुकूल्यमस्ति न वा? द्वितीये दोषमाह बहिष्कृते ति । आद्ये दोषमाह तत्प्रतीकार इति । आनुकूल्याङ्गीकारेण तत्प्रतीकार इत्यर्थ. । उक्ते ति । तृतीय पक्षोक्तदूषणेनेत्यर्थः।

वृत्तेरेव दुष्टत्वात् । ज्ञानात्मकत्वातिरेकानतिरेकविकल्पेनापि दत्तमेवोत्तरं मन्तव्यमिति ।

अतो न कथञ्चिदपि निर्विशेषचिन्मात्रवादिनस्तदानन्दत्व-सिद्धिरिति ।

इति शतदूषण्यां निर्विशेषब्रह्मण आनन्दत्वभङ्गः

॥ सप्तपञ्चाशो वादः ॥



---

ज्ञानात्मकत्वेति । तदानुकूल्यं ज्ञानात्मकत्वमेव ? अतिरिक्तं वा ? अतिरेके निर्विशेषवादापक्रमाद्द्वितीयपक्षोक्तदोषः प्रसजेत् , अन-तिरेके सहप्रयोगानुपपत्त्यादि. पञ्चमपक्षोक्तदोषः प्रसजेदिति भावः ।

यदाह नवीनः—

सुखत्वं हि सुखपदप्रवृत्तिनिमित्ततयानुगतव्यवहारविषयतया व्यावृत्ता-वेव कल्प्यते , न तु सुखरूप आत्मनि, तत्र तत्कल्पने प्रमाणाभावात् , श्रुतौ सुखपदस्य वृद्धव्यवहारे वृत्त्यवच्छिन्नचैतन्यात्मनि सुखे व्युत्पन्नस्य ज्ञानादिपदवल्लक्ष-णया आत्मनि प्रयोगात् , ननु यद्यात्मनि न सुखत्वं तर्ह्यात्मा न सुखम् , तस्यैव तत्स्वरूपलक्षणत्वादिति चेन्न,— न सुखत्वं सुखस्य स्वरूपलक्षणम् , तस्य ततोन्य त्वात् , अन्यस्यान्यस्वरूपत्वायोगात् । किञ्च सुखत्वाश्रयव्यक्तौ विशेषोऽस्ति नवा ? न चेत्कथं सुखत्वव्यवस्था? व्यक्तिविशेषं विना सुखत्वस्यैव धर्म इति नियन्तुम-शक्यत्वात् , प्रथमेऽपि स विशेषो न धर्मः, तत्रापि व्यवस्थापकाभावात्, व्यक्ति स्वरूपातिरिक्तधर्मानिरूपणाच्च । ततः सुखस्वरूपमेव विशेषः, तदेव तल्लक्षणम्— गोत्वादेरिव तत्स्वरूपम् ।

नचैवं ज्ञानानन्दपदयोः पर्यायत्वमेकार्थत्वादिति वाच्यम् ,- तत्तद्वृत्ति विशेषशबलस्य तदुपहितस्य वा ज्ञानानन्दपदवाच्यत्वात् प्रवृत्तिनिमित्तभेदेनापर्याय

त्वात् । नचैवमानन्दपदलक्ष्यत्वादात्मा नानन्दः स्यादिति वाच्यम्,—छत्रिणः छत्रिपदलक्ष्यत्ववदनौपाधिकप्रीतिविषयतया आनन्दस्यैव आत्मन आनन्दपदलक्ष्यत्वेनानन्दत्वानपायात्; तस्मादनौपाधिकप्रीतिविषयो यच्चैतन्य तदेव सुखम्, तच्च दुःखानुभवदशायामपि स्वासाधारणरूपेण प्रतीयत इति न तदा प्रेमानुपपत्तिः। एतेन यदि चैतन्यमेव सुखलक्षण तदा चैतन्यस्य परेणाप्यभ्युपगमात् तदतिरिक्तस्य सिद्धान्तेऽप्यभावाच्चैतन्य सुखमिति नाममात्रं न अर्थविशेष इति प्रत्युक्तम्, आत्मातिरिक्तं सुखमिति वदतामप्यनौपाधिकप्रीतिविषयत्वमेव तल्लक्षणम्। आत्मापि चेत्तादृश कथ नात्मा सुख कथ वा न परमतात् विशेष.? प्रमाण स्वलात्मा सुखरूपो निरुपाधिकप्रेमगोचरत्वाद्व्यतिरेकेणानात्मवत्।

नन्वत्र न सुख वाश्रय इति प्रतिज्ञार्थः, केवल आत्मनि तदभावात्, अत एव न सुखत्वविशिष्टाभिन्न इत्यर्थ, केवलस्य सुखत्वविशिष्टाभेदे केवलेऽपि तत्प्रसङ्गात्, नापि दुःखान्यत्व साध्यम्, सिद्धसाधनात्, नापि दुःखविरोधित्व दुःखात्यन्ताभावत्वेनार्थान्तरत्वादिति चेन्न, निरवयवसुखपदवाच्याभेदस्य साध्यत्वात्, अत्र स्वमते वृत्तेरपि सुखपदवाच्यत्वादभेदसाधने बाध इति निरवयवेत्युक्तम्, वस्तुतस्त्वेतद्विशेषण विनापि बाधितसुखपदवाच्याद्य विहायाबाधितस्वरूपसुखभेदाभावमादाय साध्य सिध्यति, तथा च न बाधपरिहाराय विशेषणम्, किन्तु सुखपदवाच्यवृत्तिभेदस्य साध्यव्यतिरेकस्यात्मनि सत्वेऽपि हेतुव्यतिरेकाभावात् तत्र व्यतिरेकव्यभिचारपरिहाराय, न च निरवयवसुखपदवाच्यसुखत्वभेदोऽप्यात्मन्यस्तीति व्यतिरेकव्यभिचारस्तदवस्थ इति वाच्यम्, वृत्तिविशेषानुगतात्मस्वरूपसुखस्यैव सुखानुगतबुद्धिविषयतया सुखत्वरूपत्वेन तस्य तद्भेदाभावात्; यद्वा परमप्रेमास्पदताप्रयोजकरूपाभेद साध्य इति।

तदसत्—परमते हेतोः स्वरूपासिद्धेः, अह भूयासमित्यत्राहमर्थस्यैव निरुपाधिकप्रेमगोचरत्वदर्शनात् सुख मे भूयादित्यत्राप्युक्तरत्यादिमतो लोकप्रसिद्धस्य सुखत्वाश्रयस्यैव निरुपाधिकप्रेमगोचरत्वदर्शनात्। नचोभयत्रापि सुखस्वरूपचैतन्याभेदादेव प्रेमेति वाच्यम्, अद्यापि त्वदभिमतात्मनः सुखत्वासिद्धेः सादिग्ध व्यभिचारात्। अत एवाहमर्थे व्यभिचारः।

किञ्च—सुखपदवाच्या हि वृत्तिरेव, तस्यामेव प्रवृत्तिनिमित्तयोगस्य त्वयाभिधानात्, चैतन्यस्य प्रवृत्तिनिमित्तयोगाभावात्, सुखवृत्तितादात्म्यमात्राध्यासाद्योगाभावात्, सुखवृत्तितादात्म्याध्यासात् सुखपदवाच्यत्वे शुक्तेरपि रजतपदवाच्यताप्रसङ्गात्, तथा च साध्याप्रसिद्धिः, सुखरूपत्वासिद्धावपि सुखस्वरूपत्वसिध्या अर्थान्तरत्वञ्च । द्वितीयसाध्यमप्यनुपपन्नम्, परमप्रेमास्पदताप्रयोजकरूपाभेदेऽपि परमप्रेमास्पदत्वासिद्धेरर्थान्तरत्वात् ।

किञ्च—मोक्षदशाया ब्रह्मण. उपादेयत्वसिध्यर्थं हि श्रुतिरानन्दत्वं प्रतिपादयति, तत्रापि स्वरूपमात्रस्य स्वप्रकाशादिसिद्धत्वात् तावन्मात्रप्रतिपादनेऽप्युपादेयत्वासिद्धेः सत्यज्ञानादिपदैस्तत्सिद्धेश्च न तस्य प्रतिपाद्यता । धर्मप्रतिपादने चाद्वैतहानिः । धर्मस्य मिथ्यात्वे तु कल्पितप्रपञ्चाधिष्ठानस्य ब्रह्मणः परमार्थतो निष्प्रपञ्चस्वरूपत्वात् कल्पितानन्दत्वपरमप्रेमास्पदताकस्य ब्रह्मणः तद्विपरीतस्वरूपं परमार्थः स्यात् । तदिदमुक्तं प्रथमविकल्पदूषणे "ब्रह्मणोऽनानन्दत्वमेव परमार्थः स्या" दिति । यच्च सुखत्वाश्रयव्यक्तौ विशेषोऽस्ति नवेत्यादि, तन्न, तत्र विशेषो यदि भेदः, सोऽस्त्येव, तत्स्वरूपस्य तदितरसमस्तभिन्नत्वात्, यदि सुखत्वाश्रयप्रयोजको धर्मविशेषः, स नास्त्येव । न चैवं सुखत्वाव्यवस्थापत्तिः, स्वरूपविशेषेऽपि तत्पर्यनुयोगस्य सुशकत्वात् । यच्च ज्ञानानन्दपदयोरपर्यायत्वसाधनम् तदपि न सुखात्मकवृत्तौ ह्यनुगतव्यवहारनिमित्तमानन्दत्वमधिष्ठानसुखस्वरूपमेवेति त्वयोक्तम्, तथा ज्ञानत्वमपि । अतो ज्ञानत्वानन्दत्वयोरभेदात्स्यादेव पर्यायत्वम् । "विज्ञानमानन्द" मित्यादौ आनन्दपदलक्ष्यत्वेऽनानन्दत्वापत्तिश्च । न च छत्रिपदलक्ष्यत्वेऽपि छत्रित्ववदानन्दपदलक्ष्यत्वेऽप्यानन्दस्वरूपानपाय', तत्र छत्रिणोऽपि गमनस्य प्रमाणान्तरसिद्धत्वादजहल्लक्षणा, अत्र तु न स्वरूपमानन्द इत्युक्तं प्रमाणान्तरमस्ति ।

किञ्च आनन्दत्वस्य वृत्तिगतप्रवृत्तिनिमित्ततया तव वृत्तेरेव विशेष्यत्वात् जहल्लक्षणैव । न च तदभेदाध्यासाच्चैतन्यमपि वाच्यम्, दुःखपदेऽपि वृत्यवच्छिन्न

चैतन्यस्य वाच्यत्वापत्तिः । अजहल्लक्षणाया मुख्यत्वात्तात्पर्यमेव सुखपदवाच्य वृत्त्यवच्छिन्नचैतन्यमिति चेन्न,—लक्षणामुख्यत्वाय शक्तिगौरवस्यान्याय्यत्वात् । किञ्च एवं शक्तिकल्पनायामपि आनन्दत्वं वृत्तावेव न चैतन्य इति कथं तदानन्द स्वरूपम् ?

एतेन लाघवेनानन्दपदस्य विशेष्यस्वरूपलक्षकत्वात्तदेव ब्रह्मानन्दस्वरूप मित्यत्र प्रमाणमिति निरस्तम् । यच्चानौपाधिकप्रीतिविषयत्वमेव सुखलक्षणम् तच्चात्मन्यपीति, तन्न, अनौपाधिकत्वं यद्यन्येच्छानधीनत्वं तदा तवाहङ्कारेति व्याप्तिः । यद्यन्यसम्बन्धानधीनत्वम्, तदा चैतन्ये असम्भवः, अहमर्थसम्बन्ध प्रयुक्तत्वात्तत्र प्रेम्णः, सर्वेषामपि हि अहं भूयासं मम सुखं भूयादिति स्वान्तःकरणा वच्छिन्नचैतन्ये स्वसम्बन्धिसुखे च निरुपाधीच्छा भवति, न तु देवदत्तो भूयात् तत्सुखं भूयादिति ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां निर्विशेषब्रह्मण आनन्त्यभङ्गः

**सप्तपञ्चाशः स्कन्धः ॥५७॥**



॥ श्रीरस्तु ॥

॥ अष्टपंचाशो वादः ॥



पूर्ववृत्तचतुष्केपि पूर्वत्वेनोपवर्णिते ।
नित्यानित्यविवेकेऽत्र नित्यत्वं वो निरस्यते ॥

श्रूयते हि " नित्य विभुं सर्वगतम् " " नित्यो नित्याना " मित्यादिभिरात्मतत्वनित्यत्वम् । तद्भवत्पक्षे नोपपद्यते, ब्रह्मव्यतिरिक्तमविद्याकालादिकं स्वरूपतोपि सर्वमनित्यं ब्रह्मैकमेव नित्यमिति हि वः सिद्धान्तः । तदेतत् ब्रह्मासाधारणनित्यत्वं किं सर्वकालसत्तारूपम्? उत कालावच्छेदनिवृत्तिरूपम्? अथवा प्रध्वंसरहितत्वम्? आहोस्तिदबाधितत्वम्? उत निर्विकारत्वम्? यद्वा उभयावधिरहितत्वम्? किञ्चिद्धर्मान्तरं वा? नाद्य., अविद्याया अपि नित्यत्वप्रसङ्गात् । सापि हि सर्वेण कालेन सम्बध्यत एव, सर्वस्यापि कालस्य तत्कार्यत्वाभ्युपगमेन तदसम्बन्धा-

पूर्ववृत्ते ति । मुमुक्षापर्यन्त हि साधनचतुष्टयान्तर्गत सर्व नित्यानित्य-वस्तुविवेकसाध्यम्, अतो नित्यत्वसिद्धावेव नित्यानित्यवस्तुविवेकपूर्वक पूर्ववृत्त-चतुष्क सिद्धयति, तच्च नित्यत्व त्वन्मते न सम्भवतीति शास्त्रारम्भ एवोच्छिद्येतेति भावः ।

श्रूयते हीति । तथा च श्रुतिसिद्धत्वान्नित्यत्वानुपपत्तौ नेष्टप्रसङ्ग इति भावः । वक्ष्यमाणाविद्याकालातिव्याप्त्यादिदूषणोपयोगितया वा ब्रह्मव्यतिरिक्त मिति । ब्रह्मणोऽपि तत्तद्वृत्त्यवच्छिन्नसविद्रूपेणानित्यत्वात्तद्व्यावृत्त्यर्थमाह स्वरूपतोपी ति । वः सिद्धान्त इति । नित्यानित्यविवेकपूर्ववृत्तत्ववादिना व इत्यभिप्रायेण व इत्युक्तम् । तत्कार्यत्वे ति । तदुपादेयत्वाभ्युपगमेनेत्यर्थः ।

नुपपत्तेः । सापि कदाचिन्निवर्त्तिष्यत इति चेत् किमनेन ? तन्निवृत्तौ तदुपादानकालावस्थानायोगात् तदसम्बद्धकालासिद्धेः । सर्वकालसम्बन्धे सत्यपि सर्वकालसत्ता नास्तीति विशेष इति चेत्तर्हि नित्यत्वलक्षणे सर्वकालपदवैयर्थ्यम् , सत्तैव नित्यत्वमित्येतावतैव ब्रह्मव्यतिरिक्तसर्वव्यवच्छेदात् । नचैवमस्त्विति वाच्यम् ;—सच्छब्दनित्यशब्दयोरपर्यायत्वेनैव प्रसिद्धेः। अतः सर्वस्मिन् काले स्वरूपलाभमात्रमेव नित्यत्वं

---

नन्वविद्यानिवृत्तिरपि कदाचिद्भविष्यति , तत्काले च नाविद्येति न सर्वकालसम्बन्धित्वमिति शङ्कते सापी ति। किमनेने ति। कदाचिन्निवर्तिष्यत इति वचनमपार्थमित्यर्थ.। तन्निवृत्तावि ति। उपादानोपादेययोरभेदादिति भावः।

न च तयोस्तादात्म्यमेव , तच्च भिन्नत्वेसत्यभिन्नसत्ताकत्वमिति वाच्यम्,—भेदाङ्गीकारेऽवयविवादप्रसङ्गात्, तादात्म्यस्य निरस्तत्वाच्च । किञ्च यद्यविद्यानिवृत्त्यनन्तरं तदधीनकालस्य निवृत्तिः, तदा कालनिवृत्त्यधिकरणकालान्तरस्वीकारप्रसङ्गः ।

नन्वविद्यानिवृत्त्यनन्तरकाले कालनिवृत्तिं च ब्रूमः किंत्वविद्यानिवृत्तिदशायामपि कालो वर्तते निवर्तते चेत्येव ब्रूम इति चेत् , यद्यविद्यानिवृत्तिजन्या कालनिवृत्तिर्न स्यात् तदाविद्यया सहैव कालस्तत्त्वज्ञानान्निवर्तेत, नैव वा निवर्तेत, यद्यविद्यानिवृत्तिजन्या तदा तदुत्तरकालोऽवश्यमङ्गीकर्तव्यः, उत्तरकाल विना तदसम्भवात् । किञ्च अविद्यासम्बद्धावरणादेर्नित्यत्वप्रसङ्गः सर्वथा दुस्तरः । न सर्वकालसत्तेत्य नेन सर्वकालसम्बन्धो विवक्षितः, किंतु सर्वकालसत्यत्वमिति शङ्कते सर्वकाले ति । नित्यत्वलक्षणे—नित्यत्वात्मके ब्रह्मासाधारणधर्मे इत्यर्थः।

ननु सत्तामात्रे विवक्षिते नित्य इति व्यवहाराभावात् सन्नित्यशब्दयोः पर्यायत्वप्रसङ्गाच्च सर्वकालसत्त्वमेव नित्यशब्दार्थः, अतो न वैयर्थ्यमपीत्यत्राह अत. सर्वस्मिन्नि ति। व्यवहारापर्यायत्वाभ्या सर्वकालप्रवेशे आवश्यके सत्यत्वांशो

वक्तव्यम् , तच्चाविद्यायामपि समानमिति न ततो विवेकः । न द्वितीयः, कालस्यापि तत्सद्भावेन ततो विवेकासिद्धेः । न हि कालः कालान्तरेणावच्छिद्यते, तथा सत्यनवस्थानात् । नापि स्वेन, कर्मकर्तृविरोधात् । न च स्वतः पूर्वापरभावेनावस्थितैः स्वांशैरवच्छिद्यत इति वाच्यम्,—तथा सति वस्तूनामिव कालस्यापि क्षणिकत्वादिप्रसङ्गात् । समस्तस्वांशसमुदायावच्छेदान्न दोष इति चेत् , तत्र कोऽयमवच्छेदो नाम ? किं तत्सम्बन्धित्वमात्रम् ? किं वा तत्पूर्वोत्तरकालयोरविद्यमानत्वम् ? उत तत्समकालभावित्वम् ? यद्वा तदात्मकत्वमेवेति । आद्ये ब्रह्मणोऽप्यनित्यत्वप्रसङ्गः, तत्सम्बन्धस्यावर्जनीयत्वात् , तन्मिथ्यात्वात्तत्परिहारे घटादेरपि नित्यत्वप्रसङ्गात् । द्वितीये पूर्वोत्तरकालशब्दार्थासिद्धिः । न हि कालात्पूर्वं पश्चाच्च कालोऽस्तीति बालिशोऽपि ब्रूयात् । एवं नास्तीति न ब्रूयादेव, स्ववचनविरोधप्रसङ्गात् , अत एव च कालस्यानाद्यन्तत्वसिद्धि

---

न प्रवेश्यो गौरवात् , तदप्रतिसन्धानेपि नित्यत्वव्यवहाराच्चेति भावः । स्वांशानामपि पौर्वापर्यार्थं कालान्तरापेक्षां परिहरति स्वत इति । क्षणिकत्वादीति । क्षणकालवादिना सूक्ष्मस्थूलतरादिकालानां प्रत्येकमवच्छेदकत्वे तत्तत्सूक्ष्मादिकालमात्रस्थायित्वं स्यादित्यर्थः । प्रत्येकं स्वांशानामवच्छेदकत्वे ह्ययं दोषः, समस्तांशसमुदायस्यावच्छेदकत्वे तु न दोष इति शङ्कते समस्तस्वांशसमुदायेति। तत्सम्बद्धस्य—समस्तकालांशसम्बद्धस्येत्यर्थः । वस्तुतस्तु समस्तकालांशसम्बन्धो नित्यत्वमेव नानित्यत्वमिति बोद्धव्यम् । तन्मिथ्यात्वादिति । पारमार्थिककालसम्बन्धस्याभावो नित्यत्वमित्यभिप्रायः । द्वितीय इति । कालांशसमुदायापेक्षया पूर्वोत्तरकालयोरभावादित्यर्थः । न हीति । अंशापेक्षया पूर्वोत्तरकालौ ह्यंश्यपेक्षयापीति वक्तव्यम्, अंशी च कालः, तदपेक्षया च पूर्वोत्तरकालौ न सम्भवतः, कालान्तराभावात् , अभेदे तु पौर्वापर्यासम्भवादिति भावः । कालांशसमुदायेनावच्छेदो नाम तत्पूर्वोत्तरकालयोः तस्याविद्यमानत्वम् , तत्र तत्पूर्वोत्तरकालयोरुक्तयासम्भव उक्तः । अथ तत्र कालस्याविद्यमानत्वोक्तेरप्यसम्भवमाह एवमिति । अत एवेति । पूर्वोत्तरकालयोस्तत्राविद्यमानत्वाच्चेत्यर्थः । पूर्वोत्तरकालौ तत्रा

रिति कुतः ततो विवेकः ? तृतीयेपि कालान्तराभावेन समकालशब्दार्थासिद्धिः । चतुर्थे तु घटादेर्नित्यत्वप्रसङ्गः, कालांशतादात्म्यलक्षणकालावच्छेदाभावत् । न च तृतीयः, प्रध्वंसस्य प्रध्वंसाभावेन नित्यत्वप्रसङ्गात् । ततः किमिति चेत् ; ब्रह्मव्यतिरिक्तानन्तप्रध्वंसनित्यत्वेन ब्रह्मैकमेव नित्यमिति निर्बन्धानुपपत्तिः । नापि चतुर्थः, अबाधिततया लोकाभिमतेषु सत्यरश्म्यग्रजतादिषु नित्यशब्दप्रयोगदर्शनात् । न च लोकमन्तरेण शब्दार्थसम्बन्धसिद्धिः । न च बाधबुध्या घटादिष्वनित्यशब्दप्रयोगो दृश्यते, भवदीयमुपदेशमविदुषा लौकिकाना तेषु तद्बुध्यभावात् । नापि पञ्चमः, विकाराणां निर्विकारत्वेन नित्यत्वप्रसङ्गात् । तेषामपि सविकारत्वेनवस्थानात् । विकारान्तरोपादानत्वे च तेषां द्रव्यत्वप्रसङ्गाच्च । ततश्च द्रव्याणामनित्यत्व तद्विकाराणा नित्यत्वमिति सर्वलोकविरोधादिप्रसङ्गः । ब्रह्मणश्च निर्विकारत्वानुपपत्तिः स्वाभ्युपगमे

---

विद्यमानत्व च यतो व्याघातान्न सम्भवति तत एव कालस्थानाद्यन्तभावस्त्वया-वाच्य इति कालाद्विवेको ब्रह्मणो न सिद्ध्यतीत्यर्थ ।

प्रध्वंसरहितत्व नित्यत्वमिति पक्ष दूषयति **न च तृतीय** इति । ननु प्रध्वंसस्यापि प्रध्वंसस्तत्वज्ञानाद्भवति, अनवस्था तु ब्रह्मण एव तत्प्रध्वंसत्वेन परिहृता, अत एव मुक्तावपि ध्वंसप्रवाहानन्त्यकल्पनादपि प्राथमिकध्वंस एवानन्तोऽस्तिवति शङ्का च परिहृतेति चेत् , तर्हीदानीन्तनघटादिप्रध्वंसोपि ब्रह्मैव स्यादिति ध्वंसोच्छेदः । न च मुद्गराद्यनन्तरभावित्वान्न तथेति वाच्यम्—तत्वज्ञानाविद्यानिवृत्त्यनन्तरभावित्वेन ध्वंसध्वंसस्यापि ब्रह्मातिरेकित्वात् । **अनन्तप्रध्वंसे** ति । अनन्तपदमसङ्ख्यपरम् । परमतेऽबाधितत्वासम्प्रतिपत्तेरुक्त **लोकाभिमतेष्वि** ति । **न च बाधे** ति । यदि नित्यत्वमबाधितत्वम्, तर्हि बाधितत्वेन ज्ञात एवानित्यशब्दः प्रयुज्येत, घटादिषु नचैव दृश्यत इत्यर्थः । विकारः परिणामो वा कादाचित्कापृथक्सिद्धधर्मो वा इति विकल्पमभिप्रेत्य प्रथम दूषयति **विकाराणा** मिति। **सर्वलोके** ति । पूर्वेद्यु पिण्डात्मनावस्थिता मृदादीना घटीभूय तिष्ठतीति द्रव्यनित्यत्वस्थैर्य विकारास्थैर्य च लोकसिद्धमित्यर्थः । प्रथमपक्षे दोषमाह **ब्रह्मणश्चे** ति । तत्तद्वृत्त्यवच्छिन्नस्य व्यावहारिकभेदवत्

द्रष्टव्या । नापि षष्ठ., व्यावहारिकोभयान्तवत्त्वस्य संविदात्मके ब्रह्म-ण्यपि समानत्वात् । पारमार्थिकस्य तस्य प्रपञ्चेप्यभावेन तस्यापि नित्य-

---

कादाचित्कतया उत्पत्तिरप्यस्त्येवेत्यभिप्रायेणाह व्यावहारिके ति । ननु स्वसमानसत्ताकोभयान्तयोरभावो नित्यत्वमिति चेन्न,—अविद्याया अपि नित्यत्वापत्तेः तस्या अपि अन्तद्वयाभावात् । ब्रह्मैव अविद्याध्वंस इति चेत्, एवं सत्यविद्यैव ब्रह्मप्रागभाव इति ब्रह्मापि नित्य न स्यात् ।

नन्वविद्याया ब्रह्मसमानसत्ताकत्वाभावात् न ब्रह्मणो नित्यत्वहानिरिति चेन्न,—ब्रह्मणोप्यविद्यासमानसत्ताकत्वाभावात् तस्या अपि नित्यत्वप्राप्तेः ।

ननु स्वासमानकालीनत्वमन्यन्तविशेषणम्, अविद्या च ब्रह्मसमानकालीनेति न ब्रह्मण्यसम्भव इति चेन्न,—ब्रह्माण्यविद्यासमकालमित्यविद्याया अपि नित्यत्वप्रसङ्गात् । किञ्च यद्यविद्याध्वंसो ब्रह्म, तदा अविद्यैव ब्रह्मध्वंस इति किं न स्यात् ? उत्पत्तिमदभावत्वप्रागभावान्यप्रतियोग्यसमानकालाभावत्वादेर्ब्रह्मण्यपि दुर्वचत्वात् । न च प्रागभावप्रतियोग्यभावत्वं ध्वंसत्वम्, अविद्यैव ब्रह्मप्रागभाव इति वाच्यम्, ब्रह्मण एवाविद्याप्रागभावत्वापत्तेः प्रतियोग्यसमानकालीनानाद्य-भावत्वादेरविद्यायामपि दुर्वचत्वात् । ध्वंसप्रतियोगित्व प्रागभावत्वमित्यत्रान्यो-न्याश्रयात् ।

ननु साध्याभावत्व ध्वंसत्वम्, ब्रह्म च तत्वज्ञानसाध्यम्, यस्मिन्सत्य ग्रिमक्षणे यस्य अविद्याव्यतिरेकात्मनो ब्रह्मणः सत्व यद्व्यतिरेके तस्य ब्रह्मणो व्यति रेकोऽविद्येत्येवं साध्यत्वलक्षणयोगादिति चेन्न,-अविद्याया अपि तत्वज्ञानप्रागभाव साध्यत्वस्य त्वद्रीत्या सत्वात्, तथा अविद्यानिवृत्तिप्रतिबन्धकमावरणमिति त्वन्मते अविद्यायास्तदधीनाया उक्तरूपावरणसाध्यत्वसत्वाच्च ।

एतेन उभयान्तवत्वमुभयान्तवत्वप्रतियोगित्वम्, तच्च यद्यपि व्यावहा-रिक ब्रह्मणोस्ति, तथापि तत्र तदभावोप्यस्ति, अधिष्ठानस्य कल्पितप्रतियोगिका-भावाश्रयत्वात्, अविद्यायां तु न तदभावः, तस्या अनधिष्ठानत्वादिति परास्तम्, ब्रह्मणो ध्वंसत्वासिद्धेरुक्तत्वात् ।

त्वप्रसङ्गात् । अत एवाबाधितमुभयान्तराहित्यमित्यपि निरस्तम्, प्रपञ्च गतोभयान्तराहित्यस्यापि अबाधितत्वात् । नापि सप्तमः, तत्किं नित्य-शब्दप्रवृत्तिनिमित्ततया लोकव्युत्पत्तिसिद्धमुत नेति विचारणीयम् । आद्ये लोक एव प्रतिपक्षः । द्वितीये तु ब्रह्मण औपचारिकनित्यत्वमेव वा पारिभाषिकं वा नित्यत्वमिति अनित्यतायामेव पर्यवसानम् । तथा च कुतो नित्यानित्यवस्तुविवेकः । किञ्च संविदनित्येति वदतः सौगता दीन् प्रति किं लोकोपलम्भसिद्धाया विषयग्राहिण्या एव संविदस्त्वया नित्यत्वं साध्यते? उत लोकोत्तीर्णायाः कस्याश्चित् ? आद्ये प्रत्यक्षादि विरोधः, विषयनित्यत्वप्रसङ्गश्च । अस्मदादिप्रत्यक्षज्ञानं तावत् घटादिकं स्वसत्ताकाले सन्त साधयति न पुनः पूर्वोत्तरकालसत्तां विद्यमानामपि गृह्णाति । तत्कस्य हेतोः ? स्वकालकलितवस्त्ववभासित्वनियमात्, ततश्च यदि स्वयं कालानवच्छिन्ना संवित् स्यात् विषयस्यापि कालानव-

---

ननु पारमार्थिकत्व राहित्यविशेषण न प्रतियोगिविशेषणम्, घटादौ च स्वरूपस्य मिथ्यात्वाद्राहित्यमपि बाधितमिति शङ्का निराकरोति अत एवे ति। घटादौ हि उभयान्तवत्त्व व्यावहारिक तद्राहित्य च न प्रातिभासिकम्, अप्रतीतेः, समानसत्ताकप्रतियोगिविरोधाच्च न व्यावहारिकम्, अतः परिशेषात् परमार्थ इत्यर्थः । न च घटादौ तद्राहित्यमेव नास्तीति वाच्यम्, अबाधितत्वविशेषण वैयर्थ्यादिति भावः ।

ननु माभूदबाधितत्वविशेषणमिति चेन्न; तथापि प्रतियोगिनोपरमार्थ-त्वे प्रपञ्चे उभयान्तवत्त्वाभावस्यावश्यंभावादिति । आद्य इति । लोके सर्वकाल सम्बन्धित्वादेरेव प्रवृत्तिनिमित्ततया ग्रह इत्यर्थः । नित्यत्वं साध्यत इति । अनुमानेनेति शेषः । उत्तरत्र "नित्यतया तत्सिद्धावनुमाननैरपेक्ष्या" दिति वक्ष्यमाणत्वात् । अस्मदा दीति। परोक्षज्ञाने स्वकालीनत्वेन ग्राहकत्वनियमाभावात् प्रत्यक्षेत्यु क्तम् । लौकिकप्रत्यक्षं हि स्वाधिकरणतया यावान्काल उभयसम्प्रतिपन्नः

च्छेदेन प्रकाशप्रसङ्गः । तेनैवाबाधितेन तन्नित्यत्वमवर्जनीयम् । यदि पुनर्विषयिकालानवच्छेदेन विषयो गृह्यत इति मन्यसे, तथाप्येकयैव अस्मदाद्यैन्द्रियकसंविदा विषयस्य यावत्सत्त्व प्रकाशप्रसङ्गो दुर्वारः । एवं वर्तमानतया वस्तु गृह्णन्तीष्वनुमानादिसंवित्स्वपि विषयनित्यत्व— प्रसङ्गः समानः । याश्चातीततया अनागततया च स्वसवेद्यं गृह्णन्ति ता अपि स्वकालापेक्षयातीततयानागततया च वस्तु गृह्णन्तीति स्वयं कालानवच्छेदे स्वविषयाणामप्यतीतत्वागामित्वलक्षणकालावच्छेदो न स्यात् । द्वितीये त्वाश्रयासिद्धिः । शास्त्रसिद्धा सेति चेन्न;–नित्यतया तत्सिद्धौ अनुमाननैरपेक्ष्यात् , अनित्यतया तत्सिद्धौ तु बाधात् ।

---

तावत्कालीनतया विषय गृह्णाति, तत्कालपूर्वोत्तरकालीनत्व विद्यमानमपि न गृह्णाति, तत्र किञ्चित्प्रयोजक वाच्यम् , नचान्यदुपलभामहे , अतोऽस्य यावत् स्वकालमात्रावच्छिन्नवस्त्ववभासित्वस्वभाव. तत्प्रयोजकः कल्प्यः, ईदृशस्वभावं चेत् ज्ञान नित्यं स्यात् यावत्पूर्वोत्तरकालावच्छिन्नतया विषयमवभासयेत् , तावत्कालीनत्व चाबाधितमिति विषयोपि नित्यः स्यात् । न च पूर्वोत्तरकालयोर्घटो-नास्तीति प्रतीत्या बाधस्त्वया सुवच. ज्ञानभेदानङ्गीकारात् । स्वेनैव स्वस्य बाधायोगात् , बाधकत्वाभिमतज्ञानान्तरस्यापि नित्यत्वेन परस्परविरोधेन द्वयोरप्येकत्रासम्भवाच्च, सर्वदा असत्वग्रहप्रसङ्गेन नित्यत्वात्यन्तासत्त्वयोरापत्तेश्चेति भावः। यदि पुनरित्यादि । ज्ञानेन तत्कालावच्छिन्नतया विषयो न गृह्यते किन्तु स्वरूपतः , नचैवमपि नित्यप्रकाशप्रसङ्ग , विद्यमानस्यैव वस्तुनः प्रत्यक्षे भाननियमादिति यदुच्यते तथापि भासकज्ञानस्य नित्यत्वेन यावत्सत्व विषयः प्रकाशेतेत्यर्थः। क्वचित् पुरुषान्तरसंविदा धारावाहिकादिसंविदा च विषयस्य यावत्सत्व प्रकाशनेष्टापादनव्यावृत्त्यर्थं एकयेत्युक्तम् । एवमिति । वर्तमानत्वप्रकारिकानुमितिः नित्या चेत् तत्तत्स्वकालावच्छिन्नतयैव विषय गृह्णीयादिति विषयस्य नित्यत्वं स्यादित्यर्थ. । याश्चेति ।

संविन्मात्रस्य च लोकसिद्धत्वेन शास्त्रागोचरत्वात् । किञ्च नित्यत्वं किं स्वरूपम्? उत धर्मः? पूर्वत्र स्वप्रकाशेनैव नित्यमित्युपलम्भप्रसङ्गः । धर्मत्वेपि किं स्वप्रकाशैकवेद्यम्? उत ज्ञानान्तरवेद्यम्? पूर्वत्र स एव प्रसङ्गः । उत्तरत्रापि किं संविन्निष्ठतया ग्राह्यम्? उतान्यथा? आद्ये संविदोऽपि ज्ञानान्तरवेद्यत्वसधर्मत्वादिप्रसङ्गः । अन्तिमे संविन्नित्यत्वासिद्धिः । न हि नित्यत्वं कस्यचित्सिद्धमित्येतावता संविदो नित्यता सिध्येत् । तथासत्यविशेषेण सर्वेषामपि नित्यत्वप्रसङ्गः । एवमानन्दत्वादिधर्मेष्वपि विकल्पदूषणानि निपुणैरनुसन्धेयानि ।

एवञ्च—सति संविन्नित्या अनुत्पन्नत्वात् यदनित्यं तदुत्पन्नं यथा घट इत्यनुमानमपि निरस्तम्, प्रागभावेनानैकान्त्यात् । भावत्वे सतीति विशेषणेपि भवदभिमताविद्यायामनैकान्त्यं दुर्वारम् । सा ह्यनादिरन्तवती च भवन्मते । किञ्च संविच्छब्देन किमहमिति प्रत्यक्त्वेन प्रतीयमानमात्मस्वरूपं पक्षीक्रियते? उत सकललोकप्रसिद्धा विषयग्राहिणी वित्तिः? उत सैव सकलविषयाश्रयविरक्ता भवद्भिः

---

ननु स्वापेक्षया अतीतत्वग्रहण माभूत्, भोजनादितत्क्रियान्तरापेक्षयातीतत्वं गृह्णात्विति चेत्, भोक्ष्यमाणः स्नास्यामि भोक्ष्यमाणः स्नामि भोक्ष्यमाणोऽस्नासिषमित्यत्र स्नानस्य भोजनपूर्वकाले सर्वत्र गृहीते भूतभविष्यद्वर्तमानव्यवस्थाया ज्ञानापेक्षया ज्ञानसमानकालक्रियापेक्षया वा वाच्यत्वात्तस्य निरस्तत्वात् । उत धर्म इति । अत्र धर्मत्वं स्वरूपातिरिक्तत्व विवक्षितम्, न ब्रह्मधर्मत्वम्, उत्तरत्र संविन्निष्ठतया ग्राह्यत्वपक्षे सधर्मत्वापादनात् । धर्मत्व इति । स्वरूपातिरिक्तत्व इत्यर्थः। स एवे ति। स्वरूपातिरिक्तस्य स्वप्रकाशवेद्यत्वे तद्धर्मत्वमेव वक्तव्यम्, अतो नित्यमित्युपलम्भप्रसङ्ग इत्यर्थः । नित्यत्वग्राहिज्ञानस्याबाधितत्वे नित्यत्वस्य सत्यत्वात् सधर्मत्वं स्यादित्याह स धर्मत्वे ति । बाधितत्वेऽनित्यत्वप्रसङ्ग आदिशब्दार्थः। एवंचे ति । संविदो ज्ञानान्तरावेद्यत्वात् नित्यत्वानिरू—

सह प्रव्रज्यां गतेति । न प्रथमः, सिद्धसाधनात् । न द्वितीयः, सकललोकविरोधात् ; हेतोश्च स्वरूपासिद्धेः ; करणानां चेन्द्रियादीनां एतस्य चानुमानप्रयोगप्रयासस्य निष्प्रयोजनत्वप्रसङ्गात् । तदभिव्यक्त्यर्थं तदपेक्षेति चेन्नित्यमभिव्यक्तत्वाभ्युपगमे[न] तदभिव्यक्तेस्तदनपेक्षणात् ; अन्यथाऽस्मन्मतप्रसङ्गात् । भवदभिमतनित्यस्वयंप्रकाशात्मस्वरूपस्यैव संविद्वैशद्यार्थं तदपेक्षेति चेन्न ; वैशद्यासम्भवात् ; स्थलान्तरे तस्यानुसन्धेयत्वात् । न च तृतीयः, आश्रयासिध्यादेः प्रागेवोक्तत्वात् । अनेनैवानुमानेन तत्सिद्धिरिति चेन्न;—अन्योन्याश्रयणात्—तादृशसंवित्सिद्धौ तत्पक्षीकारेणैतदनुमानप्रवृत्तिः तत्प्रवृत्तौ च तादृश—संवित्सिद्धिरिति । अनेनैव न्यायेन अनुत्पन्नत्वात् निर्विकारेत्यादिसाध्य

---

पणाचेत्यर्थः । करणाना मिति । एतज्जननीयत्वाभिमतज्ञानस्यापि नित्यसिद्धत्वा दिति भावः ।

नन्वभिव्यक्ता वित्तिर्विषयप्रकाशिका, अभिव्यक्तिश्चावरणाभिभवः, स च वृत्त्या, तदर्थं करणापेक्षेति शङ्कते अभिव्यक्त्यर्थ मिति । आवरणस्य निरासादभिव्यक्तिः स्वरूपमेव [ स्फुरणमेव ] वाच्यम् , तस्य च नित्यत्वान्न करणापेक्षेत्यर्थः । अन्यथे ति । अभिव्यक्तेरनित्यत्वे स्वरूपस्य तदभिव्यक्तित्वासम्भवाद्विषयग्रहणात्मकावस्थाविशेषस्यैव तदभिव्यंक्तित्व वाच्यमित्यस्मन्मतप्रसङ्ग इत्यर्थः । वैशद्यासम्भवा दिति । अधिकाकारविशेषभान वैशद्यमस्मन्मते सवति , ननु त्वन्मत इति भावः । अनेनै वेति । प्रागभावाविद्याभ्यामनैका मित्यादिनेत्यर्थः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्याया चण्डमारुताख्याया
निर्विशेषब्रह्मणो नित्यत्वभङ्गो नाम
अष्टपञ्चाशः स्कन्ध ॥५८॥



प्रयोगो दूषणीयः । तदेवं ब्रह्मासाधरणनित्यत्वासिद्धेर्न नित्यानित्यवस्तुविवेकः । नित्यमुपादेयमिति सामान्यविवेकमात्रमपि निपुणनिरूपणेन निष्फलमापन्नमिति ।

आनन्त्यानन्दनित्यत्वप्रभृतीनां स्वरूपतः ।
विभागे सविशेषत्वमविभागे त्वसत्यता ॥
सौगतोक्तेपि विज्ञाने स्वरूपं विद्यते ततः ।
नित्यत्वादिवि[वाद]वेकस्ते नैरर्थक्येन जायते ॥

इति शतदूषण्यां निर्विशेषनित्यत्वभङ्गः

॥ अष्टपञ्चाशो वादः ॥



॥ श्रीरस्तु ॥

॥ एकोनषष्टितमो वादः ॥



स्वतः सर्वजगत्सूतेः संवित्सिद्ध्यादिभिः स्फुटम् ।
अद्वितीयपदोक्त्यैव साधिता सविशेषता ।

अत्र हि अनन्तपदवदद्वितीयपदेनापि सविशेषतैव । तथा हि—अद्वितीयपदे किं तत्पुरुषः? उत बहुव्रीहिः? यदा तत्पुरुषः, तत्रापि किं द्वितीयादन्यत्वम्? तद्विरुद्धत्वम्? तदभावमात्रम्? वा स्यात्, पूर्वत्र द्वितीयादन्योन्याभावमात्रं वा विवक्षितम्? उत अब्राह्मणादिनयात्तत्सादृश्यपरत्वं वा? द्विधापि न द्वितीयहानिः । न तरां ब्रह्मणो निर्विशेषत्वम् । द्वितीयत्वाभावे प्रथमत्वादिमात्रं स्यात्, विशेषनिषेधे शेषाभ्य

---

स्वत इति । कर्त्रन्तरानधिष्ठितत्वेनेत्यर्थः । अनेन एकपदेन अविभक्तनामरूपत्ववाचिना उपादानत्वमुच्यते, अद्वितीयपदेन कर्त्रन्तरनिषेध इति भगवदभिमतनिर्वाहः सूचितः । तेन तस्यैव कर्तृत्वे तदुपयोगिज्ञानादिसिद्ध्या सविशेषत्वसिद्धिरिति भावः । परमाचार्याणां निर्वाहमभिप्रेत्याह संवित्सिद्ध्यादिभिरिति । अनन्तपदवदिति । 'बृहद्गुणत्वाद्यमनन्तमाहु' रित्यादिप्रमाणानि विवक्षितानि । नञस्तदन्यतद्विरोधितदभावरूपार्थत्रयसम्भवाद्विकल्पयति किं द्वितीयादित्यादि । अन्योन्याभावमात्र मिति । अन्योन्याभावमात्रपरत्वमित्यर्थः । नञि—वयुक्तन्यायमभिप्रेत्याह अब्राह्मणादिनयादिति । अब्राह्मणमानयेत्यादौ ब्राह्मणाद्यन्वितनञस्तत्सदृशपरत्ववदित्यर्थः । तत्सादृश्यवत्त्व मिति । विवक्षितमित्यनुषङ्गः । द्विधापीति । प्रत्युत भेदसादृश्यनिरूपकतया द्वितीयसत्त्वं वाच्यमिति भावः । न तरामित्युक्तमुपपादयति द्वितीयत्वे ति । भेदसादृश्याभ्यामपि सविशेषत्वं स्यादिति विवक्षितम् । विशेषे ति । अशिशिरः पावक इत्युक्ते यथा

नुज्ञानसिद्धेः । अन्यथा प्रथमत्वादेरपि सामान्यतो विशेषतो वा निषेधे निर्विशेषत्वस्य निषेध्यत्वात् । तथा च न किञ्चिदित्युक्तं स्यात् । अनन्त-

---

शैत्यातिरिक्तस्पर्शः सामान्यतो विशेषतश्चौष्ण्यादिरूपेण न निषिध्यते तथा अद्वितीयत्वमित्युक्तेपि प्रथमत्वतृतीयत्वादिकोट्यन्तर सामान्यरूपेण विशेषतश्च न निषिध्यत इत्यर्थः । अन्यथेत्या दि । यद्येकविशेषनिषेधे शेषाभ्यनुज्ञानं न स्यादित्यर्थः ।

अत्र ' अन्यथा प्रथमत्वादेरपि सामान्यतो विशेषतो निर्विशेषत्वविशेषतो वा निषेधतो वा निषेध्यत्वा' दिति यदि पाठः, तदायमर्थः-आदिशब्देन तृतीयत्वादि गृह्यते, प्रथमत्वादेश्च सामान्यतो निषेधः—ब्रह्म कतिथमपि न-प्रथमादिकं नेत्यादिरूपः, विशेषतो निषेधः—प्रथमं न तृतीय नेत्यादिरूपः, निर्विशेषत्वविशेषतः—निर्विशेषत्वेन स्वरूपविशेषणाद्वा, निषेधतः—धर्मिस्वरूपनिषेधतो वेति । ततः किमित्यत आह तथाचे ति । सर्वनिषेधस्तथासति सिद्ध्येदित्यर्थः । यद्वा—विशेषतानिषेधत इति। ब्रह्मणि द्वितीयरूपविशेषनिषेधे प्रथमत्वादिकमनुज्ञात स्यात्, तथा द्वितीयस्य ब्रह्मणि अधिकरणविशेषे निषेधे ब्रह्मातिरिक्त द्वितीयमभ्यनुज्ञात स्यात, अत्र विशेषरूपेण निषेधो विशेषनिषेधः, तेनाधिकरणविशेषप्रतियोगिविशेषसाधारण्यसिद्धिः । अन्यथा—उक्तप्रतियोग्यधिकरणविशेषद्वयानुज्ञाभावे । धर्मान्तरानुज्ञानाभावे दोषमाह प्रथमत्वादे रिति । निर्विशेषत्वविशेषतोवे त्यस्य पूर्ववदेवार्थः । धर्म्यन्तरानुज्ञाभावे दोषमाह निषेधतो वेति । स्वरूपेण निषेधतः। सदद्वितीयमिति सद्रूपे अधिकरणविशेषेण न निषिध्यते, किंतु द्वितीय नेति निरूपकतयेति भावः। यद्वा—सामान्यतो निर्विशेषत्वविशेषतो वा विशेषतो निषेधतो वेति पूर्वतसन्तयोरुत्तरतसन्ताभ्या याथासङ्ख्येनान्वयः । सामान्यतो निर्विशेषत्वविशेषप्रतिपादने न प्रथमत्वादिनिषेध. कार्यः स्यात् , विशेषत.-प्रथमत्वादिविशेषरूपेण, निषेधतः प्रथम द्वितीय नेत्यादिप्रातिस्विकरूपेण निषेधतो वा प्रथमत्वादिनिषेध. कार्य. स्यादिति । यदि तु ' अन्यथा प्रथमत्वादेरपि सामान्यतो वा विशेषतो वा निषेध्यत्वा ' दिति पाठस्तदा स सुसङ्गमः ।

रेऽपि विरोधः किं भावाभावात्मकतया सहानवस्थित्या? वध्यघातुकभावेन वा ? न प्रथमः, द्वितीयस्य ब्रह्माभावरूपत्वे तत्प्रतियोगितया ब्रह्मण एव तुच्छत्वापातात् । अभावप्रतियोगित्वमेव हि सर्वत्र तुच्छत्वम् । देशकालादिभेदात्सदपि स्यादिति चेन्न,—अदेशकालव्यवच्छेदनीयत्वोपगमात् । प्राक् ध्वसादिविकल्पेनापि ब्रह्मणः कार्यत्वानित्यत्व तुच्छत्वप्रपञ्चान्तरसद्भावादिदोषो द्रष्टव्यः । अयमेव ब्रह्मण एव द्वितीयाभावरूपत्वेऽपि ।

किञ्च—स्वाभावे ब्रह्मणि द्वितीयं कथमध्यस्येत? तद्भानाभानयोस्तद्योगात् । अविशदभाने सविशेषत्वभानावश्यम्भावात् । दोषवैचित्र्यात् सर्वमुपपन्नमिति चेन्न;—विरुद्धाकाराग्रहणमन्तरेण कचिदप्यध्यासादृष्टेः।

---

किं द्वितीयं ब्रह्माभावरूपं ब्रह्मद्वितीयाभावरूपं वेति विकल्प्याद्यं दूषयति द्वितीयस्ये ति । देशकाले ति । सर्वदा सर्वत्राभावप्रतियोगित्वं हि तुच्छत्वम्, अतः अभावप्रतियोगित्वमात्रान्न तुच्छत्वप्रसक्तिः देशकालान्तरे असत्वेऽपि देशकालान्तरे सत्वस्यापि सम्भवादित्यर्थः । द्वितीयस्य प्रागभावत्वादिविकल्पमभिप्रेत्याह प्रागि ति । प्राक्कालीनपरः प्राक्छब्दः, अभावविकल्पगतप्रध्वंससमभिव्याहाराच्च प्रागभावलाभः । तुच्छत्वे ति । यद्यपि प्रागपीदं दूषणमुक्तम्, तथाप्यभावत्वेन सामान्येनोपस्थितस्य इह त्वत्यन्ताभावत्वेन विशिष्योपस्थितस्येति भेदः । एतद्द्विपि विकल्प्य दूषणे न्यूनत्वशङ्का[ङ्कया]त्यन्ताभावो न दूषित इति कस्यचिन्मन्दस्य भ्रमो माभूदिति । अन्योन्याभावपक्षे दोषः प्रपंचे ति । वियदादिप्रपञ्चान्तरसद्भावः, अतः प्रपञ्चान्तरमेव ब्रह्मान्यद्वक्तव्यमित्यर्थः । आदिशब्देन सत्यत्वाविरोधो विवक्षितः । ब्रह्मद्वितीयाभाव इति द्वितीयं दूषयति अयमेवे ति । कार्यत्वादिरेवेत्यर्थः । ब्रह्मणो विनाशित्वकार्यत्वे ब्रह्मणो देशकालाद्य(नव)परिच्छिन्नतया प्रपञ्च तुच्छत्वं प्रपञ्चान्यब्रह्माश्रयसद्भावादिश्च दोषः स्यादित्यर्थः । प्रपञ्चाभावत्वेऽप्यवैशद्यादध्यास सम्भवतीत्यत्राह अविशदे ति । सर्वं मिति । विरुद्धाकारभानमध्यासे इत्यर्थः । विरुद्धे ति । ननु विरुद्धाकारग्रहेऽप्यौपाधिकाध्यासः सम्भवति, प्रपञ्चा

तद्ग्रहेप्यध्यासे नित्यमध्यासप्रसङ्गात् । सहानवस्थानविरोधे सतः परिच्छिन्नत्वापत्तेः , शीतोष्णादिवद्भिन्नाश्रयत्वनियमाविवक्षायां धर्मधर्मिणोरेकाश्रयत्वाभावात् ब्रह्मणः सधर्मकत्वाविरोधः, स्वनिष्ठताभङ्गश्च । एकाश्रयत्वाभावमात्रे वक्तव्ये सर्वस्य ब्रह्माश्रयत्वं श्रुत्यन्तरसिद्धं सिध्यत्येव । न तृतीयः, द्वितीयस्य घातुकत्वे सदनित्यत्वादिप्रसङ्गात् । सतो घातुकत्वेपि न द्वितीयात्यन्ताभावः, हन्तव्यस्यादौ स्वरूपलाभावश्यम्भावात् । अध्यासनिवर्तकत्वमेव अस्मदिष्टं घातुकत्वमिति चेत् ; अस्तु सदध्यासघाति, अनध्यस्तात्मना द्वितीयस्थितेर्न क्षतिः । तथा तस्य न प्राप्तिरिति चेन्न,—सगुणादिश्रुत्यैव तत्प्राप्तेः । कल्पितविषया सेति चेन्न;—अद्यापि तद्बाधादृष्टेः ।

---

ध्यासश्चौपाधिक इति चेन्न,- विरोधिब्रह्मस्वरूपे भासमाने उपाध्यध्यासस्यैवासम्भवात् । द्वितीय दूषयितुमुपादत्ते सहे ति । किं विरोधो भिन्नाश्रयत्वनियमः ? उत एकाश्रयत्वाभावः? आद्य आह सत इति । शीतोष्णादिवत् भिन्नाश्रयत्वनियमविवक्षाया सतः परिच्छिन्नत्वापत्तेरित्यन्वयः । दूषणान्तरमाह धर्मधर्मिणो रिति । एकाश्रयत्वाभावा दिति । भिन्नाश्रयत्वस्याप्युपलक्षणम् , विरोधे सत्यपि लोके धर्मधर्मिभावदर्शनात्, ब्रह्मणः सधर्मत्वं न विरुध्यत इत्यर्थः । स्वनिष्ठते ति । 'स्वे महिम्नि प्रतिष्ठित' इति प्रतिपादितानन्याश्रयत्वभङ्ग इत्यर्थः । परिच्छिन्नत्वस्वनिष्ठताभङ्गोद्धारतया द्वितीयं पक्षमुत्थाप्य निरस्यति एकाश्रयत्वे ति । सदनित्यत्वा दीति । प्रपञ्चसत्यत्वाविरोधमुमुक्ष्वनुपादेयत्वादि गृह्यते । शङ्कते–अध्यासे ति । सत्यत्वप्रत्युक्तस्वरूपलाभः प्रपञ्चस्य कुत इति भावः । अस्त्व ति । सतोऽध्यासघातित्वे प्रागिव तत एव स्वरूपसिद्ध्यभावेपि द्वितीयस्य न सत्यत्वक्षतिरित्यर्थः ।

ननु सत्यत्वेन द्वितीयं न प्राप्तमध्यस्तं चोच्यते , अतश्शुक्तिरजतादिष्विव अध्यासनिवृत्तौ विषयनिवृत्तेरपि सिद्धेर्ज्ञाननिवर्त्यतया मिथ्यात्वं स्यादिति शङ्कां तथे ति । अद्यापी ति । तद्बाधो ह्यद्वितीयश्रुत्या वाच्यः, अद्वितीयश्रुतेश्च

सतोध्यासविरोधित्वे च अविद्यासहस्रैरपि न स्यादध्यासः ; सत्यादित्ये सन्तमसवत् । अध्यस्यति हन्ति चेति चेन्न ; नैरपेक्ष्यविरोधात् । अन्यथान्यस्यैवान्ततो घातुकत्वात् । साधारणहेतुत्वे सिद्धे विशेषोक्तिरियमिति चेन्न;—तस्यैव त्वदभिमतस्य इतः पूर्वमसिद्धेः । प्रथमतृतीयादिभावमात्रेण द्वितीयविरोधवाचोयुक्त्या सुस्थं द्वितीयम् । तदभावमात्रपरे तु समासे न सदादिशब्दैः सामानाधिकरण्यं स्यात् , नञर्थस्य स्वतन्त्रत्वात् । तस्य तदात्मकत्वविवक्षायोगस्योक्तत्वाच्च ।

---

बाधकत्वं नैतावत्पर्यन्त सिद्धमित्यर्थः। सतोऽध्यासनिवर्तकत्वे तस्याध्यासेन सहानवस्थानलक्षणा विरोधिता वाच्या, व्यापारमन्तरेणापि स्वरूपत एव निवर्तकत्वात् , तमोनिवर्तकालोकवत् , ततश्चालोकविरहदशाया अपि सत्वात् तमः स्वरूपसम्भवः, इह तु सतो नित्यसिद्धत्वान्नाध्याससम्भव इत्याह सत इति ।

नन्वालोकस्य सन्तमस प्रति हेतुत्वाभावादालोकः सन्तमस क्षणमपि न सहते , स त्वध्यासं प्रत्यधिष्ठानत्वादध्यस्य निवर्तयतीति शङ्कते अध्यस्य तीति । निरपेक्षनिवर्तकत्वे अधिष्ठानत्वमेव न स्यादित्याह नैरपेक्ष्ये ति । अधिष्ठानत्वे तु उत्पादकस्य निरपेक्षनिवर्तकत्वासम्भवादन्यदेव निरपेक्षनिवर्तकं स्यादित्यर्थः ।

ननु कार्यमात्रसाधारण्येन हेतुत्वे सिद्धे तद्विशेषरूपनिवृत्तिहेतुत्वमनेनानूद्यते, अतः प्रतियोगिनिवृत्त्योरुभयोरपि हेतुत्वस्य प्रमाणसिद्धत्वादुभयत्र हेतुत्वमेष्टव्यम्, प्रतियोगिनं प्रति हेतुत्व चाध्यासाधिष्ठानत्वमेवेति अध्यस्य निवर्तकत्वमुपपद्यत एवेति शङ्कते साधारणे ति । अध्यस्य निवर्तकत्वे तु निवर्त्यातिरिक्तानपेक्षेण सता निवर्त्यस्य द्वितीयस्य क्षणिकत्वप्रसङ्ग इत्यपि दूषण द्रष्टव्यम् । द्वितीयत्वविरोध्याकाराश्रयत्व द्वितीयविरुद्धत्वमित्याशंक्य निराकरोति प्रथमे ति । तत्पुरुषविकल्पे तृतीयं दूषयति तदभावमात्रपरे तु समास इति । अयं विकल्पः प्रौढवादः । नञर्थस्ये ति । द्वितीयाभावस्य सदर्थधर्मत्वादित्यर्थः । सदर्थ एव द्वितीयाभाव इत्यत आह तस्ये ति । उक्तत्वा दिति । तद्भानाभानयोरध्यासा

न च सम्भवन्त्यां गतौ वाक्यभेदाध्याहारादिर्न्याय्यः । नापि बहुव्रीहिः, तत्र द्वितीयं यस्य नास्तीति किं प्रथमादिविधिकटाक्षेण ? सर्वनिषेधाभिप्रायेण वा ? न पूर्वः, सर्वनिषेधासिद्धेः । नोत्तरः, बहुव्रीहिविरोधात् । "अनेकमन्यपदार्थे" इति हि सः । किञ्च द्वितीय निषेधवत्त्वं च धर्मं ब्रह्मण उपस्थापयन्त्यां वृत्तौ कथं निर्विशेषत्वसिद्धिः। अनुपस्थापयन्त्यां च कथं तरां नास्त्यर्थसम्बन्धे यस्येति विग्रहः ? न च स्वरूपमेवात्र नास्तिशब्दार्थः ; अन्यपदार्थत्वायोगात्, स्वस्य स्वसम्बन्धायोगाच्च । भेदक्लृप्त्युपचार इति चेत्तथापि द्वितीयाभाव एव ब्रह्मेति निष्कर्षः स्यात् । तत्र चोक्तमध्यासानुपपत्त्यादि । अपि च अविद्या तद्विकाराणां ब्रह्मव्यतिरेके कथमद्वितीयत्वम् ? तन्मिथ्यात्वेपि तेषां

---

योगरयोक्तत्वादित्यर्थः । यद्वा नञर्थो निषेधः, तस्य समासे स्वातन्त्र्येण बोधनासम्भवादित्यर्थः । पर्युदासनञ एव तत्पुरुषः न तु निषेधनञ इति भाव. ।

नन्वरातिरव्यवहारोऽस्मरणमित्यादौ निषेधनञोपि समासो दृश्यत इति चेन्न-गुणक्रियावाचिसमभिव्याहृतनञो निषेधवाचिनोपि तत्पुरुषो नान्यस्येति नियमात् । अन्यथा भूतले घटो नेति वत् अघट इति प्रयोगापत्तेः । असामर्थ्यम्-अदार्ढ्यमधैर्यमित्यादावपि वैयाकरणाभिमत गुणत्वमस्त्येव। एव शब्दानुपपत्तिमुक्त्वा, अर्थानुपपत्तिमाह तस्ये ति । (२६४-पुटे)

नन्वद्वितीयमिति न सद्विशेषणम्, किं तु द्वितीयाभावप्रतिपादक वाक्यान्तरम् । यद्वा-यत्राद्वितीयम्-द्वितीयाभावस्तत् सदेवाग्र आसीदिति योजना, अतो न दोष इत्यत्राह नै चे ति । सद्दशद्वितीयनिषेधाधिष्ठानान्तरशङ्कानिवारणेन सम्भवन्त्या गतावित्यर्थः। प्रथमा दी ति । यदा द्वितीयत्व ब्रह्मातिरिक्तावधिक तदा प्रथमादिविधिः, यदा ब्रह्मावधिक तदा सर्वनिषेधः। अनेक मिति । तथा च बहुव्रीहि वशात् द्वितीयतदभावान्यपदार्थाना सिद्धिरिति भावः ।

ननु ज्ञानस्वरूपमितिवत् भेदकल्पनात् बहुव्रीहिः स्यादिति शङ्कते भेदे ति । भेदक्लृप्त्योपचार इत्यर्थः । तन्मिथ्यात्वेपी ति । न च मिथ्यात्वेन

द्वितीयत्वस्य दुस्त्यजत्वात्। सत्यमिथ्यार्थयोरव्यतिरेके विरोधात्। न च ग्य जैननयनिष्ठा'। तन्निष्ठाश्च तत्त्वामिव द्वितीयतां वांच्छन्ति। ब्रह्मणो निर्विशेषत्वविवक्षायां च न किञ्चिदपि लक्षणं तत्र स्यादिति तदुदाहरण विरोधः। व्यवच्छेद्यायोगाच्चेति। अस्मत्पक्षे तु वृत्तिद्वयमपि सम्यक्।

द्वितीयव्यतिरेकोक्त्या सतः स्यादग्रगण्यता।
द्वितीयशून्यतोक्त्या च तत्समाननिषेधनम्।

न ह्यपरं कुतश्चित् सर्वकारण ब्रह्म, येन तस्य द्वितीयता स्यात्। न चास्य किञ्चिदैश्वर्येण सम, येन द्वितीयगणना सहेत। "न तत्समश्चाभ्यधिकश्च दृश्यत" इत्यादिश्रवणात्। तेनात्र सदृशद्वितीयनिषेध परं वचः।

---

द्वितीयाभावस्यापि तत्र सत्वात् बहुव्रीहिः, स्वनिरूपितद्वितीयस्वरूपे विद्यमाने तदभावमात्रेण तथा निर्देशानुपपत्ते.। न हि घटे सदृशद्वितीयाभावसत्त्वेपि अद्वितीयः सवितेतिवदद्वितीयो घट इति प्रयोगोस्ति, न वा गवाभाववत्यपि (१) गवये ऽसदृशो गवय इति। अविद्यादीना ब्रह्माव्यतिरेकपक्ष दूषयति सत्ये ति। अव्यतिरेके सत्यमिथ्यात्वयोर्विरोधादित्याशयः।

अन्ये तु "एकमेवाद्वितीय" श्रुतिर्न मिथ्यात्वे मानम्, तथा हि, एकशब्दोऽनेकार्थः, "एके मुख्यान्यकेवला" इत्यमरोक्तेः, "एको गोत्र' इत्यत्र "एकशब्दोयमन्यप्रधानासहायसख्याप्रथमसमानवाची" ति कैयटोक्तेश्च, सम्भवति च ब्रह्मणि जीवादितोन्यत्वप्राधान्यप्राथम्यादि, निर्दोषत्वेन च नामरूपसमानत्व, अतो न तस्य स्वगतभेदनिषेधकत्वम्, अद्वितीयशब्दोपि कर्मधारयो बहुव्रीहिर्वा? आद्ये ब्रह्म द्वितीयान्यत्वेपि प्रथम तृतीय वा स्यात्, नान्त्य., प्रथमार्थत्वेन कर्मधारये सम्भवति जघन्यस्य बहुव्रीहेरयोगादित्याहुः।

अत्र नवीनः—अस्त्वेकशब्दस्यानेकार्थत्व, तथापि शब्दार्थ इत्येव न ते प्रकृते ग्राह्याः, तथा सति 'चित्रया यजेते' त्यत्रापि चित्रत्व ग्राह्यं स्यात्, सम्भवति च चित्रत्वस्याप्यग्नीषोमीयपशुविशेषणत्वेन यागसाधनत्वम्, अथ तत्र

स्त्रीत्वचित्रत्वयोर्विधाने वाक्यभेदः स्यादिति , तर्हि प्रकृतेप्यनेकगुणविधाने स तुल्यः, सतोपि प्राप्तत्वात् । किञ्च केषाञ्चिन्मानान्तरेण सिद्धत्वेन केषाञ्चिद्विरुद्ध त्वेन च नान्यत्वादिगुणेषु तात्पर्यम्, अन्यत्वैकत्वे तावन्मानान्तरसिद्धे, साम्यमपि यदि केनचिद्धर्मेण, तदा प्रमेयत्वादिना तदपि सिद्धमेव, अथ निर्दोषत्वेन, तदपि न, जीवादेर्दोषबहुळस्य तत्समत्वायोगात् । ब्रह्मणोप्यविद्यादिदोषाश्रय-त्वाच्च । असहायत्वमपि यदि स्वकार्ये इतरसहकारिराहित्यम् , तन्न, अदृष्टादे र्विद्यमानत्वात्। न चेतनान्तरसहकारिराहित्यम्, भोक्तॄनुद्दिश्य भोग्यसृष्टौ तेषामपि सहकारित्वान्न तद्राहित्यम्, तस्यापि तव मते अद्वितीयपदेनैव सिद्धत्वात्। प्राथम्य मपि यदि प्रथमकालीनत्वम्, तदा पूर्ववाक्य एव तत्सिद्धमनुपपन्नञ्च, जीवाना मप्यनादितया तत्तुल्यकालत्वात् । नापि गुणोत्कर्ष । " निर्गुण " मित्यादिस्वा र्थपरगुणनिषेधकानेकश्रुतिविरोधेन तस्याऽतदर्थत्वात् । प्राधान्यमपि स्वातन्त्र्यम् । तच्च यदि स्वेच्छया प्रवर्तमानत्वम् , तन्न, जीवस्याप्येतत्सत्वेन तदपेक्षया तदयो गात् । अथानन्यप्रेर्यत्वम् ; तच्च सर्वज्ञान्तराप्रेर्यत्वम्, तस्यापि तव मते अद्वितीय पदेन सर्वज्ञान्तरनिषेधे अर्थादेव सिद्धत्वात् । नापि जीवानियाम्यत्व, तस्यापि सर्व नियन्तृत्वपरश्रुत्यैव लब्धत्वात् । 'येनाश्रुत श्रुत भवती' त्यादिना अद्वैत एवोप-क्रमात् , मृदादिदृष्टान्तैस्तदुपपादानाच्च । न गुणेषु तात्पर्यम् । अथोपक्रमोपि ब्रह्मणः प्राधान्याद्यभिप्रायेणैव, तज्ज्ञानात् सर्वज्ञानमुपचर्यत इति चेन्न,—असति बाधकेप्युपचारकल्पनेतिप्रसङ्गात् । कथञ्चित्तदाक्षेपानुपपत्तेश्च । न हि ब्रह्मणः प्राधान्यादौ किञ्चिल्लौकिक मानं विरुध्यते , तथापि मृदादिवाक्यासङ्गतिरेव, तेन तस्य प्राधान्याद्यनुपपादनात् । ' मृत्तिकेत्येव सत्य ' मिति कारणस्यैव सत्यत्व-मुपसहृत्य ' एवं सौम्य स आदेशो भवती ' ति जगत्कारणस्यैव सत्यत्वप्रतिपा-दनाच्च । समवायस्य भेदाभेदस्य निरस्तत्वेन धर्माणां सम्बन्धाभावादपि न ब्रह्म धर्मत्वम् । यद्यप्यद्वैतवाद्यभ्युपगतनिर्धर्मत्वनिषेधाय सख्यादिक श्रुतिर्विधत्त इति; तन्न, अद्वैतिनो ब्रह्मनिर्धर्मत्वप्रसिद्धेः श्रुतिमूलत्वात् । किञ्च अद्वैतवादिभिरप्या-मोक्षं ब्रह्मणः प्राधान्यादिकमभ्युपेयत एवेति तद्विधानमनर्थम्। न च तस्य वास्तवत्व

मुक्तिकालीनत्व वा श्रुत्या प्रतिपाद्यत इति वाच्यम्,—अत्र वास्तवादिपदाभावात्। श्रुतेस्तत्र तात्पर्ये च न किञ्चिन्मान पश्यामः। प्रत्युत रुद्ररोदनादिवत् निष्प्रयोजनत्वात्तत्रातात्पर्यमेव। तच्च 'तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यत' इत्यादिना भेदज्ञानादेव मुक्तिश्रुतेः। तस्मादेकमिति भेदनिषेधपरमेव।

यत्तु 'अद्वितीय' मित्यत्र बहुव्रीहिर्जघन्य इति कर्मधारय एवाभ्युपेय इति। तन्न, अघटो देश इत्यादावपि तदभावप्रसङ्गात्। न च तत्र विवक्षानुसारात् तथा, तर्हि प्रकृतेऽप्युपक्रमादिलिङ्गैः द्वैताभावे श्रुतितात्पर्यावगमात् तथास्तु। किञ्च तव कर्मधारयासम्भवादपि बहुब्रीहिरेव ग्राह्यः, ब्रह्मातिरिक्तचेतनाभ्युपगमे ब्रह्मणि द्वितीयत्वस्य सत्वात्। न च धर्मतो निष्कृष्टस्यैव द्वितीयत्वम्, ब्रह्म च सकलसद्गुणाश्रय इति न द्वितीयमिति वाच्यम्, सजातीयान्यमात्रे द्वितीय शब्दव्युत्पत्ते. अन्यथा द्वितीय चक्षुरित्यादौ समे द्वितीयशब्दप्रयोगो न स्यात्।

ननु सर्वज्ञाद्वितीयत्व निषिध्यत इति चेन्न,—चेतनद्वितीयातिरिक्तस्य सर्वज्ञद्वितीयत्वस्य सिद्ध्यसिद्ध्योस्तदयोगात्। एतेन सम एव द्वितीयशब्दव्युत्पत्तेरद्वितीय इति समाधिकनिषेध इति निरस्तम्, सर्वज्ञान्तराभावात्, एकशब्देन निर्दोषत्वादिरूपेण प्रपञ्चेन ब्रह्मण. साम्य विधीयत इति तदुक्तिव्याघाताच्च - सामान्यनिषेधे बाधके सत्येव विशेषविषयत्वस्य वक्तव्यत्वाच्च।

ननु द्वितीयमात्रनिषेधो न सम्भवति, द्वितीयाभावस्यैव द्वितीयस्य सत्वादिति चेन्न,—द्वितीयाभावस्याप्यात्ममात्रत्वस्यासकृदुक्तत्वात्। तस्मादेकादिशब्देन स्वगतात् स्वविलक्षणात् सजातीयाच्च यो भेद' स एव प्रतिषिध्यत इति।

अत्रोच्यते,--यदुक्तमनेकगुणविधाने वाक्यभेदप्रसङ्ग इति, तत्तवापि तुल्यम्, एकमिति विहितस्यैव पुनर्विधाने तद्वैयर्थ्यप्रसङ्गेन एकशब्देन स्वगतभेदाभावस्वरूपस्य एवकारेण विजातीयभेदाभावस्वरूपस्य अद्वितीयमिति सजातीयभेदाभावस्वरूपस्य च प्रतिपाद्यत्वात्। न च सजातीयाद्यभावात्मकमेकमेव सत्प्रतिपाद्यत इति न वाक्यभेद इति वाच्यम्-ब्रह्मधर्मा धर्म्यभिन्ना इति पक्षेपि तुल्यत्वात्।

यदि च निवर्त्यसंशयभेदेन प्रयोजनभेदाद्वाक्यभेदः तदा तत्रापि तुल्यम् । किं च सन्मात्रस्य प्राप्तत्वात् सजातीयाभावात्मकेपि तस्मिन् तात्पर्यं न सम्भवति, भेद-वत् । यदि च सजातीयाद्यभावरूपेणाप्राप्तम्, तर्हि वाक्यभेद एव । वस्तुत 'इद' मिति निर्दिष्टप्रपञ्चस्य एकत्वादिविशिष्टब्रह्मात्मकत्वविधाने कुतो वाक्य-भेद. ? यच्च मानान्तरसिद्धत्वान्न तेषु तात्पर्यमिति, तत्रोक्तमुत्तरं कुसमयप्राप्त निर्गुणत्वनिषेधाय सख्यादिर्विधिरिति । न च निर्धर्मत्वप्रसिद्धेः श्रुतिमूलत्वात्तद्बाध इति वाच्याम् , तर्केतोपि तत्प्राप्ते., 'कथमसत. सज्जायेते' ति कुतर्कप्राप्तनिराकरणदर्शनात् । 'नेह नाने' त्यादिवाक्यान्तरान्मन्दमतीना भ्रमप्रसक्तौ तन्निवारणार्थत्वसम्भवाच्च । 'जुष्ट यदा पश्यत्यन्यमीश' मित्यादिभेदवाक्यादापा ततो भेदज्ञानस्य मोक्षसाधनत्वावगमान्मुमुक्षोर्भेदवाक्यभ्रमात्प्रवृत्तिवारणार्थं अद्वैतात्मवाक्यश्रवणनियमविधिरिति त्वयैवोक्तत्वात् । यदप्यद्वैतिभिरप्यामोक्ष ब्रह्मणः प्राधान्याभ्युपगमात् तद्विधान व्यर्थमिति, तन्न, न हि त्वत्समय एव कुसमयः, सन्त्यन्येपीश्वरस्य साक्षिमात्रत्वादिवादिन., तद्वाक्यैर्भ्रम. स्यात् । अथवा–कि न एतेन त्वदीयकुमतित्वाभिमानखण्डनेन, त्वा प्रत्येव परमार्थप्राधान्यादिप्रतिपाद नार्थमयमुद्यमः । सत्यपदाभावेपि तात्पर्य सम्भवति, 'स्तब्धोस्युततमादेश' मित्येकत्वप्रशासनकर्तृत्वाद्युपक्रमादेरेव तात्पर्यलिङ्गत्वात् । न च निष्प्रयोजनत्वम् । एकत्वविधिमुखेनाद्वैतनिरासे भेदज्ञानान्मोक्षस्य 'पृथगात्मान' मिति वाक्याव-गतस्य सिद्धे । प्रत्युताद्वैतस्यैव निष्प्रयोजनत्वम्, ब्रह्माभेदलक्षणप्रयोजनस्य सिद्ध त्वात् । एवञ्च साम्यविधानेपि न दोषः, प्रमेयत्वादिना सिद्धावपि सत्त्वेन साम्यस्य कुदृष्टिनिरासार्थं विधेयत्वात् ।

यच्चोक्त सहायत्वे दूषणम्, तन्न, अदृष्टाद्वारकचेतनान्तरसहकारिराहित्यस्य विवक्षितत्वात् । नह्यसहायेन मयेद कृतमित्यादौ ज्ञानादृष्टादि निषिध्यते । यथोक्त–अस्त्यसहायार्थः एकाकिभि. क्षुद्रकैर्जितमसहायैरिति गम्यते, न हि तत्र जितानामदृष्टद्वारा सहकारित्वमपि निषिध्यते ।

आहुश्च— यथैक एव सविता न द्वितीयो नभ. स्थले ।
इत्युक्त्या न हि सावित्रा निषिध्यन्तेत्र रश्मयः ॥

तथा च

यथा चोलनृपः सम्राडद्वितीयोत्र भूतले ।
इति तत्तुल्यनृपतिनिवारणपर वच ।
न तु तत्पुत्रतद्भृत्यकळत्रादिनिवारण " मिति ।

भाष्ये तु प्रकरणस्थमृत्पिण्डादिष्विवैकशब्देनाविभक्तनामरूपावस्था-विशेषविशिष्टबोधनादुपादानत्वसिद्धौ पिण्डादिष्विवाधिष्ठात्रंतरशङ्कायां तन्निषेधपरोयमद्वितीयशब्द इति स्थापितम् । एतदेव " बहु स्या " मिति बहुभवनतत्सङ्कल्पयोराश्रयतयानन्तरमेव स्थाप्यते " सो कामयत बहु स्या " मिति श्रुत्यन्तरैश्च । एतदर्थमेव प्रकृत्यधिकरणम् । अतो ऽद्वितीयश्रुतिरेव विश्वातिशायित्ववाचिनी गुणविभूतिश्रुतिशतविदितबहु-विधविशेषजातातिशयितविशेषान्तरतत्परा निर्विशेषवादिना विसवादि-नीति नीतिविदः ।

इति शतदूषण्यां अद्वितीयश्रुतिविसंवाद

॥ एकोनषष्टितमो वादः ॥

---

यच्चोक्त अद्वितीयपदेनैव सिद्धत्वात् सर्वज्ञसहकार्यन्तरराहित्य नासहाय त्वमिति , तन्न, प्रथमार्थपक्षेऽद्वितीयपदस्य कर्मधारयत्वात् ।

यच्च प्राथम्य पूर्ववाक्य एव सिद्धमिति, तन्न, ' अग्र ' इतीदशब्द निर्दिष्टप्रपञ्चस्याव्याकृतसदात्मनावस्थानकालपरम्, ' एक ' मिति ब्रह्मणः सर्व-कार्यापेक्षया प्राथम्य प्रतिपादयदनादित्वपरम्, अतो न जीवेभ्यः प्राथम्यानुपपत्ति रपि दोषः । सगुणत्वव्यवस्थापनादेव गुणोत्कर्षरूपप्राथम्येपि न दोषः । किञ्च अनेन गुणोत्कर्षे विहिते निर्गुणश्रुतिरेवार्थान्तरपरा स्यात् । यच्चान्यानियाम्यत्व स्वातन्त्र्यमित्यत्र दूषणमुक्तम्-सर्वनियन्तृत्ववचनसामर्थ्यात् सिद्धमिति । तन्न, एक

विज्ञानात् सर्वविज्ञानानुपपत्त्या 'तत्वमसी' त्युपदेशानुपपत्त्या च सिद्धस्यापि सजातीयाद्यभावस्य शब्दतः प्रतिपादनस्य त्वयापि वाच्यत्वात् ।

यच्च सम्बन्धाभावान्न ब्रह्मणः कश्चिद्धर्म इति, तन्न, यदि सम्बन्धाभावेपि धर्मधर्मिव्यवस्था व्यावहारिकी, तदा सत्यभूतैव व्यवस्था सम्बन्धं विनैवास्तु, यदि सम्बन्धोपि कश्चिद्व्यावहारिकः, तदा स एव सत्यः किं न स्यात् ?

यच्चाद्वितीयशब्दे कर्मधारयदूषणम्, तन्न, उपक्रमादिलिङ्गानां विपरीतत्वात् । न च द्वैतिमते कर्मधारयासम्भवः, धर्मतो निष्कृष्टस्य द्वितीयशब्दार्थत्वेन तत्सम्भवात् । न च सजातीयान्यमात्रमेव तदर्थः, एष शूरेषु प्रथम एष द्वितीय इत्यादौ निष्कृष्टेपि प्रयोगात् । यच्च द्वितीयाभावोप्यात्मैवेति न द्वितीयनिषेधानुपपत्तिरिति, तन्न, सन्मात्रस्य प्राप्तत्वेन द्वितीयाभावादावतात्पर्यप्रसङ्गादसकृदुक्तत्वात् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां
शतदूषणीव्याख्यायां चण्डमारुताख्यायां
अद्वितीयश्रुतिविसंवादो नाम
एकोनषष्टितमः स्कन्धः ॥५९॥



॥ श्रीरस्तु ॥

॥ षष्टितमो वादः ॥



अस्ति नास्तीति बोधाभ्यामभिव्याप्तेषु वस्तुषु ।
सदेव सदसद्बुद्धिनिमित्तत्वेन साध्यते ॥

यदेव हि प्रामाणिकत्वेन सदिति प्रतीतिगोचरतां भजते, तदेव रूपान्तरेण नास्तीत्यपि प्रतिक्षेपं भजते । तत्रासत्त्वमेव तत्वमिति सौगतोपदेशिनः, सदा सत्त्वमिति साङ्ख्याः, सत्त्वासत्वसमुच्चय इति जैनाः, उभयप्रहाणमित्यद्वैतिनः, उपाधिभेदादुभयव्यवस्थेत्यपरे, तत्रैव नास्तीति व्यपदेशोपि भावान्तरनिमित्त इति निष्कर्षकाः ।

नन्वसत्त्वमेव सर्वत्र युक्तम्, असतोपि शुक्तिरजतखरविषाणादेः भ्रान्तिहेतुवैचित्र्यादस्तीति धीविषयत्वदृष्टेरिति चेन्न,—बाधाभावात् । नास्तिधीरेव बाध इति चेन्न ;—उपाधिभेदेन विरोधाभावात् । मध्येप्यसत्कार्यं आद्यन्तयोरसत्त्वात्—खपुष्पवदिति चेन्न,—धर्मिहेतुग्राहकाभ्यां विरोधात्, स्ववाग्व्याघाताच्च । अस्तिबुद्धेर्नास्तिबुद्धिरपच्छेदनयेन बलीयसी, प्रतिषेधस्य प्राप्तिसापेक्षतया परत्वात्, "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिद्ध्यती" ति मीमांसकैरेवोच्यत इति चेन्न, दुष्टहेतुजन्यत्वाविशेषे बलाबलविभागायोगात् । हेतुवैचित्र्ये

---

वस्तुस्थितिमाह । यदेव ही ति । प्रामाणिकत्वेने ति । तदेव सत्त्वमिति भावः । अपर इति । नैयायिकादयः । तत्रैवे ति । उपाधिभेदादिति पक्ष एव भावान्तरनिमित्तत्वं विशेष इत्यर्थः । हेतुग्राहके ति । सत्तावच्छेदककालापेक्षया पूर्वोत्तरत्व ग्राह्यम् , अतो हेतुग्राहकेण सत्ताग्रहात् बाध. । स्ववागि ति । सत्तावच्छेदककालापेक्षया पूर्वो—त्तरकालयोरसत्त्वादिति हेतूक्तिसाध्योक्त्योर्व्याघात इत्यर्थः । अनुमानमेव धर्मिग्राहकाद्धेतुग्राहकाच्च बलीय इति शङ्कते नास्तिबुद्धि रिति । दुष्टे ति । तन्मते सर्वस्याप्यनादिवासनादोषजन्यत्वादिति भावः । हेत्वि ति । यदि दुष्टकारणरूपहेतुवैचित्र्यमङ्गीक्रियते, तदा पौर्वापर्येण नियमो न स्यात् , अदुष्टकारणजन्येनैवान्यस्य

पौर्वापर्यानियमाच्च । परत्वमात्रेण निषेधे त्वन्मतं नास्तीत्युक्तिमात्रेण तद्विरुद्धानां सर्वेषां विजयप्रसङ्गात् । तदुपरि जल्पेऽप्यव्यवस्थिति—प्रसङ्गात् ।

नन्वस्तु तर्हि सर्वस्य सदा सत्त्वम्, असद्धियः सत्वप्राप्तिसापेक्षत्वात्, प्राप्तस्य च निर्बाधत्वादिति चेन्न;—उपाध्यन्तरेण बाधाबाध विवेकस्य वक्तु शक्यत्वात् । अन्यथा घटादिषु असद्व्यवहारस्य निर्विशेषत्वप्रसङ्गात् । अनभिव्यक्त्या सविषयत्वमिति चेन्न,—अभिव्यक्तेरपि सदा सत्त्वेन तत्रापि नञर्थासिद्धेः । तत्कार्यत्वे तद्वत्सर्वत्र सत्कार्यवाद—विलयात् । अभिव्यक्त्यन्तरस्वीकारेऽनवस्थादिदोषात् ।

उक्त च "अभिव्यक्तेरनादित्वे कारणानामनर्थता । तदागन्तुकतामिच्छन् किं नान्यत्रैवमिच्छती" ति ।

---

बाधप्रसङ्गात्, ततश्चापच्छेदन्यायोपन्यासो व्यर्थ इति भावः । अत एव हेतोः सर्वस्य दुष्टकारणजन्यत्वेनाविशेषमभ्युपगम्यापच्छेदन्यायोक्तौ दोषमाह परत्वे ति । मात्रशब्देन दुष्टकारणजन्यत्वाभावो व्यवच्छिद्यते । अपच्छेदन्यायापेक्षितानियत विरोधपौर्वापर्याभावोपि मात्रशब्देन विवक्षितः ।

नन्वि ति। कार्ये सत्वबुद्धिरस्ति न वा? न चेदसद्धियः सत्वप्राप्तिसापेक्षत्वात् उत्पत्तिर्न स्यात्, कुतो बाधकता? अस्तिचेत्तदापि तेन प्रतिबन्धादुत्पत्तेरसम्भवात् प्राप्तस्य सत्वस्य तेन बाधो न सम्भवतीत्यर्थः । उपाधी ति । देशकालादिभेदेन अस्तिनास्तिबुद्धिरूपबाधाबाधव्यवस्थाया वक्तु शक्यत्वादित्यर्थः । अन्यथे ति । देशकालादिभेदादविरोधानुपपादने असत्वधीर्निर्विषया स्यात्, सत्वाभावादतिरिक्त विषयस्य वक्तुमशक्यत्वात् । असत्वधीश्चानुभवसिद्धेति भावः । तत्कार्यत्व इति। तस्य अभिव्यक्तेः कार्यत्व इत्यर्थः । कारणाना मिति । अर्थः—प्रयोजन न भवतीत्यनर्थस्तस्य भावोऽनर्थता । कारणानामनर्थता—अभिव्यक्तिः कारणाना प्रयोजन न स्यादित्यर्थः । तेन "अर्थान्नञ" इत्युर,प्रभृतिषु पाठात् न नित्य समासान्तकप्रत्ययचोद्यावकाश. ।

पूर्वोत्तरकालाद्युपाधिद्वयसम्बन्धेन सत्त्वासत्त्ववर्णने सम्बन्धिन उभयानुवृत्तेः सदातनत्वम्, असतः शशशृङ्गादेर्देशकालभेदेन सत्त्वाभावश्चेति चेन्न;—स्वस्य स्वप्रतियोगिनश्चाधारतया पूर्वोत्तरकालसम्बन्धव्यपदेशात्, नित्यासद्वस्तुनः क्वचिदपि कथञ्चिदभावात्। "आदावन्ते च यन्नास्ति नास्ति मध्येपि तत्तथे" ति चेन्न;—शशशृङ्गादावविष्टत्वात्, घटादौ बाधात्। तत्प्रसङ्गेपि तत्तत्कार्योपाधिकाद्यन्तग्राहकैरेव व्याप्तिग्रहणनिरोधात्। तद्विपर्यये च हेत्वात्मनि बाधादेव। असतः कथं जन्म? सतो वा कथम्? अभिमानमात्रमिति चेत्? दूषणमप्युक्तमेव। प्रागसत्त्वं च जन्मोपकारीति न तत्र विरोधचोद्यावकाशः।

---

बाल्यत्वयुवत्वादिवदेकस्यैव देशकालसम्बन्धिभेदेन सत्वासत्ये उते—इत्यभिमानेन चोदयति पूर्वे ति। असत इति। तथा च सतः कदाप्यसत्त्वन्नोपपद्यत इति भावः। नित्ये ति। नित्यासद्वस्तुन एव सत्वासम्बन्धनियमादित्यर्थः। शङ्कते आदा विति। किं मध्येऽप्यसत्वं साध्यते? किं वा पूर्वोत्तरकालयोरपि सत्त्वपर्यवसानायापाद्यते? आद्य आह शशशृंगादा विति। द्वितीय आह तत्प्रसंग इति। यत्किञ्चिद्वस्तुविकरणकालापेक्षया पूर्वोत्तरत्व कालस्य गृहीत्वा गृहीतस्य खपुष्पादौ पूर्वोत्तरकालयोरसत्त्वस्य मध्येऽप्यसत्वव्याप्तिर्ग्राह्या, तत्र तद्वस्तुनः तत्काले सत्वग्रहात्तत्रैव व्यभिचाराद्व्याप्तिग्रहो नोपपद्यत इति प्रसङ्गे मूलशैथिल्यमित्यर्थः। तद्वि ति। तस्य—प्रसञ्जनीयस्य मध्येप्यसत्वस्य, विपर्ययः—मध्ये सत्वम्, प्रसञ्जकस्य पूर्वोत्तरकालयोरसत्वस्य विपर्यये साध्ये उक्तप्रसङ्गानुग्राह्यो हेतुर्वाच्यः, स च पूर्वोत्तरकालयोरसत्वस्य कार्ये प्रत्यक्षादिना निश्चयाद्बाधित इत्यर्थः। शङ्कते असत इति। परिहरति सतो वे ति। सत्त्वेन सिद्धस्योत्पत्यसम्भवात् उत्पत्तिरेव न स्यादित्यर्थः। इष्टापत्त्या परिहारं शङ्कते अभिमानमात्र मि ते। अभिव्यक्तिमात्रमित्यर्थः। उक्त मिति। अभिव्यक्तेरनादित्व इत्यादिना। असतः कथं जन्मेत्युक्तानुपपत्तिं परिहरति प्रागि ति। नित्यासत्त्वं हि जन्मविरुद्धम्,

प्रागसतः खपुष्पस्य कथमनुत्पत्तिः ? प्राक् सतो वा प्रत्यगात्मनः कथं नित्यव्यक्तिरिति चेत्, खपुष्पे नित्यासत्त्वादेवेति निपुणं पश्य। नित्यविशेषणं प्रयुञ्जानेन च स्वीकृतमनित्यमिति स्ववाग्विरोधः। ननु प्रागसतः उत्पत्तिकालेपि कारणादुत्पत्तिर्न घटत इत्युक्तम्,

"असत्त्वान्नास्ति सम्बन्धः कारकैः सत्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥"

इति चेत् ? अत्रोत्तरं दत्तमाक्षपादैः "घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः" इति। अस्यान्यत्र विस्तरो द्रष्टव्यः। अतोऽसतो नित्यासत्त्वं सतश्च नित्यसत्त्वमिति सांख्यवादः सुहृद्भिर्द्रव्यविषये योज्यः। यत्पुनः सत्त्वासत्त्वसमुच्चय इत्युच्यते, तद्देशकालादिभेदेन चेद्द्वयमनुमन्यामहे। अन्यथा चेदत्यन्तविरोधान्नाद्रियामहे। तथा च दूषणभूषणादिव्यवस्थाविलयेन व्यवहार एव निष्फलः स्यात्। तेन परस्परविरुद्धोऽयं पक्षः।

---

जन्मात्मकसत्वकाले तदसत्वविरोधात्, प्रागसत्व तु तदवच्छिन्नोत्तरकालसत्वात्मकजन्मन्युपकारकमेवेत्यर्थः, प्रागसतो जन्माङ्गीकारे खपुष्पस्यापि जन्म कथं न स्यादिति शङ्कते प्रागसत इति। सतो जन्माङ्गीकारे नित्यस्यात्मनस्त्वदभिमतं जन्म घटादिवत् किमिति न स्यादिति प्रतिबन्द्या परिहरति प्राक्सत इति। अनुत्पत्तिरित्यनुषङ्गः। मन्मते कादाचित्काभिव्यक्तिरुत्पत्तिः, सा नित्यव्यक्तस्वभावे विरुद्धेति शङ्कते नित्ये ति। नित्यासत्त्वभावत्वात् खपुष्पादावपि आगन्तुकसत्त्वात्मकजन्म विरुद्धमिति परिहरति खपुष्प इति। नित्यविशेषणमिति। अनित्यव्यक्त्यभावे तद्व्यावर्तकविशेषणायोग इत्यर्थः। दूषणे ति। दूषणस्य स्वपक्षे असत्व परपक्षे सत्व भूषणस्य तद्विपर्ययेण सत्वमसत्व चेति व्यवस्था न स्यादित्यर्थः। तेने ति। तेन—उक्तव्यवहारोच्छेदप्रसङ्गेन, विरोधस्यावश्यकत्वात्

ये पुनरुभयप्रहाणवादिनस्तेषामेव पक्षं परिशोधयामः । परस्पर विरुद्धोभयाङ्गीकारवत्तदुभयप्रहाणस्यापि विरोधकुक्षिनिक्षेपमेवोपलभामहे । न हि घटत्वाघटत्वसमुच्चयवत् घटाघटविलक्षणयोरपि समुच्चयः सम्भवति, विरोधस्याविशेषात् । उपलम्भ एव विरोधोपशमने प्रभवति, स तु घटत्वाघटत्वसमाहारवत्तदुभयवैलक्षण्येपि परिपन्थी । न हि घटाघटविलक्षणं किञ्चित्पश्यामः । घटविलक्षणस्याघटत्वात् अघटविलक्षणस्य च घटत्वात् । उभयविलक्षण पुनर्न किञ्चिदुपलभामहे । उपाधिभेदादुभय व्यवस्थेति पक्षमदूरविप्रकर्षात्परिगृह्णीमहे । उपाधिभेदस्तु स्वात्मना सत्त्व मन्यात्मना पुनरसत्त्व स्वकाले सत्त्वमन्यकाले पुनरसत्त्व तथा स्वदेशे सत्वमन्यदेशे पुनरसत्वमिति । इह तादात्म्य संसर्गो वा सत्वमिति व्यपदिश्यते, तद्विरुद्धवेषेण वस्तुन्येवासद्व्यपदेशः ।

---

परस्परविरुद्धार्थकोय पक्ष. स्वेनैव बाधित इत्यर्थ. । विलक्षणयो रिति–भाव प्रधानम् । ननु भावाभावयोर्विरुद्धत्वेपि संयोगतदभावयोरविरोधवत् घटाघट वैलक्षण्यस्यापि क्वचिदविरोधोस्त्वित्यत आह उपलम्भ इति ; अदूरविप्रकर्षा दिति । अभावस्य भावातिरिक्तत्वाङ्गीकारमात्रं विप्रकर्ष इति भाव. । उपाधिभेद पदेनोपाधिभेदाधीना व्यवस्थोच्यते । अन्यात्मने त्यन्योन्याभावः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यपरनामधेयेन रामानुजदासेन विरचितायां शतदूषण्याख्यायां चण्डमारुताख्यायां सत्वासत्वविवेको नाम षष्टितम. स्कन्ध. ॥६०॥



षष्ठे तु पक्षे विरुद्धधर्मयोग एव वस्तुन्यसद्व्यवहारहेतुतया व्यपदिश्यते, घटो हि घटात्मना सत् पटात्मना पुनरसन्निति निर्दिश्यते । सन्नेव स्वदेशकालयोः स्वविरोधिदेशकालयोरसन्निति । उपलम्भानुकूलत्वाल्लाघवाच्चेदमेवाद्रियन्ते वृद्धा इति ।

इति शतदूषण्या सत्त्वासत्त्वाविवेकवादः

॥ षष्टितमो वादः ॥



॥ श्रीरस्तु ॥

## ॥ एकषष्टितमो वादः ॥



पयोधितनयान्वित परमधाम्नि यद्वर्तते
सदा यदवलोकनं विदधते फणीन्द्रादयः ।
अकृत्रिमसरस्वतीवदनसन्ततास्वादितै
र्गुणैरधिगुण महः स्वयमनन्तमालक्ष्यते ॥

'विगीतं मदविद्याकल्पित–विवाद.ध्यासित चेतनजातमह'मित्य.दिषु किं सर्वत्राहमर्थैक्य सिसाधयिषितम्, उत तद्धर्मसंविदैक्यम्, यद्वा तदुपलक्षितसन्मात्रैक्यम्? न प्रथमः, अपसिद्धान्तप्रत्यक्षादिविरोध प्रसङ्गात्। न ह्यहमर्थं सत्यम.त्मानमनुमन्यसे, न च अहङ्काराणां स्वरूपैक्यम्। न च परदुःखादेः स्वदुःखादित्वमभिमन्यसे। "एको बहूना" मित्यादिं च न स्मरसि। अत एव न द्वितीयः, सर्वेषां सर्वदा सर्वज्ञत्वस्यासर्वज्ञत्वस्य वा प्रसङ्गाच्च। न तृतीयः, सर्वानुय यि सदैक्येप्यात्मैक्यासिद्धेः। न हि कस्यचित्सद्बुद्धिविषयमात्रे स्वात्माभिमानः, आत्माभिमानमात्रं वा, तथा सति देहात्मभ्रमादेर्विशेषतः परिहारे निद.नाभावात्। आत्मनः सत्वं त्वयापीष्यत इति चेत्, सत्यमेतत्, न तु सतः सर्वस्यात्मत्वम्। आत्मव्यतिरिक्तस्य न सत्त्व मिति चेन्न, "तदनुप्रविश्य सच्च त्यच्चाभवत्" "कथमसतः सज्जायेते" त्यादिविरोधात्।

किञ्च सतामैक्यं सर्वमानविरुद्धम्, सच्चैक्यं तु जात्यैक्यमात्र स्यात्। सत्तैव महानात्मेति चेन्न,—तस्यान्यधर्मत्वायोगात्। सतां हि भावः सत्ता, न तु सा स्वतन्त्रा। उक्तञ्च संवित्सिद्धौ "स्वैः स्वै–र्व्यवस्थितै रूपैः पदार्थानां तु या स्थितिः। सा सत्ता न स्वतन्त्रा स्यात्त–त्राद्वैतकथा कथ" मिति। पारतन्त्र्यभ्रमोऽयमिति चेत्, स किं

सत्ताया उत सतः ? आद्ये विरोधः, सतां हि भावः सत्ता । द्वितीयेऽपि विरोधः, न हि सता स्वधर्मभूना धीरस्ति । न चैतावता तेषामैक्यसिद्धिः ।

अपि च जीवैक्यं सत्यं मिथ्या वा ? पूर्वत्रापसिद्धान्तः, अविद्यातत्सबन्धिजीवभावतदेकत्वादीनां मिथ्यात्वाभ्युपगमात् । उत्तरत्र जीवबहुत्वमपि तथैवेति किमन्यतरपक्षपातेन तत्साधनेन वा ? प्रतीत्यनुसारेण जीवभेदपक्षे वा किं न पतसि । न च जीवैक्यं प्रातिभासिकम्; सर्वधीव्यवहारविरोधात् । नापि यौक्तिकम् ; धर्मधीविरोधात् ? प्रवृत्त्यादिभेदैर्हि परानुमानम् । न च स्वात्मपरात्मधीन्यायः, 'वैधर्म्याच्च न स्वप्नादिव' दिति सूत्रोक्तन्यायविरोधात् । स्वात्मनश्च ते तथैव प्रसङ्गात् । स्वात्मनश्च परं प्रति परात्मित्वात् । न हि दृश्यवद्द्रष्टापि ते मिथ्याभूतः । व्यावहारिकसत्यत्वं तस्यास्तीति चेत् ? स्वीकृतं तर्हि व्यावहारिकजीवबहुत्वं तदैक्यं चेति नैकत्र पक्षपातो युक्तः । यथा दृष्ट वह्नेर्लिङ्गतो वह्न्यन्तरानुमितिः तथैव ह्यत्र आत्मान्तरानुमितिः । यद्यत्रैक्यं साध्यते, तर्हि वह्न्याद्यैक्यमपि किं न साध्यते? विरुद्धधर्मविहतेरिति चेत्तुल्यम् । न चैकाश्रयतया सर्वदुःखादीनां प्रतिसन्धानमस्ति । अन्तःकरणाद्युपाधिभेदादप्रतिसन्धानमिति चेन्न,—देहावयवबाह्येन्द्रियादिभेदेपि प्रसङ्गात् । स्वेच्छया विशेषवर्णनेप्यतिप्रसङ्गात् । महाप्रलयान्तरभाविनां महात्मना केषाञ्चिदन्तःकरणभेदेपि पूर्वकल्पानुभूतप्रतिसन्धानदर्शनाच्च । अद्यतनानां प्राग्भवीयाननुसन्धानवत् स्यादिति चेन्न,—प्रायेण नरक क्लेशप्रसूतिव्यसनकालविप्रकर्षादिभिः संस्कारविलयात् । न चेह तथा, स्वस्याप्यस्मरणापातादिति ।

इति शतदूषण्यां जीवैक्यभङ्गो नाम

॥ एकषष्टितमो वादः ॥



॥ श्रीरस्तु ॥

॥ द्विषष्टितमो वादः ॥

स्वे स्वे कर्मणि युञ्जानो मुखबाहूरुपादजान् ।
स्वयं नः सम्प्रकाशेत स्वान्ते स्वच्छन्दसारथिः ॥

यत्तु भगवता बादरायणेन सूत्रितं—शूद्रस्य ब्रह्मविद्यायामनधिकारित्वम्, तद्भवन्त कथं निर्वहन्ति ? किं शूद्रैर्निर्विशेषज्ञानस्य दुःसम्पादत्वात्, तत्सम्पत्तिसद्भावेपि वा ततः तेषामविद्यानिवृत्त्यसम्भवादिति । न प्रथमः, स हि तथाविधस्य ज्ञानस्य वेदैकजन्यत्वाद्वा ? अवेदजन्यत्वेपि वेदसापेक्षत्वाद्वा ? वेदावेदयोः शूद्रादिषु ज्ञानजनकत्वाशक्तेर्वेति ? आद्यस्तावदधिमतत्वत्सिद्धान्तेन त्वया नाङ्गीकर्तव्य. । आत्मघातुकतर्कानुगृहीतानुमानादिनापि निर्विशेषत्वस्य प्रपञ्चमिथ्यात्वादेश्च भवद्भिः साध्यमानत्वात् । न च निर्विशेषे श्रुतिसमधिगम्यं विशेषान्तरं सम्भवति । श्रुतेरपि, भवद्भिरध्यस्तातद्रूपनिवृत्तिमात्रपरत्ववर्णनात् । आनन्दत्वादेरपि स्वरूपानुप्रवेशनिर्णयात् । नचानुमानादिषु सर्वत्र

---

स्वे स्वे कर्मणी ति । स्वे स्व इत्यनेन ब्राह्मणाद्यधिकारिभेदेन कर्मणा व्यवस्था सूच्यते । अनेन परपक्षे स्वे स्वे कर्मणि नियोजनं न सम्भवति, शूद्रस्यापि उपासनप्रसङ्गादिति सूच्यते। सूत्रित मिति । "शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते ही" त्यादिभिरित्यर्थः। स ही ति । वेदे च शूद्राणामनधिकारादिति भावः । अवेदे ति । वेदाकरणकत्वेपीत्यर्थः । अनुमानादिने ति । आदिशब्देन प्रत्यक्ष विवक्षितम् । तस्य तर्कसहकृतस्य सन्मात्रे प्रामाण्याभिधानात्। ननु निर्विशेषज्ञानमात्रं सुसम्पादमस्तु, तथापि निर्विशेषस्य आकारविशेषेण ज्ञानं मोक्षहेतुः, स चाकारः श्रुत्येकसमधिगम्य इत्यत्राह न चे ति । श्रुत्या विशेषप्रतिपत्तिश्च न त्वयाभ्युपगता, स्वरूपाभिन्नानृतादिव्यावृत्तिपरत्ववर्णनादित्याह—श्रुतेरपी ति । स्वरूपे ति । एतेन ब्रह्मणो निर्धर्मकसदाद्यात्मस्वरूपमागमं विना न केनचित् निश्चेतु शक्यमिति नवीनोक्तं प्रत्युक्तम्, निश्चितस्वरूपानतिरेकात् । ननु माभून्निर्विशेषज्ञानं वेदैकजन्यम्, अथापि शूद्रैस्तद्दुस्सम्पादम्, अनुमानेष्वनधिकारादित्याशङ्क्याह नचे ति । ननु शूद्रादीनां लोकतः सविशेषस्यैव

शूद्रस्यानधिकारःशक्य., लोकसिद्धान्वयव्यतिरेकमूलेषु त्वदुक्तेष्वाचण्डाल मधिकारात् । यत्र च तिरश्चामप्यधिकारः तत्र द्विपदां क परिपन्थी ! अन्यथा तेषां सार्वलौकिकव्यवहारोच्छेदप्रसङ्गात् । निर्विशेष तत्वमि-त्यादिलौकिकवाक्येन च तेषा तत्वज्ञान सुलभमेव । न च ततस्तेषां निवर्तकं ज्ञानं नोपलभ्यत इति वाच्यम्,—त्रैवर्णिकाना वैदिकवाक्येनापि तुल्यत्वात् । श्रवणमनननिदिध्यासनजनितविकल्पवैमुख्याना दृश्यत इति चेत्, एवं लौकिकवाक्येपि तान्येव सहकारीकृत्य तत्सिद्धि पश्य । न च सामग्र्या सत्या क्वचित् ज्ञान क्वचिन्नेति नियन्तु शक्यम्, अनीश्वरेच्छया तन्नियमासिद्धेः । भवतु वा वेदैकमूलत्वम्, तथापि न शूद्रादेस्तत्रानधिकारः; व्युत्पन्नपदपदार्थाना तेषा ततोपि ज्ञानसम्भ-वात्, उत्पन्नेपि तत्वज्ञाने वेदश्रवणतदर्थानुसन्धानादिमूलप्रत्यवायस्य भवन्मते प्रसङ्गाभावात् । यदा विश्वभ्रमोन्मूलनं ज्ञानमुदेष्यति तदा

---

ग्रहान्निर्विशेषव्याप्तिग्रहाभावाद्वस्तुमात्रे सविशेषत्वभ्रमादेव व्यतिरेकिणाप्यनुदया-ज्ञानुमानमित्यत आह निर्विशेषत्वं तत्वमि तीति । नन्वद्वैततत्वसाक्षात्कारो हि भ्रमविरोधी, सचेदानीं शूद्रादीना ततो न जायते, वाक्यश्रवणेप्यविद्यानिवृत्त्य दर्शनादित्यत आह न च तत इति । तुल्यत्वा दिति । ज्ञानानुत्पादस्येति शेष. । श्रवणे ति । श्रवणादिनिरस्तभेदवासनानामित्यर्थः । ननु " श्रोतव्यः श्रुतिवाक्येभ्य " इति श्रुतिवाक्यैरेव श्रवणनियमात् सामग्र्यभावादेव ज्ञानानुत्पाद इत्यत आह भवतु वे ति । वेदेऽनधिकारः किं शूद्रादीना ततो ज्ञानस्यैवानु त्पत्तेः ? प्रत्यवाययोगाद्वा ? नाद्य इत्याह व्युत्पन्ने ति । द्वितीय आह उत्पन्न इति । अतो न प्रत्यवायेन मोक्षप्रतिबन्ध इति भावः । तदेवोपपादयति यदे ति । किञ्च प्रत्यवायस्य प्रायश्चित्तेन नाशे मोक्ष. कुतो न स्यादित्यपि विवक्षितम् । ननु निषेधोल्लघनेन लोभादिना उपदेशसम्भवात् श्रोतुश्च प्राय-श्चित्तेन प्रत्यवायपरिहारसम्भवात् त्वन्मतेपि शूद्रस्य मोक्षः स्यात्, लौकिक-

तदन्तः पातिनः कस्यचित् प्रत्यवायभ्रमस्य का वार्ता ? नचानुपनीत-स्यानधीतवेदस्याश्रुतवेदान्तवाक्यस्य " न शूद्राय मतिं दद्या " दिति वचनबलान्निषिद्धाचार्यलाभस्य शूद्रादेः कथ ततो ज्ञानमिति वाच्यम्; दग्धाधिकारतया वेदशिरसि वर्तमानैर्भवद्भिर्वेदान्तानां तदर्थस्य च तेभ्योपि यथावदुपदेशसम्भवात् । न हि वो विधिनिषेधकिंकरता । यथा ब्रूथ—

" दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः ।
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः ॥ " इति ।

यद्यपि " त्यज धर्ममधर्मं च " त्यादिबलाद्दुर्बलबुद्धिभिर्युष्मत्सयूथ्यैर्निषिद्धवर्जनमनुज्ञायते, तथाप्यन्यैः कैश्चिदुन्मर्यादैरर्थादिलिप्सया तेभ्यस्तदुपदेश सम्भवन्त्येव ।

नन्वेवमस्मन्मते प्रसङ्गः, वक्तुरिव श्रोतुरपि प्रत्यवायेन तन्मूलोपासनादेः तेष्वसम्भवात् । उपासनाविधीनां च उपनयनाद्यङ्गकाध्ययनविधिसिद्धस्वाध्यायसम्पन्नज्ञानत्रैवर्णिकाधिकारिलाभेन कर्मविधीनामिव तदितरेषु स्वसिध्यर्थं ज्ञानान्तरकल्पनौदासीन्यात् । तत एवोपबृंहण-भूतेतिहासपुराणजन्यज्ञानस्यापि विधिभिरनादृतत्वात् । तच्छ्रवणानु-ज्ञानस्य पापक्षयादिमात्रफलत्वात् । उपास्यस्य च ब्रह्मणोनन्तविशेष—

---

वाक्यैरनुमानैर्वा तज्ज्ञानसम्भवाचेत्यत्राह उपासने ति । पूर्वकाण्डे ह्यपशूद्राधि-करणे क्रतुविधयो ह्यन्यथानुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा तु स्वाध्यायविधि-विहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते, तदा तैरेव लब्धात्मानोनुपपत्ति-क्षयात् न चतुर्थस्य विद्यामाक्षिपन्तीति शूद्रस्यानधिकारो निर्णीतः, तेनैव न्यायेन इहापि तादृशाधिकारलाभात् न शूद्रस्य स्वच्छन्दार्जितज्ञानस्याप्यधिकार इति न तत्कृतोपासनस्य मोक्षसाधनत्वमित्यर्थः । ननु यदीतिहासादिजन्यज्ञानं विधिभिरनादृतम्, तर्हि " श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत " इति श्रवणानुज्ञानं किमर्थमित्यत्राह तच्छ्रवणे ति । अनुमानात् ज्ञानासम्भवे हेत्वन्तरमप्याह उपास्यस्ये ति ।

ननु अद्वैतिमतेपि मोक्षसाधनीभूतज्ञानोद्देशेन श्रवणादिविधानात्तेषा च त्वदुक्तन्यायेन त्रैवर्णिकाधिकारकत्वात् शूद्रस्य श्रवणाद्यभावान्मोक्षसाधनं ज्ञानमेव नास्तीति चेत् - उच्यते, त्वन्मते मनननिदिध्यासनाङ्गकश्रवणविधेर्नियमविधित्वा ङ्गीकारात् तस्य त्रैवर्णिकाधिकारित्वेपि मुमुक्षुशूद्रस्य विध्यतिलङ्घितुरमुखादीना-द्वेदान्तात्तदर्थप्रतिपादकभाषादिभिर्वा जायमानं ज्ञानं ततो मोक्षश्च केन वार्यते? न हि प्रतिग्रहादिना ब्राह्मणो धनमार्जयेदिति ब्राह्मणविषयको नियमः साधनान्तरेण धनार्जनमन्येषा निरुणद्धि ।

ननु यद्यप्युक्तरीत्या शूद्रस्य अद्वैतविद्या सम्भाव्यते, तथापि सा न बन्ध मोचनाय प्रभवति, यतः—'श्रवणादिक्रमोत्थितवाक्यजा धीर्विमोचिका,' श्रवण च वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यावधारणम्, तच्च शूद्रस्य नेति न तस्य तादृशी विद्योत्पद्यत इति चेत्,—न तावन्नियमविधिबलाच्छ्रवणाभाव, तत्र तस्यासामर्थ्यात्, नापि श्रुतिनिषेधात्, प्रायश्चित्तेन तन्निष्कृते, तदुपदेष्टृसम्भ वश्च ग्रन्थ एवोक्तः ।

किञ्च काचैषा तादृशी विद्या ? किमपरोक्षरूपा? किं वा अपरोक्षाव धारणात्मिका? यद्वा अप्रतिबद्धापरोक्षवेद्या ? आद्या तावदपरोक्षेन्द्रियस्वाभाव्या-द्वाक्येन प्रसूयत एव ; त्वन्मते द्वितीयामपि त्वत्कुमतिकल्पितदुर्णयाश्लिष्टा या काचित् सामग्री सुखं प्रसूयते । न हि न्यायोपबृंहितेनाप्यनवधारणेन जायत इत्यनुन्मत्त कोपि ब्रूयात् ; तृतीयापि अधिष्ठानयाथात्म्यविषयोपजायमाना तद ध्यस्त कृत्स्नं निवर्तयन्ती विपरीतवासना बन्धनिवृत्तिप्रतिबन्धकतया त्वदभिमतामपि निवर्तयेदेवेति न केनापि प्रतिबन्धसम्भावनामर्हति ।

ननु विद्या हि साक्षादविद्याविरोधिनी न तत्कार्यं प्रतीति भेदवासनया कथ न प्रतिबन्धार्हा ? नैवम्, शुक्तिसाक्षात्कारात् शुक्त्यज्ञाननिवृत्तौ रजतवास नाया प्रतिबन्धकत्वादर्शनात् । किञ्च चरमसाक्षात्कारः किं भेदवासनाया सत्या-मेवोत्पद्यते? उत निवृत्तायां? नाद्य, चरमवृत्तेरप्यध्यस्तत्वेन भेदवासनाजन्यत्वात् । नान्त्य, तथासति प्रागिव प्रतिबन्धात् ततोविद्यानिवृत्त्यनुपपत्तेः । न च निदि

स्यानुमानाद्यगोचरत्वात् । उपासनस्यैव वाक्यार्थज्ञानातिरिक्तस्य बन्ध-निवर्तकत्वात्, बन्धस्य च सत्यत्वेनादृष्टद्वारा तन्निवृत्त्युपपत्तेरिति ।

एतेन द्वितीयोपि पक्षो निरस्तः, वेदसापेक्षत्वेपि तेषां तदधि-गमोपायस्योक्तत्वात् । कथं वानुमानादेर्वेदसापेक्षता ? न तावत् तद-ङ्गतया, तर्कादिवत् कैश्चिदपि तथानभ्युपगमात्, नापि कारणतया; वेदस्यैव व्युत्पत्त्यादावनुमानादिसापेक्षत्वेन वैपरीत्यात् । नापि नैसर्गिक लोकव्यवहारमूलतया तत्त्वबुभुत्साशून्यानां तद्भ्रान्तत्वसमर्पणमूलतत्त्व-बुभुत्सोत्पादनद्वारेण; साङ्ख्यसौगतादिभिः प्रत्यक्षादिवृत्तपरीक्षाप्रवृत्तैस्तदु त्पत्त्युपपत्तेः, उत्पन्नायां च तस्यां भवदभिमतप्रत्यक्षानुमानादिभिर्निर्वि शेषज्ञानसम्पादनोपपत्तेः । तिष्ठन्तु साङ्ख्यादयः, त्वदभिमततत्त्ववित्सम्प्रदा यागतलौकिकवाक्यादपि तद्बुभुत्सा जायत एव । पश्यामश्चैतदद्यतनेषु । न च वेदानुवचनस्य विविदिषासाधनत्वश्रुत्या तत्सापेक्षता ; यज्ञादेरिव

---

भ्यासेनेन भेदवासनानिवृत्तिकाल एव चरमसाक्षात्कारोत्पत्तिः, भेदवासना च विनश्यदवस्था साक्षात्कारहेतुरिति वाच्यम्,—अद्वैतवाक्यप्रतिसन्धानपदार्थस्मर-णादिसामग्रीविलम्बेन साक्षात्कारस्य निदिध्यासनव्यवधानात् । अतस्त्वदभिलक्षिताः तिरोपि विद्याः शूद्रादीनभिसरन्त्यो न केनापि वारयितुं शक्या ।

उक्तत्वा दिति । भवतु वा वेदैकमूलत्वमित्यादिनेत्यर्थः । वेदस्यैवे ति । शक्ततया ज्ञातपदस्य वाक्यार्थज्ञाने करणत्वादिति भावः । तत्त्वबुभुत्साया ह्यनुमानादौ प्रवृत्तिः, सा चानादिसिद्धलौकिकव्यवहारजनितभेदसत्यत्वभ्रमस्य पुरुषस्य लोकव्यवहारस्य भ्रान्तत्वबोधनात् भवतीति भेदमिथ्यात्वं बोधयन्वेदस्तत्त्व बुभुत्सां जनयति, अतो वेदसापेक्षमनुमानादीत्याशङ्क्य निराकरोति, नापी ति । द्वारेणेत्यनन्तरं वेदस्योपयोग इति शेषः । सांख्ये ति । साङ्ख्यसौगतादीनां प्रत्य क्षादिषु परमार्थविषयत्वापरमार्थविषयत्वविप्रतिपत्तेः संशयात् बुभुत्सा भवतीति न वेदस्योपयोग इत्यर्थः । तस्यां–बुभुत्सायां । यज्ञादेरिवे ति । यथा त्रैवर्णिकस्य

जन्मान्तरानुष्ठितस्यापि तस्यादृष्टद्वारा तद्धेतुत्वोपपत्तेः । अत एव न तृतीयः, व्युत्पत्त्यन्वयव्यतिरेकादिशालिषु त्रैवर्णिकेषु शूद्रादिषु च प्रमाणानां पक्षपातविरहात् । भवतु वा शूद्रादीनां यत कुतश्चित्तत्त्वज्ञानम्, त्रैवर्णिकानां तु वेदत एवेति नियमार्थमधिकरणमिति चेन्न,—नियामकाभावात् । अधीतवेदत्वमेव नियामकमिति चेत्, त्यज तर्हि अध्ययनक्लेशम्, शूद्रादिवल्लघीयसैवोपायेन तत्प्रयोजनसिद्धेः । अत एव चान्ततो वेदान्तोच्छेदः प्रसज्येत । नचाधीतवेदैरन्यतस्तदर्थो ज्ञातुं न शक्यः ; तस्य तत्प्रतिबन्धकत्वाभावात् । नापि तेऽन्यतो न जानीयुरिति निषेधः । न च निषेधोल्लङ्घनेऽपि वः प्रत्यवाय इत्युक्तम् । नापि द्वितीय.

---

वेदानुवचने सति तनुत्सोत्पत्तिर्विविदिषासाधनत्वेन अत्र जन्मान्तरानुष्ठितयज्ञादिभिरेवादृष्टद्वारेत्युच्यते तथा शूद्रस्यापि जन्मान्तरीयवेदानुवचनात् मुमुत्सा सुवचेत्यर्थः । अत एवे ति । दुर्ज्ञानजनकत्वं हि वेदनसाधनत्वं यज्ञादीनामाश्रित्य शूद्रे तद्विरहाद्वाच्यम्, न च तत् सम्भवति, जन्मान्तरीययज्ञादीनामपि अदृष्टद्वारा विविदिषायामिवोपयोगादित्यर्थः ।

ननु स्वभावादेव शूद्रे दुर्ज्ञानजनकत्वं न सहकारिविरहादित्यत्राह व्युत्पत्ती ति । अनुभवविरोधादिति भावः । अदृष्टप्रमाणानां तादृगसम्भवकल्पना च कल्पकाभावादेव निरस्ता । नियामकाभावा दिति । त्रैवर्णिकानां वेदत एवेति नियमे हेत्वभावात्तत्परमधिकरणमित्यर्थः । सूत्राक्षराननुगुण्यं च विवक्षितम् । अधीतवेदत्व मिति । अधीतस्य वेदस्य सप्रयोजनत्वार्थं तत एव ज्ञानस्य वाच्यत्वादित्यर्थः । त्यजे ति । कृते ह्यध्ययने तस्य सप्रयोजनत्वाय अन्यतो ज्ञानं न भवेत्, अध्ययनाभावे तु ज्ञानस्य अन्यतः सम्भवाल्लाघवार्थमध्ययनमेव त्वया त्याज्यमिति भावः । त्वयैव लाघवादन्येनापि वेदान्तानध्ययने वेदान्तस्वरूपमेवोच्छिद्येतेत्याह अत एवे ति । किञ्च अधीतवेदान्तानां अन्यतो ज्ञानाभावोऽध्ययनप्रतिबद्धत्वाद्वा? उपायान्तरस्य तान्प्रति निषिद्धत्वेन तत्राप्रवृत्तेर्वा? नाद्य इत्याह नचाधीते ति । द्वितीये नापी ति । नचे ति । यदि ज्ञानार्थमुपायान्तरप्रवृत्तिर्दुरितहेतुः यदि च तज्जन्यं ज्ञानं दुरितहेतुः, उभयथापि विश्रम्भम-

अन्यूनानतिरिक्तविषयत्वे कस्यचिद्बाधकत्वं कस्यचिन्नेति नियामका-भावात् । नचादृष्टद्वारा वैषम्यम्, भवद्भिस्तथानभ्युपगमात् । न च बाधे तत्वज्ञानातिरिक्तमपेक्ष्यते, नापि बाधातिरिक्ता निवृत्तिरिष्यते, यत्रादृष्टादिसापेक्षता स्यात् । अत एव हि ध्याननियोगवादिनोपि भवद्भिर्दूरीकृताः । न च प्रत्यक्षानुमानपुवाक्याना बाधकत्वमेव नास्ति, रज्जुसर्पादिभ्रमानुच्छेदप्रसङ्गात् । न च तानि ब्राह्मणादेरेव रज्जुसर्पादिभ्रमबाधकानि न पुन. शूद्रादेरिति नियम पश्यामः । न च विश्वबाधकैस्तदन्यबाधकैरपि न दृश्यत इति वाच्यम्, वैदिकवाक्येष्वपि तथा प्रदर्शितत्वात् । भवत्वेवं तत्वज्ञानतत्फलयो॰ सम्भवाच्छूद्रादीनामपि ब्रह्मविद्याधिकार., तस्य मिथ्यात्वमात्रेण त्वनधिकारवाचोयुक्तिरिति चेत्, हन्तैवं त्रैवर्णिकानामप्यसौ मिथ्येति किं विशिष्याभिधीयत इति । तदेतत्सर्वं तत्रैवाधिकरणे प्रपञ्चितम् । शास्त्रोपक्रमेपि सन्मात्रस्य ब्रह्मणः प्रमाणान्तरगोचरत्वे तद्विषयस्यागमस्यानुवादत्वं प्रसञ्जयता सूचितम् ।

इति शतदूषण्यामपशूद्राधिकरणविरोधो नाम

॥ द्विषष्टितमो वादः ॥

---

निवर्तकज्ञानेन प्रत्यवायस्यापि निवृत्तिर्भवतीति " यदाविश्वभ्रमोन्मूलन " मित्यादिवाक्ये उक्तमित्यर्थ.। यथा भवता शूद्राद्यनुष्ठितोपासन त्रैवर्णिकोपासनान्यूनानतिरिक्तविषयमपि न बन्धनिवर्तक तथास्माकमपीत्यत्राह नचादृष्टे ति । अदृष्टापेक्षा न सम्भवति चेत्याह नचे ति । शुक्त्यादिज्ञानस्यानपेक्षस्यैव रजतादिनिवर्तकत्वादिति भाव॰ । यदि तु बाधातिरिक्ता निवृत्तिरिष्यते, तदा मन्त्रादेरदृष्टसापेक्षत्ववत् अत्रापि सापेक्षत्व स्यादपि, न चैवम्, बाधस्यैव निवृत्तित्वादित्याह नापी ति । अस्तु वा क्वचिददृष्टद्वारत्वम्, तदपि वैदिकज्ञानस्यैव, नत्वन्यस्यापि प्रत्यक्षादेः, प्रत्यक्षादिक च न भ्रमनिवर्तकम्, अन्यथाऽनुभवविरोधात्, तच्च शूद्रस्यापि निवर्तक. नियामकाभावात्, अतो निर्विशेषानुमानादिना शूद्रस्यापि अविद्या-निवृत्तिः स्यात्, न च निर्विशेषानुमानादि॰ शूद्रस्य न विश्वबाधक., अनन्तरमपि भ्रमोपलम्भादिति वाच्यम्,—त्रैवर्णिकस्य वैदिकज्ञानेपि तुल्यत्वादित्याह नचे त्यादिना । शास्त्रोपक्रमेपी ति । प्रथमसूत्रे प्रत्यक्षस्य सन्मात्रग्राहित्वेन

वेदान्तानामनुवादत्व प्रसञ्जयता भगवता पूर्व समानविषयज्ञानान्तरस्य सत्व।तस्य च शूद्रादावप्यविशेषात्, शूद्रस्यापि ब्रह्मविद्याधिकारादपशूद्रनयविरोध· सूचित इत्यर्थः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां अपशूद्राधिकरणविरोधो नाम द्विषष्टितम· स्कन्ध· ॥६२॥



॥ श्रीरस्तु ॥

॥ त्रिषष्टितमो वाद. ॥



कर्मज्ञानादिनिष्ठासु कर्तृत्वं योगिना यतः ।

स सर्वकर्ता स्वमतं नित्यं कारयितास्तु नः ॥

अपशूद्राधिकरणप्रसङ्गादुत्पन्नतत्वज्ञानस्य कर्मयोगानधिकारो भगवद्गीतादीन् व्याचक्षाणैः परैर्जल्पित प्रतिक्षिप्यते । तत्र तावत् सम्यगात्मदर्शनेन निरस्तमिथ्याज्ञानस्य प्रव्रज्या प्रविष्टस्यापि साङ्ख्यसंज्ञस्य त्वदुक्ताधिकारिणः "शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषं" मित्यादिभि. लौकिकवैदिकसमस्तकर्मन्यासो नास्तीति त्वदुक्तवाक्यैरपि सुव्यक्तम् । अथापि ब्रूमः—उत्पन्नतत्वज्ञानस्य कर्मयोगेऽनधिकारः किं तस्य कर्मयोगवेदनाभावात्? तत्सम्भवेपि वा तस्य निष्फलत्वात्? उत तत्सफलत्वेपि तत्फलनैरपेक्ष्यात्? तत्सापेक्षत्वेपि वा अन्यतः तत्सिद्धेः? अन्यस्माद्वा कुतश्चिदिति । न प्रथमः, दीर्घकालनैरन्तर्यादरसेवितकर्मयोगलब्धज्ञानस्य प्रबलसन्निपाताद्यभावे झडिति तत्प्रमोषासम्भवात्, तीव्रतरात्मानुभवसुखसन्दोहेन स्यादिति चेन्न,— निषिद्धपरिहारसंस्कारस्याप्युच्छेदप्रसङ्गेन त्वदुक्तधर्माधर्मत्यागसमुच्चयविरोध-

---

कर्मज्ञाना दीति । अत्र स्वमतं नित्यं कारयितास्तु न इत्यनेन—

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।

श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ॥"

इति गीतावचनं स्मारितम् । न इत्यनेन ज्ञानिनामुपलक्षणात् ज्ञानिनामधिकारसूचनाद्वादार्थसंग्रह. । अनेन च—

"येत्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।

सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥"

इति तदनन्तरभगवद्वचननिन्दितत्वं कर्मत्यागिना सूचितम् । दीर्घकालनैरन्तर्यादरसेवितत्वं कर्मयोगस्य विशेषणम् । धर्मे ति । धर्माधर्मयोस्त्यागाविति विग्रहः।

प्रसङ्गात् । आगमिकसंस्कारप्रध्वंसेपि स्वात्मानुभवानन्दमग्नतया निषिद्धेषु न कटाक्षोपि विक्षिप्यत इति चेत् , हन्तैवं तर्हि शारीरकर्मस्वपि न विक्षिप्येत, नचैवमिच्छसि । यस्तु तथाविधात्मानुभवेन शारीरस्यापि कर्मण. प्रस्मरति न तस्य वयमपि सुषुप्तस्येव तदानीं कर्मानुष्ठानं ब्रूमः । नचासौ यावच्छरीर तथावतिष्ठत इति दृष्ट श्रुतमिष्टं वा । न द्वितीयः, दृष्टादृष्टविकल्पानुपपत्तेः ; नह्यन्धपङ्ग्वादिवत् दृष्टसामग्र्यां किञ्चिदस्योपघातं पश्यामः । न च तस्या सत्यामदृष्टवैकल्यादशक्तिः शङ्क्या ; दृष्टसामग्र्युपनयनार्थत्वात्सामान्यतोऽदृष्टस्य अन्यथा सैव निष्फला स्यात् । सम्यक् प्रयुक्ता च सा तत्फलं नोत्पादयेत् । इष्ट एवायं क्वचिदर्थः—" सुरक्षित दैवहतं विनश्यती " त्यादिस्मरणादिति चेन्न; तत्रापि यत्किञ्चिद्वैकल्यमुत्पाद्यैव तथात्वस्थितेः , अन्यथातिप्रसङ्गात् । ननु कर्तृत्वाभिमानमन्तरेण कर्मणि नाधिकारः, स चास्य निःशेषविनष्ट इति कथं सामर्थ्यमिति चेन्न,—शारीरकर्मप्रतिबन्द्यैव दत्तोत्तरत्वात् । तत्रापि नासौ कर्ता निष्क्रियत्वादात्मस्वरूपस्येति चेत्; तर्हि कः कर्ता ? प्रकृतिरेवेति चेत् ; कः सख्यावस्थस्य विशेषः ? अभिमाननिरोध इति चेदेव कर्मयोगेपि किन्न स्यात् ? तथैव हि फलसङ्गकर्तृत्वादित्यागेन तदनुष्ठानमनुशिष्यते । यत्र चायमधिकरोति ज्ञानयोगे स किं रूपः ? किं निष्क्रियात्मस्वरूपमात्रावस्थानलक्षणः? उत तस्मिन्नस्य सम्यग्दर्शन रूपवृत्तिज्ञानेनावस्थान? मिति । पूर्वत्र ज्ञानयोगस्य सदातनत्वप्रसङ्गः ।

---

कर्मण इति । "अधीगर्थे" ति षष्ठी । अन्यथे ति । दृढदण्डनुन्नचक्रस्य कदाचिदभ्रमप्रसङ्गादित्यर्थः । तथैव ही ति । ' सङ्गन्त्यक्त्वे ' त्यादिना । प्रतिबन्दी वक्तुं विकल्पयति यत्र चे ति । ननु कर्तृत्वाभिमानः कर्मण्यधिकारो न तु ज्ञानयोगे, अत आह

उत्तरत्र ज्ञानयोगेप्यनधिकार', द्रष्टृत्वस्यापि कर्तृत्वविशेषत्वात् । दृशि क्रियाकर्तृत्वमेव द्रष्टृत्वमिति ज्ञातुरनात्मत्वं प्रतिपादयता त्वयापीष्यते । द्रष्टृत्वमप्यन्तःकरणधर्मत्वेन मिथ्यात्वेनैवानुसन्धीयमानमात्मविदं न लिपतीति चेत्; यज्ञादिकर्तृत्वेपि तथात्वे किं वैषम्यम्? बाह्याभ्यन्तरत्वाभ्यां वैषम्यमिति चेन्न;—वैषम्यमात्रस्याप्रयोजकत्वात्, यागादेरपि च द्रव्यत्यागात्मकबुद्धिवृत्तिविशेषत्वात्, शरीरक्रियादिरूपेष्वपि कर्मसु प्रयत्नस्यैवान्तरस्य पुरुषव्यापारत्वात्तत्रैव तत्पर्यन्ते स्वव्यापारे तस्य नियोगात्। ननु न ज्ञानयोगः स्वेच्छयानुष्ठीयते, अपितूच्छ्वासनिश्वासनिमेषोन्मेषादिवत्साख्यस्यासौ स्वरसवाहीति चेन्न;—युष्मद्गुरुवंशस्य सर्वकर्मपरित्यागरूपज्ञानस्य विधेयत्ववाचोयुक्तेरनर्थकत्वप्रसङ्गात्, शास्त्रजन्यज्ञानमात्रस्या

---

द्रष्टृत्वस्ये ति । ज्ञातुरि ति । ज्ञातु. ज्ञानक्रियाकर्तृत्वेन सविकारत्वाद्धि निर्विकारादात्मनोन्यत्वमहमर्थस्योच्यत इत्यर्थः ।

ननु कर्तृत्वाभिमानो न साख्यस्य निश्शेषविनष्ट', अतो ज्ञानयोगकर्तृत्वोपपत्ति'; न च तदभिमानवत्वे लेपप्रसङ्ग., अन्त.करणधर्मत्वेन मिथ्यात्वेन च तत्वतो ज्ञातस्य तस्य लेपायोगात्, तत्वज्ञाने सत्यप्यभिमानस्तु वासनाया. प्राबल्याद्विदुषामपि देहात्मभ्रमाभासवदिति शङ्कते द्रष्टृत्वमपी ति । कर्मणामपि न बाह्यत्वनियम इत्याह यागादे रिति । येषु च बाह्यत्व होमस्नानादिषु, तेष्वपि आन्तरप्रयत्नात्मकपुरुषव्यापारे कर्तृत्वम्, तत्रैव पुरुषस्य नियोगात्, तत्र च बाह्यक्रियापर्यन्ते नियोगात् बाह्यक्रियापि सिद्ध्यतीत्याह शरीरे ति । नन्वि ति । तथा च नाधिकाराभावप्रयुक्ता ज्ञानयोगानुपपत्तिः, कर्म तु न स्वरसवाहीति तत्र तत्प्रयुक्तानुपपत्ति., बुद्धिपूर्वमिच्छयानुष्ठेयत्वादित्यर्थः। गुरुवंशस्ये ति । स्वरसवाहित्वे विधेयता न स्यादित्याशयः ।

ननु शास्त्रजन्यज्ञानमेव विधेय न ज्ञानयोग इत्यत्राह शास्त्रे ति । सन्न्यासलक्षणज्ञानस्य तु विधियोग्यत्वाविधेयता । ज्ञानयोगस्य स्वरसवाहिता न

विधेयत्वात् , तथाचाभ्युपगमात् , तन्मूले तु सर्वकर्मसन्यासलक्षणे ज्ञानयोगे कर्तव्ये विधेरवकाशात् । स्वरसवाहिस्वात्मदर्शनरूपमहाजागरस्य सुषुप्तावपि नाधिकारः, प्रबुद्धस्यापि न बहिर्मुखी दृष्टिरिति शारीरकर्मस्वपि नावकाशः । तथापि निष्क्रियमात्मानमात्मत्वेनाभिमन्यमानस्य कर्तृत्वाभिमानपुरस्सरक्रियात्मस्वरूपावस्थानरूपकर्मयोगे कथमधिकारः ? कथञ्च विदितकर्ममिथ्यात्वस्तत्र प्रवर्तते ? इति चेन्न;—उक्तोत्तरत्वात् । ज्ञानयोगो हि क्रियाविशेष एवेति दर्शितम् । न च तस्य मिथ्यात्वमविदितम् । सोपि स्वरूपभूतसंविन्मात्रादन्यः । तस्य च मिथ्यात्वं संवित्स्वरूपादन्यन्मिथ्यैवेति समतप्रयोजकश्रवणवेलायामेव सिद्धम् । नचात्यन्तनिष्क्रियत्वमात्मनो वयमिच्छामः, आत्मन एव कर्तृत्वस्य " कर्ता शास्त्रार्थवत्वा " दित्यादिभि स्थापनात् , उत्पत्तिनाशादिलक्षणक्रियानिवृत्तेश्च सम्यज्ज्ञानशरीरप्रेरणादिक्रियावत्वेन सह विरोधाभावात् , भावेपि वा ज्ञानयोगेपि समत्वात् । भ्रान्तिलेशमुपजीव्यैव ज्ञानयोगेपि प्रवृत्तिरिष्यत इति चेत् , तथान्यत्रापि किं नेष्यते ? ननु भवत्येवमधिकारे युक्तिसाम्यम्, तथापि शास्त्रेण पर्युदस्तत्वान्न साख्यः कर्मयोगेधिकरोतीति चेत् ; स्ववर्णाश्रमोचितेषु कर्मसु शास्त्रेण पर्युदासा

---

युक्तेत्याशयेनाह तन्मूल इति । ननु कर्मसन्न्यासलक्षणज्ञानस्य विधेयत्वेपि स न ज्ञानयोगः, किं त्वात्मदर्शनप्रवाह , तथा च न गुरुवश्यवाचोयुक्तिविरोध इत्यत्राह स्वरसे ति । स्वरसवाहिपदस्य बहुव्रीहिः । आत्मदर्शनस्य स्वरसवाहित्वे सुषुप्तिरपि न स्यादित्यर्थः । तत्सम्भवेपि प्रबोधे विषयान्तरसञ्चारो न स्यादित्याह प्रबुद्धस्ये ति । शङ्कते तथापी ति । निष्क्रियत्वेन ज्ञाते आत्मनि सक्रियत्वकल्पनमयुक्तमित्यर्थः । किं सर्वक्रियाराहित्यमुच्यते? उत्पत्तिनाशवृद्धिक्षयादिराहित्य वेति विकल्पाभिप्रायेणाह नचात्यन्तेत्या दिना ।

ननु सक्रियत्वभ्रान्तिमत एव ज्ञानयोग इत्याशङ्कते भ्रान्ती ति ।

भावात् , प्रत्युत तत्सग्रहणस्योक्तत्वात् । अत एव प्रव्रजितस्यापि यज्ञादिनिरपेक्षेषु प्राणायामादिकर्मयोगेष्वधिकारः सम्भवति , आदिश्यते च, अन्यथा " कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसग्रह " मित्युक्तलोक सग्रहार्थकर्मण्यपि प्रवृत्तिर्निषिद्धानुष्ठान स्यात् , अतो न कथञ्चिज्ज्ञान योगे शक्तस्य कर्मयोगे सामर्थ्यासम्भवः । न च तृतीय , परित्यक्तस्व र्गादिफलस्यापि पापक्षयादिफलसद्भावात् नित्यकाम्यज्योतिष्टोमादिवदेक स्यैव विनियोगपृथक्त्वेन फलभेदोपपत्ते. । अन्यथा मुमुक्षुविषयकर्म— योगस्यैव अननुष्ठानप्रसङ्गात् । नापि चतुर्थ , कल्मषनिवृत्तेः सर्वदापेक्षि तत्वात् । कर्मयोगफलभूतस्थिरप्रज्ञतासिद्धौ कर्मयोगादभ्युत्थान त्वया- पीष्यत इति चेत् , सत्यम् , तथापि तत्र अनधिकार न ब्रूमः । अत एव हि ज्ञानयोगयोग्यस्यापि अनुविधेयानुष्ठानस्य शिष्टतया व्यपदे- श्यस्य सुकरनिष्प्रमादोपायशक्तस्य च कर्मनिष्ठैव श्रेयस्त्वेनानुशिष्यते । न च कर्मयोगाभ्युत्थितस्यापि ज्ञानयोगिन स्ववर्णाश्रमकर्मनिवृत्ति ब्रूम । वर्णाश्रमधर्मा हि सर्वासु निष्ठासु इतिकर्तव्यतात्वेनावतिष्ठन्ते, न तु स्वयमेव कर्मयोगादिरूपा. । अत एव हि भक्तियोगावस्थस्यापि तदनु वृत्ति. । न च पूर्वकृतै कर्मभिर्मृदितकषायस्य किमिदानीन्तनैरिति वाच्यम् ; अमुक्तस्यात्यन्तमृदितकषायत्वाभावात् । आत्मदर्शनासिद्धौ किं तदर्थेनेति चेन्न;—अनिश्चितासद्भावपूर्वोत्तरज्ञानावरणहेतुविनिवार णाय तदुपादानोपपत्ते । न ह्यसम्भवदावरणं सांख्यस्य ज्ञानम् ; तथा सति तम प्रयुक्तसुष्वापाद्यसम्भवप्रसङ्गात् । न च नास्ति सुष्वाप , " युक्तस्वप्नावबोधस्ये " ति वचनात् । अत आत्मज्ञाने सिद्धेपि उत्तरोपचयसिद्ध्यर्थमपचयपरिहारार्थं वा ज्ञाननिष्ठैरपि स्ववर्णाश्रमोचित

कर्मोपसहर्तव्यम् । न च पञ्चमः, इति कर्तव्यताभूतनित्यनैमित्तिकांशषु तावदकरणनिमित्तप्रत्यवायपरिहारादेः करणमन्तरेणान्यतोसम्भवात् । पवित्रतमं ज्ञानमेव तमपि प्रत्यवाय निरुन्ध्यादिति चेत् , इदमपि "नाविरतो दुश्चरिता" दित्यादिभि· प्रागेव दूषितम् । "यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इत्यादिभिः ज्ञानयोगशक्तस्यापि तदेकफलत्वेन विकल्पिते कर्मयोगेपि सुकरोपायसङ्गादिवशादधिकारोपपत्तेश्च । षष्ठे तु चार्वाकादिसम्मतविस्रम्भान् शिष्यानेकान्ते शिक्षयत । तदेतदपि वर्णाश्रमधर्माणा यावज्जीवानुष्ठेयत्वप्रतिपादकेन भाष्येण व्यञ्जितम् ।

आशरीर प्रवृत्तत्वात्स्वभावप्राप्तकर्मणाम् ।
किमर्थं क्रियते द्वेष शास्त्रप्राप्तेषु कर्मसु ।। इति ।

इति शतदूषण्या अधिकारिविवेको नाम

॥ त्रिषष्टितमो वादः ॥



नित्ये ति । एकस्यैव ज्योतिष्टोमस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'वसन्ते ज्योतिषा यजेते ' ति विनियोगभेदाद्यथा नित्यकाम्योभयात्मकस्य स्वर्गप्रत्यवाय परिहाररूपफलभेदस्तथेत्यर्थः । अन्यथा—पापक्षयादिफलाभावे । **पवित्रतम** मिति । ' न हि ज्ञानेन सदृशं पवित्र ' मिति वचनकटाक्षेणोक्तम् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यपरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां अधिकारिविवेको नाम

त्रिषष्टितम स्कन्ध ॥६३॥



॥ श्रीरस्तु ॥

## ॥ चतुःषष्टितमो वादः ॥



श्रितान् परमहंसतां परमहंस इत्युक्तितः
त्रयीपथमसौगतान् कपटसौगतान् खण्डयन् ।
मुनिर्जयति लक्ष्मणो मुदमुदञ्चयन्नञ्चतां
मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥

ये पुनः शङ्करादयोऽर्वाचीनपरमहंसास्ते बाह्यवेषपरिग्रहमधिकृत्य पृच्छ्यन्ते–किमिति परमहंसैः ब्रह्मसूत्रमुत्सृज्यते ?

(१) किं तेषु तत्प्रापकाभावात् ?

(२) उत सामान्यतः प्राप्तस्यापि विशेषतो बाधात् ?

(३) यद्वा वैकल्पिकतया परित्यागेपि प्रत्यवायविरहात् ?

(४) उताङ्गिनिवृत्तेरेवार्थात्तदङ्गस्यापि निवृत्तेः ?

(५) अथवा पूर्वानुष्ठानमात्रात् ? इति ।

(१) न प्रथमः—श्रुतिस्मृतिभिः सामान्यतो विशेषतश्च तत्प्राप्तेः । द्विजसामान्यतः प्राप्तिस्तावत्सहजा निर्विवादैव, परिव्राजकसामान्यतः प्राप्तिस्तावदभिधीयते ।

यथाह–वसिष्ठः— "यज्ञोपवीत्युदककमण्डलुहस्तः" इति ।

---

उक्तित इति । उक्तित एव पारमहंस्यन्न त्वर्थत इति भावः । अनेन वादार्थसूचनं कृतम् । अञ्चतां–उपसेवमानानाम्, मुदमुदञ्चयन् उद्गमयन्नि त्यर्थः । अधिकृत्य—विषयीकृत्य । तान्प्रति तदीयबाह्यवेषपरिग्रहविषयः प्रश्नः क्रियते । विशेषत इति । परमहंसरूपविशेषे बाधादित्यर्थः । सामान्यतो विशेषतश्चेति । द्विजसामान्ये तद्विशेषपरिव्राजके चेत्यर्थः ।

अङ्गिराः—" यतीनां त्रीणि शुक्लानि भवन्त्येतानि नित्यशः ।
यज्ञोपवीत दन्ताश्च तथा जंन्तुनिवारणम् ॥ " इति ।

शौनकः—' अथ युवा सुवासा इति काषायवासः, सखा मे गोपायेति त्रिदण्ड गृह्णाति, तच्छंयोरावृणीमह इति यज्ञोपवीत' मिति ।

दत्तात्रेयः—' मोक्षाश्रमे स्मृत वस्त्र रक्त यद्धातुरञ्जितम् ।
कार्यं यज्ञोपवीतन्तु सित नवगुणान्वितम् ॥ ' इति ।

सामान्यतश्च यज्ञोपवीतत्याग निषेधन्ति । यथाह—मेधातिथिः—
' गृहीतं यत् त्रिदण्डादेरविनष्टन्तु न त्यजेत् ।
समुद्रं गच्छ स्वाहेति विनष्ट प्रक्षिपेज्जले ॥
प्रक्षिप्य चान्यदादद्याद्गायत्र्या प्रणवेन वा ।
तच्छयोरित्युपवीतमब्लिङ्गाभिः कमण्डलुम् ॥ ' इति ।

अङ्गिराश्च—' यतेर्लिङ्ग प्रवक्ष्यामि येनासौ लक्ष्यते यतिः ।
ब्रह्मसूत्र त्रिदण्डश्च वस्त्रं जन्तुनिवारणम् ॥
शिक्यं पात्र ब्रसी चैव कौपीन कटिवेष्टनम् ।
यस्यैतद्विद्यते लिङ्गं स यतिर्नेतरो यतिः ॥ ' इति ।

उतवीतपरित्यागे प्रत्यवायं स्मरन्ति च । यथाह—अत्रिः—
'ब्रह्मसूत्रं त्रिदैवत्य ब्रह्मविष्णुशिवात्मकम् ।
परित्यजन्ति विप्रा ये मोहात्तर्कोपजीविन ॥
स्वर्गापवर्गमार्गाभ्या प्रच्युतास्ते न संशयः । ' इति ।

---

मोक्षाश्रमे वस्त्र रक्त स्मृतम् , कौसुम्भादिव्यावृत्त्यर्थं ' यद्धातुरञ्जित ' मित्युक्तम् । निषेधन्ती ति । त्यागनिषेधादपि धारण सिद्धमिति भावः । त्रिदण्डादे रित्यादिशब्देन यज्ञोपवीत गृह्यते । तत्सूचनार्थैव ' समुद्र गच्छ—स्वाहे' त्याद्युत्तरवचनोपादानम्, तत्र च विनष्टोपवीतपुनर्धारणस्योक्तत्वात्, अविनष्टत्यागनिषेधवचनस्य यज्ञोपवीतविषयत्वमवगम्यत ' प्रत्यवाय मिति । अतोपि

यद्यप्यत्र विप्रशब्द सामान्यवचन', तथापि पारिव्रज्यमेवाधिकृत्य प्रवृत्तत्वात् विशेषार्थ एव । सामान्यतो निर्देशस्तु सर्वेषा प्रत्यवायसाम्यात् । तथाहि—उशनास्तत्परित्यागे सर्वेषामाश्रमिणा पतनमेवाह—

"ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारी गृही वनी ।
परिव्राट् चापि पतति तस्मात्तन्न परित्यजेत् ॥" इति ।

तत्परित्यागे बहूनि प्रायश्चित्तानि सस्मरुः । यथा—अत्रिरेव—

'त्यक्त्वा यज्ञोपवीतन्तु षट्कृच्छ्राणि समाचरेत् ॥' इति ।

वृद्धजाबालिश्च-'हीनो यज्ञोपवीतेन यदि स्याद्ध्यानभिक्षुकः ।
तस्य क्रिया निष्फला' स्यु' प्रायश्चित्त विधीयते ॥
गायत्रीसहितानेव प्राजापत्यान् षडाचरेत् ।
पुनस्सस्कारमाहृत्य धार्यं यज्ञोपवीतकम् ॥' इति ।

हारीत.—'विना यज्ञोपवीतेन यत्कृत भोजनादिकम् ।
तत्पापप्रशमायाल प्रायश्चित्त ब्रवीमि व. ॥
तेषा तु भोजनादीनां प्रत्यह सुसमाधिभि' ।
सहस्राद्यैरसुयमैर्विधिपूर्वकृतैः शुचि. ॥' इति ।

असमीक्षितदशापरित्यक्तब्रह्मसूत्रैश्च यादवप्रकाशैः समीक्ष्य सञ्जातानुशयै. सप्रमाणमनुयुक्ता. वासुदेवयात्रोत्सवसमागता. नानादिगन्तवास्तव्या. शिष्टाश्च प्रायश्चित्तमेव उत्तरं ददु ।

---

तद्धारण सिद्धमिति भावः। तर्के ति । अङ्गिकर्मनिवृत्तेरर्थात्तदङ्गयज्ञोपवीतनिवृत्तिरित्याद्यद्वैत्यभिमततर्को विवक्षित । प्रायश्चित्तानी ति । ततोपि धारण सिद्धमित्यर्थः । ध्यानभिक्षुक.—परिव्राट् ।

अष्टः तर्हसाविति चेन्न;—प्रायश्चित्तात्पूर्वमेव तथात्वस्य प्राचीनै र्निश्चितत्वात् । तत्समुच्चितस्यैव यतिधर्मस्याद्यापि मानवादिवत् अवि गीतशिष्टपरिग्रहात् ।

(२) एवं परिव्राजकानां सामान्यतः प्राप्तं ब्रह्मसूत्रम् । परमहंसेष्वेव विशेषतोपि प्राप्तिर्दृश्यते ।

तथाहि—शाट्यायनकोपनिषदि समाम्नायते—

" अथ ह यद्ब्रह्म परमं सनातन ये श्रोत्रिया अकामहता अधीयु. ।
शान्तो दान्त उपरतस्तितिक्षुर्योनूचानो ह्यभिजिज्ञास्यमानः ।
त्यक्तैषणो ह्यनृणस्तद्विदित्वा मौनी वसन्नाश्रमे यत्र तत्र ।
अथाश्रमं चरम सम्प्रविश्य स च द्वितीयममृतं सम्प्रयाति ।
अखिल विश्वं ब्रह्मभावनया निचाय्य चरेत्पृथिव्या विष्णुलिङ्गी निगूढः।
परमहंसमाश्रमं सम्प्रविश्य यथोपपत्ति पञ्चमात्रा दधानः ।

तदत्र श्लोकौ भवतः—

त्रिदण्डमुपवीतञ्च वासः कौपीनवेष्टनम् ।
शिक्यं कवचमित्येतद्बिभृयाद्यावदायुषम् ॥
त्रिदण्डं वैष्णवं लिङ्ग विप्राणा मुक्तिसाधनम् ।
निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥ इति ।

अथ खलु सौम्य कुटीचको बहूदको हस. परमहस इत्येते चतुर्विधाः परिव्राजका भवन्ति । सर्वे विष्णुलिङ्गिनः सदा स्वात्मानं आत्मना ब्रह्म भावं भावयन्तः शुशीलिनः पुण्यश्लोका भवन्ती " ति ।

---

तदि ति । तत्कृतस्य यतिधर्मसमुच्चयाख्यग्रन्थस्येत्यर्थः । वाससो विश षणं कोपीने ति। ननु यथा न हिंस्यादिति निषेधो विहिताग्नीषोमीयपश्वालम्भा-

इमामेवोपनिषदमुपबृंहयन् भगवान् पराशरः स्मरति—" तत्र परिव्राजकाश्चतुर्विधा भवन्ति, कुटीचको बहूदको हंसः परमहंसश्चेति । तत्र कुटीचका नाम—पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमद-मात्सर्यादीन् परित्यज्य विधिवत्सन्न्यासं कृत्वा त्रिदण्डजलपवित्रकाषाय वस्त्रोपवीतधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यज्ञानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं देहयात्रामात्रमुपयुञ्जानाः तस्यां कुटौ नित्यं वसन्त आत्मानं मोक्षयन्ते । बहूदका नाम—त्रिदण्डकमण्डलुजलपवित्रशिक्य यज्ञोपवीतिनो वेदान्तार्थविबोधकाः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षचर्यां चरन्त आत्मानं मोक्षयन्ते । हंसा नाम—त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतरक्तकाषायवाससो गोमूत्रगोमयाहारा एकरात्रं त्रिरात्रं षड्रात्रं मासोपवासपक्षोपवासकृच्छ्रातिकृच्छ्रचान्द्रायणसान्तपनपराकतुलापुरुषादीनि—व्रतानि चरन्तो गोद्विजाढ्येषु पुण्येषु देशेषु वसन्त आत्मानं मोक्षयन्ते । परमहंसा नाम—त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतिनोऽन्तर्वासबहिर्वासधारिणो ग्रामैकरात्रवासिनो नगरतीर्थजनपदेषु पञ्चरात्रं षड्रात्रं क्षारलवणवर्ज्यं भिक्षाकाले शीर्णपर्णपुटं कृत्वा ब्राह्मणकुलादेव भैक्षं गृहीत्वा अष्टौ ग्रासानेव भुञ्जानाः सन्ध्योपासनतत्परा नित्यं वृक्षमूले वसन्त आत्मानं मोक्षयन्ते । " इति ।

एवं शाट्यायनकश्रुत्या पराशरस्मृत्या च सुप्रसिद्धमर्थमत्रिप्रभृतयोऽपि वृत्तिभेदभिदुराणां चतुर्णां परिव्राजकानां लिङ्गभेदनिषेधद्वारा सामान्यतो दर्शयन्ति ।

यथा—" चतुर्विधा भिक्षवस्तु स्मृताः सामान्यलिङ्गिनः ॥

तेषां पृथक् पृथक् नाम वृत्तिभेदात्कृतं श्रुतौ ।

कुटीचको बहूदश्च हंसश्चैव तृतीयकः ॥

चतुर्थः परमो हंसो यो यः पश्चात् स उत्तमः ।

लिङ्गन्तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम् ॥ " इति ।

वृत्तिभेदश्च पराशरस्मृत्या प्रागेव दर्शितः । एवं परमहंसानां विशेषत एव प्राप्तेः, तत्परित्यागनिषेधाच्च द्वितीयः पक्षो निरस्तः ।

(३) यद्यपि सामान्यमात्रं विशेषबलात्सङ्कोचमाप्नोति, तथापि न विशेषाद्विशेषः पराभवमर्हति, अविशेषाद्विपरिवर्तप्रसङ्गाच्च । दृष्टश्चास्म दुक्तो विशेषः । त्वदभिमतस्त्वद्यापि न दृश्यते । ननु " नखानि निकृत्य यज्ञोपवीतं विसृजे " दिति दृश्यत इति चेन्न,— " नखानि निकृत्य पुराणवस्त्रयज्ञोपवीतकमण्डलून् त्यक्त्वा नवान् प्रगृह्याश्रमं प्रविशे " दिति श्रुत्यैव त्यागग्रहणयो. पुराणनूतनविषयत्वस्य न्याय-निरपेक्षमेव व्यवस्थापनेन विरोधप्रशमनात्सामान्ययज्ञोपवीतस्य पुराणत्व विशेषिते पर्यवसातुमुचितत्वात्, सामान्यनिषेधस्य नूतनविशेषविधिना स्पर्धितुमशक्तेः । ' न हिंस्या ' दित्यादिवत् । न च ' विसृजे ' दित्यस्य न गृह्णीयादित्यर्थ., येन नूतनग्रहणपरतया विषयव्यवस्था

---

द्व्यावर्तते, तथा त्यागविधिविषयात्तन्निषेधो व्यावर्त्यतामित्यत्राह यद्यपी ति । अत्यन्तबाधस्तावद्वचनस्य न युक्तः, तत्राग्नीषोमीयान्निषेधस्य व्यावृत्तौ सङ्कोचमात्रं नात्यन्तबाध., सामान्यत्वात्, इहपुनरुभयोरेकविषयत्वात्, त्यागनिषेधस्य त्याग विषयाद्व्यावृत्तौ विषयान्तराभावात्, अत्यन्तबाधात्मा पराभाव एव स्यात्, स चायुक्त इत्यर्थ॰ । त्यागविशेषविधिमभ्युपेत्येदमुक्तम्, वस्तुतः स एव नास्तीत्याह दृष्टश्चे ति । न्यायनिरपेक्ष मिति । अनेन " नखानि निकृत्य यज्ञोपवीत च विसृजे " दित्यत्रापि नखसाहचर्यात् पुरातनयज्ञोपवीतप्रतीतेर्न्यायपरामर्शे पुराण विषयत्वमेव गम्यत इति सूचितम् । एतच्छ्रुतिबलादपि सङ्कोच इत्याह सामान्ये ति । अनेन सामान्यविशेषन्याय उक्तः, उत्सर्गापवादन्यायमाह सामान्ये ति ।

ननु " विसृजे " दित्यस्य न गृह्णीयादित्यर्थ, पुराणस्य च गृहीतस्य न ग्रहणनिषेध. शक्य इति नूतनविषयो निषेध, तथाच नूतनविषयत्वात् ग्रहण निषेधयोर्विकल्पः इत्याशङ्क्य निराकरोति न चे ति, अस्तु स एवार्थ इत्यत्राह

दुःस्थिता स्यात् । न च तद्युक्तम्, उपचारप्रसङ्गात् । यद्यपि गृहीता गृहीतविषय विसर्जनं कथञ्चित्पश्यसि, तथापि पूर्वधृतविषयत्वमेव स्वारसिकम् । "नवान्प्रगृह्ये" त्यास्यानादरे च दण्डादेरसंग्रहसिद्धिः । अन्यथा पूर्वोदाहृतविशेषश्रुतिविरोधश्च । अत एव " बहिस्सूत्रं त्यजेद्बुधः " इत्येतदपि पुराणब्रह्मसूत्रत्यागविषयं मन्तव्यम् ।

ननु " ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वे " ति ब्रह्मचारिणोपि पारिव्रज्य विधीयते, न च तस्य द्वितीय ब्रह्मसूत्रमस्ति, ततश्च

---

नच तदि ति । उपचारे ति । विसृजतेः प्राग्गृहीतहानमेवार्थः, न त्वनुपादानम्, एवञ्च सामान्यविशेषन्यायादिकमपि हानानुपादानसाधारण्यमभ्युपेत्योक्तमिति भावः । ननु " योगिनः कर्म कुर्वन्ति सङ्ग त्यक्त्वात्मशुद्धय " इत्यादौ कर्तृत्वाभिमानसम्पादनपूर्वक तत्यागो विधीयत इत्याशङ्क्याह यद्यपी त्यादिना । यद्यपीत्य नेन हानानुपादानयोः शक्तिद्वयकल्पनागौरवादनुगतप्रवृत्तिनिमित्ता—भावाच्च हानमेवार्थः, अभ्युपगम्य तूक्तम् इति सूचयति । ननु 'नस्वानि निकृत्ये' त्यत्र आश्रमप्रवेशोद्देशेन न पुराणवस्त्रादित्यागस्य नवग्रहणस्य चाङ्गतया विधिः सम्भवति—नखानि निकृत्येत्यनुवाद इति सम्भवति, नवग्रहणेन पुराणत्यागस्यार्थ सिद्धत्वाभावात् , पुराणत्यागविधौ तु नवान् गृह्णात्यनुवादः, काषायवस्त्रादिधारणस्य वचनान्तरसिद्धत्वेन नवत्वस्य तत्रार्थप्राप्तेः, एवञ्च येषा ग्रहणमन्यतः सिद्ध तेषु नवत्वस्यायमनुवाद इति नानेनोपवीतधारणसिद्धिरित्यत्राह नवानि ति । नवान् प्रगृह्येत्यस्यानादरे वस्त्रादेरग्यसग्रह. स्यात् । न च पूर्वोदाहृतशाट्यायनश्रुत्या वासस. सिद्धि., तस्या यावदायुष बिभृयादिति विधेयान्तरयोगात् , सिद्धावपि उपवीतमपि तेनैव सिद्धयति, एवञ्च 'नखानि निकृत्ये' ति पुराणत्यागनूतनग्रहण विशिष्टाश्रमविधिरिति भावः । ' नवान् प्रगृह्ये ' त्यस्यानादरे ' त्रिदण्डमुपवीत ' मिति श्रुत्या ' यावदायुष ' मिति धारणविधिविधेरप्राप्तं यज्ञोपवीतादिधारणे अस भवाद्विरोध इत्याह अन्यथे ति । शिखाया अपि ब्रह्मसूत्रातिरिक्तायाः त्यागः स्यात्,

कथं तद्विषये " बहि. सूत्रं त्यजे " दिति वचनं योजनीयमिति चेत्; कथ वा छन्दोगब्रह्मचारिणा परिव्रज्यायां " सशिखं वपनं कृत्वे " ति शिखावपनं योजयिष्यसि ? सम्भवद्विषय शिखावपनमिति चेत् ; तर्हि सम्भवद्विषयोऽयं बहि सूत्रत्यागविधिरपीति किं न पश्यसि ?

किञ्च—प्रमाणान्तरविरोधपरिहारार्थं बहिः सूत्रमित्यर्थान्तरं वर्ण-यन्ति । बहि.सूत्रमित्यव्ययीभाव' । तेन सूत्राद्बहिर्भूतं समस्तमपि परित्यजेदित्यर्थः । सन्न्यस्यतो ब्रह्मसूत्रातिरिक्तं सर्वमपि परित्याज्यमित्य नेन सन्न्यासानुगुण समस्तनैरपेक्ष्यमुच्यते, तेन न ब्रह्मसूत्रपरित्याग-सिद्धिः । ' सशिखं वपनं कृत्वे ' त्यपि ' सविष्टरमन्न भुञ्जीते ' त्यादिवत्कर्तव्यसाहित्येनान्वय' । तेन शिखासहित एव शेषवपनं कुर्या दित्यर्थः । न पुनः 'सघृतमन्नं भुञ्जीते' त्यादिवत्, बहुप्रमाणविरोधात् ।

ननु " यदक्षरं पर ब्रह्म तत्सूत्रमितिकल्पयेत् । यमिनो ज्ञान-शिखिनः शिखायज्ञोपवीतिनः " इत्यादि वचनबलात् सामान्यतः पुराणनूतनसमस्तप्रतिषेध एवाभिप्रेत इति गम्यत इति चेत् , मैवम्— अन्यपरत्वादस्य वाक्यस्य । तथाहि—इदं वाक्य विद्वद्विषयं वा , विविदिषुविषयं वा, परमहसविषय वा ? पूर्वत्र विद्यास्तुत्यर्थता युक्ता । तथा च " कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः " ' न कर्म लिप्यते नरे ' इति वाक्यमधिकृत्य सूत्रित भगवता बाद-रायणेन ' स्तुतयेनुमतिर्वे ' ति । तेन ब्रह्मविदां शिरसि हृदि च यावदायुषं धार्यं शिखायज्ञोपवीत ज्ञानान्वितं अत्यन्तं प्रशस्तमित्यर्थः । द्वितीये तु अवधानविधिपरतैव ' यदक्षर ' मित्यादिना व्यक्ता, दृष्टो

---

अत आह सन्न्यस्यत इति ।

पूर्वत्रे ति । नात्र शिखाकार्यं ज्ञानेनैवेत्युच्यते, बर्हि. कार्यं शरैरेवेति वत्, किन्तु ब्रह्मविदा ज्ञानान्वितत्वाच्छिखापि प्रशस्ता, कि पुनर्ज्ञानमिति ज्ञान प्रशसार्थमिद वाक्यम्, यथा ' कुर्वन्नेवेह कर्माणि जिजीविषत् ' ' न कर्म लिप्यत ' इत्यत्र न कर्मविधिः, किन्तु विद्यास्तुत्यर्थमनुमतिरित्यर्थः । द्वितीयेत्वि

पकारे सम्भवत्यदृष्टोपकारकल्पनायोगाच्च । अनयोश्च पक्षयोरस्यार्थस्य नाश्रमविशेषाङ्गत्वसिद्धिरपि । तृतीयस्तु स्यादपि, यद्याश्रमकर्मोक्तिः स्यात्, न च तत्र तत्पश्यामः । सत्यपि आश्रमप्रसङ्गे गृहस्थावस्थागत द्वितीयसूत्रत्यागमुपदिश्य विहितत्यागजातानुशयं प्रति अर्थवाद इति युक्तम्, अर्थवादलिङ्गभूयस्त्वात् । न ह्यत्र विधिरनुश्रूयते, अन्यथा पूर्वोक्तश्रुत्यादिविरोधस्य दुष्परिहारत्वादिति ।

भवतु वैतद्वाक्यमनन्यपरम्, तथापि प्रागुक्तश्रुत्यादिबलाद्विकल्प एव स्यात्, न त्वेकान्ततो निषेधः, अन्यथा कुटीचकादीनामपि एकान्ततः तन्निषेधप्रसङ्गात् । न चैतद्वचनं परमहंसमेवाधिकृत्य प्रवृत्तम्, नियामकाभावात् ।

ननु यदि परमहंसमेवाधिकृत्य काचिच्छ्रुतिः स्मृतिर्वा ब्रह्मसूत्र परित्यागमेवान्ततो विदधीत तदा पूर्वोक्तश्रुतिस्मृत्यादिकं सर्वं यथाकथञ्चित् कुटीचकादित्रयान्तर्भूतव्यक्तिविशेषविषयं योजनीयमिति चेत्; अहो महर्षित्वं देवानां प्रियस्य, यतस्त्वं आप्ततमबहुतरस्मृत्येककण्ठ– प्रत्यक्षश्रुतिविरुद्धार्था क्वचित् कैश्चिदप्यनधीयमाना; त्वत्पक्षपातिना विकल्पवादिना विज्ञानेश्वरेण अनाघ्राता तत्पक्षं विस्तरेण प्रतिक्षिपद्भिः

---

त्यादि । यदि ब्रह्मस्वरूपातिरिक्त सूत्रं त्यजेदिति सूत्रत्यागविधिपरत्वं कल्प्यते, तदा अदृष्टोपकारकार्यत्वप्रसङ्गः, यदि तु ब्रह्मस्वरूपातिरिक्तसूत्रशिखादिषु अत्यन्त प्रसक्तो न भवेत्, ब्रह्मज्ञानसम्पादनेऽवहितो भवेदित्यर्थं स्वीक्रियेत तदा दृष्टोप कार्यार्थपरत्वम्, अत एतदेव युक्तमित्यर्थः । दोषान्तरमाह अनयोरिति । विद्वन्मात्रस्य विविदिषुमात्रस्य च त्यागः प्रसज्येतेत्यर्थः । लिङ्गभूयस्त्वादिति। शिखादेः ब्रह्मसामानाधिकरण्यज्ञानसामानाधिकरण्यादिलिङ्गम्। न हीति। ज्ञानशिखा इत्यत्र विधिरेव नास्ति, यदक्षरमित्यत्र तत्सत्त्वेपि विधेयसमर्पकपदानन्तर्येण तत्समभि– व्याहारेण श्रवणं नास्तीत्यर्थः ।

एवमन्यपरत्वादस्यवाक्यस्ये(३०१ पु)त्युक्तमुपपादितम्। अनन्यपरत्वमभ्युपेत्याह भवतु वेति । विकल्पवादिने ति । यदि परमहंसस्य उपवीतादिबाधिका

भास्कराचार्ययादवप्रकाशमस्करिप्रभृतिभिरुद्धृत्यापरिहृतामन्यादृशीं श्रुतिं द्रष्टुमिच्छसि । यदि च सापि स्यात्, कथं सर्वस्मर्तृणां ब्रह्मसूत्रधारण विधानैककण्ठ्यम् ?

यच्च त्यागार्थं व्यासादिवचनमिति कैश्चित्पठ्यते, तदपि तत्तत् कोशेषु न पश्यामः; नचोदाहरन्ति पूर्वे निरूपकाः । न च प्रत्यक्षश्रुति विरोधे वैदिकपरिगृहीतबहुस्मृतिविरोधे चाप्रसिद्धस्मृतिमात्रस्य जीवित-मस्ति । लब्धजीवितत्वेऽपि आन्यपर्यमलेपकमतभङ्गे प्रपञ्चयिष्यते । अतः तद्वचनकारिषु व्यासादिसमाख्या सङ्केतेन प्रक्षिप्य धर्मसूनुरिव सत्यवादी भव ।

एतेन पञ्चरात्रादिमूलं परमहंसस्य ब्रह्मसूत्रपरित्याग इति निर-स्तम्, प्रमाणभूतेषु तेषु तथाविधवचनादेरसम्भवात् । सम्भवे चान्य-परत्वस्य गृहीतुं युक्तत्वात् । परब्रह्मभूतभगवत्प्रीणनतत्तदर्थविशेषप्रपञ्चने हि पञ्चरात्रस्यैदम्पर्यम्, न सदाचारेषु । तत्र तु औदासीन्यमेव तस्येति न श्रुत्यादिविरोधे तत्र प्रगल्भतेति मध्यस्थदृष्ट्या पश्यामः । न च पञ्चरात्रमूलत्वेन भागवतपरिगृहीते नैरुक्तेऽपि वेदभागे परिव्राजकप्रकरणे भवदभिमतं यज्ञोपवीतादिप्रहाणं दृश्यते । न च शाण्डिल्यः सूत्रयति । न च सात्वतादिषु सुरक्षितकोशासु संहितासु तथाविधवचनप्रसङ्गः । अतो युष्मत्कूटस्थपक्षपातिना प्रक्षेपस्तथा स्याद्वा नवेति समीचीनदृष्ट्या भावय । अतः परमहंसेष्वपि द्विजसामान्यतः परिव्राजकसामान्यतस्तद वान्तरविशेषतश्च प्राप्तं ब्रह्मसूत्रं न विशेषतो बाधमर्हतीति सिद्धम् । नापि तृतीयः,—विषयव्यवस्थापनयोग्यानां वाक्यानां विरोधाभावा

---

काचित् श्रुतिर्दृश्येत तदा बाध एवाभिधीयेत न विकल्प इति भावः । अत इति। कोशेष्वदर्शनादित्यर्थः। विषयव्यवस्थापने ति । पुराणद्वितीयविषयतया 'नखानि निकृत्य यज्ञोपवीतं विसृजेत्' 'वहिः सूत्रं त्यजेत् बुधः' इत्यादीनां व्यवस्था

देवादृष्टदोषदुष्टविकल्पपर्यवसानायोगात् । अन्यपरतया निश्चितानां तु दुर्बलत्वादेव । विरोधे बलसाम्ये च सति हि गत्यन्तराभावाद्विकल्पः स्वीक्रियते । न च गुरुलघुनोः विकल्पः सम्भवति, गुरुविधायकस्य शास्त्रस्याननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् । न हि लघौ सति गुरौ कश्चिदपि प्रवर्तेत । मुख्यामुख्यतया तु विभागः सम्भवेदपि, यद्यनन्यथासिद्धो लघुविधिः सिद्ध्येत् । न च तदस्तीत्युक्तम् । नचामुख्यं भवद्विशेषमङ्गीकरोषि । न च मुख्यकल्पशक्तानाममुख्यकल्पस्वीकारो युक्तः । न च तेषां प्रत्यगात्मप्रावण्येन बाह्येष्वौदासीन्यादमुख्यकल्पपरिग्रह इति युक्तम्, शक्तस्यौदासीन्ये प्रत्यवायात् । न च वः कश्चिदशक्तिं भास्करीयादयः सूक्ष्मनिरूपणेऽपि पश्यन्ति । यथाहुः—

" कन्थां वहसि दुर्बुद्धे गर्दभेनापि दुर्भराम् ।
शिखायज्ञोपवीताभ्यां कस्ते भारः प्रसज्यते ॥

सन्ध्यावन्दनवेळायां मुक्तोऽहमिति मन्यते ।
खण्डलड्डुकवेळाया दण्डमादाय धावसि ॥ " इति ।

यत्तु—न्यायविदापि विज्ञानेश्वरेणाप्युक्तम्—" यज्ञोपवीतधारणं वैकल्पिकम्, यज्ञोपवीतं विसृजेदिति श्रुते " रिति ; तदपि विकल्पासम्भवस्योक्तत्वात् स्वपक्षसंरक्षणाभिनिवेशकारितमित्यनादरणीयम् ।

---

सम्भवतीति भावः । अन्यपरतये ति । 'ज्ञानशिखा' इत्यादीनामित्यर्थः । दुर्बलत्वादेव-विकल्पायोगादित्यनुषङ्गः । न चे ति । लघुरमुख्य इति स्वीकर्तव्यम्, न च भवदभिमतसूत्रादित्यागात्मको विशेषस्तथा स्वीक्रियत इत्यर्थः । न च मुख्ये ति । 'प्रभुत्वे सति मुख्यस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य फलं भवति दुर्मते' रिति निषेधादित्यर्थः । प्रत्यगात्मप्रावण्यातिशयादन्यत्रानादर इत्यत्रापि तैरेवोत्तरमुक्तमित्याह सन्ध्ये ति ।

नापि चतुर्थ ,—ब्रह्मविदामप्यत्यन्तकर्मनिवृत्तेर्दूषितत्वात् ; युष्माभिरपि प्रणवजपाचमनादिकर्मणामद्यापि क्रियमाणत्वात् । "तस्माद्यज्ञोपवीत्येवाधीयीते ' त्यादेर्दुर्लङ्घत्वात् , अर्थप्राप्तभोजनादिकर्मणां च अयज्ञोपवीतिनानुष्ठाने प्रायश्चित्तविधानात् ।

नापि पञ्चमः,—श्रुत्यादिविरुद्धस्याचारमात्रस्यानुपादेयत्वात् । पञ्चशिख दुर्वासः प्रभृतिपरिगृहीतपरिव्राजकस्तोमेषु ब्रह्मसूत्रपरित्यागस्य पुराणेष्वदर्शनात् । परिव्राजकानुकारिधनञ्जयादिषु ब्रह्मसूत्र परित्यागाश्रवणात् । भवदीययूथ्यभास्कराचार्ययादवप्रकाशभगवन्नाथ मुनिपारम्पर्यविघटितत्वाद्भवत्पक्षप्रवेशितविसवादैक्याच्चानुविधेयाचारत्वासम्भवादिति ।

अतस्सिद्ध परमहसैरपि यज्ञोपवीतमवश्य धार्यमिति ।

एवमुपवीतोक्तन्यायेन परिव्राजकसामान्यतः प्राप्ते', तथा परमहंसमेवाधिकृत्य त्रिदण्डविधानात्, चतुर्णामपि लिङ्गभेदनिषेधाच्च तस्यैकदण्डधारणे नियमोपि निरस्तः ।

अथ स्यात्—"न चात ऊर्ध्वं शुक्लमम्बर बिभृयात् एकदण्डी त्रिदण्डी वे " ति बोधायनादिवचनात्त्रिदण्डैकदण्डधारणयोर्विकल्प इति , भवत्वेवम्, तथापि परमहंसस्य एकदण्डधारणमेव। इतरेषा त्रिदण्डधारणमेवेति नास्ति नियमः, अविशेषेण तेषा प्रसक्तेः । भवत्वेवं का नो हानिरिति चेत्[१] नियमाभिमानहानि' । गुरुलघुनोस्तुल्यविकल्पानुपपत्ति चात्र यादवप्रकाशादय. प्राहु । अतो मुख्यामुख्यतयैवाय विकल्पस्स्यात् । तदेतद्भगवान् व्यासः स्पष्टयति- "त्रिदण्डधारणं शस्तम् ' इति। बोधायनादिसामान्यवचनविकल्पि

---

पञ्चशिखे ति । असम्भवादेव न पञ्चम इत्यन्वय. ।

तैकदण्डधारणस्य त्रिदण्डालाभरूपापद्विषयता हारीतमेधातिथिभ्यां व्यवस्थापिता ।

> " त्रिदण्डं वैणवं सौम्यं सत्वचं समपर्वकम् ।
> वेष्टितं कृष्णगोवालरज्ज्वा तु चतुरङ्गुलम् ॥
> नष्टे जलपवित्रे च त्रिदण्डे वा प्रमादतः ।
> एकन्तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥
> गृहीत्वा विचरेत्तावद्यावल्लभ्य त्रिदण्डकम् ।
> यत्नेनान्वेषयेन्नित्यमप्रमत्तः समाहितः ॥ " इति हारीतः ।

मेधातिथिस्तु—" यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेत् । " इति । न चैतत्प्रक्रान्तत्रिदण्डधारणपुरुषविशेषविषयमिति नियन्तुं शक्यम्, 'एकदण्डी त्रिदण्डी वे' त्यस्याद्यापि तुल्यत्वनिश्चयाभावात् । यद्यपि च प्रथममेव कस्यचित्त्रिदण्डालाभादेकदण्डग्रहणं सम्भवति, तथापि न तत्र प्रक्रमशरीरे नियतिरङ्गीकर्तुं शक्या, अमुख्यत्वात् । " यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेत् " इत्यस्य चाविशेषेण प्रक्रमेऽपि प्रवृत्तेः ।

किञ्च—प्रत्यक्षश्रुतिसिद्धं त्रिदण्डधारणम्, स्मार्तस्तु विकल्पः, पूर्वन्तु श्रुतिस्मृत्युभयसिद्धम्, उत्तरत्र तु स्मृतिरेव । " यद्वै किञ्च मनुरवदत्तद्भेषजम् । " " मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते " इत्यादि श्रुतिस्मृतिभिराप्ततमत्वेन परिगृहीतमन्वादिस्मृतिसिद्धं त्रिदण्डधारणम्, विकल्पस्तु यत्किञ्चित्स्मृतिसिद्धः । भूयस्य स्मृतयस्त्रिदण्डधारणे पूर्वोपात्ता उपाधास्यमानाश्च, विकल्पे तु द्वे तिस्रः सन्ति नवेति न जानीमः ।

तथा हि दक्षबृहस्पती—

> " मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
> गृहस्थो यष्टिवेदाद्यैर्नखरोमैर्वनाश्रितः ॥

त्रिदण्डेन यतिश्चेति लक्षणानि पृथक् पृथक् । " इति ।

शाण्डिल्यः—" दण्डानि त्रीणि सङ्गृह्य धारयेद्विधिपूर्वकम् । "

अत्रि — लिङ्गन्तु वैष्णव तेषा त्रिदण्ड सपवित्रकम् ।
त्रिदण्डेन यतिश्चेति लक्षणं वै श्रुतं स्मृतौ ॥ "

दत्तात्रेयः– " त्रिदण्डिरूपधृग्विप्रः साक्षान्नारायणः स्मृत ।
त्रिदण्डी पूज्यते येन विष्णुस्तेन प्रपूजितः ॥
अष्टाक्षरेण मन्त्रेण नित्यं नारायणात्मना ।
नमस्यो भक्तिभावेन विष्णुरूपी त्रिदण्डधृक् ।
त्रिदण्ड लिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः ।
यो हि ब्रह्म न जानाति त्रिदण्डार्हो न स स्मृत ॥"

अत्रिदत्तात्रेयौ–"काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपित ।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ "

हारीतः– " विष्णुरूपं त्रिदण्डाख्य सर्वदा धारयेद्यतिः ।
कुर्यात्त्रिदण्डग्रहण कालक्षेप न कारयेत् ॥ "

वृद्धदक्ष.– " केशमात्रान् समग्रन्थीन् त्रिदण्डान् वैणवान् यति.' धारयेदिति शेषः । इत्थ परश्शतास्स्मृतयः विस्तरभयान्न लिख्यन्ते । अतो गुरुलघुविकल्पानुपपत्ते. शस्ताशस्तत्वकण्ठोक्ते त्रिदण्डालाभदशाविषयत्वप्रतिष्ठापनात् , त्रिदण्डधारणस्य प्रत्यक्षश्रुति सिद्धत्वात् , आप्ततमबहुस्मृत्युपबृंहितत्वात्, त्रिदण्डधारणमेव चतुर्णां परिव्राजकानामविशेषेण मुख्यम् ; एकदण्डधारणं त्वमुख्यम् ; तच्च आपद्दशायां चतुर्णामपि सम्भवति ; इति सिद्धम् ।

अनेनैव न्यायेन परमहंसस्य शिखावर्जनमपि अनुपपन्नम्, चतुर्णामपि लिङ्गभेदनिषेधस्य दर्शितत्वात्, विशेषविधायकासिद्धेः । ' मुण्डः शिखीवे ' त्यादिविकल्पस्यापि त्रिदण्डैकदण्डधारणविकल्प

वन्मुख्यामुख्यतयैव निर्वाह्यत्वात् । सम्भवति हि केषाञ्चित् शिरसि व्याध्यादिवशात्केशानुत्पत्तिः । शौनकलिखित—गालवात्रि–प्रभृतिभिः शिखाधारणस्यैव स्मरणाच्च । गालवेन तु 'त्रिस्थानलोम वपनं कृत्वा प्राजापत्य कृत्वा प्राणायामशतं चरेत्' इति शिखा-वपने प्रायश्चित्तविधानात् विकल्पवाक्यस्य मुण्डनवाक्यस्य च यथा-कथञ्चिद्योजनीयतया समुच्चयार्थतां शिखाव्यतिरिक्तमुण्डनविषयतां शिखासम्बन्धमात्रविषयताञ्च यतिलिङ्गसमर्थने परमाचार्याः प्राहुः । शिखावपनमन्तरेण वपनेपि मुण्डशब्दस्तत्रैव दर्शितः । यथाह—लिखितः—

" पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः ।
अलाभे व्याधिपीडाया राजचोराद्युपद्रवे ॥
वापयेत्पौर्णमास्यादि यावत्स्यात् कृष्णपञ्चमी ।" इति ।

मेधातिथि — "कक्षोपस्थशिखावर्जं मुण्डयेत शिरो यतिः ।" इति ।
एवमन्यैरपि—

" कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत् ।
न त्रैमुण्ड्यमतिक्रामेद्भिक्षुस्संवत्सरे क्वचित् ॥ "

इत्यादिषु शिखाव्यतिरिक्ताशवपनेपि मुण्डशब्दस्य प्रयोगान्मुण्डन वपनशब्दयो पर्यायपदविशेषत्वोपपादनाच्च सामान्यौ मुण्डशब्द

---

समुच्चयार्थतामित्यादि पक्षत्रय विकल्पवाक्यस्येत्यादिभिः त्रिभिः क्रमात् सम्बध्यते। मुण्डाश्शिखी वेति वाशब्दश्चार्थे । अंशभेदेन तयोस्समुच्चयः । शिखेति । 'सशिख वपन कृत्वा' इत्यत्र कर्तव्ये साहित्येन शिखासम्बन्धस्यान्वय इत्यर्थः ।

नन्वेव सति 'मुण्डाश्शिखिनो' त्यादिषु मुण्डशब्दानुपपत्तिः, तस्य सर्वकेशाभावविषयत्वात्, 'मुण्डा काषायवासिन' इत्यादौ जिनभिक्षुषु तथा प्रयोगादित्यत आह शिखावपनमिति । अलाभ इत्यादिश्लोकोपादान पौ-

शिखाव्यतिरिक्तविषय इति स्वारसिकम्, विकल्पाङ्गीकारेत्वमुख्यत्वं दर्शितमस्माभिः । वाशब्दश्चार्थ इति परमाचार्या व्याचख्युः ।

अतः परमहंसैरप्येकमुपवीतमवश्य धार्यम्, त्रिदण्डशिखे च मुख्यतया परिग्राह्ये, इति सिद्धम् । तदेतत् 'वर्णाश्रमोचिते' त्युचितशब्देन भाष्यकारैरपि सूचितमिति ।

इति शतदूषण्या यतिलिङ्गभेदभङ्गो नाम

॥ चतुःषष्टितमो वादः ॥



---

र्णमास्याम्मुण्डयेत, तलाभे आपञ्चमीम्मुण्डयेते' ति वक्तव्ये वापयेदिति प्रयोगोत्र मुण्डनशब्दो वपनशब्दसमानार्थ इति दर्शयितुम् । पर्यायत्व–समानार्थत्वम्, अत्रत्यमुण्डनशब्दो वपनार्थक इत्यर्थ । स्वारसिक मिति । वाशब्दस्य विकल्पस्वरसत्वान्मुण्डशिखीवेत्यादिषु तदङ्गीकारे मुण्डत्वस्यामुख्यत्व दर्शितमित्यर्थ. ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचिताया शतदूषणीव्याख्याया चण्डमारुताख्याया यतिलिङ्गभेदभङ्गः

चतु षष्टितमः स्कन्धः ॥६४॥



वाधूलश्रीनिवासार्यतनय विनयाधिकम् ।
प्रज्ञानिधि प्रपद्येह श्रीनिवासमहागुरुम् ।
कृष्णः करोतु कल्याण कसकुञ्जरकेसरी ।
कालिन्दी लोलकल्लोलकोलाहल कुतूहली ॥

॥ श्रीरस्तु ॥

॥पञ्चषष्टितमो वाद. ॥



अशेषाश्रमबाह्यानामीश्वराज्ञाभरश्रमात् ।
अल्पकदृशाभाजामवलेपोत्र लुप्यते ॥

इह जगति केचिदवधूतसकलवर्णाश्रमधर्माश्चार्वाकसधर्माण आच-ण्डालमेकराशिभूय विधिनिषेधयन्त्रणामतन्त्रयन्त. पारिभाषिकब्रह्मविदो विश्वमाविलयन्ति, तैस्सह [वास] वादरूपसम्भाषणादिकमपि निरयपातनमिति मन्वानास्तद्दर्शनेपि सर्वलोकलोचनमवलोकयन्तो दूरीभवन्ति सन्त. । उक्तं हि महर्षिभि.—

" पुसां जटाभरणमौण्ड्यवता वृथैव
मोघाशिनामखिलशौच बहिष्कृतानाम् [निराकृतानाम्]
तोयप्रदानपितृपिण्डविवर्जिताना
सम्भाषणादपि नरा नरक प्रयान्ति । " इति ।

तत्र यद्यपि तदभिमतशूद्रादि[वि]जातीयब्रह्मविदा त्रैवर्णिकब्रह्मविदामिव तथाविधपतन न सम्भवति, तथापि तत्वमस्यादिवाक्यश्रवणोपदेशधर्मोपप्लवादिभिः तेषामप्यसम्भाष्यता । स्मर्यते हि—

" कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
शूद्रे वेदाक्षरेणैव निष्कृतिर्न विधीयते ॥ "

इत्यादि । तथापि धर्मोपप्लवप्रशमनाशया युगमात्रविप्रकृष्टा वदामः । आचार्यवचनादिभिरीदृशमप्यनुमतम्—

" यत्किञ्चिदपि कुर्वाणो विद्वद्गुरुनियोगत. ।
तेषा वचनसामर्थ्यात् प्रायश्चित्तीयते नच । " इति ।

[बहुप्रयत्ने कृतेपि चण्डमारुतस्यालाभाच्छतदूषणीमात्रं मुद्र्यते ।]

सर्वशिष्टबहिष्कृतेय युष्मदवस्थितिराश्रमरूपा, अनाश्रमरूपा वा? पूर्वत्र चतुर्भ्योऽन्या अनन्या वा? न तावदन्या, श्रुतिस्मृतीतिहासपुराणादिषु पञ्चमाश्रमविधानादर्शनात्। "अथाश्रमं चरमं सम्प्रविश्ये" त्यादिरपि पारिव्राज्यविषय. प्रसिद्ध। अन्तिममात्रं हि चरमशब्दार्थ, न पुनः प्रसिद्धव्यतिरिक्त.। षोडशविधाश्रमप्रतिपादनं तर्हि कथमिति चेन्न,—चतुर्णामेव चतुर्धा विभागेन तथा विधानात्। नाप्यनन्या, प्रथम तावदनभ्युपगमात्, श्रुतिकिङ्करत्वप्रसङ्गाच्च। श्रुत्या ज्ञानविधानेन वयमप्याश्रमविशेषनिष्ठा भवामेति चेत्? श्रोत्रियाणा पुरतो मन्द प्रभाषेथा., नह्यकृतप्रायश्चित्तानां भवतामाश्रमप्रवेशमनुमन्यन्ते धार्मिकाः। न च युष्माभिरनेककालानुवृत्तदुर्वचस्वैरोचितप्रायश्चित्त कर्तु शक्यम्। स्वैररूपमेव किञ्चिदाश्रमविशेषनियतमिदमस्माकं महद्व्रतमिति चेन्न,—तथाविधविध्यदर्शनात्। किञ्चास्मिन्महति सर्वलोकस्वरससिद्धे व्रते सति किमर्थमपुरुषार्थैरनन्तैर्नियमैः परिक्लेशयन्त्यागमाः। कश्चायमाश्रमो भवता वाङ्मात्रेणापि स्वीक्रियते? परमहसाभिधानः पारिव्राज्यविशेष इति चेन्न,—परमहसादिविशेषमपि विविच्य प्रतिपादयन्तीषु शाट्यायनकाद्युपनिषत्सु पाराशर्यदत्तात्रेयादिस्मृतिषु भवत्परिगृहीतवेषाचारविपरीतोपदेशात्। अत एव मन्वादिषु त्रिविष्टपपात्रपवित्रकमण्डलुशिखायज्ञोपवीतत्रिदण्डानां सामान्येन विधान न व्यवस्थितविषयमिति वक्तुं शक्यम्। ततश्च परित्यक्तयज्ञोपवीतादिकेष्वेकदण्डिकेष्वप्यद्याप्यायुष्मती विप्रतिपत्तिर्भास्करयादवप्रकाशादिग्रन्थरसायनसेवया निवर्तते। किंपुनर्विशेषतोऽपि वेदबाह्यसाम्यमङ्गीकुर्वत्सु भवादृशेषु। त्रिदण्डैकदण्डादिष्वपि च मुख्यामुख्यतया विकल्प इत्यपि स्मृतिभिरेव सिद्धमिति प्रागेवोक्तम्।

ननु द्विविधाः परमहंसा, विवृतवेषाचारा गूढवेषाचाराश्चेति, तत्र जाबालिकौषीतकादिश्रुतिषु तन्मूलबोधायनशौनकक्रतुकापिलविश्वामित्रादिस्मृतिषु महाभारते ब्राह्मादिषु च पुराणेषु परमहंसस्य दण्डादिविधानात्

विवृतवेषाचारास्सिद्धा, वाजसनेयतैत्तिरीयकाथर्वणबाष्कलादिश्रुतिषु तन्मूल भगवद्गीतादिस्मृतीतिहासभागवतादिपुराणादिषु च सर्वत्यागमात्रविधानात् गूढवेषाचारास्सिद्धा इति चेन्न,—त्यागोक्त्यादीनां फलसङ्गकर्तृत्वादित्याग विषयत्वस्य वक्ष्यमाणत्वात् ।

ननु मैत्रायणीयब्राह्मणे तन्मूललोकाक्षिगृह्ये च परमहंसस्य दण्डग्रह-णाग्रहणयोर्विकल्पो दृश्यते, तथाहि—" परिव्राडेकशाटी परिहितो मुण्डो दरपान्यरण्यनित्यो भिक्षार्थी ग्राम प्रविशेदासाय प्रदक्षिणेनाविचिकित्सं सार्व-वर्णिक भैक्षाचरणमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः कामभेक वैणवं दण्डमादधीते " ति मैत्रायणीयब्राह्मणम् , अत्र कामशब्दाद्दण्डग्रहणे वि-कल्पो दर्शित. , लोकाक्षिगृह्ये च " अथातः परमहसपरिव्रज्याविधिं व्या–ख्यास्याम " इत्युपक्रम्य, " सशिखान् केशान् निकृत्य विसृज्य यज्ञोपवी-तमि " त्याद्युक्त्वा, पुनरप्याह " मौनी जातरूपधरः प्राचीमुदीची वा दिश व्रजेत् तिष्ठ भगवन् दण्ड गृहाणेत्यध्वर्युणा दत्त मस्तकप्रमाणं सत्वचमृजु सौम्यमेक वैणवं दण्ड " इन्द्रस्य वज्रोसि " " सखामे गोपाये " ति यदीच्छेदादधीते " ति अत्रापि यद्युपबन्धेनेच्छाश्रवणा द्विकल्पसिद्धिः ; तथा वैखानससूत्रे चतुर्विधचतुराश्रमवर्णनावसरे " परम हंसा नाम वृक्षैकमूले शून्यागारे श्मशाने वा आसीना वा साम्बरा दिगम्बरा वा न तेषा धर्माधर्मौ सत्यानृते शुद्ध्यशुद्ध्यादि द्वैतं सर्वसमास्सर्वात्मानः समलोष्ठाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणमि " त्यादि । अत्र " साम्बरा दिगम्बरावे " ति विकल्पो विवृतगूढाचारभेदाभिप्रायेण । परमहसोपनिषदि तु काष्ठदण्डनिन्दनेन परमहंसाना ज्ञानदण्डत्व विधीयते। तस्माद्दण्डधारण न मुख्यम्। तर्हि को मुख्य इति चेत् ? अय मुख्य., " न दण्ड न शिखा न यज्ञोपवीतं नाच्छादन चरति परमहसः ।

" ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जित. ॥
स याति नरकान् घोरान् महारौरवसञ्ज्ञकान्" इत्यादि ।

आह च विष्णु.— " अन्नार्थं लिङ्गमुद्दिष्ट न मोक्षार्थं विधीयत " इति ।

मोक्षधर्मे च—

" यते. सत्यपि लिङ्गेस्मिन् ज्ञानमेव हि कारणाम् ।
निर्मोक्षायेह दु.खस्य लिङ्गग्रामो निरर्थक. ॥
काषायधारण मौण्ड्य त्रिविष्टब्धं कमण्डलु. ।
लिङ्गान्यन्नार्थमेतानि न मोक्षायेति मे मतिः ॥ "

अन्यत्र च —

" लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम् । "

एवमन्यान्यपि लिङ्गनिन्दापराणि वाक्यानि द्रष्टव्यानि । " अव्यक्तलिङ्गो व्यक्ताचार " इत्यादीन्यपि लिङ्गपरित्यागाभिप्रायाण्येव । तदेवमस्ति परम हंसद्वैविध्यमिति ।

तदिदमपेशलम्, गन्धर्वभाषितप्रायैरात्त्वेप्यनिदम्परै. वाक्यैः परम हंसस्य न त्वदिष्टभिदासिद्धिः । इह तावत्त्वत्पक्षपातिविज्ञानेश्वराद्यनुदाहृत-त्वात्, त्वत्पक्षप्रतिक्षेपकैर्यादवाचार्यभास्करप्रभृतिभिर्बहुश्रुतैरुपन्यस्य दूषित त्वाभावाच्च सन्दिग्धश्रुतित्वादिषु केषुचिद्वचनेषु अप्रत्ययादेव परिहारः, अन्येषु त्वन्यपरतयेति संग्रहः ।

तत्र यदुक्तं मैत्रायणीयब्राह्मणे तन्मूललोकाक्षिगृह्ये च परमहंसस्य दण्डग्रहणाग्रहणयोर्विकल्पो दृश्यत इति । तदसत्, तत्रापि स्मृत्यन्तरादि सम्प्रतिपन्नस्यैकदण्डत्रिदण्डविकल्पस्यैव विवक्षितत्वात् । काममेक वैणव दण्डमाददीत यद्वा त्रिदण्डमिति हि तत्राभिप्रायः । एव 'यदीच्छेदाददीते' त्यत्रापि यद्येक दण्डं गृहीतुमिच्छेत् तदैकं अन्यथा त्रिदण्डमिति । अन्यथा

कथं जातरूपधरस्यैव दण्डग्रहणाग्रहणविकल्पः । विद्वदविद्वद्विषयसन्न्यास-भेदासिद्धावविद्वद्विषयं दण्डग्रहणं विद्वद्विषयं तदग्रहणमिति चेत् ? किमिदं कर्णं स्पृष्ट्वा कटिं चालयसि । जातरूपधरस्य कथं तद्ग्रहणमित्येतदेव ह्यनु-योगास्पदम्, न हि वैणवं दण्डं धारयन् कश्चिज्जायते, न च दिगम्बरो वि-कीर्णमूर्धज एकदण्डधारी कश्चिद्भवतामपीष्टो दृष्टो वा ? दण्डग्रहणकाले का-षायमपि गृह्णीयादिति चेत् ? किमत्र प्रमाणम् ? स्मृत्यन्तरादिकमिति चेत्? तर्हि तदनुसारादस्मत्प्रदर्शितमेवार्थमङ्गीकुरुष्व । अतस्तत्र सन्न्यसन-वेलायां प्रागुद्गमनावसर एव तथा वेषः, अनन्तरं तु यथालाभं यथेच्छं वा त्रिदण्डैकदण्डयोरन्यतरस्य काषायादेर्ग्रहणमेवाभिमतमिति भावय ।

यच्चाविद्वद्विषयं दण्डग्रहणमिति, तदपि साहसिकप्रलपितम् विद्वांसमधिकृत्यैव तद्विधानात् । कथं चातिशयितविद्येन भवता इतिहासपुरा-णादिपठितकाषायदण्डशिखाधारिणः कपिलपञ्चशिखदुर्वासःप्रभृतयो महर्ष-यश्शङ्करादयश्च भवत्सिद्धान्तप्रतिष्ठापका भगवन्नाथमुनिमिश्रभास्करयादव-प्रकाशादयश्चाविद्वांस इत्युन्नीतम् । तदेतदवैदिकसिद्धान्तसारस्यमन्तरेण न कस्यचिद्रोचेत ।

यत्तु विखनस्सूत्रे "साम्बरा दिगम्बरा वे" ति विकल्पो विवृत-गूढाचाराभिप्रायेणेति, तदपि न, तदसिद्धेरेव तद्विषयत्वासिद्धेः । तत्र हि निस्सङ्गत्वप्रतिपादनाय तथा तथा व्यपदेशः, यथा वृक्षमूले शून्यागारे श्म-शाने वा वासिन इत्यत्र न व्यवस्थितविषयो विकल्पस्तद्वदत्रापि । "न तेषां धर्माधर्मौ सत्यानृते शुद्ध्यशुद्ध्यादि द्वैतं सर्वसमा" इत्यत्रापि नह्यधर्मासत्या-द्यनुमतिः क्रियते । तथासति तेषामित्यविशेषेण परामृष्टानां विवृतवेषाणामपि तदनुमतिप्रसङ्गात् । न च तदिच्छसि । अतस्तत्राप्यधर्मासत्यादेः स्वाश्र-माङ्गभूतकृतिनयत्वमेतत्प्रतिरिक्तधर्मादीनां च स्वरूपतः प्रहाणमुच्यते ।

यत्तु परमहंसोपनिषदि काष्ठदण्डनिन्दनेन ज्ञानदण्डविधानमित्युक्तम्, तदपि "न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु निन्दितादितरत्प्रशंसितुमि" ति न्यायेन ज्ञानदण्डविधानादरादेव, यथा अनुदितहोमनिन्दा उदितहोमप्रशंसार्था तथेहापि । अन्यथा काष्ठदण्डधारिणः कथं महारौरवादिप्राप्त्यभिधानम् ? तथा च सति काष्ठदण्डधारणस्य महापातकत्वप्रसङ्गेन तद्धारिणा दूरपरिहरणीयत्वप्रसङ्गात् । तत्र शिखायज्ञोपवीताच्छादनपरित्यागोक्तिरपि तत एवान्यपरेति सिद्धम् । विवृतवेषादिविषयतया च वक्ष्यमाणप्रकारेण यथासम्भवं तन्निर्वाहस्सर्वत्र । एवं लिङ्गनिन्दापराण्यपि सर्वाणि स्मृतिवचनानि लिङ्गमात्रवता तत्तद्धर्मविकलानां निन्दापराणीति तत्र तत्रैव पूर्वापरपरामर्शेन सुव्यक्तम् । "अव्यक्तलिङ्गोऽव्यक्ताचार" इति वाक्यं तु लिङ्गाचारयोर्गोपनमवमन्तव्यतार्थं विदधातीति प्रतीयते, नह्यलिङ्गोऽनाचार इत्युच्यते । अतो नास्ति भवदभिमतं परमहंसद्वैविध्यम् । त्रिदण्डैकदण्डादिविकल्पास्तु सम्भवन्ति ।

ननु श्रीभागवते " न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियावि"ति परमहंसस्य निष्क्रियत्वमुक्तमिति चेत् ? किमतः ? गूढाचारसिद्धिरिति चेन्न,—कुटीचकादित्रयेण सह परमहंसावान्तरविशेषस्य निर्देशायोगात् । न हि पृथिव्यादिद्रव्यवर्गपरिगणने घटः पट इत्यपि परिगण्यते । परमहंसमात्रोपादाने तु न त्वदभिमतसिद्धिः । तस्य निष्क्रियत्वोक्तिस्तु पूर्वपूर्ववत्कर्मप्राचुर्याभावात्—अल्पधने पुरुषे दरिद्रशब्दवत् । न च सर्वे परमहंसास्सर्वक्रियाशून्या इति त्वयापि स्वीकृतम् । विवृतगूढवेषाचारविभागाभावप्रसङ्गात् ।

ननु करतलामलकीकृतसकलनिगमस्मृतीतिहासपुराणार्थैस्समस्तन्यायसार्थवाहैः परमहंसपरिव्राजकपरिबृढैर्भगवच्छङ्कराचार्यैरशेषोपनिषत्स्मृतिजलधिसुधायामुपदेशसाहस्रिकायां सर्ववर्णाश्रमधर्मत्यागरूपो गूढाचारधर्मः

स्वपक्षतयाऽभीक्ष्णं सयुक्तिक प्रदर्शित इति चेत् ? अहो भवान् महीयोभि राचार्यवर्णनादृष्टैरनिष्टान् विजिगीषते । ये पुनर्यत्प्रतिपादिते निर्विशेषात्मा द्वैते प्रपञ्चवञ्चनादौ च प्रमाणसरणिमनुसरन्तो विवदन्ते ते कथ तत्समर्थिते प्यन्यस्मिन्नपार्थे चरितार्थधियो भवेयु. । ये चात्राशरीरत्वादयो युक्त्याभासा वर्णाश्रमधर्मत्यागाय वर्णिता , तेपि जीवन्मुक्तिजीवघातेन विनिहता वेदित व्या । शरीरतत्प्रयुक्तसुखदु खाद्यनुषङ्गस्य प्रत्यक्षादिसिद्धत्वेन तन्निषेधस्य तद्बाधितत्वात् । स्वरूपेण वर्णाश्रमरहितस्याप्यात्मनश्शरीरविशिष्टाकारेण तद्वृत्तामुपजीव्य प्रवृत्तैस्शास्त्रैरेव तत्प्रयुक्तानुष्ठानसिद्धे. । न हि देहात्मभ्रमो पजीवनेन पारलौकिकशास्त्रोदय । अतो न कथञ्चिदपि युष्मदनुष्ठीयमानं स्वैरकर्मसह पारमहस्य नाम किमपि दृश्यते ।

ननु ये वहिर्विषयविमुखतया निषिद्धनिवृत्तविरक्त-लिङ्गधारिण. त एव साक्षात्परमहंसाभिधानब्रह्मविदः, वयन्तु नाममात्रधारिण इति चेन्न,— तैरप्याश्रमविशेषनियतलिङ्गविशेषस्य धर्मविशेषस्य चापरित्यागात् । यश्च तेषा विषयवैमुख्य निषिद्धनिवृत्तिकारणमुक्तम्, तदपि किं निश्शेषशब्द स्पर्शादिवैमुख्यरूपम्, उत कतिपयवैमुख्यरूपमिति ? नाद्यः, कबलग्रहणादौ कस्यचिदप्यंशस्य न्यूनत्वादर्शनात् । मिथ्यैतदिति चेत् ? शान्तं पापम्, कृतघ्नोसि । ये भवत्सु ब्रह्मवित्त्वेन बम्भ्रम्यमाणाः प्रतिदिनमग्रासने कृत्वा यथाभिलाषं चतुर्विधमन्नमुपहरन्ति, ते पुनरेवविध वाक्यमाकर्ण्य कथ न परिदूयेरन् । येन च प्रमाणेन ब्रह्मविद्भोगानां मिथ्यात्वापादन तेनैवाब्रह्म विद्भोगानामपीति सर्वेषामनायासेन विषयवैमुख्यं समर्थितम् । द्वितीयेपि यत्किञ्चिद्विषयवैमुख्यमात्ररूपम्, उत निषिद्धवैमुख्यरूपमिति ? पूर्वत्रान्येषा मपि तत्सम्भवेन पुनरप्यविशेष । उत्तरत्रापि तन्निषिद्धवैमुख्य किं अनिष्ट त्वमात्रात्, उत शास्त्रसिद्धानर्थहेतुत्वाध्यवसायेन ? नाद्य , विकल्पासह- त्वात् । अनिष्टत्वमपि शस्त्राग्निकण्टकादिवत्सर्वप्रतिकूलत्वोपलम्भाद्वा अब्रह्मवि

त्प्रतिकूलत्वोपलम्भाद्वा, आनुकूल्यानुपलम्भनमात्राद्वा? न प्रथमः,सर्वलोकोपक्र-म्भविरोधात् । अत एव नापरः, ब्रह्मविदा स्वात्मप्रत्यक्षविरोधात् । न हि मांसादिषु संस्कृतेषु ब्रह्मविदामपि निम्बादिवत् प्रातिकूल्यादिबुद्धिः । परेषा तु चेष्टाकारलिङ्गकानुमानविरोधः । शैलूषादिचेष्टादिवदिहापीति चेन्न ,—परविप्रलम्भपरानन्दजननादिप्रयोजनायोगेन तथाविधबुद्धिपूर्वकत्वानुपपत्तेः । स्वार्थताबुद्धिपूर्वकत्वे तु वैमुख्यासिद्धेः, भक्षणाद्यर्थप्रवृत्तेरबुद्धिपूर्वकत्वायो गात् । निषिद्धार्थप्रवृत्तिरेव तेषां नास्तीति हेत्वसिद्धिरिति चेत् ? प्रामादिकनिषिद्धप्रवृत्तेर्ब्रह्मविदामपि सम्भवात् । बुद्धिपूर्वकनिषिद्धप्रवृत्त्यभावस्तु शास्त्रसिद्धानर्थहेतुत्वाध्यवसायेनैवेति द्वितीय कल्पस्स्यात् । तथा च निषेधशास्त्रकिङ्करत्वेनाविशेषात् विधिशास्त्रमप्यनुबध्नातीति दुरन्तता । नचैतदुभय भवतामिष्टम् । यदाहु " दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः । वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्विधिकिङ्कर " इति । अत्याश्रमपक्षे यम्, आश्रमपक्षे तूभयमपीष्टमिति चेत् ? तर्हि यथाविधि लिङ्गाचारावनुवर्तस्व । तदा तु न विवदामहे । शास्त्रवश्यत्वाभावेपि ज्ञानिनोऽत्यर्थनिषिद्धनिरोधवासनाबलादेव बुद्धिपूर्वनिषिद्धनिवृत्तिरिति चेन्न,—निषिद्धविरोधवासना हि निषिद्धे प्रवृत्तिं निवर्तयति । नचाब्रह्मविदो निषिद्धं ब्रह्मविदोपि निषिद्धं भवति, अतिप्रसङ्गात् । अतश्चानिषिद्धत्वात् प्रवृत्तिरेव स्यात् । अन्यथा ब्रह्मचर्यावस्थानिषिद्धतत्सन्निरोधवासनया उत्तरेषामाश्रमाणामनारम्भप्रसङ्गात्। विधिवशात्तत्र पुनः प्रवृत्तिरिति चेन्न ,—ब्रह्मचारिनिषिद्धेषु गृहस्थादीनामविहिताप्रतिषिद्धेषु केषुचिदन्तर्माल्यादिष्वप्यप्रवृत्तिप्रसङ्गात् । यदि च प्राङ् निषिद्धत्वमात्रेण तदानीमनिषिद्धेपि वासना विरोधिका, तदा ब्रह्मविदो न काचिदपि प्रवृत्तिः स्यात्, सर्वेषामपि कर्मणामधिकारिभेदेन देशकालादिभेदेन वा निषिद्धत्वात् । अस्तु तादृशो निरीहोऽस्माकं ब्रह्मविदिति चेन्न —समाधिस्वापादिकं वान्तरेण तादृगवस्थत्वसिद्धेः । न च समाधिस्थ तथा

विध प्रतिक्षिपामः । तस्याप्युत्थानकाले विधिनिषेधौ शास्त्रग्राहिणावेव । अस्तु तर्हि लोकसंग्रहार्थं निषिद्धवैमुख्यमिति ? तर्हि न वैमुख्यमपि तु बलान्निरोधः । तथा च विहिताभिमुख्यमप्यभिमुखीभवति । । लोकसंग्र- होपि लोकक्षोभजन्यपापभयादेवेति तदेव शास्त्रवश्यत्वम् । ब्रह्मानुभवरसव शादेव निषिद्धक्षुद्ररसवैमुख्यमस्त्विति चेन्न, अविहिताप्रतिषिद्धेऽप्यप्रवृत्ति- प्रसङ्गात् । साच सत्यपि समाधिदशैवेति प्रागेवोक्तम् । एतेन जरठवद्भो- क्तृत्वशक्तिवैकल्यात् ब्रह्मविदो भोगवैमुख्यमिति च प्रत्युक्तम् । अलभान्नि वारकराजादिभयाद्वा तद्वैमुख्यमिति तु स्यात् । तदेतत्तुरङ्गमब्रह्मचर्यम्, निर्विघ्न लाभदशाया तु स्वैरमेव ह्यायातम् ।

एतेनात्याश्रमपक्षेपि निषिद्धवैमुख्य दूषितम् । अनाश्रमित्वावस्था च किं विधायकशास्त्रबलादङ्गीक्रियते, लिङ्गदर्शनमात्राद्वा, तदशक्त्या वा, अन्यतो वा कुतश्चिदिति ? न प्रथम', विधायकादर्शनात् , प्रत्युत "अ- नाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज" इत्यादिस्मृतिशतैर्निषेधात् । नचैत- दविद्वद्विषय मन्तव्यम्, सङ्कोचकाभावात् । अनाश्रमित्वविधिदर्शने हि तत्सङ्कोचः । ज्ञानिनामपि नाश्रमो निषिध्यते, अपि तु स्वैराचारः । यथा—" नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैन माप्नुयादि " ति ।

ननु " तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते । " " अनिष्टमिष्ट मिश्रं च त्रिविध कर्मणः फलम् । भवत्यत्यागिना प्रेत्य न तु सन्न्यासिना क्वचित् । " इति श्रुतिस्मृतिभ्या ज्ञानिन उत्तराघाश्लेषः श्रूयत इति चेन्न,—दुश्चरिताविरतिपरश्रुतिबलादेवा- श्लेषश्रुत्यादेरबुद्धिपूर्वविषयत्वात् , आपद्विषयत्वाच्च । सूत्रित च—"सर्वा- न्नानुमतिश्च प्राणात्यये तद्दर्शनादि " ति , ' शब्दश्चातो कामकार ' इति च । ' कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समाः ' इत्युक्त्वा ' न कर्म

लिप्यते नर ' इति वचनाद्वुद्धिपूर्वकर्मणा ऽप्यश्लेषः श्रुत इति चेन्न,—तस्य वाक्यस्य विद्याङ्गभूतासङ्गकर्मविषयत्वात् । विद्यास्तुत्यर्थत्वाद्वा । तथाचासूत्रयत् ' ' नाविशेषादि ' ति, ' स्तुतयेऽनुमतिर्वे ' ति च । अन्यथा पूर्वोक्तविरोधात् । दुश्चारेतविरतिश्रुतिरेव किमन्यपरतया न निरूप्यत इति चेन्न,—तस्यास्तात्पर्यविषयस्यान्यस्यादर्शनात् । विज्ञानविरोधादेव तत्रापि तात्पर्यमिति चेन्न;—ज्ञानस्य दुश्चरितविरामाद्यभावे स्वसाध्यसाधकत्वाभावलक्षणवैकल्यप्रतिपादनमुखेन दुश्चरितादिनिन्दारूपतया तदभाव–विशिष्टत्वेन विशेष एव वाक्यस्य तात्पर्यात् । ज्ञाननिष्पत्त्यर्थं दुश्चरितादिनिवृत्तिर्निष्पन्नज्ञानस्य तु निरपेक्षतया स्वैरानुमतिरिति चेन्न;—दुश्चरित–प्रभृतीना ब्रह्मप्राप्तिविरोधित्वेन ' नैनमाप्नुयादि ' ति प्रतिपादनात् । न ह्यत्र ' नाविरतो दुश्चरित.त् ' ' प्रज्ञानमाप्नुयादित्युच्यते । ' ' नागुस्सम्पन्नमश्नाती ' त्यत्र क्षीरादिसम्पद्रूपविशेषनिषेधवत् प्रज्ञाननिषेधे तात्पर्यमिति चेन्न ,—पूर्वापरभावसहकृतकरणश्रुतिबलादेव सिद्धत्वप्रतीतेः साध्यत्वविवक्षायास्तद्विरुद्धत्वात्, स्वारस्याभावाच्च । अत एव 'नागु' क्षीरेण भुङ्क्ते' इति वदिति प्रत्युक्तम्, भोजनवत् ब्रह्मप्राप्तेरन्यतः प्राप्त्यभावाच्च । साध्यत्वाविवक्षायामपि ज्ञानस्याप्रयाणादनुवर्तनीयत्वस्य प्रतिपादितत्वात् । प्रति–दिवसमुपचीयमानानुवृत्तज्ञानसिद्ध्यर्थं दुश्चरितविरामादेरप्यामोक्षादनुवर्तनीयत्वस्य प्रतिपादितत्वात् । अतो यावज्जीवं स्वैरनिषेधे अनन्यथासिद्धे सति ' कुर्वन्नेवे ' त्यादिकं ज्ञानस्तुत्यर्थं ज्ञानाङ्गकर्मविधिपरं वेति नेतव्यम् ।

अत एव ' अपिचेदसि पापेभ्यस्सर्वेभ्यः पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ' ' यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा । ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा । यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमान् लोकान् न

हन्ति न निहन्यते ' इत्यादीन्यपि क्रियमाणे कर्मणि फलसङ्गकर्तृत्वादि प्रतिषेधपरतया ज्ञानविशेषमाहात्म्यप्रतिपादनादिपरतया वा न स्वैरानुमति लिङ्गानि । अत एव ' अपिचेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि स ' इत्युक्त्वा, अनन्तरमेव ' क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं स गच्छती ' त्यादिना समाधीयते ।

' तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदि ' ति विदुषो बाल्यविधिबलात्कामचारवादकामभक्षत्वादिप्राप्तिरिति चेत् ?—न हि तत्र बाल्यशब्दो बालभावपरः, स हि वयोवस्थाविशेषरूप उपादातुं न शक्यते । अतः स्वमाहात्म्यानाविष्काररूपं बालकर्म उपादातुं शक्यत इति तद्विषयोयं विधिः । अन्यथा प्रागुक्तविरोधात् । सूत्रितं च ' अनाविष्कुर्वन्नन्वयादि ' ति । योगिना च स्वमाहात्म्यानाविष्कारेण जडवदाचरणं योगोपकारकतया स्मर्यते,—यथा—

" जानन्नपि हि मेधावी जडवल्लोकमाचरेत् ।
सम्मानना परां हानिं योगर्धेः कुरुते यतः ॥ " इत्यादि ।

सनत्सुजातोपि—

" य इमं सर्वदा भूतेष्वात्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किन्नु[स] शोचेत्ततः परम् ।
अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमस्य सर्वस्य यच्च नास्ति यदस्ति च ।
पितामहोस्मि स्थविरः पिता पुत्रश्च भारत ॥
ममैव यूयमात्माथ न मे यूयं च नाप्यहम् ।
आत्मैव स्थानं मम जन्मचात्मे " त्यादिना सर्वान्तरात्मभूतब्रह्मसाक्षात्कारिणं सर्वजननिरुपाधिकसुहृदं ब्रह्मनिष्ठं प्रस्तुत्य,—

' तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः ।
नैव मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनमि '' त्यादिना तस्य
स्वाकारगोपनं विधाय ,
' यद्येवमन्तरात्मानं ब्रह्मणो हन्तुमर्हति ।
निर्लिङ्गमचलं सिद्धं सर्वद्वन्द्वविवर्जितम् '
इत्यादिना परिशुद्धात्मस्वरूपानुसन्धानं च विधाय,
' योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥
किं तेन न कृतं पापं चोरेणात्मापहारिणा ।'
इत्ययथाभूतात्मवेदिनं विनिन्द्य,
' अश्रान्तस्यावमानावात्मा सम्मतो निरुपद्रवः ।
शिष्टो नशिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥ '
इति विशिष्टस्यैव सतस्तस्यावमानसिद्ध्यर्थमविशिष्टवदभिनय एवाभिधीयते ।
व्यज्यते हि तत्रैव—
' सम्मानपरिहारार्थं स्ववीर्यस्य हि गोपनम् ।
ये यथा वान्तमश्नन्ति बाला नित्यमभुङ्क्तये ॥
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात् ।
नवै मानं च मौनं च सहितौ चरतस्सदा ।
अयं मानस्य विषयो ह्यसौ मौनस्य तद्विदुरि ' ति ॥
उक्तं हि तैत्तिरीयके— ' तस्मादेव विद्वान् । वीव नृत्येत् । प्रेव चलेत् ।
व्यस्येवाक्ष्यौ भाषेत । मण्ठयेदिव । क्राथयेदिव । शृङ्गायेतेव । उतमे-
ऽपवदेयुः । उतमे पाप्मानमपहन्युरिति ' इति । अत्रापि पापनिवृत्त्यर्थं
परिभवनीयत्वसिद्ध्यर्थमुन्मत्तत्वादिसमानव्यापार एव हि विधीयते , न पुनः
परमहंसानां परदारादिगमनरूपनिषिद्धकरणम्, नापि नित्यनैमित्तिकत्यागः ।

उक्तं च मनुना—

‘ सम्मानात् ब्राह्मणो नित्य उद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ ’ इति ।

अयमेवार्थः स्मृत्यन्तरेष्वप्युच्यते—

‘यन्न सन्त नचासन्त नाश्रुत नबहुश्रुतम् ।
न सुवृत्त न दुर्वृत्त वेद कश्चित्स वै द्विजः
गूढ समाश्रितो विद्वानज्ञातश्चरितं चरेत् ॥
अन्धवज्जडवच्चापि मूकवच्च मही चरेत् ।
स्वाचारस्यापरित्याग स्वप्रभावस्य गोपनम् ॥
अपरिग्रहशीलत्व पावनानि प्रचक्षते ।’ इत्यादिभिः ।

एतेन द्वितीयोपि हेतुः प्रत्युक्तः, प्रत्यक्षश्रुतिविरोधे प्राप्त्यभावेच लिङ्गदर्शनमकिंचित्करमेव । न च तदस्ति । आदिभरतोपि हि योगसिद्ध्यर्थं जडवदाचारमात्रे प्रवृत्त इति तत्रैव व्यक्तम् । तथाहि श्रीविष्णुपुराणे— आदिभरतोपाख्याने—

“ तत्र चोत्सृष्टदेहो सौ जज्ञे जातिस्मरो द्विजः ।
सदाचारवता शुद्धे योगिना प्रवरे कुले ।
सर्वविज्ञानसम्पन्नस्सर्वशास्त्रार्थतत्त्ववित् ।
अपश्यत्सच मैत्रेय आत्मानं प्रकृतेः परम् ।
आत्मनोधिगतज्ञानो देवादीनि महामुने ।
सर्वभूतान्यभेदेन स ददर्श सदात्मनः ।
न पपाठ गुरुप्रोक्तां कृतोपनयनश्श्रुतिम् ।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥
उक्तोपि बहुशः किञ्चिज्जडवाक्यमभाषत ।
तदप्यसंस्कारगुणं ग्राम्यवाक्योक्तिसंश्रितम्
अपध्वस्तवपुस्सोथ मलिनाम्बरधृग्जटी ॥

क्लिन्नदन्तान्तरस्सभ्यैः परिभूतस्स नागरैः ।
सम्माननना परा हानिं योगर्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ।
तस्माच्चरेत वै योगी सतां वर्त्म न दूषयेत् ।
जना यथावमन्येरन् गच्छेयुर्नैव सङ्गतिम् ।
हिरण्यगर्भवचनं विचिन्त्येत्थं महामतिः ।
आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने ।
भुङ्क्ते कुल्माषवाट्यादि शाकं वन्यफलान् कणान् ।
यद्यदाप्नोति सुबहु तदत्ते कालसंयमम् ।
पितर्युपरते सोऽथ भ्रातृभ्रातृव्यबान्धवैः ।
कारितः क्षेत्रकर्माणि कदन्नाहारतोषितः ।
सरूक्षपीनावयवो जडकारी च कर्मणि ।
सर्वलोकोपकरणं बभूवाहारचेतनः ।
तं तादृशमसंस्कारं विप्राकृतिविचेष्टितम् ।
क्षत्ता सौवीरराजस्य विष्टियोग्यममन्यत " ॥ इति ।

तथोत्तरत्र—

" योगिनो विविधैरूपैर्नराणामुपकारिणः ।
भ्रमन्ति पृथिवीमेतामभिज्ञातस्वरूपिणः " इति ॥

नह्यत्राधर्मानुष्ठानं किञ्चिदुक्तम्, न च धर्मोपप्लवः । कर्माणि तु यज्ञादीनि ब्रह्मचारित्वादेव नाग्रहीत् । अत एव तत्र " सतां वर्त्म न दूषयेत् " इत्युक्तम् । भागवते च तस्य यज्ञोपवीतादिधारणादिकथनादाश्रमित्वमेव प्रतीयते । यथोक्तम्—"कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूत " इति । अत्र निगूढश्चरसीति स्वमाहात्म्यानाविष्कारो व्यक्तः । अत एव 'न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम्' इत्यत्रापि

कृतोपनयनत्वं न निषिध्यते । अनूच्चारणपरित्यागोपि जन्मान्तरसंस्कारोद्बोधनादिना वेदाना स्वत प्रकाशात् । अथवा एकवारश्रवणमात्रेण वेदधारणात् । दुर्वास प्रभृतीनामुन्मत्तव्रतादिकमपि कादाचित्कमाश्रमधर्मनिष्ठानामेव लोकोपहास्यतादिफलावसितम् । न पुन सर्वाश्रमत्यागात्मकम् । अत एव दुर्वाससः पश्चात्सन्न्यासानुप्रवेश काषायदण्डादिमत्त्वं च स्मर्यते। ऋभु—शुकसवर्तादिषु नग्नचर्यादिदर्शनादनाश्रमित्वमवगम्यत इति चेन्न;—नग्नचर्याया अपि वर्षवातातपादितितिक्षालक्षणकम्बलकबलिताशेषविशेषाकारपुरातनाधिकारिविशेषविषयव्रतविशेषरूपत्वात् । आश्रमित्वाभावे कथ वाताशनस्यैव सवर्तस्य महीभृता ऋत्विक्त्वेन वरणम् । अतस्सर्ववर्णाश्रमसाधारण व्रतविशेष एव नग्नचर्या । गृहस्थस्यैव ह्यार्त्विज्यादिकम् । पूर्वं विधुरस्यापि कार्यार्थं दारक्रियादिपूर्वकमार्त्विज्य युज्यते ।

ननु 'पुर पञ्चशत नार्यो वारमुख्या समाद्रवन्ति' त्यादिना 'तस्य भुक्तवतस्तात तदन्त पुरकाननम् । सुरम्य दर्शयामासुरैकैकश्येन भारते' ति तस्य ब्रह्मविदो महर्षे शुकस्य वारमुख्यासु गणिकासु भोजनमप्युक्तमिति चेन्न,—ब्राह्मणादिपरिपकोपनीतान्नभोजनेन तासा परिजनतया भोजनानन्तर तालवृन्तादिग्रहणादिमुखेनावस्थानेपि तद्व्यपदेशोपपत्ते । शुकस्य ब्रह्मचर्यादिपरीक्षणमात्रे हि तत्र तात्पर्यमिति सुव्यक्तम् । नैतन्निषिद्धान्नभोजनालिङ्गम् । उत्तरत्र च—

"विज्ञाते तु परे तत्वे प्रत्यक्षे हृदि शाश्वते ।
किमवश्य हि वस्तव्यमाश्रमेषु वनेषु च ।
एतद्भवन्तं पृच्छामि तद्भवान् प्रब्रवी तु मे ।

इति शुकेन पृष्टे, जनकेन तेषामेवाश्रमधर्माणा सङ्गत्यागपूर्वकमनुष्ठानमेवोक्तम् ।

यच्च तत्र—

' न विना ज्ञानविज्ञानान्मोक्षस्याधिगमो भवेत् ।
न विना गुरुसम्बन्धात् ज्ञानस्याधिगम स्मृत. ॥
आचार्य. प्लाविता तस्य ज्ञानं प्लव इहोच्यते ।
विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ॥
त्यज धर्ममधर्मं च त्यज सत्यानृते अपि ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि त त्यजे' त्युक्तम्, तत्र 'तीर्णस्तदुभयं त्यजेदि' त्यनेन आमोक्षात्तदुपायभूतज्ञानाचार्ययोरनुवर्तनीयत्वमेवोक्तम् । ' त्यज धर्ममधर्मं चे ' ति श्लोकस्तु—

' त्यज धर्ममसङ्कल्पात्त्यजाधर्ममहिंसया ।
उभे सत्यानृते बुद्ध्वा बुद्धिं परमनिश्चयाम्' ॥ इत्यनेन श्लोकेन व्याख्यातार्थत्वात् नासौ त्वदनुगुण ।

यत्पुनः श्रीभागवते शुकस्य परमहंसस्य वेषानुक्त्वा—

' तत्रागमत् भगवान् व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्ष ।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेष ॥
तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाह्वंसकपोलगात्रम् ।
चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननं कम्बुसुजातकण्ठम् ।
निगूढजत्रुं पृथुतुङ्गवक्षसं सावर्तनाभिं वलिवल्गूदरं च ।
दिगम्बरं वक्त्रविकीर्णकेशं श्यामं सदा पिच्छिलयाङ्गलक्ष्म्या ॥
स्त्रीणां मनोज्ञं रुचिरस्मितेन प्रलम्बबाहुं सुकुमारोत्तमाङ्गम् ।
प्रत्युत्थिता मुनयस्स्वासनेभ्य ' इत्यादि, अत्र नग्नचर्यापरत्वाल्लिङ्गस्य निगूहनमलक्ष्यलिङ्ग इत्युक्तम् ।

यत्पुनराश्वमेधिके प्रोक्त—'राजन्नाङ्गिरस पुत्रस्संवर्तो नाम धार्मिक ।
दिशश्चङ्क्रमते सर्वा दिग्वासा मोहयन् प्रजा ।
उन्मत्तवेष बिभ्रत्स चरन् वै तु यथासुखम्

वाराणसी तु नगरी अभीक्ष्णमुपसेवते ॥

नैव धर्मी नचाधर्मी नचापि हि शुभाशुभीत्या दि,
तत्रापि धार्मिक इत्युपक्रमात् पुण्यक्षेत्रनिरन्तरसेवनरूपधर्मविशेषनिष्ठत्वस्य चाभिधानात् उन्मत्तवेषधारणमात्रमेवोच्यते ।

यत्पुनरजगरोपाख्यान स्वैरानुरूपमुपवर्णयन्ति; तदप्यसत् । तथाहि—

' केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् ।
किञ्च कुर्वन् नरो लोके प्राप्नोति परमा गतिम् ॥ '

इति युधिष्ठिरेण पृष्टो भीष्मः पत्याह—

अत्राप्युदाहरन्तीममितिहास पुरातनम् ।
प्रह्लादस्य च सवाद मुनेरजगरस्य च ।
चरन्त ब्राह्मणं कञ्चित्तुल्यचित्तमनामयम् ॥
पप्रच्छ राजन् प्रह्लादो बुद्धिमान् प्राज्ञसत्तमः ।

प्रह्लाद —

' स्वस्थ शुक्लो मृदुर्दान्तः निर्विवित्सोऽनसूयक. ।

सुवाग्बहुमतोलोके प्राज्ञश्चरसि बालव दि' त्यादिना पूर्व प्रह्लादप्रश्नेन ब्राह्मणस्य मुमुक्षूपादया गुणाः प्रदर्शिता. । यत्पुनस्तत्रोक्तम्—'धर्मार्थकाम कार्येषु कूटस्थ इव लक्ष्यसे । नानुतिष्ठसि धर्माथौ न कामे चापि वर्तसे ॥ ' इति, तदपि काम्यकर्मादिविषयमेव, अन्यथा उत्तरत्र धर्मोपभोगप्रतिग्रहवचन विरोधात् । प्रह्लादानुयुक्तो हि ब्राह्मणस्तत्र सर्वपदार्थानामनित्यत्वमुक्त्वाह—

'उत्पत्तिनिधनज्ञस्य कि कार्यमवशिष्यते ।
सर्वभूतानि सम्पश्यन् अनुरक्तानि मृत्युना ।
सर्व सामान्यतो विद्वान् कृत्यकृत्यस्सुख स्वपे ॥
सुमहान्तमपि ग्रास ग्रसे लब्ध यदृच्छया ।
शये पुनरभुञ्जानो दिवसानि बहून्यपि ॥

अ.स्रवत्यपि मामन्नं पुनर्बहुगुणं बहु ।
पुनरल्पं पुनस्स्तोकं पुनर्नैवोपपद्यते ।
कणान् कदाचित्खादामि पिण्याकमपि च ग्रसे ।
भक्षये शालिमांसानि भक्ष्यांश्चोच्चावचान् पुनः ।
धारयामि च चीराणि शाणक्षौमाजिनानि च ।
महार्हाण्यपि वांसासि धारयाम्यहमेकदा ।
शये कदाचित्पर्यङ्के भूमावपि पुनश्शये ।
प्रासादे वापि मे शय्या कदाचिदुपपद्यते ।
न सन्निपतितं धर्म्यमुपभोगं यदृच्छया ।
प्रत्याचक्षे नचाप्येनमनुरुन्धे सुदुर्लभम् ।
अनियतफलभक्ष्यभोज्यपेयं विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवित कदर्यैर्व्रतमिदमाजगरं शुचिश्चरामि ॥
सुखमसुखमनर्थमर्थलाभं रतिमरतिं मरणं च जीवितं च ।
विधिनियतमवेक्ष्य तत्वबुद्ध्या व्रतमिदमाजगरं शुचिश्चरामि॥

'अनियतशयनासनप्रकृत्येत्यादि, अत्र यथालब्धवृत्तित्वेपि प्रपञ्चय-माने धर्म्यमिति धर्मादनपेतत्वमेव सावधानेनोक्तम्, उत्तरत्रापि निरपेक्षत्व मात्रेण यदालब्धवृत्तित्वं सम्माननपरिहरणमात्रं चोपदिश्यते ।

'निस्तुतिर्निर्नमस्कारो निर्द्वन्द्वो निष्प्रतिग्रहः ।
अरण्ये विचरैकाकी येन केनचिदाश्रित. ।
येन केन चिदाच्छन्नो येन केनचिदाशित· ।
यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदु. ।
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः
येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ॥

शून्यं यस्य जनाकीर्णं तं देवा ब्राह्मणं विदुः ।
यस्मिन् वाचः प्रणश्यन्ति कूपे प्रास्ताश्शिला इव ।
वक्तारं न पुनर्यान्ति तं देवा ब्राह्मणं विदुः ।
अनुत्तरीयवसनमनुपस्तीर्यशायिनम् ।
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ।
योऽहेरिव गणाद्भीतस्सन्मानान्मरणादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुरित्यादि—गृहीतमौनव्रतस्तूष्णीबभूवे'त्यादिना जडादिवद्भावनामात्रमभिधीयत इति सुव्यक्तम् ।

यच्च तत्र विपरीतमिव किञ्चिदुक्तम्— *यर्हि वा व स भगवान् लोकमिमं योगस्युस्थाप्रतीपमिहचक्षाणस्तत्प्रकृतकर्मभवसितमाजगरं नामावस्थितश्शयान एवाश्नाति पिबति खादत्यवमेहती' त्यादि, यच्चैव गोमृगकाकचर्यया व्रजस्तिष्ठन्नासीनः काकमृगगोवच्चरति पिबत्यवमेहतीत्यादि, तदप्यखिलमजगरगोमृगचर्यारूपलोकावज्ञाहेतुभूतयोगोपकारकव्रतविशेषविषयम् । तत एव च तथाविधस्यैव ऋषभस्य विधिनिषेधकिङ्करत्वमेव ज्ञापितमिति न विरोधः । अत एव हि भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यं 'धर्ममुपशिक्षमाण' इत्युपक्रमेऽप्युक्तम् ।

यच्चोत्तरत्र—'अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।
कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ।
कुतो बुद्धिरियं ब्रह्मन् अकर्तुस्सुविशारदा ।
यामासाद्य भवाल्लोकं विद्वांश्चरति बालवत् ।
प्रायो धर्मार्थकामेषु विवित्साया च मानवाः ।
हेतुनेह समीहन्ते आयुषो यशसश्श्रियः ।
त्वं तु कल्पः कविर्दक्षस्सुभगोऽमितभाषणः ।
न कर्तुमीहसे किञ्चिज्जडोन्मत्तपिशाचवत् ।
जनेषु दह्यमानेषु कामलोभदवाग्निना ।

---

* अत्र वाक्ये शुद्धः पाठो नोपलभ्यते । विमृशन्तु विचक्षणाः ॥

न तप्यसेऽग्निना मुक्तो गङ्गाम्भस्स्थ इव द्विपः ।
त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ।"

इति पृष्टेनावधूतेन ब्राह्मणेन—

"सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽहमिह तान् शृणु ।
पृथिवी वायुराकाश आपोऽग्निश्चन्द्रमा रविः ।"

इत्युपक्रम्य,

'एते मे गुरवो राजन् चतुर्विंशतिराश्रिताः ।'

इति गुरुवर्गमुक्त्वा,

"विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्येत वायुवत् ।
तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ।
सर्वभक्षोऽपि युक्तात्मा नाधत्ते मलमग्निवत् ।
क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् ।
भुङ्क्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभम् ॥'

इत्याद्युक्तम्,

तदप्युक्तेनैव न्यायेन योगनिष्ठप्रशंसारूपातिवादात्मकमिति अपिशब्दादिभिरेव लिङ्गैर्व्यक्तम् । उपक्रमे प्रश्नवाक्येनापि निष्परिग्रहत्वनिरभिमानत्वादिकं हि दर्शितम्, तदेव ह्युत्तरेणाप्यभिप्रेतम् । अतो यादृच्छिकसगुणविगुणान्नवि वेकत्यागे सर्वभक्षोक्तेस्तात्पर्यम् । यच्च यादृच्छिकान्नव्यति[illegible] पात्रभोजनमपि दृष्टमित्युच्यते, यथा—

"स्तोकं स्तोकं ग्रसेद्ग्रासान् देहो वर्तेत यावता ।
गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ।

सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ।
प्राणिपात्रोदरामत्रो मक्षिकेव न संग्रही ।
गुणैर्गुणानुपादत्ते यथाकाल विमुञ्चति ।
न तेषु सज्जते योगी गोभिर्गा इव गोपतिः ।"

इत्यादि ; तदपि स्थास्नुपात्रपरित्यागादौ तत्परम् । परिव्राजां भिक्षाकाले शीर्णपर्णपुटेनापि भिक्षणस्य कैश्चिदनुमतेः । यच्च तदुत्तरत्रेत्युपात्तम्—

"ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षक ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ।
बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ।
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतावरम् ।
तथा वासस्तथा शय्या प्राप्तं प्राप्तं भजेन्मुनिः ।"

इत्यादि, तदपि क्रियमाणेष्वेवाऽकर्तृत्वानुसन्धानविधौ तत्परमिति प्रागुक्तनयेन नेतव्यम् । अन्यथा तत्रैव कथ "मविधिगोचरश्चरेदि" त्यादिविधिर्घटेत ।

यत्तु वाररुचे स्वरूपग्रन्थ इत्युपात्तम्—

"देहजात्यादिसम्बन्धान् वर्णाश्रमसमन्वितान् ।
भावानेतान् परित्यज्य स्व भाव भवियेद्बुधः ।
सर्वोपाधिविनिर्मुक्तं चैतन्यं यन्निरन्तरम् ।
तद्ब्राह्मणमिति ज्ञात्वा कथ वर्णाश्रमी भवेदि"ति,

तदपि वररुचेः ऋषिभावनयोपदेशपरं चेत् परिगृहीततमऋष्यन्तरस्मृत्यन्तरादिवचनाविरोधेन यथावस्थितपरिशुद्धात्मस्वरूपानुसन्धानपूर्वकवर्णाश्रमधर्मविशेषविधिपरतया योज्यम् । उपपत्तिपर चेत् सर्वधर्मोपप्लवमूलकुतर्ककल्ककल्पितत्वेन प्रामाणिकैर्बीभत्सनीयम् । बृहस्पतिप्रणीतलोकायतादिग्रन्थवत् । विदुरवृत्तान्तोपि प्रागुक्तन्यायेन व्याख्यातः ।

यद्यपि "जपस्तपस्तीर्थयात्रा प्रव्रज्यामन्त्रसाधनम् ।

देवताराधनं चेति स्त्रीशूद्रपतनानि षाडि " त्यादि स्त्रीशूद्रादिषु भर्तृ—त्रैवर्णिकशुश्रूषाबहिर्भूतजपतप.प्रभृतिषु पतनस्मृतिः, तथापि क्षत्रियविशेषस्य सन्न्यासाभ्यनुज्ञानवच्छूद्रादेरपि केषुचिद्व्रतेष्वनुज्ञानमस्ति। न च तस्य यज्ञोपवीतादिपरित्यागलक्षणदोषावकाशः, प्रागेव तद्भावात्। ये च नग्नचर्यामातिष्ठन्ते महात्मानः ते हि ब्रह्मचर्यकाष्ठामधिष्ठाय तथा भवन्ति। " ऋषयो वातरशनाः " "वातरशना ह वा ऋषयश्श्रमणा ऊर्ध्वमन्थिन" इति हि श्रूयते। न पुनर्भवन्त इव पट्टांशुकादिभाण्डागारशालिनः क्षितिसुरचण्डालक्षीरसुरादिभेदत्यजः परकलत्रशरणाः पशुमृगसधर्माणः प्रजननसन्तताः श्रूयन्ते। सनत्कुमारादीनां नग्नता नित्यबाल्यावस्थतया, केवलब्रह्मभावना—भावितात्मानः कुमारा हि ते महात्मानः श्रूयन्ते। पशुपतेर्नग्नचर्या तु पाशुपतव्रतविशेषाङ्गरूपत्वात् तत्र धर्मत्वसदसद्भावयोरपि त्रयीधर्मनिष्ठैरनुपादेयैव। यत्पुनर्मुग्धेन्दुशेखरस्य मुनिधर्मदारमोहनादिकमवैदिकाचारजालम्, तत्र वैराग्यशालिनस्तस्य मोहनाभिसन्धिविरहः प्रस्पष्ट पठितः। अन्यथापि तस्येश्वरत्वमभ्युपगच्छतामीश्वरत्वादेव परिहृतम्। " न देवचरितं चरेदि " ति ह्याहुः। लोक वेदविरुद्धयोरप्यलेपः स्वतन्त्रश्चेति हि महापाशुपता प्राहुः। अनीश्वरत्वपक्षे तु तेजोविशेषेणैव सोढव्यम्। स्मरन्ति हि 'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषां तेषां तेजोविशेषेण प्रत्यवायो न विद्यते तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरज ' इत्यादि।

एतेन सर्वेश्वरस्य भगवतो वसुदेवनन्दनस्य स्वच्छन्दलीलया गोपवधूदर्शनव्याकुलीकरणं व्याख्यातम्। परिहृतं चैतदकर्मवश्यतया भगवत्पराशरादिभिः, 'कामाद्गोप्य ' इति भगवत्यनुरागानुवृत्तिरपवर्गायैव जायत इति चोक्तम्। ननु धर्मसंस्थापनार्थाय सम्भवस्तत्संक्षोभकरणं चेति कथमिदमुपपद्यते ' न, उक्तोत्तरत्वात्। नन्दगोपनन्दनत्वाभिमानमभिनयतस्तस्य न तावत्तदानीं वर्णाश्रमाचारानुवृत्तिनियमः। आभीरकन्यका अपि भगवन्तमेव

भर्तारमभ्यर्थ्य जन्मान्तरचरितव्रता दिव्यप्रकृतय एवेति तास्वप्सरस्समाधिरनुसन्धेय. । तत्तदभिमतफलप्रदानं चेश्वरस्यादोषायेति । यदा तु भगवान् वसुदेवतनयतया प्रतिबोधमभिनयन् यदुवंशोचितं क्षत्रधर्ममनुप्राविशत्, तदा सावधान एव सर्वदा सर्वान् धर्मानन्वपालयत् । तथाहि सर्वत्र कथ्यते

' न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणी ' ति । तथा
कृतोदकः कृतजपो हुताग्निस्समलङ्कृतः ।
तत उद्यन्तमादित्यमुपातिष्ठत माधव इति,

तथा अश्वत्थामास्त्रपावकप्लुष्टविराटतनयागर्भसञ्जीवनावसरे साधिकषोडशस्त्रीसहस्ररसिको बृन्दावनविहारी बल्लवीबृन्दानिविष्टयौवनारम्भो भगवान् स्वयमेव वोचत्—

' यदि मे ब्रह्मचर्यं स्यात् सत्यं च मयि तिष्ठति ।
अव्याहतं ममैश्वर्यं तेन जीवतु बालकः । ' इति ।

ननु श्वेताश्वतरोपनिषदुपसंहारे तदधिकारितया अत्याश्रमित्वोपपादनादप्रसक्तार्थत्वेन तद्विधिरिति चेन्न,—अतिशयिताश्रमविशेषनिष्ठ इति वा, ब्रह्मचर्यादित्रयातिक्रान्ताश्रमविशेषनिष्ठ इति वा, अन्येन वा केनचिदविरुद्धेन निमित्तेन तन्निर्वाहात् । अन्यथा स्फुटतरार्थश्रुतिस्मृतीतिहासादिशतकोपप्रसङ्गः । ' शारीरं केवलं कर्म कुर्वन् ' ' सर्वारम्भपरित्यागी ' ' सर्वधर्मान् परित्यज्ये ' त्यादिभिस्सर्वधर्मपरित्यागोक्त्या चानाश्रमित्वसिद्धिरिति चेन्न,—फलसङ्गकर्तृत्वादिविषयतया वा विधीयमानधर्मव्यतिरिक्तविषयतया वा यथासम्भवं तद्व्यवस्थापनस्य तत्र तत्रैवोपक्रमादिभिर्व्यक्तत्वात् । ' सन्न्यासस्य महाबाहो तत्वमिच्छामि वेदितुम् ' इति सन्न्यासत्यागतत्वबुभुत्सयोपसेदुषे धनञ्जयायोक्तं भगवता—

" एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ' इति ।

एतेन—

" यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ।
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः "

इत्यादीन्यपि वाक्यानि सर्वकार्यस्वरूपनिषेधपराण्यपि मुक्तदशा समाधिदशां वाऽऽश्रित्य निर्वाह्याणि । अतो यथायथमाश्रमविशेषविषया वा फलसङ्ग कर्तृत्वादिविषयो वा सन्न्यासपरित्यागादिवादः, न पुनस्स्वरूपपर्यवसितम् इति सिद्धम् ।

एतेन ' न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ' ' न्यास एवात्यरेचयत् । ' ' तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ' रित्यादि, ' किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे किं प्रजया करिष्यामः येषां नोऽयमात्मा ब्रह्मलोकः ' इत्यादिकमपि धर्मविशेषादिविषयतया तत्रत्यात्मसमर्पणादिविषयतया वा यथायथं निर्वोढव्यम् । अतस्सर्वाश्रमपरित्यागोक्तिसम्भवेऽपि प्रागुक्त एव न्यायः । न च तथास्ति, अपि तु ' त्रयो धर्मस्कन्धाः ' इत्याश्रमान्विधाय ' ब्रह्मसंस्थोऽमृतत्वमेति ' त्याश्रमनिष्ठानामेव ब्रह्मविदाममृतत्वं श्रूयते । ' स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते ' इति यावज्जीवं गृहस्थधर्मनिष्ठस्य ब्रह्मविदोऽपुनरावृत्तिराम्नाता । ' यो वा एतदक्षरं गार्गि ' त्यादौ च ज्ञानरहितकर्मणामन्तवत्फलसाधनत्वं ज्ञानपूर्वककर्मणां स्थिरफलसाधनत्वं चोक्तम् । अतो न कदाचिदपि यावज्जीवं स्ववर्णाश्रमोचितधर्मस्वरूपत्यागसम्भवः । यानि चान्यानि वाक्यानि सम्प्रतिपन्नश्रुतिस्मृतिष्वदृश्य

मानानि स्वाचारानुरूपमतपरिचर्यया केषुचिदप्रसिद्धेषु वा नष्टकोशेषु वा अनिरूपितमूलग्रेषु वा पुराणेषु प्रक्षिप्य पठन्ति पापिष्ठा स्तानि प्रत्यक्षश्रुत्या दिपरिशीलनशालिनीषु गरिष्ठगोष्ठीषु नावकाश लभन्ते ; तत्प्रामाण्येपि प्रसिद्ध विरोधेन नेतव्यमित्यत एवैतान्यपि निर्व्यूढानि ।

न च तृतीयः, अनाश्रमित्वाक्षेपकवचनादर्शनात् । जीवन्मुक्ते श्रुत्य र्थापत्त्यैवानाश्रमित्वसिद्धिरिति चेन्न;—तद्दूषणादेव तदसिद्धेः । अस्तु नि त्यमुक्तिवशात्सर्वाश्रमत्याग इति चेन्न,—तस्या अपि मोक्षोपायोपदेशकशास्त्रा देव विस्तरतस्तत्प्रकरणे निषेधात् । चतुर्थस्तु विपरीत एव ।

अथ गौडपादहरिप्रभृतिभिराचरितत्वात्सर्वाश्रमपरित्यागोऽस्माभिः स्वीकृत इति चेत् ? हन्त सदाचारनिदर्शनतया महान्त इमे दुर्ब्राह्मणशूद्र सन्तानादयः शिष्टा निर्दिष्टाः, यदनुविधायिनोपि यूयं शिष्टैर्बहिष्क्रियन्ते । हन्तैवं सति धर्मकीर्तिप्रभृतिभिः परिगृहीतत्वात्सौगतलोकायतिकादिसमय एव किं न स्वीक्रियते । न च वस्तत्परिग्रहेपि मुक्तिः प्रतिबध्यते । सत्यम् , तथापि येनाकारेण यावज्जीवं जीवनाय लोको रञ्जयितु शक्यः तेन यथायथं वर्ता मह इति चेत् , सत्यमिदमन्तर्गतमुद्गीर्णं भवता, तदेव चार्वाकसमयरहस्यमिति तत्प्रहारेण प्रहृतमिदम् । न हि चार्वाकान् भवन्तोपि गोष्ठीषु व्यक्तमन्तर्भा वयन्ति । भजन्तु वा प्रकाशं चार्वाकाभिख्याम् । ननु ब्रह्मविच्छब्दोस्मासु प्रयुज्यमानो दुरपह्नव इति चेत् ? सत्यम् , भ्रान्तिमूलतया निरर्थकोऽयमिति ब्रूमः । दिगम्बरादिष्विदानीमृष्यादिशब्दप्रयोगवत् । तत्त्वविद इति भवता स्वयं स्थानेषु समाहूयामह इति चेत् ? किमतः? तत्त्वविरत्वमेवेति चेन्न,— तस्य विडम्बनपरत्वात् , भवदधीनकार्यलाभकालप्रतीक्षणाद्वेति ।

नापि पञ्चमः, अधर्मत्वप्रसङ्गात् । यद्यपि स्वाश्रमधर्मानुष्ठानक्लेशादा त्मानुसन्धानविच्छेदभयेन सर्वधर्मपरित्याग इति तु यथाहृदयं सत्यं वचः, तथापि श्रुतिस्मृत्यादयः शक्तानां धर्मलोपे प्रकुप्येरन्निति प्रायश्चित्तेन प्रति

सन्धानं वा निरयपतनं वाऽवश्यम्भावीति निश्चीयताम् । अयं हि राजस-स्त्यागः । यथोक्तं "दु खमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् । स कृत्वा राजसत्यागं नैव त्यागफल लभे" दिति ।

षष्ठस्तु हेतुस्तदा शोभते, यद्यशक्तिरनाहार्या परमार्थभूता स्यात् ? नह्यशक्तमधिकृत्य शास्त्राणि प्रवर्तन्ते । न च तत्वतोऽशक्तिः, अन्येभ्यः शक्तेभ्योऽनुतिष्ठद्भ्यो विशेषादर्शनात् । स्वहृदयविसंवादाच्च । सन्ति च धर्मसाक्षिणोऽन्येऽपि—"आदित्यचन्द्रावनिलो ऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभेच सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमि" ति। विधुरत्वादिदशास्वपि सर्वसामान्यधर्मादेरनुवर्तनीयत्व तच्चलने च प्रायश्चित्तं तदकरणे प्रत्यवायश्चेति ।

नापि सप्तमः, सामान्यनिर्देशमात्रेण तदसिद्धं विशेषतस्तदनिरूप णादिति न कदाचिदपि बुद्धिपूर्वपापानामलेपसम्भव इति ।

ननु भवन्तोऽप्यन्त्यजपर्यन्तान्भगवद्भक्ता इति धावन्तस्समाचार-विप्लवाय जायन्त इति समोयम्, अस्माकं पुनः को विशेष इति चेत् ? मैवम्; किं त्वया मुक्तानां तेषां प्रतिष्ठार्चनादिरूपसम्भावनमुपप्लवकारणतयो पन्यस्तम्, उत जीवतामेवावज्ञादिपरिहारेणान्येभ्य उत्कर्षभावनमिति । न प्रथमः, तेषां भगवदुपासनप्रभावविशेषनिश्शेषिताविद्याकर्मवासनादेहस-म्बन्धादीनामाविर्भूतभगवत्साम्यानां जातिविशेषसम्बन्धाभावेपि भक्तप्रतिष्ठा-र्चनशास्त्रैः पुरुषान्तरव्यावर्तनाय पूर्वाकारमुपलक्षणीकृत्य तत्समाने बिम्बे सन्निधाप्य सभाजनविषयतया प्रतिपादितानां तत्तच्छास्त्रप्रामाण्यानुसारेण तत्तदुचितसभाजनं विधीयमानं कथं पुनरुपप्लवकारणमुन्नीतं भवता । मुक्ता वनन्तगरुडविष्वक्सेनतुल्या "इमा ँल्लोकानि" ति श्रुत्या भगव-दनुसञ्चरणादिक कुर्वन्तीति सिद्धम् । नापि द्वितीयः, अनेनैव शरीरेण विद्यमानेषूपप्लवपर्यन्तसम्भावनस्य तेष्वभावात् । तथाविधेभ्यो ऽन्येभ्यस्तेषु

भगवद्भक्त्या सञ्जातमतिशयमाद्रियामहे, न पुनर्जात्यादिभेदमेव भवन्त इव स्वरूपतो निह्नुवामहे, येनाचारविप्लवस्स्यात् । न च जात्याद्यनुरूपसम्बन्धादिवर्जनाद्भगवद्भक्तेष्वपि तेष्ववज्ञादिप्रसङ्ग इति वाच्यम् ,—तत्कालोचितस्पर्शवर्जनेऽपि स्त्रीधर्मिण्यामात्मजनन्यामिव मानसिकवाचिकसम्भावनासामर्थ्यवैभवेन पुराणेतिहासभगवद्वाक्यशतनिर्णीतेन शास्त्रानुसारिणामवज्ञाप्रसङ्गाभावात् । उक्तं च भगवता ' मद्भक्तान् शूद्रसामान्यान्नावमन्येत बुद्धिमानि ' ति । यथा—मतङ्गजतुरङ्गमविहङ्गमगोमृगादिषु पुरोहितामात्यसामन्तान्तःपुरकुब्जकिरातवामनबधिरादिषु च महीपतिसमाश्रयणमहनीयता गतेषु विशेषादनवमन्तव्येषु तत्तज्जातिगुणानुगुणवैषम्यव्यवस्थितमेवानुपाल्यते तथा भगवत्समाश्रितेष्वपीति न कश्चिद्दोषः । राजाधिराजस्य भगवतो राजवदुपचार इति न्यायात् । आदिभक्ताना अनन्तगरुडादीनामिच्छावतारभेदा इति पुराणप्रसिद्धम् । तेन तेषा प्रतिष्ठार्चनादिकं रामकृष्णादिभगवदवतारादीनामिवेति भक्तप्रतिष्ठाशास्त्रानुसारेण निर्णेतव्यमिति ।

इति शतदूषण्यां अलेपकमतभङ्गो नाम

पञ्चषष्टितमो वादः ॥६५॥



॥ श्रीरस्तु ॥

॥ अथ षट्पष्टितमो वादः ॥

नमोऽस्तु ब्रह्मणे तस्मै बादरायणरूपिणे ।
यस्यैव ब्रह्मसूत्राणां रचना सगुणायते ॥

अद्वैतमतनिष्ठानामनुष्ठानमपाकृतम् ।
ब्रह्मसूत्रार्थवैरूप्यं तेषामथ निरूप्यते ॥

यदाहुः—आपादचूडं ब्रह्मसूत्रेषु निर्विशेषं ब्रह्मैवार्थः प्रपञ्चमिथ्यात्वं च स्पष्टमुपपाद्यते, तथाहि - यद्ब्रह्म जिज्ञास्यतया प्रक्रान्तं तदेव हि नाना नास्तीति श्रुतिप्रामाण्यप्रागल्भ्यात्तदनुसारिसूत्रस्वारस्याच्च निर्विशेष-मिति निश्चिन्वन्ति महान्तः । तत्र बहुषु सूत्रेषु तद्विषयभूतासु श्रुतिषु च एक वचनान्तनिर्देशादात्मैक्यं स्वरसतः प्रतीयते, सचात्मा पुनः " न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि " त्यादिभिस्सूत्रकलापैर्निर्गुणत्वेन निर्णीतः ; " भेदादिति चेन्न प्रत्येकमतद्वचनात् " "अरूपवदेव हि तत्प्रधानत्वात्" " आह च तन्मात्रमि " त्यादिभिरनेकेष्वधिकरणेषु भेदप्रसङ्गो निराकृतः ; ब्रह्मव्यतिरिक्तानाम्पदार्थानां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वं " मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि " त्यादिभिर्निपुणतरमुपपादितम् , " स-म्पद्याविर्भावस्स्वेन शब्दादि " ति मुक्तस्य स्वरूपाविर्भावमुपपाद्य, " अ-विभागेन दृष्टत्वा " दिति ब्रह्मस्वरूपाविभाग एव फलतया निर्दिष्टः , इत्थ-मापादचूडं शारीरकशास्त्रे बहुषु सूत्रेषु निष्प्रपञ्चनिर्विशेषब्रह्मात्मैक्यस्य प्रति-पन्नत्वादुपात्तकतिपयसूत्रव्यतिरिक्तानि सूत्राण्यपि निर्विशेषमेव परं ब्रह्मोपपा-दयन्तीति नीतिविदां निर्णयः , यानि पुनस्सगुणब्रह्मप्रतिपादकानि वाक्या-नि, तानि गरुडमात्मानं जानीयादित्यादिष्विव तत्तदुपासनार्थकल्पिताकार-विशिष्टब्रह्मपराणि क्रममुक्तिन्यायेन परम्परया मोक्षविश्रान्तानि , क्वचित्तु

कल्पितेनाकारेण शाखाचन्द्रोपदेशन्यायेन उपलक्षणतया दर्शनेन ब्रह्मस्वरूपोपदेशपराणि, व्यास एवास्माक आदिगुरुरुपनिषदनुसारिभिस्सर्वैरेवास्माभिरनुसर्तव्य., न च प्रमाणविरोधात् ब्रह्मसूत्राणामप्रामाण्यमन्यपरत्व वा, तद्विरुद्धानामेव प्रमाणानामप्रमाणत्वात् ; अन्योन्यतस्तेषामाभिमानिकप्रमाणाना विरोधाच्च , अभिमानप्रतिष्ठित हि तत्तात्सिद्धान्तपरिगृहीताना प्रमाणाना प्रामाण्यम् , अन्यथा स्वसिद्धान्तविरोधप्रसङ्गात् , ततश्च प्रमाणविरोधेप्यविरोधेपि सूत्रस्वारस्यानुरोधेन बादरायणसिद्धान्तोऽयमिति निश्चिते तिष्ठ वा तत्र हृदयाक्रोशेन, तत्परित्यागेन वा हृदि विन्यस्तहस्तः पक्षान्तराण्यभिशेष्वेति ।

अत्रोच्यते, " अथातो ब्रह्मजिज्ञासे " ति सूत्रमेव तावदद्वैतिनां न घटते, चिन्मात्रस्य स्वप्रकाशत्वेन ज्ञानाविषयतया जिज्ञास्यत्वायोगात् , आरोपितगुणविग्रहादिविशिष्टस्याविद्यापरिणतिरूपत्वेन सुतरां जिज्ञास्यत्वायोगात् , ब्रह्मशब्दार्थानुपपत्ते. प्रागेव प्रपञ्चितत्वाच्च ।

तथा " जन्माद्यस्य यत " इति सूत्रमपि ब्रह्मस्वरूपलक्षणोपदेशपरम् , लक्षण चासाधारणधर्म., स कथ निर्विशेषे सघटते उपलक्षणत्वेपि सुतरा सविशेषत्वमेव । उपलक्षणाकारोपलक्ष्याकारपूर्वप्रतिपन्नाकारविभागविरहात् निर्विशेषस्योपलक्ष्यत्वमपि न सम्भवतीति प्रागेव प्रपञ्चितम् । सामानाधिकरण्यस्य सविशेषार्थनिष्ठत्वस्य न्यायप्राप्तत्वात् सत्यज्ञानादिवाक्ये स्वरूपलक्षणवर्णनापटाटोपोप्युत्पाटनीय इत्युक्तं प्रागेव ।

शास्त्रयोन्यधिकरणमपि शास्त्रगम्यत्वाभावादेव निरस्तम् , तद्गम्यत्वे वा प्रमाणविषयत्वात् दृश्यत्वमेव पार्ष्णि गृह्णाति । व्यावहारिकशास्त्रगम्यत्वं तु व्यावहारिकानुमानगम्यत्ववदपध्वस्तम् । भवता च प्रमाणप्रमेयखण्डनात् शास्त्रप्रामाण्यमपि पाषण्डवादैस्सपिण्डीकृतमेव । वेदान्तशास्त्रस्यापि तर्कात्मकत्वाच्चर्काणा स्वरूपलक्षणादिखण्डनप्राचण्ड्येनेव शरणयता कस्तर्क. किं

वा तदधीनार्थतत्वव्यवस्थापन कथञ्च तत्वावेदकता तत्वमस्यादिवाक्याना-मिति परिपश्य । तथाच सर्वशास्त्रकुक्षिभरिमाध्यमिकोक्तिरेव विजयते ।

समन्वयसूत्र च समन्वयमेव हेतुत्वेनोपाददाति, अन्वयस्तु भेदस्य प्राणबन्धुरिति सर्वलोकविदितमेतत् ।

आनन्दमयाधिकरणे प्राचुर्यार्थमयट्–प्रयोगादानन्दाभ्यासस्य हेतुत्वेनोपादानाच्च भेदवाद एव साम्राज्यमाटीकते ।

ईक्षत्यधिकरणेपि तदेवानुविदधाति, ईक्षणादिगुणयोगस्य मुख्यतयाभिधानात् ।

आकाशप्राणाधिकरणयोरपि ब्रह्मलिङ्गमेव पुरस्क्रियते, लिङ्ग पुनरसाधारणधर्म , निर्विशेषे कि लिङ्ग किञ्च वा साध्यमिति स्वयमेव विचारय।

ज्योतिरधिकरणे चरणाभिधान मरणायते मृषावादस्य, निर्विशेषस्य कश्चरण: का वा दीप्तिरुत्तमेषु लोकेषु ।

इन्द्रप्राणाधिकरणेपि “ प्राणस्तथानुगमादि ” त्युपक्रमोपसहारादि षड्विधतात्पर्यलिङ्गोपेतमहावाक्यसामर्थ्यादिन्द्र न्तर्यामिणो महापुरुषस्यैव प्रसाधनात्सविशेषपरत्वमेव । वाक्य तावदन्विताभिधानेप्यभिहितान्वयेपि सविशेषपरमेवेति तत्र तत्र क्रियासमभिहारेण साधितम् । वाक्यार्थोपि प्राणेन्द्रादिवैशिष्ट्यात्मकत्वात्सविशेषरूप एवेति निरूपितः ।

एव शारीरोपक्रमसूत्राणा सगुणब्रह्मैदम्पर्ये समर्थिते त्रिपाद्यामपि अनेनैव न्यायेनार्थतत्व निर्णेतव्यमधिगुणैरन्तेवासिभि , स्थालीपुलाकन्यायानुसारस्य न्याय्यत्वात् । अविरोधाध्यायसूत्राणा आदिमाध्यायशेषत्वान्न पृथगभिधेय तात्पर्यमवशिष्यते । वैराग्योभयलिङ्गपादयोस्संसरतो जीवस्य संसारनिवर्तकस्य च परमात्मनो मिथो वैषम्यमुच्यते, स एव भेदवाद । गुणोपसंहारपादस्य नामैव निर्गुणवादस्य हृदयशूलम्, अङ्गाङ्गिभाववादोपि तस्यैकणज्वर । तेन त्रिभिरध्यायैस्सगुणमेव निर्णीयते । फलाध्याये तु फलनिर्देश

एव निर्गुणवादिना निष्फ उ प्रलापमाविष्करोति, परमात्मसेविनो जीवस्यैव सांसारिकफलसाधनपुण्यपापरूपकर्मांशकृतविनाशो देहादुत्क्रमणमर्चिरादिना देवयानेन गमन पर ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिरपुनरावृत्तिश्चे ति शास्त्रकारश्चतुर्थाध्याये निर्गुणमशरीरमलक्ष्मिकमपरिवारजमविभूतिक चिन्मात्र-मिति पारिभाषिक ब्रह्म प्रतिपाद्यताम् ।

यदुक्त जिज्ञास्यतया प्रक्रान्त ब्रह्मैव " नात्माश्रुतेरि " त्यादावपि प्रतिपाद्यत इति । तदसत्, " ज्ञोत एव " " कर्ता शास्त्रार्थवत्त्वात् ' " परात्तु तच्छ्रुतेरि " त्यादिभिस्तत्रत्यैस्सूत्रैरात्मशब्दनिर्दिष्टस्य तस्य ज्ञातृ त्वकर्तृत्वपरमात्मायत्तत्वादिप्रतिपादनात् , तस्य च सर्वस्य त्वदभिमतेऽस्म-दभिमते वा ब्रह्मण्यसम्भवात् । भ्रान्त्या सम्भवतीति चेन्न,—परिशुद्धस्वरू-पोपदेशदशाया प्रतिपक्षप्रतिक्षेपपूर्वकस्य भ्रान्तिसिद्धाकारसमर्थनस्य विरुद्ध-त्वात् । अन्यथा " नात्माश्रुते " रित्यधिकरणेपि यथालोकमुत्पत्तिविनाश योरेव समर्थनप्रसङ्गात् । यदि तत्र लोकसिद्धाकारप्रतिषेध उपचिक्रासित' तदा लोकसिद्ध कर्तृत्वादिकमपि नास्तीत्यवेपदेष्टु युक्तम् । यदि तत्रैव सूत्राणा तात्पर्यमिति मनुषे, तदा प्रारब्ध त्वयैव सूत्रान्यथाकरणम् । अप्रस्तु तमात्मान्तरमिह कथ परीक्ष्यत इति चेन्न.—' अथातो ब्रह्मजिज्ञासे " त्य त्रैव विषयतया ब्रह्मण इव अधिकारितया मुमुक्षो' प्रकृतत्वात्, तस्य च स्वरूपज्ञानावश्यम्भावित्वेन क्वचित्स्वरूपस्यावश्योपदेष्टव्यत्वात् । व्यवच्छेद्य तया प्रधानमिव जीवोपि प्रथमाध्याये सर्वत्र प्रकृत । यदि विषयत्वेनाप्रकृत त्वादपरीक्षणीयता, तदा वियत्प्राणादेरप्यपरीक्षणप्रसङ्ग ।

" धर्म जिज्ञासमानस्य तत्सम्बन्धिनिरूपणम् ।
यथैव ब्रह्मजिज्ञासेत्युक्त जीवनिरूपणम् ॥ "

किञ्च "असम्भवस्तु सतोनुपपत्ते रि" त्यत्रैव सच्छब्दवाच्यस्य परस्यै क्षेत्रज्ञस्य उत्पत्त्यादिनिषेधात् " नात्माश्रुते " रिति निरर्थक पुनरारम्भ ।

अतो नात्र जिज्ञास्यतया प्रक्रान्त ब्रह्मात्मशब्दनिर्दिष्टम्, अपि तु जिज्ञासाकर्तृतया प्रस्तुतो जीव ।

यत्पुनरुक्त एकवचनान्तनिर्देशादात्माद्वैतस्वारस्यमिति । " तदपि न " अष्टश्चे " त्यादिसूत्रेष्विव जात्यैक्यविवक्षया तत्प्रयोगसम्भवात् । तदुक्तमशाधिकरणे " नात्माश्रुतेरित्यत्राप्येकवचन जात्यभिप्रायमि " ति । याश्च तत्सूत्रविषयतया " नित्यो नित्याना चेतनश्चेतनानाम ' त्यादिश्रुतय उपादीयन्ते, ताभिरपि सौत्रस्यैकवचनस्य जात्यभिप्रायत्व व्यक्तम् ।

यद्युद्देश्यगतत्वेन बहुत्वमविवक्षितम् ।
य एक इति निर्दिष्टमेकत्व कि विवक्ष्यते ।

अत ए"वाजो नित्य" इत्यादिश्रुत्यन्तरमपि निर्व्यूढम् ।

यत्तूभयलिङ्गाधिकरणे समस्तविशेषशून्यत्वं प्रत्यपादीति । तदप्यसत्, तत्र हेयगुणनिषेधेन समस्तमङ्गलगुणविशिष्टस्यैव प्रतिपिपादयिषितत्वात्, तदाह—" सविशेष ब्रह्मेत्येव हि तत्र वक्ष्यती " ति । वाक्यस्थोभयलिङ्गशब्दानादरेणासन्निहितदोषाख्यनिषेध्याध्याहारो न युक्त इति चेन्न,—स्ववाक्यस्थस्यापि गुणस्य स्वरूपत एव निषेधानुपपत्ते । न हि गुणो गुणत्वादेव निषेध्य ? वैपरीत्यात् । न च दोषकोटिनिक्षेपेण तन्निषेध, सर्वज्ञत्वादेर्दोषत्वस्य प्रमाणाभावात् । अत पारिशेष्याद्दोष एव निषेध्य इति स्थिते जागरितस्वप्नाद्यवस्थासु जीवस्य ये दोषा पूर्वेष्वधिकरणेषु प्रकृता त एवात्र निषेध्यतया सूत्रकृदभिप्रेता इति स्पष्टमेव ज्ञातु । ततश्च "भेदादिति चेन्न प्रत्येकमतद्वचना " दित्यादिसूत्रेष्वपि नाप्रस्तुतानुपयुक्तत्वदभिमतार्थसिद्धि । अन्यथा " प्रकृतैतावत्त्व हि प्रतिषेधति ततो ब्रवीति च भूय " इति समनन्तरसूत्रविरोधः । न हि तत्र प्रकृत प्रतिषेधतीत्युक्तम्, अपि तु प्रकृतैतावत्त्वमिति । एतेन निषेधाना सर्वेषा विहितानुरोधेन विषयव्यवस्था कर्तव्येति दर्शयति ।

सामान्यस्य निषेधस्य विहितव्यतिरेकतः ।
निर्वाहस्सुप्रसिद्धश्च निगमेष्ववगम्यते ॥

अत एव सन्ध्याधिकरणेपि " मायामात्रन्त्वि " त्यादिना न प्रपञ्च मिथ्यात्वं विवक्षितमिति गम्यते । मायाशब्दस्य च न मिथ्यात्ववाचित्वमिति स्थलान्तरे विशदं द्रष्टव्यम् । आह च—" मायामात्र न्त्विति च स्वाप्नानामप्यर्थाना जागरितावस्थानुभूतपदार्थवैधर्म्यमात्रेण मायामात्रत्वमुच्यत " इत्यादि । " मेघादयस्सागरसन्निवेश " इत्यारभ्य " विष्णोर्विचित्राः प्रभवन्ति माया " इत्यादिषु मायाशब्दस्य विचित्रसृष्टिविशेषपरत्वमेवेति सुव्यक्तमुपपादितम् । अस्तुर्वास्य मिथ्यार्थवाचित्वम्, तथाप्यस्मिन् सूत्रे स्वाप्नार्थानामेव मिथ्यात्वमुच्यते, " सन्ध्ये सृष्टिराह हि " " निर्मातारं चैकेपुत्रादयश्चे"ति पूर्वपक्षसूत्राभ्यां स्वाप्नार्थानामेव प्रकृतत्वस्य भवद्भिरपि व्याख्यातत्वात् । सत्यं स्वप्नार्थमिथ्यात्वमधिकरणसाध्यम्, तत्र कैमुत्यलाभाय जागरितानामपि मिथ्यात्व "कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि" त्यनेन प्रदर्श्यत इति चेन्न,—विश्वमिथ्यात्वसिद्धौ स्वाप्नार्थसत्यत्वपूर्वपक्षानुत्थानात् । अथ विश्वमिथ्यात्वमेव स्वाप्नार्थमिथ्यात्वप्रदर्शनद्वारा अत्रैव प्रसाध्यत इति मन्यसे? तदप्यसत्, प्रपञ्चमिथ्यात्वं प्रस्तुत्य स्वाप्नार्थनिदर्शनस्योचितत्वात् । प्रथमसूत्र एव विश्वमिथ्यात्वप्रसाधनमुखेन विश्वस्य ज्ञानबाध्यतया ज्ञानप्रधानं शास्त्रमारम्भणीयमिति भवद्भिस्समर्थनाच्च । अथ वक्ष्यमाणोपजीवनेन शास्त्रारम्भमात्रं तत्र समर्थ्यत इति पश्यसि? तदा नीतिनिबन्धनात्मकस्य सूत्रस्य व्युत्पाद्यमतिमन्दं स्यात् । किञ्च " कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि " त्यत्र न जागरगन्धं पश्यामः । ' कार्त्स्न्यशब्देन तस्यापि सङ्ग्रह इति चेन्न,- प्रकृतैकदेशाबहिष्कारे तस्य व्युत्पत्तेः, ततश्च स्वाप्नार्थानां सर्वेषामेव मिथ्यात्वं विवक्षितं स्यात्, अन्यथा स्वाप्नार्थमिथ्यात्वं प्रतिज्ञाय जागरितार्थानामनभिव्यक्तस्वरूपत्वं हेतुरुच्यत इति

व्यधिकरण स्यात्। अतः स्वाभार्थमिथ्यात्वसाधनाय तन्निष्ठमेवानभिव्यक्त स्वरूपत्वं हेतुतया सूच्यत इति नात्रापि विश्वमिथ्यात्वप्रतिपादककथापि।

यत्पुन मोक्षोपायोपदेशदशाया "आत्मेति तूपगच्छन्ति" इति ब्रह्मात्मैक्यानुसन्धान सूत्रितमिति, तदपि न पश्याम., आत्मशब्दस्य नानार्थ रूढत्वात्, शरीरप्रतिसम्बन्धिनि रूढिप्रकर्षाच्च, ततश्शरीरीत्यनुसन्धान सूत्रित स्यात्। तु ‒ पनत्, ब्रह्मणस्सर्वशरीरित्वेनान्तर्यामिब्राह्मणादिषु प्रपञ्चितत्वात्। यद्यपि स्वपर्यायोऽयमात्मशब्दो भाष्येऽन्वारूढ, तथ प्यन्ततोऽय मेवार्थ. प्रपञ्चयिष्यते। अत्राप्यधिकरणे वक्ष्यति—"इदमेव शरीरात्म भावलक्षण तादात्म्यमात्मेति तूपगच्छन्तीति वक्ष्यती" ति। विपरीतश्चाय व्यपदेश आयुष्मत, अह ब्रह्मास्मीत्यनुसन्धानं ह्यत्र व्याख्यायते, तच्च भ्रान्तिरूपमिति भवतेष्टव्यम्, विलुप्ताहम्भावादिविप्लवसंविन्मात्ररूपत्वाभ्युपगमात् ब्रह्मण, ततश्च मोक्षोपायतया भ्रान्तिरेव सूत्रितेत्यायातम्। शालामालादिन्यायेन विवक्षितपर्यवस्थापन तु सूत्रस्वारस्योपन्यासदशाविरुद्धम्। किञ्च इतिकरणस्वारस्यादत्र दृष्टिविधिसूचनमेव स्वरसम्, तथैव हि श्रुतिरपि "आत्मेत्येवोपासीते" ति, वाक्य च "आत्मेत्येव तु गृह्णीया" दिति, प्रसिद्धश्चायमर्थ· स्मृतिष्वपि–"ब्रह्माहमिति भावयेदित्या" दिषु, तन्त्रेषु च "देवोऽहमिति भावये" दिति। अतोऽत्र इतिकरणस्वारस्यात् "मनो ब्रह्मेत्युपासीते" त्यादाविव दृष्टिविधित्वमात्रसिद्धौ उपास्य‸ दृष्टिविशेषणस्य चात्यन्तभेदस्य सार्वत्रिकत्वात् अत्रापि जीवब्रह्मणोर्भेद एवान्ततस्सूत्रित स्यादिति नात्र भवत कश्चिदवकाश।

यत्तु फलदशाया "मविभागेन दृष्टत्वा" दित्यविभागानुभवस्सूत्रित इति, तदपि मन्दम्, अविभागशब्दस्य स्वरूपैक्यनियतत्वाभावात्। विभागो हि परस्परसम्बन्धपरिपन्थिधर्मविशेष इति विदुषा प्रसिद्धि, तेनाविभागोऽप्यपृथक्सिद्धिरेवेति सिध्यति, न पुनः स्वरूपैक्यम्, तत्र तद्व्यवहारश्चौ

पचारिकः। अस्तु वा मुख्यः, तथाप्यनियतत्वादन्यथासिद्धः, वाङ्मनःप्रभृति सम्पत्तिवदवस्थाविशेषमात्रविवक्षया " अविभागो वचनादि " त्यसूत्रयत्, अत्र तु यथाप्रमाणमपृथक्सिद्धत्वविवक्षयायमविभागशब्दः, अन्यथा प्रमाण विरोधादुपपत्तिविरोधाच्च, प्रयुञ्जते च मध्यस्था दण्डो देवदत्ताद्विभक्तः जातिगुणादिकं त्वविभक्तमिति च । यद्वा विभागो भेद एवास्तु, अविभागश्च भेदनिवृत्तिः, तथापि स्वरूपभेदोऽत्र निषिध्यत इत्यत्र न प्रमाणं पश्यामः, प्रत्युत पूर्वापरसूत्रशतपरामर्शात्–" भोगमात्रसाम्यलिङ्गाच्चे " ति उपान्त्य-सूत्रसंवादाच्च किञ्चिज्ज्ञत्वसर्वज्ञत्वपरिमितसुखत्वनिरतिशयानन्दत्वादिवैधर्म्य लक्षणभेद एव निषिध्यत इति स्वरसतः प्रतीयते, तत्क्रतुन्यायोऽपि कृशोदरी नाडनिहितकीटवदादिभरतमृगत्वादिवच्च साम्यापत्त्यैव समञ्जसयितुं शक्यः। अन्यथा दृष्टान्त एव तत्र प्रतिदृष्टान्ततामश्नुते ।

तदेवं भूयसा न्यायमसन्तमिव कृत्वा त्वदुपन्यस्तानि कतिपयानि सूत्राणि त्वदभिमतप्रतीपानि निदर्शितानि । ततश्चान्यपरानन्यपरविभागोऽपि विलीनः । अत एवान्येषां भूयसां सूत्राणां कल्पिताकारपरत्वमुपलक्षणपरत्वं वा नोत्प्रेक्षितुं शक्यम् । अन्यानि तु सूत्राणि सगुणं सविभूतिकं च ब्रह्म प्रतिपादयन्तीत्ययमर्थस्त्वयापि दुरपह्नवः ।

अर्थवत्त्वेऽपि सूत्राणामन्योन्यार्थविभागतः ।
सगुणं ब्रह्म वेद्यं स्यान्नचेत्सूत्रकथा मुधा ॥

आह च जन्माद्यधिकरणे–" ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति तन्मते ' ब्रह्मजिज्ञासा " " जन्माद्यस्य यतः " इत्यसङ्गतं स्यात्, " निरतिशयबृहद्ब्रह्मणं च ब्रह्मे " ति निर्वचनात्, तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च, एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृताः श्रुतयश्च न तत्र प्रमाणमि ' त्यादि । अयमभिप्रायः–प्रथमाध्याये सर्वत्र " ईक्षतेर्नाशब्दं " " आन-

न्द्रमयोभ्यासात् " " अन्तस्तद्धर्मोपदेशा " दित्यादिषु ब्रह्मणस्तद्धर्मविशेषैर्वैशिष्ट्यं प्रतिपाद्यते, एवं जीवादिभ्यो भेदश्च प्रतिपाद्यते, " भेदव्यपदेशाच्चान्यः " " कर्मकर्तृव्यपदेशाच्च " " उभयेपि हि भेदेनैनमधीयते " " विशेषणभेदव्यपदेशाभ्यां च नेतरौ " " भेदव्यपदेशात् " " आकाशोर्थान्तरत्वादिव्यपदेशात् " " सुषुप्त्युत्क्रान्त्योर्भेदेन " इत्यादिषु सूत्रेषु तत्तच्छ्रुतिगतो भेदनिर्देश एव स्वशब्देन सूत्र्यते । " जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् " " न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च " " नानुमानमतच्छब्दात्प्राणभृच्च " " जीवमुख्य प्राणलिङ्गान्नेति चेत्तद्व्याख्यातं " इत्यादिषु प्रधानादिवत् जीवः स्वशब्देनोपादाय व्यवच्छिद्यते, " गुहां प्रविष्टा वात्मानौ हि तद्दर्शनादि " त्यादिषु स्फुटः ; अतः प्रथमाध्याये सर्वत्र जिज्ञास्यतया प्रक्रान्त ब्रह्मानन्दगुणविशिष्टं प्रकृतेरिव पुरुषादपि विलक्षणं च प्रत्यपादि, अयमेवार्थः स्थूणानिखनन्न्यायेन द्वितीयाऽध्याये स्थिरीकृत इति सोपि तद्विषय एवेत्युक्तम् । तत्र च " इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः " इति जीवैक्यव्यपदेशमूलानेक दोषानाशङ्क्य " अधिकं तु भेदनिर्देशात् " " अश्मादिवच्च तदनुपपत्ति " रिति सूत्राभ्यां पर्यहार्षीत् । तत्र चाभाष्यत–"ये पुनरस्यैव जीवस्याविद्याविमुक्तावस्थामभिप्रेत्य इमं भेदं वर्णयन्ति, तेषामिदं सर्वमसङ्गतं स्यात्, न हि तदवस्थस्य सर्वज्ञत्वं सर्वेश्वरत्वं समस्तकारणत्वं सर्वात्मत्वं सर्वनियन्तृत्वमित्यादीनि सन्ति, अनेनैव रूपेणाभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रतिपाद्यते, तत्सर्वं ह्यविद्यापरिकल्पितं त्वन्मते , नचाविद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजतमरीचिकाजलादिभेदवत्परस्परभेदोऽत्र सूत्रकारेणाधिकं तु भेदनिर्देशादित्यादिषु प्रतिपाद्यते, ब्रह्मजिज्ञासा कर्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जगज्जन्मादिकारणस्य वेदान्तवेद्यत्वं तस्य च स्मृतिन्यायविरोधपरिहारश्च क्रियत" इति स्पष्टम् । अतोध्यायद्वयं विशिष्टपरमिति स्थितम् । तृती

याध्यायेपि वैराग्यपादे तावत्पतिनियतकर्मफलभोक्तृणामनन्तानां कर्मिणां गमनागमनप्रकारचिन्तनादात्मभेदोऽर्थलब्ध. । उभयलिङ्गपादे तु शोध्यं शोधितम् । शिष्टमपि विशिष्टानुगुणमेव । गुणोपसंहारपादस्तु तत्तद्विद्यानियतानियतगुणोपाधिकविद्याभेदाभेदचिन्तनात्कार्त्स्न्येन गुणविशिष्टपर इति स्वरूपतोपि सुप्रसिद्ध न केवल नाममात्रेण । पुरुषार्थपादोपि विद्याया वर्णाश्रमधर्मेतिकर्तव्यताकत्वप्रतिपादनान्निर्विशेषात्माद्वैतवाक्यार्थविज्ञानपक्षप्रतिपक्ष. । तद्वदावृत्तिपादोपि, असकृदावृत्तोपासनादिप्रतिपादनेन फलाकुरस्यैवोपपादनात् । उत्क्रान्तिपादे स्थूलदेहादुत्क्रान्तिरूपफलप्रादुर्भावप्रपञ्चनम्, अर्चिरादिपादेपि तथेति सगुणब्रह्मोपासकाना तत्प्राप्त्यर्थमिति भवद्भिरेव व्याख्यातम् । फलपादेपि स्वरूपाविर्भावपूर्वक परब्रह्मसमानस्वच्छन्दभोगप्रपञ्चन व्यक्तमिति न बादरायणस्य क्वचिदपि त्वदभिमतानुपपन्नार्थाविवक्षां प्रत्यक्षयामहे । उक्त च भास्कराचार्यैः—

सूत्राभिप्रायसवृत्या स्वाभिप्रायनिवेशनात् ।
व्याख्यातं यैरिद सूत्र व्याख्येय तन्निवृत्तये ॥ इति ।

तदभिप्रायेण भाष्यकारैरप्युक्तम्—"भगवद्बोधायनकृता विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपु तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्त" इति ।

यत्पुनरुक्त प्रमाणविरुद्धत्वेन सूत्रार्थानामन्यथाकथनमयुक्तमिति ; तन्नूनमश्रुतस्वसिद्धान्तेनोक्तम् , सूत्राण्यपि यथाकथञ्चिद्योजयितव्यानीति क्वचिद्भवत्कूटस्थैर्व्याख्यानात् । दृश्यते च जैमिनिपतञ्जलिकणभक्षाक्षपादादिसूत्रेष्वपि तत्तद्व्याख्यातृभिरध्याहारादिकल्पना । तदाह—" लोके येष्वर्थेषु प्रसिद्धानि यानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वपी " ति । अध्याहारादिभि स्वाभिमतार्थपरतया निर्वाहो वेदसवादभूयस्त्ववैदिकपरि

ग्रहविशेषादिभिराप्तोक्तत्वनिश्चये मन्वादिप्रणीतधर्मशास्त्रादिष्वपि । काचि-
त्कवेदविरोधादेर्यथाकथञ्चिदुपशमयितव्यत्वात् । अत एवाह " सति सम्भव "
इति । श्रुतिसूत्रयोरविरोधे सूत्रेष्वध्याहारादिकमन्याय्यम्, विरोधप्रसङ्गे
पुनरध्याहारादिभिस्सूत्रं श्रुत्यनुगुणतया नेतव्यम् । नचासौ विभ्रम इति श-
ङ्कितुमपि शक्यम्, सकलवेदशाखाप्रवर्तनाधिकृतत्वात्क्वचिदपि प्रमाणविरु
द्धार्थादर्शनात् परिग्रहातिशयाच्च । अतस्तदुक्तेषु सूत्रेषु यत्र क्वचित्प्रमाण
विसंवादे यथाकथञ्चित्समाधातव्यम्, नचास्ति विसंवाद इति दर्शितमिति ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु शतदूषण्यां परमते सूत्रस्वारस्यभङ्गः
षट्षष्टितमो वादः ॥६६॥

समाप्ता च शतदूषणी ।



